2) यश्च श्रोत्रियोऽवृजिनोऽकामहतः इति वाजसनेयश्रुतिः ।

3) अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमाः बभूवुः – एतरेयश्रुतिः ।

4) नृपाद्याः शतधृत्यन्ताः मुक्तिगाः उत्तरोत्तरम् ।
सर्वैः गुणैः शतगुणाः मोदन्त । इति हि श्रुतिः ।

5) 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' इत्यादिसूत्रैः ।

6) अस्मदादिमुक्तभोगः मुक्तचतुर्मुखभोगात् निकृष्टः अस्मदादिभोगत्वात् संसारस्थास्मदादिभोगवत् ।

7) मुक्तसुखं परस्परं तारतम्यवत् परस्परं तारतम्यवत्साधनसाध्यत्वात् ।

From these Śruti, Smṛti, Sūtra and the syllogisms it is clear that there is तारतम्य in the liberated state also. Some commentators on तैत्तिरीय and वाजसनेयश्रुति take the stand that the तारतम्य stated in these does not relate Muktas. It refers to those who are not yet Muktas. However, the adjectives अकामहत and अवृजिन make it clear that the तारतम्य stated here relates to Muktas only. The gradation of the liberation as सालोक्य, सारूप्य, and सायुज्य also indicates that there is gradation. The साधनतारतम्य also indicates मुक्तितारतम्य. Those who talk of साम्य in मुक्ति, they also talk of तारतम्य between भक्ति and प्रपत्ति. Therefore, they have to accept तारतम्य in मुक्ति.

The तारतम्य doctrine is intended to affirm the सर्वोत्तमत्व of the Supreme God. Therefore, Nyāyāmṛta brings out the तारतम्य between the Supreme God and the others.

1) ब्रह्मेशानादिभिः देवैः यत् प्राप्तुं नैव शक्यते ।
तद्यत् स्वभावः कैवल्यं स भवान् केवलो हरे ।

2) 'जगद्व्यापारवर्जम्' इत्यादिसूत्रैः ।

3) मुक्तजीवभोगः ईश्वरभोगात् निकृष्टः जीवभोगत्वात् संसारिभोगवत्

These Śruti, Sūtra and syllogisms bring out the Supremacy of the God.

**From the above study the following conclusions could be arrived at.**

## Chapter II

1) The concept of अखण्डार्थ cannot be established.

2) निर्गुणत्व, निराकारत्व, उपादानत्व, निमित्तत्व, स्वप्रकाशत्व and अवाच्यत्व of Brahman cannot be established.

3) ज्ञानत्व, आनन्दत्व, अद्वितीयत्व, नित्यत्व and साक्षित्व of Brahman cannot be established.

4) The concept of भेद in general, and the five categories of भेद worked out in Dvaita are supported by the logic and the Śruti.

5) The concept of एक्य cannot be established. The Śruti passages 'तत् त्वमसि' 'अहं ब्रह्मास्मि' etc do not support ऐक्य.

## Chapter III

1) The mannor in which the nature of श्रवण, मनन and निदिध्यासन is explained in Advaita is not justified.

2) अध्ययनविधि enjoins ब्रह्मविचार also.

3) शाब्दज्ञान cannot lead to ब्रह्मापरोक्ष.

## Chapter IV

1) मोक्ष cannot be merely of the nature of अविद्यानिवृत्ति.

2) निर्विशेषसुखरूपमोक्ष cannot be पुरुषार्थ.

3) The Advaita concept of जीवन्मुक्ति is not valid.

The summary of the polemics of Nyāyāmṛta and Advaitasiddhi given in this volume and the earlier two volumes is only a brief outline of it. A full account of the arguments and the counter arguments can not be given in few pages. A separate volume will be required to present the same. However, an attempt is made here to highlight the main issues of Dvaita Advaita polemics and the chief arguments of the two sides. This will enable the readers to identify the issues and explore the Text and the commentaries with a searching eye.

As stated in the summaries of earlier volumes, the Sanskrit technical terms and phrases cannot be translated in English. Therefore, the very terms are used with necessary explainations. In the course of the debate on the main issues many epostemological and linguistic side issues are raised and explained from the two points of view. To go into these details would have been a diversion. Therefore, these are also not treated in detail here. The chief purpose of this summary has been to draw the attention of the readers to the main issues and the main arguments. It is hoped that this will enkindle further interest and a full study.

**K.T. Pandurangi.**

Formerly Prof. of Sanskrit
Bangalore University

श्रीव्यासतीर्थविरचितम्

# न्यायामृतम्

अद्वैतसिद्ध्या तरङ्गिणी-कण्टकोद्धार-प्रकाशाख्य व्याख्यानत्रयेण सहितम्

द्वितीयतृतीयचतुर्थाध्यायाः

श्रीमध्वः कल्पवृक्षस्तु जयार्यः कामधुक् स्मृतः ।
चिन्तामणिस्तु व्यासार्यो मुनित्रयमुदीरितम् ॥

# न्यायामृतम्

## विषयानुक्रमणिका

### द्वितीयपरिच्छेदः

## तृतीयःपरिच्छेदः



## चतुर्थः परिच्छेदः

श्रीवेदव्यासाय नमः

पदवाक्यप्रमाणपारावारपारीणसर्वतन्त्रस्वतन्त्र

श्रीव्यासतीर्थ-विरचितम्

# न्यायामृतम्

## द्वितीयपरिच्छेदः

### १. अखण्डार्थत्वलक्षणभङ्गः

नन्वेतदयुक्तं द्विविधं हि वेदान्तवाक्यम्– एकं पदार्थनिष्ठं यथा– ''सत्यं ज्ञानम्'' इत्यादि, तत्पदार्थपरम्, ''योऽयं विज्ञानमय'' इत्यादि त्वंपदार्थपरं च। अपरमैक्यरूपवाक्यार्थनिष्ठं यथा ''तत्त्वमसी''त्यादि । द्वयमप्यखण्डार्थनिष्ठम्। यद्यप्यखण्डार्थनिष्ठत्वं न तावन्निर्भेदार्थनिष्ठत्वं भेदाभावविशिष्टत्वरूपस्य तदुपलक्षितत्वरूपस्य वा निर्भेदत्वस्य शब्दबोध्यत्वेऽभिप्रेते निर्घटं भूतलमित्यादिवत् सखण्डार्थत्वापत्तेः स्वरूपसत्वमात्रेऽभिप्रेते च सखण्डार्थानां सगुणवाक्यानामपि वस्तुगत्या निर्भेदब्रह्मनिष्ठत्वेनाखण्डार्थत्वापातात्, प्रकृष्टप्रकाशादिवाक्येष्वव्याप्तेश्च । अत एव न निर्विशेषार्थनिष्ठत्वं तत् । नाप्यपर्यायशब्दानां प्रातिपदिकार्थमात्रपर्यवसायित्वम्, पयः पावकरूपानेकप्रातिपदिकार्थमात्रपर्यवसायिनि शीतोष्णस्पर्शवन्तौ पयःपावकावित्यादावतिव्याप्तेः । नाप्येकविशेष्यपरत्वं नीलमुत्पलमित्यादावतिव्याप्तेरिष्टापत्तेश्च। तथाप्यपर्यायशब्दानां संसर्गागोचर प्रमाजनकत्वं वा तेषामेकप्रातिपदिकार्थमात्रपर्यवसायित्वं वा अखण्डार्थत्वम् । उक्तम् हि–

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।
उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ।। इति ।

तत्र पदार्थनिष्ठस्य वाक्यस्याखण्डार्थत्वे सत्यादिवाक्यम् अखण्डार्थनिष्ठं ब्रह्मप्रातिपदिकार्थमात्रनिष्ठं वा, लक्षणवाक्यत्वात्, तन्मात्रप्रश्नोत्तरत्वाद्वा, प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदित्यनुमानं मानम् । न च द्वितीयहेतोरसिद्धिः, ब्रह्मविदाप्नोति परम् इत्युक्तब्रह्मप्रातिपदिकार्थमात्रे बुभुत्सितेऽस्य प्रवृत्तेः । न च हेतुद्वयेऽपि दृष्टान्तः साध्यविकलः प्रकृष्टादिवाक्यं चन्द्रप्रातिपदिकार्थमात्रनिष्ठम्, तन्मात्रप्रश्नोत्तरत्वात् संमतवदिति तत्सिद्धेः । न हि कश्चन्द्र इति चन्द्रप्रातिपदिकार्थमात्रे पृष्टेऽन्यद्वक्तुमुचितम् । सास्नादिमान् गौरित्याद्यपि लक्षणवाक्यं पृष्टगवादिप्रातिपदिकार्थमात्रपरमिति न व्यभिचारः । ऐक्यपरस्य वाक्यस्याखण्डार्थत्वे तु तत्त्वमसीत्यादिवाक्यम् अखण्डार्थनिष्ठम् आत्मस्वरूपमात्रनिष्ठं वा अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणत्वात्, तन्मात्रप्रश्नोत्तरत्वाद्वा सोऽयं देवदत्त इति वाक्यवत् । न चान्त्यहेतोरसिद्धिः, कोऽहमित्यात्मस्वरूपमात्रे बुभुत्सितेऽस्य प्रवृत्तेः । न च हेतुद्वयेऽपि दृष्टान्तः साध्यविकलः, कोऽयमिति देवदत्तस्वरूपमात्रे पृष्टेऽस्य प्रवृत्तेः । विपक्षे प्रश्नोत्तरयोर्वैयधिकरण्यप्रसङ्गो बाधक इति ।

अत्र ब्रूम – आद्यलक्षणे संसर्गशब्देन संसर्गमात्रोक्तौ "अप्राप्तयोः प्राप्तिः संयोग" इत्यादि संसर्गलक्षणवाक्ये अव्याप्तिः । पदस्मारितपदार्थसंसर्गोक्तौ तु विषं भुंक्ष्वेत्यादावतिव्याप्तिः, तस्य पदस्मारितपदार्थसंसर्गाप्रमापकत्वात् । न चेदमपि "द्विषदन्नं न भोक्तव्यमि"ति शास्त्रमूलकत्वात् शास्त्रीयपदस्मारितपदार्थसंसर्गप्रमापकम् अस्य युक्तिमूलत्वेनाशास्त्रमूलत्वात् । प्रतिपिपादयिषितपदार्थसंसर्गोक्तौ च चन्द्रब्रह्मादिशब्दार्थानां प्रश्नहेतुसंशयधर्मित्वेन प्रागेव सामान्यतो ज्ञाततया स्वरूपेणाप्रतिपिपादयिषितत्वात् । संसर्गविशेषप्रतियोगित्वेन तु प्रतिपिपादयिषितत्वे विवक्षिते संसर्गाप्रमापकत्वासम्भवात् । किं च शीतोष्णस्पर्शवन्तौ पयः पावकावित्यादौ त्वद्रीत्या संसर्गाप्रतिपादकेऽनेकप्रातिपदिकार्थमात्रपरेऽतिव्याप्तिः । न हि धर्मधर्मिभावासहमखण्डार्थत्वं धर्मिभेदसहम् ।

**किं च यौगिकार्थौपगवादिप्रश्नोत्तरे श्यामो दीर्घो लोहिताक्ष औपगव इत्यादौ अनेकार्थात्मकवनसेनादिप्रश्नोत्तरे ''एकदेशस्था वृक्षा वन''मित्यादौ च सखण्डार्थे लक्षणवाक्येऽतिव्याप्तिः । प्रकृष्टादिवाक्येऽपि संसृष्टार्थत्वस्य वक्ष्यमाणत्वेनासम्भवश्च । अत एवान्त्यं लक्षणमप्ययुक्तम्, असम्भवात्, सखण्डार्थलक्षणवाक्येऽतिव्यातेश्च । किं च प्रवृत्तिनिमित्ताभेदश्चेन्नापर्यायत्वं तद्भेदस्त्विह नास्ति अनन्तत्वादीनां शुद्धादन्यत्रासम्भवाद् अनन्तादिशब्दानां लक्षणयाऽखण्डार्थत्वे च शुद्धे तदसिद्धेः । अखण्डार्थत्वलक्षणभङ्गः ॥ १ ॥**

## अद्वैतसिद्धिः

तत्राखण्डार्थत्वलक्षणोपपत्तिः –

हेयं निरूप्य बन्धाख्यं तन्निवृत्तेर्निबन्धनम् ।
यज्ज्ञानं तदखण्डार्थमादेयमधुनोच्यते ॥

तच्चाखण्डार्थं द्विविधम्– एकं पदार्थनिष्ठम्, अपरं वाक्यार्थनिष्ठम् । एकैकं च पुनर्वैदिकलौकिकभेदेन द्विविधम् । पदार्थनिष्ठं वैदिकमपि द्विविधम्– तत्पदार्थनिष्ठं त्वं पदार्थनिष्ठं च । तत्र सत्यं ज्ञानमनन्तमित्यादि तत्पदार्थनिष्ठम् । 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष' इत्यादि त्वं पदार्थनिष्ठम् । 'प्रकृष्टप्रकाश' इत्यादि तु लौकिकं पदार्थनिष्ठम् । वाक्यार्थनिष्ठमपि वैदिकं 'तत्त्वमस्या'दिवाक्यम्, 'सोऽयं देवदत्त' इत्यादि तु लौकिकम् ।

अत्राहुः– किमखण्डार्थत्वम्? न तावन्निर्भेदार्थत्वम्, यतो निर्भेदार्थत्वस्य शब्दबोध्यत्वे विशेषणतायामुपलक्षणतायां च निर्घटं भूतलमितिवत् सखण्डार्थतैव स्यात् शब्दाबोध्यत्वे तु वस्तुगत्या यन्निर्भेदं ब्रह्म तद्बोधकसगुणवाक्यानामपि अखण्डार्थत्वापत्तिः । अथ यन्निर्भेदं वस्तुगत्या तन्मात्रपरत्वम् न । प्रकृष्टप्रकाशादिवाक्येऽव्याप्तेः, तेषां धर्मिसमसत्ताकभेदवद्वस्तुपरत्वेन वस्तुगत्या निर्भेदार्थे निष्ठत्वाभावात् । अत एव निर्विशेषार्थत्वमपि न । नाप्यपर्यायशब्दानां प्रातिपदिकार्थमात्रपर्यवसायित्वम् शीतोष्णस्पर्शवन्तौ पयः पावकावित्यादावनेकप्रातिपदिकार्थपरेऽतिव्याप्तेः । न च संभूयार्थपरत्वमत्र नास्त्येव, प्रत्येकं त्वेकैकार्थपरत्वं

(अद्वैतसिद्धिः)
लक्षणवाक्यत्वादिति नातिव्याप्तिरिति वाच्यम्, तथापि ब्रह्मण्यभावाद्, अभिधया लक्षणया वा वेदान्तवाक्यानां निःसम्बन्धे ब्रह्मणि पर्यवसानानुपपत्तेः । अत एव नैकविशेष्यपरत्वमपि, तद्विशिष्टैकविशेष्यबोधकनीलोत्पलादिवाक्ये अतिव्याप्तेरिष्टापत्तेश्च । यत्तु– अपर्यायशब्दानां संसर्गागोचरप्रमितिजनकत्वं वा तेषामेकप्रातिपदिकार्थमात्रपर्यवसायित्वं वा अखण्डार्थत्वम् । तदुक्तं पञ्चपादिकाकृद्भिः – 'पदानां परस्परानवच्छिन्नार्थानाम् अनन्याकाङ्क्षाणाम् अव्यतिरिक्तैकरसप्रातिपदिकार्थमात्रान्वयः' इति । उक्तश्च तत्त्वप्रदीपिकाकृद्भिः–

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।
उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥ इति ।

तन्न, आद्ये 'अप्राप्तयोः प्राप्तिः संयोग' इत्यादौ संयोगलक्षणवाक्येऽव्याप्तेः । अथ पदस्मारितपदार्थसंसर्गाप्रमापकत्वं विवक्षितम्, तत्रापि 'द्विषदन्नं न भोक्तव्य' मित्येतत्परे 'विषं भुङ्क्ष्वेति वाक्ये अतिव्याप्तिः । न च– 'द्विषदन्नं न भोक्तव्य'मिति शास्त्रमूलत्वेन शास्त्रीयपदस्मारितपदार्थसंसर्गप्रमापकत्वादत्र नातिव्याप्तिरिति वाच्यम्, युक्तिमूलत्वेनास्य शास्त्रमूलत्वासिद्धेः । अथ प्रतिपिपादयिषितपदार्थसंसर्गाप्रमापकत्वमत्र विवक्षितम्, तत्राप्यसंभवः, चन्द्रब्रह्मादिशब्दार्थानां स्वरूपतो ज्ञाततयाऽप्रतिपिपादयिषितत्वेन संसर्ग विशेषप्रतियोगित्वेनैव प्रतिपिपादयिषितत्वात् । अत एव न द्वितीयलक्षणमपि, तथा च लक्षणासम्भवात् प्रमाणमप्यसंभवि, अलक्षिते प्रमाणस्योपन्यसितुमशक्यत्वाद् इति ।

अत्रोच्यते– पदवृत्तिस्मारितातिरिक्तमत्र संसर्गपदेन विवक्षितम् । तथा चापर्यायशब्दानां पदवृत्तिस्मारितातिरिक्तागोचरप्रमाजनकत्वमाद्यलक्षणं पर्यवसितम् । तथा च न संयोगलक्षणे अव्याप्तिः, तस्य पदवृत्तिस्मारितत्वात् । नापि द्विषदन्नभोजननिषेधके अतिव्याप्तिः, तत्रानिष्टसाधनत्वसंसर्गस्य पदवृत्त्यस्मारितस्य प्रतिपाद्यत्वात् । 'शीतोष्णस्पर्शवन्तौ पयःपावका' वित्यत्र त्वखण्डार्थत्वमिष्टमेव । न च – धर्मधर्मिभावासहमखण्डार्थत्वं कथं धर्मिभेदं सहतामिति– वाच्यम्, एकत्रासहिष्णुतायाः सर्वत्रा सहिष्णुतायामहेतुत्वात्, शीतस्पर्शवत् पयः, उष्णस्पर्शवान् पावक इति वाक्यार्थभेदाच्च । असंभवस्तु तन्मात्रप्रश्नोत्तरत्वादिति हेत्वसिद्ध्युद्धारे निरसिष्यते । अत्र च 'घटः कलश'इत्यादौ संसर्गाप्रमापके एकार्थपरेऽतिव्याप्तिवारणायापर्यायशब्दानामिति । तत्रापि बहुवचनेन संभूयैकार्थप्रतिपादकत्वस्य

(अद्वैतसिद्धिः)

लाभान्न'धवखदिरपलाशा' इत्यादावतिव्याप्तिः। पदज्ञाप्येत्युक्ते अर्थापत्त्या पदज्ञाप्यमनिष्ट-साधनत्वमादाय 'विषं भुङ्क्ष्वेति वाक्ये अतिव्याप्तिः स्यात्तद्वारणाय वृत्तीति। तथाप्य-न्विताभिधानवादिमते शक्त्याऽभिहितान्वयवादिमते च लक्षणया वाक्यार्थभूतसंसर्गस्य वृत्तिज्ञाप्यत्वात् सर्वत्र प्रमाणवाक्ये अतिव्याप्तिः स्यात्तद्वारणाय उक्तं स्मारितेति । आद्यपक्षे कुब्जशक्त्यङ्गीकाराद्, द्वितीयपक्षे चाज्ञातांया एव पदार्थनिष्ठाया लक्षणाया वृत्तित्वाङ्गीकारात् न संसर्गस्य पदस्मारितत्वम्, किंत्वनुभाव्यत्वमित्यतिव्याप्तिपरिहारः । एवं द्वितीयमपि लक्षणं सम्यगेव । तत्राप्येकत्वं प्रातिपदिकार्थस्यैकधर्मावच्छेदेन वृत्तिविषयत्वम्, न त्वेकमात्र व्यक्तित्वम् । अतो यौगिकार्थौपगवादिप्रश्नोत्तरे 'श्यामो दीर्घः लोहिताक्ष औपगव' इत्यादौ अनेकार्थात्मके वनसेनादिप्रश्नोत्तरे एकदेशस्था वृक्षा वनमित्यादौ च नाव्याप्तिः। 'शीतोष्णस्पर्शवन्तौ पयःपावकौ'विति तु प्रत्येकमेकैकार्थपरत्वात् सङ्ग्राह्यमेव । तदुक्तं कल्पतरुकृद्भिः—

अविशिष्टपर्यायानेकशब्दप्रकाशितम् ।
एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे ॥ इति ।

ननु प्रवृत्तिनिमित्तभेदे अपर्यायत्वम्, स चानन्तादिपदेषु न संभवति, शुद्धब्रह्ममात्रनिष्ठत्वाद्, अतो वेदान्तेषु लक्षणाव्याप्तिरिति चेन्न, प्रवृत्तिनिमित्तभेदं स्वीकृत्यैव लक्षणयाऽनन्तादिपदानां शुद्धब्रह्मपरत्वस्य वक्ष्यमाणत्वात् । न च शुद्धे संबन्धाभावान्न लक्षणापीति वाच्यम् । अतात्विकसंबन्धेनैव लक्षणोपपत्तेः । भ्रमप्रतीतरजतत्वेन संबन्धेन शुक्तौ रजत पदलक्षणावत् । शुद्धस्यैव सर्वकल्पनास्पदत्वेन शुद्धे न कल्पितसंबन्धानुपपत्तिः । यथा चानन्तादिपदानां लाक्षणिकत्वेऽपि ब्रह्मणि नान्तवत्त्वादिप्रसङ्गः तथा वक्ष्यते । इत्यद्वैतसिद्धौ अखण्डार्थलक्षणोपपत्तिः ॥

## न्यायामृततरङ्गिणी

**श्रीर्भूरितिव्यूह्य निदर्शयन्ती स्वात्मातरात्मानमपीन्दिरायम् ।**
**अगूढगूढाङ्गवराः सुरास्तं मयामुरारिं नमयन्तु नम्याः ॥ १ ॥**
**विहङ्गमानाञ्चभुजङ्गमानामिनौ श्रुतीशौ जहितोविरोधम् ।**
**यमेत्यकैमुत्यनयाविरुद्धश्रुतिश्रितं स्वार्थतयात्र सोर्थः ॥ २ ॥**

(तरङ्गिणी)

विश्वनाथाख्यपितरं नारायणपदाग्रजम् ।
पित्राप्तविद्यं च गुरुं नौम्याचार्यकशालिनम् ।। ३ ।।

वेदान्तानामखण्डार्थपरत्वान्नते संसर्गस्य बोधकाः नतराङ्गुणानां नतमामनन्तानामित्याशङ्कते। नन्विति । एतदिति । प्रथमपरिच्छेदान्ते तस्मादित्यादिना यदुक्तं तदित्यर्थः । एकमिति। एकं पदार्थनिष्ठम् अपरमैक्यरूपवाक्यार्थनिष्ठमित्यन्वयः । पदार्थनिष्ठमपि द्विविधमित्याह । यथासत्यमिति । जगत्कर्तृत्वादि युक्तस्य पुण्यपापादिविदूरस्य च तत्पदार्थस्यानेवंविधत्वम् । पदार्थैनैक्यबोधनासंभवपरिहाराय सत्यविज्ञानादिमात्र एवायं तत्पदार्थः । जगत्कर्तृत्वादिकं तु तस्य मायामयं मिथ्याभूतमित्येतदर्थप्रतिपादनपरं तस्माद्वा एतस्मादात्मन आकाशः संभूतः सोकामयत बहुस्यां तदात्मानं स्वयमकुरुत तस्मात्तत्सुकृतमुच्यत इति यद्वै तत्सुकृतं रसो वै सः इत्यादिवाक्यैरेकवाक्यतापन्नं सत्यज्ञानादिवाक्यं तत्पदार्थं शोधयतीति कृत्वा तत्पदार्थपरमित्युच्यते । तथा त्वं पदार्थोपि ज्ञानादिमात्र एव पुण्यपापादिकं तु तस्य मिथ्याभूतमित्येतदर्थप्रतिपादनपरं 'स समानः सन्नुभौ लोकावनुसंचरति' 'अनन्वागतं पुण्येनानन्वागतं पापेन असंगो ह्ययं पुरुष' इत्यादि वाक्यैरेकवाक्यतापन्नं योयं विज्ञानमयः पुरुष इत्यादि वाक्यं त्वं पदार्थं शोधयतीति त्वं पदार्थपरमित्यर्थः । निर्भेदार्थनिष्ठत्वं किं भेदाभावप्रकारकधीजनकत्वं वा । वस्तुतो निर्भेदो योऽर्थ तद्बोधकत्वं वा । आद्ये दोषमाह । भेदाभावेति । स्वरूपेति । शुक्तिकामुद्दिश्येदं रजतं बहुमूल्यमित्यादिवाक्यस्य यथा रजतत्वाद्यपेतशुक्तिकापरत्वं तथा एष सर्वेश्वर एष भूताधिपतिरित्यादिवाक्यस्य वस्तुतो यदनेवंविधं ब्रह्म तत्परत्वमित्यर्थः । उभयत्र दोषमाह । प्रकृष्टेति । तस्य भेदाभावप्रकारकज्ञानाजनकत्वात्तदर्थस्य चन्द्रादेर्भिन्नत्वाच्चेत्यर्थः । पयः पावकेति । अनेकप्रातिपदिकार्थपरत्वादस्यालक्ष्यत्वं धर्मिभेदप्रतिपादकस्याखण्डार्थत्वायोगादित्यर्थः । तथापीति । घटः कलश इत्यादौ संसर्गाप्रतिपादके एकार्थपरेऽतिव्याप्तिवारणायापर्यायेति । अप्राप्तयोः प्राप्तिः संयोग इत्यादि संयोगलक्षणेऽखण्डार्थकेऽव्याप्तिवारणाय संसर्गपदस्य पदार्थसंसर्गपरतया पदार्थसंसर्गागोचरपदार्थस्मृतिहेतुपदसमुदायेऽति व्याप्तिपरिहाराय ज्ञानजनकत्वमित्यनुक्त्वा प्रमाजनकत्वमित्युक्तम् । तत्रापि न यथार्थत्वप्रवेशः । संसर्गागोचरज्ञानस्य यथार्थत्वनियमात् । निर्विकल्पकपक्षे इन्द्रिये तद्वारणाय शब्दानामिति । यत्तु बहुवचनेन संभूयैकार्थप्रतिपादकत्वस्य लाभान्न धवखदिरपलाशा इत्यादावति व्याप्तिरिति । तन्न । तत्र शक्त्या वा लक्षणया वोपस्थितसाहित्यसंसर्गस्यावश्यं प्रतीतेः । प्रकृतपदार्थप्रतियोगिकस्य पदार्थांतर्भूतस्य संसर्ग-

(तरङ्गिणी)

स्यानुभावके यौगिके पङ्कजादिपदेतिव्याप्तिवारणाय बहुवचनम् । एकेनापि पदेन प्रकृतिप्रत्ययार्थयोरन्विताभिधानमितिमते पर्यायपदेष्वतिव्याप्तिवारणायापर्याय शब्दानामिति। तेषामिति । अखण्डार्थपदानामपि विशिष्टार्थकत्वात्तेषां प्रातिपदिकार्थमात्रवाचकत्वमसंभवीत्यतस्तत्पर्यवसायित्वमित्युक्तम् । संमतवदिति । को घट इति प्रश्नोत्तरभूतमयं घट इत्यादिवाक्यं संमत शब्दार्थः ।

ननु तत्रापि न मम साध्यसंमतिरित्यत आह । नहीति । प्रश्नोत्तरयोर्वैयधिकरण्यप्रसंगेन त्वयापि तत्रावश्यं साध्यस्याङ्गीकर्तव्यत्वादित्यर्थः । अकार्यकारणेति । मृद्घटः गुणगुणिनोरभेदपक्षे नीलो घटः देवदत्तस्य घट इत्यादावव्यभिचाराय क्रमेण विशेषणानि । संसर्गेति । संयोगलक्षणेत्यर्थः । संसर्गप्रतियोगित्वेनेति । संसर्गस्य तात्पर्यविषयत्वेन तदप्रतिपादने वाक्यप्रामाण्यायोगादित्यर्थः । ननु पदवृत्तिस्मारितातिरिक्तमत्र संसर्गपदेन विवक्षितम्। तथाचापर्यायशब्दानां पदवृत्तिस्मारितातिरिक्तागोचरप्रमाजनकत्वं लक्षणम् । तथाच न संयोगलक्षणेऽव्याप्तिः । तत्र संयोगस्य पदवृत्तिस्मारितत्वात् । संयोगसंसर्गस्य च तत्रापि मम मतेऽप्रतिपादनात् । अत्र पदज्ञाप्येत्युक्तेऽर्थापत्त्या पदज्ञाप्यमनिष्टसाधनत्वमादाय विषं भुंक्ष्वेति वाक्येऽति व्याप्तिः स्यात्तद्वारणाय वृत्तीति। तथाप्यन्विताभिधानवादिमते शक्त्याभिहितान्वयवादिमते च लक्षणया वाक्यार्थभूतसंसर्गस्य वृत्तिज्ञाप्यत्वात्सर्वत्र प्रमाणवाक्येतिव्याप्तिः स्यात्तद्वारणायोक्तं स्मारितेति । आद्यपक्षे कुब्जशक्त्यङ्गीकारात् । द्वितीयपक्षे चाज्ञाताया एव पदार्थनिष्ठलक्षणाया वृत्तित्वाङ्गीकारान्नसंसर्गस्य पदस्मारितत्वं किं त्वनुभाव्यत्वमित्यतिव्याप्तिपरिहार इति । अत्र ब्रूमः । ज्ञेयत्वादिवत्पदवृत्तिस्मारितत्वस्याप्यभिधेयत्वपर्यवसन्नस्य केवलान्वयित्वेन तदतिरिक्ताप्रसिद्धिः । स्ववृत्तिस्मारितेति विवक्षायां स्मारितातिरिक्तागोचरप्रमाजनकत्वं किमतिरिक्तगोचरप्रमाजनकभिन्नत्वं वा स्मारितमात्रगोचरप्रमाजनकत्वं वा। नाद्यः । घटः कर्मत्वमित्यादावतिव्याप्तेः । स्वशब्देन गवादिपदं तद्वृत्तिस्मारिता ये पदार्थास्तदतिरिक्तो यस्तत्संसर्गस्तद्गोचरप्रमाजनकं यद्गामानयेत्यादिवाक्यं तद्भिन्नत्वाद्घटः कर्मत्वमित्यादिवाक्यस्य शब्दपदस्य प्रमाणशब्दपरत्वेत्वपर्यायेति व्यर्थम् । तव मते आकाङ्क्षादिराहित्येन पर्यायाणामप्रामाण्यात् । न द्वितीयः । सत्यादिवाक्यस्यानुवादकत्वापातेनासंभवात् । तव मते सत्यादि वाक्यानां विशिष्टशक्तत्वेन तस्यैव पदस्मारिततयाऽखण्डस्य स्मारितभिन्नत्वाच्च । तदुक्तं कल्पतरौ-

(तरङ्गिणी)

अविशिष्टमपर्यायानेकशब्दप्रकाशितम् ।
एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिर इति ।

वक्ष्यमाणरीत्या घटशब्दवाच्ये कलश शब्दवाच्यत्वसंसर्गपरत्वात्पर्याय शब्दानामतोऽपर्यायशब्दानामिति व्यर्थमेव ।

ननु शीतोष्णेत्यादिप्रत्येकमेकैकार्थपरत्वात्सङ्ग्राह्यमेवेत्यत आह। न चेति। द्वंद्वावगतभेदवतोखण्डत्वायोगात् । तथाचाहुरेकं वेदान्तानिष्णाता अखण्डं प्रतिपेदिर इति । एकं निर्भेदमित्यर्थः । नचात्र शीतस्पर्शं पय उष्णस्पर्शः पावक इति वाक्यद्वयमेव । तत्र च न भेदावगम इति वाच्यम् ।

चन्द्रे कलंकः सुजने दरिद्रता विकासलक्ष्मीः कुमुदेषु चञ्चला ।
मुखप्रसादः सधनेषु नित्यं यशोविधातुः कथयन्ति खण्डितम् ।

इत्येकस्मृत्युपारूढानां चन्द्रादीनां बहुत्वान्वयवदिहाप्यन्वयोपपत्तेः । यौगिकार्थेति । औपगवादिवनाद्यर्थानां विशिष्टरूपत्वान्नाखण्डत्वम् । अतः श्यामादिवाक्यं नाखण्डार्थमतो न लक्ष्यम् । लक्षणवाक्यत्वात्तु त्वद्रीत्या पदवृत्तिस्मारितातिरिक्तागोचरप्रमाजकं चेति तत्रातिव्याप्तिरित्यर्थः । प्रकृष्टादीति । प्रकृतपदार्थसंसर्गरूपयोग्यतादिमत एव वाक्यत्वाद्वाक्यत्वाखण्डार्थत्वयोर्विरोधेनैकत्रासंभव इत्यर्थः । असंभवादिति । चन्द्रब्रह्मादिशब्दानामज्ञातज्ञापकत्वाय संसर्गप्रतियोगित्वेनैव चन्द्रब्रह्मादिज्ञापकतया एकप्रातिपदिकार्थपर्यवसानाभावादित्यर्थः। ननु प्रातिपादिकार्थस्यैकत्वं नाम स्वान्तर्गणिकभेदशून्यत्वरूपमेकमात्रव्यक्तिकत्वं न । किंत्वेकधर्मावच्छेदेन वृत्तिविषयत्वम् । तच्च संसर्गप्रतियोगिन्यपि चन्द्रादावस्त्वेव । अत एवौपगवादिवाक्यमप्यखण्डार्थमेवेति न तत्रातिव्याप्तिः । मैवम् । विशिष्टस्याप्यखण्डत्वाङ्गीकारेऽविशिष्टमखण्डमिति त्वन्मतहानिः। ब्रह्मतद्गुणानामभेदेन ब्रह्मत्वाद्येकधर्मावच्छेदेनोपस्थितैकप्रातिपदिकार्थे सगुणब्रह्मणि सत्यादिवाक्यपर्यवसानरूपाखण्डार्थत्वस्य ममानिष्टत्वाभावाच्च । अनन्ताखण्डशुद्धादिशब्दानामपर्यायत्वाभावात्तेषूक्तलक्षणा व्याप्तिरित्यभिसंधायाह । प्रवृत्तीति । तद्भेद इति । इह अनन्तादिशब्दे । सत्यादि शब्दप्रवृत्तिनिमित्तापेक्षया भिन्नं स्वतात्पर्यधर्मिसमसत्ताकं प्रवृत्तिनिमित्तं नास्तीत्यर्थः । अनन्तादिशब्दानां प्रवृत्तिनिमित्तमेवासंभवि दूरे तद्भेद इत्याह । अनन्तत्वादीनामिति । अन्यत्रेति । तत्रानन्तत्वस्य

(तरङ्गिणी)

प्रातिभासिकत्वेनोक्तविधत्वाभावादित्यर्थः। अनन्तादीति। गङ्गापदलक्षिते गङ्गात्वसिद्धिवदनन्तादि पदलक्षिते शुद्धेऽनन्तत्वाद्यसिद्धिः। अनन्तादिशब्दानां शुद्धे लक्षणानङ्गीकारेऽनन्तत्वसंसर्गस्यानन्तादिशब्दैः शुद्धे बोधनेन तेषु सुतरामव्याप्तिरिति चकारार्थः।

व्यासाद्रिसृततर्काबुपूरैः पक्षयुगं युजि।
न्यायामृततरङ्गिण्यां नाखण्डार्थत्वलक्षणम्।

इति अखण्डार्थत्वलक्षणभङ्गः ॥ १ ॥

## न्यायामृतकण्टकोद्धारः

सर्वाभीष्टप्रदं वीरं सर्वविघ्नौघनाशकम्।
नरसिंहं सद्गुणाढ्यं प्रणमामि सुसंविदे ॥
हयास्यं शशिबिम्बस्थं सर्ववेदप्रवर्तकम्।
शंखादियुक्चतुर्बाहुं प्रणमामि महाप्रभुम् ॥
निरूप्य बन्धसत्यत्वं बन्धविध्वंसकारणम्।
यज्ज्ञानं तद्विशिष्टार्थमादेयमधुनोच्यते ॥

ननु सत्यजगत्कर्तृत्वाद्यनन्तगुणविशिष्टे वेदान्ताः प्रमाणमिति यदुक्तं तदयुक्तम्। वेदान्तानामखण्डार्थनिष्ठत्वस्य प्रमितत्वादिति शङ्कते– नन्विति। वेदान्तेत्युपलक्षणम्। लौकिकेत्यपि बोध्यम्। यथेति। प्रकृष्टप्रकाशश्चन्द्रः सोयं देवदत्त इत्यादि लौकिकवाक्योदाहरणमपि द्रष्टव्यम्। निर्भेदत्वं वेदान्तजन्यज्ञाने प्रकारो वा? स्वरूपसद्वा? आद्य आह। भेदाभावेति। न चोपलक्षितस्वरूपत्वपक्षे कथमखण्डार्थत्वहानिः। स्वरूपमात्रस्य तत्र भानादिति वाच्यम्। उपलक्षणपक्षेऽप्युपलक्षणस्य तदुपस्थाप्यस्य वा काकोत्तृणत्वादिवत् शब्दजन्यज्ञाने प्रकारत्वनियमात्। द्वितीये आह। स्वरूपेति। ननु वस्तुगत्या यन्निर्भेदं तन्मात्रपरत्वमखण्डार्थत्वमतो न सगुणवाक्येऽतिव्याप्तिः। तस्य गुणपरत्वस्यापि भावादित्यत आह। प्रकृष्टेति। तेषां धर्मिसमसत्ताकभेदवद्वस्तुपरत्वेन वस्तुगत्या निर्भेदार्थमात्रपरत्वाभावादिति भावः। य इति। यद्यप्यत्र सम्भूयार्थपरत्वं नास्त्येव। प्रत्येकं त्वेकार्थमात्र परत्वं लक्षणवाक्यत्वादतो न तत्रातिव्याप्तिस्तथापि ब्रह्मण्यसम्भव एव। शक्त्या लक्षणया वा वेदान्तानां निःसम्बन्धे ब्रह्मणि पर्यवसानानुपपत्तेरिति द्रष्टव्यम्। इष्टापत्तेश्चेति। मयापि अपर्यायशब्दानां तत्तद्विशेषण समर्पणद्वारा एकविशेष्यपरत्वस्य स्वीकारादित्यर्थः। अपर्यायशब्दानामिति। न च सर्वथा संसर्गगोचरप्रमाजनकत्वस्य लक्षणार्थत्वे अप्राप्तयोः प्राप्तिः संयोगः, नित्यः सम्बन्धः समवायः इत्यादिलक्षणवाक्येष्वव्याप्तिः। तेषां

(कण्टकोद्धारः)
लक्ष्यसंसर्गागोचरप्रमिति जनकत्वादिति वाच्यम् । अत्र हि संसर्गागोचरशब्देन स्वस्वपदस्मारित पदार्थानामन्योन्यसंसर्गागोचरप्रमितिजनकत्वस्य विवक्षितत्वादिति नाव्याप्तिः । अत्र हि हस्तकरादि-पर्यायशब्दानामपि संसर्गागोचरप्रमाजनकत्वात् तत्रातिव्याप्ति निवृत्यै अपर्यायग्रहणम् । इन्द्रियाणामपि निर्विकल्पकरूप संसर्गागोचरप्रमिति जनकत्वात् तन्निवृत्तये शब्दग्रहणम् । गामानयेत्याद्यपर्यायशब्दानामपि संसर्गगोचरप्रमाजनकत्वात् तदर्थं संसर्गागोचरग्रहणम् । गौरश्वः पुरुषो हस्तीत्याद्यपर्याय शब्दानामपि पदस्मारितपदार्थानामन्योन्यसंसर्गागोचरज्ञानजनकत्वात् तत्रातिप्रसङ्गनिवृत्तये प्रमितिग्रहणम् । गौरश्व इत्यादि शब्दानां च पदार्थमात्रस्मारकत्वेनानुभवत्वगर्भप्रमिति जनकत्वाभावान्नाति प्रसङ्गः । प्रातिपदिकार्थेति । न च निःसम्बन्धे कथं पर्यवसानमिति वाच्यम् । आरोपितसम्बन्धेन तदुपपत्तेः । उक्तार्थे चित्सुखसम्मतिमाह । उक्तं हीति । गिरामपर्याय शब्दानां या संसर्गाविषयत्वे सति सम्यग्धी हेतुता इयमखण्डार्थता उक्ता । यद्वा तेषामेव शब्दानां तत्प्रातिपदिकार्थता तदिति संसर्गराहित्येन लक्षितमेकत्वं परामृशति । एकप्रातिपदिकार्थतेत्यर्थः ।

एवमखण्डार्थत्वस्य लक्षणमुक्त्वा पदार्थपरस्याखण्डार्थत्वे प्रमाणमाह । तत्रेति । अत्र साध्यद्वये क्रमेण हेतुद्वयं द्रष्टव्यम् । अन्यथा द्वितीयसाध्ये प्रथमहेतोः प्रकृष्टप्रकाश इत्यादौ व्यभिचारप्रसङ्गात् । तस्य ब्रह्म प्रातिपदिकार्थमात्र निष्ठत्वाभावात् । यद्वाऽस्तूभयत्रोभयं हेतुः । ब्रह्मपदस्य लक्ष्यमात्रपरत्वाङ्गीकारेणोक्त-व्यभिचारासंभवादिति । अत एवाह । प्रकृष्टादिवाक्यमिति । अप्रयोजकत्वं परिहरति । नहीति । तथात्वे प्रश्नोत्तरयोर्वैयधिकरण्यप्रसङ्ग इति भावः । ननु सास्नादिमान् गौरित्यादि लक्षणवाक्येषु व्यभिचारः । तत्र प्रातिपदिकार्थमात्रनिष्ठत्वाभावादित्यत आह । सास्नादिमान् गौरितीति । तथा च पक्षसमत्वान्न व्यभिचार इति भावः । न चैवं दृष्टान्ताभावात् कथं व्याप्तिग्रह इति वाच्यम् । व्यतिरेकव्याप्त्याऽन्वय व्याप्त्यनुमानस्य संभवात् । व्यतिरेकव्याप्तेरेव गमकत्वसंभवाच्च । अकार्येति । अत्र समानाधिकरणत्वादित्युक्ते मृद्घट इत्यादौ व्यभिचारस्तदर्थमकार्येत्यादि अकार्यकारणनिष्ठत्वादित्युक्ते देवदत्तस्य गौरित्यादौ । तदर्थं समानाधि-करणत्वादिति । न चात्र द्रव्यपदं व्यर्थमिति वाच्यम् । दण्डी देवदत्तो, गोमान् देवदत्त इत्यादौ व्यभिचारवारकत्वात् । न च विशिष्टहेतोस्तत्र सत्त्वात् कथं व्यभिचारपरिहार इति वाच्यम् । कार्यकारणनिष्ठान्यत्वे सति द्रव्यमात्र निष्ठान्यत्वे इति विवक्षितत्वात् । उक्तवाक्यस्य द्रव्यमात्रनिष्ठत्वात् । न चैवं विशेष्यवैयर्थ्यं नीलस्य गुणत्वमित्यादौ व्यभिचारवारकत्वात् । न चैवमप्रसिद्धिः । सोयं देवदत्त इत्यादेरपि द्रव्यमात्रनिष्ठत्वादिति वाच्यम् । द्रव्यपदेन तत्संसर्गस्य विवक्षितत्वात् । न चैवं विशिष्टस्य हेतोः नीलो गुण इत्यादौ व्यभिचार इति वाच्यम् । गुणमात्र संसर्गपरान्यत्वे सतीत्यस्यापि विवक्षितत्वात् । न चैवमकार्येत्यादि व्यर्थम् । तस्य नीलोत्पलमित्यादौ व्यभिचारवारकत्वादिति सर्वं समञ्जसम् । प्रधानसाध्यहेतुष्वप्रयोजकत्वं परिहरति । विपक्ष इति । आद्यलक्षण इति । अपर्याय शब्दानां किं संसर्गागोचरप्रमाजनकत्वमित्यत्र संसर्गशब्देन किम् संसर्गसामान्यं प्रकृतपदार्थापदार्थरूपं विवक्षितम् ? अथवा प्रकृतपदस्मारितपदार्थसंसर्गो विवक्षितः ? यद्वा प्रतिपिपादयिषितपदार्थसंसर्गः ? आद्य आह संसर्गशब्देनेति ।

(कण्टकोद्धारः)

तत्र लक्ष्यार्थकपदार्थीभूत संसर्गप्रमापकत्वादव्याप्तिरित्यर्थः । द्वितीय आह । पदस्मारितेति । एवञ्च यद्यपि नाव्याप्तिः । पदार्थीभूतसंसर्ग प्रतिपादकत्वेऽपि पदार्थसंसर्गस्याप्रतिपादकत्वात् । तथाप्यतिव्याप्तिरेव । विषं भुंक्ष्वेत्यनेन हि द्विषदन्नं न भोक्तव्यमिति वाक्यार्थो बोध्यते । तस्य प्रकृतपदस्मारितपदार्थसंसर्गत्वाभावादिति भावः । तृतीय आह । प्रतिपिपादयिषितेति । एवं यद्यपि विषं भुंक्ष्वेत्यत्र नाति व्याप्तिः । अनेन द्विषदन्नादिपदार्थानां प्रतिपिपादयिषितत्वेन प्रतिपिपादयिषितसंसर्गप्रमापकत्वाभावात् तथापि प्रकृष्टादि-वाक्येऽव्याप्तिरेवेति भावः ।

ननु प्रकृतपदज्ञातपदार्थानामपदार्थीभूतसंसर्गागोचरप्रमाजनकत्वं विवक्षितम् । एवञ्च न प्रकृष्टादि-वाक्येऽव्याप्तिः । तस्य तन्मात्र प्रश्नोत्तरत्वादिना संसर्गगोचरप्रमाजनकत्वाभावात् । नापि विषं भुंक्ष्वेत्यत्रातिव्याप्तिः । तस्य प्रकृतपदस्मारितसंसर्गागोचरप्रमाजनकत्वादित्यत आह । किञ्चेति । नन्वेतदपि अखण्डार्थमेवेति अत्राह । न चेति । तथा च धर्मिभेदप्रतिपादनान्नाखण्डार्थत्वमिति भावः ।

ननु शीतोष्णस्पर्शवन्तौ पयः पावकौ इत्ययं समुदायो नैकवाक्यं संभूयार्थाप्रतिपादकत्वात् । न चात एवातिव्याप्तिः । तस्मिन् त्वदीय लक्षणस्य गतत्वादिति वाच्यम् । अपर्यायशब्दानां संसर्गा-गोचरप्रमाजनकवाक्यत्वस्य विवक्षितत्वात् । समुदायस्य चैकार्थप्रतिपादकत्वाभावेन वाक्यत्वाभावात् प्रत्येकं तु लक्ष्यत्वान्नातिव्याप्तिरित्यत आह । किञ्चेति । ननु संसर्गशब्देन पदवृत्तिस्मारितातिरिक्तं विवक्षितम् । एवञ्चापर्याय शब्दानां पदवृत्तिस्मारितातिरिक्तागोचरप्रमाजनकत्वमखण्डार्थत्वम् । एवञ्चोक्तस्थलेषु नाव्याप्तिः । संयोगादिपदार्थस्य पदस्मारितत्वेन पदवृत्तिस्मारितातिरिक्तत्वाभावात् । अन्विते शक्त्यङ्गीकारेऽपि कुब्जशक्तिवादत्वेनान्वयांशे स्मारितत्वाभावात् । भाट्टानामन्वयांशे लक्षणायामपि अन्वयांशे स्मारितत्वा-भावात् न खण्डार्थवाक्यातिव्याप्तिरपीत्यत आह । प्रकृष्टेत्यादि । अयमाशयः एवं विवक्षायां लक्षणवाक्येष्वसंभवः । न हि लक्षणवाक्येषु पदवृत्तिस्मारितस्यैवानुभव इत्यत्र नियामकमस्ति । पदार्थस्मरणाभावेऽपि पदश्रवणानन्तरमेव साकांक्षस्वार्थानुभवसंभवात् । नहि पदार्थस्मरणं पदार्थानुभवे कारणं प्रमाणाभावात् । न्यायमते पदार्थस्मरणस्य विशेषणज्ञानत्वेनोपयोगात् । आवयोर्मते तदभावात् । किञ्चास्तु पदार्थस्मरणनियमः । तथापि स्मरणस्य निष्प्रकारकत्वाभावात् लक्षणयानुभाव्यशुद्धस्य पदवृत्तिस्मारितविशिष्टादन्यत्वात् पदवृत्तिस्मारितविशिष्टान्यशुद्धप्रमाजनकत्वेन सत्यादिवाक्येष्वव्याप्तिरेव । प्रकृष्टादिवाक्यस्य तु संसृष्टार्थत्वेनासंभवस्तु मूल एव स्फुट एवेति । अत एवेति परामृष्टं हेतुमाह । असंभवादिति । सर्वेषां लक्षणवाक्यानां सखण्डार्थत्वस्य वक्ष्यमाणत्वादिति भावः । अतिव्याप्तेश्चेति । इदं चैकपदस्य प्रातिपदिकविशेषणत्वपक्षे द्रष्टव्यम् । प्रातिपदिकार्थविशेषणत्वे तु पूर्वोक्तदूषण एव तात्पर्यमिति भावः । एकपदस्य प्रातिपदिकार्थविशेषणत्वे तदेकत्वस्यैकधर्मावच्छिन्नत्वे वक्तव्ये विशिष्टार्थविषयत्वापत्या अखण्डार्थत्वाङ्गीकारविरोध इति ध्येयम् । इदानीमपर्यायत्वाभावप्रयुक्तमसंभवमाह । किञ्चेति । प्रवृत्तिनिमित्तभेदः किं शुद्धातिरिक्ते वा शुद्धे वा ? नाद्य इत्याह । अनन्तत्वादीनामिति । न द्वितीयः । शुद्धे

(कण्टकोद्धारः)

**तद्भेदाङ्गीकारे च सखण्डार्थत्वापातः । ननु लक्षणयाऽखण्डार्थपरत्वमतो नोक्तदोष इत्यत आह । अनन्तादिशब्दानामिति । शब्दप्रवृत्तिनिमित्तस्य लक्ष्ये काप्यदृष्टत्वात् । गङ्गापदलक्ष्यस्य तीरस्यागङ्गात्व-नियमादनन्तादिपदलक्ष्यस्य ब्रह्मणोऽनन्तत्वाद्यभाव प्रसङ्गादिति भावः । इति अखण्डार्थत्वलक्षणभङ्गः ।**

## न्यायामृतप्रकाशः

समस्तवेदसंवेद्यं वेदव्यासं गुणार्णवम् ।
विवृणोमि प्रणम्याहं परिच्छेदं द्वितीयकम् ॥ १ ॥

पूर्वपरिच्छेदान्ते यदुक्तमनन्तगुणे ब्रह्मणि वेदान्ताः प्रमाणमिति तदाऽऽक्षिपति । नन्वेतदिति । एकं पदार्थनिष्ठम् अपरं वाक्यार्थनिष्ठमित्यन्वयः । पदार्थनिष्ठमपि द्विविधमित्याह । यथेति । 'यः सर्वज्ञ' इत्यादिवाक्यानां सार्वज्ञादिप्रतिपादनपराणामपि सार्वज्ञादीनां मायामयत्वेन मिथ्यात्वात् सत्यज्ञानादिरूपे ब्रह्मण्येव तात्पर्यमित्यर्थः । अत एव स्वरूपमात्रप्रतिपादनपरं सत्यादिवाक्यमेवोदाहृतम् । योयमिति । त्वंपदार्थेपि दुःखादिप्रतिपादनपराणामपि वाक्यानां स्वार्थे तात्पर्याभावादिति भावः । द्वयमपीति । पदार्थनिष्ठं वाक्यार्थनिष्ठं चेति द्वयमपीत्यर्थः । निर्भेदार्थनिष्ठत्वमित्यत्र भेदाभावस्य शब्दबोध्यत्वं विवक्षितम् उत भेदाभावस्य स्वरूपतो ब्रह्मणि सत्वमात्रमभिप्रेतं न तु शब्दबोध्यत्वम् । एवं च वस्तुतो यन्निर्भेदं ब्रह्म तन्निष्ठत्वमिति विवक्षितम् । आद्येपि किं भेदाभावविशिष्टार्थप्रतिपादकत्वमभिप्रेतम् उत भेदाभावोपलक्षितार्थप्रतिपादकत्वम् । नोभयमपीत्याह । भेदाभावेति । सखण्डार्थत्वेति । यथा निर्घटं भूतलमित्यत्र घटाभावप्रकारकज्ञानजनकत्वम् एवं विशेषणोप-लक्षणरूपप्रकारयुक्तार्थबोधकत्वेन सप्रकारकज्ञानजनकत्वापत्त्या सखण्डार्थत्वापत्तेरित्यर्थः । नान्त्यः सगुण-वाक्येष्वतिव्याप्तेरित्याह । स्वरूपसत्वेति । वस्तुगत्या निर्भेदं यद् ब्रह्म तन्निष्ठत्वेन तस्मिन्गुण-संसर्गप्रतिपादकत्वेनेत्यर्थः । भेदाभावस्य शब्दबोध्यत्वपक्षे स्वरूपसत्वाभिप्रायपक्षे च दोषमाह । प्रकृष्टेति । प्रकृष्टादिलक्षणवाक्यस्य प्रश्नोत्तरयोर्वैयधिकरण्यान्यथानुपपत्त्या चन्द्रस्वरूपमात्रप्रतिपादकत्वेन अखण्डार्थत्वात् प्रकृष्टादिवाक्यस्य च भेदाभावविशिष्टार्थप्रतिपादकत्वं नास्ति । न हि चन्द्रभेदाभावप्रकारकं ज्ञानं प्रकृष्टादि-वाक्याद्भवति तथा यत्स्वरूपसन्निर्भेदं तत्प्रतिपादकत्वं नास्ति वस्तुगत्या चन्द्रस्वरूपस्येतरभिन्नत्वा-दतोऽव्याप्तिरित्यर्थः । अत एवेति । विशेषाभावविशिष्टत्वरूपस्य तदुपलक्षितस्वरूपस्य वा शब्दबोध्यत्वाभिप्राये स्वरूपसत्त्वाभिप्राये च दोषस्योक्तत्वादित्यर्थः । घटः कलश इत्यादावेकार्थपरतया घटप्रातिपदिकार्थ-मात्रपरत्वेनाखण्डार्थनिष्ठत्वं च स्यात् तच्च परेषां न संमतं लक्षणवाक्यस्यैव प्रश्नोत्तरवैयधिकरण्यान्यथानुपपत्त्या तथाभावाभ्युपगमात् । अतस्तत्रातिव्याप्तिवारणायापर्यायशब्दानामित्युक्तम् । पयः पावकेति । अनेकप्राति-पदिकार्थपरत्वादस्यालक्ष्यत्वं धर्मिभेदप्रतिपादकस्याखण्डार्थत्वायोगात् न हि धर्मधर्मिभावासहमखण्डत्वं धर्मिभेद-सहमित्यङ्गीकारात् । कीदृशौ पयः पावकाविति प्रश्नेऽस्य लक्षणवाक्यस्य प्रवृत्तत्वेन प्रश्नोत्तर-योर्वैयधिकरण्यान्यथानुपपत्त्या पयः पावकरूपप्रातिपदिकार्थमात्रपर्यवसायित्वमस्तीत्यतिव्याप्तिरित्यर्थः । एकविशे-ष्येति । शीतोष्णस्पर्शवन्तौ पयः पावकाविति वाक्यस्य तु पयः पावकरूपानेकविशेष्यपरत्वान्नातिव्याप्तिरित्यर्थः ।

(प्रकाशः)

नीलमिति । उत्पले नैल्यसंसर्गबोधकत्वेनास्य सखण्डार्थत्वेनालक्ष्यत्वादुत्पल रूपैकविशेष्यप्रतिपादकत्वेन तत्रातिव्याप्तिः स्यादित्यर्थः । ननु प्रश्नोत्तरयोर्वैयधिकरण्यान्यथानुपपत्त्या लक्षणवाक्यत्वावच्छिन्नस्याखण्डार्थत्वाङ्गीकारादस्यापिलक्षणवाक्यत्वेनाखण्डार्थत्वाल्लक्ष्यत्वमेवेति चेन्न नीलत्वस्य मषीखण्डादावपि सत्त्वेनातिव्याप्ततया लक्षणत्वाभावेनास्यलक्षणवाक्यत्वाभावादिति ध्येयम् । इष्टापत्तेश्चेति। समस्तवेदानामनन्तगुणाकरभगवद्रूपैकविशेष्यप्रतिपादकत्वरूपाखण्डार्थ त्वस्यास्माभिरङ्गीकारादित्यर्थः । तथापीत्यादि । निर्विकल्पकज्ञानजनकत्वमित्यर्थः । अत्रेदमालोचनीयम् । घटः कलश इत्यादौ संसर्गाप्रतिपादके वाक्ये लक्षणवाक्यत्वाभावेन सखण्डार्थेऽतिव्याप्तिवारणायापर्यायशब्दानामित्युक्तम् । नन्वेवं चेदप्राप्तयोः प्राप्तिः संयोग इति संयोगलक्षणवाक्यं तावदखण्डार्थम् । लक्षणवाक्यत्वादेव तत्राव्याप्तिः संयोगरूपसंसर्गस्यैवात्र लक्ष्यत्वेन तद्गोचरप्रमाजनकत्वेन संसर्गागोचरप्रमाजनकत्वाभावादिति चेन्न । संसर्गशब्देन पदार्थसंसर्गस्यैव विवक्षितत्वात् तथाच नाव्याप्तिः । अस्य संयोगलक्षणवाक्यस्य लक्ष्यभूतसंसर्गप्रमाजनकत्वेपि अप्राप्तयोः प्राप्तिरिति पदद्वयार्थनिरूपितपरस्परसंसर्गप्रमाजनकत्वं नास्ति । लक्षणवाक्यत्वेन स्वरूपमात्रे तात्पर्येण संसर्गे तात्पर्याभावेन तत्प्रमाजनकत्वानङ्गीकारात् । अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यापत्तेः । अतो नाव्याप्तिः अपर्यायशब्दानां पदार्थप्रतियोगिकसंसर्गागोचरज्ञानजनकत्वमखण्डार्थत्वमित्येवोक्तौ गौरश्वो घट इत्यादिपदैः पदार्थस्मृतिर्भवतीति तार्किकैरङ्गीकृतत्वाद्गवादिपदैर्गवादिरूपार्थस्मृतिर्भवति सा च तत्तत्पदानुभवजन्या स्मृतिस्तत्तत्पदार्थमात्रविषयिणी न तु तत्संसर्गविषयिणी एवं चापर्यायाणां तत्तद्गवादिपदानां पदार्थसंसर्गागोचरस्मृति रूपज्ञानजनकत्वेनाखण्डार्थत्वापत्तेः ततश्च गवादिपदसमुदायेऽतिव्याप्तिः । अलक्ष्यत्वं च लक्षणवाक्यत्वाभावात् अतः प्रमापदम् । तत्रापि यथार्थानुभवः प्रमा तत्र याथार्थ्यं न विवक्षितं संसर्गागोचरस्यानुभवस्य निर्विकल्पकरूपत्वेन तस्य याथार्थ्यनियमात् । एवमपि निर्विकल्पकसद्भावपक्षे संसर्गागोचरानुभवजनकेन्द्रियेऽतिव्याप्तिः स्यादतः शब्दानामित्युक्तम् । नन्वत्र बहुवचनं किमर्थमिति चेत् अत्र केचित् धवखदिरपलाशा इति द्वन्द्ववाक्ये भेदे द्वन्द्व इत्युक्तत्वेन भेदप्रतिपादकतयाऽनेकप्रातिपदिकतया वा सखण्डार्थत्वेनालक्ष्ये संसर्गाप्रतिपादके उक्तलक्षणसद्भावेनातिव्याप्तिः स्यादतः शब्दानामिति बहुवचनं तदर्थश्च संभूयैकार्थप्रतिपादकत्वम् एवं च तत्र संभूयैकार्थप्रतिपादकत्वाभावान्नातिव्याप्तिरित्याहुः । तत्समीचीनमिव न भाति इतरेतरयोगे द्वन्द्व इत्यङ्गीकारेण शक्त्या लक्षणया वा धवखदिरादावितरेतरसाहित्यरूपसंसर्गस्यैव प्रतीत्या पदार्थसंसर्गागोचरानुभवजनकत्वरूपलक्षणस्यैवाभावाद्बहुवचनं व्यर्थमेव स्यात् । संप्रदायस्तु बहुवचनाभावे पंकजमानयेति वाक्यैकदेशभूते यौगिके पंकजपदेऽतिव्याप्तिः स्यात् तथाहि पंकजानयपदयोरुभयोर्मिलितयोरेव संसर्गप्रतिपादकत्वं नैकस्य पंकजपदस्य एवञ्च प्रकृतो यः पदार्थः पद्मरूप आनयनरूपश्च तन्निरूपितो यः संसर्गस्तदगोचरानुभवजनकत्वमेकस्मिन्पंकजपदेऽस्तीत्यतिव्याप्तिः । ननु पंकजपदस्य कथमनुभवजनकत्वं तार्किकमते पदानां प्रत्यक्षानुमानानुभूतपदार्थस्मृतिजनकत्वमेव वाक्यस्य तु संसर्गानुभवजनकत्वमेव अत एव यथार्थानुभवरूपप्रमाकरणम् आकांक्षादिमत्पदसमुदायात्मकमाप्तवाक्यमेवेत्यङ्गीकृतमतः कथमेतदिति चेन्न । अभिप्रायानवबोधात् अस्माभिरितरपदानि विहाय पंकजपद एवातिव्याप्तिरभिधीयते तच्च यौगिकत्वेन वाक्यरूपम् एवं च पंकजपदं पंकजनिकर्तृत्व-

(प्रकाशः)

रूपसंसर्गानुभावकमेव एवं च प्रकृतपदार्थप्रतियोगिकसंसर्गागोचरानुभवजनकत्वं पंकजपदेऽतिव्याप्तमतः शब्दानामिति बहुवचनं तथा चापर्यायशब्दानां प्रकृतपदार्थप्रतियोगिकसंसर्गागोचरानुभव जनकत्वमखण्डार्थत्वमिति लक्षणं पर्यवसितम् । नन्वेवमपर्यायपदं व्यर्थं घटः कलश इत्यत्र संसर्गाप्रतिपादकवाक्ये घटादिपदानां प्रकृतपदार्थप्रतियोगिकसंसर्गागोचरानुभवजनकत्वं नास्ति पदानां स्मारकत्वादतस्तत्राति व्याप्तेरभावादिति चेन्न । घटादि शब्दा अपि यौगिका एव प्रकृतिप्रत्ययविभागेन सर्वेपि शब्दा व्युत्पन्ना एवेति पक्षसद्भावात् अतः पंकजादिपदवत् घटकलशादिपदानामपि प्रकृतिप्रत्ययार्थभूतस्वार्थसंसर्गानुभावकत्वेन प्रकृतपदार्थप्रतियोगिकसंसर्गागोचरानुभवजनकत्वमस्त्येवेत्यतिव्याप्तिवारणायापर्यायपदमिति सर्वमनवद्यम् । वस्तुतोऽखण्डार्थपदानामपि शबले गृहीतसङ्गतिकत्वेन विशिष्टार्थवाचकत्वात्प्रातिपदिकार्थमात्र वाचकत्वमसंभवीत्यतः पर्यवसायित्वमित्युक्तम् अतस्तेषामपि लक्षणया तत्परत्वमस्तीत्यर्थः । गिराम् अपर्यायशब्दानां या संसर्गासंगिसम्यग्धीहेतुता इयमखण्डार्थता उक्तेत्यन्वयः । तदिति । तासां गिरामपर्यायशब्दानां ब्रह्मप्रातिपदिकार्थतात्पर्यपर्यवसायित्वं वाऽखण्डार्थतोक्तेत्यर्थः। तत्र अखण्डार्थत्वेऽनुमानं मानमिति संबन्धः । संमतवदिति । को घट इति प्रश्नोत्तरभूतम् अयं घट इत्यादि वाक्यं संमतशब्दार्थः । यद् यत् प्रश्नोत्तरं तत् तत्प्रातिपदिकार्थमात्रपरमिति सामान्यव्याप्तिमदिदं दृष्टान्तकथनमिति ध्येयम् । हेतोरप्रयोजकतां परिहरति । न हीति । अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यप्रसङ्ग इति भावः । ननु सास्नादिमान् गौरित्यादिलक्षणवाक्ये व्यभिचारशंकां परिहरति । सास्नेति । अखण्डार्थत्वेत्विति । अनुमानमुच्यत इति शेषः । अकार्यकारणेत्यादि । निष्ठत्वं प्रतिपादकत्वम् । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिरेकविभक्त्यं तपदवाच्यत्वं वा समानाधिकरणत्वम् । मृद्घट इति समानाधिकरणप्रयोगे कार्यकारणभावरूपसंसर्गप्रतिपाद के सखण्डार्थे व्यभिचारवारणाय अकार्यकारणद्रव्यनिष्ठत्वे सतीत्युक्तम् । तर्हि नीलो घट इति वाक्ये व्यभिचारः । ननु नीलगुणस्य घटकार्यत्वात्कार्यकारणभावोपेतघटरूपद्रव्यप्रतिपादकमेवैतद्वाक्यमिति चेन्न । गुणगुणिनोरभेदपक्षाश्रयेण तार्किकाभिमतकार्यकारणभावानङ्गीकारात् । धर्मधर्मिभावरूपसंबन्धबोधनेन लक्षणवाक्यत्वाभावेन वासखण्डार्थत्वाच्चातो मात्रपदम् । तत्र च नैल्यरूपगुणस्यापि प्रतिपादनान्न व्यभिचारः । देवदत्तस्य दृष्ट इति वाक्ये उपादानोपादेयभावरूपकार्यकारणभावरहितद्रव्यमात्रप्रतिपादके देवदत्तसंबन्धप्रतिपादकत्वेन सखण्डार्थे व्यभिचारवारणाय समानाधिकरणपदम् । बुभुत्सिते श्वेतकेतुनेति शेषः । संसर्गागोचरप्रमाजनकत्वमिति यथाश्रुतलक्षणमेव दूषयति । आद्य इति । अस्मत्कृतपूर्वविवक्षोपरि नेदं दूषणमिति ध्येयम् । संसर्गलक्षणेति । संयोगलक्षणेत्यर्थः । लक्ष्यस्यैव संसर्गरूपत्वेन तद्गोचरप्रमाजनकत्वादिति भावः । पदस्मारितेति । तथा च नाव्याप्तिः अप्राप्तयोः प्राप्तिरिति पदद्वयस्मारितपदार्थसंसर्गप्रतिपादकत्वेन तदगोचरप्रमाजनकत्वाभावादिति भावः । विषमिति । स्वमित्रस्य शत्रुगृहभोजनप्रसक्तिं दृष्ट्वा प्रयुक्ते विषं भुंक्ष्वेत्याप्तवाक्ये वस्तुगत्या संसर्गप्रतिपादकत्वेन लक्षणवाक्यत्वाभावेन वा सखण्डार्थ इत्यर्थः । तामेवोपपादयति । तस्येति । विषं भुंक्ष्वेति वाक्यस्यात्रत्यपदस्मारितपदार्थसंसर्गो यः विषकर्मकभोजनरूपः तत्प्रमापकत्वाभावात् । शास्त्रीयेत्यादि। द्विषदन्नकर्मकं भोजनं न कर्तव्यमित्येतादृशसंसर्गप्रमापकत्वेन नातिव्याप्तिरित्यर्थः । अस्येति । अयमिदानीं मम प्रसक्तं शत्रुगृहभोजनं दृष्ट्वा मह्यं क्रुद्धो वर्तते आप्तत्वे सति प्रमाणविरुद्धकर्तव्यतावादित्वात् तस्माद्द्विषदन्नं न

(प्रकाशः)

भोक्तव्यमित्यभिप्रायेणैवं प्रयुक्तवान् तस्मान्मया न कर्तव्यमित्येवं युक्तिमूलत्वेनेत्यर्थः । अशास्त्रेति । शास्त्रानुपस्थितिदशायामियमतिव्याप्तिर्द्रष्टव्या । प्रतिपिपादयिषितेति । तथा च नातिव्याप्तिः प्रतिपादयितुमिष्टो यः पदार्थसंसर्गः द्विषदन्नं न भोक्तव्यमित्येवं रूपस्तद्गोचरप्रमाजनकत्वसद्भावेन विषं भुंक्ष्वेति वाक्ये नाऽति व्याप्तिरिति भावः । अत्र प्रतिपिपादयिषितत्वं पदार्थानां किं स्वरूपेण विवक्षितम् उत संसर्गप्रतियोगित्वेन नाद्य इत्याशयेनाह । चन्द्रेति । प्रश्नेति । कश्चन्द्रः किं ब्रह्मेति प्रश्नहेतुभूतो यः संशयस्तद्धर्मित्वेनेत्यर्थः । द्वितीयमाशंक्याह । संसर्गेति । संसर्गप्रतियोगित्वेन पदार्थानां प्रतिपादयितुमिष्टत्वे संसर्गस्य तात्पर्यविषयत्व प्राप्त्या तत्प्रमाजननस्यैव प्राप्तेः पुनस्तदप्रमापकत्वोक्तौ विरोध इत्यर्थः । त्वद्रीत्येति । लक्षणवाक्यत्वेन प्रश्नोत्तरयोर्वैयधिकरण्यभिया त्वन्मते प्रतिपिपादयिषितपदार्थ संसर्गो यो लक्षणत्वरूपस्तदप्रतिपादक इत्यर्थः । अलक्ष्यत्वोपपादनायाह । अनेकेति । अनेकप्रातिपदिकार्थपरत्वेपि अखण्डार्थत्वं कुतो नास्ति येनालक्ष्यत्वमित्यत आह । नहीति । अखण्डत्वं धर्मधर्मिभावेन तयोर्भेदं यदा न सहते तदा धर्मिभेदं न सहत इति किं वाच्यमित्यर्थः । यौगिकेति । उपगोरपत्यं पुमान् औपगवः क इत्येवं यौगिको य औपगवादिस्तत्प्रश्नस्योत्तरभूत इत्यर्थः । अनेकेति । अनेके अर्थाः वृक्षगजतुरगाद्याः तदात्मकं यद्वनं सेनादिः तत्प्रश्नः किं वनं का सेनेत्यादिरूपः तत्प्रश्नोत्तरे इत्यर्थः । इत्यादावित्यादि पदेन एकदेशस्थगजतुरगरथाद्याः सेनेति वाक्यं ग्राह्यम् । तथा च लक्षणवाक्यत्वेन श्यामत्वादिरूपलक्षणसंसर्गे तात्पर्याभावेनाखण्डार्थत्वेपि औपगवसेनादिरूपधर्मिणामेव संसृष्टार्थरूपत्वेन सखण्डार्थत्वादलक्ष्यमेवेति तत्रातिव्याप्तिः प्रश्नोत्तरयोर्वैयधिकरण्यभिया औपगवादौ श्यामत्वादि संसर्गे तात्पर्याभावेन संसर्गागोचरप्रमाजनकत्वसद्भावादतिव्याप्तिरित्यर्थः । असंभव इति । संसर्गागोचरप्रमाजनकत्वाभावादिति भावः । अत एवेत्युक्तं विशदयति । असंभवादिति । प्रकृष्टादि वाक्ये संसृष्टार्थत्वस्य वक्ष्यमाणत्वेन प्रातिपदिकार्थमात्रपरत्वाभावादिति भावः । सखण्डार्थेति । सखण्डार्थस्य यल्लक्षणवाक्यमिति षष्ठीतत्पुरुषः । तथाचौपगवादिरूपसखण्डार्थस्य यल्लक्षणवाक्यं श्यामो दीर्घ इत्यादिरूपं तस्य लक्षणवाक्यत्वादेव औपगवादिरूपसखण्डप्रातिपदिकार्थमात्रपरत्वेनातिव्याप्तिरित्यर्थः । अनन्तादिशब्दानाम-पर्यायत्वाभावात्तेषु तद्घटितोक्तलक्षणाव्याप्तिरित्याशयेनाह । प्रवृत्तिनिमित्तेति । लोके प्रवृत्तिनिमित्तभेदे सति अपर्यायत्वं घटपटादिशब्दानां दृष्टं न तु प्रवृत्तिनिमित्ताभेद इत्यर्थः । नन्वत्राप्यनन्तत्वादि-रूपप्रवृत्तिनिमित्तभेदसद्भावादनन्तादि शब्दानाम् अपर्यायत्वमित्यत आह । तद्भेदस्त्विहेति । प्रवृत्तिनिमित्तभेद इत्यर्थः । कुतो नास्तीत्यत आह । अनन्तत्वादीनामिति । तथाच सर्वेषामनन्तत्वसत्यत्वादीनां केवलशुद्धब्रह्मात्मसत्वेन सत्यत्वानन्तत्वादिरूपप्रवृत्तिनिमित्तभेदाभावान्नापर्यायत्वमित्यर्थः । ननु सत्यानन्तादि-शब्दानां शबले गृहीतसङ्गतिकत्वेन सत्यत्वानन्तत्वादिविशिष्टवाच्यार्थभेदसद्भावेन प्रवृत्तिनिमित्तभेदसद्भावान्न-पर्यायत्वम् । तेषां च लक्षणयाशुद्धब्रह्मपरत्वान्नाखण्डार्थत्वहानिरित्यत आह । अनन्तादीति । शुद्धे तदसिद्धेरिति । अनन्तत्वादिकं हि त्वन्मते शुद्धस्यैव लक्षणं मोक्षजनकज्ञानविषयस्यैव ब्रह्मणः पृष्टत्वात्तस्यैव च सत्यादिवाक्येनोच्यमानत्वात् तथाच अनंतादिशब्दानां लक्षणया चिन्मात्रपरत्वे शुद्धेऽनन्तत्वादीनां लक्षणानामसंभव एव स्यात् गङ्गापदलक्ष्ये तीरे गङ्गात्वाभाववदनन्तादिपदलक्ष्ये शुद्धेऽनन्तत्वादीनामयोगादिति भावः । अखण्डार्थत्वलक्षणभङ्गविवरणम् ।

## २. सत्यज्ञानादिवाक्यानामखण्डार्थत्वानुमानभङ्गः

आद्यानुमाने चाप्रसिद्धविशेषणत्वं प्रत्यक्षादिनापीदमित्थमिति सप्रकारकज्ञानस्यैवोत्पत्तेः । असिद्धिश्च, सत्यत्वज्ञानत्वादेः परापरजातित्वे तस्या ब्रह्मण्यपि सत्वेनातिव्याप्तेः । अजातित्वेऽपि ब्रह्मण्यपि तस्याताक्त्विकस्य धर्मिज्ञानाबाध्यस्य चाऽसम्भवाद्, अतात्त्विकस्य व्यावहारिकस्य चानात्मन्यपि सत्त्वात् । विरुद्धत्वं च, असाधारणधर्मरूपलक्षणपरवाक्यत्वस्य सखण्डार्थत्वेनैव व्याप्तेः । न च स्वरूपक्षणस्थ लक्ष्यानतिरेकात्तत्परत्वमखण्डार्थत्वाविरोधि, तस्य लक्ष्यमात्रत्वे लक्ष्यलक्षणभावायोगाद्, अतिरेकेऽपि यावल्लक्ष्यभावित्वादिनैव स्वरूपलक्षणत्वोपपत्तेश्च । न च द्वारत्वेन लक्षणपरत्वं द्वारिणोऽखण्ड त्वाविरोधि, वक्ष्यमाणरीत्या लक्षणात्प्रागेव सामान्यतो ज्ञाते स्वरूपमात्रे तस्य द्वारत्वायोगात् । न च लक्षणपरत्वं न हेतुः किंत्वतत्परत्वेऽपि तत्प्रत्यायकत्वमात्रमिति वाच्यम्, अलक्षणवाक्यस्यापि तात्पर्यभ्रमादिना लक्षणप्रत्यायकत्वसम्भवेन व्यभिचारात् सखण्डवनादिलक्षणवाक्ये, किंचन्द्रलक्षणमित्यसाधारणधर्मप्रश्नोत्तरे प्रकृष्टादिवाक्ये च व्यभिचारश्च । न चाखण्डलक्षणवाक्यत्वं हेतुः, असिद्धेः । न च धर्मे पृष्टे स्वरूपमात्रं वक्तुमुचितम् । न च प्रश्नविशेष्यविशेष्यकत्वम् उत्तरत्वे तन्त्रम्, किन्तु तन्मूलसंशयविरोधित्वम् । बाधश्च, धर्मिज्ञानाधीनसप्रकारकसंशयादिनिवर्तकं मोक्षहेतुं सप्रकारकं ब्रह्मज्ञानं प्रति साधनत्वेन वेदान्तविचारविधानान्यथानुपपत्त्या बलवत्या वेदान्तवाक्ये साध्याभावनिश्चयात् ।

सत्प्रतिपक्षत्वं च सत्यादिवाक्यतात्पर्यविषयः संसृष्टरूपः संसर्गरूपो वा प्रमाणवाक्यतात्पर्यविषयत्वात् सम्मतवत् । सत्यादिवाक्यं स्वतात्पर्यविषयज्ञानाबाध्यसंसर्गपरम्, स्वतात्पर्यविषयज्ञानाबाध्यस्वकरणकप्रमितिविषयपदार्थनिरूप्यसंसर्गपरं वा, प्रमाणवाक्यत्वात्, ज्योतिष्टोमादिवाक्यवत् । विषं भुंक्ष्वेत्यादौ वाच्यार्थसंसर्गपरत्वाभावेऽप्युक्तसाध्यसद्भावान्न व्यभिचारः । खं छिद्रं, कोकिलः पिक त्यादावपि अनतिभिन्नार्थत्वे सामानाधिकरण्यायोगेन छिद्रकोकिलादीनां ख–

पिकादिशब्दवाच्यत्व संसर्गपरत्वात् न तत्रापि व्यभिचारः । यद्वा वेदान्तजन्यप्रमा सप्रकारिका, विचारजन्यज्ञानत्वात्, संशयविरोधित्वाच्च, कर्मकाण्डजन्यज्ञानवत् । वेदान्तजन्या प्रमा ब्रह्मनिष्ठप्रकारविषया, ब्रह्मधर्मिकसंशयविरोधिज्ञानत्वाद्, ब्रह्मविचारजन्यज्ञानत्वाच्च, यदेवं तदेवं यथा कर्मकाण्डविचारजन्यनिश्चय इत्यादिना प्रतिरोधात् ।

दृष्टान्तस्य साध्यवैकल्यं च । तथा हि– प्रकृष्टादिवाक्यस्याखण्डार्थत्वं न तावन्मुख्यवृत्त्या, लक्षणापि न तावत् गंगायां घोष इत्यादाविवान्वयानुपपत्त्या चन्द्रादौ प्रकृष्टे गुणरूपेण द्रव्यरूपेण वा प्रकाशेन सम्बन्धस्य सत्वात्, चन्द्रे प्रकृष्टप्रकाशादेः सत्त्वात् । नापि यष्टीः प्रवेशयेत्यादाविव तात्पर्यानुपपत्त्या कश्चन्द्र इति स्वरूपमात्रस्य पृष्टत्वादिति वाच्यम्, अस्ति कश्चिच्चन्द्रशब्दस्यार्थ इत्यज्ञाने तत्र धर्मिज्ञानसाध्याया बुभुत्सायाः सन्देहस्य चानुपपत्तेः, चन्द्रशब्दस्य प्रातिपदिकत्वानिश्चयेन सुब्विभक्तिप्रयोगायोगाच्च चन्द्र इत्यनूद्य क इति प्रश्नायोगाच्च, न ह्यज्ञातमनुवादार्हम् । असङ्कीर्णं चन्द्रस्वरूपं न ज्ञातमिति चेत्, न चन्द्रस्वरूपद्वयाभावात् । तदेव स्वरूपमसङ्कीर्णत्वेन न ज्ञातमिति चेत्, न असङ्कीर्णत्वस्य व्यावर्तकवैशिष्ट्यव्यावृत्तिवैशिष्ट्ययोरन्यतररूपत्वेन प्रश्नस्य विशिष्टपरत्वापातात् । एवं च–

सामान्यतोऽपि न ज्ञातो धर्मी चन्द्रो यदा तदा ।<br>
न बुभुत्सा न सन्देहो नानुवादश्च युज्यते ॥<br>
तस्माच्चन्द्रस्येतरस्माद् भेदको धर्म एव हि ।<br>
पृष्टस्तस्मात्प्रकृष्टादिवाक्यं नाखण्डगोचरम् ॥

एवं प्रतिवचनस्य प्रकृष्टत्वादिविशिष्टे तात्पर्याभावे तात्पर्यतो यः कश्चिच्चन्द्र इत्येव बोधनाद्, अतात्पर्यविषयस्य च प्रतीतस्य त्यक्तत्वाद्, वस्तुतो यस्य कस्यापि चन्द्रत्वं स्यात्, तात्पर्यविषयेऽखण्डेऽयं चन्द्र इति लक्ष्यलक्षणरूपोद्देश्यविधेयविभागाभावेन तात्पर्यतो यत्किञ्चिदित्येव बोधना च्चन्द्रत्वेन चन्द्रबुसुत्सानि-

वृत्त्यभावात् । कश्चन्द्र इति प्रश्नस्योत्तरं च न स्यात् । सर्वेषामपि लक्षणवाक्यतात्पर्यजन्यज्ञानानां वस्तुगत्या परस्परभिन्नतत्तत्प्रातिपदिकार्थविषयत्वेऽपि प्रकारभेदाभावेन तेन तेन भिन्नभिन्न प्रकारकतत्तत्सन्देह निवृत्तिश्च न स्यात् । प्रकृष्टादिपदवैयर्थ्यं च स्यात् । व्यावर्त्यभेदेन सार्थक्यमित्येतन्निरसिष्यते ।

एतेन प्रश्नोत्तरे तावच्चन्द्रप्रातिपदिकार्थमात्रविषये प्रकृष्टादिविशेषणाश्रयभूताचासाधारणी विशेष्यव्यक्तिः चन्द्रप्रातिपदिकार्थः, न तु तद्विशिष्टा प्रकृष्टप्रकाशश्चन्द्र इति सहप्रयोगाद्ययोगाद् विशेष्यव्यक्तिश्चाखण्डेति अखण्डार्थपरे प्रश्नोत्तरे इति निरस्तम्, अस्या एवासाधारणव्यक्तेर्व्यावर्तकादि वैशिष्ट्यरूपेणासाधारण्येनाज्ञानेऽपि चन्द्रप्रातिपादिकार्थत्वादिरूपेण प्रागेव ज्ञातत्वात् । एवं च गामानयेत्यादौ गोत्वस्यानयनेनेव प्रकृष्टत्वादेर्विधेयेन चन्द्रप्रातिपदिकार्थत्वेनानन्वयेऽपि उद्देश्यत्वावच्छेदकत्वेन विवक्षितत्वात्तद्वदेव विशिष्टार्थत्वं दुर्वारम् । अस्ति च पृथिवीत्ववती पृथिवीत्यादौ पृथिवीत्वस्य विधेयेन पृथिवीशब्दार्थत्वेनान्वयः । न हि पृथिवीत्वं न पृथिवीप्रातिपदिकार्थः, सह प्रयोगस्तु पृथिवीशब्दस्य तच्छब्देन व्यवहर्तव्यतापरत्वात् । तस्माद्धर्मिणश्चन्द्रस्य सामान्यतो नक्षत्रादिव्यावर्तकव्यावृत्तिरूपधर्मस्य च घटादौ प्रागेव ज्ञातत्वाद्विशिष्टविषये एव प्रश्नोत्तरे ।

तत्र यदि प्रष्ट्रा व्यावृत्तिवैशिष्ट्यमेव साक्षाद्बुभुत्सितम्, तदा वक्ता व्यावृत्तेरस्मादस्माच्च व्यावृत्त इति साक्षाज्जन्मशतेनापि दुर्बोधत्वात् धूमे उक्तेऽग्निमिव व्यावर्तके उक्ते व्यावृत्तिं ज्ञास्यतीति भावेन व्यावर्तकवैशिष्ट्यमेव तात्पर्यतः प्रतिपादयति । न ह्यग्निबोधनार्थस्य धूमोऽस्तीति वाक्यस्य न धूमे तात्पर्यं न वा यागाक्षेपकस्य ''यदाग्नेयादि'' वाक्यस्य न द्रव्यदेवतासम्बन्धे । यदि तु प्रष्ट्रैव व्यावृत्तिः प्रतियोगिनामानन्त्येन साक्षात्प्रष्टुं वक्तुं चाशक्येति ज्ञात्वा कश्चन्द्र इत्यनया वाचोभंग्या कैर्विशेषणैर्विशिष्टः? इति पृष्टं तदा सुतरां प्रश्नोत्तरे व्यावर्तकवैशिष्ट्यपरे इति न काप्यखण्डार्थत्वम् । असाधारणधर्मरूपलक्षणप्रश्नो ह्ययं

किं लक्षणकश्चन्द्र इति असाधारणधर्मविषयकस्य, कतमश्चन्द्र इति जातिविषयस्य, अनयोः कतरश्चन्द्र इति गुणक्रियाजातिभिः पृथक्करणरूपनिर्धारणविषयस्य च प्रश्नस्योत्तर इवात्रापि प्रतिवचने लक्षणोक्तेः प्रश्नेऽपि प्रकृष्टो वा प्रकाशो वेत्यादिधर्मविषयविकल्पसूचक किं शब्दप्रयोगाच्च ।

एतेन प्रश्ने धर्मवाचि पदं नेति निरस्तम्, तथात्वे चन्द्रधर्मस्यैव लक्षणीयत्वापत्त्या तस्यानपेक्षितत्वात्, चन्द्रप्रातिपदिकार्थस्य सामान्यतो ज्ञातत्वेन तद्बुभुत्सायोगात् । लक्षणया वा प्रश्नस्थचन्द्रपदस्यैव चन्द्रासाधारणधर्मपरत्वस्य कल्प्यत्वाच्च । यद्वा लक्षणवाक्यम्, अनुमानत्वेनाप्तवाक्यत्वेन वा चन्द्रव्यवहार-कर्तव्यतावैशिष्ट्यपरमस्तु चन्द्रस्वरूपस्य प्रत्यक्षेणैव ज्ञातत्वात् । चन्द्रव्यवहारशब्देन च चन्द्रशब्दविशेषितो व्यवहारो विवक्ष्यते, न तु चन्द्ररूपार्थविशेषितः, येन तज्ज्ञाने वाक्यवैयर्थ्यं तदज्ञाने तु तस्य कर्तव्यताबोधनमशक्यमिति शंक्येत । न चैवं वृद्धव्यवहारादेव व्युत्पत्तिसम्भवात् लक्षणवाक्यं व्यर्थम्, भृङ्गग्राहिकयोपदेशवदस्यापि व्युत्पत्तावुपायान्तरत्वात् ।

एतेन मानान्तरसिद्धं वैशिष्ट्यमखण्डचन्द्रसिद्धावुपायमात्रमिति कल्पतरूक्तं निरस्तम् । मानान्तरेण चन्द्रप्रातिपदिकार्थः प्रकृष्टत्वादिविशिष्ट इत्यज्ञानाद्, अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति पृच्छता चन्द्रस्वरूपस्य प्रत्यक्षेण सुतरां ज्ञातत्वाच्च । तस्मात्साध्यवैकल्यं दुष्परिहरमित्याद्यानुमानमयुक्तम् ।

तथा द्वितीयमपि अप्रसिद्धविशेषणत्वबाधसत्प्रतिपक्षत्वदृष्टान्तसाध्यवैकल्यादि-दोषात् प्रकृष्टादिवाक्ये उक्तरीत्या सत्यादिवाक्येऽपि बुभुत्साद्यनुपपत्त्या ब्रह्मस्वरूपमात्रप्रश्नोत्तरत्वस्यासिद्धेश्च । इह च कश्चन्द्र इतिवत् क्लृप्तस्य प्रश्नस्याभावात् कल्प्यस्य च क्लृप्तोत्तरानुसारेण धर्मविषयकस्यैव कल्प्यत्वाच्च । कतम आत्मेत्यत्र कतरः स आत्मेत्यत्र च त्वं पदार्थप्रश्ने वा बहूनां जातिपरिप्रश्ने डतमच्, "द्वयोरेकस्य निर्धारणे डतरच्–" इति सूत्राभ्यां जात्याद्यर्थ-कतमादिशब्दप्रयोगेण तत्प्रतिवचने योऽयं विज्ञानमय इत्यादौ पक्षत्वेन त्वदभिमते

हेतोरसिद्धेश्च । किं च सर्वस्याप्युत्तरस्य प्रष्टृनिर्धारितप्रश्नधर्मिनिष्ठानिर्धारितैकप्रकारपरत्वाद्विरुद्धो हेतुः । यदि चोत्तरजन्यं ज्ञानं निष्प्रकारकं स्यात्, तेन सप्रकारकसन्देहनिवृत्तिर्न स्यात् । यदि चोत्तरं प्रश्नादधिकविषयं न स्यात्तर्ह्युत्तरमेव न स्याद्, अन्यथा प्रश्न एव उत्तरं स्यात् । किं करोति किमानेयम्? इत्यादि प्रश्नोत्तरेषु अध्ययनं करोति गामानयेत्यादिषु व्यभिचाराच्च । न हि तान्यप्यध्ययनत्वगोत्वादित्यागेन लक्षणया कर्मादिमात्रपराणि ।

एतेन सत्यादिवाक्यार्थः ब्रह्मप्रातिपदिकार्थमात्रं तन्मात्रप्रश्नोत्तरवाक्यार्थत्वादिति न्यायदीपावल्युक्तं व्यतिरेक्यनुमानं निरस्तम् । किं चैकप्रातिपदिकार्थप्रश्नोत्तरत्वेन कथमखण्डार्थत्वम्?

स्वार्थो द्रव्यं तथा लिङ्गं सङ्ख्या कर्मादयोऽपि च ।
नामार्थपञ्चकं प्राहुराद्यं त्रिकमथापरे ॥

इति वैयाकरणमते त्वदेकदेशिभिः मया प्राभाकरैश्च स्वीकृतान्विताभिधानमते अभिहितान्वयपक्षेऽपि जातिविशिष्टायां व्यक्तौ शक्तिरिति तार्किकमते च प्रातिपादिकार्थस्यैव विशिष्टत्वात् । जातावेव शक्तिर्व्यक्तिस्तु लक्ष्येति भाट्टानां तव च मते ब्रह्म प्रातिपदिकस्यैव यौगिकत्वेन तदर्थस्य विशिष्टत्वात् । न च प्रातिपदिकार्थे पृष्टे तदेकदेशोक्तिर्युक्ता ।

किं चाप्रयोजका हेतवः, तथा हि–विपक्षे बाधकं किं ब्रह्मस्वरूपमात्रस्यैव बुभुत्सितत्वम्? ''एकधैवानुद्रष्टव्यम्'' इत्याद्यभेदविधायकवाक्यं वा? ''उदरमन्तरं कुरुत'' इति भेदनिषेधकवाक्यं वा? ''केवलो निर्गुणश्चे'' त्यादिगुणनिषेधकवाक्यं वा? ''एकमेवाद्वितीयम्'' इत्यादिद्वितीयमात्रनिषेधकवाक्यं वा? सर्वतोऽनवच्छिन्नवस्तुपरानन्तब्रह्मशब्दौ वा? नाद्यः, निरस्तत्वात् । सत्यादिवाक्ये च सत्सु विशेषणेषु सस्तुतिकविधिवाक्ये प्राशस्त्य इव रक्तपटन्यायेनाकांक्षाया उत्थापनीयत्वाच्च । उक्तं हि– ''आकांक्षणीयाभावनिमित्तो ह्याकांक्षाभाव'' इति ।

निष्प्रकारकज्ञानस्याद्याप्यसिद्ध्या सप्रकारज्ञानस्यैव मोक्षहेतुताया ब्रह्मविदाप्नोति परम् इत्यनेन प्रतीत्या ''तमेवं विद्वानमृत इह भवती''त्यादिश्रुत्या ''यो वेद निहितं गुहाया'' मित्युत्तरवाक्येन चोक्त्या च मुमुक्षोः प्रकार एव धर्मिज्ञानसाध्यबुभुत्सौ चित्याच्च । निर्गुणवाक्यवत् सगुणवाक्यस्यापि ब्रह्मबुभुत्सायां कर्मकाण्डस्य च कर्मबुभुत्सायां वैद्यादिशास्त्रस्याप्यौषधादिबुभुत्सायां प्रवृत्ततया लक्षणया सगुणवाक्यमप्यखण्डब्रह्मपरं कर्मकाण्डमप्यखण्डकर्मपरं वैद्यादिशास्त्रमप्य-खण्डौषधादिपरमित्यापाताच्च । अस्ति च धर्म इव ब्रह्मण्यप्यलक्षणरूपं वाक्यं न मध्यमाः तेषां चैक्यभेदाभावादिविशिष्टपरत्वे वेदान्तमात्रस्याखण्डार्थत्वासिद्धेः सत्यशुद्धान्यमिथ्याविशिष्टार्थपरत्वे प्रामाण्यायोगाच्च । तेषामेव लक्षणयाऽखण्डार्थता सत्यादिवाक्यस्य तु सत्यत्वादिविशिष्टार्थपरतेति वैपरीत्यापाताच्च । उभयोरपि मुमुक्षुज्ञेयब्रह्मपरत्वाविशेषात् । न चास्यां दशायां ब्रह्मण्यभावरूप एव धर्मो मुमुक्षणा ज्ञेयो न तु भावरूप इति सिद्धं तेषां लक्षणयाऽखण्डार्थत्वे तु न तद्विरोधेन विशिष्टार्थस्य सत्यादिवाक्यस्य मुख्यार्थत्यागः विशेष्यपरस्य विशिष्टपरेणाविरोधात् ।

ननु ऐक्यादेर्द्वारत्वेनोपादानाद्विरोध इति चेन्न, द्वारीभूतस्य ब्रह्मान्यस्य ऐक्यादेर्मिथ्यात्वे सत्यत्वादिधर्मपारमार्थ्याविरोधित्वात् सत्यत्वे चापसिद्धान्ताद्, द्वारत्वानुपपत्तेर्वक्ष्यमाणत्वाच्च । अत्रापि सत्यत्वादेर्द्वारत्वेनोपादानेन तेषामेवैतद्विरो-धापाताच्च । नान्त्यः, त्वन्मतेऽनन्तब्रह्मशब्दयोरपि लक्षणया विशेष्यमात्र-परत्वेनाविरोधित्वात् । ''अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा'' इति श्रुत्या ''महद्गुणत्वाद्यमनन्तमाहु''रित्यादि स्मृत्या च ताभ्यां सद्गुणत्वस्यैव सिद्धेश्च ।

प्रतिकूलतर्कपराहतिश्च । तथा हि– द्विविधमपि वेदान्तवाक्यं तद्दृष्टान्तीभूतं प्रकृष्टादिवाक्यं सोऽयमित्यादिवाक्यं च यदि संसृष्टार्थं न स्यात्, वाक्यमेव न स्याद्, आकाङ्क्षासन्निधियोग्यतानामभावात् । आकाङ्क्षा ह्यभिधानापर्यवसानम् । यस्य च येन विना न स्वार्थान्वयानुभावकत्वम्, तदेव च तस्यापर्यवसानम् । सन्निधि-स्त्वव्यवधानेनान्वयप्रतियोग्युपस्थितिः । योग्यता च इतरपदार्थसंसर्गेऽपरपदार्थ-

(अद्वैतसिद्धिः)

न च व्यावृत्तिज्ञानस्य धर्मिधीसाध्यत्वेन वैपरीत्यापातः, धर्मविशिष्टधर्मिज्ञानसाध्याया व्यावृत्तेः शुद्धधर्मिज्ञाने द्वारत्वाङ्गीकारात्। न च– शाब्दे अर्थे आर्थिकस्य द्वारत्वमनुपपन्नम्, अन्यथा नीलमुत्पलमित्यादेरनीलव्यावृत्तिद्वारा स्वरूपमात्रपरत्वं स्यादिति वाच्यम्, नीलमुत्पलमित्यादौ स्वरूपमात्रबोधे तात्पर्याभावान्न शाब्देऽर्थे आर्थिकार्थापेक्षा, विशिष्टार्थतात्पर्यात्। अत्र तु स्वरूपमात्रे तात्पर्यम्, तच्चार्थिकार्थस्य द्वारत्वं विनाऽनुपपन्नम्। न च विशेषस्य त्वन्मतेऽभावात् किं प्रागज्ञातं व्यावृत्त्या ज्ञापनीयमिति वाच्यम्, अन्याविषयकस्य स्वरूपज्ञानस्य भ्रमविरोधिनः साध्यत्वात्। न चैवमन्याज्ञाने द्वारत्वम्, अन्यज्ञानप्रतिबन्धद्वारेण शुद्धज्ञान एव द्वारत्वसंभवात्। न च व्यावृत्तिज्ञान एव स्वरूपज्ञानं द्वारमस्तु, तस्याभिधाबललब्धविशिष्टज्ञानादेवोपपत्तेः। न च– प्राचीने ब्रह्माज्ञाननिवर्तकब्रह्मापरोक्षज्ञाने तदज्ञानकार्यस्यान्यस्य भानायोगः, ब्रह्मप्रातिपदिकार्थबुभुत्सायामेव एतद्वाक्यप्रवृत्तिरिति स्वप्रक्रियाविरोधश्चेति वाच्यम्, ब्रह्मापरोक्षज्ञानं हि तत्स्वरूपं वा? वृत्तिरूपं वा? आद्ये नान्यभानानुपपत्तिः, तस्याविद्यानिवर्तकत्वाभावात्। वृत्तिरूपमप्यापातदर्शनं नाविद्यानिवर्तकम्, तस्यासाक्षात्कारत्वाद्वा, साक्षात्कारत्वेऽपि प्रतिबद्धत्वाद्वा। विचारजन्यं तु फलीभूतं भवत्यविद्यानिवर्तकम्, न तु तत्प्राचीनमिति किमनुपपन्नम्?

ननु– सत्यशब्देनासद्व्यावृत्तिद्वारा यद्बोधितम्, तदेव ज्ञानादिपदैरज्ञानादिव्यावृत्तिद्वारा बोध्यमिति पदान्तरवैफल्यम्। न च द्वारविकल्पः, सत्यादिपदानां नित्यवच्छ्रवणाद्, एकस्मिन् प्रयोगे व्रीहियवयोरिवैकस्मिन् वाक्ये सत्याद्यनेकपदोपादानायोगाद्, अनृतत्वादिभ्रान्तिनिवृत्तिरूपदृष्टकार्याणां भिन्नत्वेन व्रीहियवादिवद् विकल्पप्रयोजकस्यैककार्यत्वस्याप्यभावाच्चेति चेन्न, समुच्चितानां द्वारत्वेन सफलत्वात्। प्रधानस्य ब्रह्मणः प्रतिपत्त्युपयोगिनामानन्दादीनां भावरूपाणां 'आनन्दादयः प्रधानस्ये'त्यनेनास्थूलत्वादीनामभावरूपाणाम् 'अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्त'मित्यनेन च सूत्रेण निर्गुणब्रह्मप्रतिपत्तावेव सर्वशाखोपसंहारस्य प्रतिपादितत्वेन द्वारसमुच्चयस्यैवेष्टत्वात्।

ननु– सगुणे ब्रह्मण्युपासनार्थं भवतु शाखान्तरीयगुणोपसंहारः, निर्गुणब्रह्मप्रतिपत्तौ तु किं शाखान्तरीयगुणोपसंहारेण? सत्यादिपदानां प्रत्येकं लक्षकत्वेन लक्ष्यब्रह्मबोधने प्रत्येकमेव समर्थत्वात्, सत्यत्वादेश्च प्रत्येकं लक्षणत्वात्। न हि प्रकृष्टत्वादिकमिव सत्यत्वादिकमति-

(अद्वैतसिद्धिः)

व्याप्तमिति चेत्, न । प्रकृष्टप्रकाशपदयोरिव सत्यादिपदानामपि कुमतप्राप्तातिव्याप्तिनिवृत्त्यर्थं समुच्चयापेक्षणात् । न ह्यनृतव्यावृत्तिबोधनं विना 'विज्ञानमानन्दं ब्रह्मे' त्यत्र शून्यवादव्यावृत्तब्रह्मसिद्धिः । एवमेकैकपदाभावे सर्वत्रातिव्याप्तिरूहनीया । तथा च सत्यत्वादिकमनृतादिव्यावृत्तिद्वारा शून्यवादादिव्यावृत्तब्रह्मसिद्धेरुपायः ।

न च– व्यावृत्तिः, किं ब्रह्मविशेषणत्वेन बोध्या? स्वतन्त्रा वा? आद्ये सखण्डार्थत्वम्, द्वितीये ब्रह्मजिज्ञासुं प्रति तदुपदेशोऽसङ्गत इति वाच्यम्, व्यावृत्तिर्यद्यपि विशेषणतयैवार्थिकबोधे भासते, तथापि न शाब्दबोधे सखण्डार्थत्वम् । यश्चार्थादर्थो न स चोदनार्थ इति न्यायात् । तदुक्तं वार्तिककारैः– 'मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः' इति । न चार्थिकेनापि विशेषणेन ब्रह्मणः सखण्डत्वापत्तिः, निर्धर्मकत्वादिश्रुतेर्विशेषणस्य धर्म्यसमानसत्ताकत्वेन सखण्डत्वाप्रयोजकत्वात् । न च– अनन्तशब्देनान्तवद्व्यावृत्तेस्साक्षादेव बोधनान्न तस्य आर्थिकत्वम्, तथा चानन्तपदस्य सखण्डार्थत्वं स्यादिति– वाच्यम्, यद्यपि–

> तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् ।
> स्वार्थार्पणप्राणाड्या तु परिशिष्टौ विशेषणम् ॥ इति ।

तैत्तिरीयवार्तिकोक्तदिशा विधिपदानां स्वार्थार्पणप्रणाडिकया अर्थादितरनिवृत्ति बोधकत्वम्, निषेधपदानां तु साक्षादिति स्थितम्, तथापि द्वारभूते ज्ञाने सखण्डार्थत्वेऽपि परमतात्पर्यविषयज्ञानेनाखण्डार्थत्वव्याघात इत्यसकृदुक्तम् । एतदेवोक्तमानन्दबोधाचार्यैः–

> लक्ष्यार्थभेदाभावेऽपि व्यवच्छेद्यविभेदतः ।
> विज्ञानानन्दपदयोः पर्यायव्यर्थते न हि ॥ इति ।

(१) एवं पदे लक्षणेति पक्षे समाहितम् ।

केचित्त्वत्र वाक्ये लक्षणामाहुः, न पदे । तथा हि– यथा 'गम्भीरायां नद्यां घोष' इत्यत्र गम्भीरनद्योः परस्परमन्वयबोधानन्तरं विशिष्टार्थसंबन्धि तीरं लक्ष्यते, तथा प्रकृते परस्परविशिष्टार्थबोधानन्तरं तत्सम्बन्ध्यखण्डं लक्ष्यते । तथा च न पदवैयर्थ्यम् । न च तत्रापि प्रत्येकं लक्षणा, तथा सति गम्भीरनदीतीरादिलाभेन विशिष्टतीरबुद्धिर्न स्यात् । न च तत्र गम्भीरनदीपदयोरिव इह सत्यादिपदानां परस्परमन्वयबोधकत्वं त्वन्मते नास्तीति– वाच्यम्,

(अद्वैतसिद्धिः)

एकस्मिन् ब्रह्मणि द्वारीभूतस्य परस्परार्थान्वयबोधस्य सत्यादिपदैः मिलित्वा जननाद्, उत्तरकाल एव लक्षणया अखण्डबोधस्याभ्युपगमात् । न च– 'सत्यं ज्ञानं' 'विज्ञानमानन्द'मित्यादौ अन्योन्यानपेक्षाणां सत्यादिपदानां ब्रह्मलक्षकत्वादर्शनात् कथं गम्भीरायामित्यादितुल्यन्यायतेति वाच्यम्, यत्र वस्तुगत्या गम्भीरनद्यभिप्रायेणैव नद्यां घोष इत्युक्तम्, तत्र परस्परनिरपेक्षलक्षकत्वस्य गम्भीरायामित्युक्तौ च मिलितलक्षकत्वस्य दर्शनाद्, गुणोपसंहारन्यायेन द्वारसमुच्चयस्य स्थापितत्वाच्च । न च– परस्परपदसाहित्येन तत्र गम्भीरनदीसंबन्धि तीरं लक्ष्यते, अन्यथा त्वेकैकसंबन्धि, प्रकृते त्वधिकलाभो न पदान्तरेणापीति वाच्यम्, तत्रापि युगपद्वृत्तिद्वयविरोधापत्त्या गम्भीरनदीतीरत्वेन लक्षणानभ्युपगमाद्, वस्तुगत्या विशिष्टसंबन्धिनः प्रत्येकपदादपि लाभात् । अथ विशिष्टबुद्धि-द्वारत्वाद्वारत्वाभ्यां विशेषः, प्रकृतेऽपि स तुल्य एव ।

ननु– गम्भीरायामित्यत्रापि न मिलिते लक्षणा, किन्तु नदीपद एव, परस्पर साहित्येन विशिष्टबोधानन्तरं स्वज्ञाप्यविशिष्टसंबन्धिनि लक्षणासंभवात्, स्वज्ञाप्यसंबन्ध एव हि लक्षणा, लाघवात्, न तु तद्विशेषः शक्यसंबन्धः, गौरवात् । तथा च पदद्वये लक्षणा, लक्षणाद्वयं वा न युक्तम् । एवं च वृत्तेः पदवृत्तित्वनियमोऽपि सङ्गच्छत इति चेत्, नैतत्सारम्, स्वज्ञाप्यसंबन्धो हि लक्षणेति त्वयोच्यते, तच्च ज्ञाप्यं प्रकृते विशिष्टम्, तज्ज्ञापकत्वं चोभयोः साधारणमिति कथं नदीपद एव लक्षणा? न गम्भीरपदे, विनिगमकाभावात् । न च गाम्भीर्येण सह तीरस्य परम्परया संबन्धः, नद्याः साक्षात्संबन्ध एव विनिगमक इति वाच्यम्, 'निम्नं गभीरं गम्भीर'मिति कोशाद् गम्भीरपदस्य निम्नरूपनदीद्रव्यवाचित्वेन साक्षात्संबन्धस्यापि साधारणत्वात् ।

न च विशेषणविभक्तेः साधुत्वार्थकत्वाद् गम्भीरपदलक्षणायां विभक्त्यर्थानन्वय इति– वाच्यम्, विशिष्टबोधसमये गम्भीरपदस्य विशेषणपदत्वेऽपि विशिष्टसंबन्धिलक्षणासमये विशेष्यपदत्वात् । विशेषणविभक्तेः साधुत्वार्थकत्वमित्यप्यसंबद्धम्, अभेदार्थकत्वस्य नैयायिकैः प्रत्येकमन्वयस्य च मीमांसकैररुणाधिकरणसिद्धस्य चाभ्युपगमात् ।

(२-३) एवमन्यदपि वाक्यलक्षणोदाहरणमनुसन्धेयम्– 'गच्छ गच्छसि चेत् कान्त' इत्यादि, विषं भुङ्क्ष्वेत्यादि च ।

(अद्वैतसिद्धिः)

ननु– अत्र जन्मना मरणानुमानम्, तेन च तत्साधनीभूतायाः गतेरकर्तव्यतानुमान-मित्यनुमानपरम्परैव, न लक्षणा, अनन्यलभ्यस्यैव शब्दार्थत्वात्, न हि धूमोऽस्तीति वाक्यं वह्निलक्षकम् । विषमित्यादावपि विषभोजनस्येष्टसाधनतोक्त्या शत्रुगृहान्नभोजन-स्यानिष्टसाधनत्वमाक्षिप्यते । यद्वा– आप्तस्य प्रमाणविरुद्धोपदेष्टृत्वेन कोपोऽनुमीयते । तत्र च प्रसक्तशत्रुगृहान्नभोजनस्य हेतुत्वं कल्पयित्वा तत्राकर्तव्यतानुमानम्, न लक्षणेति चेत्, नैतत्साधु, जन्मना मरणाक्षेपेऽपि तन्मरणे गमनस्य हेतुत्वानाक्षेपात्, शतवर्षानन्तरं जरादिनापि तदुपपत्तेः । तथा च प्रियामरणे हेतुत्वं गमनस्य न लक्षणां विनाऽवगन्तुं शक्यम् । नापि प्रियामरणहेतुत्वेन गमनस्याकर्तव्यत्वानुमानम्, प्रियामरणहेतोरपि तत्त्वेनाज्ञानदशायां गुरुनिर्देशाद्वा आत्मत्राणार्थं वा कुलापकीर्तिपरिहारार्थं वा कर्तव्यत्वदर्शनेन व्यभिचारात् । तथा च गमनस्य प्रियामरणहेतुत्वं तादृशस्य चाकर्तव्यत्वमित्युभयमपि लक्षणाधीनम्, जन्मनिर्देशस्य च प्रकृतेऽनुपयोगात् तेन प्रकृतोपयोगिन्यगमने तात्पर्यं ज्ञाप्यते समुदायस्य । तथा च समुदाय एव लक्षणा । न प्रत्येकपदे, प्रत्येकं तात्पर्यज्ञापकाभावात् । तथा च नात्रानुमिति परम्परा, न वा प्रत्येकपदे लक्षणा । एवं 'विषं भुङ्क्ष्वे'त्यत्रापि विषभोजनेष्टसाधनत्वेन शत्रुगृहान्नभोजनानिष्टसाधनत्वं नाक्षेप्तुं शक्यते, व्यधिकरणत्वात् । तेन विनाप्युभयोरपीष्टसाधनतयोपपत्तिसंभवाच्च । न हि येन केनचिद्यत्किञ्चिदाक्षिप्यते, किंत्वनुपपद्यमानेनोपपादकम् । नाप्याप्तत्वे सति प्रमाणविरुद्धोपदेष्टृत्वेन कोपानुमानं कोपेन च तद्धेतौ शत्रुगृहान्नभोजने अकर्तव्यतानुमानम्, आप्तस्यापि पित्रादेर्भ्रमादिना विनापि कोपं प्रमाणविरुद्धोपदेष्टृत्वदर्शनेन व्यभिचारादाप्तकोपहेतोरपि भ्रमादिना प्रियामरणहेतोरिव कर्तव्यत्वदर्शनेन तत्रापि व्यभिचाराच्च । तथा चाप्रसक्तप्रतिपादनेन प्रसक्तवारणे तात्पर्यं ज्ञात्वा तेनाकल्पितपदविभागे समुदाय एव लक्षणां कल्पयति, न तु प्रत्येकपदे, तत्र तत्र विशिष्य तात्पर्यज्ञापकाभावात् । तथा च पदार्थेतात्पर्यान्वयानुपपत्तिभ्यां लक्षणा पदे । वाक्यार्थे तद्द्वयानुपपत्त्या लक्षणा वाक्ये । वाक्यार्थानुपपत्त्यनिबन्धनत्वं च लक्षणाया पदवृत्तित्वसाधने उपाधिरित्यवधेयम् ।

(४) एवमेवार्धमन्तरर्धं बहिरित्यादौ लोके अर्धमन्तर्वेद्यर्धं बहिर्वेदीति वेदेऽपि वाक्य एव लक्षणा । न च– तत्राप्यर्धस्यान्तस्त्वे सत्यर्धस्य बहिष्ट्वेनान्तरालानुमानम्, न लक्षणेति वाच्यम्, छिन्ने गृहे अन्तरालराहित्येऽपि तद्द्वयदर्शनेन व्यभिचाराद् यथाकथंचिदनुमानसंभवे वा सर्वत्र शब्दप्रमाणोच्छेदापाताच्च ।

(अद्वैतसिद्धिः)

(५-६) एवं च ब्रह्मजिज्ञासापदेन विचारो लक्ष्यत इति विवरणकारोक्तं यज्ञायुधिपदेन यजमानो लक्ष्यत इति संक्षेपशारीरकोक्तं च वाक्यलक्षणयोपपन्नम्, ब्रह्मजिज्ञासा यज्ञायुधिशब्दयोः सुबन्तत्वलक्षणपदत्वेऽपि शक्तत्वलक्षणपदत्वाभावेन शक्यसंबन्धरूपाया लक्षणाया अयोगात्, स्वज्ञाप्यसंबन्धरूपा तु लक्षणा यौगिकपदसमुदायेऽपि वाक्यस्थानीये नानुपपन्ना ।

(७) एवं 'वायुर्वै क्षेपिष्ठा देवते' त्यादौ अर्थवादेऽपि प्राशस्त्यप्रतिपत्तये वाक्य एव लणणाऽङ्गीकार्या, प्रत्येकपदात्तदनुपपत्तेः । न च– तत्र कर्मणि क्षिप्रदेवताप्रसादहेतुत्वरूपतत्पदार्थसंबन्धबोधकत्वमेव, न तु तदन्यप्राशस्त्यलक्षकत्वमिति वाच्यम्, पदार्थमात्रसंसर्गबोधे वायुः शीघ्रतम इत्येव धीः स्यात्, न कर्मप्राशस्त्यविषया सा स्यात् । न च– लिङ्गाद्यभिधेयकार्यस्यान्वयानुपपत्तिस्तत्र लक्षणाबीजमस्ति, प्रकृते च सर्वपदानां लक्षकत्वादभिधेयान्वयानुपपत्तिर्नास्तीति वाच्यम्, केन तुभ्यमभाण्यभिधेयानुपपत्त्या लक्षणेति? किन्तु तात्पर्यानुपपत्त्या । तच्च तात्पर्यमभिधेयान्वयविषयमन्वयसामान्यविषयं स्वरूपमात्रविषयं वेति न कश्चिद्विशेषः । अन्यथा यष्टीः प्रवेशयेत्यत्र लक्षणा न स्यात् । न च– भोजनप्रयोजनकप्रवेशनस्य यष्टिष्वन्वयानुपपत्तिरेवास्तीति वाच्यम्, एवमपि प्रवेशनविशेषे तात्पर्यग्रह एवोपजीव्य इति तदनुपपत्तिरेव लक्षणाबीजमस्तु । विनिगमनाविरहेण द्वयोरपि व्यवस्थितविकल्पेऽप्यस्माकं न क्षतिरित्यवधेयम् ।

ननु– सर्वपदानां लाक्षणिकत्वे वाक्यार्थानुभवो न स्यात्, लाक्षणिकस्याननु भावकत्वादिति चेन्न, लाक्षणिकत्वेऽप्यनुभावकत्वोपपत्तेः । शक्तत्वेन ह्यनुभावकत्वम्, न तु तच्छक्तत्वेन, गौरवात् । लाक्षणिकमपि कचिच्छक्तमेव, भट्टाचार्यैर्वाक्यार्थस्य सर्वपदलक्ष्यत्वाभ्युपगमाच्च । तथा हि– अभिहितान्वयवादे पदैः स्वशक्तिवशात् पदार्था अभिधीयन्ते; न तु स्मार्यन्ते, स्मार्यस्मारकसंबन्धातिरिक्तमूलसंबन्धकल्पनापत्तेः । एकसंबन्धिज्ञानं ह्यपरसंबन्धिस्मारकम्, न तु स्मारकत्वमेव संबन्धः, हस्तिपकादिषु तथा दर्शनात् । अत एवोक्तं– 'पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते ॥ इति । अज्ञातज्ञापकत्वाभावान्नानुभावकम्, संबन्धान्तराभावाच्च न स्मारकम्, किन्तु शक्त्या ज्ञातज्ञापकमिति स्मारकसदृशमित्यर्थः स्मृत्यनुभवातिरिक्तं च ज्ञानं प्रमाणबलादायातमङ्गीकार्यमेव, पदार्थज्ञाने तत्तानुल्लेखाच्च, तत्तोल्लेखनियमभङ्गेनात्र तत्प्रमोषकल्पने चातिगौरवात् । तथा च पदजन्यस्मृत्यनुभवविलक्षणज्ञानविषयीभूताः पदार्थाः

(अद्वैतसिद्धिः)
अभिहिता इत्युच्यन्ते । तादृशाश्चाकाङ्क्षाद्यनुसारेण स्वान्वयमनुभावयन्तीति वाक्यार्थो लक्ष्य इत्युच्यते, पदेन यद् बोध्यते तच्छक्यम् पदार्थेन यद् बोध्यते, तल्लक्ष्यमिति नियमात् । अत एवोक्तं 'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः स्थितम्' इति । यद्यपि पदाभिहितपदार्थस्मार्यत्वं तीरादौ लक्ष्यत्वम्, वाक्यार्थे तु तदनुभाव्यत्वमिति विशेषः, तथापि पदार्थबोध्यत्वमादाय लक्ष्यत्वव्यपदेशः । अत एव पदार्थेन पदार्थलक्षणायां पूर्वसंबन्ध-ज्ञानापेक्षा, तस्य स्मार्यत्वाद्, वाक्यर्थलक्षणायां तु न तदपेक्षा, तस्यानुभाव्यत्वेन पूर्वसंबन्ध-ज्ञानानपेक्षत्वात् । पदार्थलक्षणायां पूर्वसंबन्धज्ञानमेव वाक्यार्थलक्षणायामाकाङ्क्षादिकमेवेति परस्परनिरपेक्षमुभयं नियामकम् । अतोऽपूर्वे वाक्यार्थे शक्यसंबन्धितया ज्ञातुमशक्ये कथं लक्षणेत्यपास्तम्, पदार्थलक्षणाया एव तथात्वात् । एवं च पदशक्तेः पदार्थोपस्थिता-वेवोपक्षयादुपस्थितानां च पदार्थानामन्वयानुभावकत्वात् सर्वपदलाक्षणिकत्वेऽपि न वेदान्त-वाक्यानामन्वयानुभावकत्वानुपपत्तिः ।

स्यादेतत्– अभिहितान्वयवादे मा भूदनुपपत्तिः, अन्विताभिधाने तु भवति, तथा हि पदानामन्वयानुभवजननसामर्थ्यमेव शक्तिरित्युच्यते, एकैकपदार्थोपस्थितिस्तु स्मृतिरूपा, न शक्तिसाध्या, एकसंबन्धिज्ञानादपरसंबन्धिस्मरणस्य हस्तिपकादिसाधारणत्वाद्, अन्वयानुभव-जननसामर्थ्यरूपस्य च मूलसंबन्धस्य विद्यमानत्वात् । अत एव पदशक्त्यसाध्यत्वात् पदार्थोपस्थितेः स्मृत्यन्तरसाधारणायास्तद्वैजात्यकल्पने च मानाभावादर्थाध्याहार एवासति बाधके, न पदाध्याहारः, पुष्पेभ्य इत्यत्र साधुत्वार्थं स्पृहयतिपदस्य 'विश्वजिता यजेतेत्यत्र नियोज्यलाभार्थं स्वर्गकामपदस्य' सौर्ये चरावतिदेशप्राप्ते 'अग्नये जुष्टं निर्वपामी'ति मन्त्रे प्रकृतौ वाचकपदवत्तया क्लृप्तोपकारे अग्निपदबाधेन वाचकपदलाभाय सूर्यपदस्य चाध्याहारेऽपि पदार्थस्मरणाय वाक्यार्थानुभवाय वा तदनपेक्षणात् । शाब्दत्वं च पदजन्यान्वयानुभवत्वेनैव, न पदजन्योपस्थितिजन्यान्वयानुभवत्वेन, गौरवात् । अत एव योग्यतावच्छेदकस्य छिद्रेतरत्वादेः पदादनुपस्थितस्यापि पदजन्यान्वयानुभवविषयत्वाच्छाब्दत्वम्, अन्यैरप्यनुकूलत्वप्रतियोगित्वा-दीनां तथात्वाभ्युपगमात् । एवं च चैत्रोऽयमित्यादौ लोके 'उद्भिदा यजेत पशुकाम' इत्यादौ च वेदे प्रत्यक्षोपस्थितानामेव चैत्रोद्भिदादिपदानां नामत्वेनान्वयः, अन्यथा चैत्रपदवाच्योऽयम् उद्भित्पदवाच्येन यागेनेत्यादिकल्पने लक्षणाप्रसङ्गात्, अगृहीतसङ्गतिके पदे तदयोगात् । 'घटः पटो ने'त्यत्र नञन्वय इव चैत्रोऽयमित्यादिनामधेयान्वयेऽपि विभक्त्यर्थद्वारत्वानपेक्षणेन

(अद्वैतसिद्धिः)

व्युत्पत्त्यन्तरकल्पनात् नञन्वये विभक्त्यर्थापेक्षायां जितमद्वैतवादिभिः नीलं सुगन्धि-महदुत्पलमितिवत् घटपटनञर्थानामभेदान्वयोपपत्तेः । नामधेये विभक्त्यर्थापेक्षायां वेदे नामधेयत्वं न सिध्येदिति जितं पूर्वपक्षिणा । 'सोमेन यजेते'त्यत्रेव मत्वर्थलक्षणयोद्भिदा यजेतेत्यादावपि विशिष्टविधित्वोपपत्तेः, उभयत्र लक्षणायास्तुल्यत्वेऽपि प्रवृत्तिविशेषकरत्वेन विधित्वस्यैवोचितत्वात् । वार्तिककाराणां तु पदार्थोपस्थितेः पदशक्तिसाध्यत्वात्तदर्थं सर्वत्र पदाध्याहाराङ्गीकारेऽपि नामधेयान्वये व्युत्पत्त्यन्तराश्रयणमस्त्येव । तथा च स्वयमेव व्युत्पादितं नामधेयाधिकरण इत्यलं प्रसक्तानुप्रसक्त्या ।

प्रकृतमनुसरामः– एवं स्थिते लाक्षणिकमप्यन्वयानुभावकं चेदन्वयानुभवजननसामर्थ्यमेव शक्तिरिति लाक्षणिकस्यापि तद्वत्त्वान्मुख्यजघन्यविभागो न स्यात् । तथा च लिङ्गाधि-करणविरोधः । तत्र हि 'बर्हिर्देवसदनं दामी'त्यादिमन्त्राणां मुख्ये जघन्ये चार्थे लिङ्गाद्विनि-योगः उत मुख्य एवेति संशय्य उभयोरपि शाब्दत्वादुभयत्रापि विनियोग इति प्राप्ते, मुख्य एवेति सिद्धान्तितम् । 'अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगा'दिति । अर्थाभिधानसामर्थ्यरूपाल्लिङ्गात् श्रुत्यविनियुक्तेषु बर्हिर्देवसदनं दामीत्यादिमन्त्रेषु शेषभावो विनियोगः स्यात् । तच्च सामर्थ्यं मुख्ये, न जघन्ये शब्दसामर्थ्यादुपस्थितो ह्यर्थो मुखमिवाव्यवहितो भवतीति मुख्य उच्यते । मुख्यार्थ-संबन्धादुपस्थितस्तु जघनमिव व्यवहितो भवतीति जघन्य उच्यते । तथा च जघन्येऽर्थे विनियोगं ब्रुवतापि तदुपस्थितये मुख्योपस्थितिर्वक्तव्या । तथा चोत्पत्तिसंबन्धः स्वभावसंबन्धोऽर्थाभिधानसंबन्ध एव विनियोजकः स्यात्, तस्यार्थनियतत्वात्, तावतैवस्वाध्यायविधेश्चरितार्थत्वात् । मुख्यसंबन्धस्तु न लिङ्गम्, अनेकेषां मुख्यसंबन्धित्वे-नार्थानियमाच्चरमत्वाच्चेति सूत्रार्थः । अत एव मुख्यसंभवे लक्षणा नोपादेयेति सर्वतन्त्र-सिद्धान्तः । पदवृत्तिर्हि शक्तिः पदार्थवृत्तिश्च लक्षणा । सा च बहुप्रकारेत्यन्यत् । लाक्षणिकपदेनान्वयप्रतियोग्युपस्थितौ कृतायां यदवशिष्टं शक्तं, तदेवान्वयानुभावकम् । अर्थ-वादपदानां सर्वेषां लाक्षणिकत्वेऽपि तदेकवाक्यतापन्नं विधिपदमेवानुभावकम्, विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु'रिति न्यायात् । तथा च सत्यादिपदानां सर्वेषामपि लाक्षणिकत्वे कथमन्वयानुभवोपपत्तिरिति चेत्, नैष दोषः, शक्यस्यैवान्वयानुभवाभ्युपगमात्, लक्षणात्वेकदेशत्यागमात्राय, न त्वशक्यार्थोपस्थितये गौर्नित्य इत्यादिवत् । अत एव

(अद्वैतसिद्धिः)

वाचकानामेव स्वार्थे लक्षणेयमित्युक्तं प्राक् । ननु जहल्लक्षणाभ्युपगमे कथमन्वयानुभवः? शक्यैकदेशस्यापि तत्राभावात् । तथा चोक्तं संक्षेपशारीरके–

साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाऽ
हंशब्दोऽहङ्कारवाची भवति तु जहती लक्षणा तत्र पक्षे ॥ इति ।

अस्मिन् पक्षे अन्विताभिधानवादानभ्युपगमान्न दोषः । पक्षद्वयाश्रयणं तु जहदजहल्लक्षणापक्ष एव । तथा च दर्शितं तत्रैव–

अभिहितघटना यदा तदानीं स्मृतिसमबुद्धियुगं पदे विधत्तः ।
परदृशि पुनरन्विताभिधाने पदयुगलात् स्मृतियुगमेव पूर्वम् ॥ इति ।

तत्त्वप्रदीपिकाकृदादयस्तु अभिहितान्वयपक्षमेवोररीचक्रुः, सर्वथापि सिद्धान्तानुकूलत्वादिति न किंचिदवद्यम् । तार्किकमतस्योभयपक्षबहिर्भावादिकं च वेदान्तकल्पलतायां व्युत्पादितमित्युपरम्यते । इत्यद्वैतसिद्धौ सत्याद्यवान्तरवाक्याखण्डार्थतोपपत्तिः ॥

## न्यायामृततरङ्गिणी

प्रत्यक्षादिनेति । निर्विकल्पकस्याप्रामाणिकत्वादिति भावः । यत्तु प्रमात्वं संसर्गागोचरवृत्तिसकलप्रमावृत्तित्वादभिधेयत्ववदिति सामान्यतस्तत्प्रसिद्धिरिति । तन्न । अप्रयोजकत्वात् । विशेष्याविषयवृत्तित्वस्यापि तत एव सुसाधत्वेनाभाससाम्याच्च । असिद्धिश्चेति । सत्यत्वादेर्जातिरूपस्य घटादावतिव्याप्त्या औपाधिकस्य लक्ष्ये ब्रह्मण्यसंभवेनातात्त्विकस्यानात्मन्यतिव्याप्त्या लक्षणत्वायोगेन सत्यादिवाक्ये लक्षणवाक्यत्वासिद्धिरित्यर्थः । अतिरेकेपीति । नचैतावता स्थायित्वास्थायित्वव्यवस्था स्यान्न स्वरूपादिरूपेति वाच्यम् । स्थायिधर्मस्यैव स्वरूपान्तर्गतत्वात् । यथोक्तं यावद्वस्तु न भेदवदिति । यावद्धर्मि स्थायिनि धर्मे भेदाभेदौ न स्तः । किन्तु सविशेषाभेद इत्यर्थः । पार्थिवरूपादौ स्वरूपलक्षणत्वं नैवेष्टम् । वक्ष्यमाणेति । सामान्यतोपि चन्द्रादेर्ज्ञानाभावे तद्बुभुत्सासंशयादि न स्यादिति वक्ष्यमाणरीत्या । न च ज्ञानमात्रेऽस्य द्वारत्वाभावेपि संशयादिनिवर्तकतज्ज्ञाने द्वारत्वमिति वाच्यम् । विषयविशेषानवगाहने पूर्वोत्तरज्ञानयोः संशयानिवर्तकत्वतन्निवर्तकत्वायोगात् । ननु किं चन्द्रलक्षणमित्यादेरुत्तरे प्रकृष्टादिवाक्येपि चन्द्रस्वरूपमात्रं प्रतिपाद्यते न तु चन्द्रधर्मसंयोगोपीत्यत

(तरङ्गिणी)

आह । नच धर्म इति । यत्तु नात्र चन्द्रस्वरूपपरत्वं किन्तु प्रकर्षाश्रयो यः प्रकाशस्तत्स्वरूपपरत्वम् । तथाच प्रकर्षोपलक्षितप्रकाशव्यक्तिस्वरूपमात्रप्रतिपादकत्वेना खण्डार्थत्वमेवेति । तत्राप्येतदेवोत्तरम् । न च धर्म इति । धर्मे चन्द्रसंबन्धिनि धर्मे । स्वरूपमात्रं धर्मस्वरूपमात्रम् । तथाचात्र चन्द्र संबन्धिधर्मप्रश्नाच्चन्द्र संबन्धिप्रकाश एव वाच्यो न प्रकाशस्वरूपमात्रमित्यर्थः । ननु चन्द्रेऽसाधारणधर्मप्रश्नस्यापि चन्द्रस्वरूपमात्रप्रति पादनपरमुत्तरमुचितम् । सामानविशेष्यकत्वादित्यत आह । न च प्रश्नेति । सप्रकारकमिति । ननु न सप्रकारकज्ञानं संशयादिनिवर्तकम् । भ्रमकालीनानुवृत्ताकारज्ञानस्य सप्रकारकत्वेपि ततः संशयाद्यनिवृत्तेः । किन्तु व्यावृत्ताकारज्ञानमेव ज्ञानस्याज्ञानसमानविषयकत्वेनैव तन्निवर्तकत्वम् । अज्ञानविषयश्च शुद्धं ब्रह्म । अज्ञानकल्पितस्य तदितरस्याज्ञानविषयत्वायोगात् । तथा च शुद्धब्रह्माकारा चित्तवृत्तिर्निष्प्रकारिकैवाज्ञाननिवर्तिका । प्रकारमात्रस्याप्यविद्याकल्पितत्वेन तद्विषयाया वृत्तेरविद्यासमानविषयत्वाभावादिति । मैवम् । अनुवृत्तव्यावृत्ताकारयोः स्वरूपमात्रत्वेऽनुवृत्ताकारज्ञानादपि संशयादिनिवृत्तिप्रसङ्गः । अन्यथा व्यावृत्ताकारज्ञानादपि सा न स्यात् । तयोः स्वरूपातिरेके तु न ज्ञानाज्ञानयोः समानविषयत्वम् । अनृतप्रतिषेधकव्यावृत्ताकारस्या ज्ञानाविषयत्वाच्च । प्रत्युतानुवृत्ताकारस्यैव जगद्भ्रमाधिष्ठानशुद्धचिन्मात्रतया तस्यैवाज्ञानविषयत्वमतोऽनुवृत्ताकारवृत्तिरेवाज्ञाननिवर्तिका स्यात् । संसृष्टरूप इति । न च संसर्गरूपे पदार्थे व्यभिचारः । संसर्गरूपस्यापि संयोगादेः संबन्धान्तरेण संसृष्टत्वात् । पदार्थे मुख्यतात्पर्याभावाच्च । संसर्गरूप इति । संसर्गनिरूपक इत्यर्थः । अतो न संसृष्टरूपे पदार्थे व्यभिचारः । तत्र तात्पर्याभावाच्च । प्रमाणवाक्यत्वादिति । न च प्रमाणवाक्यत्वस्याबाध्यपरत्वमात्रेण प्रमितिविषयपरत्वमात्रेण वोपपत्तौ विशिष्टसाध्यस्य तत्रातन्त्रत्वेनाप्रयोजकतेति वाच्यम् । पदार्थाबाधस्य तत्प्रमितेश्चाप्रमाणवाक्येपि सत्त्वेन संसर्गाबाधप्रमित्योरेव प्रमाणवाक्यत्वोपपादकत्वात् । न चालक्षणवाक्यत्वमुपाधिः । लक्षणवाक्यत्वस्य संसर्गपरत्वव्याप्त्या तस्य व्यतिरेके व्यभिचारेणानुपाधित्वात् । सप्रकारिकेति । असन्दिग्धप्रकारिकेत्यर्थः । तेन ज्ञानमात्रस्य सप्रकारकत्वपक्षे विचारजन्येति व्यर्थमिति निरस्तम् । संशयविरोधित्वादिति । अत्र ज्ञानत्वमुपस्कर्तव्यम् । उक्तसाध्यकरणान्न संशयविरोधीति व्यर्थं न वा संशयाभावादौ व्यभिचारः । वेदान्तेति सत्यं ज्ञानमिति वाक्यजन्येत्यर्थः । अतो न वक्ष्यमाणहेत्वादेरसिद्ध्यादि । ब्रह्मनिष्ठेति । ब्रह्मनिष्ठसत्त्वप्रकारविषयेत्यर्थः । संशयेति । सत्त्वसंशयेत्यर्थः । अतो न संशयविरोधीति व्यर्थम् । न च लक्षणवाक्याजन्यत्वमुपाधिः ।

(तरङ्गिणी)

व्यतिरेके व्यभिचारस्योक्तत्वात् । असङ्कीर्णत्वस्येति । ननु न व्यावर्तकादिवैशिष्ट्यम-सङ्कीर्णत्वम् । किं त्वेकमेव चन्द्रस्वरूपं दशाविशेषे विपर्ययविरोधित्वाविरोधित्वाभ्यामसङ्कीर्णं सङ्कीर्णं चोच्यत इति । मैवम् । शङ्खः श्वेतो न पीत इत्यापरोक्ष्यदशायां यादृशं श्वेतमपीतं वा शङ्खस्वरूपमस्ति तादृशमेव श्वैत्याद्यनुमिति काले तद्विपर्ययकाले वाप्यस्तीति स्वरूपमात्रस्य विपर्ययाविरोधित्वात् । अथ चैत्याद्यापरोक्षोपहितं विपर्ययविरोधीत्यसङ्कीर्णमिति चेत् न । तदापरोक्षस्यैवान्वयव्यतिरेकाभ्यां विपर्ययविरोधित्वेन स्वरूपस्य तथात्वात् । अथ श्वैत्याद्यापरोक्ष्योपहितं विपर्ययविरोधीत्यसङ्कीर्णमिति चेन्न । तदापरोक्ष्यस्यैवान्वयव्यतिरेकाभ्यां विपर्ययविरोधित्वेन स्वरूपस्यातथात्वात् । विपर्ययविरोधिज्ञानरूपफलोपहित चन्द्रस्य प्रश्नोत्तराभ्यामप्रतीतेश्च । न हि प्रकर्षादिवाक्येन तादृशज्ञानं प्रतिपाद्यते । अपि तूत्पाद्यते । तस्माद्व्यावर्तकधर्मस्य वाच्यावृत्तेर्वा वैशिष्ट्यमेवासङ्कीर्णत्वम् । न केवलं प्रकृष्टादिवाक्यस्याखण्डे तात्पर्याभावः । किन्तु सखण्ड एव तात्पर्यमित्याह । एवमिति । ननु प्रकृष्टादिविशिष्टे चन्द्रत्वमिति न तात्पर्यम् । किन्तु यः कश्चिच्चन्द्र इत्येव तात्पर्यमित्याशङ्क्याह । तात्पर्यत इति । ननूक्तवाक्यस्य प्रकर्षादिविशिष्टे तात्पर्याभावेपि तद्वाक्यात्प्रकर्षादिविशिष्ट एव चन्द्रत्वं प्रतीयतेऽतः कथमुच्यते यः कश्चिच्चन्द्र इत्येव बोधः स्यादितीत्यत आह । अतात्पर्येति । वस्तुत इति । वस्तुतो योयः कश्चित्तस्य चन्द्रत्वं स्यात् । प्रकृष्टत्वादिविशिष्टस्य चन्द्रत्वसिद्धिर्याऽनु-भवसिद्धा स न स्यादिति भावः । अखण्ड इति । अखण्डे विभागाङ्गीकारे तन्नियतभेदस्यापि तत्र प्रसक्तिः स्यादित्यर्थः । यत्किञ्चिदित्येवेति । यत्किञ्चिदिति ज्ञाने सत्येव बुभुत्साप्रश्नयो-रुदयात्प्रकृष्टादि वाक्यस्य च चन्द्रबुभुत्साप्रश्नौ प्रति हेतुभूताज्ज्ञानादनधिकविषयत्वेन तद्वाक्यं चन्द्रबुभुत्सानिवर्तकं चन्द्रप्रश्नोत्तरं च न स्यादित्यर्थः । एतेन यथा गङ्गासंबन्धित्वविशिष्टे तात्पर्याभावेपि वस्तुगत्या गङ्गासम्बन्ध्येव तीरं गङ्गापदेन लक्ष्यते तथा प्रकृष्टप्रकाशपदाभ्यां वस्तुगत्या स्वार्थाश्रयभूतैव व्यक्तिर्लक्ष्यते न तु या काचिदिति विशिष्टतात्पर्याभावेपि न दोष इति निरस्तम् । गङ्गापदाद्गङ्गा सम्बन्धित्व वैशिष्ट्यस्याप्रतीतेः । प्रतीतौ वा तत्रापि गङ्गापदतात्पर्यकल्पनात् । युगपद्वृत्तिद्वयदोषस्य विशिष्टलक्षणयैव परिहारात् । यत्त्वयं चन्द्र इति लक्ष्यलक्षणभावाभावेपि तदुभयप्रतिपादकपदाभ्यामुपस्थितस्यैकस्वरूपस्यैवोद्देश्यविधेयभाव सम्भव इति । तन्न । प्रकार भेदाभावेनोद्देश्यत्वाद्यसम्भवात् । अन्यथा उद्देश्यमेव विधेयं विधेयं चोद्देश्यमिति स्यात् । प्रकारभेदेति । निष्प्रकारकत्वेन सुतरां प्रकारभेदाभाव इत्यर्थः । संशयोल्लिखितप्रकारविरोधिप्रकारकनिश्चयस्यैव संशयविरोधित्वादिति भावः । कचिल्लक्षणस्य

(तरङ्गिणी)

विधेयेनान्वयोस्तीत्याह ॥ अस्तिचेति ॥ ननु पृथिवीशब्देन पृथिवीत्वजातिविशिष्टमजानतः पृथिवीत्वपदेन जातेरुपस्थित्यभावादनन्वय एव स्यादिति पृथिवीत्वजातिविशिष्टे पृथिवीशब्दार्थत्वग्रहोऽवश्यं प्रागेव श्रोतुर्वक्तव्यः । तथाच वचनवैफल्यमित्यनन्यगत्या जलादिव्यावृत्तगन्धसमानाधिकरणजातिमती पृथिवीत्याद्यर्थे पर्यवसितमुत्तरम् । गन्धसमानाधिकरणजातिमत्त्वादिकं च न पृथिवी पदवाच्यमिति नोक्तरूपपृथिवीत्वस्य पृथिवीशब्दार्थत्वेन विधेयेनान्वय इति । मैवम् । पृथिवीत्वविशिष्टं पृथिवीशब्दार्थ इत्यजानतोपि पृथिवीत्वं पृथिवीत्वपदस्यार्थ इत्याप्तोपदेशादिना पृथिवीत्वपदेन पृथिवीत्वजात्युपस्थिति संभवेन तस्याविधेयेन पृथिवीशब्दार्थत्वेनान्वयोपपत्तेः । ननु पृथिवीत्ववैशिष्ट्यस्य पृथिवीशब्दार्थत्वे पृथिवी पृथिवीत्ववतीशब्दयोरेकार्थत्वात्सहप्रयोगो न स्यादित्यत आह । सहेति । पृथिवीशब्दस्य पृथिवीत्ववतीशब्देनेति शेषः । तच्छब्देन पृथिवीशब्देन । ननु पृथिवीशब्दव्यवहर्तव्यतार्थकत्वे पृथिवीशब्दस्य जहत्स्वार्थलक्षणा स्यात् । स्वरूपपरत्वे तु जहदजहल्लक्षणा । तत्र स्वार्थान्वय इति जहदजहल्लक्षणया स्वरूपपरतैवोचिता । अत एव व्याप्तेश्च समञ्जसमित्यधिकरणे शङ्करभाष्येप्युक्तम् । लक्षणायामपि सन्निकर्षविप्रकर्षौ भवति । ॐमित्येतदक्षरमुपासीतेत्यत्र किमोङ्कारसदृशमुद्गीथमित्यर्थः किं वोद्गीथावयवमोङ्कारमिति विवक्षायां गौण्यां वृत्तौ स्वार्थहानेरवयवलक्षणैव ज्यायसी सन्निकृष्टत्वादितीति । मैवम् । स्वरूपपरत्वे वैयर्थ्यप्रसङ्गेन जहल्लक्षणयापि सार्थक्यस्य युक्तत्वात् । तस्मादिति । चन्द्रस्य घटादौ नक्षत्रादिभ्यो व्यावर्तकादिमत्त्वस्य च सामान्यतः प्रागेव ज्ञातत्वादित्यन्वयः । चन्द्रस्यापि घटादित्वाच्चन्द्रेपि तज्ज्ञानमस्त्येवेति चन्द्रत्वेन व्यावृत्तिव्यावर्तकान्यतरविशिष्टविषयक एव चन्द्रप्रश्नादिरित्यर्थः । ननु व्यावृत्तिप्रश्ने प्रकृष्टप्रकाशादिव्यावर्तकधर्मकथनमसङ्गतम् इत्यत आह । यत्र यदीति । व्यावृत्त्यापि प्रष्ट्रा व्यावर्तककथनान्निवर्तत इति कथनं नासङ्गतमिति भावः । ननु व्यावृत्तेः प्रश्ने तत्प्रतिपिपादयिषयोच्चारितस्य प्रकृष्टप्रकाशादिशब्दस्य प्रकृष्टप्रकाशादिगुणसंसर्गबोधने तात्पर्याभावान्न ततो गुणप्रतीतिरित आह । व्यावर्तकेति । गुणसंसर्गेपि तात्पर्यादित्यर्थः । अन्यबुबोधयिषयोच्चारितस्यान्यत्र कथं तात्पर्यमस्तीत्यत आह । नहीति । नवायागेति । यदाग्नेयोष्टाकपालो भवतीत्यत्र त्यागात्मकयागं विनाष्टाकपालाख्य द्रव्यस्याग्निदेवतासंबन्धासिद्धे- रग्निर्देवताऽस्येत्याग्नेय इति द्रव्यदेवता सम्बन्धाभिधानानुपपत्तेस्तदुपपत्त्यर्थं यागोप्यनेनैव कथित इति कल्प्यते । एवं च यागबुबोधयिषयोच्चरितस्यापि यदाग्नेयादि वाक्यस्य द्रव्यदेवतासम्बन्धेपि तात्पर्यमस्त्येव । साधितं चाग्नेयशब्दस्य गुणपरत्वम् । निरस्तं च तस्य कर्मनामधेयत्वं नामधेयपादे । ननु

(तरङ्गिणी)
कश्चन्द्र इति स्वरूपमात्रस्य पृष्टत्वादवैय्यधिकरण्याय प्रश्नानुसारेणोत्तरणीयत्वात् प्रकृष्टादिवाक्यमपि लक्षणया स्वरूपमात्रपरमिति मन्दाशङ्कापरिहारायोक्तम् । कैर्विशेषणैरित्यादि। इतोपि न स्वरूपमात्रप्रश्न इत्याह । असाधारणेति । कश्चन्द्र इति प्रश्नः असाधारणधर्मविषयो भवितुमर्हति तादृशप्रश्नोत्तरसमानोत्तरवत्वात् संमतवत् । नन्वत्रासाधारण धर्मसूचकपदवत्त्वमुपाधिरित्यत आह । प्रश्नोपीति । प्रकृष्टो वा प्रकाशरूपो वा चन्द्रस्य धर्मः प्रकृष्टप्रकाशरूपो वेति विकल्पितधर्मविषयक बुभुत्सा सूचक किं शब्दप्रयोगादित्यर्थः । तथाच साधनव्यापकत्वान्नोक्त उपाधिरिति भावः । ननु किं शब्दो बुभुत्सासूचकः न तु नियमेन धर्मबुभुत्साया इत्यत आह । एतेनेति । किं शब्दस्यैव धर्मबुभुत्सासूचकत्वेनेत्यर्थः । प्रत्युत साक्षाद्धर्मपदसत्त्वेऽनिष्टमित्याह । तथात्व इति । सामान्यतोप्यज्ञाने चन्द्रधर्मस्य कश्चन्द्रधर्म इति जिज्ञासाद्ययोगात्कश्चन्द्रधर्म इति प्रश्नस्य चन्द्रधर्मे व्यावृत्तिवैशिष्टयं वा व्यावर्तकवैशिष्टयं वा विषयः । उत्तरवाक्ये च चन्द्रे धर्मस्य व्यावर्तकं वक्तव्यम् । प्रष्टृप्रतिवक्तृभ्यामपेक्षितत्वात् । न तु चन्द्रव्यावर्तकं प्रकृष्टप्रकाशादिकम् । अनपेक्षितत्वादित्यर्थः । प्रश्ने धर्मवाचिपदं नेत्यत्र परिहारान्तरमाह । चन्द्रेति । लक्षणाबीजं मुख्यार्थानुपपत्तिं वक्तुमुक्तं सामान्यत इत्यादि । उपक्रमोपसंहारयोरवैयधिकरण्याय तयोरन्यतरत्र लक्षणाया वाच्यत्वे व्याख्यानरूपप्रबलोप संहारस्थानीयप्रतिवचनमुख्यत्वायोपक्रमस्थानीय प्रश्नवाक्य एव लक्षणा युक्तेत्यभिसंधायोक्तम् । लक्षणयावेति । वाचकशब्देन चन्द्रधर्मस्याप्रश्नान्न चन्द्रधर्मस्य लक्षणीयत्वापत्तिदोषः । यद्वेति । नचैवं प्रतिवचनवाक्येपि लक्षणापत्तिरिति वाच्यम् । कः शूद्रव्यवहारविषय इति प्रश्नानुषङ्गेण प्रतिवचनान्वयोपपत्तेर्लक्षणाया अकल्पनात् । अनुमानत्वेनेति गृहीतव्यतिरेकव्याप्तिकं प्रति प्रश्नप्रतिवचनयोर्वैयधिकरण्य शङ्कां परिहरति । चन्द्रस्वरूपस्येति । तथाच चन्द्रस्याप्रश्नात् तद्व्यवहारविषय एव प्रश्नोऽतस्तद्विषयकमेवोत्तरं युक्तमिति भावः । तज्ज्ञान इति । चन्द्रज्ञाने तद्व्यवहारस्यापि कथञ्चित्सिद्धत्वात्तदर्थं नवाक्यं प्रयोक्तव्यम् । तदज्ञान इति । चन्द्राज्ञाने विशेषणज्ञानाभावाद्विशिष्टव्यवहाराज्ञानमित्यर्थः । शृङ्गेति । तदुक्तं

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धा

इति । यत्त्वसाधारणं चन्द्रस्वरूपमज्ञात्वा तत्र चन्द्रशब्दविशेषितव्यवहारवैशिष्टयस्य ज्ञातुमशक्यत्वात्तज्ज्ञानस्यावश्यकत्वेन ते नैव वाक्यप्रामाण्योपपत्तेर्व्यवहारकर्तव्यतापरत्वे मानाभाव

(तरङ्गिणी)

इति । तन्न । साधारणासाधारणभेदेन चन्द्रस्वरूपे द्वैविध्याभावादित्युक्तत्वेनासाधारण धर्मविशिष्टस्यैवासाधारणस्वरूपतया तस्य च शब्दबोध्यत्वाङ्गीकार इष्टापत्तेः । एतेनेति । व्यावर्तकस्य व्यावृत्तेर्वा व्यवहार कर्तव्यताया वा वैशिष्ट्यस्य च शब्देनैव बोध्यत्वेनेत्यर्थः । मानान्तरेति । चन्द्रतद्गतप्रकाशयोर्योग्यत्वेन प्रश्नसमये प्रत्यक्षेण तदुभयवैशिष्ट्यं सिद्धमित्यर्थः । उपायेति । प्रत्यक्षजन्यविशिष्टसिद्ध्युत्तरं शब्देन स्वरूपमात्रप्रतीतेस्तत्सिद्धौ तदुपाय इत्यर्थः । मानान्तरेणेति । चन्द्रप्रातिपदिकार्थत्वप्रकाशवैशिष्ट्ययोः सामानाधिकरण्यग्रहे प्रत्यक्ष-स्यासामर्थ्यादित्यर्थः । अस्मिन्निति । उपायात्पूर्वकाल एवोपेयस्य सिद्धत्वान्नोपायोपेय भाव इति भावः । कल्प्यस्यचेति । ननु ब्रह्मविदाप्नोति परम् एकधैवानुद्रष्टव्यमित्यादिवाक्य-बलात्सत्यत्वादिवैशिष्ट्याविषयकस्यैव ब्रह्मविषयकवेदनस्य मोक्षजनकत्वात्तदतिरिक्तबुभुत्सा-विरहात्तद्विषयकप्रश्नवाक्यस्य कल्पयितुमशक्यत्वेन ब्रह्मेत्येव वाक्यं कल्प्यत इति नासिद्धिरिति चेन्मैवम् । अथ कस्मादुच्यते ब्रह्मेत्यादि श्रुत्या ब्रह्मप्रश्नस्या नेकगुणविशिष्टविषयकत्वात् । तमेवं विदित्वातिमृत्युमेतीति तैत्तिरीय श्रुतावेवं शब्देन तमेव विदित्वेति वाजसनेयश्रुतौ च तच्छब्देन पूर्वोक्तपरामर्शिना सहस्रशीर्षत्वादिविशिष्टविषयकज्ञानस्यैव मोचकत्वोक्तेः । एकधैवेत्यादिवाक्यं तु धर्मधर्मिभेदनिषेधाभिप्रायम् ।

पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ।
नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।
नारायणपरं ब्रह्म तत्वं नारायणः परः ।
नारायणपरो ज्योतिरात्मा नारायणः पर

इति तैत्तरीयश्रुतौ सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवमित्यनुवाकादावुक्तेन सहस्रशीर्षत्वादि प्रकारेण नारायणाख्यपरब्रह्मणो ज्ञेयत्वोक्तेश्च । अत्र श्रुतौ ध्यायेदिति क्रियाभिप्रायेण द्वितीयानिर्देश इति माधवीयभाष्येऽभिहितम् । विश्वस्य पालकम् आत्मनां जीवानामीश्वरं नित्यमङ्गलभूतं शरीरतोपि च्युतिहीनं विश्वान्तर्यामिणं सर्वाधारं ज्ञेयेषु मध्ये मुख्यत्वान्महाज्ञेयं जानीयात् । ननु ब्रह्मज्ञानं पुरुषार्थहेतुः । सत्यम् । नारायणस्यैव ब्रह्मत्वादित्याह । ब्रह्मविदाप्नोति परमित्यादिषु यद् ब्रह्माभिहितं तन्नारायणाख्यं परं वस्तु । तत्वमिति यदुच्यते स परो नारायण एव । यदेतदुत्कृष्टं ज्योतिः छन्दोगैः परं ज्योतिरुपसंपद्येत्याम्नातम् । तदपि नारायण एव । तस्मान्नारायणः परमात्मा । तस्मात्सगुणस्यैव बुभुत्सितत्वात्तस्यैव प्रश्नोऽतः

(तरङ्गिणी)
प्रकारपरमेव सत्यादिवाक्यम् । कतर इति प्रश्नधर्मितया सामान्यतो ज्ञात आत्मस्वरूपे प्रश्नानुपपत्तेर्धर्मप्रश्नस्यापि कतरः स आत्मेत्यतः प्राक्तनेन कोयमात्मेति वाक्येन सिद्धत्वात्कतरः स आत्मेत्यस्य धर्मविशेषप्रश्नत्वेऽवसितेतरप्रत्यययोगेन प्रश्नस्य निर्धारणविषयत्वमवगम्यत इति भावः । इत्यादाविति । आदिपदेन कतरः स आत्मेत्यस्य प्रतिवचनं येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रतीत्यादि संगृहीतम् । त्वं पदार्थशोधकं वाक्यम् अखण्डार्थम् अखण्डार्थप्रश्नोत्तरत्वादिति पर्यवसितस्य हेतोरसिद्धिरित्यर्थः । ननु यथा धर्मवाचकपदवत्त्वे-प्युत्तरस्य न धर्मे मुख्यतस्तात्पर्यं तथा प्रश्नेपि डतमादिप्रत्ययसत्त्वेपि न प्रश्नस्य मुख्यतो जात्यादिविशिष्टार्थकत्वम् । किं त्वखण्डार्थकत्वमेव । अतस्तदुत्तरमपि तथेति न तत्रासिद्धिरिति । मैवम् । प्रश्नगतस्य वा प्रतिवचनगतस्य वा धर्मवाचिपदस्य धर्मबोधने तात्पर्याभावहेतोर्मानान्तरविरोधादेरभावात् । नचाखण्डार्थज्ञानस्य मोक्षहेतुत्वग्राहकमानविरोधा-त्तात्पर्याभाव इति वाच्यम् । अन्योन्याश्रयात् । सप्रकारकज्ञानस्य मोक्षहेतुत्वे मानस्योक्तेश्च । ननु सखण्डार्थप्रश्नोत्तरस्य प्रश्नधर्मिनिष्ठप्रकारनिर्धारणपरत्वेपि नाखण्डार्थप्रश्नोत्तरस्य तथात्व-मित्यत आह । सर्वस्यापीति । तथा चोत्तरत्वमखण्डार्थत्वं चेति विरुद्धम् । अतः साध्येन वा स्वविशिषणेन वा विरोध इत्यर्थः । न चानिर्धारितनिर्धारणत्वेनैवोत्तरतोपपत्तौ नोत्तरस्य तादृग्धर्मपरत्वनियम इति वाच्यम् । प्रकारविशेषनिर्धारणं विनोत्तरस्यानिर्धारितपरत्वायोगात् । धर्मिस्वरूपस्य प्रश्नोपि निर्धारणादित्युक्तत्वात् । सन्देहेति । अन्यत्रादर्शनादिहैव तत्कल्प-नेऽन्योन्याश्रय इति भावः । यदिचेति । न चासाधारणधर्मवाचकपदवत्त्वेन वा निर्विचिकि-त्सधर्मिप्रतिपादकत्वेन वोत्तरत्वमिति वाच्यम् । चन्द्रत्वाद्यसाधारणधर्मवाचकस्य चन्द्रादिपदस्य प्रश्नेपि सत्त्वाद्धर्मविशेषसंसर्गबोधनं विना निर्विचिकित्सधर्मिप्रतिपादनायोगाच्च । नन्वखण्डार्थ-प्रश्नोत्तरत्वादिति न हेतुः । किन्तु यद्यत्प्रश्नोत्तरं तत्तत्स्वरूपमात्रपरमिति सामान्यव्याप्तौ नासिद्ध्यादिरित्यत आह । किं करोतीति । ननु किंकरोतीत्यादौ न कर्मादिमात्रस्य प्रश्नः । किन्तु सामान्यतो ज्ञाते कर्मणि धर्मविशेषस्य । तथा च यद्यत्प्रयत्नोत्तरं तत्तदर्थमिति सामान्यव्याप्तौ न व्यभिचारः । प्रश्नोत्तरयोर्विशिष्टविषयत्वादिति । मैवम् । प्रकृष्टादिवाक्ये सत्यादि वाक्ये च विशिष्टस्यैव प्रश्न इत्युक्तत्वेन तदुत्तरस्यापि तद्विषयत्वाङ्गीकारे इष्टापत्तेः । एतेनेति । प्रातिपदिकार्थमात्रस्याप्रश्नाद्धेतोरसिद्ध्यादि नेत्यर्थः । स्वार्थ इति । स्वार्थो विशेषणं गोत्वादि । द्रव्यं गवादि । नन्वङ्गुलिपञ्चकवद्गोत्वादीनामभिधानेपि न गोपदादेः प्रातिपदिकस्य संसृष्टार्थः सिध्यतीति चेन्न । पञ्चानां संसृष्टतयैव बोधनात् । तदुक्तम् । ङ्याप्-

(तरङ्गिणी)

प्रातिपदिकादित्यत्र स्वार्थमभिधाय शब्दो निरपेक्षं द्रव्यमाह समवेतम् । समवेतस्य तु वचने लिङ्गसङ्ख्यां विभक्तिं चेति । अस्यार्थः । नागृहीतविशेषणेति न्यायेनादौ स्वार्थं संज्ञं गोत्वादिविशेषणमभिधाय समवेतविशेषणविशिष्टं द्रव्यमाह । द्रव्यस्य धर्मित्वेन प्रधानत्वात् । ततो लिङ्गमन्तरङ्गत्वात् । सङ्ख्या हि भेदापेक्षत्वाद्बहिरङ्गम् । सापि तु सजातीयापेक्षा-विजातीयकर्मादिकारकशक्त्यपेक्षेभ्यः कारकेभ्योन्तरङ्गेति ततस्तस्या अभिधानम् । ततः कारकाणामिति । ननु प्रातिपदिकार्थविशेष्यांशमात्रपरत्वं साध्यम् । तथा च प्रातिपदिकार्थस्य विशिष्टत्वेप्यखण्डार्थत्वसिद्धिरित्यत आह । न चेति । यत्तु प्रातिपदिकार्थैकदेशस्यैव प्रश्नः आकाङ्क्षितत्वात् न विशेषणानामनाकांक्षितत्वादिति । तन्न । वैपरीत्यस्यैवोपपादनात् । सत्स्विति । ज्ञानानन्तादिविशेषणानां सत्यादिवाक्ये विद्यमानत्वात्तत्सार्थक्यायाकाङ्क्षो-त्थापनीयेत्यर्थः । रक्तेति । रक्तपटो भवतीत्यत्र पटो भवतीत्येतावतैव पूर्णत्वेपि कीदृशः पटो भवतीत्याकाङ्क्षामुत्थाप्य रक्तपदं यथा सार्थकं क्रियते तथेत्यर्थः । निष्प्रकारकेति । ब्रह्मज्ञानं परप्राप्तिहेतुरित्युक्ते बुद्धिस्थत्वात्सप्रकारकस्यैव तद्धेतुत्वं प्रतीयते एवमिति श्रुत्या गुहानिहितमिति वाक्येन च सप्रकारकज्ञानमेव मोक्षहेतुरित्युच्यते । अतो मुमुक्षोः प्रकार एव बुभुत्सा न स्वरूपमात्र इत्यर्थः । सत्यादिवाक्यं यद्यखण्डार्थं न स्यात्तर्हि स्वरूपबुभुत्सायां न प्रवर्तेतेति तर्के व्यभिचारमाह । निर्गुणेति । सगुणवाक्यादिकं विशिष्टप्रश्ने सति प्रवृत्तं सत्यादिवाक्यं तु स्वरूपमात्रप्रश्ने इत्यत्र न नियामकमित्युक्तम् । व्यभिचारस्थलान्तरमाह । अस्ति चेति । स यथा शकुनिरित्यादिकम् । यत्त्ववान्तरतात्पर्यमादाय लक्षणवाक्यस्य न ब्रह्मपरत्वं महातात्पर्यमादायत्वखण्डार्थत्वमिष्टमेवेति । तद्व्यधिकरणम् । ब्रह्मस्वरूपमात्र-बुभुत्सायां प्रवृत्तत्वस्य व्यभिचारोक्तेः । ऐक्यादिवाक्यानां मुख्यवृत्त्या विशिष्टपरत्वं वा लक्षणयाऽखण्डार्थपरत्वं वा । आद्यं दूषयति । तेषामिति । न चैक्यभेदाभावादीनां ब्रह्मस्वरूपत्वेन न विशिष्टपरतेति वाच्यम् । ऐक्यादिवत्स्वरूपभूतसत्त्वादिधर्मांगीकारापत्त्या ममेष्टापत्तेः । विशेष्यपरस्य विशिष्टपरेणैवैक्यादिवाक्यानां सत्यादि वाक्यविरोधित्वापत्ते-र्वक्ष्यमाणत्वात् । कल्पितप्रतियोगिकत्वेन भेदाभावादेः कल्पिततया तेषां ब्रह्मस्वरूप-त्वानुपपत्तेश्च । ननूभयोर्ज्ञेयब्रह्मपरत्वेप्यैक्यादि वाक्यमुख्यार्थस्य ब्रह्मणि ज्ञेयत्वान्न तत्र लक्षणा । सत्यादिवाक्यार्थस्य ब्रह्मण्यज्ञेयत्वात्तत्र लक्षणेत्यत आह । नचास्यामिति । द्वितीयं दूषयति । तेषामिति । सत्यत्वेचेति । नन्वभिन्नत्वे सति सत्यत्वान्नापसिद्धान्त इत्यत आह । द्वारत्वेति । अभेदे द्वारद्वारिभावानुपपत्तिः । न च कल्पितधर्मताकत्वेन द्वारत्वं मिथ्यात्वं पक्षान्तर्भावात् ।

(तरङ्गिणी)

अत्रापीति । सत्यादि वाक्ये सत्यत्वादेर्द्वारत्वेनोपस्थितस्यैक्यादिकं प्रति विरोधित्वेनैक्याद्यसिद्धिरित्यर्थः । न च सत्यत्वादेः कल्पितजातिरूपस्य द्वारतयोपादानेपि पारमार्थिकत्वाकारेण निषेधकानामविरोध इति वाच्यम् । कल्पितैक्यादेर्द्वारत्वेनोपादानेपि पारमार्थिकत्वाकारेण सत्यत्वादिबोधकस्य सत्यादिवाक्यस्यैक्यवाक्येनाविरोध इत्यस्यापि सुवचत्वात् । महदिति ।

स वै महाभागवतः परीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः ।
ज्ञानेन वैयासिकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम् ।
तन्नःपरं पुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठम् ।
अख्याह्यनन्ताचरितोपपन्नं पारिक्षितं भागवताभिरामम् ।

इति पूर्वश्लोके अनन्ताचरितशब्देनानन्तशब्दार्थं गुणानां पृष्टत्वेनोपक्रमात् ।

अहो वयं जन्मभृतोऽद्यहास्मवृद्धानुवृत्त्यापि विलोमजाताः ।
दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ।
कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य ।
योनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः ।

इति मध्येर्थवादात् महद्गुणत्वादितिप्रतिवचनरूपोपसंहारात् ।

एतावतालं ननु सूचितेन गुणैरसाम्येनतिशायितेस्य ।
हित्वेतरान्प्रार्थयतो विभूतिर्यस्यांघ्रिरेणुं जुषतेऽनभीप्सोः ।
अहं हि पृष्टोऽस्य गुणान् भवद्भिराचक्ष आत्मावगमोऽत्र यावत् ।
नभः पतन्त्यात्मसमं पतत्रिणस्तथा समं विष्णुगतिं विपश्चितः ।

इत्यभ्यासात् । अनन्तगुणत्वार्थकत्वेनानन्तशब्दव्याख्याने महद्गुणत्वादिति स्मृतेस्तात्पर्यमवगम्यते । यत्तु सगुणप्रकरणस्थितब्रह्मानन्त शब्दार्थविषयमिदं न तु लक्षणवाक्यस्थितब्रह्मानन्तशब्दार्थ निर्वचनमिति तन्न । सगुणप्रकरणातिरिक्तनिर्गुणप्रकरणस्याद्याप्यसिद्धेः । अत्रापि प्रकरणेऽनन्तशब्दार्थज्ञानेनापवर्गाख्यफलस्योक्तेः ।

यत्रानुरक्ताः सह सैवधीरा व्यपोह्य देहादिषु संगगूढम् ।
व्रजन्ति यत्पारमहंस्य सत्यं यस्मिन्नहिंसो परमश्च धर्मः ।

इति परमहंसप्राप्यपरमफलस्योक्तेश्च । स वा इति द्वाभ्याम् ऋषीणां सूतं प्रति प्रश्नः । वै निश्चयेन । सः पूर्णज्ञानः परीक्षित् । शुकाचार्योक्तशब्दजन्येन भगवज्ज्ञानेन गरुडध्वज-

(तरङ्गिणी)

पादसामीप्याख्यमपवर्गं येन भेजे तत् उत्तमं पावनं प्रकटपुरुषार्थहेतुं परिपक्वज्ञानादियोगाश्रयं भगवच्चरितयुक्तं भागवतप्रियं परीक्षिच्चरितं नः आख्याहीत्यन्वयः । अहो वयमित्यादि-सूतवाक्यम् । विलोमजाता अपि वयं वृद्धसेवया सफलजन्मानोऽभूम । अत्र हेतुमाह महत्तमैः सह संवादः दुष्कुलजन्माख्यमनोव्यथां शीघ्रं विधुनोति । विष्णोर्नामोच्चारयतः सर्वाशुभनाशो भवतीति कुतः पुनर्वक्तव्यमित्यर्थः । अनन्ताचरितोपपन्नमित्युक्तं तस्योत्तरं योनन्तशक्ति-रित्यादि । श्रुतयोनन्तगुणत्वेन प्रवृत्तिनिमित्तत्वेनानन्तशब्दं यस्मिन्प्रयुञ्जते तच्चरितानुवर्णने मम सामर्थ्यं नास्तीति सूचिताभिप्रायः । विभूतिर्लक्ष्मीः । कृपाकटाक्षं प्रार्थयमानानन्याह्वित्वा अप्राप्तलिप्सारहितस्य यस्य चरणरेणुं सेवते अस्यानन्तस्य गुणकृतसाम्याधिक्यराहित्यविषये एतावता लक्ष्मीपतित्वेन सूचितेनालम् । इतोतिरिक्ता युक्तिर्न वाच्येत्यर्थः । तथापि भगवद्गुणविषये मम यावानवगमो ज्ञानमस्ति तावद्वक्ष्ये । यथा पक्षिणः स्वशक्त्या नभसि गच्छन्ति तथा विद्वांसः स्वविद्वत्त्वसमं विष्णुसामर्थ्यं जानन्तीत्यर्थः । तस्मात् ब्रह्मानन्तशब्दौ न विपक्षबाधकौ । अभिधानेति । अभिधानम् अन्वबोधनम् । नन्विदं घटः कर्मत्व-मित्यादिनिराकाङ्क्षेप्यस्तीत्यत आह । यस्यचेति । निराकाङ्क्षेन्वयाननुभावकत्वं स्वरूप प्रयुक्तं न तु पदान्तरविरहप्रयुक्तम् । नन्वहो विमलं जलं नद्याः कच्छे महिषश्चरतीत्यादि यदा नदी कच्छान्वयपरतया प्रयुज्यते तदा तत्राव्याप्तिः । नदीपदस्य कच्छपदेन विनापि जलपदेन स्वार्थान्वयानुभावकत्वात् । मैवम् । तात्पर्यविषयेत्यन्वयविशेषणात् । ननु तर्ह्यन्वयांशो व्यर्थः । यस्य येन विना तात्पर्यविषयाननुभावकत्वमित्यस्यैव सामञ्जस्यात् । तात्पर्यविषयश्च क्वचित्संसृष्टः क्वचिदखण्ड इति नाखण्डार्थेप्याकाङ्क्षानुपपत्तिरिति । मैवम् । स्वरूपमात्रस्य ज्ञाततयाऽखण्डे तात्पर्याभावेन पदान्तरविरहप्रयुक्त तात्पर्यविषयाननुभावकत्वस्या खण्डार्थ-वाक्येष्वखण्डार्थानुभवजननात्प्रागसत्त्वात् । सन्निधिस्त्विति । पदविशेषजन्यत्वमुपस्थितौ विशेषणम् । अतः प्रत्यक्षादिजन्यकलापाद्युपस्थितौ वाऽग्निः करणत्वमोदनः कर्मतेत्यादि-पदजन्योपस्थितौ वा नातिव्याप्तिः । यत्त्वव्यवधानेन शाब्दबोधानुकूलार्थेपि स्थितिमात्रमासत्तिः न त्वन्वयप्रतियोगित्वविशेषिता गौरवात् । सा च संसर्गाबोधकेप्यस्त्येवेति । अत्र ब्रूमः । शब्दः पर्वतो गुणोग्निमानित्यादौ पदज्ञानत्वेन शाब्दबोधानुकूलां शब्दशब्दार्थ-भूतशब्दरूपपदोपस्थितिमादायातिव्याप्तिः । शब्दपदोपस्थितेः पर्वतोपस्थितिं प्रत्यासत्तित्वा-भावेप्युक्तविधया लक्षणसत्त्वात् । इतरेति । अत्र एकपदार्थ संसर्गे तदाश्रयत्वाभि-मतनिष्ठविरोधिप्रतियोगित्वाभाव इति लक्षणम् । तेनेतरेत्यादि पदविशेषणं चेदेकपदोपस्थाप्ययोः

(तरङ्गिणी)
प्रकृतिप्रत्ययार्थयोरेकप्रत्ययोपस्थाप्यकारकसङ्ख्यादेर्वा न योग्यता स्यात् । पदार्थविशेषणं चेत्प्रमेयत्वे प्रमेयत्वमित्यादौ सा न स्यादित्यादि दूषणं परास्तम् । संसर्गपदोपादानाच्च शब्दवदाकाशस्य शब्दनिष्ठात्यन्ताभावप्रतियोगित्वादव्याप्तिर्निरस्ता । विरोधीत्युक्त्या च रूप-प्रागभाववच्छिन्नोघटो रूपवानित्यादौ विशिष्टवैशिष्ट्यसंसर्गे प्रागभावादेरपि विरोधित्वान्नाति-व्याप्तिः । प्रतियोग्यसमानाधिकरणत्वमपि प्रवेश्यम् । तेन दण्डी पुरुष इत्यादौ नाव्याप्तिः । संयोगाभावस्य प्रतियोगिसमानाधिकरणभिन्नत्वाभावात् । धूमवह्न्योः सामान्यव्याप्ति-वत्सर्वसेकव्यक्तेः सामान्यतः पयसा समं योग्यतेति मते अवच्छेदकधर्मशून्यत्वमन्यत्वमि-त्युक्तम् । तस्मिन्पक्षे संसर्गपदं संसर्गत्वपरम् । अवच्छेदकधर्मशब्देनावच्छेदकत्वं विवक्षितम् । तथा चैकपदार्थसंसर्गत्वे उक्तप्रतियोगितावच्छेदकत्वशून्यत्वमित्यर्थः । अत्र मते सेकानन्वितं जलमयोग्यमेव । सेकसंसर्गत्वस्य तन्निष्ठाभावप्रतियोगित्वावच्छेदकत्वात् । नन्वेवं पयसा सिंचतीत्यत्र सर्वसेकव्यक्तेः सर्वपयसान्वयः स्यात् । योग्यतातज्ज्ञानयोरविशेषादिति चेत्पर्वते महानसीयवह्निवद्बाधेन प्रतिबंधादसंसर्गग्रहस्य विशिष्टज्ञानमात्रे हेतुत्वादिति केचित् । तन्न । सामान्ययोग्यतायां मानाभावादिति वयम् । उक्तलक्षणं त्ववच्छेदकत्वानन्त- र्भावेनैव बोध्यम् ।

ननु स्वप्रकाशस्याप्यात्मनोऽविद्योपहितत्वेनास्फुरणाद्वेदान्तविषयत्वं भविष्यतीत्यत आह । अविद्येति । अधिष्ठानस्फुरणं विनाध्यासायोगात् । निर्विशेषे च साम्यविशेषस्फुरणास्फुरणयो-रभावादात्मस्फुरणाभावान्नात्मनो विषयत्वमिति भावः । ननु स यथा सैंधवघनोऽनन्तरो बाह्यः कृत्स्नो रसघन एव स्यादेवं वा अरे इदं महद्भूतमनन्तमपारं कृत्स्नः प्रज्ञानघन एवेत्याद्येकरसत्वादि श्रुतिर्मुख्यार्थत्यागनिमित्तमित्यत आह । एकरसत्वादीति । विशेष्यपरस्पर-विशिष्टपरेणाविरोधादित्यर्थः । न च द्वारतयोपस्थितैकरसत्वादेर्बाधकत्वमिति वाच्यम् । सत्यादिवाक्याद्द्वारतयोपस्थितसत्यत्वादेरेवैकरसत्वादिबाधकत्वं सुवचमित्युक्तत्वात् । बुभुत्साया इति । धर्मिणः प्रागेव ज्ञानात्तत्र बुभुत्साविरहादिति भावः । यत्त्वसाधारणस्वरूपे बुभुत्सेति । तन्न । स्वरूपद्वयाभावादित्युक्तत्वात् । श्रोतव्य इति । मतभेदेन श्रवणमनन-विध्योर्विचारविधित्वम् । न च वेदान्ततात्पर्यनिश्चयफलकतयाऽनिष्प्रत्यूहनिष्प्रकारकब्रह्म-ज्ञानार्थत्वाद्विचारो नायुक्त इति वाच्यम् । स्वरूपमात्रे तात्पर्याभावादित्युक्तत्वात् । विचार-जन्यज्ञानत्वनिष्प्रकारकत्वयोर्विरोधाच्च । इहैवा विरोधकल्पनेऽन्योन्याश्रयाच्च । एकतरेति । नन्वद्वैताद्युपलक्षिताखण्डार्थज्ञानं विषयनिर्धारणं तदधीनं च प्रयोजनं मुक्तिः नत्वेकतर-प्रकारनिर्धारणाधीनं प्रयोजनमिति । मैवम् । त्वदभिमताखण्डार्थज्ञानं प्रत्यद्वैताद्युपलक्षणस्य

(तरङ्गिणी)

प्रकाशे तस्य ज्ञानस्याखण्डार्थज्ञानत्वायोगात् । अप्रकाशे द्वैतस्य मिथ्यात्वेन स्वरूपस्य द्वैताद्युपलक्षिताविद्याधिष्ठानचिन्मात्रस्फुरणस्य सदा सत्त्वेपि मुक्तेरभावेन प्रयोजनस्य तदधीनत्वासंभवात् । यस्य कस्य चिदिति । सत्यत्वादिविशिष्टस्य ब्रह्मत्वज्ञानं यदनुभवसिद्धं तन्न स्यादित्यर्थः । तात्पर्यविषयस्येत्यादि । यत्किञ्चिदिति ज्ञाने सत्येव बुभुत्साप्रश्नयोरुदयात्सत्यादिवाक्यस्य ब्रह्मबुभुत्साप्रश्नौ प्रति हेतुभूताज्ज्ञानादनधिकविषयत्वेन सत्यादिवाक्यं ब्रह्मबुभुत्सानिवर्तकं ब्रह्मप्रश्नोत्तरं च न स्यादित्यर्थः । यत्त्वेकस्मिन्नपि कल्पितोद्देश्यविधेयभावसंभव इति । तन्न । अखण्डज्ञाने कल्पिताभानात् । अप्राप्तेति । अप्राप्तं यद् ब्रह्मस्वरूपं विधेयं तत्परत्वात् । विधेयस्यापीति । ब्रह्मपदाद् ब्रह्मणो ज्ञातत्वेन तस्याविधेयत्वाद्यत्सत्यं तद् ब्रह्मेत्युद्देश्यविधेयसंसर्गस्य विधेयतेत्यर्थः । यत्त्वसाधारणं स्वरूपं प्रमेयत्वाद्विधेयमिति । तन्न । व्यावर्तकादिवैशिष्ट्यातिरिक्तासाधारण्याभावात् । यत्तूद्देश्यता विधेयता च स्वरूपमात्रपर्यवसन्नेति । तन्न । प्रकारभेदं विना ज्ञातत्वाज्ञातत्वादिविरुद्धरूपोद्देश्यत्वविधेयत्वयोरेकत्रायोगात् । बीजेति । तात्पर्यानुपपत्तिरूपबीजं तु पूर्वमेव निरस्तमिति भावः । सत्यादीति । घटः कलश इति वत्प्रवृत्तिनिमित्तभेदाभावादित्यर्थः । एवं चेति । घटः पृथिवीद्रव्यमित्यादिशब्दानामिव विशेष्याभेदेपि प्रकारभेदान्न पर्यायत्वम् । कुम्भेति । सत्यं ज्ञानमित्यत्र सत्यशब्दोक्तसत्ताया ब्रह्मलक्षणत्वस्य त्वयाप्यङ्गीकारान्न तस्याः कुम्भादिसाधारण्यम् । अन्यथा लक्षणस्यातिव्याप्तिः स्यात् । तथाच न सत्यशब्दस्य कुम्भादिब्रह्मसाधारणसत्त्वजातिवाचित्वमित्यर्थः । मिथ्येति । कुम्भादिषु ब्रह्मणि चानुगतमेकं सत्त्वं सामान्यमङ्गीकृत्य सत्यपदेन तन्नोच्यत इत्युक्तं पूर्वम् इदानीं कुम्भादिब्रह्मानुगतं सत्त्वसामान्यमेव नास्तीत्युच्यत इति भेदः । ब्रह्मणि तत्स्वरूपमेव सत्ता । कुम्भादिषु तु सदधिष्ठानब्रह्मानुवेधमात्रमिति त्वन्मताच्च । कुम्भादि ब्रह्मानुगतसत्त्वसामान्यस्य सत्यशब्दाभिधेयत्वे दोषान्तरमाह । तयेति । अनृतसाधारणस्यानृताद्व्यावर्तकत्वात् । कालत्रयेति । सत्यं ज्ञानमिति श्रुत्यभिहितं तात्त्विकं सत्त्वं ब्रह्मण्येवेति त्वन्मतस्य कुम्भादिसाधारणसत्ताजातिः सत्यपदेनोच्यत इत्यङ्गीकारे भङ्गः स्यात् । जातित्वाभिमतज्ञानत्वाश्रयव्यक्तिरेका वानेका वा । आद्ये दोषमाह । भेदं विनेति । व्यक्तिभेदं विनेत्यर्थः । द्वितीयेप्युपहितानुपहितरूपेणानेका वोपहितरूपेणैव वा । नाद्य इत्याह । धर्मीति । धर्मिसमसत्ताकभेदं विनाप्युपहितानुपहितवृत्तिज्ञानत्वजातिरस्त्वित्यङ्गीकुर्वन्तं प्रत्याह । योगे वेति । घटाकाशाद्यभिव्याप्त्याकाशत्वस्य शुद्धाकाशलक्षणत्वाभाववत्तथा विज्ञानत्वस्यापि शुद्धलक्षणत्वं न स्यात् । ज्ञानत्वमुपहितवृत्त्येवेति द्वितीयपक्षं

(तरङ्गिणी)

दूषयति । ज्ञानत्वादेरिति । धर्मिसमसत्ताकभेदवदुपहितवृत्तित्वेन ज्ञानत्वादेर्जातित्वसंभवेपि न तस्य शुद्धलक्षणत्वम् । शुद्धेऽसंभवादित्यर्थः । यत्तूपहितवृत्तित्वेप्युपधेयवृत्तित्वानपायान्नासंभव इति । तन्न । ज्ञानादिपदप्रवृत्तिनिमित्तस्य ज्ञानत्वादेरुपधेयस्य ज्ञानादिपदवाच्यताप्रसङ्गात् । उपहितस्य दृश्यत्वादिनोपधेयस्य दृश्यत्वादिकं स्यात् । एतेनेति । सत्यशब्दः कालत्रयाबाध्यत्वरूपपारमार्थिकसत्त्वाभिधायक इति त्वदङ्गीकारेण । सत्त्वादीति । प्रवृत्तिनिमित्तभेदान्न पर्यायत्वम् । सत्यत्वादेरिति । उक्तरूपस्य । यत्तु शबलेन सत्यत्वादेरयोगः उक्तरूपसत्यत्वादेरयोगेपि सत्यत्वान्तरस्य तत्र सत्त्वात् । शबलेह्येषैव सत्यता यत्परमार्थसंसर्गेण प्रतीयमाने तस्मिन्सत्यशब्दसङ्गतिग्रहः । तदुक्तं संक्षेपशारीरके ।

आकाशादौ सत्यता तावदेका प्रत्यङ्मात्रे सत्यता काचिदन्या ।
तत्संपर्कात्सत्यता तत्र चान्या व्युत्पन्नोयं सत्यशब्दस्तु तत्र

इति । तत्र शबले । तथा च शबलेपि सत्यत्वादिकमस्तीति । तन्न । जपाकुसुमसंपर्कात्स्फटिकलोहितिम्न इव परमार्थसत्संसर्गाच्छबले प्रतीयमानस्य सत्यत्वस्यापारमार्थिकत्वेन कालत्रयाबाध्यत्वरूपं पारमार्थिकं सत्यत्वं श्रौतसत्यपदेनोच्यत इति त्वन्मतभङ्गप्रसङ्गात् । लक्षणत्वेनाभिमतायाः प्रत्यङ्मात्रनिष्ठसत्यतायाः शबलेऽनुपपादनाच्च । यस्तु वैयात्याद् ब्रूते । सत्संसर्गेण प्रतीयमानत्वरूपं सत्त्वमेवात्र लक्षणमिति । तं प्रत्याह । योगेवेति। व्यावर्तकव्यावृत्त्योः सामानाधिकरण्यनियमात् । न तु शुद्धस्येति । परमार्थसत्संसर्गस्य शुद्धेऽभावाच्छुद्धे विद्यमानस्याबाध्यत्वरूपपारमार्थिकसत्यत्वस्य सत्यपदेन शुद्धेऽभिधानस्य त्वयाऽनङ्गीकारात् । तस्मादिति । उक्तरूपसत्यत्वादीनां सत्यादिवाक्येन शुद्धप्रतिपादनं संभावितम् । तत्त्वखण्डार्थवादिना नाभ्युपेयते । शुद्धादन्यत्र तु तत्प्रतिपादनसंभावनैव नास्ति । अतः सत्यादि पदं सत्यत्वादिकं सर्वथा न बोधयति । किन्तु विशेष्यमात्रमेव बोधयतीत्यर्थभेदाभावात्पर्यायत्वं सत्यादिपदस्य । अभिधेयभेदाभावमुक्त्वा प्रयोजनाभावमाह । पदान्तरेति । महाभाष्य इति । जात्यादिशब्दानामधिकार्थत्वेन प्रातिपदिकार्थत्वाभावादव्ययेषु चाव्ययादाप्सुप इति लुकोनित्यत्वेन विभक्तेरश्रवणादुच्चैर्नीचैरित्यादौ च कर्मादिव्यतिरिक्तलक्ष्ये शेषे विहितया षष्ठ्यैव पदसंज्ञायां रुत्वविसर्गादिसिद्धेर्न प्रातिपदिकार्थे प्रथमा विधेयेत्याशङ्कितमित्यर्थः । सपूर्वाया इति । विद्यमानपूर्वात्प्रथमान्तात्परयोर्युष्मदस्मदोस्तेमे इत्येतावादेशौ भवत इति सूत्रार्थः । ग्राम उच्चैरित्यत्रोच्चैः शब्दस्य प्रथमान्तत्वे

(तरङ्गिणी)

हि ततः परस्य तवेत्यस्य ते इत्ययमादेशो विभाषया भविष्यतीति प्रयोजनवत्येव प्रथमा भवति। व्यावर्तकस्येति । अन्यथा सत्यपदाप्रयोगेप्यसत्यादिव्यावृत्तिः स्यात् । अभिधेति । सत्यत्वविशिष्टोपस्थितिकाले । नद्यामिति । न च तीरयजमानादेरनद्ययजमानादि प्रतियोगिकव्यावृत्तौ न तात्पर्यमतो नद्यां घोष इत्यादि वाक्यान्न तत्सिद्धिः । सत्यादि-वाक्येत्वनृतादि व्यावृत्तौ तात्पर्यमस्तीति वाच्यम् । व्यावर्तके तात्पर्यं विना तद्व्याप्यव्यावृत्तौ तात्पर्यानिर्वाहात् । ननु लक्षणातः प्राक् सत्यपदात्प्रतीतं सत्यत्वं व्यावहारिकम् । अतः सत्यत्वेन प्रतिद्वंद्विनः सकाशाद्व्यावृत्तिः सिध्यति । यजमानत्वं तु न व्यावहारिकमतस्ते-नायजमानात्प्रस्तरस्य न व्यावृत्तिः सिध्यतीत्यत आह । नचेति । सत्यपदयजमानपदयोः सत्यत्वयजमानत्ववैशिष्ट्येन ब्रह्मप्रस्तरबोधने तात्पर्याभावे समाने सतीत्यर्थः । ननु व्यावहारिकप्रमाणसिद्धत्वात्सत्यत्वं व्यावहारिकमित्युच्यत इत्यत आह । न चौपनिषद इति । नचतत्वेति । तात्पर्याविषयत्वेपीति शेषः । न च लक्षणाबीज इति । न च महातात्पर्यविषयसिध्युपाय एवावान्तरतात्पर्यं सत्यत्वादिकं तु तथेति तत्रावान्तरतात्पर्यमिति वाच्यम् । व्यावर्तके महातात्पर्यं विना तद्व्याप्यव्यावृत्तौ महातात्पर्यायोगात् । व्यावर्तकानामपीति । व्यावृत्तिव्यावर्तकयोरेकसत्ताकत्वादित्यर्थः । ननु यत्पारमार्थिकबोधकं तत्पारमार्थिकमिति न नियमः । पारमार्थिकस्य ब्रह्मणो नैवं विधपदेन बोधनात् । त्वन्मतेऽसतो सत्पदादिबोध्यत्वाच्च व्यभिचारात् । नापि व्यावृत्तिबोधकं व्यावृत्तिसमसत्ताकमिति नियमः । स्वप्राङ्गनादेरपि स्वजन्यसुखे सुखान्तरापेक्षया व्यावृत्तिबुद्धिजनकत्वात् । कारणस्य कार्यव्यावर्त-कत्वादित्यत आह । व्यावहारिकैरिति । न वयं व्यावहारिकाणां पारमार्थिकज्ञापकत्वं ब्रूमः । किन्तु व्यावृत्तिव्यावर्तकयोः समव्याप्तयोरेकसत्ताम् । स्वप्राङ्गनादावपि तज्ज्ञानं सुखहेतुः । अतः स्वप्राङ्गनाज्ञानतज्जन्यसुखतद्गतव्यावृत्तीनामेकसत्तास्त्येवेति न तत्र दोषः । व्यावर्तकेति । पूर्वं व्यावृत्तिव्यावर्तकयोरेकसत्ताकत्वाद्व्यावर्तकाणां पारमार्थिकत्वमुक्तम् । इदानीं सद् ब्रह्माभेदात्तेषांसत्त्वमुच्यत इति भेदः । यत्त्वज्ञानत्वादिधर्माणामपि व्यावृत्तिवद् ब्रह्माभिन्नतया पारमार्थिकत्वमिष्टमेवेति । तन्न । परस्यापसिद्धांतात् । अभिन्नधर्मणां मयाङ्गीकृतत्वेन मन्मतप्रवेशाच्च । शुक्तेरित्यादि । अधिष्ठानज्ञानाबाध्यात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम् । तदत्यन्ताभावप्रतियोगित्वस्य सत्यत्वेपि सत्वात् । शुक्तिव्यावृत्तेरनृतव्यावृत्तेश्चात्यन्ताभावः शुक्तित्वमनृतत्वमेव । अन्योन्याभावात्यन्ताभावस्य प्रतियोगितावच्छेदकधर्मरूपत्वात् । एवं च शुक्तौ शुक्तिज्ञानाबाध्यशुक्तित्वरूपशुक्तिव्यावृत्त्यत्यन्ताभाववद्ब्रह्मणि ब्रह्मज्ञानाबाध्यानृतत्व-

(तरङ्गिणी)

रूपानृतव्यावृत्त्यत्यन्ताभावः स्यादित्यर्थः । नन्वनृतव्यावृत्तेर्मिथ्यात्वेपि नानृतत्वस्य ब्रह्मसमसत्ताकत्वापत्तिः । एकबाधकबाध्यत्वस्योभयत्रापि तुल्यत्वात् । व्यावृत्तिबाधकाबाध्यस्यैव व्यावृत्तिविरोधिनो व्यावृत्त्यधिकसत्ताकत्वम् । न त्वेकबाधकबाध्यस्यापि । कल्पितरजतव्यावृत्तेः कल्पितरजते मिथ्यात्वेपि तदपेक्षया तस्याधिकसत्ताकत्वाभावादिति । मैवम् । परस्परात्यन्ताभावरूपयोरेकत्रैकावच्छेदेनैकबाधकबाध्यत्वस्य वक्तुमशक्यत्वात् । तथा हि । प्रतियोगिबाधो नाम । प्रतिपन्नोपाधौ तदवच्छेदेन ग्राह्यसंबंधेन संसृष्टतदत्यन्ताभावविधानं तेनैव तदत्यन्ताभावबाधने तत्रैव तदवच्छेदेन ग्राह्यसंबन्धेनात्यन्ताभावात्यन्ताभावस्य प्रतियोगिरूपस्य संसृष्टतया विधानमापद्येतेति विरोधःस्यात् । भ्रान्त्यन्तरेति । ब्रह्मण्यविद्यमानस्यानृतव्यावृत्त्यादेरुपदेशेन ब्रह्मणि भ्रान्त्यन्तरं स्यात् । ननु भ्रमनिवर्तकाधिष्ठानतत्वसाक्षात्कारोपायत्वेनैवाविद्यमानमुपदिश्यते । स्थूलारुन्धतीन्यायेन पूर्वपूर्वभ्रमनिवृत्तये काल्पनिकोपदेशस्य पञ्चकोशस्थले दर्शनादित्यत आह । नहीति । पुंस्त्वस्योपदेशेनाधिष्ठानतत्वज्ञानमुत्पाद्येति शेषः । किं त्विति । वल्मीकत्वस्योपदेशेनाधिष्ठानतत्वज्ञानमुत्पाद्य निवर्तनीया अधिष्ठानगतासाधारणधर्मोपदेशं विना भ्रमनिवर्तकाधिष्ठानतत्वसाक्षात्काराभावादित्यर्थः । उभयताराप्यरुन्धतीत्वेन न निर्दिश्यते । किन्तु प्रथमं स्थूलतारां पश्य पश्चादरुंधतीं दर्शयिष्यामीत्येतद्बुध्यैव । पञ्चकोशस्थलेपि न काल्पनिकोपदेशः । किन्तु पञ्चानामप्यन्नमयादीनां ब्रह्मत्वमेव । यथा चैतत्तथा भाष्यादिषूक्तम् । व्यावृत्तीनां सत्यत्वमिथ्यात्वे निराकृत्य व्यावहारिकत्वं निराकरोति । न चात्मनीति । ब्राह्मण्यस्येति । व्यावहारिकानृतव्यावृत्त्या प्रातिभासिकानृतत्वभ्रान्तिनिवृत्तावपि त्वन्मते प्रतियोगितदत्यन्ताभावयोरेकसत्ताकयोरेव विरोधाद् ब्रह्मणि व्यावहारिकजगत्सत्त्वेपि तात्विकतदत्यन्ताभाववद्व्यावहारिकानृतव्यावृत्तिसत्त्वेपि तात्विकमनृतव्यावृत्त्यत्यन्ताभावरूपमनृतत्वं स्यादेवेत्यपि बोध्यम् । असद्व्यावृत्तेरिति । असद्वा इति वाक्यप्रतीतं मूलकारणासत्त्वं पारमार्थिकं निरपवादप्रमाणप्रतीतत्वात् संमतवत् । नन्वसद्व्यावृत्तिबोधकस्य सत्यादिवाक्यस्य बाधकस्य विद्यमानत्वाद्विशेषणासिद्धिरित्याशंकापरिहारायोक्तम् । व्यावहारिकत्व इति । मिथ्यात्वमानवत्तात्विकपरस्य व्यावहारिकपरेणाविरोधादित्यर्थः । अनृतस्यापीति । सोरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रसीयत तद्रजतमभवदित्यर्थवादतः प्रतीतस्य रुद्रेण रुदिते सति यदश्रु गलितं तदेव रजतं जातमित्येवं बाधितार्थस्य सुवर्णप्राशस्त्ये यथा द्वारत्वं तथेत्यर्थः । उक्तं हीति । तत्वप्रदीपिकादिषु । शाब्देर्थ इति । लक्षणया शब्दतः प्रतीयमाने ब्रह्मस्वरूपमात्रेऽर्थात्प्राप्तस्यार्थिकस्यानृतव्यावृत्त्यादेः । नीलमिति । न च

(तरङ्गिणी)

नीलमुत्पलमित्यादौ न स्वरूपमात्रे तात्पर्यम् अत्र तु स्वरूपमात्रे तात्पर्यं तच्चार्थिकार्थस्य द्वारत्वं विना नुपपन्नमिति वाच्यम् । स्वरूपमात्रे तात्पर्यस्य निरासात् अन्याविषयकमिति । तथा च व्यावृत्तीनामन्यविषयकज्ञानप्रतिबन्धद्वारा शुद्धज्ञान एव द्वारत्वमित्यर्थः । अन्याज्ञान इति । अन्यविषयकज्ञानप्रतिबन्ध एवोपक्षयाद्व्यावृत्तीनां न शुद्धविषयकज्ञानपर्यन्तं तदुपयोग इत्यर्थः । व्यावर्त्यज्ञानमिति । स्वरूपज्ञानमित्यर्थः । पूर्वं स्वरूपज्ञानं व्यावृत्तिज्ञानसाध्यमतस्तद्वारकमिति पराभिमते वैपरीत्यमुक्तम् । इदानीं साध्यसाधनभावमनादृत्यान्याविषयकब्रह्मज्ञाने व्यावृत्तिज्ञानस्य द्वारत्वाङ्गीकारे वैपरीत्यमापाद्यत इति भेदः । न चाभिधाबललब्धविशिष्टज्ञानादेव व्यावृत्तिज्ञानसिद्धेर्न तत्प्रति स्वरूपज्ञानं द्वारमिति वाच्यम् । अविद्याद्यध्यासाधिष्ठानतया ब्रह्मस्वरूपस्यापि व्यावृत्तिज्ञानं विना सिद्धत्वात् । प्राचीन इति । व्यावृत्तिज्ञानात्प्राचीने द्वारत्वाभिमतव्यावृत्तिज्ञानहेतौ सत्यत्वादिविशिष्टज्ञाने ब्रह्मज्ञानतयाऽविद्यानिवर्तकत्वार्हेऽविद्या कार्यस्य सत्यत्वादेर्भानायोगेन विशिष्टज्ञानत्वाभिमतस्यैवान्याविषयकब्रह्मज्ञानत्वौचित्यात्तस्य व्यावृत्तिज्ञानासाध्यत्वमिति भावः । ननु प्राचीनज्ञानं ब्रह्मस्वरूपं वा वृत्तिरूपं वा । आद्ये नान्यभानानुपपत्तिः । तस्याविद्यानिवर्तकत्वाभावात् । वृत्तिरूपमपि नाविद्यानिवर्तकम् अपरोक्षत्वाभावात् । अपरोक्षत्वेपि प्रतिबद्धत्वात् । विचारजन्यं तु फलीभूतं भवत्यविद्यान्निवर्तकं न तु तत्प्राचीनमिति । मैवम् उपक्रमाद्यवधृततात्पर्यकब्रह्मपरवाक्यात् प्रथममुत्पन्नं सत्यादि विशिष्टबोधमपहाय निष्प्रकारकज्ञानं कल्पयित्वा तस्य विचारजन्यत्वादिकल्पनाया अयुक्तत्वात् । अन्यथा गान्धर्वशास्त्रादपि षड्जत्वादिविशिष्टज्ञानानन्तरं निष्प्रकारकं कल्पयित्वा तस्य गान्धर्वशास्त्रविचारजन्यत्वं कल्प्येत । व्यावृत्तिज्ञानस्यान्याज्ञाने द्वारत्वमापद्येतेत्यत्र परस्येष्टापत्तिं परिहरति । ब्रह्मेति । द्वारबुभुत्सायां सत्यादिवाक्यं प्रवृत्तमिति वक्तव्यम् । न तु ब्रह्म बुभुत्सायाम् । न च द्वारेति । अनृतव्यावृत्तिबोधनद्वारा सत्यशब्देन कदाचिद् ब्रह्म बोध्यते जडव्यावृत्तिद्वारा विज्ञानशब्देन कदाचित् । नित्यवदिति । विकल्पप्रतिद्वन्द्वि नित्यम् । तद्वद्वाशब्दादिराहित्येन श्रवणात् । एकस्मिन्निति । सत्यज्ञानादिशब्दाः । न विकल्पेन ब्रह्मज्ञानसाधनम् । एकस्मिंस्तदुपाये उपादीयमानत्वात् । यदेकस्मिन्यदुपाये उपादीयते तत्तस्य विकल्पेन साध्यं न भवति । यथा प्रोक्षणाद्यवघातादि । व्यतिरेके व्रीहियवादिर्वेति । विकल्पेति । दृष्टकार्याणां समुच्चय एव । न तु विकल्पो न वैकेनान्यस्य निवृत्तिः । अत एव दशमाध्याय चतुर्थपादेऽभिहितम् । अस्त्यंजनाभ्यंजनं नाम सत्रम् । तत्र श्रूयते । गौग्गुलवेन प्रातः सवनेऽभ्यंजत इत्यादि । तत्किं प्राकृतस्य नवनीताभ्यंजनस्य निवर्तकं नेति संशये

(तरङ्गिणी)

दृष्टार्थत्वादंजनाभ्यंजनयोः प्राकृतस्य वैकृतेन निवृत्तिः । सत्यं दृष्टार्थमभ्यञ्जनम् । तथापि नैकार्थ्यं नवनीताभ्यञ्जनस्य स्नेहनार्थत्वात् । गौग्गुलवादस्तु चन्दनानुलेपनवद्रूक्षीकरणार्थत्वाद्दृष्टप्रयोजनभेदेन समुच्चय एवेति । विज्ञानमिति । विज्ञानमानन्दं ब्रह्मेत्यादौ सत्यपदाश्रवणादनृतव्यावृत्तेरप्रतीतिः । सत्यं ज्ञानमित्यादावानन्दपदाश्रवणाद्दुःख व्यावृत्तेरप्रतीतिरित्यपि द्रष्टव्यम् । ननु यथा विभुत्वनित्यत्वादिरूपेण ब्रह्मण उपासार्थं तत्राश्रुता अप्यानन्दविज्ञानत्वादय उपसंह्रियन्ते तथा ब्रह्मप्रतिपत्त्यर्थमप्यश्रुता अपि सत्यत्वादिधर्मा उपसंहरिष्यन्त इति नानृतव्यावृत्त्यादेरप्रतीतौ ब्रह्मप्रतीतिः । न चोपासनार्थं शाखान्तरोक्तगुणानामुपसंहारे सर्वज्ञत्वादिरूपेण ब्रह्मोपासनार्थं तत्रानुक्तानां संयद्वामत्ववामनीत्वभामनीत्वादीनामप्युपसंहारः स्यादिति वाच्यम् । वास्तवविधेयत्वाभ्यामुपसंहारानुपसंहारयोरुपपत्तेः । वस्तु धर्मो हि यावद्वस्तु व्यवतिष्ठते । नासावेकत्रोक्तोन्यत्रानुक्तो नास्तीति शक्यं वक्तुम् ।

विधेयं पुरुषप्रयत्नतन्त्रम् । पुरुषप्रयत्नश्च यत्र यत्र यावद्गुणविशिष्टे ब्रह्मणि स तावत्येवावतिष्ठते । नाविहितमपि गुणं गोचरीकर्तुमर्हति । तस्मादानन्दविज्ञानादयो ब्रह्मतत्वात्मतयोक्ता यत्र यत्र ब्रह्म श्रूयते तत्र तत्रानुक्ता अपि लभ्यन्ते । संयद्वामत्वादयश्चोपासनाप्रयत्नविधिविषयाः यत्र विधिस्तत्रैवावतिष्ठन्तेऽत आह । आनन्दादय इति । उपासनार्थं प्रधानस्य ब्रह्मण आनन्दादयो गुणा उपसंहर्तव्या इति तदीयः सूत्रार्थः । उपासनायामिति । अभिन्नोपासनायाम् । या ह्युपासनानेकशाखोक्ताप्यभिन्नत्वेन प्रत्यभिज्ञानसिद्धा तस्यामुपासनायामेकत्रानुक्ता अपि गुणा अन्यशाखोक्ततदुपासनागुणा उपसंह्रियन्ते । यथा छान्दोग्योक्तायां पञ्चाग्न्युपासनायामनुक्तस्य षष्ठस्याग्नेर्वाजसनेयोक्तपञ्चाग्निविद्यान्तर्गतस्य षष्ठस्याग्नेरुपसंहारः । ब्रह्मप्रमिताविति । सगुणे ब्रह्मण्युपासनार्थं शाखान्तरीयगुणोपसंहारेपि निर्गुणब्रह्मप्रमितौ न तदुपसंहारो युज्यत इत्यर्थः । ननु शाखान्तरोक्तगुणोपसंहारे विनोपासनया असिद्धिवत्पदान्तरं विना ब्रह्मप्रमित्यसिद्धेस्तत्सिद्धये पदान्तरोपसंहारोत्राप्यपेक्ष्यत इत्यत आह । सत्यादीति । गुणोपसंहारस्य तद्गुणकोपासनार्थत्ववत्पदान्तरस्य तत्तत्प्रकारकप्रमित्यर्थत्वानङ्गीकाराद्विशेष्यमात्रसिद्धेश्च लक्षणयैकपदेनापि संभवान्न पदान्तरोपसंहारापेक्षेत्यर्थः । ननु भृङ्गग्राहिकया ब्रह्मणोनुद्देश्यत्वाल्लक्षणमुखेन तदुपदेष्टव्यम् । सत्यादिकं च न प्रत्येकं लक्षणम् । घटादावतिव्याप्तेः । अतः समुच्चितमेव लक्षणम् । अतः समुच्चिता एव व्यावृत्तयो द्वारमित्यत आह । सत्यत्वादेरिति । न ह्यत्र घटाद्यनुगतसत्त्वं सत्यशब्दार्थः । किंत्वबाध्यत्वमिकत्युक्तम् । तच्च नातिव्याप्तं सत्यत्वं ब्रह्मलक्षणतया सत्यपदेनोक्तमतोजगन्मिथ्येति त्वयोक्तत्वाच्चेत्यर्थः ।

(तरङ्गिणी)

एवं ज्ञानादिपदेपि बोध्यम् । ननु कुमतप्राप्तातिव्याप्तिनिवृत्त्यर्थं समुच्चयापेक्षा । न ह्यनृतव्यावृत्तिं विना विज्ञानमानन्दं ब्रह्मेत्यत्र शून्यवादव्यावृत्तब्रह्मसिद्धिः । एवं पदान्तरेपि । मैवम् । व्यावर्तकार्पणं विना व्यावृत्तब्रह्मासिद्धेरुक्तत्वात् । एतेनेति । प्रत्येकं वा समुच्चितानां वा व्यावृत्तीनामद्वारत्वेन । ब्रह्मेति द्वितीयान्तम् । तदुपदेश इति । ब्रह्मासंबन्धिन्याः व्यावृत्तेः । शाब्दार्थस्येति । सत्यादिपदेन लक्षणया बोधितस्य ब्रह्मस्वरूपमात्रस्य । मानान्तरादिति । अपोहस्तु मानान्तरात्प्रतीयते । अतः स न शाब्द इत्यर्थः । आर्थिकेनेति । शाब्दज्ञानस्य विशेषणाविषयकत्वेपि मानान्तरविरोधितद्विशेषणस्य वस्तुसद्विशेषणवतः स्वरूपस्य शब्देन बोधनात् शाब्दज्ञानविषयस्याखण्डत्वहानिः । अनन्तेति । अनन्तशब्दजन्यज्ञानस्यान्तवद्व्यावृत्तिप्रकारतया तद्व्यावृत्तेः । शाब्दत्वं विधिपदानां स्वार्थार्पणप्रणाड्येतरनिवृत्तिबोधकत्वम् । निषेधपदानां तु साक्षादिति त्वदङ्गीकारात् । उक्तं च तैत्तरीयवार्तिके । तत्रानन्तोन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् । स्वार्थार्पणप्रणाड्या तु परिशिष्टौ विशेषणमिति । शब्दस्येति । अन्यथा शब्दं विनापि व्यावृत्तिः सिध्येत् । एतेनेति । तात्पर्यतो व्यावर्तकवैशिष्ट्यार्पणं विना व्यावृत्तिसिध्यभावेन । पदार्थे तात्पर्यस्य वान्वयस्य वानुपपत्तेः पदलक्षणाबीजस्य सत्यादिपदेऽभावान्न तत्र लक्षणेत्युक्तम् । केचित्तु वाक्यार्थे तद्द्वयानुपपत्त्या वाक्ये लक्षणामाहुस्तत्पक्षमपि दूषयितुमाह । नवीनास्त्विति ।

ननु गच्छ गच्छसि चेत्कान्त पंथानः सन्तु ते शिवाः ।<br>
भूयान्ममापि तत्रैव जन्म यत्र गतो भवान्

इत्यादौ जन्मना मृत्यनुमानेपि गमनस्य मृतिहेतुत्वमशक्यावगमम् । शतवर्षानन्तरं जरादिनापि तदुपपत्तेः । मृतिहेतुत्वेनावगतस्यापि गमनस्य नाकर्तव्यत्वेन व्याप्तिः । गुरुनिर्देशादिना प्रियामृतिहेतोरपि कर्तव्यत्वदर्शनेन व्यभिचारात् । किन्तु जन्मनिर्देशस्य प्रकृतेऽनुपयोगात्तेन प्रकृतोपयोगिन्यगमने तात्पर्यं ज्ञाप्यते समुदायस्य । तथा च समुदाय एव लक्षणा । न प्रत्येकपदे । प्रत्येकं तात्पर्यज्ञापकाभावादतस्तत्र लक्षणायामेकपदवृत्तित्वं बाधितम् । वृत्तित्वस्य हेतोर्व्यभिचारश्चेत्यत आह । गच्छगच्छसीति ।

विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुत इति ।<br>
असन्नेव स भवति असद् ब्रह्मेति वेद् चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः ।

इतीत्यादौ वेदे विज्ञानात्मकब्रह्मवेदनाविस्मरणयोः पापराहित्यकामभोगौ प्रतिब्रह्मसत्त्वासत्त्ववेदनयोः शुभाशुभफले प्रति लोके च वृष्टिश्चेद्भवति सुभिक्षं भवेदित्यादौ वृष्टेः सुभिक्षं प्रति

(तरङ्गिणी)

हेतुत्वस्य चेच्छब्देन बोधनवदिहापि गमनस्य जन्म प्रतिहेतुत्वबोधनं युज्यते । देहान्तरसंयोगश्च जन्म । स चैकस्मिन्देहसंबंधे सति न युज्यत इति पूर्वदेहसंबंधाभावद्वारेति गम्यते । न चोक्तव्यभिचारः । प्रकृतगमनं न कर्तव्यं नाश्यमानेष्टाधिकेष्टाहेतुत्वे सतीष्टनाशहेतुत्वात् । सन्तवत् । गुरुनिर्देशादौ तु नाश्यमानेष्टाद्धार्यादेः सकाशादधिकस्य गुरुनिर्देशकरणजन्येष्टस्य सत्त्वेन तत्र हेतुत्वावगमात् । अतो नोक्तबाधादिरिति भावः । जन्मनेति । गमनजन्यतयावधृतेनेति शेषः । पक्षे इष्टनाशहेतुत्वमुपपादयति । प्रियेति । ननु विषं भुंक्ष्वेत्यत्र विषभोजनेष्टसाधनत्वेन शत्रुगृहान्नभोजनस्यानिष्टसाधनत्वं नाक्षेप्तुं शक्यते । शत्रुगृहान्न-भोजनानिष्टसाधनत्वं विना विषभोजनेष्टसाधनताया अनुपपत्त्यभावात् । उभयोर-पीष्टसाधनतयोपपत्तेः । तस्मादप्रसक्तोपपादनेन प्रसक्तवारणे तात्पर्यं ज्ञात्वा श्रुतपदसमुदाये लक्षणा कल्प्यते न तु प्रत्येकपदे । तत्र विशिष्यतात्पर्यज्ञापकाभावादतस्तत्र लक्षणा-यामेकपदवृत्तित्वं बाधितमित्यत आह । विषं भुंक्ष्वेति । शत्रुगृहभोजनापेक्षया विषभक्षण-स्येष्टसाधनत्वोत्कर्षो गम्यते । यथा देवदत्ताद्यज्ञदत्तो विद्वानित्यत्र देवदत्तविद्वत्त्वापेक्षया यज्ञदत्तविद्वत्त्वस्य । अतः शत्रुगृहभोजनस्य बलवत्तरानिष्टसाधनताक्षिप्यते । अयमाशयः । शत्रु-गृहान्नभोजने प्रसक्तः कश्चिद्विषं भुंक्ष्वेत्याप्तेनोच्यमानो वितर्कयति । विषभोजन-निष्ठमिष्टसाधनत्वं शत्रुगृहान्नभोजननिष्ठेष्टसाधनत्वादुत्कृष्टं तदवधिमत्त्वेनाप्तेनोच्यमानत्वात् । यद्यदवधिमत्त्वेनाप्तेनोच्यते तत्तत उत्कृष्टम् । यथान्येषां बलाद्धनुमद्बलम् । भोजननिष्ठतया शत्रुगृहान्नभोजननिष्ठस्य विषभोजननिष्ठस्य च तृप्तिरूपेष्टसाधनत्वस्य समानत्वेन शत्रुगृहान्न-भोजननिष्ठेष्टसाधनत्वस्य बलवत्तरानिष्टानुबन्धित्वरूपापकर्षमन्तरेण विषभोजननिष्ठेष्टसाधनत्वस्य तदवधिकोत्कर्षानुपपत्तेः शत्रुगृहान्नभोजननिष्ठेष्टसाधनत्वस्य बलवत्तरानिष्टानुबन्धित्वमनुसन्धत्ते । ततः शत्रुगृहान्नभोजनस्यानिष्टसाधनत्वमाक्षिपतीति । पूर्वोक्तं बाधं परिहरति । नन्विति । यद्वेति । अनिष्टसाधनं भोजनं माकार्षीरिति वाक्यार्थः । आप्तत्वे सतीति । भ्रमादिशून्यत्वे सतीत्यर्थः । एतेन आप्तस्यापि पित्रादेर्भ्रमादिना कोपमन्तरेणापि प्रमाणविरुद्धोपदेष्टृत्वदर्शनेन व्यभिचार इति परास्तम् । अत इति । आप्तस्य कोपहेतुत्वादित्यर्थः । मयेति । विवेकवता । एतच्च साध्यविशेषणम् । तेनाप्तकोपहेतोरप्यविवेकिकर्तव्यत्वदर्शनाद्व्यभिचार इति परास्तम् । इदमिति पक्षनिर्देशः । अर्धमन्तर्वेदीति ।

तृतीयस्य सप्तमे स्थितम् । तथा यूपस्य वेदिः । अग्नीषोमीयपशौ यूपं प्रकृत्य श्रूयते अर्धमन्तर्वेदिमिनोत्यर्धं बहिर्वेदीति । तत्र किमन्तर्वेद्येकदेशो यूपाङ्गत्वेन विधीयते किं वा

(तरङ्गिणी)

बहिर्वेदिदेशमिश्रः सन्धिदेशो लक्ष्यत इति सन्देहः । ननु इयति शक्ष्यामह इति वचनाद्वेदेः सर्वार्थत्वम् । न यूपमात्रार्थत्वम् । न । तस्य सामान्यशास्त्रस्य यूपविषयतयैवोपसंहर्तव्यत्वात् । इयति एतावति प्रदेशे कर्तुं शक्ता भवाम इत्यर्थः । पूर्वपक्षस्तु । सत्यपि यूपप्रकरणे तद्बाधित्वा वाक्येन यूपाङ्गत्वं भविष्यति वेदेरन्तः प्रदेशस्य देशविशेषार्थत्वे हि लक्षणा स्यात् । अर्धेन्तः प्रक्षिप्यमाणेर्धान्तरं बहिर्भवतीति तदनूद्यते अर्धं बहिर्वेदीत्यनेन । न तु तदपि विधीयते । अतो न वाक्यभेदो न वा मिनोत्याख्यानानुषङ्गक्लेश इति । सिद्धान्तस्तु । अर्धमन्तर्वेदिमिनोतीत्येतावन्मात्र विधाने अर्धान्तरं बहिरित्यपि विधौ वाक्य भेदापत्तिः । अर्धान्तरस्य बहिष्ट्वनिषेधाभावे च तस्यान्तर्बहिर्वा मानं स्यात् । तथा च पाक्षिकस्य बहिष्ट्वस्य नित्यवदनुवादो न युज्येत । तस्मादुभाभ्यामप्यन्तर्वेदिशब्दाभ्यां मध्यदेशो लक्ष्यत इति । अत्र ब्रूमः । विनैव लक्षणां सन्धिदेशविशेषसिद्धिः । अर्धमेवान्तर्वेदीति नियमाश्रवणात् । ननु समस्तस्य यूपस्यान्तर्वेदिप्रसङ्गे हि सत्यर्धपुनर्वचनसामर्थ्यात्परिसङ्ख्ययेतरस्य बहिर्मानं गम्येत । न त्वेतदस्ति । अर्धशब्दानन्तरभाविनैतद्वाक्यात् प्रकरणयुक्तादस्ति कथं तर्हि समस्तस्यान्तर्वेदिन मानम् । अर्धशब्दश्रवणात् । यदि समस्तस्य यूपस्यान्तर्वेदिमानमभिमतं स्यात्ततोर्धमन्तर्वेदीत्येवं विधिनैव कुर्यात् । अन्तर्वेदिमिनोतीत्येतावतैव प्रकरणाद्विपरिवर्तमानस्य यूपस्यांतर्वेदिमानसिद्धेः । प्रकरणाद्यूपविपरिवृत्तिश्चावश्यं वाच्या । अन्यथा कस्यार्धो गृह्येतेति । एतेन विवरणोक्ताजिज्ञासाशब्दे विचारलक्षणासंक्षेपशारीरकोक्ता च यज्ञायुधिशब्दे यजमानलक्षणा च निरस्ता । ननु वायुर्वै क्षेपिष्ठा देवतेत्याद्यर्थवादे प्राशस्त्यप्रतिपत्तये वाक्य एव लक्षणाङ्गीकार्या । प्रत्येकपदात्तदनुपस्थितेरित्याशंकयाह । वायुर्वा इति । ननु पदार्थसंसर्गबोधे वायुः शीघ्रतम इत्येव धीःस्यान्न तु कर्मप्राशस्त्यविषया सेत्यत आह । नन्विति । पदार्थसंसर्गातिरिक्तप्राशस्त्यस्याभावादित्यर्थः । अयमाशयः । वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेनभागधेयेनोपधावति स एवैनं भूतिं गमयति । वायुः शीघ्रतमा देवता तं वायुं प्रति यजमानः स्वेन स्वदत्तेन हविर्लक्षणेन भागेन गच्छति । स्वयमेव यजमानो हविर्भागरूपेण देवतां प्रतिगच्छति । स च वायुः एनं यजमानं भूतिं गमयति । यथा कश्चिद्गृहस्थोभ्यागताय सत्कारं करोति तद्वत् । अत्र वायूद्देशकत्यक्तहविर्लक्षणयागस्य क्षिप्रफलप्रदवायुप्रसादहेतुत्वमेव प्राशस्त्यं न त्वन्यत् । ननु यत्रार्थवादे देवताप्रसादहेतुत्वं कर्मणो नोच्यते तत्र तदतिरिक्तप्राशस्त्यलक्षकत्वमर्थवादस्याङ्गीकार्यमित्यत आह । तत्रेति । अभिधेयानां पदार्थानां योन्वयस्तदनुपपत्तिरिह नास्ति । सर्वपदानामिति । ननु लक्षणपदत्वाद्विशेषणपदेष्वेव

(तरङ्गिणी)

लक्षणा न तु लक्ष्यपरे विशेष्यपदे । तथा च तदभिधेयान्वयानुपपत्तिरस्त्येवात्र लक्षणाबीजं विशेष्यपदमेवानुभावकं च स्यादित्यत आह । यदि चेति । सत्यादिपदेषु मुख्यार्थ-तयावधृतब्रह्मशब्दार्थान्वयानुपपत्तिर्नास्ति चेन्न तर्हि तेषु लक्षणा । तद्बीजाभावात् । यदि सास्ति तर्हि ब्रह्मपदं सत्यादिपदार्थान्वितस्वार्थबोधकमवश्यं स्यात् । अन्वयाबोधे प्रसक्तेन्वयबोधार्थं सत्यादिपदेषु लक्षणायाः कल्पितत्वादित्याह । ब्रह्मपदस्येति । लक्षणेति । सत्यादिपदेषु लक्षणाश्रयणेनेत्यर्थः । पदान्तरेति । पदान्तराणां सत्यादिपदानां लक्ष्याः येर्थास्तदन्वितस्वार्थपरं ब्रह्मपदं स्यादित्यर्थः । नन्वभिधेयान्वयानुपपत्तिर्न लक्षणाबीजम् । जातिः शक्या व्यक्तिर्लक्ष्येति भवन्मते गङ्गापदादौ लक्षणाभावप्रसङ्गात् । किन्तु तात्पर्यानुपपत्तिरेव । तच्च तात्पर्यमभिधेयान्वयविषयं वाऽन्वयसामान्यविषयं वा स्वरूपमात्रविषयं वा । प्रकृते तु स्वरूपमात्रतात्पर्यानुपपत्तिरेव तद्बीजमित्यत आह । न च यष्टीरिति । तत्रापीति । न चैवमपि प्रवेशनविशेषे तात्पर्यग्रह एवोपजीव्य इति तदनुपपत्तिरेव लक्षणाबीजमस्त्विति वाच्यम् । भोक्तृ-कर्तृकप्रवेशनप्रतीतीच्छयोच्चरितत्वरूपतात्पर्यानुपपत्त्यपेक्षया तादृशप्रवेशनान्वयानुपपत्तेरेव लघुत्वेन तद्बीजत्वौचित्यात् । स्वरूपमात्रतात्पर्यानुपपत्तिर्नलक्षणाबीजम् । कुत्राप्यदर्शनादित्याह । इहेति । एतेनेति । पदार्थमात्रे तात्पर्यायोगवद्वाक्यप्रामाण्यस्याप्ययोगेन । वाक्येति । केवलो निर्गुणश्चेति श्रुत्या केवलतयासिद्धं ब्रह्मविशिष्टतया बोधयतो वाक्यस्याप्रामाण्यम् । निरस्तमिति । प्रामाण्य-स्यानुपपत्त्याहि तदुपपादकं कल्पनीयम् । न च पदार्थमात्रलक्षणया वाक्यप्रामाण्यमुपपद्यते । तथा पदार्थमात्रस्य सिद्धस्यैवोपस्थितेः । बाधितेपि पदार्थमात्रस्य सत्वाच्चेत्यर्थः । यदीति । सर्वेषां सत्यादिपदानां लक्षकत्वे तन्मध्यगतस्यानन्तादिशब्दस्यापि लक्षणया स्वरूपमात्रपरत्वेन सर्वतोनवच्छिन्नवस्तु परत्वाभावात् परोदीरितसत्यादिपदविशिष्टार्थत्वं प्रत्यनन्तादि शब्दस्य बाधकत्वायोगेन तद्बाधकत्वोक्तिरयुक्ता स्यादित्यर्थः । सत्यादिपदैरिति । व्यावर्तकस्य सत्यत्वादे र्ब्रह्मण्यबोधने तस्मिन्ननृतव्यावृत्त्यसिद्धिः । विज्ञानेति । विज्ञानादिपदानां विज्ञानत्वाद्य-बोधकत्वात् । एकमिति । एकादिपदानां विशेष्यमात्रपरत्वेन नानात्वानिषेधकत्वात् । सत्यादीति । बुभुत्साप्रयोजकज्ञानानधिकविषयत्वात् । सगुणादीति । एकार्थत्वेनाविरोधात् । तदैक्षतेति । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत तत्तेजोसृजतेत्यत्र सच्छब्दं प्रधानं वा ब्रह्मवेति विशये सच्छब्दनिर्दिष्टे ईक्षणश्रवणात्तस्य च जडे सम्भवाद् ब्रह्मैव सच्छब्द-मितीक्षत्यधिकरणे विचारितम् । तथा आकाशादेव समुत्पद्यन्ते स एषोनन्त इत्यत्राकाशशब्दं भूतं वा परमात्मावेति संशयेऽनन्तत्वलिङ्गेन परमात्मैवेत्याकाशाधिकरणे निर्णीतम् । तदेतत्सर्वं

(तरङ्गिणी)

सर्वपदलक्षणायामयुक्तं स्यादित्यर्थः । सत्येति । सत्यत्वादिमतः सत्यादिपदलक्ष्यत्वायोगात् । लक्ष्यत्व इति । ब्रह्मणः सत्यादिपदाशक्यत्वेऽसत्यत्वादिकं स्यादित्यर्थः । एतेन गौरनित्य इत्यादौ गोपदलक्ष्यस्यापि गोरगोत्वाभावादिदमयुक्तमिति परास्तम् । गौश्चलतीत्यादौ गोपदशक्यत्वेन गोर्गोपदाशक्यत्वाभावात् । मुक्तिश्चेति । ब्रह्मणोऽनानन्दत्वस्याननुभवत्वस्य च प्राप्तौ तार्किकादिमुक्तिवन्मुक्तिरपुरुषार्थः स्यात् । नदीत्ववाचिनेति । नदीत्वविशिष्टनदीवाचिनेत्यर्थः । तदाश्रयेति । नदीत्वाश्रयव्यक्तेः शक्यत्वान्न तत्र लक्षणेत्यर्थः । उक्तं हीति । कल्पतरुकृतेति शेषः । तार्किकादिरीत्या जातिशब्दस्यापि नदीशब्दस्य नदीत्वविशिष्टनदीवाचकस्य तदितरव्यक्तिलक्षकत्ववत् सत्त्वविशिष्टसद्व्यक्तिवाचकत्वं तदितरव्यक्तिलक्षकत्वं सत्यशब्दस्य सत्तादिजातिवाचिभिरित्यनेनाभिमतं किं वा भट्टादिरीत्या सत्ताजातिमात्रवाचकत्वं तदितरलक्षकत्वं वा । आद्य आह । व्यक्तिरिति । ब्रह्मणः सद्व्यक्तित्वेसच्चब्दलक्षणीयत्वं नस्यादित्यर्थः । जहल्लक्षणेति । गङ्गात्वविशिष्टगङ्गां स्वार्थं जहतः पदस्य स्वार्थभिन्ने लक्षणा । जहदजहदिति । स्वार्थैकदेशं जहतः तदेकदेशं चाजहतः पदस्य स्वार्थैकदेश एव लक्षणेत्यर्थः । पदशक्यैकदेशस्य पदलक्ष्येऽर्थे वस्तुतः सत्वेपि लाक्षणिकबोधने शक्यैकदेशाविषयीकरणात्तदनन्वयमात्रेण गौरनित्य इत्यादिवदेकदेशत्यागमाश्रित्य लक्षणोच्यते अथावा लक्ष्येऽर्थे वाक्यैकदेशस्य वस्तुतोसत्त्वेन । द्वितीये दोषमाह । तत्रेति । लक्ष्येऽर्थे । आद्ये दोषमाह । तत्सत्यत्वस्यचेति । प्रमिततात्पर्यकसत्यादिपदजन्यज्ञानेन स्वविषये ब्रह्मणि सत्त्वाद्यविषयीकरणे तत्रसत्त्वाद्यसिद्धिः । ब्रह्मणि सत्त्वादिग्राहकस्य मानान्तरस्याभावात् । लक्ष्यार्थस्य विशिष्टत्वापत्तिश्चेत्यपि द्रष्टव्यम् । भट्टादिरीत्या सत्तादिजातिमात्रवाचित्वं सत्यादिशब्दानामिति द्वितीयं पक्षं दूषयति । जातिरिति । शब्देनेति । शक्तेतिशेषः । लक्षणाहेतुत्वेनेति । मुख्यार्थीभूतसत्त्वमात्रप्रतीतेरित्यर्थः । विभागार्थमिति । सखण्डाखण्डार्थत्वविभागार्थम् । विशेषेणेति । भाट्टै र्व्यक्तिमात्रलक्षकत्वेनाङ्गीकृतस्यापि नद्यां मीनः सन्घट इत्यादेर्मुख्यार्थत्वस्वीकारात्तदपेक्षया लाक्षणिकत्वेन स्वीकृतानां नद्यां घोषः सत्यं ब्रह्मेत्यादीनां वैलक्षण्याय व्यक्तिलक्षकं मुख्यार्थं व्यक्तिसंबन्धिलक्षकं लाक्षणिकामिति विशेषोवक्तव्य इत्यर्थः । एतेनेति । सखण्डाखण्डार्थत्वविभागार्थं सद्व्यक्तिसंबन्धित्वेन ब्रह्मणोलक्षणीयत्वेन तस्य सत्त्वासिद्धेरित्यर्थः । शोणिमेति । तदुक्तं वार्तिके कर्त्रधिकरणे । शोणशब्दोन्येनानुपात्तेप्यश्वे तद्गतं गुणं वदन्नात्मनैवाश्वमपि गमयतीति । एतच्च वार्तिकं मतान्तरेणोक्तम् । वस्तुतस्तु विनैव लक्षणां शोणशब्दाद्रक्तरूपविशेषोपस्थितौ ततोश्वस्यानुमानमेव । कथं व्यभिचारिणा रक्तरूपे-

(तरङ्गिणी)

णाश्वानुमानम् । मैवम् । अश्वत्वाव्यभिचारिरक्तविशेषोपस्थापकत्वाच्छोणशब्दस्य । तदुक्तं वार्तिके तत्रैव । शोणशब्दोहि यथैव सत्तागुणत्वयोरवाचकस्तथा रक्तत्वमप्यतिक्रम्य शोणत्वं नाम रक्तावान्तरजातिं वदति । साचाश्वेष्वेववर्तते न गवादिष्वित्यश्वत्वं प्रतीयत इति । एवं कुमारकरभकलभकिशोरवत्सवर्करादयोविशिष्टजाति संबन्धवयोविशेषवचनत्वेन मनुष्योष्ट्रहस्त्यश्वादीनां ग्रहहेतवोनुमानद्वारैव । लक्ष्यस्य ब्रह्मणो विशिष्टत्वपरिहाराय तस्य सद्व्यक्तिसंबन्धित्वेन लक्ष्यत्वे तु ब्रह्मणः सत्त्वासिद्धिप्रसङ्ग इति भावः । सखण्डाखण्डत्वविभागमाशङ्क्य निराकरोति । न च सन्घट इति । सन्घटः सत्यं ब्रह्मेत्यादीनां लक्षकत्वे समानेपि विशिष्टाविशिष्टलक्षकत्वेन सखण्डाखण्डत्वविभाग इत्यर्थः । एतच्चोपलक्षणं नदीत्वविशिष्टाविशिष्टलक्षकत्वेन नद्यांमीन इत्यादेर्मुख्यार्थत्वम् । नद्यां घोष इत्यादेरमुख्यार्थत्वं चेत्यपि द्रष्टव्यम् । लक्षणाया इति । औपनिषदे ब्रह्मणि मानान्तरेण सत्त्वासिद्धेः सत्यपदस्य च लाक्षणिकत्वेन तत्र सत्त्वाप्रतिपादकत्वात् लक्षणायास्त्वतात्त्विकसत्त्वसंबन्धेनाप्युपपत्तेर्ब्रह्मणि सत्त्वासिद्धिरित्यर्थः । वाच्य इति । सत्ताजातेः सत्यशब्दार्थत्वादिति भावः । सखण्डार्थत्वमिति । सन्घट इत्यादि व्यक्तिलक्षकपदान्तरसाधारण्यं चेत्यपि द्रष्टव्यम् । वाच्यातिरिक्तेति । जातिशब्दार्थ इति मतस्य प्रस्तुतत्वादित्यर्थः । ब्रह्मणइति । सन्घट इत्यादि घटाद्याश्रितत्वेन सत्तायाः प्रतीयमानत्वात् । न हि सन्घट इत्यत्र सत्तायां घटः प्रतीयते । किंत्वनित्यो घटो ध्वस्तो घट इत्यादिषु घटेऽनित्यत्वादिकमिव घटाश्रितैव सत्ता प्रतीयत इति सत्तायाः पारतन्त्र्यमित्यर्थः । ब्रह्मणः सत्तारूपत्वे घटादिसत्ताया अबाध्यत्वापत्तिरित्यपि बोध्यम् । एतेनेति । वाच्यातिरिक्तलक्ष्याभावापातेन । सत्तावदिति । सत्ताजाति तुल्यं ब्रह्म न तु सत्ताजातिरेव अतो न पारतन्त्र्यादिदोष इति भावः । निरस्तमिति । सत्स्वभावत्वात्सत्तान्तररहितसत्तेव ब्रह्मापि सत्यपदवाच्यमेव स्यान्नतु तल्लक्ष्यमिति वाच्यातिरिक्तलक्ष्याभावदोषेणेत्यर्थः । ननु सत्ताजातिरेव सत्यशब्दवाच्या ब्रह्मतु सत्ताभिन्नं अत एव सत्यपदलक्ष्यमिति वाच्यातिरिक्तलक्ष्यलाभः । सत्स्वभावत्वाद् ब्रह्मणः सत्त्वसिद्धिश्चेत्याशङ्क्याह । सच्छब्दस्येति । तथा च न ब्रह्मणः सत्त्वसिद्धिरिति भावः । कथं चेति । तथा च परमार्थसदेव सत्यशब्दार्थस्तद् ब्रह्मैवेति वाच्यातिरिक्तलक्ष्यालाभ इति भावः । एतेनेति । स्वाभिमतेति । सत्यादिपदैर्ब्रह्मणि तात्पर्यतः सत्यत्वाद्यर्पणमनिच्छतः शून्याविलक्षणब्रह्मसिद्धिरेवाभिमतेत्यर्थः । तस्मादिति । शून्यवादापत्तेरित्यर्थः । सत्यज्ञानादिवाक्यानामखण्डार्थत्वानुमान भङ्गः ।

## न्यायामृतकण्टकोद्धारः

लक्षणं दूषयित्वा अनुमानं दूषयति । आद्येति । ननु निर्विकल्पकरूपप्रत्यक्ष एव साध्यप्रसिद्धिरित्यत आह। प्रत्यक्षादीनामिति । प्रमाणाभावेन निर्विकल्पकाभावात् । न च विशिष्ट ज्ञानमेव निर्विकल्पके प्रमाणमिति वाच्यम् । तस्योभयसन्निकर्षादिनैवोपपत्तेरप्रयोजकत्वात् विस्तृतं चैतदन्यत्र । ननु प्रमात्वं संसर्गागोचरवृत्ति सकलप्रमावृत्तित्वादभिधेयत्ववदिति सामान्यतस्तत्प्रसिद्धेरिति चेन्न । अप्रयोजकत्वात् । प्रमात्वं न संसर्गागोचरवृत्ति । ज्ञानत्वव्याप्यधर्मत्वात् अनुमितित्ववदिति सत्प्रतिपक्षत्वाच्च । पक्षसमत्वान्नानुभवत्वादौ व्यभिचारः । न च सन्देहरूपैव साध्यप्रसिद्धिरस्त्विति वाच्यम् । साध्यप्रसिद्धौ तत्सन्देहानुपपत्तेः । न च प्रकृष्टादिवाक्य एव तत्प्रसिद्धिर्दर्शितेति वाच्यम् । तस्या आकर एव निराकरिष्यमाणत्वात् । परापरजातित्वे व्याप्यव्यापकजातित्वे । तथा चातिव्याप्त्यादि धर्मप्रतिपादकस्य लक्षणवाक्यत्वमसिद्धमिति भावः । न च परमार्थसत्यादिरूपत्वमेव स्वरूपलक्षणं न च तदुक्तदोषवदिति वाच्यम् । स्वरूपत्वे लक्षणत्वायोगात् । प्रसिद्धत्वाप्रसिद्धत्वे हि लक्षणत्वलक्ष्यत्वयोः प्रयोजके, न चैत एकस्मिन्निर्विशेषे संभवतः । किञ्च किं सत्यादिकं प्रत्येकं वा लक्षणं मिलितं वा ? नाद्यः । सत्यत्वज्ञानत्वादि परत्वे सखण्डार्थत्वापातात् । स्वरूपमात्रपरत्वेऽपरवैयर्थ्यात् । प्रयोजनत्वेन सार्थक्यं त्वग्रे निरसिष्यते । न द्वितीयो व्यर्थत्वाद्व्यावर्त्याभावात् । न चैकैकस्य परेण ब्रह्मणोऽन्यत्र स्वीकारात् विशिष्टस्य लक्षणत्वमिति वाच्यम् । विशिष्टपरत्वे सखण्डार्थत्वापातात् । परेण विशिष्टस्यान्यत्राङ्गीकाराच्च । तस्माल्लक्षणवाक्यत्वमसिद्धमिति भावः । असाधारणेति । तद्वृत्तित्वे सति तदितरावृत्तित्वप्रतिपादने धर्मधर्मिभावरूपसंसर्गप्रतिपादनमावश्यकम् । तथा च साध्याभाव व्याप्तत्वाद्विरुद्धत्वमिति भावः । ननु लक्षणवाक्यानां स्वरूपमात्रपर्यवसायित्वात् नियमासिद्धिरित्याशङ्क्य निषेधति । न च स्वरूपेति । तस्येति । लक्ष्यलक्षणभावे प्रयोजकयोर्ज्ञातत्वाज्ञातत्व योरेकस्मिन्नसंभवादिति भावः । न चावृतत्वानावृतत्व-वदन्तःकरणवृत्तिभेदेन ज्ञातत्वाज्ञातत्वेप्येकस्मिन् संभवत इति वाच्यम् । निर्विशेषेऽन्तः करणवृत्तिभेदस्यैवायोगात् दृष्टान्तासम्प्रतिपत्तेश्च । ननु लक्षणस्य लक्ष्याद्भिन्नत्वे स्वरूपलक्षणत्वादि-व्यवस्थायोग इत्यत आह । अतिरेकेपीति । यावल्लक्ष्यभावित्वादिनेत्यादि पदेनायावल्लक्ष्यभावित्वपरिग्रहः । तेन तटस्थलक्षणत्वोपपत्तेरिति द्रष्टव्यम् । न चैवं स्थायित्वास्थायित्वव्यवस्था स्यात् न स्वरूपलक्षणत्वादि व्यवस्थेति वाच्यम् । स्वरूपमेव लक्षणं स्वरूपलक्षणमित्यर्थस्य बाधितत्वेन स्वरूपवत् स्थायिलक्षणं स्वरूपलक्षणमितिकरणेन तद्व्यवस्थोपपत्तेः । किं विशिष्टज्ञाने द्वारत्वम् ? उत स्वरूपमात्रज्ञाने ? नाद्यः । खण्डार्थत्वापातात् । न द्वितीय इत्याह । वक्ष्यमाणेति । अन्यथा संशयाद्ययोगादिति भावः । न च स्वरूपमात्रज्ञानस्य लक्षणात् पूर्वं वृत्तत्वेऽपि संशयादिनिवर्तकस्वरूपज्ञानस्य पूर्वमजातत्वात् तत्र द्वारत्वं लक्षणज्ञानस्य भविष्यतीति वाच्यम् । पूर्वानधिकविषयस्य स्वरूपज्ञानस्य संशयाद्यनिवर्तकत्वेन तत्र द्वारत्वानुपपत्तेः । न च कारणविशेषजन्यत्वेन संशयनिवर्तकत्वमिति वाच्यम् । संशयप्रकार विरुद्ध प्रकार विषयत्वे संशयनिवर्तकत्वानुपपत्तेः । अन्यथा ऊर्ध्वत्वादिज्ञानस्य कारणविशेषजन्यस्य संशयनिवर्त-

(कण्टकोद्धारः)

कत्वापातात् । न चेति । तथा च लक्षणे तात्पर्याभावात् स्वरूपमात्र एव तात्पर्यात् नाखण्डार्थत्वविरोध इति भावः । अलक्षणवाक्यस्येति । उपलक्षणमेतत् । लक्षणे तात्पर्याभावे तत्प्रतिपादनं व्यर्थं चेत्यपि द्रष्टव्यम् । तस्माद्विरुद्धत्वं दुष्परिहरम् ।

व्यभिचारमप्याह । सखण्डेति । न च तत्रापि साध्यसत्वं व्युत्पाद्यत इति न व्यभिचार इति वाच्यम् । अनेकधर्मिप्रतिपादक स्याखण्डार्थत्वव्युत्पादनस्याशक्यत्वात् । न चैकधर्मावच्छेदेनानेकार्थ-परत्वमखण्डार्थत्वविरोधीति वाच्यम् । तथात्वे धर्मधर्मिभावपरत्वादनेकधर्मिपरत्वाच्च सखण्डार्थत्वापत्तेः । ब्रह्मणि एकधर्मि भावाच्च । अन्यथाऽखण्डार्थत्वं पारिभाषिकं स्यादिति । ननु धर्मविषयप्रश्नेऽपि स्वरूपमात्रस्य प्रतिवचनात् नासिद्धिरित्यत आह । न च धर्म इति । न च तत्रापि धर्मस्वरूपमात्रपरत्वादखण्डार्थत्वाविरोध इति वाच्यम् । किं चन्द्रलक्षणमिति पृष्टे चन्द्रलक्षणत्वेन प्रतिपादने चन्द्रस्य लक्षणस्य च धर्मधर्मिभावप्रतिपादनस्यावश्यकतया सखण्डार्थत्वावश्यंभावात् । अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यं स्यात् । धर्मिज्ञानाधीनेति । न च वेदान्तजन्यज्ञानस्य निष्प्रकारकत्वेऽपि व्यावृत्ताकारज्ञानत्वेनैव संशयविरोधित्वमोक्षहेतुत्वयोरुपपत्तेर्न सप्रकारकज्ञानहेतुतया विचारविधानमिति वाच्यम् । व्यावृत्ताकारज्ञानत्वस्य व्यावर्तकविशिष्टज्ञानत्व व्यावृत्तिविशिष्टतानत्वातिरिक्तस्य निर्वक्तुमशक्यत्वात् ब्रह्मण्याकाराभावेन ज्ञानस्य तदाकारत्वानुपपत्तेश्च । न च ज्ञानस्याज्ञाननिवर्तकत्वे समानविषयत्वमेव तन्त्रम् । न तु समान प्रकारकत्वमपीति वाच्यम् । तथात्वे धर्मिज्ञानस्यापि संशयनिवर्तकतापत्तेः । न च धर्मिज्ञानस्याविद्याकल्पितप्रकारविषयत्वादविद्यायाश्च शुद्धमात्रविषयत्वात् न समानविषयत्वमिति वाच्यम् । अविद्यायाः शुद्धमात्रविषयत्वाभावस्योक्तत्वात् प्रकारस्याविद्या-कल्पितत्वासिद्धेश्च । समानविशेष्यकत्वेनैव समानविषयत्वोपपत्तेश्च । यथा च सप्रकारकस्यैवाज्ञाननिवर्तकत्वं तथोक्तं प्राक् । न च प्रकारस्याविद्याकल्पितत्वेन न तद्भानमविद्यानिवर्तकमिति वाच्यम् । असिद्धेः । वृत्तिवदुपपत्तेश्च । तस्मात् सप्रकारकस्यैव संशयादिनिवर्तकत्वात् तादृशाज्ञानहेतुतया विचार विधानान्यथानुपत्या सखण्डार्थत्वस्यैव निर्णीतत्वाद्बाधो दुष्परिहरः ।

सत्यादीति । न चाद्यसाध्ये संसर्गे द्वितीयसाध्ये च संसृष्टे व्यभिचारः । तयोरपि प्रमाणवाक्ये तात्पर्यविषयत्वादिति वाच्यम् । प्रथमानुमाने प्रमाणवाक्यतात्पर्यविषय पदार्थत्वादिति हेत्वर्थस्य विवक्षितत्वात् । संयोगस्य पदार्थत्वाभावात् । न चैवं तस्य पक्षत्वात् तत्र हेत्ववृत्तौ भागासिद्धिरिति वाच्यम् । पदार्थत्वस्य पक्षेऽपि प्रवेशात् । द्वितीयानुमाने च संसर्गाविषयप्रमाविषयो नेति साध्यकरणान्न संसृष्टे व्यभिचारः । न च साध्यद्वये सिद्धसाधनम् । अवान्तरतात्पर्यविषयस्य संसृष्टादिरूपत्वाद्भिन्नविषयत्वेन प्रतिपक्षासंभवाच्चेति वाच्यम् । महातात्पर्यविषय इति पक्षकरणात् । सत्प्रतिपक्षत्वे पक्षभेदस्याप्रयोजकत्वात् । विरोधित्वस्यैव तन्त्रत्वाच्च अत एव केवलान्वयिन्यपि प्रतिपक्षाभिधानम् । सत्यादीति । अत्र स्वतात्पर्यविषयज्ञानाबोध्येत्येतत्संसर्गविशेषणम् । बोध्य संसर्गपरत्वेन सिद्धसाधनतानिवारणाय । नन्वेवमपि संसर्ग स्वरूपमात्रपरत्वसिध्या विशिष्टार्थपरत्वसिध्यभावेनार्थान्तरमित्यतः साध्यान्तरमाह । स्वतात्पर्येति । तथा च सत्यादि वाक्यकरणकप्रमितिविषयपदार्थ निरूप्यसंसर्गपरत्वसाधने स्वरूपमात्रपर्यवसानाभावेन

(कण्टकोद्धारः)

विशिष्टार्थ एव पर्यवसानात् नार्थान्तरता । न चाबाध्यपरत्वमात्रेण प्रमितिविषयपरत्वमात्रेण वा हेतोरुपपत्तौ विशिष्टसाध्यस्य तत्रातन्त्रत्वादप्रयोजकत्वमिति वाच्यम् । अग्निना सिञ्चेदित्यस्याबाध्यप्रमिति विषय-पदार्थांशपरत्वमात्रेण प्रमाणवाक्यत्वस्यादृष्टतया विशिष्टस्यैव तत्र प्रयोजकत्वात् । न चालक्षण-वाक्यत्वमुपाधिः । लक्षणवाक्यत्वस्यापि सखण्डार्थत्वेन व्याप्तेः समर्थितत्वात् । उपाधेः प्रकृतसाध्या-व्यापकत्वात् । ननु खं छिद्रं, कोकिलः पिक इत्यादौ व्यभिचारः । तत्र पर्यायत्वेन संसर्गपरत्वा भावादित्यत आह । खं छिद्रमिति । यद्वेति । नचात्रहेतुद्वये त्वन्मते ज्ञानमात्रस्य सप्रकारकत्वात् विशेषणवैयर्थ्यमिति वाच्यम् । निर्विकल्पकाङ्गीकारिणां प्रति व्यभिचारनिवारकत्वेन सार्थकत्वात् । अन्यं प्रति तु विपक्षबाधकसूचकत्वेन सार्थकत्वात् । यथा च निष्प्रकारकज्ञानस्य संशयादिनिवर्तकत्वं तथोक्तम् । न च लक्षणवाक्याजन्यत्वमुपाधिरिति वाच्यम् । लक्षणवाक्यस्यापि सखण्डार्थत्वस्यैव समर्थितत्वेनाप्रयोजकत्वेन साध्याव्यापकत्वात् । न च सर्वत्रानुमानेषु प्रश्नोत्तरयोर्वैयधिकरण्यलक्षणप्रतिकूलस्तर्क इति वाच्यम् । प्रश्नस्यापि विशिष्टविषयत्वस्यैव समर्थयिष्यमाणत्वेन समानाधिकरणत्वात् । मुख्यवृत्येति । मुख्यवृत्तिजन्यस्य वाच्यतावच्छेदकविशिष्टविषयकत्वनियमात् त्वयानङ्गीकाराच्चेति । स्वरूपमात्रस्य पृष्टत्वं वदन् प्रष्टव्यः । स्वरूपं ज्ञातं न वा ? नाद्यः । ज्ञाते प्रश्नायोगात् । निश्चितेऽपि प्रश्ने तदविच्छेद एव स्यात् । न द्वितीय इत्याह ॥ अस्तीति । चन्द्रशब्दस्येति । अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति सूत्रेणार्थवत एव प्रातिपदिक संज्ञाविधानादिति भावः । उक्तमर्थं कारिकारूढं करोति । एवञ्चेति । ननु स्वरूपविषयकश्चेन्न प्रश्नः तर्हि विषयान्तराभावान्निर्विषयक एवासावापद्यत इत्यत आह । तस्मादिति । ननु स्वरूपस्य ज्ञातत्वात् नाज्ञानपक्षोक्तदोषावकाशः । न चैवं प्रश्नानुपपत्तिः । स्वरूपज्ञानस्य वृत्तत्वेऽपि संशयविरोधि-स्वरूपज्ञानोदयार्थं प्रश्नोपपत्तेः । न च समानविषयत्वे कथमेकस्य तद्विरोधित्वमितरस्य तन्नेति वाच्यम् । शंखः श्वेतो न पीत इति परोक्षापरोक्षज्ञानयोः विषयभेदाभावेऽपि भ्रमविरोधित्वाविरोधित्वयोः दृष्टत्वात् । अत एव विरोधिज्ञानानुदयोदयदशामालम्ब्य संकीर्णत्वादि व्यवहारोप्युपपद्यत इति किमनुपपन्नमिति चेन्न । संशयविरोधिज्ञानोदयार्थं प्रश्न इत्यङ्गीकुर्वता प्रश्नस्यासाधारणधर्मविषयत्वं स्वीकर्तव्यम् । स्वरूपमात्रज्ञानस्य संशयविरोधित्वादर्शनात् । अन्यथा पुरुषज्ञानमपि स्वरूपमात्रविषयं विशेषदर्शनजन्यत्वात् संशयनिवर्तकमिति स्यात् । न च विशेषदर्शनजन्यं सप्रकारकमेवेति वाच्यम् । विचारजन्यस्यापि सप्रकारकत्वनियमात् । अत एव सङ्कीर्णत्वादिव्यवहारोऽपि साधारणासाधारणधर्मविषयज्ञानाभ्यामुप-पादनीयः । शङ्खः श्वेत इत्यादौ तु साक्षात्कारिभ्रमे साक्षात्कारिविशेषदर्शनस्यैव दिङ्मोहादौ निवर्तकत्वदर्शनात् परोक्षज्ञानस्य भ्रमानिवर्तकत्वेऽपि प्रत्यक्षस्य युक्तम् । न हि स्वरूपमात्रज्ञानं संशयविरोधि क्वापि दृष्टम् । येनात्र तथा प्रतीमः । दर्शनानुसारिणी हि कल्पना । अन्यथातिप्रसङ्गात् । न च लक्षणवाक्येन व्यावृत्तिविशिष्टज्ञानं कथं जन्यते तद्बोधक शब्दाभावादिति वाच्यम् । न वयं व्यावृत्तिविशिष्टबोधं शाब्द इति ब्रूमः । किन्तु लक्षणवाक्येन व्यावर्तकविशिष्टबोधने तस्य हानादि बुद्धिवत् अनुमानविधया फलत्वम् । अत एव लक्षणाद्यापादनमपि परास्तम् ।

(कण्टकोद्धारः)

एवं प्रश्नस्यासाधारणधर्मविषयत्वमुपपाद्योत्तरवाक्यस्यापि तदुपपादयति । एवमिति । ननु यथा व्रीहीन् प्रोक्षतीत्यत्र व्रीहिस्वरूपे प्रोक्षणविधानव्यर्थत्वापत्या व्रीहिभिर्यजेतेति प्रकृतापूर्वसाधनलक्षणायामपि न यत्र कुत्रचित् प्रोक्षणापत्तिः । यथा वा गङ्गापदेन गङ्गासम्बन्ध्येव तीरं लक्ष्यते तथा चन्द्रत्वाश्रयीभूतैव व्यक्तिर्लक्ष्यत इति न यस्य कस्यचित् चन्द्रत्वप्राप्तिरिति चेन्न । दृष्टान्ते प्रकृतापूर्वसाधनलक्षणायामपि द्रव्यत्वस्य वा स तुषद्रव्यत्वस्य वा अत्यक्तत्वेन विशिष्टे तात्पर्यसद्भावात् न यत्र कुत्रापि प्रोक्षणप्राप्तिः । प्रकृते प्रकृष्टत्वादौ तात्पर्याभावेन तस्य त्यक्तत्वादतिप्रसङ्गः स्यादेव । अत एवाह । तात्पर्यविषयस्येति । तात्पर्यविषय इति । नचाखण्डलक्षणलक्ष्यरूपोद्देश्यविधेय भावासंभवेऽपि तदुभयप्रातिपदिकोपस्थितस्योद्देश्यविधेयभावसंभव इति वाच्यम् । तदुभयप्रातिपदिकलक्ष्यस्याखण्डत्वेन प्रसिद्धत्वाप्रसिद्धत्वरूपोद्देश्यविधेयभावासंभवात् । तथा च बुभुत्सानिवृत्तिर्न स्यादिति । सर्वेषामपीति । न च निष्प्रकारकमेव ज्ञानं संशयनिवर्तकमिति वाच्यम् । तस्य संशयनिवर्तकत्वस्य काप्यदर्शनात् । अन्यथाऽति प्रसंगात् । तस्मात् परिहारो विशिष्टविषय इति । किञ्च यदि लक्षणवाक्यस्थानां सर्वेषां पदानां लक्षणया स्वरूपमात्रपरत्वं तदा एकेनैव स्वरूपस्य लक्षितत्वात् इतरवैयर्थ्यमित्याह । प्रकृष्टादीति । चन्द्रपदेनैव स्वरूपमात्रलक्षणासम्भवादिति भावः । ननु व्यावर्त्यभेदात् पदानां सार्थक्यमित्यत आह । व्यावर्त्यभेदेनेति । एतेनेति । प्रश्नोत्तरयोः विशिष्टविषयत्वप्रतिपादनेनेत्यर्थः । सहेति । यदि प्रकाशत्वं चन्द्रप्रातिपदिकार्थः तर्हि चन्द्रप्रकाशशब्दयोः एकप्रवृत्तिनिमित्तकत्वेन पर्यायत्वात् पर्यायाणामसहप्रयोगस्य सर्वसिद्धत्वादिति भावः । एतेनेति परामृष्टं हेतुमाह । अस्या एवेति । तथा च प्रश्नवैयर्थ्यमिति भावः । ननु चन्द्रप्रातिपदिकार्थत्वे पर्यायत्वेन सहप्रयोगानुपपत्तिरित्यत आह । एवञ्चेति । तथा च न पर्यायत्वमिति भावः । न च प्रातिपदिकार्थतावच्छेदकस्य प्रातिपदिकार्थत्वनियम एवेति वाच्यम् । भ्रान्तोऽसि । न वयं चन्द्रप्रातिपदिकार्थतावच्छेदकस्य प्रातिपदिकार्थत्वं ब्रूमः गन्धवती पृथिवीत्यत्र गन्धवत्त्वस्योद्देश्यतावच्छेदकत्वेऽपि पृथिवीशब्दार्थत्वाभावात् । अस्तु वा प्रातिपदिकार्थतावच्छेदकत्वम् । तथापि नायं नियमः । प्राभाकरमते धेनुप्रातिपदिकार्थतावच्छेदकस्य गोत्वस्य तत्प्रातिपदिकार्थत्वाभावात् । न्यायमते आकाशत्वस्य आकाशप्रातिपदिकार्थतावच्छेदकस्यापि तत्प्रातिपदिकार्थत्वाभाववत् प्रकृतेपि प्रकाशत्वादेः प्रातिपदिकार्थत्वाभावसंभवात् । किञ्च क्वचिल्लक्षणस्य प्रातिपदिकार्थत्वेनाप्यन्वयोऽस्तीत्याह । अस्तिचेति । न च पृथिवीत्वविशिष्टस्य पृथिवीशब्दार्थत्वमजानतः पृथिवीत्वपदेन पृथिव्युपस्थित्यभावात् अनन्वयः स्यादिति पृथिवीत्वविशिष्टे पृथिवीशब्दार्थग्रहोऽवश्यं प्रागेव श्रोतुर्वक्तव्यः । तथाच पृथिवीत्ववतीति वचनसार्थक्याय जलादिव्यावृत्तगन्धसमानाधिकरणजातिमतीत्यर्थे पर्यवसितमुत्तरम् । गन्धसमानाधिकरणजातिमत्वञ्च न पृथिवीशब्दवाच्यमिति कथमनन्वय इति वाच्यम् । पृथिवीत्वविशिष्टे पृथिवीशब्दार्थत्वग्रहं विनापि पृथिवीत्वे पृथिवीत्वशब्दार्थत्वग्रहसंभवेन पृथिवीत्वपदेन पृथिवीत्वोपस्थिति सम्भवात् । न हि पृथिवीत्वशब्दे संकेतग्रहे पृथिवीशब्दसंकेतग्रहः कारणम् । न वाऽविनाभूतः तद्ग्रहः । विना शब्दादिना पृथिवीत्वपदशक्तिग्रहसम्भवात् । तथा च पृथिवी शब्दार्थत्वेनैवान्वयात् नानन्वयः । पृथिवीशब्दस्येति । न च व्यवहर्तव्यत्वलक्षणा जहल्लक्षणा

(कण्टकोद्धारः)
स्वरूपलक्षणायां जहदजहल्लक्षणा इति सैव युक्ता सर्वथा स्वार्थत्यागाभावादिति वाच्यम् । स्वरूपलक्षणायां सन्देहनिवृत्यादिकं न स्यादित्यादीनां बहूनां दूषणानामुक्तत्वात् । तथा च जहल्लक्षणैव युक्ता । ननु तथापि प्रश्नोत्तरयोः असाधारणधर्मादिमात्रविषयत्वमस्तु । न तु तद्विशिष्टव्यक्तिपरत्वम् । तथा च कथं विशिष्टार्थत्वमित्याशंकामुपसंहारव्याजेन परिहरति । तस्मादिति । तथाचासाधारणधर्मादेरपि ज्ञातत्वान्न प्रश्नोत्तरयोः तन्मात्रविषयत्वमपि तु विशिष्टविषयत्वमेवेति भावः ।

ननु यदा प्रष्टुर्व्यावृत्तिवैशिष्ट्यमेव बुभुत्सितं तदा लक्षणाभिधाने कथं न प्रश्नोत्तरयोर्वैयधिकरण्यमित्यत आह । तत्र यदीति । व्यावृत्तिबोधार्थमेव लघूपायत्वेन व्यावर्तकधर्मस्योक्तत्वात् न वैयधिकरण्यं भवति । अन्यथा धूमपदे वह्निलक्षणापत्तेः । यदि च धूमे ज्ञाते धूमेन लिङ्गेन वह्निं ज्ञास्यतीति न धूमपदे लक्षणा तदा व्यावर्तकधर्मे उक्ते तेन व्यावृत्तिं ज्ञास्यतीति न लक्षणेति समानम् । न च द्वितीयपक्षे श्रुतार्थत्याग इति वाच्यम् । तात्पर्यानुपपत्या श्रुतार्थत्यागस्य यष्टीः प्रवेशयेत्यादौ अदृष्टत्वेन दोषाभावात् । तस्मात् प्रश्नोत्तरे विशिष्टविषये । न चेति । आग्नेयोऽष्टाकपालो भवतीत्यत्र यागाभिधायकपदाभावात् द्रव्यदेवतासंबन्धस्य च तं विनानुपपत्तेः तेन याग आक्षिप्यत इत्यर्थः ।

न चायागाक्षेपकस्येति । प्रथमाध्याये चतुर्थपादे नवमाधिकरणे चिन्तितम् । तद्गुणास्तु विधीयेरन् विधानार्थेन चान्येन शिष्टाः स्युः । दर्शपूर्णमासे श्रूयते– यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां च तो भवतीति । तत्र सन्देहः आग्नेय शब्दः कर्मनामधेयं गुणविधिर्वेति । पूर्वपक्षस्तु नात्र गुणविधिः । अष्टसु कपालेषु संस्कृतस्य पुरोडाशस्य द्रव्यस्य अग्नेर्देवतायाश्च विधानेऽनेकगुणविधानगौरवापत्तेः । तस्मात् पुरोडाशद्रव्यविशिष्टो यागो विधीयते । देवता च तत्प्रख्यन्यायेन मन्त्रवर्णात् प्राप्ता । तथा चाग्निदैवत्यनिमित्तमाग्नेय इति कर्मनामधेयमिति । सिद्धान्तस्तु तत्प्रख्यन्यायस्तदा स्यात् यदि यागः प्रत्यक्षतः श्रूयेत । नहि आग्नेयो भवतीत्यनेन पुरुषव्यापाररूपो यागः प्रतीयते । अग्निहोत्रवाक्ये च तत्प्रतीतिरस्ति । यागप्रतीतिं विना च न मन्त्राकांक्षा । तथा च द्रव्यदेवतासंबन्धेन यागाविनाभूतेन यागोऽनुमेयः । तथा च मन्त्रान्वयात् प्रागेव देवता प्रतीतेः वक्तव्यत्वात् आग्नेयशब्दो गुणविधिः । न च देवताप्रतीतिः मांत्रवर्णिकीति वाच्यम् । अग्निर्ज्योतिरग्निः स्वाहेति सायं जुहोतीत्यादिवत् वचनाभावात् । तस्मात् यागानुमानात् पूर्वं देवताप्रतीतेरन्यतोऽसंभवात् आग्नेयशब्देन देवताविधानमिति गुणविधिः । न चानेकगुणविधाने गौरवम् । विशिष्टविधानबलादर्थात् विशेषणविधानोपपत्तेः । तथा च यथैतस्य वाक्यस्य द्रव्यदेवतासंबन्धे तात्पर्यमन्यथा तेन यागानुमानानुपपत्तेस्तथा सत्यादिवाक्यस्य व्यावृत्तितात्पर्येऽपि सत्यत्वादिविशिष्टेऽवश्यं तात्पर्यं वक्तव्यमन्यथा व्यावर्तकासिद्ध्या व्यवृत्यसंभवादिति ।

किञ्च तात्पर्यानुपपत्या लक्षणाश्रयणं युक्तम् । लक्षणादिप्रश्नोत्तरे इवात्रापि उत्तरवचने लक्षणोक्त्या धर्म एव तात्पर्यावधारणादित्याह । असाधारणेति । न च प्रतिवचनोक्तत्वं बुभुत्सितत्वे न तन्त्रं वह्निप्रश्ने धूमोस्तीति प्रतिवचनादिति वाच्यम् । यत्र च प्रश्नवाक्यं सन्दिग्धं तत्रोत्तरानुसारेण प्रश्नवाक्यविषयो

(कण्टकोद्धारः)
व्यवस्थाप्यते । यत्र तु प्रश्नवाक्यविषयः स्पष्टः तत्रान्यथोत्तरवाक्यस्य प्रकृतोपयोगादिना समाधीयमानत्वादिति भावः । जातीति । जातिपरिप्रश्ने डतमच् इति सूत्रादिति भावः । निर्धारणेति । द्वयोरेकस्य निर्धारणे डतरच् इति सूत्रादिति भावः । नन्वेतावता प्रश्नवाक्यं लक्षणविषयं तद्विषयोत्तरवत्त्वात् स्पष्टलक्षणविषयकप्रश्नवदिति ह्यनुमानमभिप्रेतम् । तन्न । लक्षणवाचकपदत्वस्योपाधित्वादित्यत आह । प्रश्नेऽपीति । तथाच तत्सूचकपदवत्त्वेनैव तद्विषयत्वोपपत्तौ अप्रयोजकत्वेन तस्य प्रकृतसाध्यव्यापकत्वाभावात्। तत्सूचकश्च किं शब्द एवेति भावः । न च किं शब्दो बुभुत्सितत्वमेवाह न तु धर्मविषयत्वमिति वाच्यम् । स्वरूपस्य बुभुत्सित्वानुपपत्तेरसाधारणधर्मवैशिष्ट्येनैव बुभुत्सितत्वसूचकत्वात् । एतेनेति । तत्सूचकपदवत्त्वेनैव तद्विषयत्वोपपत्त्येत्यर्थः । तद्वाचकपदवत्त्वं तल्लक्षणपरोत्तरविरुद्धं चेत्याह । तथात्व इति ।

किं च धर्मविषयत्वसूचकत्वाभावे स्वरूपबुभुत्सितत्वसूचक इति वक्तव्यम् । तच्चायुक्तमित्याह । चन्द्रेति । तद्वाचकपदाभावेऽपि तल्लक्षकपदवत्त्वेनाप्युपपत्तिरित्याशयेनाह । लक्षणस्येति । न च लक्षणाबीजाभावान्न लक्षणेति वाच्यम् । अन्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा दर्शितत्वादिति । एवं लक्षणवाक्यानामेकप्रकारेण सखण्डार्थत्वमुपपाद्य प्रकारान्तरेणापि व्युत्पादयति । यद्वेति । चन्द्रव्यक्तिः चन्द्रशब्दविशिष्टतया व्यवहर्तव्या प्रकृष्टप्रकाशत्वात् व्यतिरेकेण नक्षत्रादिवत् इत्यनुमानेनेत्यर्थः । यत्र प्रकृष्टप्रकाशत्वं तत्र चन्द्रशब्दविशिष्ट व्यवहारः कर्तव्य इत्याप्तवाक्यत्वेनेत्यर्थः । पक्षद्वयेऽपि विशिष्टार्थत्वमेवेति भावः । न च प्रश्नोत्तरयोर्वैयधिकरण्यम् । प्रश्नेऽपि चन्द्रपदस्य तद्विशिष्टव्यवहारकर्तव्यताविषयत्वेन वैयधिकरण्याभावात् । न च लक्षणायां बीजाभावः । तात्पर्यानुपपत्तेरेव तद्बीजत्वात् । न च चन्द्रसाधारणस्वरूपज्ञापकत्वेनैव वाक्यप्रामाण्योपपत्तौ व्यवहारकर्तव्यतापरत्वे मानाभाव इति वाच्यम् । तस्य प्रत्यक्षादिनैव ज्ञातत्वादित्याह । चन्द्रस्वरूपस्येति । ननु चन्द्ररूपार्थविशेषित व्यवहारकर्तव्यता बोधनस्य तज्ज्ञानाज्ञानाभ्यामशक्यत्वमित्याह। चन्द्रव्यवहारशब्देनेति । नन्वेतावता लक्षणवाक्यं व्युत्पत्तिपरमित्युक्तं स्यात् । न च तद्युक्तम् । तस्य वृद्ध व्यवहारादिनैव संभवादित्याशङ्क्याह । न चैवमिति । उपायस्योपायान्तरादूषकत्वादिति भावः । एतेन व्यवहारकर्तव्यताबोधनपरत्वेन प्रथमानुमाने दोषानुक्त्वा उपसंहरति । तस्मादिति ।

प्रथमानुमानदूषणानि द्वितीयानुमानदूषणेऽति दिशति । तथेति । न चात्र ब्रह्मप्रतिपादकार्थनिष्ठत्वं साध्यम् । तच्च ब्रह्मप्रतिपादकार्थविशेष्यमात्रनिष्ठत्वम् । न चानेन रूपेण व्याप्तिः । किन्तु यद्यत्प्रातिपदिकार्थप्रश्नोत्तरं तत्तत्प्रातिपदिकार्थविशेष्यमात्रपरमिति व्याप्तौ दृष्टान्तसद्भावान्नाप्रसिद्धविशेषणत्वादीति वाच्यम् । दृष्टान्तेऽपि प्रातिपदिकार्थ विशेष्यमात्र परत्वाभावेनाप्रसिद्धविशेषणत्वसाध्यवैकल्याद्यपरिहारात् । तथोपपादितमधस्तात् । ननु प्रथमानुमाने अप्रसिद्धिरुक्ता । अत्र सा कथम् ? तन्मात्र प्रश्नोत्तरत्वस्य सिद्धत्वादित्यत आह । प्रकृष्टादीति । स्वरूपमात्रस्य पूर्वमेव ज्ञातत्वेन तन्मात्रे प्रश्नाद्यनुपपत्तेरुक्तत्वादिति भावः । न चात्रानुमाने प्रश्नोत्तरयोर्वैयधिकरण्यापत्तिरूपविपक्षबाधक-

(कण्टकोद्धारः)

तर्कादुपाधिप्रतिपक्षयोरनवकाश इति वाच्यम् । प्रश्नोत्तरयोरसाधारणधर्मविषयत्वस्योपपादितत्वेन वैयधिकरण्यापत्तिरूपविपक्षबाधकाभावात् । इह चेति । न च ब्रह्मविदाप्नोति परम्, एकधैवानुद्रष्टव्यमित्यादि वाक्यबलात् विशेष्यमात्रज्ञानस्यैव मोक्षजनकत्वावधारणात् अतिरिक्तेषु बुभुत्साभावात् न प्रश्नादेस्तद्विषयत्वं कल्पनीयमिति वाच्यम् । पृथगात्मानं प्रेरितारं च मत्वेत्यादि श्रुतिबलात् एकधैवेत्यादि श्रुतीनाम् एकमेव ब्रह्म नानेकमित्याद्यर्थपरत्वेन विशेष्यमात्रज्ञानस्य मोक्षसाधनत्वपरत्वाभावेन प्रश्नोत्तरे चासाधारणधर्मोक्त्या च विशिष्टज्ञानस्यैव मोक्षसाधनत्वेन सत्यत्वादिविशिष्टे बुभुत्सादिसंभवात् उत्तरानुसारेण प्रश्नवाक्यं कल्पनीयमिति भावः । कतम आत्मेत्यत्रेति । न चोत्तरवत् प्रश्नस्यापि न जात्यादौ तात्पर्यमिति वाच्यम् । असिद्धेः । जात्यादिविशिष्ट एव बुभुत्सादिसंभवेन तत्रैव वाक्यस्य महातात्पर्याच्च । किञ्चेति । न चानिर्धारितनिर्धारकत्वेनैवोत्तरत्वमस्त्विति वाच्यम् । स्वरूपमात्रपरत्वे तस्य पूर्वमेव ज्ञाततया अनिर्धारितनिर्धारकत्वानुपपत्तेः । यदि चेति । न च निष्प्रकारकस्यापि संशयस्य निवर्तकत्वमुपपादितमेवेति वाच्यम् । तस्य प्रागेव दूषितत्वात् । यदि चोत्तरमिति । न चासाधारणधर्मवाचकपदवत्त्वेन निर्विचिकित्सधर्मिप्रतिपादकत्वेनोत्तरत्वसंभव इति वाच्यम् । तद्वाचकपदवत्त्वेऽपि तत्र तात्पर्याभावेन लक्षणया धर्मिस्वरूपमात्रपरत्वेन निर्विचिकित्सब्रह्मप्रतिपादकत्वासंभवेनोत्तरत्वासंभवात् । ननु नात्र कृत्यानयनयोः प्रश्नविषयता । किन्तु कृतिकर्मानयनकर्मणोः । अन्यथा किं करणं किमानयनम् इत्येव पृच्छेत् । तथाच प्रश्नोत्तरयोरध्ययनत्वादिविशिष्टविषयत्वमेवेति चेन्न । भ्रान्तोऽसि । न ह्यस्माभिः कृत्यादिविषयकः प्रश्न इत्युच्यते । किन्तु कृत्यादि कर्ममात्रस्य पृष्टत्वात् तन्मात्रपरत्वं स्यात् । तच्च न स्वीक्रियते अध्ययनत्वादिविशिष्टपरत्वमेवेति व्यभिचार एवेति । तत्रोत्तरानुसारेण विशिष्टपरत्वं चेत् तथापि व्यभिचारापरिहारात् ।

उक्तन्यायमन्यत्रातिदिशति । एतेनेति । असिद्ध्यादिनेत्यर्थः । किञ्च प्रातिपदिकार्थमात्रनिष्ठत्वेऽपि नाखण्डार्थत्वसिद्धिः । सर्वत्र प्रातिपदिकार्थस्य विशिष्टत्वात् । तथा चार्थान्तरमित्याशयेनाह । किञ्चेति । न च प्रातिपदिकार्थे विशेष्यमात्रपरत्वं साध्यमतो नार्थान्तरमिति वाच्यम् । प्रातिपदिकार्थे पृष्टे विशेष्यमात्राभिधाने प्रश्नोत्तरयोर्वैयधिकरण्यापत्तेः । ननु प्रातिपदिकार्थस्य कथं विशिष्टत्वमत आह । स्वार्थ इति । न च प्रातिपदिकार्थ सूत्रे लिङ्गादेः प्रातिपदिकार्थत्वे तद्ग्रहणवैयर्थ्यमाशङ्क्य स्वरूपमात्र-परतयाऽभियुक्तसमाधानं भवत्पक्षेऽनुपपन्नमिति वाच्यम् । तादृशसमाधानस्यासिद्धेः । विशेषोपस्थापकत्वेन लिङ्गादिग्रहणमिति समाधानसंभवात् । ननु पञ्चकं प्रातिपदिकार्थ इति न युक्तम् । द्रव्यादि-प्रातिपदिकार्थगुणकर्मणोरप्रतीतेः । अन्यथा द्रव्यमित्युक्ते नीलं पीतं वेत्यादि सन्देहो न स्यादिति चेत् न । सामान्यतस्तदुक्तावपि विशेषसन्देहोपपत्तेः । अन्यथा जिज्ञासानुपपत्तेः । तस्याः सामान्यज्ञानसाध्यत्वात् । न च द्रव्यत्वाक्षिप्तसामान्यज्ञानादेव सन्देहोपपत्तिरिति वाच्यम् । आक्षेप्याक्षेपकभावज्ञानं विनापि जिज्ञासानुभवात् । न चान्विताभिधानपक्षोऽयुक्तोऽन्वयस्य समभिव्याहारादेव लाभादिति वाच्यम् । अन्वये शक्त्यभावे तज्ज्ञानोपायाभावेनान्वयज्ञानं न स्यात् । समभिव्याहारस्तु विशेषपर्यवसाने हेतुः । अन्यथा

(कण्टकोद्धारः)
पदार्थेऽपि शक्तिर्न स्यात् । तस्यापि समभिव्याहारादेव लाभसंभवादिति वक्तुं शक्यत्वात् । यथा चैतत्तथोपपादितमन्यत्रमूलकारेणेत्यलम् ।

किञ्च प्रातिपदिकार्थे पृष्टे कथमुत्तरस्य प्रातिपदिकार्थविशेष्यमात्रपरत्वम् ? लक्षणायां बीजाभावात् विशेष्यज्ञानस्यैव मोक्षसाधनत्वात् तत्रैव बुभुत्सादीति तु प्रागेव निरस्तम् । एवमखण्डार्थत्वसाधकानुमानानि प्रत्येकं दूषयित्वाऽप्रयोजकत्वेन दूषयति । किञ्चेति । निरस्तत्वादिति । स्वरूपमात्रस्य सन्देहधर्मित्वेन पूर्वमेव ज्ञातत्वेन तत्र बुभुत्साद्ययोग इत्यादिनेत्यर्थः । सत्यादि वाक्य इति । ननु विशेषणेषु सत्स्वपि नाकांक्षा कल्प्यते । कश्चन्द्र इत्यत्र स्वरूपमात्राकांक्षादर्शनादिति चेन्न । तत्राप्याकांक्षाकल्पनेन स्वरूपमात्राकांक्षासिद्धेः । न च व्यावृत्तिबोधमात्रेण सार्थकत्वोपपत्तेः तत्कल्पनं व्यर्थमिति वाच्यम् । विशेषणपरत्वाभावे व्यावृत्तिबोधासंभवात् । न च तद्वारकस्वरूपज्ञानमात्रेण व्यावृत्तिबोधोपपत्तिरिति वाच्यम् । स्वरूपमात्रस्य पूर्वमेव ज्ञातत्वात् तत्र विशेषणज्ञानस्य द्वारत्वानुपपत्तेः । विशेषणे तात्पर्याभावे तेन व्यावृत्यसिद्धेश्च । अन्यथा गङ्गायां घोष इत्यत्र गङ्गात्वेनागङ्गाव्यावृत्तिबोधप्रसङ्गात् । निष्प्रकारकज्ञानस्येति । न च निष्प्रकारकज्ञानस्यैव स्वरूपोपलक्षणोपलक्षिताधिष्ठानज्ञानत्वेन भ्रमादिनिवृत्या मोक्षहेतुत्वात् ब्रह्मविदित्यादेः सप्रकारकज्ञानपरतायां मानाभाव इति वाच्यम् । प्रमाणाभावेन निष्प्रकारकज्ञानस्यैवासिद्धेः । उपलक्षितज्ञानस्य सप्रकारकत्वनियमाच्च । यथा च न निष्प्रकारकज्ञानं मोक्षहेतुः तथोक्तं प्राक् । एवं विद्वानित्यस्यैव प्रकारोपलक्षितत्वपरत्वे लक्षणाप्रसङ्गात् सप्रकारकत्वापरिहाराच्च । एकधैवानुद्रष्टव्यमित्यादि तु अन्यथैव व्याख्यातमिति दिक् ।

निर्गुणेति । न च तत्र स्वरूपमात्रबुभुत्साप्रवृत्तवाक्यत्वाभावात् न लक्षणया स्वरूपमात्रपरत्वमिति वाच्यम् । प्रश्ने प्रतिवचने च समाने स्वरूपमात्रबुभुत्साप्रवृत्तवाक्यत्वभावाभावयोः विनिगन्तुमशक्यत्वात् । न च तत्र विशिष्टपरत्वे बाधकाभाव इति वाच्यम् । प्रकृतेपि विशिष्टपरत्वे बाधकाभावस्योपपादितत्वादुपपादयिष्यमाणत्वाच्च । ननु धर्मे अलक्षणरूपं वाक्यमस्ति । न ब्रह्मणीत्यत आह । अस्ति चेति । तथाच तदप्यखण्डार्थं स्यादिति भावः । न चावान्तरतात्पर्यमादाय वा महातात्पर्यमादाय वा ? नाद्यः । तदा ब्रह्मपरत्वाभावात् । नद्वितीयः इष्टापत्तेरिति वाच्यम् । अखण्डार्थे महातात्पर्ये प्रमाणाभावात् । सर्वोत्तमत्व एव सर्वोत्कर्ष इत्यादिश्रुतिभिः महातात्पर्याच्च । तेषामिति । न चैक्य भेदाभावादेः स्वरूपार्थत्वान्न विशिष्टार्थतेति वाच्यम् । सोपाधिकत्वेन निरुपाधिकब्रह्मस्वरूपत्वानुपपत्तेः । कल्पितप्रतियोगिकत्वेन मिथ्यात्वाच्च । सत्येति । न च द्वारत्वेन विशिष्टार्थप्रतिपादनेऽपि लक्षणया स्वरूपमात्रपरत्वात् प्रामाण्योपपत्तिरिति वाच्यम् । विशिष्टार्थबोधात् । पूर्वमेव स्वरूपस्य ज्ञातत्वेन तस्य तत्र द्वारत्वानुपपत्तेरुक्तत्वात् । तेषामेवेति । न च लाक्षणिकार्थस्य सत्यादिवाक्यविशिष्टार्थविरोधाभावेऽपि तद्वाराप्रतिपादितस्य ऐक्यं भेदाभावविशिष्टार्थस्य तद्विरोधित्वात् तेषां लक्षणया स्वरूपमात्रार्थत्वमिति वाच्यम् । तात्पर्याविषयस्य त्याज्यत्वे तद्विरोधस्याकिञ्चित्करत्वात् । ननु सत्यादिवाक्यस्य मुमुक्षुज्ञेयत्वात् । लक्षणया स्वरूपमात्रार्थत्वमित्याशंकायामाह । उभयोरपीति । ननु तथापि ब्रह्मण्यभावरूपो धर्मो मुमुक्षुणा ज्ञेयोतो भेदाभावादि वाक्यं विशिष्टार्थपरम् । भावरूपस्तु न ज्ञेयोऽतः सत्यादि वाक्यं न विशिष्टार्थपरमित्यत

(कण्टकोद्धारः)

आह । न चास्यामिति । ननु तेषां लक्षणयाऽखण्डार्थत्वात् नाप्रामाण्यादीत्यत आह । तेषामिति । तथा च न सत्यादि वाक्यानां विशिष्टार्थपरत्वत्यागे कारणमिति भावः । द्वारतया प्रतिपादितस्य विरोधित्वादिति तु निरस्तम् । अत एवाह । नन्विति । सत्यत्व इति न च ब्रह्मभिन्नत्वेऽपसिद्धान्तः । न चात्र ब्रह्मभिन्नत्वमिति वाच्यम् । तथात्वे स्वरूपस्यैव सोपाधिकत्वेनाभेदानुपपत्तेरुक्तत्वात् । सत्यत्वादीनां ब्रह्माभेदमङ्गीकृत्य तद्वाक्यस्य तत्परत्वेन तद्विरोधेनैक्यवाक्यादेरेव स्वरूपमात्रलक्षणापत्तेश्च । द्वारत्वेति । न च कल्पितधर्मताकत्वेन द्वारत्वोपपत्तिरिति वाच्यम् । तथात्वे स्वरूपस्यैव द्वारत्वापत्तेः । अत्रापीति । न च सत्यत्वादीनां द्वारतयोपादाने पारमार्थिकतया निषेधोऽतो न विरोध इति वाच्यम् । नेह नानेत्यादौ स्वरूपेणैव निषेधप्रतीतेः । अन्यथा क्षणिकत्वादिना निषेध इत्यापाताच्च । पारमार्थिकत्वेन निषेधस्य ब्रह्मणीव सत्यत्वाविरोधित्वाच्च । अथेति । न चानन्त ब्रह्मशब्दौ सगुण वाक्यस्थावेव श्रुतिस्मृतिभ्यां निरुक्तौ न लक्षणवाक्यस्थिताविति वाच्यम् । नियामकाभावात् । न च लक्षणवाक्यस्याखण्डार्थत्वमेव नियामकमिति वाच्यम् । अन्योन्याश्रयात् । तस्मादप्रयोजकत्वं दुष्परिहरम् ।

यस्य चेति । न च यस्य येन विना तात्पर्यविषयाननुभावकत्वम् इत्येवास्तु । अन्वयांशप्रवेशे च गौरवमिति वाच्यम् । पदार्थस्य शक्तिग्रहसमय एवावबद्धतया तदंशे तात्पर्यायोगेन अन्वयांश एव तात्पर्यस्य वक्तव्यतया खण्डांशबोधकत्वे आकांक्षायोग एव । न च लाक्षणिकस्य पूर्वमनवबुद्धतया तत्र तात्पर्ययोग इति वाच्यम् । अनुपस्थिते लक्षणाया अदृष्टत्वेन लाक्षणिकस्यापि पूर्वमेव बुद्धतया तत्र तात्पर्यानुपपत्तेः । संनिधिस्त्विति । न चाव्यवधानेन शाब्दबोधानुकूलोपस्थितिरेवोत्पत्तिः । न त्वन्वयांशप्रवेशोऽपि गौरवादिति वाच्यम् । उपस्थिते शाब्दबोधानुकूलता चान्वयप्रतियोग्युपस्थितित्वेन वाच्या । तथा च सैवासत्तिर्न तु तज्ज्ञानाधीनज्ञानाऽप्रकृता गौरवात् । योग्यता चेति । न च यत्र बाधितसंसर्गद्वयसंभवस्तत्र बाधिततात्पर्यविषयकेऽति व्याप्तिरिति वाच्यम् । अबाधितसंसर्गांशयोग्यत्वादेव नातिव्याप्तिः । बाधितसंसर्गे तु तस्यायोग्यत्वेऽपि तत्र लक्षणाभावादेवातिव्याप्त्यसंभवात् । उक्तरीत्येति । तथा च न पदार्थे तात्पर्यं न वा तत्र वाक्यसमाप्तिरिति भावः । न च पदार्थाज्ञाने तत्र तात्पर्याद्युपपत्तिरिति वाच्यम् । पदार्थाज्ञाने तत्र शक्तेरग्रहे वाक्यस्य तत्र मूकत्वात् । न चाभेदे रूपसंसर्गमादायाकांक्षाद्युपपत्तिरिति वाच्यम् । संसर्गरूपेण तत्प्रतिपादने सखण्डार्थत्वापातात् पदार्थतया प्रतिपादने त्वज्ञानासंभवेन तात्पर्याद्ययोगादिति भावः । प्रतिकूलतर्कान्तरमाह । वेदान्तानामिति । यदि संसृष्टार्थत्वं न चेदिति शेषः । न च स्वतः सिद्धत्वेऽपि स्वरूपज्ञप्तेरविद्याविषयत्वाभावात् प्रमाणवृत्तेरेव तद्विरोधित्वात् तदर्थं वेदान्ता इति वाच्यम् । स्वरूपज्ञप्तेरज्ञानविरोधित्वाभावे ज्ञानत्वमेव न स्यादित्यादेरुक्तत्वात् । निर्निमित्तमिति । यदि लक्षणयाखण्डवस्तुमात्रपरं स्यादिति शेषः । ननु बाधकबलान्मुख्यार्थत्यागो युक्त एवेत्यत आह । एकरसत्वादि श्रुतीनामपीति । न च द्वारतयोपस्थितस्यापि बाधकत्वादमुख्यार्थता युक्तेति वाच्यम् । तस्य तात्पर्याविषयत्वेनाबाधकत्वात् । अन्यथा गङ्गापदात् प्रवाहोपस्थितेरपि बाधकत्वप्रसङ्गात् । वेदान्तेति । न च व्याप्त्यसिद्धिः । तार्किकादिभिर्निर्विकल्पकाभ्युपगमादिति वाच्यम् । निरुपाधिकसहचारबलेन व्याप्तिस्वीकारात्

(कण्टकोद्धारः)

तार्किकाभ्युपगमस्य निष्प्रमाणकत्वात् शब्दजन्यज्ञानस्य सप्रकारकत्वे सर्वथा विवादाभावाच्च । न च स्वरूपपरवाक्याजन्यत्वमुपाधिः । तस्य पक्षेऽपि सत्वात् साधनव्यापकत्वात् । न च ज्ञानत्वस्येव शाब्दत्वस्यापि साध्यसविकल्पकत्वव्याप्यत्वग्रहे मानाभाव इति वाच्यम् । निरुपाधिकसहचारग्रहभङ्गलक्षण-प्रतिकूलतर्कसनाथस्य प्रत्यक्षस्यैव सत्त्वात् । ज्ञानत्वस्यापि सविकल्पकत्वव्याप्यत्वाच्च । वेदान्तानामिति । यद्यखण्डार्थत्वं स्यादिति शेषः । न चासाधारणाकारस्वरूपबुभुत्सैवोपपादितैवेति वाच्यम् । ब्रह्मणोऽखण्डत्वेन व्यावर्तकव्यावृत्यन्यतर वैशिष्ट्यरूपासाधारणस्वरूपासंभवात् । श्रोतव्य इति पूर्ववच्छेषः । न च विचारस्य तात्पर्य निश्चयफलकत्वेन ब्रह्मज्ञानार्थत्वोपपत्तिरिति वाच्यम् । तात्पर्यनिश्चयस्य फलत्वेऽन्योन्याश्रयादेर्वक्ष्यमाणत्वेन तदयोगात् । श्रवणादेर्दर्शनार्थत्वस्यैव श्रुत्यादिसिद्धत्वात् । तद्विजिज्ञासस्वेत्यादौ कामनाविषयत्वेन ज्ञानस्यैव फलत्वप्रतीतेश्च । किञ्च विचार विधेस्तात्पर्य निश्चयफलकत्वे विचारितात् वेदान्तात् तात्पर्यनिश्चयो भवतीति वक्तव्यम् । तथाचाखण्डार्थत्वविरोधः । तात्पर्यनिश्चयस्य सप्रकारकत्वनियमादिति दिक् । विपक्षे बाधकान्तरमाह । शुद्धेति । अत्र शुद्धब्रह्मविचारकाद्याध्यायतृतीयपादीयाधिकरणविषयवाक्यं यद्यखण्डार्थं स्यादविचार्यं स्यादिति विवक्षितम् । तेन न वैयधिकरण्यादिदोषः । यद्वा व्याप्तौ सत्यां न वैयधिकरण्यादिदोष इत्यत्र तात्पर्यम् । विशिष्येति । न च व्यावृत्ताकारेणाज्ञातत्वमात्रेण विषयत्वं भविष्यतीति वाच्यम् । निर्विशेषे व्यावृत्ताव्यावृत्ते-त्याकारद्वयाभावात् । साधारणेति । न च कल्पितसाधारणधर्ममादाय संशयोपपत्तिरिति वाच्यम् । सर्वज्ञानस्य धर्म्यंशे प्रमात्वनियमेन तदंशे भ्रान्तत्वायोगात् । मिथ्येति । न चोभयोरपि कल्पितधर्ममादायोपपत्तिरिति वाच्यम् । उभयोरपि कल्पितविषयत्वे पूर्वविषयत्वे पूर्वपक्ष्यभिप्रेतप्रकारस्य वास्तवत्वापत्तिः । विरुद्धयोरन्यतरमिथ्यात्वेऽन्यतर सत्यत्वनियमात् । एकतरेति । न च रूपनिर्धारणेनैव प्रयोजनोपपत्तिरिति वाच्यम् । स्वरूपमात्रनिर्धारणस्य प्रागेव जातत्वेऽपि प्रयोजनादर्शनेन तन्मात्रनिर्धारणस्य प्रयोजनत्वासंभवात् । अन्यथा संशयाद्यनुपपत्तेः । प्रतिकूलतर्कान्तरमाह । ब्रह्मेति । सत्यादि वाक्यं यदि ब्रह्मस्वरूपमात्रपरं स्यात् व्यर्थं स्यात् । पूर्ववाक्येनैव ब्रह्मस्वरूपस्य सिद्धत्वादित्यापादनमभिप्रेतमतो न कश्चित् क्षुद्रोपद्रवः । न चासाधरणस्वरूपज्ञानार्थं तद्भविष्यतीति वाच्यम् । निर्विशेषस्वरूपद्वयाभावादि त्युक्तत्वात् । प्रतिकूलतर्कान्तरमाह । सत्यादिवाक्यस्येति । अत्र सत्यादि वाक्यं यदि सत्यत्वादि विशिष्टे तात्पर्यवन्न स्यात् तदा तद्बोध्यस्य ब्रह्मत्वं न स्यात् । प्रतश्नोत्तरं च न स्यादित्यापादनीयम् । अत्राद्ये हेतुः तात्पर्यत इति द्वितीये तात्पर्यविषयस्येति । न च लक्षणा तत्स्वरूपलाभो भविष्यतीति वाच्यम् । वाक्यस्याखण्डार्थत्वे लक्षणाभावस्य वक्ष्यमाणत्वात् । लक्षणयापि लक्ष्यतावच्छेदकधर्मवैशिष्ट्यस्यैव बोधनात् । अखण्डार्थत्वविरोधित्वाच्च । अप्राप्तेति । अज्ञातेत्यर्थः । विधेयस्यापीति । उद्देश्यस्वरूपासंसृष्टस्याप्राप्तस्यैवाभावात् तत्संसृष्टतया बोधने सखण्डार्थत्वमेवेति भावः । न चासांधारणस्वरूपस्याप्राप्तत्वसंभव इति वाच्यम् । अखण्डे स्वरूपद्वयाभावादित्युक्तत्वात् । प्रतिकूलतर्कान्तरमाह । सत्यादिपदानामिति । यद्यखण्डार्थत्वं स्यादिति शेषः । अशक्येति । न च वृत्या पदार्थोपस्थितिः । न च सैव वृत्तिरिति वाच्यम् । अन्वयानुपपत्या तात्पर्यानुपपत्या वा तादृशोपस्थितेरेव वृत्तित्वाङ्गीकारात् । न च तात्पर्यविषयानुकूलोपस्थितेरेव लक्षणात्वम् । न त्वन्वय प्रतियोग्युपस्थितेरिति

(कण्टकोद्धारः)

वाच्यम् । पदार्थमात्रे तात्पर्याभावस्य प्रागेवोक्तत्वेनान्वयप्रतियोग्युपस्थितेरेव लक्षणात्वस्य स्वीकार्यत्वात् । अन्वयेति । सत्यत्वादिना धर्म धर्मिभावेनान्वयसंभवात् । न च तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति वाच्यम्। दत्तोत्तरत्वात् । प्रतिकूलतर्कान्तरमाह । सत्यादिवाक्यानामिति । पूर्ववत् शेषः । कुंभेति । न च ब्रह्मरूपैव सत्ता प्रपञ्चारोपाधिष्ठानत्वेन सर्वानुस्यूतत्वेन जातित्वेन व्यवह्रियते । न वस्तुतः सा ब्रह्मणो भिन्नेति वाच्यम् । सर्वानुस्यूतत्वमात्रेण जातित्वव्यवहारे देशकालादावपि तथा व्यवहारः स्यात् । अस्तु वा स्वरूपे जातित्वव्यवहारः तथापि पर्यायत्वम् । एकार्थत्वात् । नहि जातित्वेन सत्ताप्रतिपादकत्वं सत्यशब्दस्य। तथा अननुभवात् । सत्ताया ब्रह्मत्वे लक्षणत्वायोगात् । न च कल्पितधर्मत्वेन लक्षणत्वं वैपरीत्यापत्तेः । निर्विशेष एकस्मिन् प्रसिद्ध्यप्रसिद्धि निबन्धन लक्ष्यलक्षणभावायोगाच्च । त्रिकालाबाध्यत्वरूपस्य सत्यत्वस्य सोपाधिकत्वेन ब्रह्मरूपत्वायोगाच्च । सर्वानुस्यूतत्वे यथाकथञ्चित् सर्वाश्रितत्वेन सर्वस्यानृताद्व्यावर्तकत्वापाताच्च । वस्तुतः स्वाश्रितत्वस्याप्यभावेन स्वस्यानृताद-व्यावर्तकत्वापत्तेश्च । शुद्धेति । न चोपहितवृत्तित्वेपि उपधेयवृत्तित्वमविरुद्धमिति वाच्यम् । घटाकाशत्वादेरनवच्छिन्नाकाशवृत्तित्वादृष्टेः । उभयोरप्यनृतजडादेर्व्यावृत्यापत्तेश्च । एतेन शुद्धसत्त्वाद्य-सिद्ध्यापत्तिदूषणेनेत्यर्थः । अनृतेति । न च शबले सत्यता परमार्थसंसर्गेण प्रतीयमाने सत्यशब्दसंगतिग्रहो न वस्तुतः सत्त्वमस्तीति वाच्यम् । अस्याः कल्पनायाः शुद्धे एव परमार्थसत्त्वं नान्यत्रेत्ये-तत्सिद्ध्यधीनत्वेनान्योन्याश्रयात् । शुद्ध एव परमार्थसत्त्वमित्यत्र प्रमाणाभावाच्च । सत्त्वप्रतिपादकवाक्यानां लक्षणया स्वरूपमात्रपरत्वात् एतदभिप्रायेणैवोपसंहरति । तस्मादिति ।

प्रतिकूलान्तरमाह । पदान्तरेति । अत्रापि पूर्ववदेव शेषः । नद्यामिति । न च गभीरायां नद्यां घोषः प्रतिवसतीत्यत्र तात्पर्याभावेऽपि अभिधाकाले प्रतीतिमात्रेणागभीरव्यावृत्तिवदिहापि स्यादिति वाच्यम् । तत्र वाच्यस्यैव प्रवाहस्यागभीरव्यावृत्तिवदिहापि वाच्यस्य शबलस्यैवानृताद्व्यवृत्यापत्तेः । न ह्यगभीरव्यावृत्ति-स्तीरस्य प्रतीयते । न चागभीरनदीतीरव्यावृत्तिस्तत्राप्यस्तीति वाच्यम् । इहाप्यनृतसंबन्धिव्यावृत्यापातात् । न त्वनृतात् । न च जहल्लक्षणायां तथा प्रतीतावपि प्रकृतेऽजहल्लक्षणात्वात् वाच्यतावच्छेदकानधिकरणात् व्यावृत्तिप्रतीतिः । ब्रह्म तु वाच्यतावच्छेदकाधिकरणमेवेति वाच्यम् । तथासति काकेभ्यो दधि रक्ष्यतामित्यत्रापि अजहल्लक्षणात्वात् लक्ष्यमात्रस्य काकत्वापत्याऽकाकात् व्यावृत्यापत्तेः । ब्रह्मणो निर्धर्मकत्वेन सत्त्वानधिकरणत्वाच्च । न च परमार्थतस्तदनधिकरणत्वेऽपि व्यवहारतस्तदधिकरणत्वमिति वाच्यम् । व्यावृत्तेरपि व्यावहारिकत्वप्रसङ्गात् । अखण्डार्थत्वस्याद्यप्यसिद्ध्याऽन्योन्याश्रयाच्च । यजमानत्वादेरपि व्यावहारिकत्वापाताच्च । न च सत्यत्वादाववान्तरं तात्पर्यं यजमानत्वे तु तन्नेति वाच्यम् । वेदतात्पर्यविषयत्वे तात्त्विकत्वापातात् । न च स्वरूपमात्रे महातात्पर्यं तद्विषयस्यैव तात्त्विकत्वमिति वाच्यम्। वेदतात्पर्यविषयत्वस्यैव तात्त्विकत्वप्रयोजकत्वे लाघवात् । अन्यथा गौरवात् । स्वरूपमात्रस्य नित्यसिद्धतया वेदतात्पर्यस्यैवायोगात् । सत्यत्वादि विशिष्ट एव महातात्पर्येण वैपरीत्याच्च । न च तत्वावेदकप्रमाणबाध्यत्वात् सत्यत्वादेर्व्यावहारिकत्वमिति वाच्यम् । ब्रह्मणोऽपि तथात्वस्य वक्तुं शक्यत्वेन

(कण्टकोद्धारः)

व्यावहारिकत्वानुपपत्तेर्बाधकत्वानुपपत्तेर्मूल एव स्फुटत्वाच्चेति दिक् । ननु सत्यत्वादेः प्रत्यक्षादिप्राप्तत्वात् व्यावहारिकत्वमित्यत आह । न चेति । ब्रह्मण एव सत्तारूपेण घटः सन् इत्यादिप्रतीतिविषयत्वेन त्वन्मते व्यावहारिकत्वापात इत्यपि द्रष्टव्यम् । नन्ववान्तरतात्पर्यविषयत्वाविषयत्वाभ्याम् उक्तव्यवस्थापत्तिरित्यत आह । न च लक्षणेति । वेदतात्पर्यविषयत्वे तात्विकत्वं स्यादित्यपि द्रष्टव्यम् । किञ्च व्यावृत्तीनां सत्यत्वमिथ्यात्वविकल्पयोरनुपपत्तेर्नतद्बोधनेन सत्यादि पदसार्थक्यमित्याह । किञ्चेति । व्यावहारिकैरिति । न च बोध्यबोधकयोर्नसमसत्त्वनियमः । स्वप्नाङ्गनादेः स्वजन्यसुखविषमसत्त्वादिति वाच्यम् । स्वाप्नाङ्गनातद्ज्ञानादेर्मन्मते स्वजन्यसमसत्त्वेन दृष्टान्तासंप्रतिपत्तेः । साधितं च बोध्यबोधकयोः समसत्त्वमसतः साधकत्वभङ्गे । इतरेति । न चानृतादिव्यावृत्याकारेण ब्रह्मबोधनार्थमितरपदमतो न वैयर्थ्यमिति वाच्यम् । निर्विशेषेऽखण्डे आकारद्वयाभावात् । व्यवर्तकेति । न चेष्टापत्तिः । ब्रह्माभिन्नमेव सत्यत्वादिकमादाय ब्रह्मणो वाच्यत्वस्यापातात् । एवञ्च सत्यत्वादेस्तात्विकत्वे तत्रापि वेदमहातात्पर्यापत्याऽखण्डार्थत्वभङ्गात् । एवमिति । न च जडादिव्यावृत्याकारेण ब्रह्मबोधनार्थं ज्ञानादिकमिति वाच्यम् । दत्तोत्तरत्वात् । नांत्य इति । व्यावृत्तयो मिथ्येति पक्षे इत्यर्थः । शुक्तेरिति । न च व्यावृत्तिबाधकाबाध्यस्यैव प्रतियोगिनो व्यावृत्तसमसत्ताकत्वम् । प्रकृते तु व्यावृत्तितत्प्रतियोगिनोः एकबाधकबाध्यत्वात् नानृत्वादेर्ब्रह्मसमसत्त्वमिति वाच्यम् । व्यावृत्तितत्प्रतियोगिनोरेकबाध्यत्वस्यासिद्धेः । न च कल्पितरजते कल्पितरजतव्यावृत्तेर्मिथ्यात्वेऽपि कल्पितरजतस्य न ततोऽधिकसत्त्वमिति वाच्यम् । सति धर्मिण्यतद्व्यावृत्तिर्मिथ्या । तत्र व्यावृत्तिप्रतियोगिनस्तदधिकसत्त्वमित्यत्र व्यभिचाराभावात् । कल्पितरजतस्यासत्त्वात् । यत्र यद्व्यावृत्तिर्मिथ्या तत्र तत्त्वं धर्मिज्ञानाबाध्यमिति व्याप्तौ दोषाभावेन ब्रह्मणोऽनृतत्वादेस्तात्विकत्वापाताच्च । अधिष्ठानेति । नचाधिष्ठानतत्त्वसाक्षात्कारे उपायत्वेन तस्योपदेश इति वाच्यम् । मिथ्याभूतोपदेशस्य तत्त्वसाक्षात्कार उपायत्वादर्शनात् । न हि स्थूलारुन्धत्यादिकमद्यापि मिथ्येति सिद्धम् । त्वन्मते चिन्मात्रस्यैवाधिष्ठानत्वेन तस्यापाततस्तत्वमस्यादिवाक्यैर्वा स्वप्रकाशतया वा सिद्धत्वेन तत्रोपायत्वायोगाच्च । अत एवाह । नहीति । ब्राह्मण्यस्य सत्त्वेनेत्यन्वयः । द्वयोर्ब्राह्मण्ययोरित्यर्थः । परस्परविरुद्धयोरन्यतरस्य मिथ्यात्वेऽन्यतरस्य सत्यत्वनियमादित्यर्थः । असद्व्यावृत्तेरिति । न च नेहनानेत्यनेन तस्यापि निषेध इति वाच्यम् । तस्य लक्षणया स्वरूपमात्रपरत्वात् । वैपरीत्यस्यापि वक्तुं शक्यत्वाच्च । असद्वेत्यादेरत्यन्तापूर्वार्थत्वेन प्रबलत्वाच्च । नन्विति । तथा च द्वारत्वेन सत्यत्वादिबोधनान्नाखण्डार्थत्वहानिरिति भावः । द्वारत्वं हि तदा स्यात् यदि व्यावृत्याज्ञानं विना स्वरूपज्ञानमेव न स्यात् । न चैतदस्ति । तस्य ततः पूर्वमेव सिद्धत्वादित्यत आह । ब्रह्मस्वरूपमात्रस्येति । न च निष्प्रकारकब्रह्मज्ञानं पूर्वं न वृत्तं व्यावृत्यादिज्ञानादिभिः साध्यत इति वाच्यम् । निष्प्रकारकज्ञानस्य खपुष्पायमानत्वेन व्यावृत्तिज्ञानानपेक्षणात् । न हि निष्प्रकारकं ज्ञानं व्यावृत्तिज्ञानेन क्वापि भवतीति दृष्टमिति भावः । शाब्देऽथ इति । न च दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् । दृष्टान्ते स्वरूपमात्रतात्पर्याभावात् विशिष्टे तात्पर्यादार्थिकार्थस्य द्वारत्वं प्रकृते तु स्वरूपमात्रे तात्पर्यादार्थिकार्थं विना तदनुपपत्तेरार्थिकस्यापि

(कण्टकोद्धारः)

द्वारत्वमिति वाच्यम् । स्वरूपमात्रज्ञानस्यार्थिकार्थं विनाप्युपपत्तेरुक्तत्वात् । व्यावृत्तिज्ञानस्येति । न चान्यज्ञानप्रतिबन्धद्वारा शुद्धज्ञाने एव द्वारत्वमुक्तमिति वाच्यम् । अन्याज्ञानस्य ब्रह्मज्ञानकारणत्वे प्रमाणाभावेन तद्वारा ब्रह्मज्ञानद्वारत्वासंभवात् । व्यावृत्तिज्ञानमिति । स्वस्य स्वाज्ञाने द्वारत्वस्यादर्शनादिति भावः । प्राचीन इति । न च तदपरोक्षज्ञानं ब्रह्मरूपं व्यावृत्तिरूपं वा ? नाद्यः तस्याज्ञानाविरोधित्वात् । न द्वितीयः । आपातदर्शनजन्यस्य तस्याज्ञानाविरोधित्वात् । तथा च कथं तदज्ञानकार्यभानायोग इति वाच्यम् । उभयविधस्याप्यज्ञाननिवर्तकत्वमावश्यकम् । तदज्ञाननिवर्तकत्वे तत्साक्षात्कारत्वस्य तन्त्रत्वात् । तदन्याविषयत्वस्य गौरवेणातन्त्रत्वात् । तथा च कथं तदज्ञानकार्यभानम् । ब्रह्मेति । ब्रह्मणि पृष्टे व्यावृत्तिबोधने प्रश्नोत्तरयोर्वैयधिकरण्यमिति स्वोक्तदूषणस्य स्वस्मिन्नावेशादिति भावः । अन्यद्वेति । अन्यविशेषणविशिष्टमित्यर्थः । सविशेषत्वं सखण्डार्थत्वम् । वेदान्तानां स्यादिति शेषः । न चेति । कदाचिदसत्यव्यावृत्तिः कदाचिज्जडव्यावृत्तिः द्वारमिति न पदान्तरवैयर्थ्यमिति भावः । सत्यादिशब्दानामिति विकल्पसूचकवाशब्दादेरभावादिति भावः । अतत्त्वादीति । एकार्थास्तु विकल्पेरन् इति सूत्रे एकार्थानामेव विकल्पाभिधानादिति भावः ।

व्रीहियववदिति । द्वादशाध्याये तृतीयपादे तृतीयाधिकरणे चिन्तितम् । एकार्थास्तु विकल्पेरन् समुच्चये त्वावृत्तिः स्यात् प्रधानस्य । दर्शपूर्णमासयोः श्रूयते । व्रीहिभिर्यजेत यवैर्यजेतेति । तत्र सन्देहः – व्रीहियवयोः किं समुच्चय उत विकल्प इति पूर्वपक्षस्तु– समुच्चय एव युक्तः । सर्वाङ्गोपसंहारिप्रयोगवचनानुग्रहात् अष्टदोष दुष्टविकल्पपरिहारसंभवाच्च । न च समुच्चयोऽशक्य इति वाच्यम् । प्रधानाभ्यासेन वा मिश्रतासम्पादनेन वा समुच्चय सम्भवादिति । सिद्धान्तस्तु– न समुच्चयो युक्तः । स तु अभ्यासेन वा स्यात् मिश्रतासंपादनेन वा ? नाद्यः । अङ्गानुरोधेन प्रधानावृत्तेरन्याय्यत्वात् । न द्वितीयः । नियमविधिलब्धनैरपेक्ष्यानुपपत्तेः । तथा हि । व्रीहियवशास्त्रे हि नियमविधिः । सर्वथाऽप्राप्तार्थ-त्वाभावेनापूर्वविधित्वाभावात् । तत्र चान्यत्र च प्राप्त्यभावेन परिसङ्ख्यानुपपत्तेः । नियमविधौ चाप्राप्तांशपूरणे नेतरव्यवच्छेदः फलम् । तथा च कपालेषु श्रयतीति विधानादेव श्रयणकर्मतया यत्किञ्चिद्द्रव्यप्राप्तौ ताभ्यां विधिभ्यामप्राप्तांशपूरणेन सामान्यतः प्राप्तद्रव्यान्तरव्यवच्छेदः क्रियते । तथा च यवशास्त्रे यवेतरद्रव्यव्यवच्छेदः फलम् । तथा व्रीहिशास्त्रेऽपीति कथं मिश्रतासंपादनेन समुच्चयः । किञ्च मिश्रतासंपादने न कोऽपि शास्त्रार्थोऽनुष्ठित इति व्रीहियवशास्त्रमत्यन्तमप्रमाणं स्यात् । न हि मिश्रैर्यजतीति विधिरस्ति । तस्मात् विकल्पः । प्रयोगवचनंतु पुरोडाशप्रकृतितया व्रीहियवौ गृह्णत् पर्यायेणैव गृह्णातीति सावकाशम् । अष्टदोषदुष्टत्वं च सह्यम् । अनन्यगतिकत्वात् । अष्टदोषाश्च व्रीहिशास्त्रानुष्ठानकाले यवशास्त्रे स्वीकृतप्रामाण्यत्यागः अस्वीकृताप्रामाण्यपरिकल्पनं व्रीहिशास्त्रे स्वीकृताप्रामाण्यत्यागोऽस्वी-कृतप्रामाण्यपरिकल्पनमेवं यवशास्त्रानुष्ठानकालेऽपीति द्रष्टव्यम् । विज्ञानमिति । तथा च समुच्चितानां द्वारत्वकल्पनमप्रामाणिकमेवेति भावः ।

(कण्टकोद्धारः)

ननु आनन्दादय इति सूत्रे ब्रह्मप्रतीत्यर्थं शाखान्तरोपसंहारस्योक्तत्वेन तदभावे कथं ब्रह्मप्रतीतिरित्यत आह । आनन्दादय इति । न च निर्गुणब्रह्मप्रतिपत्तावेव गुणोपसंहार इति वाच्यम् । उपसंहारस्योपासनार्थत्वेन प्रतिपत्त्यर्थत्वाभावात् । गुणोपसंहारेण गुणबुध्या निर्गुणबुद्धिविरोधाच्च । न च मतान्तरप्राप्तातिव्याप्तिनिवृत्यर्थं समुच्चयापेक्षेति वाच्यम् । समुच्चयेऽपि मतान्तरातिव्याप्त्यनिरासात् । तदभावेऽपि सत्यत्वाभावप्रतिपादनेन अतिव्याप्तिनिराससंभवाच्च । ननु सत्यत्वादिसमुदायस्य लक्षणत्वान्नोपसंहारेण विना ब्रह्मबुद्धिरित्यत आह । सत्यत्वादेरिति । उपसंहरति । तस्मादिति । एतेन व्यावृत्तेर्द्वारत्वाभावप्रतिपादनेनेत्यर्थः । एतेनेति परामृष्टं हेतुमाह । काकवदिति । उपलक्षणस्य स्वप्रकारकस्वोपस्थाप्यधर्मप्रकारकबोधजनकत्वस्वभावात् व्यावृत्यादेरुपलक्षणत्वेन तत्प्रकारकस्य वा तदुपस्थाप्यधर्मप्रकारकस्य वा बोधस्यावश्यकत्वेनाखण्डार्थत्वहान्यापत्तिरित्यर्थः । किञ्च व्यावृत्तिज्ञाप्याभावाच्च न व्यावृत्तिरुपलक्षणमित्याह । उपलक्षणादिति । स्वोक्तेऽर्थेऽनुव्याख्यानसम्मतिमाह । तदुक्तमिति । नन्वत्र व्यावृत्तेर्द्वारत्वखण्डनं न प्रतीयत इत्यत आह । व्यावृत्येति । आर्थिकेनापीति । यथा तार्किकाणां मते निर्विकल्पकेन स्वरूपमात्रविषयीकरणेऽपि न तस्याखण्डत्वं सविकल्पकेन तस्य सखण्डत्वसिद्धेः तथेहापीत्यर्थः । न चेहार्थिकबोधस्याप्रामाण्यं व्यावृत्तिवैशिष्ट्यस्यासत्त्वेऽव्यावृत्तिप्रसङ्गादिति । अनन्तेति । न च व्यावृत्तेर्द्वारतया बोधनेऽपि तात्पर्यविषयबोधस्य न सखण्डविषयत्वमिति वाच्यम् । व्यावृत्तेर्द्वारत्वानुपपत्तेरसकृदुक्तत्वात् स्वरूपमात्रे तात्पर्यायोगस्यापि असकृदुक्तत्वाच्च । सत्यादिवाक्यस्य सत्यत्वादिविशिष्टेऽवश्यं तात्पर्यं वक्तव्यमन्यथा तेनासत्याद्यवृत्तिसिद्ध्ययोगादित्याह । शब्दस्येति । एतेन व्यावृत्तेर्द्वारत्वानुपपत्तिप्रतिपादनेनेत्यर्थः ।

वाक्ये लक्षणा स्वीक्रियते । वाक्यं तु पदसंघातरूपं यथा मीमांसकमते कृत्स्नेनार्थवादवाक्येन प्राशस्त्यं लक्ष्यते तथा प्रकृतेऽपीत्याह । नवीनास्त्विति । ननु तत्रापि न वाक्यलक्षणा किन्त्वेकपद एवेत्यत आह । तत्रापीति । तथा च गभीरनदीसम्बन्धितीरप्रतीत्यर्थं वाक्यलक्षणाया एव न्याय्यत्वादिति भावः । तत्रेति । नचैकस्मिन् ब्रह्मणि द्वारीभूतस्य परस्परार्थान्वयबोधस्य सत्यादिपदैर्जननात् उत्तरकालमेव लक्षणयाऽखण्डार्थबोधस्यांगीकारात् अत्रापि परस्परान्वयबोधोऽस्तीति वाच्यम् । गभीरा या नदीति वत् सत्यं यज्ज्ञानमिति सत्यज्ञानपदयोरन्वयाभावात् । सर्वेषां विशेषपदत्वेन विशेष्यब्रह्मणैवान्वयात् । ब्रह्मस्वरूपबोधस्य प्रागेव वृत्तत्वेन तत्र विशिष्टबोधस्य द्वारत्वानुपपत्तेश्च । सत्यमिति । न च गम्भीरनद्यभिप्रायेण यत्र नद्यां घोष इति वा गभीरायामित्येव वोक्तं तत्र सर्वत्र प्रत्येकं लक्षकत्वादनपेक्षता तु कल्प्येति वाच्यं तत्रापि विशिष्टलक्षणानभ्युपगमात् । गम्भीरपदेनेति । न च गम्भीरनदीसंबन्धित्वेन न लक्षणा युगपद्वृत्तिद्वयविरोधापत्तेः । वस्तुतो विशिष्टसंबन्धिनः प्रत्येकपदादपि लाभात् कथमधिकलाभ इति वाच्यम् । विशिष्टाप्रयोगे विशिष्टार्थप्रतीत्यभावेन तत्र तात्पर्यग्रहे विशिष्टप्रयोगे विशिष्टलक्षणयैव गम्भीरनदीसंबन्धितीरप्रतीत्या युगपद्वृत्तिविरोधाभावात् । मणिकारमते तस्यादोषत्वाच्च । अन्यथा प्रत्येकपदादधिकलाभासंभवात् दृष्टान्ते पदान्तरसार्थक्यम् । प्रकृते केवलगङ्गापदात् गम्भीरगङ्गासंबन्धि-

(कण्टकोद्धारः)

तीरप्रतीतिः स्यात् । तथा च तदभावाद्वैयर्थ्यमिति भावः । तत्रापीति । न च विनिगमकत्वसंभवाच्च । अत एव गङ्गेशेन पदद्वयलक्षणापक्षमुक्त्वा विशेष्यपद एव लक्षणोक्ता । प्रमाणविरोधाच्च न लक्षणाया वाक्यवृत्तित्वमित्याह । लक्षणापि हीति । न च वाक्यार्थान्वयानुपपत्त्यनिबन्धनत्वमुपाधिरिति वाच्यम् । वाच्यार्थान्वयेति विशेषणस्य पक्षमात्रव्यावृत्त्यर्थत्वेन पक्षेतरत्वात् । न च गौणी व्यावृत्तिः प्रयोजनम् । तस्या अपि पक्षतुल्यत्वात् । वाक्ये लक्षणायाः कुत्राप्यभावेन व्यभिचारोन्नायकत्वरूपदूषकताबीजाभावाच्च । उक्तन्यायमन्यत्रातिदिशति । एवमिति । अन्यत्र वाक्यलक्षणोदाहरणे इत्यर्थः । तदेवाह । गच्छगच्छसीति । नन्वत्र जन्मना मरणाक्षेपेपि न मरणे गमनहेतुत्वाक्षेपकत्वम् । शतवर्षानन्तरं जरादिनापि तदुपपत्तेरिति चेन्न । मरणसामान्यस्य गमनहेतुत्वानाक्षेपकत्वेऽपि जराद्यभावे यन्मरणं तस्य गमनहेतुत्वाक्षेपकत्वसंभवात् । न च न प्रियामरणहेतुत्वात् गमनाकर्तव्यत्वानुमानं तद्धेतोरपि तत्वज्ञानदशायां गुरुनिदेशादात्मत्राणार्थं वा कुलापकीर्तिपरिहारार्थं वा कर्तव्यत्वसंभवेन व्यभिचारादिति वाच्यम् । आज्ञाद्यप्रतिबन्धकाभावे प्रियामरणहेतुत्वस्य गमनाकर्तव्यत्वं प्रति हेतुत्वे व्यभिचाराभावात् । तथा च गमनस्य प्रियामरणहेतुत्वं गमनाकर्तव्यत्वं चोभयमानुमानिकमिति न लक्षणाकल्पनम् । अन्यथा वह्न्यभिप्रायेण धूमोऽस्तीत्युक्तेः धूमपदस्य वह्नौ लक्षणा स्यात् । किञ्च जन्मविशेषेण गमनहेतुभूतो मरणविशेष एवाक्षिप्यते । अन्यथा तत्प्रत्यायकजन्मपदप्रयोगवैयर्थ्यं स्यात् । जन्मविशेषश्च प्रकरणादेवावधार्यत इति न कश्चित् दोषः । वस्तुतः बलवद्बाधकोपनिपाताभावे प्रियामरणकारणीभूतं प्रेक्षावता न कर्तव्यमेवेति व्याप्तौ न कश्चिद्दोष इति । विषमिति । न च विषभोजनेष्टसाधनत्वेन शत्रुगृहान्नभोजनानिष्टसाधनत्वं नाक्षेप्तुं शक्यम् व्यधिकरणत्वात् । विषभोजनेष्टसाधनत्वेन विनापि यो शत्रुगृहान्नभोजनस्यानिष्टसाधनतासंभवेनोपपाद्योपपादक भावाभावाच्चेति वाच्यम् । शत्रुगृहान्नभोजने प्रसक्तेऽप्रसक्तस्यानिष्टसाधनस्य आप्तीया या इष्टसाधतोक्तिः सा प्रसक्तानिष्टसाधनत्वं विना नोपपद्यते । न ह्याप्तः वृथैवानिष्टसाधनस्येष्टसाधनत्वमाक्षिप्यत इत्युक्तम् । अस्तु वा लक्षणा तथापि पदद्वयलक्षणयैव शत्रुगृहभोजनस्यानिष्टसाधनत्वे लब्धे नानेकपदसमुदायरूपे वाक्ये लक्षणा। अनन्यलभ्यत्वाच्छब्दार्थस्येत्याह । यद्वेति । ननु पदद्वये लक्षणाद्वयं स्वीकर्तव्यम् । ततो वरं वाक्यलक्षणैव । एकत्वादित्यत आह । वस्तुत इति । नन्वेतावता आप्तकोपहेतुत्वात् परगृहभोजनं न कर्तव्यमित्युक्तम् । न च तद्युक्तम् । भ्रान्तादिनाक्रियमाणे व्यभिचारादिति चेन्न । प्रेक्षावता न कर्तव्यमिति साध्यकरणात् । तथा च कथं व्यभिचारः । बलवद्बाधकाभावे सतीति वा विशेषणम् । तेन नोक्तदोषः । तत्र भ्रान्त्यादेरेव बलवद्बाधकस्य सत्त्वात् । अर्धमिति । न च छिन्ने गृहे अन्तरालराहित्येऽपि तद्वयदर्शनाद्व्यभिचार इति वाच्यम् । अन्तरालवत्त्येव तादृशप्रयोगेन छिन्नत्वादिराहित्ये सति यत्रार्धस्यान्तस्त्वे सति अर्धस्य बहिस्त्वे तेन तादृशानुमाने बाधकाभावात् । उक्तन्यायं वैदिकोदाहरणेऽप्यतिदिशति । एवमिति । तथा च न क्वापि वाक्यलक्षणेति भावः ।

तृतीयाध्याये सप्तमपादे षष्ठाधिकरणे चिन्तितम् । तथा यूपस्य वेदिः । यूपे श्रूयते । अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि इति । तत्र संशयः – किमन्तर्वेद्येकदेशो संस्कृतो यूपाङ्गत्वेन चोद्यते उत

(कण्टकोद्धारः)
बहिर्वेदिसहितो यूपस्य मानदेशं लक्षयतीति । पूर्वपक्षस्तु– लक्षणाया अन्याय्यत्वात् वेद्येकदेशस्य श्रुतस्य यूपाङ्गत्वेन विधिः । अर्धे च तत्र मीयमाने अर्धान्तरं बहिरेव भवतीति अर्धं बहिर्वेदि इत्यनुवाद इति । सिद्धान्तस्तु– स्यादेवं यद्यर्धमेव अन्तर्वेदीति वाक्यार्थः स्यात् । नत्वेवम् । परिसङ्ख्यादोषात् । किन्त्वर्धं तावदन्तर्वेदि मातव्यमिति । ततश्चार्धान्तरं न विहितं न प्रतिषिद्धम् । तथा च तस्यान्तर्बहिर्वा मानं स्यात् । तत्रार्धं बहिर्वेदि इत्यपि विधातव्यम् । तत्र वाक्यभेदः । पाक्षिकानुवादत्वे नित्यवच्छ्रवणविरोधः । न चार्धमिति विशेषणात् अर्धान्तरस्य व्यावृत्तिः स्यात् । अस्तु विधितो व्यावृत्तिः । यत्र विशेषणं श्रुतं तत एवान्यव्यावृत्तिर्भविष्यति । वेदिमानविधेरर्धमिति विशेषणविधानादेवार्धान्तरं व्यावर्तते । इच्छातस्तु वेद्यामेव मानमर्धान्तरस्य को वारयेत् । तस्मात् तदर्थं बहिर्वेदीत्यपि विधातव्यमिति वाक्यभेदः । तस्मात् यत्र देशे मीयमानस्यार्धमन्तर्वेदि भवत्यर्धं बहिर्वेदि तत्र मिनुयादिति उभयलक्षितान्तरालदेशविधिरिति । अत्र यद्यपि मीमांसकैरन्तरालदेशस्य लक्ष्यत्वमुक्तम् । तथापि अनुमानेनैव तद्देशलाभसंभवे लक्षणा न युक्ता । अनन्यलभ्यत्वाच्छब्दार्थस्य । तथा च नात्रापि वाक्यलक्षणेत्यभिप्रायः । अत एव जिज्ञासापदेन विचारो लक्ष्यत इति विवरणोक्तं, यज्ञायुधिशब्देन यजमानो लक्ष्यत इति संक्षेपशारीरोक्तं चायुक्तमिति द्रष्टव्यम् । वाक्यलक्षणायाः सर्वत्राप्ययुक्तत्वात् ।

नन्वर्थवादवाक्यस्य प्राशस्त्यलक्षकत्वात् कथं वाक्ये लक्षणाभावः इत्यत आह । वायुर्वा इति । न च पदार्थसंसर्गमात्रबोधकत्वे वायुः शीघ्रतम इत्येव बोधः स्यात् । न कर्मप्राशस्त्यबोध इति वाच्यम् । इदं कर्म प्रशस्तं शीघ्रतमफलप्रदवायुदेवताकत्वात् इत्यनुमानादेव प्राशस्त्यज्ञानसंभवात् । तथा च न लक्षणा अनन्यलभ्यत्वाच्छब्दार्थस्येति भावः । अङ्गीकृत्य प्राशस्त्यलक्षकत्वमाह । किञ्चेति । न च तात्पर्यानुपपत्तिरेव लक्षणाबीजम् । सा चेह प्रकृतेऽप्यस्तीति वाच्यम् । स्वरूपमात्रे तात्पर्यायोगस्य बहुवारमुक्तत्वात् । कार्यान्वयेति परमताभिप्रायेण । ननु तच्छक्तत्वं वानुभावकतावच्छेदकम्? शक्तत्वमात्रं वा? नाद्यः । गौरवात् । न द्वितीयः । लाक्षणिक स्यापि यत्र कुत्रचित् शक्तत्वादिति चेन्न । शक्तत्वस्यानुभावकतावच्छेदकत्वेऽपि विशेषकारणताया आवश्यकत्वात् । अन्यथा विशेष्यसंनिकर्षत्वेन प्रत्यक्षकारणत्वे यत्किञ्चित्संनिकर्षात् यत्किञ्चित्प्रत्यक्षं स्यात् । न च यत्सामान्य इति न्यायात् नातिप्रसङ्ग इति यदि तदा प्रकृतेऽपि तुल्यमिति । न च पदानामननुभावकत्वेऽपि पदैरभिहितपदार्थस्यैव तत्स्यादिति वाच्यम् । वाक्यार्थान्वयबोधस्यानङ्गीकारात् । प्रकृतानुपयुक्तत्वाच्च । लक्ष्यार्थस्य शुद्धस्यानुभावकत्वासंभवाच्च। पदार्थानामनुभावकत्वे शब्दादर्थं प्रत्येमीत्यनुभवविरोधः । अतीतानागतानाञ्चानुभवप्राक्कालेऽसत्त्वेनानुभावकत्वासंभवाच्च । परंपरया शब्दमूलत्वेनानुभवोपपादने इन्द्रियादेरपि कारणत्वं न स्यादिति बहुविप्लवापत्तेरिति दिक् ।

ननु नद्यां घोष इत्यत्र घोषपदवत् ब्रह्मपदस्य वाचकस्य सद्भावादनुभवो भविष्यतीत्यत आह । यदि चेति । तत्रापीति । न च भोजनादि प्रयोजनकप्रवेशनज्ञान एव तात्पर्यज्ञानमुपजीव्यमिति वाच्यम् । तद्धेतुत्वेनावश्यकप्रकरणादिनैव तदुपपत्तेरिति । अस्तु तात्पर्यानुपपत्तिर्बीजं सापि प्रकृते न संभवतीत्याह ।

(कण्टकोद्धारः)

इहेति । एतेन । स्वरूपमात्रे तात्पर्यासंभवव्युत्पादनेनेत्यर्थः । ननु भाट्टैर्वाक्यलक्षणाङ्गीकारात् अनेकपदसमूहात्मकत्वाद्वाक्यस्य कथं लाक्षणिकस्याननुभावकत्वमित्यत आह । वाक्येति । ननु तर्हि कथमन्वयलाभ इत्यत आह । अन्वितेति । यथा च न वाक्यलक्षणा तथोक्तम् । नन्वभिहितान्वयवादिभिस्तार्किकैरन्वयलक्षणा स्वीकर्तव्यैव । तथा च कथं लाक्षणिकस्याननुभावकत्वमित्यत आह । अभिहितेति । समभिव्याहारादेवान्वयलाभसंभवात् तार्किकैरन्वयलक्षणा न स्वीक्रियत इति भावः । अन्वय इति प्रकृते च न प्रतियोग्युपस्थितिरिति भावः । गामिति । तथा चाधिकपदवैयर्थ्यमेवेति भावः । एवं सर्वत्र वाक्यलक्षणां दूषयित्वा सत्यादिवाक्यस्य कृत्स्नस्य लक्षकत्वनिष्टप्रसङ्गमाह । अस्तु चेति । न च मुख्यार्थबोधापेक्षया तदुक्तिरिति वाच्यम् । मुख्यार्थे तात्पर्याभावेन तेन तदसिद्धेः । तात्पर्ये वाऽखण्डार्थत्वव्याघातात् । लक्षणा च न स्यात् । विशिष्टार्थे तात्पर्ये तस्य तात्विकत्वं च स्यात् । वेदतात्पर्यविषयत्वात् । अनिष्टान्तरमाह । सत्त्वादीति । सगुणेति । न च तत्र मुख्यार्थ एव तात्पर्यमतो न लक्षणादिकमिति वाच्यम् । प्रश्नादि के समाने विनिगन्तुमशक्यत्वात् । अनिष्टान्तरमाह । तदैक्षतेति । अवान्तरार्थविवक्षया तथोक्तिरित्यादि तु निरस्तम् । अनिष्टान्तराण्याह । कृत्स्नस्येति । न च शून्यादिपरत्वे वेदाप्रामाण्यापत्तिरिति वाच्यम् । शुद्धपरत्वेऽपि तदापत्तेर्वज्रलेपत्वात् । तस्मान्न कृत्स्नं सत्यादिवाक्यं लक्षकमिति । एवमुपपादनसिद्धमर्थमुपसंहरति । तस्मादिति । किञ्च सत्यादिपदानां लक्षणयाऽखण्डार्थत्वे ब्रह्मणोऽसत्त्वाद्यापत्या सा न युक्तेति । शक्यार्थपरतैव स्वीकर्तव्या । तथा चाखण्डार्थत्वहानिरित्याह । अपि चेति । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं शङ्कते । नन्विति । तथा च न ब्रह्मणोऽसत्यत्वाद्यापत्तिर्नवा मुक्तेरपुमर्थत्वमिति भावः । व्यक्तिरिति । तथा च न दृष्टान्तदार्ष्टान्तिकवैषम्यमिति भावः । वस्तुतस्तु व्यक्त्यतिरिक्ता जातिरेव नास्ति प्रमाणाभावात् । अनुगतव्यवहारादेरभावादाविवोपपादयितुं शक्यत्वात् । किञ्च जातावेव शक्तावङ्गीक्रियमाणायां व्यक्तेर्लक्षणयाऽऽक्षेपेण वा लाभ इति वक्तव्यम् । न तु तद्युक्तम् । पदोच्चारणानन्तरं झडिति प्रतीतेः । समानसंवित्संवेद्यत्वाच्च । अत एव समानसंविद्वेद्यतया व्यक्तेर्लाभ इति गुरवः । व्यवहारादिना व्यक्तावेव शक्तेर्गृहीतत्वाच्च । तथा च न स्वाश्रयसंबन्धेन व्यक्तिलक्षणेति शक्यादन्यस्यैव लक्षणीयत्वेऽसत्यत्वाद्यापत्तिर्दुर्वारिति द्रष्टव्यम् ।

प्रकारान्तरेण वैषम्यं शङ्कते । नन्विति । तत्रेति । अत्रापि विशिष्टाविशिष्टयोर्भेदात् जहल्लक्षणैवेति न दृष्टांतवैषम्यमिति भावः । अस्तु वा जातिः शब्दार्थः तथापि न ब्रह्मणः सत्त्वादि सिद्धिरित्याह । जातिरिति। एतेनेति । सत्यादि शब्दलक्षणाया नदीपदलक्षणातुल्यत्वोपपादनेनेत्यर्थः । यद्वा एतेन वक्ष्यमाणेन सखण्डार्थत्वापातेनेत्यर्थः । लक्ष्यस्येति । विशिष्टस्य तात्पर्यविषयत्वे तस्य सत्यत्वापत्तिश्चेत्यपि द्रष्टव्यम् । सन् घट इत्यादितः सत्यादि लक्षणाया वैषम्यमाशङ्क्य निषेधति । न चेति । लक्षणाया इति तथा च ब्रह्मणो घटादि तुल्यत्वापातेन ब्रह्म पारमार्थिकं घटादिकं व्यावहारिकमिति व्यवस्था न स्यादित्यर्थः । उपलक्षणमेतत् । नियामकाभावेन व्यक्तिमात्रलक्षणायोगः व्यक्तिमात्रे तात्पर्यतन्मात्रलक्षणेति तु निरस्तम् । अन्यथा घटादावपि व्यक्तिमात्रं लक्ष्यत इति स्यादित्यपि द्रष्टव्यम् । ननु श्रुतेः सत्यत्वेऽपि

(कण्टकोद्धारः)

**तात्पर्यान्नातात्त्विकत्वमित्यत आह । श्रुतेरेवेति । अनेकधर्मिपरत्वात् । न हि धर्मधर्मिभावासहमखण्डार्थत्वं धर्मिभेदसहमिति भावः । वाच्येति । तथात्वे ब्रह्मणो वाच्यत्वेनैव श्रुतिप्रतिपाद्यत्वोपपत्तौ लक्षणाकल्पनमन्याय्यमिति भावः । ज्ञानपदादावुक्तयुक्त्यनुपपत्तिः । न च तत्रापि ब्रह्मणो ज्ञानत्वरूपत्वेनोपपत्तिरिति वाच्यम् । एकस्य परस्परविरुद्धजातिरूपत्वानुपपत्तेरिति । तत्र ज्ञानत्वसंबन्धाभावेऽज्ञानत्वापत्तिरित्यपि द्रष्टव्यम् । ब्रह्मण इति । न चाबाध्यत्वमेव सत्त्वमिति वाच्यम् । तस्यापि बाधनिरूप्यत्वेन परतन्त्रत्वादिति । एतेनेति । सत्तासंबन्धाभावे सत्स्वरूपानुपपत्तिप्रतिपादनेनेत्यर्थः । सच्छब्दस्येति । तत्र ब्रह्मणीत्यर्थः । तथा च न सत्ताजातिसाम्यम् । जातौ तस्य मुख्यत्वादिति भावः । ननु जाताविव ब्रह्मणोऽपि सत्स्वभावत्वं प्रमाणान्तरसिद्धमतः सत्तासंबन्धाभावेऽपि नानिष्टमित्यत आह । सत्तायामिव चेति । ननु परब्रह्मण्यपि सच्छब्दो मुख्य एवेत्यत आह । कथञ्चेति । तद्वदेवेति । तथा च ब्रह्मणो वस्तुतो सत्त्वाद्यापन्नमिति भावः । एवमनुपपन्ना सत्यादिवाक्यलक्षणा किमर्थमुक्तेत्यतस्तद्दर्शयन्नुक्तमर्थं कारिकया संगृह्णाति । एवञ्चेति । परमप्रमेयमुपसंहरति । तस्मादिति । इति सत्यज्ञानादिवाक्यस्याखण्डार्थत्वानुमानभङ्गः ।**

## न्यायामृतप्रकाशः

अप्रसिद्धेति । संसर्गागोचरप्रमाजनकत्वरूपसाध्यस्य कुत्राप्यप्रसिद्धत्वादिति भावः । प्रत्यक्षादौ साध्यप्रसिद्धिर्भविष्यतीति चेत्तत्राह । प्रत्यक्षादिनापीति । निर्विकल्पकस्याप्रामाणिकत्वादिति भावः । यदि सत्यत्वादीनां लक्षणत्वं स्यात् तदैव सत्यज्ञानादिवाक्यानां लक्षणवाक्यत्वं तदेवायुक्तं परजातिरूपसत्तायाः अपरजातिरूपज्ञानत्वादेश्च ब्रह्मव्यतिरिक्ते जगत्यपि सत्त्वेनातिव्याप्ततयाऽलक्षणत्वात् ततश्च लक्षण वाक्यत्वहेतोरसिद्धिरित्याशयेनाह । सत्यत्वेति । ननु सत्यत्वादिकं न सत्ताजात्यादिरूपं किं नाम अबाध्यत्वादिरूपमन्यदेव लक्षणत्वेन विवक्षितं तत्तु नातिव्याप्तमिति चेत् तत्किं तात्विकं वा धर्मिज्ञानाबाध्यं वा अतात्विकं वा । नाद्यद्वितीयौ ब्रह्मणि विद्यमानस्याबाध्यत्वादिरूपसत्यत्वस्यातात्विकत्वाद्धर्मिज्ञानबाध्यत्वाच्च । अतोऽसंभव एव स्यात् । नान्त्यः व्यावहारिकत्वापरपर्यायातात्विकाबाध्यत्वादिरूपसत्त्वस्याऽनात्मन्यपि सत्वेनातिव्याप्तेरलक्षणत्वादतोऽसिद्धिर्दुर्वारित्याह । अजातित्वेपीत्यादिना विरुद्धत्वं स्फोरयितुम् असाधारण-धर्मरूपेत्युक्तं तथा च साध्याभावेनैव व्याप्तत्वाद्विरुद्धत्वमित्यर्थः । ननु लक्षणं द्विविधं स्वरूपमतिरिक्तं चेति । तत्र स्वरूपलक्षणं लक्ष्यानतिरिक्तमेव तथाच तत्परत्वे लक्ष्यपरत्वमेव प्राप्तमिति नाखण्डार्थत्वविरोध इत्याशङ्क्य निराकरोति । न चेति । लक्ष्यमात्रत्वे लक्ष्येण निर्विशेषात्यन्ताभेदे । तथाच लक्ष्यलक्षणभावार्थं स्वरूपातिरेकेंऽगीक्रियमाणे सखण्डार्थत्वप्राप्त्या विरुद्धत्वमेवेति भावः । ननु स्वरूपलक्षणस्य कथं लक्ष्यातिरिक्त-त्वमित्यत आह । अतिरेकेपीति । यावत्पर्यन्तं लक्ष्यमस्ति तावत्पर्यन्तं सत्त्वेन स्वरूपलक्षणत्वसंभवादित्यर्थः । ननु सत्यज्ञानादिवाक्येन ब्रह्मस्वरूपबोधनायोदाहरणत्वेन लक्षणमुपादीयते पश्चाद्द्वारभूतं तल्लक्षणं परित्यज्य ब्रह्मस्वरूपमात्रमेव बोध्यत इति तत्रातात्पर्यान्न द्वारिणोऽखण्डार्थत्वविरोधीत्याशङ्क्य निराकरोति । न चेति ।

(प्रकाशः)

वक्ष्यमाणेति । सामान्यतोपि ब्रह्मस्वरूपाज्ञाने तद्धर्मिकसंशयाद्ययोगेन किं ब्रह्मेति प्रश्नाद्ययोगादित्यादि वक्ष्यमाणरीत्येत्यर्थः । लक्षणात् द्वारत्वेनोच्यमानात् । अज्ञातस्वरूपस्यैव द्वारेण बोध्यत्वादिति भावः । नहेतुरिति। येन तस्य सखण्डार्थत्वेनैव व्याप्त्या विरुद्धत्वं स्यादिति भावः । लक्षणपरत्वाभावेपि लक्षणप्रत्यायकत्वादखण्डार्थत्वमिति वक्तुं न शक्यते । नीलमुत्पलमित्यत्राऽतिव्याप्तत्वेन नीलत्वस्यालक्षणत्वेनैतद्वाक्यस्य लक्षणपरत्वाभावाल्लक्षणप्रत्यायकत्व सद्भावेनाखण्डार्थत्वाभावाद्व्यभिचारः स्यात् । नचातत्परस्य तत्प्रत्यायकत्वं कथमिति वाच्यम् । तात्पर्यभ्रमादिनोपपत्तेरित्याह । अलक्षणेति । एवं विरुद्धत्वमुक्त्वाऽनैकांत्यं चाह । सखण्डेति । वनादीनां संसृष्टरूपत्वादित्यर्थः । किमिति । कश्चन्द्र इति चन्द्रस्वरूपमात्रे पृष्टे प्रवृत्तस्य प्रकृष्टादिलक्षणवाक्यस्य स्वार्थे तात्पर्याभावेपि किं चन्द्रलक्षणमित्यसाधारणधर्मस्यैव प्रश्ने सति प्रवृत्तस्य प्रकृष्टादिवाक्यस्य लक्षणपरत्वावश्यं भावाद्व्यभिचारः स्यादेवेत्यर्थः । अखण्डेति । अखण्डस्य यल्लक्षणं तद्वाक्यत्वं हेतुत्वेन विवक्षितं तथाच सखण्डवनादिलक्षणवाक्येन व्यभिचार इति भावः । असिद्धेरिति । ब्रह्मस्वरूपमात्रस्य सिद्धत्वान्नस्वरूपमात्रे प्रश्नः । अन्यथा प्रश्नस्यैवासंभवात् अतः कैर्विशेषणैर्विशिष्टं ब्रह्मेत्येवं सखण्डस्यैव ब्रह्मणः प्रश्ने सत्यादिवाक्यस्य प्रवृत्तत्वेन अखण्डलक्षणवाक्यत्वं वक्ष्यमाणरीत्यासिद्धमित्यर्थः । ननु किं चन्द्रलक्षणमित्यसाधारणधर्मप्रश्नोत्तरे प्रकृष्टादिवाक्ये न व्यभिचारः तस्यापि चन्द्रस्वरूपमात्र एव तात्पर्याङ्गीकारेण लक्षणपरवाक्यत्वरूपहेतोरेवाऽभावादित्यत आह । नचेति । प्रश्नोत्तरयोर्वैयधिकरण्यान्यथानुपपत्तिरूपयुक्त्यैव लक्षणपरत्वस्य सिद्धत्वादित्यर्थः । ननु किं चन्द्रलक्षणमित्यसाधारणधर्मप्रश्नोत्तरे प्रकृष्टादिवाक्ये व्यभिचारस्तदा स्यात् । यदि किं चन्द्रलक्षणमित्यसाधारणधर्म प्रश्नस्येदमुत्तरं स्यात् । न चैवम् । उत्तरत्वे प्रश्नविशेष्यविशेष्यकत्वस्यैव तन्त्रत्वात् । अत्र प्रश्नस्य चन्द्रलक्षणाविशेष्यकत्वात् प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्य च चन्द्रविशेष्यकत्वात् । अतो नाऽत्रव्यभिचार इत्यत आह । न चेति । तन्मूलेति । प्रश्नमूलभूतेत्यर्थः। तथा च चन्द्रविशेष्यकेऽस्मिन्वाक्ये प्रयुक्तेपि किं चन्द्रलक्षणमिति प्रश्नहेतुभूतसंशयस्य निवर्तमानत्वेनोत्तरत्वं युक्तमिति स्यादेवव्यभिचार इति भावः । वेदान्तवाक्ये साध्याभावनिश्चायकान्यथानुपपत्तेर्बाधकत्वोपयुक्तं बलवत्त्वमुपपादयितुमुक्तम् । धर्मिज्ञानेत्यादि । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशया' इति प्रमाणेन ब्रह्मज्ञानस्य संशयनिरासकत्वेन प्रमितत्वात् सप्रकारकसंशयनिवर्तकं च ज्ञानं सप्रकारकमेव न धर्मिज्ञानमात्रं तस्य पूर्वमेवसिद्धत्वादित्याशयेनोक्तम् । धर्मिज्ञानेति । संशयादिनिवृत्त्यापि किं प्रयोजनमिति न वाच्यमित्याशयेनोक्तम् । मोक्षहेतुमिति । साध्येति । संसर्गप्रकारकज्ञानजनकत्वस्यैव निश्चयादित्यर्थः । संमतवदिति । अग्निहोत्रादिवाक्यतात्पर्यविषयवदित्यर्थः । परेण सार्वज्ञादिधर्मसंसर्गस्य वेदतात्पर्यविषयशुद्धब्रह्मज्ञानबाध्यत्वेन मिथ्यात्वाङ्गीकारादाह । स्वतात्पर्यविषयेत्यादि । ननु विषं भुंक्ष्वेति प्रमाणवाक्ये स्वतात्पर्यविषयभूतं यज्ज्ञानं द्विषदन्नं न भोक्तव्यमिति ज्ञानं तेनाबाध्यो यः संसर्गः विषकर्मकभोजनक्रियारूपसंसर्गस्तत्र तात्पर्याभावेन तत्परत्वाभावाद्व्यभिचारः स्यादत आह । स्वकरणकेत्यादि । तथाच न व्यभिचारः स्वतात्पर्यविषयज्ञानाबाध्यसंसर्गः विषकर्मकभोजनक्रियासंसर्गरूपो वा(च्यार्थ)क्यार्थसंसर्गो न विवक्षितः येन तत्परत्वाभावेन व्यभिचारश्चोद्येत किंनाम तस्मिन् स्वतात्पर्यविषयज्ञानाबाध्यसंसर्गे स्वकरणकेत्यादिकं विशेषणं विवक्षितं तथाचाऽस्य वाक्यस्य लिङ्गत्वेन एतद्वाक्यकरणिका या प्रमितिर्द्विषदन्नं न भोक्तव्यमित्येवं रूपा तद्विषया ये पदार्थाः शास्त्रीयपदार्थास्तन्निरूप्यो यः संसर्गस्तत्परत्वसद्भावेन न व्यभिचार इत्यर्थः । नन्वेवं खं च्छिद्रं कोकिलः पिक

(प्रकाश:)

इत्यादिपर्यायशब्दप्रतिपादके प्रमाणवाक्ये संसर्गपरत्वस्यैवाऽभावेनोक्तसाध्याभावाद्व्यभिचार इत्यत आह । खंच्छिद्रमिति । तत्रापि च्छिद्रशब्दवाच्ये खशब्दवाच्यत्वं कोकिलशब्दवाच्ये पिकशब्दवाच्यत्वमेव विधीयत इति तत्रापि वाच्यार्थसंसर्गपरत्वस्य सत्वान्नव्यभिचार इत्यर्थः । किंच प्रकृष्टवाक्यस्य मुख्यवृत्त्याऽखण्डार्थत्वम् उत भागत्यागलक्षणया वा लक्षणापि अन्वयानुपपत्त्या तात्पर्यानुपपत्त्या वा । नाद्यः मुख्यवृत्त्या सखण्डार्थस्यैव प्रतिपादकत्वेन अखण्डार्थानुपस्थितेः । द्वितीये न प्रथम इत्याह । चन्द्रादाविति । प्रकाशो गुण इति द्रव्यमिति च मतद्वयसद्भावादाह । गुणेत्यादि । द्वितीये द्वितीयमाशङ्क्य निराकरोति । नापीति । तात्पर्यानुपपत्तिमुपपादयति । कश्चन्द्र इति । तथाच स्वरूपमात्र एव तात्पर्यम् । अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यं स्यादिति भावः । स्यादियं तात्पर्यानुपपत्त्या लक्षणा यदि चन्द्रस्वरूपमात्रविषयः प्रश्नः स्यान्नचैवं कुत इत्यत आह । अस्तीति । चन्द्रस्वरूपमात्रप्रश्नमङ्गीकुर्वता चन्द्रस्वरूपं न ज्ञातमित्येव वक्तव्यं ज्ञातमित्यङ्गीकारे तत्र संदेहायोगेन प्रश्नस्यैवायोगात् ओमिति चेत्तत्राह । अस्तीति । तत्र चन्द्रविषये । धर्मी चन्द्रः । बुभुत्सायाः तत्स्वरूपं बोद्धुमिच्छायाः । चन्द्रशब्दार्थाज्ञानेन स्वरूपमात्रप्रश्नाङ्गीकारे दूषणान्तरमाह । चन्द्रेति । कश्चन्द्र इति चन्द्रशब्दे सु इति प्रथमाविभक्तिः प्रयुज्यते सोरुत्वे विसर्गे च सति चन्द्र इति जातत्वात् । सुब्विभक्तिश्चङ्याप्प्रातिपदिकात् इत्यधिकृत्य स्वौजसमौडित्यादिना प्रातिपदिकोपर्येव विहिता प्रातिपदिकत्वं चार्थवत्त्वगर्भम् 'अर्थवदधातुरप्रत्ययः प्रातिपदिक'मिति सूत्रात् अतः कश्चन्द्रेत्यस्य प्रातिपदिकत्वाज्ञाने सुब्विभक्तिप्रयोग एव न स्यात् प्रेक्षावत्प्रयोगस्य ज्ञानपूर्वकत्वात् अतः कश्चन्द्र इति पृष्टवतश्चन्द्रशब्दार्थज्ञानमस्तीत्यङ्गीकार्यमित्यर्थः । चन्द्रस्वरूपाज्ञानेऽनुवादः कुतो न युक्त इत्यत आह । नहीति । स्वरूपद्वयेति । संकीर्णासंकीर्णचन्द्रस्वरूपद्वयेत्यर्थः । तदेवेति । धर्मित्वेन ज्ञातमेवेत्यर्थः । असङ्कीर्णत्वेनेति । इतरव्यावृत्तत्वेनेत्यर्थः । अन्यतरेति । व्यावर्तकधर्मवैशिष्ट्यं वा तत्साध्यव्यावृत्तिवैशिष्ट्यं वाऽसङ्कीर्णत्वमित्यर्थः । विशिष्टेति । तथाच कश्चन्द्र इत्यस्य निरुक्तासङ्कीर्णचन्द्रस्वरूपं किमिति प्रश्नार्थः स्यात् तथाच प्रश्नस्य विशिष्टपरत्वमेवेति साध्यवैकल्यमिति भावः । उक्तप्रमेयं श्लोकद्वयेन संगृह्णाति । एवं चेति । एवं कश्चन्द्र इति प्रश्नस्याखण्डार्थविषयत्वं निराकृत्य प्रश्नस्य तदभावादेव प्रकृष्टप्रकाश इत्यादिप्रतिवचनमपि नाखण्डार्थप्रतिपादनपरमित्याह । एवमित्यादिना । तात्पर्यत इति । यस्मिन्कस्मिंश्चिचन्द्रस्वरूप एव तात्पर्यापत्तेरित्यर्थः । बोधनात् बोधापत्तेः । ननूक्तवाक्यस्य प्रकर्षादिविशिष्टे तात्पर्याभावेपि तद्वाक्यात्प्रकर्षादिविशिष्ट एव तात्पर्यं प्रतीयतेऽतः कथमुच्यते यः कश्चिचन्द्र इत्येव बोधः स्यादिति तत्राह । अतात्पर्येति । प्रतीतस्य प्रकृष्टत्वादेः । वस्तुत इति । वस्तुतो यः कश्चित्तस्यैव चन्द्रत्वं स्यात् । प्रकृष्टत्वादिविशिष्टस्य चन्द्रत्वसिद्धिश्चानुभवसिद्धा सा न स्यादिति भावः । इष्टापत्तिरिति चेत्तत्राह । तात्पर्येति । अयं प्रकृष्टत्वादिलक्षणविशिष्टश्चन्द्र इत्यत्रप्रकृष्टत्वादिविशिष्टत्वरूपं लक्षणमुद्देश्यं चन्द्र इति लक्ष्यं विधेयमित्यस्ति । अयं विभागस्तात्पर्यविषयेऽखण्डे न स्यात् अखण्डे विभागाङ्गीकारे च तन्नियततद्भेदस्यापि प्राप्तेरिति भावः । ततोपि किमित्यत आह । तात्पर्यत इति । यत्किञ्चिदिति ज्ञाने सत्यपि चन्द्रत्वेन बुभुत्साप्रश्नयोरनुच्छेदात्प्रकृष्टादिवाक्यस्य तदुत्तरत्वं च न स्यादित्यर्थः । लक्षणेति । गोघटादिसमस्त-पदार्थलक्षणेत्यर्थः । तेन तेन सास्नादिमानित्यादिलक्षणवाक्येन इयं गौर्नवाऽयं घटो न वेत्यादिभिन्न-

(प्रकाशः)

भिन्नप्रकारकसंशयनिवृत्तिरनुभूयमाना न स्यात् । कुत इत्यत उक्तम् । प्रकारेति । भिन्नभिन्न-प्रकारविषयकत्वाभावेनेत्यर्थः । प्रकारभेदावगाहित्वे लक्षणवाक्यानामखण्डार्थत्वं व्याहन्येतेत्याशयः । प्रश्नोत्तरे इति । प्रश्नोत्तरयोर्वैयधिकरण्यान्यथानुपपत्त्या विशिष्टपरत्वं विहाय चन्द्रप्रातिपदिकार्थमात्र परत्वं तावत्सिद्धमस्ति तत्रावाभ्यां चन्द्रप्रातिपदिकार्थ एव क इति विचार्यं भवति । तत्र प्रकृष्टप्रकाशत्वरूपविशेषणविशिष्ट एव तावन्न चन्द्रप्रातिपदिकार्थः । तथात्वे प्रकृष्टप्रकाशश्चन्द्र इत्यनयोः पर्यायत्वापत्त्या सहप्रयोगायोगात् अतः प्रकृष्टत्वादिविशेषणसाधारणविशेष्यभूतव्यक्तिमात्रमेव चन्द्रप्रातिपदिकार्थ इति वक्तव्यं तथा च विशेष्यव्यक्तिमात्रस्य चाखण्डत्वेन प्रश्नोत्तरयोरखण्डार्थत्वसिद्धिरिति केन चिदुक्तं युक्ततरमप्येतेनैव निरस्तमित्यर्थः । अस्या एवेति । सत्यमेवं विशेष्यव्यक्तिरेव चन्द्रप्रातिपदिकार्थ इति । तथापि प्रश्नस्य नाखण्डार्थत्वम् एतस्या एव साधारणव्यक्तेर्व्यावर्तकवैशिष्ट्यरूपेण व्यावृत्तिवैशिष्ट्यरूपेण चाऽसाधारण्येनाज्ञानेपि तत्र चन्द्रप्रातिपदिकार्थ-त्वरूपधर्मस्यैव सत्वेन तादृशधर्मवत्तया पूर्वं ज्ञातत्वेन प्रश्नस्याखण्डार्थत्वाभावात् एवञ्च कश्चन्द्र इति प्रश्नस्य चन्द्रप्रातिपदिकार्थत्वविशिष्टः किंलक्षणविशिष्ट इत्यर्थकत्वेन विशिष्टपर एव प्रश्न इत्यर्थः । ननु तर्ह्युत्तरासङ्गतिः । तत्रहि प्रकृष्टप्रकाश इति लक्षणमुद्दिश्य चन्द्रत्वं विधेयमिति प्रतीयते चन्द्रत्वं च चन्द्रप्रातिपदिकार्थत्वरूपं तथाच प्रकृष्टप्रकाशश्चन्द्रप्रातिपदिकार्थ इति विधानं न संभवति प्रकृष्टत्वादौ विशेषणे चन्द्रप्राति-पदिकार्थत्वान्वयाभावादिति चेत्तत्राह । एवं चेति । यथा गामानयेत्यत्र आनयनान्वयस्य गोत्वेऽसंभवात् तदाश्रयव्यक्तावेवानयनान्वयोङ्गीकृतोस्ति एतावता गोत्वं न त्यज्यते तस्योद्देश्यतावच्छेदकत्वेन विवक्षितत्वात् एवं प्रकृष्ट प्रकाशत्वविशिष्टे चन्द्रप्रातिपदिकार्थत्वबोधनेपि प्रकृष्टत्वादौ तदन्वयाभावेपि प्रकृष्टप्रकाशत्वादिकं न त्यज्यते उद्देश्यं यद्विशिष्टं तस्याऽवच्छेदकत्वेन विवक्षितत्वादित्यर्थः । तद्वदेवेति । प्रश्नवदेवेत्यर्थः । क्वचिदुद्देश्य-तावच्छेदकीभूतलक्षणस्य विधेये नान्वयोस्तीत्याह । अस्तिचेति । पृथिवीत्ववती व्यक्तिः पृथिवी पृथिवीशब्दवाच्या पृथिवीप्रातिपदिकार्थ इति यावत् । नन्वत्रोद्देश्यतावच्छेदके पृथिवीत्वे कथं पृथिवीशब्दार्थत्वान्वय इत्यत आह । न हीति । ननु पृथिवीत्वस्यापि पृथिवीशब्दार्थत्वे पृथिवी पृथिवीत्ववतीशब्दयोः पर्यायत्वापत्त्या पृथिवीत्ववती पृथिवीति सहप्रयोगो न स्यात् । पृथिवीत्ववती पृथिवीत्ववतीति प्रयोगायोगादित्यत आह । सहेति । तथाच पृथिवीत्ववती पृथिवी पृथिवीति व्यवहर्तव्येत्यर्थः । अयं न्यायः प्रमाणमित्यादौ सर्वत्रापि द्रष्टव्यः । नन्वथापि व्यावर्तकादिधर्मविशिष्टपरत्वं प्रश्नादेः कथं किन्तु नक्षत्रादिव्यावर्तकधर्ममात्रविषये व्यावृत्तिरूपधर्ममात्रविषये वा प्रश्नोस्त्वित्याशङ्कां नक्षत्रादि व्यतिरेकमात्रस्यापि सिद्धत्वान्नव्यतिरेकमात्र इति भगवत्पादवाक्यं मनसि निधाय परिहरन्नुपसंहरति । तस्मादिति । संशयादिधर्मिणश्चन्द्रस्य प्रागेव ज्ञातत्वादित्यन्वयः । तथाच न चन्द्रस्वरूपमात्रे प्रश्न इत्याशयः । चन्द्रस्वरूपमात्रवत् नक्षत्रादिव्यावर्त्तकधर्मस्यापि घटत्वादौ तदधीनव्यावृत्तेश्च घटादौ ज्ञातत्वान्न तदुभयमात्रे प्रश्नः किन्तु तद्व्यावर्त्तकधर्मविशिष्टं तत्साध्यव्यावृत्तिविशिष्टं वा चन्द्रस्वरूपं किमिति विशिष्टविषय एव प्रश्नः तथाचोत्तरमपि विशिष्टविषयमेवेत्यर्थः । ननु यदा व्यावृत्तिविशिष्ट विषयकः प्रश्नस्तदा प्रकृष्टत्वादिरूपव्यावर्तकधर्मकथनमसङ्गतमिति मन्दाशङ्कायामाह । तत्रेति । साक्षादिति । व्यावर्तकधर्म-वैशिष्ट्यकथनं विनेत्यर्थः । व्यावृत्तेर्दुर्बोधत्वात् बोधयितुमशक्यत्वादित्यन्वयः । ननु तर्हि व्यावर्तकधर्मोक्तौ

(प्रकाशः)

व्यावृत्तिः कथं सुबोधेत्यत आह । धूमे इति । ननु व्यावर्तकधर्मकथनपरस्य प्रकृष्टादिवाक्यस्य व्यावृत्तिबोधन एव तात्पर्यान्नव्यावर्तकधर्मे तात्पर्यमित्यत आह । नहीति । यागाक्षेपकस्येति । 'यदाग्नेयोऽष्टाकपाल' इत्यत्र द्रव्यदेवतास्वरूपाभिधानेन याग आक्षिप्यते एवं च यागबुबोधयिषयोच्चरितस्यापि वाक्यस्य द्रव्यदेवतासंबन्धेपि तात्पर्यमस्त्येव तद्वदित्यर्थः । अशक्या व्यावृत्तिः । सुतरामिति । व्यावर्तकवैशिष्ट्यस्य साक्षात्पृष्टत्वादित्यर्थः । इतोपि न स्वरूपमात्र प्रश्न इत्याह । असाधारणेति । किंलक्षणक इति । किं लक्षणकश्चन्द्र इत्यसाधारण-धर्मविषयकप्रश्नस्य यादृशम् उत्तरं तादृशोत्तरस्यात्रापि सत्त्वादित्यादि द्रष्टव्यं 'कतरकतमौ जातिपरिप्रश्ने' 'द्वयोरेकस्य डतरच्' इति सूत्रद्वयं मनसि निधायाह । कतम इत्यादि । जातिविषयस्य प्रश्नोत्तर इवेति संबन्धः तथाच कश्चन्द्र इति प्रश्नोऽसाधारणधर्मविषयोभवितुमर्हति तादृशप्रश्नोत्तरसमानोत्तरवत्वात् किं लक्षणकश्चन्द्र इति प्रश्नोत्तरवदित्यनुमानं द्रष्टव्यम् । नन्वसाधारणधर्मसूचकपदवत्त्वमुपाधिरित्यत आह । प्रश्नेपीति । प्रकृष्टो वा प्रकाशरूपो वा प्रकृष्टप्रकाशरूपोवेति धर्मविषयविकल्पसूचक किं शब्दप्रयोगादित्यर्थः । तथाच साधनव्यापकत्वा-न्नायमुपाधिरिति भावः । धर्मवाचीति । यदि कश्चन्द्र इत्ययं धर्मविषयकः प्रश्नः स्यात्तर्हि प्रश्नवाक्ये कश्चन्द्र धर्म इति धर्मवाचिपदं श्रूयेत तन्नास्तीत्यतो नायं धर्मविषयः प्रश्नः किन्तु स्वरूपमात्रविषय एवेत्येतदप्येतेनैव निरस्तम्। किं शब्दस्यैव धर्म बुभुत्सासूचकत्वादित्यर्थः । प्रत्युत प्रश्ने साक्षाद्धर्मपदसत्त्वेऽनिष्टमापद्यत इत्याह । तथात्व इति । चन्द्रधर्मस्य सामान्यतोऽज्ञाने कश्चन्द्र धर्म इति जिज्ञासाद्ययोगात् । कश्चन्द्रधर्म इति प्रश्नस्य चन्द्रधर्मे व्यावृत्तिवैशिष्ट्यं वा व्यावर्तकवैशिष्ट्यं वा विषयः उत्तरवाक्ये च चन्द्र धर्मस्यैव व्यावृत्तिर्व्यावर्तकं वा वाच्यं पृष्टप्रतिवचनस्येव वक्त्राऽपेक्षितत्वात् न तु चन्द्रव्यावर्तकं प्रकृष्टप्रकाशादिकम् अनपेक्षितत्वादित्यर्थः । असाधारणधर्मरूपलक्षणप्रश्नोह्ययमित्यत्र हेत्वंतरमाह । चन्द्रेति । अतः कश्चन्द्र इत्ययमसाधारणधर्म एवेति भावः । प्रश्ने असाधारणधर्मवाचिपदं नेत्यत्र परिहारान्तरमाह । चन्द्रेति । अतश्चन्द्र स्वरूपमात्रे प्रश्नायोगेन धर्मवाचिपदाभावेपि तद्वद्विषयकत्वं प्रश्नस्य कल्पनीयमिति भावः । ननु कथमसाधारणधर्मरूपलक्षणप्रश्नोयं तत्सूचकपदाभावादित्यत आह । लक्षणयावेति । ननु प्रश्नप्रतिवचनवैयधिकरण्यान्यथानुपपत्त्या चन्द्रस्वरूपज्ञापन-मेवैतदित्यत आह । चन्द्रेति । तथाच न स्वरूपमात्रे प्रश्न इति भावः । ननु प्रकृष्टत्वादिविशिष्टे चन्द्रव्यवहारः कर्तव्य इत्येतदुक्तं चन्द्रव्यवहारोनाम चन्द्ररूपार्थविशिष्टो व्यवहारः तत्र पृच्छामः चन्द्ररूपोऽर्थो ज्ञातो न वेति । आद्ये वाक्यवैयर्थ्यं द्वितीये तु चन्द्ररूपार्थस्यैवाज्ञाने विशेषणज्ञानाभावात्तद्विशिष्टव्यवहारस्य कर्तव्यताबोधनमपि कर्तुं न शक्यतेऽतः कथमेतदित्यत आह । चन्द्रव्यवहार शब्देन चेति । तथाच प्रकृष्टादिविशिष्टस्वरूपे चन्द्रशब्दो व्यवहर्तव्य इत्यर्थः । नन्वेतावता चन्द्रशब्दव्यवहारस्य कर्तव्यतालक्षणवाक्येन ज्ञाप्यत इत्युक्त्या व्युत्पत्त्यर्थं लक्षणवाक्यमित्युक्तं स्यात् ओमिति चेत् वृद्धव्यवहारादेव व्युत्पत्त्युपपत्तौ लक्षणवाक्यस्य वैयर्थ्यादित्याशंक्य निषेधति । नचैवमिति । अस्यापि लक्षणवाक्यस्यापि । आप्तवाक्यत्वेन बोधकत्वस्योक्तत्वादित्यर्थः । उपायान्तरत्वादिति ।

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धा'

(प्रकाशः)

इति वचनादिति भावः । मानान्तरेति । ज्योतिर्मण्डलदर्शनेन तत्रत्यचन्द्रतद्गतप्रकाशयोर्योग्यतया प्रश्नसमये प्रत्यक्षेण तदुभयवैशिष्ट्यस्य सिद्धत्वेनापूर्वताया अभावान्न तद्वैशिष्ट्यं लक्षणवाक्येन बोध्यते किं नाम चन्द्रसिद्धौ चन्द्रस्वरूपज्ञाने द्वारतया द्वारत्वेनोपायमात्रे तस्मिंस्तात्पर्यं नास्तीत्येतदप्यनेनैव निरस्तम् । सामान्यतः सिद्धत्वेपि विशेषतो व्यावर्तकस्य वा व्यावृत्तेर्वा व्यवहारकर्तव्यतायां वा वैशिष्ट्यस्य प्रत्यक्षेणासिद्धत्वेन शब्देनैव बोध्यतया लक्षणवाक्यस्य तत्र तात्पर्यसद्भावस्योपपादितत्वादित्यर्थः । दूषणान्तरं चाह । मानान्तरेणेति । चन्द्रप्रातिपदिकार्थत्वरूपप्रकाशवैशिष्ट्ययोः सामानाधिकरण्यग्रहे प्रत्यक्षस्यासामर्थ्यादित्यर्थः । सुतरामिति । तथाचोपायात्पूर्वमेवोपेयचन्द्रस्वरूपस्य सिद्धत्वान्नोपायोपेयभाव इति भावः । आद्यानुमानं सत्यादि वाक्यस्याखण्डार्थत्वसाधकं लक्षणवाक्यत्वानुमानमित्यर्थः । द्वितीयमिति तत्प्रश्नोत्तरत्वादिति द्वितीयानुमान-मपीत्यर्थः । असिद्धिं चाह । प्रकृष्टादीति । प्रकृष्टादिवाक्ये उक्ता या रीतिस्तयेत्यर्थः । बुभुत्सेति । धर्मिज्ञानसाध्येति शेषः । ननु किंब्रह्मेति स्वरूपमात्रस्य पृष्टत्वात्तन्मात्रप्रश्नोत्तरत्वं नासिद्धमिति चेत्तत्राह । इहचेति । सत्यादिवाक्य इत्यर्थः । क्लृप्तस्येति । लोके यथा कश्चंद्र इति क्रियमाणः प्रश्नः क्लृप्तोस्ति तथात्रोपनिषदिक्लृप्तः श्रूयमाणः प्रश्नो नास्तीत्यर्थः । क्लृप्तस्याभावेपि स्वरूपमात्रविषयः प्रश्नः कल्प्यत इति चेत्तत्राह । कल्प्यस्य चेति । स्वरूपमात्रविषयप्रश्नं परिकल्प्य तदुत्तरभूतसत्यादिवाक्यस्यापि प्रश्नोत्तरवै-यधिकरण्यान्यथानुपपत्त्या स्वरूपमात्रे तात्पर्यं प्रकल्प्य सत्यत्वादावतात्पर्यं कुतः कल्पनीयं सत्यादि धर्मप्रतिपादकक्लृप्तोत्तरानुसारेण मोक्षसाधनज्ञानविषयं ब्रह्म किं विशेषणविशिष्टमिति धर्मविषय एव प्रश्नः कल्प्यतामित्यर्थः । किंच तत्पदार्थशोधकसत्यादिवाक्यवत् त्वंपदार्थशोधकस्य 'योयं विज्ञानमय' इत्यादि-वाक्यस्यापि अखण्डार्थत्वसाधनं त्वदभिप्रेतं तत्र तन्मात्रप्रश्नोत्तरत्वहेतोरसिद्धिः सत्यादिवाक्ये क्लृप्तप्रश्नाभावेन स्वरूपमात्रविषयकप्रश्नकल्पनेन कथं चिद्भागेऽसिद्ध्यभावेपि 'योयं विज्ञानमय' इत्यादिवाक्यमूलभूतः प्रश्नो धर्मविषय एव क्लृप्तोस्तीति न त्वंपदार्थस्वरूपमात्रप्रश्नोत्तरत्वं 'विज्ञानमय' इत्यादिवाक्यस्यातो भागासिद्धिरित्याह। कतम आत्मेत्यत्रेत्यादिना । बहूनामिति । बहूनां जातिपरिप्रश्ने डतमच्प्रत्ययो वा विकल्पेन भवतीत्यर्थः । तत्प्रश्नोत्तरत्वं खण्डार्थत्वेनैव व्याप्तमिति विरुद्धं चेत्याह । किञ्चेति । ननु निर्धारितै-कप्रकारकत्वाभावेपि तत्प्रश्नोत्तरत्वसंभवान्नविरुद्धमित्यत आह । यदिचेति । अन्यथा प्रश्नादधिकविषयकत्वाभावेपि तत्प्रश्नोत्तरत्वे अनैकांत्यं चाह । किं करोतीति । कर्मप्रश्नोत्तरे आनेय प्रश्नोत्तरे इत्येवमादिषु प्रश्नोत्तरेष्वित्यर्थः । ननु तत्रापि कर्मानयनस्वरूपमात्रविषयत्वसद्भावेनाखण्डार्थत्वसद्भावान्नयभिभिचार इत्यत आह । न हीति । एतेनेति । असिद्ध्यादिदोषेणेत्यर्थः । सत्यादिवाक्यपक्षकानुमानं विहाय तदर्थपक्षकानुमानं करोति । सत्यादिवाक्यार्थ इति । ब्रह्मप्रातिपदिकार्थमात्रस्य साध्यस्य दृष्टान्तालाभादाह । व्यतिरेकीति । घटादिर्व्यतिरेकदृष्टान्त इत्यर्थः । एकेति । स्वरूपाख्यैकप्रातिपदिकार्थमात्रप्रश्नोत्तरत्वेनाखण्डार्थत्वं न सिद्ध्यति । स्वरूपातिरिक्तानामपि प्रातिपदिकार्थानां बहूनां सत्त्वेन प्रातिपदिकार्थस्यैव विशिष्टत्वादित्यर्थः । तदेव दर्शयति । स्वार्थ इति । स्वार्थो विशेषणं गोत्वादि । द्रव्यं गवादि । लिङ्गं पुंस्त्वादि । सङ्ख्या एकत्वादिरूपा । कर्मादयः कर्मादिषट्कारकाणि । नाम्नो गवादिनाम्नो गवादिप्रातिपदिकस्येति यावत् । आद्यमिति । तन्मते सङ्ख्याकारकयोः

(प्रकाशः)

स्वादिप्रत्ययार्थत्वेन प्रातिपदिकार्थत्वानङ्गीकारादिति भावः । मते प्रातिपदिकार्थस्यैवविशिष्टत्वादित्यन्वयः । अन्वितेति । इतरान्वितस्वार्थ एव पदानां शक्त्यङ्गीकारेण प्रातिपदिकार्थस्य योग्येतरान्वितत्वेन विशिष्टत्वादित्यर्थः । अभिहितेति । अन्विताभिधानमनङ्गीकृत्य पदैरभिहिताः पदार्था एवान्वयं बोधयन्तीति पक्षेपि तार्किकमते जातिविशिष्टायां व्यक्तावेव शक्तिरित्यङ्गीकारेण जातिविशिष्टार्थानामेव पदैरभिहितत्वात्प्रातिपदिकार्थस्य विशिष्टत्वमित्यर्थः । लक्ष्येति । गामानयेत्युक्ते केवल गोत्वस्यानयनासंभवेन तदाश्रयभूता व्यक्तिर्लक्ष्यत इत्यर्थः । तव च मत इति । तथा च जातिमात्रस्यैव प्रातिपदिकार्थत्वेन प्रातिपदिकार्थस्य यद्यपि विशिष्टत्वं नास्तीत्यर्थः । तथापि प्रकारान्तरेण प्रकृतब्रह्मप्रातिपदिकार्थस्य विशिष्टत्वमेवेत्याह । ब्रह्मेति । ननु प्रातिपदिकार्थस्य विशिष्टत्वेपि उत्तरमितरांशं विहाय प्रातिपदिकार्थस्थविशेष्यांशमात्रपरमिति चेत्तत्राह । न चेति । प्रातिपदिकार्थे विशिष्ट इत्यर्थः । अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यं स्यादिति भावः । नन्वखण्डार्थत्वानङ्गीकारे बाधकसद्भावान्नाप्रयोजकत्वमित्यत आह । विपक्ष इति । ब्रह्मेति । अधिकप्रकाराद्युक्तौ च प्रश्नोत्तरयोर्वैयधिकरण्यं स्यादिति भावः । अभेदेति । सखण्डार्थत्वे भिन्नप्रकाराङ्गीकारप्राप्त्याऽभेदविधायकवाक्यविरोधापत्तेरखण्डार्थत्वमङ्गीकार्यमित्यर्थः । भेदनिषेधकेति । उदरं ब्रह्मभिन्नं कुरुते भिन्नप्रकारयुक्ततया जानातीति यावत् । अथ तस्य भयं भवतीति निंदया भेदनिषेधावगमात् सखण्डार्थत्वे तद्विरोधादित्यर्थः । गुणवत्त्वरूपसखण्डार्थत्वाङ्गीकारे केवलो निर्गुणश्चेत्यादि वाक्यं बाधकं सद्वितीयत्वरूपसखण्डार्थत्वाङ्गीकारे ब्रह्मव्यतिरिक्तद्वितीयमात्रनिषेधकं वाक्यमेव बाधकमित्यर्थः । सर्वतोऽनवच्छिन्नेति । सर्वस्मादव्यावृत्तेत्यर्थः । वस्त्वानंत्यपरस्य अनन्तशब्दस्य सर्वाभेदार्थत्वात् । ब्रह्मशब्दस्यापि देशतः कालतो वृद्ध्यर्थकत्वेन वस्तुतो वृद्धेः पूर्णत्वस्य वस्त्वभेदरूपत्वात्सखण्डार्थत्वाङ्गीकारे गुणादिभेद प्राप्त्या सर्वतोऽव्यावृत्तवस्तुपरानन्तब्रह्मशब्दविरोधः स्यादतोऽखण्डार्थत्वमिति वा विपक्षे बाधकमित्यर्थः । निरस्तत्वादिति । सिद्धत्वात्स्वरूपस्य न तन्मात्रे बुभुत्सेत्यर्थः । किं चास्तु वा तुष्यत्विति न्यायेन स्वरूपमात्रे बुभुत्सा तथापि विशेषणांशेपि बुभुत्सायाः स्वारसिक्या असंभवेपि सत्यज्ञानादिविशेषणानां सत्यादिवाक्ये विद्यमानत्वेन तत्सार्थक्याय कीदृशं ब्रह्मेत्याकांक्षोत्थापनीया । यथा हि 'वायव्यं श्वेतमालभेत वायुर्वै क्षेपिष्ठा देवते'ति स्तुतिसहितविधिवाक्येषु वायुदेवताकपश्वालंभनं कार्यमिति विधानेनाकांक्षानिवृत्तौ सत्यामपि क्षेपिष्ठत्वादीनामुत्तरवाक्ये वायुदेवताविशेषणानां सत्त्वेन तदर्थं कीदृशी वायुदेवता यद्देवताको यागः कार्य इत्याकांक्षामुत्थाप्यार्थवादिवाक्योक्तविशेषणेन प्राशस्त्यं प्रतिपाद्यते । यथाहि रक्तः पटो भवतीत्यत्र पटो भवतीत्येतावतैव पूर्णत्वेपि कीदृशः पटो भवतीत्याकांक्षामुत्थाप्य रक्तपदं सार्थकं क्रियते तद्वदित्येवं सस्तुतिकविधिवाक्य इव प्रकृतेपि संभवादित्याह । सत्यादीति । सत्यादिवाक्ये विद्यमानेषु विशेषणेषु आकांक्षाया उत्थापनीयत्वादित्यन्वयः । तत्र दृष्टान्तो रक्तपटन्यायेन सस्तुतिकविधिवाक्य इवेति । आकांक्षणीयेति । आकांक्षाया अभावो-ह्याकांक्षणीयपदाभावनिमित्तक एव तत्सद्भावात्पुनरप्याकांक्षोत्थापनीयैवेति नाकांक्षाभाव इत्यर्थः । अङ्गीकृत्येदमुक्तं वस्तुतस्तु मुमुक्षोः प्रकार एव बुभुत्सोचिता न स्वरूपमात्रे कुतः पूर्वोत्तरवाक्येषु सप्रकारकज्ञानस्यैव मोक्षहेतुत्वप्रतिपादनात् प्रकारबुभुत्साया अभावे उत्तरत्रतदुक्त्ययोगादित्याह । सप्रकारकेति । ब्रह्मज्ञानं

(प्रकाशः)

परप्राप्तिहेतुरित्युक्तसप्रकारकस्यैव ब्रह्मज्ञानस्य मोक्षहेतुत्वं प्रतीयत इत्यर्थः । ब्रह्मविदाप्नोतीत्युक्ते सप्रकारकब्रह्मज्ञानस्यैव मोक्षहेतुत्वं कथं प्रतीयते मयोच्यते निष्प्रकारकस्यैव ब्रह्मज्ञानस्य मोक्षहेतुत्वं प्रतीयत इति तत्रोक्तम् । निष्प्रकारकेति । वेदान्तजन्यज्ञानस्य निष्प्रकारकताया अद्याप्यसिद्धत्वादित्यर्थः । एवमिति । सहस्रशीर्षत्वादिना पूर्वोक्तप्रकारेणेत्यर्थः । योवेदेति । गुहानिहितत्वप्रकारकज्ञानवतः 'सोऽश्नुते सर्वानि'ति मोक्षोक्तेरित्यर्थः । धर्मिज्ञानेति । अनेन स्वरूपमात्रे बुभुत्सा नास्ती(तिसूचितंभ)त्युक्तं भवति । ब्रह्मस्वरूपबुभुत्सायामेव प्रवृत्तत्वादखण्डस्वरूपमात्रपरमित्यङ्गीकारेऽति प्रसङ्गमाह । निर्गुणेति । सगुणवाक्यस्य ब्रह्मबुभुत्सायां प्रवृत्तत्वे दृष्टान्तो निर्गुणवाक्यवदिति । कर्मकाण्डस्य कर्मलक्षणकथनपरस्य । वैद्यादिशास्त्रस्य औषधादिलक्षणकथनपरस्य । आपातादिति । अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यं स्यादिति भावः । ननु कर्मकाण्डादेः सर्वस्यापि समस्तवेदान्तवन्नाखण्डकर्मादिस्वरूपमात्रपरत्वं सर्वस्यापि कर्मादिलक्षणाऽप्रतिपादकत्वात् यथेष्टवाक्यानां कर्मादिलक्षणाप्रतिपादनपराणामपि सत्त्वेन तेषामखण्डकर्मादिस्वरूपपरत्वाभावादिति चेत्तत्राह । अस्ति चेति । धर्म इवेति । चोदनालक्षणे कर्मणीत्यर्थः । अलक्षणरूपमिति । स यथा शकुनिरित्यादिकमित्यर्थः । तथाच समस्तवेदान्तनामखण्डार्थत्वहानिरिति भावः । न मध्यमा इति । आद्यन्त पक्षव्यतिरिक्ता इत्यर्थः । एकधैवेत्यादीनामभेदविधायकानां भेदनिषेधकानां गुणनिषेधकानां द्वितीयमात्रप्रतिषेधकानां च वाक्यानाम् अभेदभेदाभावनिर्गुणत्वद्वितीयमात्राभावविशिष्टपरत्वं वा विवक्षितं लक्षणयाऽखण्डचिन्मात्रपरत्वं वा नाद्य इत्याह । तेषां चेति । प्रामाण्येति । अतत्वावेदकत्वेनाप्रामाण्यं स्यादिति भावः । भेदाभावादिविशिष्टार्थपरत्वे दूषणान्तरमाह । तेषामिति । यथाऽभेदविधायकादिविशिष्टपरवाक्यविरोधेन सत्यादिवाक्यानां यथा लक्षणयाखण्डार्थपरत्वमुच्यते । एवं सत्यत्वादिविशिष्टब्रह्मप्रतिपादनपराणां सत्यादिवाक्यानामेव स्वार्थे तात्पर्यमङ्गीकृत्यैतद्विरुद्धत्वादेकधैवेत्यादीनामेव लक्षणयाऽखण्डार्थत्वमस्तु नैक्यभेदाभावादिविशिष्टपरत्वमिति वैपरीत्यापाताच्चेत्यर्थः । ननु सत्यादिवाक्यस्य मुमुक्षुज्ञेयशुद्धपरत्वाल्लक्षणयाखण्डार्थपरत्वं मुमुक्ष्वज्ञेयाशुद्धब्रह्मपरत्वेन एकधेत्यादीनामैक्यभेदाभावादिविशिष्टप्रतिपादनपराणां नाखण्डार्थत्वमिति न वैपरीत्यमिति चेत्तत्राह । उभयोरिति । उपनिषद्गतत्वेनेति शेषः । ननूभयोर्मुमुक्षुज्ञेयब्रह्मपरत्वाविशेषेपि अभेदभेदाभावनिर्गुणत्वद्वितीयाभावादिविशिष्टत्वेनैव ब्रह्म मुमुक्षुणा ज्ञातव्यम् अभावरूपधर्माणामखण्डार्थत्वाविरोधित्वात् 'अभावरूपधर्मा नाद्वैतं घ्नन्ती'ति मण्डनमिश्रवचनात् न तु भावरूपधर्मवत्त्वेन तस्याखण्डार्थत्वविरोधित्वात् अतोभावरूपधर्मप्रतिपादनपराणां सत्यादि वाक्यानामेव स्वार्थे तात्पर्याभावमङ्गीकृत्य लक्षणया चिन्मात्रपरत्वमेव वाच्यमिति न वैपरीत्यमित्याशङ्क्याह । न चेति । ब्रह्मणोऽखण्डत्वस्य विवादापन्नत्वदशायामित्यर्थः । अभेदादिप्रतिपादनपराणाम् एकधैवेत्यादीनां लक्षणया चिन्मात्रपरत्वमिति द्वितीयपक्षमाशङ्क्य निराकरोति । तेषामिति । तद्विरोधेनेति । विशेष्यमात्रपरैकधैवेत्यादिवाक्यविरोधेनेत्यर्थः । कुतो न मुख्यार्थत्याग इत्यत आह । विशेष्येति । न हि देवदत्तो दण्डी देवदत्त इत्यनयोर्वाक्ययोर्विरोधोस्तीति भावः । नन्वेकधैवेत्यादेर्विशेष्यमात्रपरत्वेपि अभेदभेदाभावादेर्द्वारत्वेन श्रुत्या उपादानेनात्यागात्सत्यादि वाक्यस्यविशिष्टपरत्वे तद्विरोधः स्यादिति शङ्कते । नन्विति । द्वारभूतस्यैक्यादेः किं मिथ्यात्वमभिप्रेतम् उत

(प्रकाशः)

सत्यत्वमिति विकल्प्योभयत्र दोषमाह । द्वारीभूतस्येति । ननु द्वारीभूतस्यैक्यादेः सत्यत्वेपि ब्रह्माभिन्नत्वान्नापसिद्धान्त इत्यत आह । द्वारत्वेति । अभेदे द्वारद्वारिभावानुपपत्तिरिति भावः । एवं तर्ह्यनेनैव न्यायेन सत्यादि वाक्यस्य लक्षणया चिन्मात्रपरत्वेपि द्वारत्वेन सत्यत्वादेरुपादानेनात्यागादेतद्विरोधेन स्वार्थे तात्पर्याभावोस्त्वित्याह । अत्रापीति । सत्यादिवाक्येपीत्यर्थः । सर्वतोऽव्यावृत्तवस्तुपरानन्तब्रह्मशब्दविरोधान्नसखण्डार्थत्वमित्यंत्यपक्षं दूषयति । नान्त्य इति । अविरोधित्वादिति । ब्रह्मणः सत्यत्वादिवैशिष्ट्यमङ्गीकृत्य सखण्डार्थत्वाङ्गीकारे तद्विरोधो नास्ति तयोरपि लक्षणया चिन्मात्रपरत्वेन सर्वतोऽव्यावृत्तवस्तुप्रतिपादनतात्पर्याभावादिति भावः । किं चानन्तब्रह्मशब्दयोर्नाखण्डत्वसाधकत्वमित्याह । अथेति । ताभ्याम् अनन्तब्रह्मशब्दाभ्याम् । तथाच विपक्षे बाधकाभावादप्रयोजकत्वं दुर्वारमिति । द्विविधं पदार्थनिष्ठं वाक्यार्थनिष्ठं च । तद्दृष्टान्तीभूतम् उभयोरपि वाक्ययोरखण्डार्थत्वे दृष्टान्तीभूतमित्यर्थः । कुत इत्यत आह । आकांक्षेति । आकांक्षायोग्यतासंनिधिमतां पदानां समूहो वाक्यम् आकांक्षादित्रयं चान्वयापरपर्यायसंसर्गगर्भं सत्यादिवाक्यस्य च संसृष्टार्थत्वाभावे तद्गर्भाकांक्षाद्यभावेन वाक्यत्वमेव न स्यादित्यर्थः । तत्राकांक्षायाः कथमन्वयगर्भत्वमित्यत आह । आकांक्षाहीति । अभिधानम् अन्वयबोधनम् । नन्वेवं गौरश्वः पुरुषो हस्ती गौःकर्मत्वमानयनं कृतिरित्यादावप्यन्वयबोधनस्यापर्यवसानादाकांक्षा स्यादित्यतोऽपर्यवसानशब्दार्थमाह । यस्य चेति । स्वार्थेन्वयः । नन्वेवं चेत् 'अहो विमलं जलं नद्याः कच्छे महिषश्चरती'त्यत्र यदा नदीपदं कच्छान्वयपरतया प्रयुज्यते तदा तत्राव्याप्तिः नदीपदस्य कच्छपदेन विनापि जलपदेन स्वार्थान्वयानुभावकत्वेन निरुक्तापर्यवसानं नास्तीत्यव्याप्तिः स्यादिति चेन्न । स्वार्थशब्देनोक्तान्वये तात्पर्यविषयीभूतेति विशेषणदानात् नदीपदस्य जलपदेन स्वार्थान्वयानुभावकत्वेपि तस्य तात्पर्यविषयीभूतत्वाभावात् । कच्छपदेनान्वयस्यैव तात्पर्यविषयीभूतत्वात् । तथाच नदीपदस्य कच्छपदेन विना तात्पर्यविषयीभूतान्वयानुभावकत्वाभावरूपापर्यवसानसद्भावान्नाव्याप्तिरित्यर्थः । संनिधिरपि अन्वयगर्भेत्याह । संनिधिस्त्विति । प्रहरे प्रहरे उच्चार्यमाणवाक्याज्जायमानान्वयप्रति योग्युपस्थितेरपि संनिधित्ववारणायोक्तम् । अव्यवधानेनेति । योग्यतापि संसर्गगर्भेत्याह । योग्यता चेति । अयमत्र संप्रदायः । इतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावा प्रतियोगित्वं योग्यता । अस्ति चेयं पयसा सिंचेदिति वाक्ये इतरपदार्थसंसर्गः सेकक्रियाकरणरूपः तस्मिन् जलरूपापरपदार्थनिष्ठात्यंताभावाप्रतियोगित्वमस्ति जले सेकक्रियाकरणत्वं नास्तीत्यप्रतीतेः । अग्निना सिंचेदित्यत्र नास्ति अग्नौ सेकक्रियाकरणत्वं । नास्तीति प्रतीत्या सेकक्रियाकरणत्वरूपेतरपदार्थसंसर्गस्य अग्निरूपापरपदार्थनिष्ठात्यन्ता भावप्रतियोगित्वात् । अत्र धूमवन्ह्योः सामान्यव्याप्तिवत् सर्वसेकव्यक्तौ सामान्यतः पयसा समं योग्यता विवक्षिता एवं चाव्याप्तिः एतत्सेकक्रियाव्यक्तिविशेषसंसर्गे इतरपदार्थरूपकाशीस्थपयोनिष्ठात्यन्ताभावप्रतियोगित्वस्यैव सत्वात् । काशीस्थ-जले एतत्सेकक्रियाकरणत्वं नास्तीति प्रतीतेरत उक्तं प्रतियोगितावच्छेदकधर्मशून्यत्वमिति । यथाऽयोग्ये वाक्ये सेकक्रियासंसर्गेऽग्निरूपापरपदार्थनिष्ठो योऽत्यन्ताभावः सेकक्रियासंसर्गात्यन्ताभावस्तत्प्रतियोगितावच्छेदको यो धर्मः संसर्गत्वरूपः अग्नौ सेकक्रियासंसर्गो नास्तीति सामान्यतः संसर्गात्यन्ताभावप्रतीतेः तादृशधर्मशून्यत्वं नास्ति योग्ये वाक्ये तु सेकक्रियासंसर्गे जलरूपापरपदार्थनिष्ठो योत्यन्ताभावः सामान्यतः सेकक्रियासंसर्गात्यन्ताभावो न भवति किंतूदासीनात्यन्ताभावस्तत्प्रतियोगितावच्छेदकधर्मशून्यत्वमस्ति संसर्गत्वस्य

(प्रकाशः)

प्रतियोगितानवच्छेदकत्वात् । तत्प्रतियोगितावच्छेदकं तदा स्यात् यदि जले सेकक्रियासंसर्गो नास्तीति सामान्यात्यन्ताभावप्रतीतिः स्यात् न चैवमस्त्यतो नाव्याप्तिः । नन्वथाप्यव्याप्तिरेव सेकक्रियाव्यक्तिविशेषसंसर्गे काशीस्थजलनिष्ठात्यन्ताभावप्रतियोगितावच्छेदको यो धर्मः ,तत्सेकक्रियासंसर्गत्वरूपस्तद्वत्वमेवास्ति न तु तच्छूत्यत्वं काशीस्थजले एतत्सेकक्रियासंसर्गो नास्तीति प्रतीतेरिति चेत् उच्यते । अत्र संसर्गपदं संसर्गत्वपरम् अवच्छेदकधर्मपदेन च अवच्छेदकस्य धर्मः अवच्छेदकत्वं विवक्षितम् एवं च इतरपदार्थसंसर्गत्वे अपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावो योग्यतेत्यर्थः पर्यवसितः । अग्नौ सेकक्रियासंसर्गो नास्तीति प्रतीत्या सामान्यतः सेकक्रियासंसर्गत्वस्यैवाग्निनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वात् । इह तु सामान्यतो जले सेकक्रियासंसर्गो नास्तीति प्रतीत्यभावेन सामान्यतः सेकक्रियासंसर्गत्वस्य जलनिष्ठात्यन्ताभाव प्रतियोगितावच्छेदकत्वाभावात् । अतः सामान्यधर्मस्यैव सामान्यात्यन्ताभाव प्रतियोगितावच्छेदकत्वाभावस्य विवक्षितत्वान्नविशेषधर्मं विशेषात्यन्ताभावंचादायाव्याप्तिर्देयेति भावः । ननु योग्यता नान्वयगर्भेत्याशंकते । प्रमाणेति । प्रमाणाबाधः किं पदार्थमात्राणाम् उत संसर्गस्यापि । नाद्य इत्याह । पदार्थेति । वाक्याभासेपीति । अग्निना सिंचेदित्यत्रापि अग्न्यादिपदार्थानामबाधितत्वादतिव्याप्तिरित्यर्थः । इहापीति । सत्यत्वादि संसर्गस्य त्वया बाधितत्वाङ्गीकारादित्यर्थः। पुनरपि योग्यता नान्वयगर्भेत्याशङ्कते । तात्पर्येति । अयोग्यस्थलेऽग्निकरण-कसेकक्रिया संसर्ग एव तात्पर्यविषयः स च बाधित एवेति भावः । तात्पर्यविषयोपि पदार्थो वा वाक्यार्थो वा नाद्य इत्याह । पदार्थेति । संसर्गाबाधस्त्विह नास्तीति भावः । ननु पदार्थमात्रेपि वाक्यतात्पर्यं युक्तमित्याशङ्कते । नन्विति । अन्यैः विशेषणैः । समाप्तेरिति । योसिद्धस्तद्बोधनेनैव वाक्यस्य समाप्तत्वादित्यर्थः । उक्तरीत्येति । यत्र पदार्थः प्रमितस्तत्र स इतरपदार्थविशिष्टः प्रतिपाद्य इत्युक्तत्वेन प्रश्नधर्मित्वादिना चन्द्रादि प्रातिपदिकार्थस्यापि सामान्यतो जातत्वेनेतरव्यावृत्त्यर्थं प्रकृष्टत्वादीतरपदार्थविशिष्टत्वेनैव तद्बोधनमावश्यकमित्यर्थः । नित्यसिद्ध-त्वादिति । अप्राप्त एव शास्त्रस्यार्थवत्त्वात् अज्ञातस्यैव विषयत्वादिति भावः । ननु न निर्निमित्तं मुख्यार्थस्त्यज्यते एकरसत्वादिश्रुतीनामेव सत्यत्वादिवैशिष्ट्यरूपमुख्यार्थत्यागे निमित्तत्वादिति चेत्त्राह । एकरसत्वेति । विशेष्येति। लक्षणया चिन्मात्रपरत्वेनेत्यर्थः । मुख्यार्थेति । सत्यत्वादि वैशिष्ट्यरूपमुख्यार्थाङ्गीकारे बाधकाभावादित्यर्थः । तस्य विचारविधेः । आपातदर्शनजन्येति । समानधर्मदर्शनजन्येत्यर्थः । निष्प्रकारके ब्रह्मण्येतादृशविचारविध्यप्रवृत्तेरिति भावः । कुत इत्यत आह । विषयादीति ।

'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।
प्रयोजनं च वक्तव्यं पूर्वसिद्धान्तपक्षयोः'

इत्युक्तत्वेन प्रकृते तदभावादित्यर्थः । यस्य कस्यचिदिति । सत्यत्वादिविशिष्टस्य ब्रह्मत्वज्ञानं यदनुभवसिद्धं तन्नस्यादित्यर्थः । दूषणान्तरं चाह । तात्पर्येति । विभागो भेदः । तेन चेति । यत्किञ्चिदिति बोधनेन । पूर्वमेव यत्किञ्चिदिति ज्ञाने सत्येव बुभुत्साप्रश्नयोरुदयात् तात्पर्यतो यत्किञ्चिदित्येव बोधकस्य सत्यत्वादिवाक्यस्य ब्रह्मबुभुत्साप्रश्नौ प्रति हेतु भूतज्ञानादनधिकविषयकत्वेन सत्यादिवाक्यं ब्रह्मबुभुत्सानिवर्तकं ब्रह्मप्रश्नोत्तरं च न

(प्रकाशः)
स्यादित्यर्थः । यदुक्तं तात्पर्यविषयस्याखण्डार्थत्वेत्यादि तदयुक्तम् इदं ब्रह्मेत्युद्देश्यविधेयभावाङ्गीकारात् । न चाखण्डे उद्देश्यविधेयविभागायोग इत्युक्तमिति वाच्यम् अप्राप्तं यद् ब्रह्मस्वरूपं तन्मात्रस्यैव विधेयत्वाङ्गीकारात् तस्य चाखण्डत्वादित्याशङ्क्य निराकरोति । न चेति । विधेयस्य ब्रह्मस्वरूपस्य । स्वरूपेण । विशेषणाविशिष्टतया । तथाच स्वरूपमात्रस्य स्वप्रकाशत्वादिना नित्यसिद्धत्वेन विधेयत्वाभावादिति भावः । उद्देश्येति । यत्सत्यं तद् ब्रह्मेति उद्देश्यभूतलक्षणसंसृष्टतयेत्यर्थः । वाक्यान्तरवदिति । संसर्गबोधकनीलोत्पलादि-वाक्यवदित्यर्थः । शक्त्या जायमानान्वयप्रतियोग्यपस्थितेर्लक्षणात्ववारणायाशक्येत्युक्तम् । गौणीवृत्त्या जायमानान्वयप्रतियोग्युपस्थितेर्लक्षणात्ववारणायासदृशेत्युक्तम् । असंभवादिति । लक्ष्यार्थस्य ब्रह्मण्यन्वयप्रतियो-गित्वेनोपस्थित्यभावेन लक्षणाया अयोगात् । अन्वयप्रतियोगित्वेन तदुपस्थितौ च सखण्डार्थत्वापत्तिरिति भावः । लक्षणाबीजेति । यदनुपपत्त्या यत्कल्प्यते तस्य तदुपपादकताया रात्रिभोजनादौ दृष्टत्वात् प्रतीतान्वयानुपपत्त्या कल्प्यमानलक्षणाया अमुख्यार्थान्वयमादाय पूर्वप्रतीतान्वयोपपादकत्वं च गङ्गायां घोष इत्यादौ दृष्टम् इहच सत्यत्वाद्यन्वयानुपपत्त्या कल्प्यमानचिन्मात्रलक्षणाया न पूर्वप्रतीतान्वयोपपादकत्वमस्ति पूर्वप्रतीतसत्यत्वान्वयस्य सर्वथापरित्यक्तत्वादिति भावः । पर्यायत्वमिति । घटः कलश इति वत् प्रवृत्तिनिमित्तभेदाभावादिति भावः । सत्यादिपदानां लक्ष्यार्थभेदेपि परापरजातिरूपवाच्यार्थभेदसद्भावान्न पर्यायत्वमित्याशङ्क्य निराकरोति । न चेति । कुंभादीति । घटादीत्यर्थः । परा व्यापकजातिः सत्यशब्दार्थः । अन्तःकरणेत्यादि चिद्विशेषविशेषणं तथाचान्तःकरणवृत्तिलक्षणं यदुपधानमुपाधिः तल्लब्धभेदो यःकश्चिद्विशेषः स्वरूपज्ञानभिन्नान्तःकरणवृत्तिविशेषः तदनुगतं ज्ञानत्वं स्वरूपानन्दव्यतिरिक्तो वैषयिकानन्दस्तदनुगतमानन्दरूपं सामान्यं चापरजातिस्तद्वाचिनौ ज्ञानानन्दशब्दावित्यर्थः । एवं चेति । घटः पृथिवी द्रव्यमित्यादिशब्दानामिव विशेष्याभेदेपि वाच्यः जातिरूपप्रकारभेदान्नसत्यादिपदानां पर्यायत्वमित्यर्थः । कुंभेति । सत्यं ज्ञानमित्यत्र सत्यशब्दोक्तसत्ताया ब्रह्मलक्षणत्वस्य त्वयाप्यङ्गीकारान्न तस्याः कुंभादिसाधारण्यं तथात्वे ब्रह्मलक्षणस्यातिव्याप्तिः स्यात् तथाच न सत्यशब्दस्य कुंभादि ब्रह्मसाधारणसत्ताजातिवाचित्वमित्यर्थः । मिथ्येति । कुंभादिषु ब्रह्मणि चानुगतम् एकसत्वसामान्यं नास्ति कुंभादीनां मिथ्यात्वादित्यर्थः । कुंभादिब्रह्मानुगतसत्त्वसामान्यस्य सत्यशब्दाभिधेयत्वे दोषमाह । तयेति । अनृतसाधारणस्यानृतादिव्यावर्तकत्वायोगादिति भावः । कुंभादिसाधारणसत्ताजातिः सत्त्वपदेनोच्यत इत्यङ्गीकारे कालत्रयाबाध्यत्वरूपं पारमार्थिकं सत्त्वं 'सत्यं ज्ञान'मिति श्रुतौ सत्यपदेनोक्तमिति त्वन्मतहानिः स्यादित्याह । कालत्रयेति । किं च ज्ञानत्वं न जातिः तदाधारानेकव्यक्त्यभावात् । नचांतः करणोपाधिकज्ञानान्यनन्तानि सन्तीति वाच्यम् । ज्ञानत्वादेर्ब्रह्मलक्षणत्वेन धर्मिभूतब्रह्मसमसत्ताकव्यक्तिभेदस्यैव वक्तव्यत्वात् औपाधिकव्यक्तिभेदमात्रेण जातित्वे आकाशत्वादेरपि जातित्वापत्तिः घटाद्युपाधिभिन्नाकाशानां बहूनां सत्वादित्याह । धर्मीति । योगे वेति । जातित्वयोगे वा तदुपपत्त्यर्थं धर्मिसमसत्ताकभेदवदुप-हितवृत्तिरूपज्ञानवृत्तित्वेऽङ्गीक्रियमाणे ज्ञानत्वस्याति व्याप्त्यापत्त्या तस्य ब्रह्मलक्षणत्वायोगादित्यर्थः । सत्वादीति । कल्पतरुकारेण सत्यादिशब्दानां सत्तादिजातिवाचित्वमुक्तम् अनेन तु सत्त्वादिविशिष्टशबलब्रह्मवाचित्वमुच्यत इति भेदः । यथोक्तं संक्षेपशारीरके -

'रूप्यादौ मे सत्यता तावदेका प्रत्यङ्मात्रे सत्यता काचिदन्या ।
तत्संपर्कात्सत्यता तत्र चान्या व्युत्पन्नोयं सत्यशब्दस्तु तत्र'

(प्रकाशः)

इति । तत्र शबले । सत्यत्वादेरित्यादिपदेन ज्ञानत्वानन्तत्वयोर्ग्रहणम् । तस्यैव शबलस्यैव । तथाच तस्यैवात्र प्रतिपाद्यत्वं स्यादित्यर्थः । न त्विति । न चेष्टापत्तिः मोक्षजनकज्ञानविषयशुद्धब्रह्मपरत्वादस्य वाक्यस्येति भावः । पर्यायत्वोपपादनमुपसंहरति । तस्मादिति । ननु न पदान्तरवैयर्थ्यम् । यथा हि उच्चैरित्यत्र उच्चैस् इति स्थिते 'अव्ययादाप्सुप' इति अव्ययात्परस्य सोर्लुकि रुत्वे विसर्गे च सति उच्चैरिति जातमस्ति तत्र स् इति प्रथमाया न किमपि प्रयोजनमस्ति राम इत्यादौ कर्तृत्वार्थवदत्र कर्तृत्वादेस्तदर्थस्याभावात् अत उच्चैस्स्वरूपप्रातिपदिकार्थमात्र एव प्रथमा एवं च प्रथमायाः कर्तृत्वार्थायोगेन प्रातिपदिकमात्रार्थत्वेन प्रातिपदिकप्रथमयोरैकार्थ्येपि प्रयोजनान्तराभावेपि उच्चैरित्यत्र स् इति प्रथमां व्यर्थामप्यङ्गीकृत्य तल्लोपोऽङ्गीकृतः तद्वदिहापि ऐक्यार्थेपि न पदान्तरवैयर्थ्यमित्याशङ्क्य निराकरोति । न चेति । तत्र प्रातिपदिकप्रथमयोरैकार्थ्यविषये । महाभाष्य एवार्थवत्त्वोक्तेरित्यन्वयः । अत्र प्रातिपदिकार्थे । सपूर्वाया इति । 'सपूर्वायाः प्रथमाया विभाषा' विद्यमानपूर्वात् प्रथमान्तात्परयोर्युष्मदस्मदोः ते मे इत्येतावादेशौ विकल्पेन भवत इति सूत्रार्थः । प्रातिपदिकार्थे प्रथमा न व्यर्था । कर्तृत्वार्थायोगेपि ग्राम उच्चैस्ते स्वमित्यत्र उच्चैरित्येतत्परस्य युष्मदः तवेत्यस्य ते इत्यादेशार्थत्वात् उच्चैरित्यत्र प्रातिपदिकार्थे प्रथमानङ्गीकारे तस्य प्रथमान्तत्वाभावेन पूर्वं विद्यमानग्रामपदादुच्चैरित्यस्मात्परयुष्मदस्तवेत्यस्य ते इत्यादेशायोगेन ग्राम उच्चैस्त इति प्रयोगाद्ययोगात् । अतस्तत्र प्रातिपदिकार्थेपि प्रथमांऽगीकृता । ग्राम उच्चैरित्यत्रोच्चैरित्यस्य प्रथमान्तत्वे हि ततः परस्य तवेत्यस्य ते इत्यादेशो विभाषा भवतीति प्रयोजनवत्त्वेन प्रथमा वा न वैयर्थ्यमिति भावः । युष्मदस्मदादेशस्य 'सपूर्वाया'इत्यनेन सूत्रेण विकल्पेन विहितत्वात् ग्राम उच्चैस्तवस्वमित्युक्तम् । प्रतिपदं फलभेदादित्यन्वयः । अनर्पणे लक्ष्यब्रह्मणीति शेषः । अर्पणे तु सखण्डार्थत्वमिति भावः । अतात्पर्येति । लक्ष्यार्थब्रह्मण्यनर्पणेपीत्यर्थः । अभिधाकाल इति । सत्यत्वविशिष्टरूपमुख्यार्थोपस्थितिकाले सत्यत्वादेर्ब्रह्मणि प्रतीत्या तन्मात्रेण सत्यत्वादिव्यावृत्तिसिद्धिरित्यर्थः । अत्र विशिष्टस्यैवानृतादि व्यावृत्तिः स्यात् न तु शुद्धस्येत्युक्तदूषणे सत्येव दूषणान्तरमाह । नद्यामिति । लक्षणातः प्रागभिधाकाले कुत्रचित्प्रतीतिमात्रेण लक्ष्ये व्यावृत्तिबोधाङ्गीकारे नद्यां घोष इत्यत्र लक्षणातः प्राक् अभिधया मुख्यार्थोपस्थितिकाले तात्पर्यविषयस्य नदीत्वस्य प्रवाहे प्रतीतत्वाल्लक्ष्ये तीरेपि अनदीव्यावृत्तिबुद्धिः स्यात् । तथा यजमानः प्रस्तर इत्यत्रापि तत्सिद्धिरूपगौणार्थोपस्थितेः पूर्वं मुख्यार्थोपस्थितिकाले प्रस्तरेऽतात्पर्यविषयस्य यजमानत्वस्य प्रतीत्या तन्मात्रेणायजमानात् व्यावृत्तिः स्यादित्यतिप्रसङ्ग इत्यर्थः । अतात्पर्याविशेषे इति । सत्यपदयजमानपदयोः सत्यत्वयजमानत्ववैशिष्ट्येन ब्रह्मप्रस्तरबोधने तात्पर्याभावे समाने सतीत्यर्थः । व्यावहारिकम् अतो न सत्यत्वव्यावर्तकत्वं तस्येति भावः । प्रातिभासिकम् । अतो न तस्यायजमानव्यावर्तकत्वमिति भावः । न च मुक्तमिति । विशेषहेत्वभावादिति भावः । ननु व्यावहारिकप्रमाणसिद्धत्वाद् ब्रह्मसत्यत्वं व्यावहारिकमिति चेत्तत्राह । न चेति । तत्सत्यत्वस्य प्रत्यक्षादिनाऽप्राप्तौ औपनिषदत्वं हेतुरिति द्रष्टव्यम् । विशेषहेतुं शङ्कते । तत्त्वेति । वेदान्तानां तत्त्वपरत्वात्तत्त्वावेदकवेदान्तात्प्रतीतं सत्यत्वं व्यावहारिकं 'यजमानः प्रस्तर' इत्यादेस्तु कर्मकाण्डस्थत्वेनातत्त्वावेदकत्वात्तादृशवाक्यात् प्रतीतं यजमानत्वं प्रातिभासिकमिति असत्यत्वादिव्यावृत्तिरयजमानत्वं व्यावृत्त्यभावश्च युक्त इत्यर्थः । तत्त्वपरात्प्रतीतस्य

(प्रकाश:)

व्यावहारिकत्वेऽतिप्रसङ्गमाह । असद्वा इति । तत्त्वावेदकेति । नेह नानेति श्रुतिरूपतत्त्वावेदकप्रमाणेत्यर्थः । व्यावहारिकेति । प्रत्यक्षादिप्रमाणेत्यर्थः । तत्त्वेति । तत्त्वावेदकस्य 'नेहनाने'ति वाक्यस्यापि त्वन्मते लक्षणया चिन्मात्रपरत्वेन सत्यत्वादि वैशिष्ट्यबाधकत्वायोगात् । न हि देवदत्त इति वाक्यं दण्डीति वाक्यबोध्यदण्डित्वस्य बाधकमिति भावः । यदप्युक्तं व्यावहारिकबाधितत्वाद्यजमानत्वादिकं प्रातिभासिकमिति तदयुक्तं भेदग्राहिणा व्यावहारिकत्वेन त्वदभिमतेन प्रत्यक्षेणेदानीं बाधितस्याप्यद्वैतस्य पारमार्थिकत्वाङ्गीकारात्त-द्वद्व्यावहारिकप्रत्यक्षादिबाधितस्यापि यजमानत्वादेः पारमार्थिकत्वापातादित्याह । व्यावहारिकेति । ननु सत्यादि पदस्य लक्ष्ये ब्रह्मणि महातात्पर्येपि वाच्यार्थे सत्यत्वादौ अवान्तरतात्पर्यसद्भावेन व्यावहारिकत्वं यजमानपदस्य प्रस्तराधिकरणके यजमानत्वेऽवान्तरतात्पर्याभावात्तत्प्रातिभासिकमित्युच्यत इति चेत्तत्राह । न चेति । आद्य इति । व्यावृत्तिव्यावर्तकयोरेकसत्ताकत्वनियमादिति भावः । ननु व्यावहारिकसत्ताकत्वाङ्गीकारादिष्टापत्तिरिति चेत्तत्राह । व्यावहारिकैरिति । असिद्धेरिति । न चेष्टापत्तिरिति वाच्यम् । अनृतव्यावृत्तेस्तात्विकत्वाङ्गीकारादिति भावः । तासां सत्यभूतानाम् असत्यत्वादिव्यावृत्तीनां तत्सिद्धेः असत्यत्वादिव्यावृत्तिसिद्धेः सत्यादिपदवैयर्थ्यमित्यर्थः । व्यावृत्तीनां सत्यत्वे ब्रह्माभेदे त्वयाङ्गीक्रियमाणे व्यावर्तकानामपि सत्यत्वं ब्रह्माभिन्नत्वं स्यात् व्यावृत्तिव्यावर्तकयोः समानन्यायत्वादित्याह । व्यावर्त्तकेति । अन्योन्यमिति । असत्यव्यावृत्तेरज्ञानव्या-वृत्त्याऽज्ञानव्यावृत्तेरसत्यव्यावृत्त्येत्यन्योन्यमभेदे सतीत्यर्थः । अद्वैतहानिरिति । सत्यत्वाङ्गीकारादिति भावः । ननु व्यावृत्तेरभावरूपत्वात्सत्यत्वे ब्रह्मभिन्नत्वे च नाद्वैतहानिः । 'अभावरूपधर्मा नाद्वैतं घ्नन्ती'तिमण्डनोक्तेरिति चेत्तत्राह । अभावेति । शुक्तिसमेति । शुक्तिरूपधर्मिसमसत्यत्ववदित्यर्थः । मिथ्येति । व्यावृत्तिरूपमिथ्याभूतार्थेत्यर्थः । तद्बोधनमिति ।सत्यादि पदेनानृतव्यावृत्तिबोधनं क्रियत इत्यर्थः । भ्रान्त्यन्तरेति । तत्त्वजिज्ञासुं मुमुक्षुं प्रतीति वर्तते मुमुक्षोर्ब्रह्मणि अनृतत्वादिभ्रान्तौ सत्याम् अधिष्ठानब्रह्मतत्त्वज्ञानेनैव सा भ्रान्तिर्निवर्तनीया न तु सत्यादि पदैरसत्यादि व्यावृत्तिबोधनेन व्यावृत्तेरपि मिथ्यात्वात्तद्बोधनेन पूर्वभ्रान्तिनिवृत्तावपि भ्रान्त्यन्तरोत्पत्तिरेव स्यात् । नह्येवं मुमुक्षुं प्रति श्रुत्या भ्रान्त्यन्तरोत्पादनं युक्तमित्यर्थः । तत्र दृष्टान्तमाह । न हीति । पुंस्त्वस्येत्यनन्तरम् अधिष्ठानतत्त्वज्ञान(मनु)मुत्पाद्येति शेषः । तेनोत्तरज्ञानेन पूर्वज्ञाननिवृत्तेर्दर्शनात्कथमेतदिति चोद्यानवकाशः । तथाचायमर्थः वल्मीके कस्यचित् स्थाणुत्वभ्रान्तिर्जाता साऽधिष्ठानतत्त्वज्ञानमुत्पाद्यं निवर्तनीया तदर्थं तत्र पुंस्त्वोपदेशेनाधिष्ठानतत्त्वज्ञानमनुत्पाद्य स्थाणुत्वभ्रान्तिं निवर्तयन् कश्चिदाप्तो दृश्यते प्रत्युत भ्रांत्यन्तरोत्पत्तिरेव स्यान्नाधिष्ठानतत्त्वज्ञानं सत्यभूतवल्मीकत्वोपदेशे सति अधिष्ठानतत्त्वज्ञानोत्पत्त्या भ्रान्तिर्निवृत्ता भवति । एवं मुमुक्षोर्ब्रह्मणि जाता अनृतत्त्वादिभ्रान्तिः सत्यभूताधिष्ठानब्रह्मतत्त्वज्ञानोत्पादनेनैव निवर्तनीया नत्वनृतव्यावृत्तिबोधनरूपभ्रान्त्यन्तरोत्पादनेन तेनाधिष्ठान-तत्त्वज्ञानाजननादिति भावः । आत्मनीति । जीव इत्यर्थः । यथा कस्य चिज्जीवे मिथ्याभूताऽब्राह्मण्यशङ्कायामयं ब्राह्मण इति कल्पितब्राह्मण्योपदेशेनापि साऽब्राह्मण्यशङ्का निवर्तते प्रकृते तु अनृतव्यावृत्तेर्व्या-वहारिकत्वात्तद्बोधनेन प्रातिभासिकानृतत्वादिभ्रान्तिनिवृत्तिः सुतरां भविष्यतीति भावः । दृष्टान्त एवासंप्रतिपन्न इत्याह । ब्राह्मण्यस्येति । ब्राह्मण्यं नाम 'देहभेद्युतो यस्माद् ब्राह्मणादिपदोदित' इत्युक्तरीत्या देहविशेषसंबंधरूपत्वं जातिविशेषो वा । नाद्यः । देहविशेषसंबंधवत्त्वरूपब्राह्मण्यस्य जीवे सत्त्वेन कल्पितत्वायोगात् तथाच कल्पितेनापि ब्राह्मण्ये नेत्युक्तमसत् । न द्वितीयः । मन्मते जातेरप्रामाणिकत्वेन

(प्रकाशः)

जातिविशेषरूपब्राह्मण्याभावरूपं यदब्राह्मण्यं तस्यैव जीवे सत्यत्वेन ब्राह्मण्यस्यैव कल्पितत्वेन मिथ्या-शङ्किताऽब्राह्मण्यस्येत्युक्तमसदिति भावः । असद्व्यावृत्तेर्व्यावहारिकत्वे दोषान्तरमाह । असदिति । नन्वसद्व्यावृत्ते-र्व्यावहारिकत्वे असद्वा इत्यादि श्रुति सिद्धासत्त्वस्य पारमार्थिकत्वं कुतः प्रतियोगि-तदभावयोर्भिन्नसत्ताकत्वनियमादिति चेन्न असत्त्वस्य प्रातिभासिकत्वेपि तदुपपत्तेरित्यत उक्तम् । अनपोदितेति । श्रुतिसिद्धस्य प्रातिभासिकत्वे प्रातिभासिकस्य बाधितत्वनियमेन तद्बोधकश्रुतेरप्रामाण्यं स्यान्न तद्युक्तं श्रुतिप्रामाण्यस्यानपोदितत्वादित्यर्थः । व्यावृत्तीनां मिथ्यात्वे तत्त्वजिज्ञासुं मुमुक्षुं प्रति मिथ्याबोधनायोगादित्युक्त-मयुक्तमित्याशङ्कते । नन्विति । बोधनं मुमुक्षुं प्रतीति शेषः । मिथ्याभूतस्य सत्यार्थबोधने कथं द्वारत्वमित्यत उक्तम् । मीमांसकमत इति । 'सोरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रासीत्तद्रजतमभवदि'त्यर्थवादतः प्रतीतस्य रुद्ररोदे सति यदश्रुगलितं तदेव रजतं जातमित्येवं बाधितार्थस्य सत्ये सुवर्णप्राशस्त्ये द्वारत्वं तथेत्यर्थः । उक्तं हीति । व्यावृत्तीनां द्वारत्वमित्यर्थः । स्थूलारुंधत्यादिस्थूलेपि पूर्वमज्ञातस्वरूपं द्वारेण ज्ञाप्यमानं दृष्टं न ह्येवं प्रकृते संभवति ब्रह्मणः पूर्वमेव ज्ञाततया तद्धाने व्यावृत्तीनां द्वारत्वायोगादित्याह । ब्रह्मस्वरूपेति । श्रुतिं विनेति । सत्यादिपदबोध्यव्यावृत्तिरूपद्वारं विनेत्यर्थः । पूर्वेति । सत्यज्ञानादिवाक्यात्पूर्ववाक्य इत्यर्थः । सामान्यतो ज्ञातत्वेनेत्यन्वयः । अत्र च सत्यादि वाक्ये च । तज्ज्ञानस्य स्वरूपमात्रज्ञानस्य । तथाच स्वरूपमात्रबोधने व्यावृत्तीनां द्वारत्वमयुक्तमिति भावः । व्यावृत्तीति । अभावज्ञानेऽधिकरणज्ञानस्य कारणत्वादिति भावः । वैपरीत्येति । व्यावृत्तिस्वरूपबोधन एव ब्रह्मस्वरूपबोधनस्य द्वारत्वापातादित्यर्थः । इतोपि न ब्रह्मस्वरूपबोधने व्यावृत्तेर्द्वारत्वमित्याह । शाब्द इति । ब्रह्मणः शब्दलक्ष्यतया शब्दार्थत्वात्तत्र शब्दार्थ एव द्वारत्वेन वाच्यः । न तु व्यावृत्तिः । आदौ सत्यादिपदैः सत्यत्वादिविशिष्टं बोध्यते अनन्तरं निर्गुणश्रुत्यन्यथानुपपत्त्या तत्परित्यागेन कल्प्यमानाया अनृतादिव्यावृत्तेः अशाब्दत्वात् 'यश्चार्थादर्थो न स चोदनार्थ' इति न्यायात् अतो न शाब्देऽर्थे आर्थिकार्थस्य द्वारत्वं युक्तमिति भावः । किंचानेनैव न्यायेन नीलोत्पलमित्यादेरप्यखण्डार्थत्वं स्यात् । न च नीलत्वसंसर्गबोधनान्नाखण्डार्थत्वमिति वाच्यं तत्रापि नीलपदस्य न नीलत्वसंसर्गबोधने तात्पर्यं किन्तु अनीलव्यावृत्तिबोधनद्वारा स्वरूपमात्रबोधन एवेति वक्तुं सुवचत्वादित्याह । नीलमिति । किंच प्रकृतज्ञानेपि व्यावृत्तीनां द्वारत्वं वदता ब्रह्मस्वरूपे पूर्वाज्ञातः कश्चन विशेषो व्यावृत्त्या ज्ञाप्यत इति वक्तव्यम् अन्यथा स्वरूपमात्रस्य सिद्धत्वेन तत्र द्वारानपेक्षणात् तथाच पूर्वमज्ञातस्य द्वारीभूतव्यावृत्त्या ज्ञापनीयस्य विशेषस्य त्वन्मतेऽभावान्न व्यावृत्तेर्द्वारत्वमित्याशयेनाह । न चेति । प्राक् द्वारभूतव्यावृत्तिबोधनात् प्राक् । अन्येति । अन्याविषयकं यद् ब्रह्मज्ञानं निष्प्रकारकं तदसिद्धम् अतस्तत्र व्यावृत्तेर्द्वारत्वमित्यर्थः । व्यावृत्तिबोधात्प्राक् अध्यासाधिष्ठानत्वादिना रूपेण विद्यमानं च ब्रह्मज्ञानं नान्याविषयकम् । अधिष्ठानत्वादिधर्मावगाहि-त्वेनान्यविषयकत्वादिति भावः । अन्याविषयकब्रह्मज्ञाने व्यावृत्तेर्द्वारत्वं वदता तावदन्यविषयकं ब्रह्मज्ञानं नाम किमिति वक्तव्यं ब्रह्मज्ञानमन्याविषयकं चेत् तत्र ह्यंशोस्ति अन्याविषयकं ब्रह्मज्ञानं व्यावृत्त्या भवति अन्यज्ञानं न भवति अन्याज्ञानं भवतीति यावदिति पर्यवसितव्यं । तत्र व्यावृत्तेः किं ब्रह्मज्ञाने द्वारत्वं अन्याज्ञाने वा । नाद्यः तस्य पूर्वमेव सिद्धत्वेन तत्र द्वारत्वायोगात् व्यावृत्तिज्ञानस्य धर्मिज्ञानसाध्यत्वेन व्यावर्त्यस्य स्वरूपस्य ज्ञानमेव

(प्रकाशः)

व्यावृत्तिज्ञाने द्वारमिति वैपरीत्यापाताच्च अतो द्वितीयपक्ष एव स्वीकार्य इत्याह । व्यावृत्तीति । व्यावर्त्यज्ञानं स्वरूपज्ञानम् । अस्तु तर्हि व्यावृत्तेरन्याज्ञान एव द्वारत्वमित्यत आह । प्राचीन इति । द्वारीभूत-व्यावृत्तिज्ञानात्प्राचीने इदानीं विद्यमाने सतीति यावत् । अयं भावः । व्यावृत्तेरन्याज्ञानेपि द्वारत्वं न युक्तं व्यावृत्तिबोधात्प्रागप्यन्याज्ञानसद्भावात् । तथाहि । सन् घट इत्यादि ब्रह्मापरोक्षज्ञानं तावदिदानीं व्यावृत्तिबोधात्प्रागप्यस्ति ब्रह्मापरोक्षज्ञानं चाज्ञाननिवर्तकं इत्यङ्गीकारात् एवं चेदानीं तनेनापि ब्रह्मापरोक्षज्ञाने नाज्ञाननिवृत्तिः स्यात् ततश्चोपादानभूतज्ञाननिवृत्त्या तत्कार्यस्यापि अन्यस्य निवृत्तिः स्यात् ततश्चान्यस्येदानीमपि भानाभावसंभवेन अन्याज्ञानस्य व्यावृत्तिबोधात्प्रागेव सिद्धतया न तत्र व्यावृत्तेर्द्वारत्वमित्यापाद्य दूषणमिति संप्रदायविदः । सत्यादिपदबोधिताया असत्त्वादिव्यावृत्तेरन्याज्ञाने द्वारत्वोक्तौ ब्रह्मज्ञानार्थत्वाभावप्रसङ्गः । इष्टापत्तिरिति चेत्तत्राह । ब्रह्मेति । सविशेषत्वमिति । सत्यपदेनासत्यव्यावृत्तिद्वाराय यद्बोधितं ब्रह्मस्वरूपं तदेव ज्ञानपदेनाज्ञानव्यावृत्तिद्वारा बोध्यत इत्यङ्गीकारे सविशेषत्वमित्यर्थः । नन्वाद्यपक्ष एवाङ्गीक्रियते तर्हि ज्ञानादिपदवैयर्थ्यमित्युक्तमिति चेन्न । कदाचिद् ब्रह्मस्वरूपम् अनृतव्यावृत्तिबोधनद्वारा सत्यशब्देन बोध्यते कदाचिच्चाज्ञानव्यावृत्तिद्वारा ज्ञानशब्देन एवं कदाचिदनन्तादिपदेनेत्येवं ब्रह्मस्वरूपबोधने द्वाराणां व्यावृत्तीनां विकल्पाङ्गीकारान्न ज्ञानादिपदवैयर्थ्यमित्याशङ्क्य निषेधति । न चेति । नित्यवदिति । विकल्पप्रतिद्वन्द्विनित्यं तद्वत् वा शब्दादिराहित्येन श्रवणादित्यर्थः । सत्यादिवाक्ये व्रीहियवादिवाक्य इव विकल्पसूचकपदाभावादिति भावः । किञ्च न द्वारविकल्पो युक्तः । तथाहि व्रीहियवादिविकल्पस्थले यदा व्रीहिपुरोडाशानुष्ठानं तदा न यवोपादानं यवपुरोडाशानुष्ठानकाले च न व्रीह्युपादानमिति दर्शनेनैकस्मिन्ननुष्ठाने उभयोपादानं तावन्नास्ति तद्वदिहाप्येकस्मिन्वाक्येऽनेकोपादानमयुक्तमित्याह । एकस्मिन्निति । मीमांसकप्रसिद्ध्या प्रयोगः अनुष्ठानम् अत्र प्रयोगस्थानीयं च सत्यादिवाक्यम् । किञ्च न द्वाराणां विकल्पो युक्तः विकल्पप्रयोजकं ह्येककार्यकारित्वं तच्चाऽस्ति व्रीहियवयोः तयोरेकयागस्वरूपनिर्वर्तकत्वात् न चैतदस्ति प्रकृते । सत्यादिपदबोध्यासत्यादि-व्यावृत्तिप्रयोजनानाम् अनृतत्वादिभ्रान्तिनिवृत्तिरूपकार्याणां भिन्नभिन्नत्वेन सत्यादिपदबोध्यव्यावृत्तीनाम् एककार्यकारित्वाभावादतो न विकल्पो युक्त इत्याह । अनृतत्वादीति । ननु समुच्चितानामेव सत्यादिपदबोध्यानां व्यावृत्तीनां ब्रह्मस्वरूपबोधने द्वारत्वाङ्गीकारान्नपदान्तरवैयर्थ्यमित्याशंक्य निराकरोति । नापीति । अबोधनेपीति । सत्यपदाभावादिति भावः । प्रतीतेरिति । तथाच तत्र सत्यज्ञानादिवाक्योक्तद्वारसमुच्चयाभावेपि ब्रह्मप्रतीत्या न समुच्चितद्वारत्वमित्युक्तनियम इति भावः । ननु 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायण'मिति बृहदारण्यकेऽनृतव्यावृत्तिरूपद्वारलाभाय सत्यं ज्ञानमिति तैत्तिरीयशाखोक्त सत्यपदस्योपसंहारः कार्य इति चेन्न । सगुणे ब्रह्मण्युपासनार्थं शाखान्तरोक्तगुणोपसंहारेपि निर्गुणब्रह्मप्रमितौ वाक्येन जननीयायां शाखांतरोक्तपदानपेक्षत्वात् कुत एतदिति चेत् त्वद्भाष्ये तथाभाषितत्वादित्याह । आनन्दादय इति । प्रधानस्य सगुणस्य ब्रह्मण उपासनार्थमेव आनन्दादयो गुणा उपसंहर्तव्या न तु प्रधानस्य निर्गुणस्य ब्रह्मणः प्रमितौ शाखांतरीयपदापेक्षेति तदीयः सूत्रार्थः । प्रमिताविति । उपासनाया मिथ्यात्वेनाविद्यमानगुणविषयकत्वात्प्रमितेस्तु तदभावादिति भावः । ननु शाखान्तरोक्तगुणोपसंहारं विना उपासनाया असिद्धिवत् पदान्तरं विना

(प्रकाश:)

ब्रह्मप्रमित्यसिद्धेस्तत्सिद्धये पदान्तरोपसंहारोप्यत्रापेक्ष्यत इत्यत आह । सत्यादीति । गुणोपसंहारस्य तत्तद्गुणोपासनार्थत्ववत्पदान्तरस्य तत्तत्प्रकारकप्रमित्यर्थत्वानङ्गीकारात् विशेष्यमात्रसिद्धेश्च लक्षणयैकेनापि पदेन संभवान्न पदान्तरोपसंहारापेक्षेत्यर्थः । ननु शृङ्गग्राहिकया ब्रह्मणोनुद्देश्यत्वाल्लक्षणमुखेन तदुपदेष्टव्यं सत्यत्वादिकं च न प्रत्येकं ब्रह्मलक्षणं घटादावतिव्याप्तेरतः समुचितमेव लक्षणमतः समुचितमेव व्यावृत्तितया द्वारमित्यत आह । सत्यत्वादेरिति । ननु सत्यत्वादेर्घटादावपि सत्वेनातिव्याप्तत्वान्नप्रत्येकं ब्रह्मलक्षणत्वमिति चेत्तत्राह । न हीति । यथा प्रकृष्टत्वादिकमतिव्याप्तत्वात्तन्न प्रत्येकं लक्षणं किन्तु मिलितमेव एवं सत्वादीनां प्रत्येकं ब्रह्मलक्षणत्वेपि नातिव्याप्तिः । अत्र ह्यबाध्यत्वादिरूपपारमार्थिकत्वमेव सत्वशब्दार्थो न तु कुंभाद्यनुगता जातिरतो न तस्यातिव्याप्तिप्रसक्तिः एवं ज्ञानादिपदेपि बोद्धव्यमिति भावः । एतेनेति । प्रत्येकं समुच्चितानां वा व्यावृत्तीनामद्वारत्वेनेत्यर्थः । ब्रह्मेति द्वितीयान्तम् । द्वारतया द्वारीभूय । उपलक्षणतयेति । न विशेषणतया येन सखण्डार्थत्वं स्यादिति भावः । एतेनेत्युक्तं विशदयति । काकवदिति । उपलक्षणस्यैव प्रकारत्वादिति भावः । ज्ञातत्वेनेति । अविद्याद्यध्यासाधिष्ठानत्वादिनेत्यर्थः । स्वप्रतिपादिते व्यावृत्तेर्द्वारत्वाभावरूपार्थेऽनुव्याख्यानं संमतित्वेनोदाहरति । तदुक्तमिति । अत्र व्यावृत्तेर्द्वारत्वनिराकरणाप्रतीतेर्व्यावृत्त्येतिपदं व्याचष्टे । व्यावृत्त्येति । तदुपदेश इति । स्वतन्त्राया व्यावृत्तेरुपदेश इत्यर्थः । तत्र प्राप्तानुपपत्तिपरिहारेण तद्व्याख्यानमुपपादयति । न चेति। यदुक्तं व्यावृत्तेर्ब्रह्मविशेषणत्वेन बोधने ब्रह्मणः सखण्डत्वमिति तदयुक्तं । सत्यादि-पदैस्तावत्सत्यत्वादिविशिष्टं बोध्यते तच्च निर्गुणत्वश्रुतिविरुद्धमिति तदन्यथानुपपत्त्या कल्प्यमानाया व्यावृत्तेः शाब्दत्वाभावेन आर्थिकत्वात् । आर्थिकव्यावृत्त्या सत्यादिपदैर्लक्षणया बोधितब्रह्मस्वरूपमात्रस्य सखण्डत्वायोगात्। शाब्दबोधे शब्दवृत्त्युपस्थापितार्थस्यैव विशेषणत्वात् । अत आद्ये सखण्डत्वमित्ये-तदयुक्तमित्यर्थः । अर्थादिति । अर्थादन्यथानुपपत्त्या प्राप्तो योऽर्थः स चोदनार्थो वाक्यार्थो नेत्यर्थः । मानान्तरादिति । अपोहोऽन्यापोहो मानान्तरात् अन्यथानुपपत्तिरूपात् प्रतीयते न शब्दवृत्त्या यतस्तेन कारणेनापोहः शाब्दो न भवतीत्यर्थः । आर्थिकेनापीति । शाब्दज्ञानस्य आर्थिकविशेषणाविषयत्वेपि शब्दबोध्यस्य ब्रह्मणो वस्तुगत्याऽन्यथानुपपत्तिरूपमानान्तर लभ्यविशेषणवत्त्वेन निर्विशेषत्वरूपाखण्डार्थ-त्वहानिरेवेति टीकाभिप्रायः । साक्षादुक्तेश्चेति । उक्तं चैतत्तैत्तिरीयवार्तिके 'अनन्तेनान्तवद्वस्तु व्यावृत्त्यैव विशेषित'मिति । बोध्यत इति शेषः । किंच व्यावृत्तेर्ब्रह्मविशेषणत्वेन बोधपक्षे आर्थिकव्यावृत्त्या सखण्डार्थत्वाभावेपि सत्यादिपदस्य व्यावर्तकसत्यत्वाद्यनर्पणेऽसत्यत्वादि व्यावर्तकत्वानुपपत्तेस्तदर्थं सत्यत्वादि-विशेषणेऽगीकार्ये सखण्डत्वमिति टीकार्थ इत्याशयेनाह । शब्दस्येति । एतेनेति । तात्पर्यतो व्यावर्तकवैशिष्ट्यार्पणं विना व्यावृत्तिसिद्ध्यभावेनेत्यर्थः । लक्ष्यार्थेति । विज्ञानानन्दपदयोर्लक्ष्यार्थभेदाभावेपि तद्व्यवच्छेद्यस्य अज्ञानत्वव्यावृत्तेरनानन्दत्व व्यावृत्तेश्च भेदत इत्यर्थः । तथा चाज्ञानत्वानानन्दत्व व्यावृत्त्योर्भिन्नयोः सत्त्वान्नपर्यायत्वं नापि व्यर्थत्वम् । अज्ञानत्वादि व्यावृत्त्या व्यवच्छेद्यस्य अज्ञानत्वादिभ्रमस्य भिन्नस्य सत्त्वेन फलभेदादित्यर्थः । वेदान्तानामखण्डार्थत्वे पदान्तरवैयर्थ्यपरिहारप्रकारं दूषयितुमनुवदति । नवीनास्त्विति । सत्यादिपदानां तावल्लक्षणया ब्रह्मबोधकत्वमस्ति तत्र लक्षणापदसमुदाय एवाङ्गीकृता नैकस्मिन्पदे

(प्रकाशः)
अतः समुदितानामेवसत्यादि पदानां लक्षकत्वान्नपदान्तराणां वैयर्थ्यम् । ननु पदसमुदाये लक्षणा कुत्र दृष्टेति चेन्न गम्भीरायां नद्यां घोष इत्यत्र गम्भीरनदीपदयोर्विशेषणविशेष्यभावेनादावन्वयबोधानन्तरं समुदितयोर्गम्भीरनदी-पदयोरेव तीरलक्षकत्वमङ्गीकृत्य पदान्तरवैयर्थ्यं परिह्रियते तत्राप्येकस्यैव पदस्य लक्षकत्वमङ्गीकृत्य पदान्तरवैयर्थ्याङ्गीकारे उद्देश्यायाः गम्भीरनदीसंबन्धितीरप्रतीतेरभाव प्रसङ्गात् एवं प्रकृतेपीत्याह । गम्भीरायामिति । गम्भीरनदीपदयोरन्योन्यमन्वयबोधानन्तरमित्येतदुत्तरत्र दार्ष्टान्तिके एतन्न्यायासंभवमुप-पादयितुमिति द्रष्टव्यम् । वाक्यस्य लक्षकत्वादित्यनुक्त्वा समुदितानामित्युक्तौ किं निमित्तम् एवमपि वाक्यस्यैव लक्षकत्वप्राप्तेरिति चेत् न गम्भीरायां नद्यां घोष इत्यत्र वाक्यलक्षकत्वोक्तौ तदन्तर्गतघोषपदस्यापि लक्षकत्वापत्तेः। तच्चानिष्टं घोषपदस्य मुख्यार्थात्यागात् गम्भीरनदीपदयोर्लक्षकत्वोक्तौ च पदसमुदायस्य लाक्षणिकत्वलाभ इति संप्रदायोऽवगंतव्यः । एकैकस्यैवेति । गम्भीरपदस्य वा नदीपदस्य वेत्यर्थः । शक्यासंबन्धिन इति । उद्देश्यप्रतीतिविषयगम्भीरनदीसंबन्धितीरस्य नदीपदशक्यकेवल नदीसंबन्धित्वाभावात् गम्भीरपदशक्यकेवलगम्भीर-संबन्धित्वाभावाच्चेत्यर्थः । तत्रेति । गम्भीरायां नद्यां घोष इत्यत्रादौ गम्भीरनदीपदयोरन्योन्यमन्वयबोधवदिह सत्यज्ञानपदयोस्तदभावादित्यर्थः । सत्यं ज्ञानमनन्तमिति पदानां त्रयाणां समुदितानां लक्षकत्वोक्तौ यत्रैतत्पदत्रयं तत्रैव लक्षणया ब्रह्मोपस्थितिरन्यत्र तु नास्तीत्युक्तं स्यात् अस्त्विति चेत्तत्राह । सत्यमिति । अन्येति । अनन्तानन्दपदेत्यर्थः । विज्ञानमानन्दमित्यत्र सत्यपदानपेक्षाणां विज्ञानादिपदानामित्यपि द्रष्टव्यम् । 'आनन्दादयः प्रधानस्ये'ति सूत्रे त्वद्भाष्योक्तन्यायेन पदान्तरोपसंहारस्यानङ्गीकारादिति भावः । ननु यत्र वाक्ये यावन्ति पदानि तत्र तावतां पदानां समुदायस्य लक्षकत्वमङ्गीकृतमिति न दोष इत्यस्वरसादाह । गम्भीरेति । तथाच दृष्टान्तवैषम्यमिति भावः । गम्भीरान्वितनदीबोधक इति । पदानामन्विताभिधानाङ्गीकारादिति भावः । सर्वेति । गम्भीरनदीसंबन्धितीरप्रतीत्युपपत्तावित्यर्थः । पदद्वये एकस्या लक्षणाया वा पदद्वये लक्षणा द्वयस्य वेति मतभेदेनोक्तमिति ज्ञातव्यम् । किञ्च पदसमुदाये लक्षणाङ्गीकारे वाक्ये लक्षणाङ्गीकारप्राप्त्या लक्षणायाः पदवृत्तित्वसाधकानुमानविरोध इत्याह । लक्षणापि हीति । दार्ष्टान्तिकेपि सत्यान्वितार्थबोधके ज्ञानपद एव लक्षणाऽस्तु न पदसमुदाय इत्यर्थः । ननु

'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ।
भूयान्ममापि तत्रैव जन्म यत्र गतो भवानि'

इति वाक्ये न प्रियाया मरणं प्रतीयते तत्र लक्षणैवेति वक्तव्यं तद्वाचकपदाभावात् अतः पदसमुदाये लक्षणासिद्धिरिति चेत्तत्राह । गच्छेति । अनुमितमर्थं लिङ्गीकृत्य पुनर्जायमानानुमितेरनुमितानुमितित्वम् । नन्वनुमितिलभ्येप्यर्थे लक्षणाप्यस्त्वित्यत आह । अनन्येति । शब्दार्थः शब्दवृत्तिलभ्यार्थः । अन्यथा अपूर्वताभङ्ग इति भावः । ननु विषं भुंक्ष्वेति वाक्येन द्विषदन्नं न भोक्तव्यमिति ज्ञानं जायते तथाच वाक्ये लक्षणासिद्धिः एवं सत्यज्ञानादिवाक्येपीत्याह । विषमिति । प्रकृतात् प्रसक्तात् । भोजनादिति । भोजनापेक्षयेत्यर्थः । उक्त्येति । इष्टसाधनत्वोक्त्यन्यथानुपपत्त्येत्यर्थः । नन्विति । अनन्यलभ्यो हि शब्दार्थ इति भावः । भोजनस्य

(प्रकाशः)

शत्रुगृहभोजनस्य । अस्तु वा विषं भुंक्ष्वेत्यत्र वाक्ये लक्षणा तथापि तन्मध्ये एकं पदं वाचकमेवाङ्गीक्रियते न सर्वेषामपि पदानामेकार्थलक्षकत्वं न हि सत्यादिवाक्ये त्वयैवं वक्तुं शक्यमित्याह । यद्वेति । विधिप्रत्ययः भुंक्ष्वेत्यत्र विद्यमानो लोड्रूपः । निषेधे कर्तव्यत्वनिषेधे । मुख्य एवेति । तथाचानिष्टसाधनं भोजनं न कर्तव्यमिति वाक्यार्थो द्रष्टव्यः । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप' इति क्रुधधातुयोगे चतुर्थीविधानान्मह्यं क्रुद्ध इत्युक्तम् । अनुमितिरेवेति । अनुमितं क्रोधं हेतूकृत्याकर्तव्यात्वानुमितिरित्यर्थः । न लक्षणेति । अनन्यलक्ष्यत्वाभावादिति भावः । ननु लोके अर्धमन्तर्गृहम्? अर्धं बहिर्गृहमित्युच्यते वेदेपि 'अर्धमन्तर्वेदिमातव्यमर्धं बहिर्वेदी'ति । उभयत्रापि गृहान्तरालप्रदेशो वेद्यन्तरालप्रदेशश्च वाक्येन लक्ष्यमाणो दृष्ट इति वाक्यलक्षणेति चेत्तत्राह । अर्धमिति । देवदत्तस्य अर्धमर्धभागः अन्तर्गृहं गृहस्यान्तरस्ति अर्धं बहिर्गृहं गृहाद्बहिरस्तीत्यर्थः । अन्तस्त्वेनान्तर्विद्यमानत्वेन बहिष्ट्वेन बहिर्विद्यमानत्वेन आक्षिप्यते अर्धस्यान्तस्त्वम् अर्धस्य बहिष्ट्वमन्तरालप्रदेशं विनानुपपद्यमानं तं गमयतीत्यर्थः । एवमिति । मापने क्रियमाणे सति अर्धं वेद्यं तर्यथास्यादर्धं वेद्याबहिर्यथास्यात्तथामातव्यमित्यर्तः । नेयमिति । तत्राप्यर्धस्यान्तस्त्वेन अर्धस्य बहिष्ट्वेन वेद्यन्तरालप्रदेश आक्षिप्यते न तु पदसमुदाये लक्षणेत्यर्थः । किंच वैदिकोदाहरणस्थलेपि न सर्वपदसमुदायवाक्यस्य लक्षकता एकस्य मातव्यमिति पदस्य मुख्यार्थाङ्गीकारात् । सत्यादिवाक्ये त्वयैवमङ्गीकर्तुमशक्यत्वादित्याह । तत्रापीति । ननु वायुर्वैक्षेपिष्टा देवतेत्याद्यर्थवादे प्राशस्त्यप्रतिपत्तये वाक्य एव लक्षणाङ्गीकार्या प्रत्येकं पदात्तदनुपस्थितेरित्याशंक्याह । वायुर्वा इति । नत्विति । पदार्थसंसर्गातिरिक्तस्य प्राशस्त्यस्याभावादित्यर्थः । अयमाशयः 'वायव्यं श्वेतमालभेतभूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयती' त्यर्थवादस्यायमर्थः वायुः शीघ्रतमा देवता तं वायुं प्रति यजमानः स्वेन दत्तेन हविर्लक्षणेन भागेन गच्छति स्वयमेव यजमानो हविर्भागरूपेण देवतां प्रति गच्छति स एव यजमानं भूतिं गमयति यथा कश्चिद्गृहस्थोभ्यागताय सत्कारं करोति तद्वदिति । अत्र वायूद्देश्यकस्य हविस्त्यागलक्षणस्य यागस्य क्षिप्रफलप्रदवायुप्रसादहेतुत्वमेव प्राशस्त्यम् इदं चतत्तत्पदार्थसंसर्गरूपमेवेति । नन्वर्थवादे देवताप्रसादहेतुत्वं कर्मणो नोच्यते अतस्तदतिरिक्तप्राशस्त्य लक्षकत्वमर्थवादवाक्यस्याङ्गीकार्यमित्यत आह । किञ्चेति । तादृशस्थले लिङ्गाद्यभिधेयकार्यान्वयानुपपत्त्या हि प्राशस्त्यलक्षणाङ्गीकार्या एवं च तत्रैकस्य लिङः कार्यवाचकत्वाङ्गीकारान्न सर्वपदानां लक्षकत्वमङ्गीक्रियते न चेह सत्यादिवाक्ये तथाङ्गीकर्तुं शक्यमिति भावः । ननु सर्वपदानां लक्षकत्वेपि सत्यादि वाक्यस्याननुभावकत्वं कुतः । लक्षकपदानामपि लक्ष्यार्थानुभावकत्वाङ्गीकारादित्यत उक्तम् । लक्षकपदान्यननुभावकानीति पक्ष इति । ननु मयापि सत्यज्ञानादिवाक्ये लक्ष्यपरस्य ब्रह्मपदस्य वाचकत्वाङ्गीकारान्न सर्वपदानामपि लक्षकत्वमङ्गीकृतमिति चेत्तत्राह । यदि चेति । ननु ब्रह्मपदस्य धर्मसंसर्गप्रतिपादकत्वात्तद्वाच्यत्वाङ्गीकारे कथं सखण्डार्थत्वमित्यत उक्तम् । यौगिकमिति । 'अथ कस्मादुच्यते ब्रह्मेति बृहंतो ह्यस्मिन्गुणा' इति श्रुत्या तस्य योगवृत्त्या गुणसंसर्गप्रतिपादकत्वावगमादिति भावः । किंच ब्रह्मपदमयौगिकमेवास्तु तथापि सखण्डार्थत्वमेव । तथाहि सत्यादिपदेषु मुख्यार्थतयाऽवधृतब्रह्मशब्दार्थान्वयानुपपत्तिर्नास्ति अस्ति वा । आद्ये न तर्हि तेषु लक्षणा

(प्रकाशः)

तद्बीजाभावात् । यदि सास्ति तर्हि ब्रह्मपदे सत्यादिपदान्वितार्थबोधकत्वमावश्यकं स्यात् अन्वयाबोधे प्रसक्ते तद्बोधोपपत्त्यर्थमेव सत्यादिपदेषु लक्षणायाः कल्पितत्वात् अतो ब्रह्मपदं सत्यादिपदान्तरान्वितस्वार्थपरं तथाच सखण्डार्थमेवेत्याह । ब्रह्मपदस्येति । नन्वभिधेयान्वयानुपपत्त्यैव न लक्षणा तथात्वे यष्टीः प्रवेशयेत्यादौ तदभावप्रसङ्गात् किंनाम तात्पर्यानुपपत्त्यापि । प्रकृते च स्वरूपमात्रतात्पर्यस्य सर्वपदानां लक्षणां विनाऽसंभवात्सर्वपदानामपि लक्षकत्वमेव नाभिधेयान्वयानुपपत्त्या लक्षणायामिव कस्यचित्पदस्य वाचकत्वावश्यंभाव इत्याशंक्य निराकरोति । नचेति । यष्टीः प्रवेशयेत्यादावपि न तात्पर्यानुपपत्त्या लक्षणा किंत्वन्यथानुपपत्त्यैवेत्याह । तत्रापीति । प्रकृतानां भोजनप्रकरणप्रसक्तानाम् । ननु कथमत्रान्वयानुपपत्त्या लक्षणा गङ्गायां घोष इत्यादौ समभिव्याहृतपदार्थान्वयानुपपत्त्या लक्षणा दृष्टा । यष्टीः प्रवेशयेत्यत्र च भोक्तृपदसमभिव्याहाराभावेन समभिव्याहृतपदार्थान्वयानुपपत्तिर्नास्तीति चेत् । अस्त्यत्र संप्रदायविशेषः । यथा गङ्गायां घोष इत्यत्र समभिव्याहृतपदार्थान्वयस्य प्रत्यक्षबाधितत्वाल्लक्षणा एवमिहापि समभिव्याहृतपदार्थान्वयस्य यष्टिकर्मकप्रवेशनक्रिया संसर्गस्य प्रकरणबाधितत्वेनान्वयानुपपत्त्यैव लक्षणा । तथाच भोजनादि कर्तृत्वेन प्रकृतानां प्रवेशनेनान्वयानुपपत्तेरेव तद्बीजत्वादिति । वाक्यमित्थं योज्यम् । अत्र यष्टिकर्मकप्रवेशनक्रियासंसर्ग-रूपपदार्थसंसर्गस्येति शेषः । एवं च यष्टिकर्मकप्रवेशनक्रियासंसर्गरूपसमभिव्याहृतपदार्थान्वयस्य भोजनकर्तृत्वेन प्रकृता ये भोक्तारः तत्कर्मकप्रवेशनान्वयेन प्रकरणसिद्धेनानुपपत्तेर्बाधस्य सत्त्वेन समभिव्याहृत-पदार्थान्वयानुपपत्तेरेव लक्षणाबीजत्वादिति भावः । किं च स्वरूपमात्रे तात्पर्यसिद्धौ तदन्यथानुपपत्त्या सत्यादिपदानां लक्षणा स्यात् न चैवमस्तीत्याह । इहेति । पदार्थमात्रस्य सिद्धत्वेन तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यस्य तत्रायोगादित्यर्थः । एतेनेति । स्वरूपमात्रे तात्पर्यायोगवत् स्वरूपमात्रे वाक्यप्रामाण्यस्याप्ययोगेनेत्यर्थः । वाक्येति । 'केवलो निर्गुणश्चे'ति श्रुतिसिद्धं ब्रह्मसत्यत्वादिविशिष्टतया बोधयतो वाक्यस्य प्रामाण्यानुपपत्तेस्तदन्यथानुपपत्त्या सत्यादिपदानां स्वरूपमात्रे लक्षणेत्यर्थः । निरस्तमिति । प्रामाण्यस्यानुपपत्त्या हि तदुपपादकं कल्प्यं न च पदार्थमात्रलक्षणया वाक्यप्रामाण्यमुपपद्यते पदार्थमात्रस्यान्यत एव सिद्धत्वेनानधिगतार्थगन्तृत्वरूपप्रामाण्यायोगात् बाधितेपि पदार्थमात्रस्य सत्वाच्चेत्यर्थः । ननु गामानयेति वाक्ये न गोकर्मकानयनक्रियाकः संसर्गो लक्ष्यते । अन्यथा तदनुपस्थितिरेव स्यात् अतो वाक्ये लक्षणासिद्धिरिति चेत्तत्राह । वाक्यस्येति । तर्हि कथं तद्बोध इत्यत आह । अन्वितेति । पदानामितरान्वितस्वार्थ एव शक्त्यङ्गीकारेणान्वयस्यापि पदशक्तिविषयत्वेन लक्ष्यत्वाभावादित्यर्थः । अभिहितेति । पदैरभिहिताः अन्योन्यान्विताः पदार्था एवान्योन्यमन्वयं बोधयन्तीत्यङ्गीकारेणान्वितपदार्थानामेव पदैरभिहि-तत्वाङ्गीकारात्तन्मतेपि नान्वयो लक्ष्य इत्यर्थः । अन्वयो लक्ष्यत इति पक्षेपि न वाक्यस्यान्वयलक्षकत्वं किं नाम पदस्यैवेत्याह । अन्वय इति नन्वेकेनैवपदेन कथमन्वयबोध इत्यत उक्तम् । पदान्तरैरिति । प्रतियोगीति । अन्वयनिरूपकपदार्थेत्यर्थः । अस्तु वाक्यस्य लक्षकत्वं तथापि प्रकृते सत्यादि वाक्ये तन्न संभवति तथाहि गामानयेत्यस्माद्गोकर्मकानयनक्रियाक संसर्गलक्षकात् गामानय शुक्लां दण्डेनेत्यधिकपदप्रयोगे सति शुक्लगोकर्मकदण्डकरणकानयनक्रियाकसंसर्गोधिकः प्रतीयते प्रकृते तु 'विज्ञानमानन्दं ब्रह्मे'ति वाक्या-

(प्रकाशः)

पेक्षयाऽधिकपदान्तरयुक्तस्यापि सत्यज्ञानादिवाक्यस्य स्वरूपमात्रबोधकत्वेनाधिक लक्षकत्वाभावाद्वाक्ये लक्षणाङ्गीकारो वृथैवेत्याह । गामानयेत्यस्मादिति इह सत्यज्ञानादिवाक्ये । तर्हि तस्येति । सर्वेषां सत्यादिपदानां लक्षकत्वात्तन्मध्यगतयोरनन्तब्रह्मशब्दयोरपि लक्षणया स्वरूपमात्रपरत्वेन सर्वतो व्यावृत्तवस्तुपरत्वाभावात् तस्य सत्यज्ञानादिवाक्यस्य सत्यत्वादिविशिष्टार्थप्रतिपादकत्वेऽनन्त ब्रह्मशब्दयोर्बाधकत्वायोगेन तच्छब्दविरोधोक्तिरयुक्ता स्यादित्यर्थः । सत्यादीति । व्यावर्तकस्य सत्यत्वादेर्ब्रह्मण्य बोधने तस्मिन्ननृतादिव्यावृत्त्यसिद्धेरित्यर्थः । विज्ञानमिति । विज्ञानादिपदानां विज्ञानस्वरूपाद्यबोधकत्वादिति भावः । एकमेवेति । एकादिपदानां विज्ञानस्वरूपत्वाद्यबोधकविशेष्यमात्रपरत्वेन नानात्वानिषेधकत्वादित्यर्थः । सत्यादीति । बुभुत्साप्रयोजकधर्मिज्ञानानधिकविषयकत्वात् सत्यज्ञानादिवाक्यजन्यज्ञानस्येत्यर्थः । सगुणेत्यादि । एकार्थत्वे नाविरोधादिति भावः । तदैक्षतेत्यादि । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत तत्तेजोऽसृजते'त्यत्र सच्छब्दं प्रधानं ब्रह्मवेति विशये प्रधानमेवेति प्राप्ते सच्छब्दनिर्दिष्टे ईक्षणकर्तृत्वश्रवणात्तस्य च जडेऽसंभवाद् ब्रह्मैव सच्छब्दमितीक्षत्यधिकरणे निर्णीतम् । तथा 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते स एषोनन्त' इत्यत्र आकाशो भूतं परमात्मा वेति संशये भूतमिति प्राप्तेऽनन्तत्वादिलिङ्गेन परमात्मैवेत्याकाशाधिकरणे निर्णीतं तदेतत्सर्वमप्ययुक्तं स्यात् । 'तदैक्षत स एषोऽनन्त' इत्यादीनामपि वाक्यानां लक्षणया चिन्मात्रपरत्वेन ईक्षणानन्तत्वादि लिङ्गानर्पकत्वादिति भावः । कृत्स्नस्यापि वेदान्तस्य लक्षणया चिन्मात्रपरत्वेऽतिप्रसङ्गमाह । कृत्स्नस्येति । शून्यादीति । तत्वतया शून्यवाद्यद्यभिमतशून्यादिपरत्वं स्यादित्यर्थः । चैत्येति । कर्तव्यत्वेन बौद्धाभिमतचैत्यवन्दनादि परत्वं स्यादित्यर्थः । एवमखण्डार्थत्वे पदान्तरवैयर्थ्यमुपपाद्योपसंहरति । तस्मादिति । अनानन्दत्वादिकमित्यनेनाज्ञानत्वादि सङ्ग्रहः । आनन्देति । ब्रह्मण अनानन्दत्वस्याननुभवत्वस्य च प्राप्तौ तद्भावरूपायां मुक्तावानन्दतदनुभवयोरभावापातेन तार्किकाभिमतमुक्तिवदपुरुषार्थत्वं स्यादित्यर्थः । ननु ब्रह्मणः सत्यादिपदलक्ष्यत्वेपि नासत्यत्वादिकम् । ननु तर्हि नदीपदलक्ष्यस्यापि तीरस्य नदीत्वं स्यादिति चेन्न वैषम्यात् नदीत्ववाचिना नदीशब्देन तदाश्रयसंबन्धिन एव लक्ष्यत्वम् अतस्तीरे न नदीत्वम् इह तु सत्तादिजातिवाचिना सत्यादिपदेन तदाश्रयव्यक्तेरेव लक्षणाऽतो ब्रह्मणः सत्तासंबंधः सिध्यतीति न तस्यासत्यत्वादिकमित्याशङ्कते । नन्विति । तदाश्रयव्यक्तेरिति । नदीत्वाश्रयनदीव्यक्तेरित्यर्थः । तदाश्रयेति । नदीत्वाश्रयनदीव्यक्तिसंबन्धिनस्तीरस्येत्यर्थः । सन्घट इत्यादाविति । यथा सन्घट इत्यादौ सच्छब्दस्य सत्ताजातिवाचित्वमेवं सत्तादिजातिवाचिभिः सत्यादिपदैरित्यर्थः । तदाश्रयेति । सत्ताश्रयेत्यर्थः । सत्वसंबन्धस्येति । यथा नदीत्वस्यैव नदीशब्दबोध्यत्वेन नदीतीरसंबन्धस्य शब्दबोध्यत्वाभावेपि तीरस्य मुख्यार्थभूतनदीत्वाश्रयनदीसंबन्धाभावे लक्षणाया अयोगेन लक्षणाहेतुत्वेन नदीतीरयोः संसर्गः सिद्ध्यति यथा वा सन्घट इत्यत्र सत्ताजातेः सच्छब्दार्थत्वेन घटे सत्वसंबन्धस्य शब्दबोध्यत्वाभावेपि सच्छब्दमुख्यार्थभूतस्य सत्त्वस्य व्यक्तिसंबन्धाभावे लक्षणाया अयोगेन लक्षणाहेतुत्वेन घटे सत्वसंबन्धः सिध्यति एवं प्रकृतेपि सत्यादिपदैः सत्ताजात्यादेरेव वाच्यत्वेन ब्रह्मव्यक्तौ तत्संबन्धस्य शब्दबोध्यत्वाभावेपि सत्यपदमुख्यार्थभूतसत्तासंबन्धस्य व्यक्तावभावे लक्षणाया अयोगेन मुख्यार्थभूतसत्तासंबन्धस्य लक्षणा हेतुतयाऽवश्यं वाच्यत्वेन ब्रह्मणः सत्वसंबन्धसिद्ध्या

(प्रकाश:)

नासत्वादिकमित्यर्थः । ननु जातिव्यक्त्योः क; संबन्धः । आवयोर्मते समवायाभावादित्यत आह । जातीति । ननु जातिव्यक्त्योस्तादात्म्ये जातेर्वाच्यत्वे व्यक्तेरपि वाच्यत्वप्राप्तिस्तदाश्रयव्यक्तेरित्यादि व्यवहारानुपपत्तिश्चेति चेन्न । भेदाभेदाङ्गीकारेण व्यवस्थोपपत्तेरिति भावः । सत्ताजातिवाचिभिः सत्यादिपदैरित्यनेन तार्किकरीत्या जातिविशिष्टायां व्यक्तौ शक्तिरित्यङ्गीकृत्य नदीत्वविशिष्टनदीवाचकस्य नदीशब्दस्य तदितरतीरादि लक्षकत्ववत् सत्यशब्दस्यापि सत्वविशिष्टसद्व्यक्तिवाचकत्वमङ्गीकृत्य ब्रह्मलक्षकत्वमङ्गीक्रियत इत्यभिप्रेतम् । उत जातौ शक्तिरिति भाट्टरीत्या सत्यशब्दस्य सत्ताजातिमात्रवाचकत्वमङ्गीकृत्य तदतिरिक्तव्यक्तिलक्षकत्वमभिप्रेतम् । आद्ये आह । व्यक्तिरिति । जातिविशिष्टव्यक्तिरित्यर्थः । सत्यशब्दस्य सत्ताविशिष्टसद्व्यक्तिवाचकत्वमङ्गीकृत्य ब्रह्मणस्तत्पदलक्ष्यत्वाङ्गीकारे तस्य सद्व्यक्तित्वं न सिद्ध्यति ब्रह्मणः सद्व्यक्तित्वे सच्छब्दवाच्यत्वप्राप्त्या सच्छब्दलक्ष्यत्वं न स्यात् । अतः सत्यशब्देन ब्रह्मणो लक्ष्यत्वं वदता तस्य सद्व्यक्तिभिन्नत्वेऽङ्गीकार्ये ब्रह्मणः सत्वासिद्धिरिति भावः । एवमेवानन्दत्वाद्यसिद्धिरपि द्रष्टव्या जातिविशिष्टव्यक्तौ शक्तिरितिपक्षेपि ब्रह्मणो लक्ष्यत्वेपि नानानन्दत्वादिकमिति शङ्कते । नन्विति । जहदिति । गङ्गात्वविशिष्ट गङ्गारूपं स्वार्थं जहतो गङ्गापदस्य स्वार्थभिन्ने तीरे लक्षणेति तत्र न गङ्गात्वादिकमिति भावः । जहदजहदिति । आनन्दादिपदानां यः आनन्दत्वादिविशिष्टानन्दादिरूपः स्वार्थः तत्रानन्दत्वादि जातिरूपैकदेशं जहती तदेकदेशभूता-नन्दादिव्यक्तिमजहती आनन्दादिपदस्य स्वार्थैकदेशभूतायाम् आनन्दव्यक्तौ लक्षणाङ्गीक्रियते । आनन्दव्यक्तिरेव च ब्रह्मेति तस्य नानानन्दत्वादिकमित्यर्थः । विशिष्टवाचकशब्देनैकदेशलक्षणायां विशिष्टैकदेशभाव एव संबन्ध इत्यनेकोक्तं भवतीति द्रष्टव्यम् । तत्रेति । लक्ष्यभूतानन्दव्यक्तावित्यर्थः । असत्व इति । जात्यंशत्यागादिति भावः । असिद्धेरिति । आनन्दत्वजात्याधारस्यैवानन्दव्यक्तित्वादिति भावः । ननु ब्रह्मण्यानन्दत्वजातिरप्यस्त्येवेति चेत्तत्राह । तत्सत्यत्वस्य चेति । अशब्देनेति । शब्दातिरिक्तप्रमाणेनेत्यर्थः । तत्र हेतुरौपनिषद इति शब्दस्तु विज्ञानमानन्दमित्यादिरधुनापि ब्रह्मण्यानन्दत्वादिजातिबोधकत्वे विवादापन्नइति भावः । प्रवृत्तिनिमित्तसद्भावेना-नन्दपदवाच्यत्वापत्तिश्चेत्यपि द्रष्टव्यम् । भट्टादिरीत्या सत्तादिजातिमात्रवाचित्वं सत्यादिशब्दानामङ्गीकृत्य तदाश्रयब्रह्मव्यक्तौ लक्षणाङ्गीक्रियत इति द्वितीयपक्षे दोषमाह । जातिरिति । अस्मिन्पक्षेपि लक्ष्यस्य ब्रह्मणः सत्वादिकं न सिद्ध्यत्येव । तथाहि इदं तावद्भवान्पृष्टो व्याचष्टां सन्घट इत्यादिवाक्यं सखण्डार्थं सत्यादिवाक्यं तु अखण्डार्थमिति विभागः किं निमित्तक इति तत्र सत्पदेन घटे सत्तावैशिष्ट्यं प्रतीयते अत्र तु सत्यपदेन सत्यत्ववैशिष्टं न प्रतीयते अतो विभागो युक्त इति चेन्न जातेरेव शब्दबोध्यत्वेन तेन व्यक्तौ तत्संबंधाप्रतीतेरुभयत्रापि साम्यात् । ननु स्वार्थासंबन्धे लक्षणाया अयोगेन जातिवाचकसत्यपदस्य तदाश्रयघटव्यक्तौ लक्षणासिध्यर्थं सत्वसंबन्धप्रतीतिरङ्गीकार्येति चेत् । समं प्रकृतेपि । एवं सति सन्घट इत्यस्य सखण्डार्थत्वं सत्यं ज्ञानमित्यादेरखण्डार्थत्वमिति विभागार्थं तथा भाट्टैर्व्यक्तिमात्रलक्षकत्वेनाङ्गीकृतस्यापि नद्यां मीनः सन्घट इत्यादेः नद्यां घोष इत्यस्मान्मुख्यार्थत्वस्वीकारेण तदपेक्षया लाक्षणिकत्वेन स्वीकृतानां नद्यां घोषः सत्यं ज्ञानमित्यादीनां विशेषतो लक्षकत्वार्थं च जात्याश्रयव्यक्तिसंबन्धित्वेनैव सत्यादिपदैर्ब्रह्मणो लक्षणीयत्वे वाच्ये तीरे गङ्गात्वाभाव इव ब्रह्मणः सत्वाद्यसिद्धिरेवेति भावः । सत्तादिजातिवाचकैरपि सत्यादि पदैर्व्यक्तिमात्रं

(प्रकाशः)

न लक्ष्यते किंनाम सत्तादिजातिविशिष्टव्यक्तिरेव एवं च लक्ष्यस्यापि ब्रह्मणः सत्वादिसंबन्धस्य शब्दबोध्यत्वात्सत्वादिकं सिध्यतीति केनचिदुक्तमाशंक्य निराकरोति । एतेनेति । गुणविशिष्टेति । अश्वव्यक्तिमात्रस्य लक्ष्यत्वे तु तत्र शोणिमगुणो न सिध्येदिति भावः । बहुव्रीहाविति । लंबकर्णमानयेत्यत्रेत्यर्थः । तद्विशिष्ट इति । अन्यथा देवदत्तमात्रानयनप्रसङ्गेन कर्णादेरानयनान्वयो न स्यादिति भावः । एतेनेत्युक्तं विशदयति । लक्ष्यस्येति । सत्यादिपदैः सत्वादिविशिष्टस्यैव लक्ष्यत्वे लक्ष्यार्थस्यैव विशिष्टत्वेन सखण्डार्थत्वापातादित्यर्थः । तथाच लक्ष्यस्य ब्रह्मणो विशिष्टत्वपरिहाराय तस्य सद्व्यक्तिसंबंधित्वेनैव लक्ष्यत्वे वाच्ये तीरस्य गङ्गात्वाभाववत् ब्रह्मणः सत्वासिद्धिरेवेति भावः । सन्घट इत्यादेः सत्यं ज्ञानमित्यादेश्च सखण्डार्थत्वाखण्डार्थत्वविभागमाशंक्य परिहरति । न चेति । विशिष्टं सत्वविशिष्टघटरूपव्यक्तिरिति यावत् । न व्यक्तिमात्रं येन तस्याप्यखण्डार्थत्वं स्यादिति भावः । इह सत्यज्ञानादिवाक्ये । तेन व्यक्तिमात्रस्य लक्ष्यत्वेन । इह सत्यज्ञानादिवाक्ये । शब्दस्य सत्यादिपदस्य । तर्हि लक्ष्ये सत्वसंबन्धस्याशाब्दत्वाद् ब्रह्मणि सत्यत्वं न सिध्येदित्यत आह । लक्षणेति । मुख्यार्थसंबन्धाभावे लक्षणाया अयोगेन लक्षणाहेतुत्वेन ब्रह्मणि सत्यशब्दमुख्यार्थभूतसत्वसंबन्धसिद्धिरिति लक्ष्यार्थे ब्रह्मणि तीरे गङ्गात्वाभाव इव न सत्वाद्यभाव इत्यर्थः । एवं च सन् घटः सत्यं ज्ञानमित्यादीनां लक्षकत्वेसमानेपि विशिष्टाविशिष्ट लक्षकत्वेन सखण्डार्थत्वाखण्डार्थत्वविभाग इति भावः । लक्षणाया इति । औपनिषदे ब्रह्मणि मानान्तरेण सत्वासिद्धेः । सत्यपदस्य च लाक्षणिकत्वेन तत्र सत्वाप्रतिपादकत्वात् । लक्षणाहेतुत्वेन तत्सिद्ध्युक्तौ सन्घट इत्यादाविवातात्विक सत्वसंबन्धेनापि लक्षणोपपत्तेर्न ब्रह्मणि वास्तवसत्वसिद्धिरिति भावः । ननु ब्रह्मणि सत्वसिद्धिर्न लक्षणाहेतुत्वेनोच्यते येनाऽतात्विकसत्वसंबन्धेनाप्युपपत्तिः स्यात् नापि मानान्तरेण तत्सिद्धिरुच्यते येन औपनिषदत्वात्नमानान्तरेण तत्सिद्धिरिति दूषणावकाशः किं नाम सत्यमित्यादि श्रुतेरेव ब्रह्मस्वरूप इव सत्यादि पदवाच्यस्य सत्यत्वस्य लक्ष्ये ब्रह्मणि सत्वेपि तात्पर्यं कथ्यते अतो लक्ष्यस्यापि ब्रह्मणः सत्वसिद्धिरित्यत आह । श्रुतेरेवेति । सत्यं ज्ञानमिति श्रुतेरेवेत्यर्थः । वाच्ये सत्वेपीति । सत्ताजातेरेव सत्यशब्दार्थत्वात्सत्यादि पदवाच्यसत्वस्य लक्ष्ये ब्रह्मणि सत्वेपीत्यर्थः । सखण्डार्थत्वमिति । ब्रह्मस्वरूप इव तत्सत्वेपि तात्पर्याङ्गीकारेणोभयत्रापि तात्पर्यप्राप्त्या प्रातिपदिकार्थमात्रपरत्वरूपाखण्डार्थत्वहानिः सत्वसंसर्गप्रतिपादकत्वेन सखण्डार्थत्वं चेत्यर्थः । अनुगतसत्तैवेति । परसामान्यभूतासत्तैवेत्यर्थः । वाच्येति । जातेरेव शब्दार्थत्वेन ब्रह्मणश्च सत्ताजात्यभिन्नत्वात्सत्यपदवाच्यमेव ब्रह्म स्यान्न तु लक्ष्यमिति वाच्यातिरिक्तलक्ष्याभावापातादित्यर्थः । ब्रह्मण इति । जातेर्व्यक्त्यधीनत्वदर्शनाद् ब्रह्मणोपि जातित्वे व्यक्त्यधीनत्वेन पारतन्त्र्यापत्तेरिति भावः । सत्तावदिति सत्ताजातितुल्यं ब्रह्म न तु सत्ताजातिरेव अतो न पारतन्त्र्यादिदोष इति भावः । सत्स्वभावमिति । तथाच लक्ष्यस्यापि ब्रह्मणः सत्स्वभावत्वात्सत्वाद्युपपत्तिरिति भावः । सच्छब्दस्येति । गङ्गापदलक्ष्ये तीरे गङ्गात्वाभाव इव सत्ताजातिवाचिसत्यपदलक्ष्ये ब्रह्मणि सत्वासिद्धिरिति भावः । ननु स्वरूपातिरिक्तसत्ताहीनमपि सत्तावत्सत्स्वभावम् अतः सत्वसिद्धिरिति चेत्तत्राह । सत्तायामिवेति । व्यतिरेकदृष्टान्तः सत्ताजातिरहितस्यापि ब्रह्मणः सत्स्वभावत्वे मानाभावात् । न च सत्तावदुपपत्तिरिति वाच्यं सत् द्रव्यं सन्गुणः सत्कर्मेत्यनुगतव्यवहारबलेन सर्वत्रानुगता सत्ताङ्गीकार्या सत्तायां च

(प्रकाश:)

न सत्ताङ्गीकार्याधर्मस्य धर्मसत्तानवस्थापत्तेरतः सत्तारहितापि सत्ता सद्रूपेत्यङ्गीकार्यमिति प्रमाणवत् औपनिषदे ब्रह्मणि सत्तारहितेपि सत्स्वभावत्वसाधकं मानान्तरं नास्तीत्यर्थः । एतावत्पर्यन्तं जातिः सत्यशब्दार्थ इति मतमङ्गीकृत्य दूषणमुक्तम् इदानीं तु सत्वं जातिरेव न भवतीत्याह । कथं चेति । सद्व्यक्तेरिति । परमार्थसद्व्यक्तेरेकत्वेन तत्र जात्ययोगादित्यर्थः । अपरमार्थसतां बहूनां विद्यमानत्वेन जातित्वोपपत्तेः परिहारायोक्तम् । परमार्थसति मुख्यस्येति । सत्तादिजातीति । सत्त्वतद्व्याप्यद्रव्यत्वद्रव्यव्याप्यकुंभत्वरूपजात्याख्यमुख्यार्थ बोधनद्वारेत्यर्थः । एकामिति । तथाच कुंभव्यक्तेः सद्द्रव्यादिपदलक्ष्यत्वेपि तस्याः सद्रूपत्वादिकं यथा एवं यद्यपि सत्यादिपदानि ब्रह्म लक्षणयन्ति तथापि ब्रह्मणः सदानन्दादिरूपत्वं युक्तं लक्ष्यार्थस्यैकत्वेपि वाच्यार्थभेदादपर्यायत्वं च युक्तमित्यर्थः । एतेनेत्युक्तं विशदयति । तद्वदेवेति । कुंभव्यक्तेः सदादिशब्दलक्ष्यत्वेपि सत्वादिवैशिष्ट्यम् अतात्विकमेव प्रतीयते एवं प्रकृते ब्रह्मणः सत्यादिपदलक्ष्यत्वेन तात्विकसत्वाभावेपि अतात्विकसत्वादिवैशिष्ट्यमेव स्यात् तथाचातात्विकसत्वादिवैशिष्ट्यप्रतिपादकत्वाद्वेदांतानाम् अतत्वावेदकत्वं स्यादिति भावः । कथं च परमार्थसति मुख्यस्य सत्यशब्दस्य जातिवाचिता तद्व्यक्तेरेकत्वादित्युक्तदूषणमपि एतेनेत्यनेनातिदिष्टं द्रष्टव्यम् । संगृह्णाति । एवं चेति । स्वाभिमतेति । सत्यादिपदैर्ब्रह्मणि तात्पर्यतः सत्यत्वाद्यनर्पणमिच्छतः शून्यसदृशब्रह्मसिद्धिरेवाभिमतेत्यर्थः । भङ्गार्थमुपसंहरति । तस्मादिति । शून्यवादापत्तेरित्यर्थः । सत्यज्ञानादिवाक्यानामखण्डार्थत्वभङ्गविवरणम् ।

## ३. तत्त्वमस्यादिवाक्यस्याखण्डार्थत्वानमानभङ्गः

**तत्त्वमस्यादिवाक्यस्याऽखण्डार्थत्वानुमाने अप्ययुक्ते । उक्ताप्रसिद्धविशेषणत्व-बाधप्रतिरोधाप्रयोजकत्वप्रतिकूलतर्कपराहत्यादिदोषात् । उक्तरीत्याऽन्त्य हेतोर-सिद्धेश्च। उभयत्रापि दृष्टान्तस्य साध्यवैकल्याच्च । ननु सोऽयमित्यत्र किं तद्देशकालादि विशिष्टस्यैतद्देशकालादि वैशिष्ट्यं बोध्यते? एतद्देशकालादिविशिष्टस्य तद्देशकालादिवैशिष्ट्यं वा? विशिष्टद्वयैक्यं वा? नाद्यः, एतत्कालादि विशिष्टस्य प्रत्यक्षत्वेनाऽनुपदेश्यत्वात् । तत्कालादेरपीदानीं सत्त्वापत्तेश्च । न द्वितीयः, एतत्कालादेस्तदा सत्त्वापातात् । न तृतीयः, विशेषणभेदे विशिष्टाभेदायोगात् । विशिष्टं हि यदि विशेषणविशेष्यसम्बन्धरूपं तदा विशेषणभेदेन, यदि तु पदार्थान्तरं तदापि विशेष्यभेदेनेव विशेषणभेदेनापि तद्भेद आवश्यकः । तस्मात्सोऽयमित्यादि वाक्यं लक्षणयाऽखण्डार्थमिति चेत् ।**

उच्यते– अस्तु तावदनुभवकालसम्बन्ध एव तत्ता, तथापि बाल्ययौवनयोरिव श्यामरक्तरूपयोरिव च तदेतद्देशकालसम्बन्धरूपयोस्तत्तेदन्तयोः परस्परमनन्वयेऽपि एकविशेषणविशिष्टे इतरस्यावृत्तावपि एकविशेष्यवृत्तित्वं तावदस्ति, कालद्वया-सम्बन्धिपदार्थानां क्षणिकत्वापातात् । देशद्वयसम्बन्धस्यापि कालभेदेनानुभवात् । सोऽयमिति पदद्वयं च तत्तेदन्तयोरेकवृत्तित्वबोधने शक्तम्, समानाधिकरणत्वात् । भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिर्हि सामानाधिकरण्यम् । न च विशेष्यस्य तत्तेदन्तान्वयपरमपीदं वाक्यं विशिष्टस्य तदन्वयपरं नेत्येतावताऽखण्डार्थम्, नीलमुत्पलमित्यादेरप्यखण्डार्थत्वापातात् । एवं च–

कालद्वयेन योगस्य क्रमेण स्थायिवस्तुनि ।
नैल्यरक्तत्ववत्सत्त्वात्तदुक्तौ का विरुद्धता ॥
विशेष्ये धर्मसंसर्गपरं चापि विशेषिते ।
तत्परं नेत्यखण्डार्थं स्याच्चेत्सर्वं तथा भवेत् ॥

एतेन विशेष्यस्य कालद्वयसम्बन्धेनैव क्षणिकत्वानापत्तेर्विशिष्टस्य तत्सम्बन्धो नाऽपेक्षित इति निरस्तम् । मयापि विशेष्य एव कालद्वयसम्बन्धस्योक्तेः । देवदत्तस्वरूपमात्रं बुभुत्सितमिति तु निरसिष्यते । न च तत्ताया अतीतत्वमात्रेण तत्पदस्य लक्षणा, घटो नष्ट इत्यादाविवातीततत्तारूपस्वार्थात्यागात् । अन्यथा तत्तादेरतात्पर्यविषयत्वे सोऽयमित्यनेन देवदत्तस्य कालद्वयसम्बन्धो न सिध्येत् । तस्मादेकविशेषणविशिष्टे विशेषणान्तरान्वयाबोधकमपीदं वाक्यं विशेष्यस्य क्रमिकधर्मद्वयान्वयपरत्वात्सखण्डार्थमेव ।

किं च त्वदुपन्यस्ते पक्षत्रयेऽपि न दोषः, तत्तादेरतीतत्वेऽपि यदन्विततया ज्ञात एव तात्पर्यविषयीभूतेतरान्वयधीः, तत्स्वरूपस्य विशेषणत्वस्य सम्भवात् । न च विधेयान्वय्येव विशेषणम्, शब्दोऽनित्य इत्यादौ शब्दत्वादावव्याप्तेः । नापि विधेयान्वयकाले सदेव विशेषणम्, दण्डी भविष्यति, दण्डी नास्तीत्यादावव्याप्तेः ।

गृहनिष्ठे काकादावतिव्याप्तेश्च । नापि विधेयान्वयप्रतियोगितावच्छेदकं वा, स्वप्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकं वा विशेषणम्; अवच्छेदकत्वस्यान्यूनानधिकदेशकालत्वरूपत्वे तस्य सास्नादिमान् गौरित्यादिषु लक्ष्यतावच्छेदकरूपविशेषणेषु सत्त्वेऽपि गौः शुक्ला इत्यादावव्याप्तेः । न हि गोत्वं शुक्लान्वयप्रतियोगित्वेनाशुक्लव्यावृत्त्या वा अन्यूनानधिकदेशम् । अवच्छेदकत्वस्य यद्वत्तया ज्ञात एव यदन्वयधीस्तत्त्वरूपत्वे चेहाप्यवच्छेदकस्य सत्त्वात् । न हि काकोपस्थापितसंस्थानवत्तया ज्ञात एव देवदत्तीयत्वधीवददेवदत्तगृहव्यावृत्तिधीवच्च तत्तोपस्थापितधर्मान्तरवत्तया ज्ञात एवेदंत्वधीः अनिदं व्यावृत्तिधीर्वा किं तु तत्तावत्तया ज्ञात एव । न चात्रापि तत्तौपस्थापितदेवदत्तसंस्थानविशेषवत्तया ज्ञात एवेदंत्त्वादिधीः, तत्रेदन्तादिसम्बन्धस्य प्रत्यक्षत्वेनानुपदेश्यत्वात् । तस्मादतीतमपि यदन्विततया ज्ञात एवेत्याद्युक्तलक्षणयुक्तं चेद्विशेषणमेव । तदयुक्तं चेद्वर्तमानमप्यविशेषणमेव । अत एवाहुः– सदसद्वा समानाधिकरणं विशेषणमिति । तस्मात्पक्षत्रयेऽपि न दोषः ।

न चाद्ये वाक्यवैयर्थ्यम्, इदन्तावैशिष्ट्यस्य प्रत्यक्षत्वेऽपि तत्ताविशिष्टे तस्याप्रत्यक्षत्वात् । न चाद्यद्वितीय योर्बुभुत्सितस्याभेदस्य साक्षादलाभः । पुरोवर्तिनि तत्ताद्यवैशिष्ट्यभ्रमनिरासायायं स वा न वेत्यभिप्रायेण कोऽयमिति प्रश्ने सोऽयमित्युक्तेः । भेदभ्रमे निरसितव्येऽपि अभेदकोक्त्यापि साक्षाद् भेदभ्रमनिवृत्तेश्च । अभेदस्य बुभुत्सितत्वेऽपि वाक्यस्याभेदविशिष्टपरत्वेन सखण्डार्थत्वापत्तेश्च । ननु तृतीये विशिष्टैक्ये विशेषणैक्यं स्यात् । न च धूमवदग्निमतोरैक्येऽपि धूमाग्न्योर्भेदो दृष्ट इति वाच्यम्, तत्रापि विशेष्यस्यैवैक्यात् । न च तर्हि दृष्टान्ताभावाद्विशिष्टैक्येन विशेषणैक्यापादनायोगः, अग्निमतोऽग्निमतैक्येऽग्नेरग्निनैक्यदर्शनात् समुदायिरूपविशेषणभेदे समुदायैक्यस्य व्याहतत्वाच्चेति चेन्न । विशिष्टमपदार्थान्तरमिति मते विशेष्यस्यैवैक्याधिकरणत्वेऽपि धर्मयोरप्युद्देश्यतावच्छेदकत्वेन विशेषणत्वात् तस्यैव च विशिष्टाभेदशब्दार्थत्वात् । पदार्थान्तरमित्यावयोर्मते तु धूमाग्न्योर्भेदेऽपि

धूमवानग्निमानित्यबाधितसामानाधिकरण्यधीबलेन विशिष्टयोरभेदस्यापि सत्त्वात् । अन्यथा इदं रूप्यमित्युक्ते पुरोवर्तिनि रूप्याभेदाप्रतीतेः रूप्यार्थिनः पुरोवर्तिनि प्रवृत्तिश्च न स्यात् । तत्तेदन्तोपलक्षितैक्यबोधनमिति त्वन्मतं चायुक्तं स्यात् । तत्तेदंतोपलक्षितत्वरूपविशेषणभेदाद्विशिष्टभेदात् । अस्तु वा तत्तेदंतयोर्मध्ये एकस्योपलक्षणत्वं तथापीदन्ताविशिष्टस्योपलक्षणीभूततत्कालसम्बन्धो वा तत्तोपलक्षिताभेदो वा तत्ताविशिष्टस्योपलक्षणीभूतेदन्तासम्बन्धो वा इदन्तोपलक्षिताभेदो वा बोध्यताम् । न चैतावता वाक्यस्याखण्डार्थत्वम् । उपलक्षणस्य काकादेः स्वयं प्रकारत्वेन प्रकारान्तरोपस्थापकत्वेन वा निष्प्रकारकत्वरूपाखण्डार्थत्वविरोधित्वात् । एकस्योपलक्षणत्वेऽप्यन्यस्य विशेषणत्वाच्च । नाप्युपलक्षणत्वमात्रेण तद्वाचिशब्दानां लाक्षणिकत्वम् । वृत्तिविशेष रूपलक्षणाया व्यावर्तकविशेषरूपोपलक्षणस्य च भिन्नत्वात् । दृश्यते हि घटस्याभावः जटाभिस्तापस इत्यादावभावादिकं प्रति घटादेरुपलक्षणत्वेऽपि घटादिशब्दस्यालाक्षणिकत्वम् । दृश्यते च दण्डयभिप्रायेण प्रयुक्तेः दण्डमानयेत्यत्र दण्डशब्दस्य दण्डिनि लाक्षणिकत्वेऽपि दण्डस्याऽनुपलक्षणत्वम् । वरं चोभयपदलक्षणात एकपदलक्षणा । न चेदंताविशिष्टस्य तत्तया तत्ताविशिष्टस्य चेदन्तया कदाप्यसम्बन्धान्न ते प्रति तयोरुपलक्षणतेति वाच्यम्, तयोस्ताभ्यां विशेष्यद्वारा सम्बन्धात् । परम्परासंबंधिनोऽप्युपलक्षणत्वात् । यद्वेदन्तोपलक्षितस्य तत्तावैशिष्ट्यं तत्ताविशिष्टाभेदो वा तत्तोपलक्षितस्येदन्तावैशिष्ट्यं वा इदं ताविशिष्टाभेदो वा बोध्यताम् ।

ननु– यद्यपीदन्तया तत्तया वा उपलक्षितस्य विशेष्यस्य तत्तावैशिष्ट्यं वा इदन्तावैशिष्टं वा युक्तम्, विशेष्ये विशेषणान्तरान्वयात् । अभेदपक्षौ तु न युक्तौ अनुवृत्तव्यावृत्तयोर्विशेष्यविशिष्टयोरभेदायोगादिति चेन्न, समवायस्थाने भेदाभेदावित्यावयोर्मतेऽनुवृत्तव्यावृत्तयोरपि तयोः पर्वतोऽग्निमानिति धीबलाज्जातिव्यक्त्योरिव मृद्घटयोरिवचाभेदस्यापि सत्त्वात् । अन्यथा पर्वतोऽग्निमानिति लैङ्गिकी धीरपि निर्विकल्पिका स्यात् । केवलाभेदस्तु परिणामिनि देवदत्तपिण्डेऽपि नास्त्येव । यद्वा

तत्तोपलक्षितस्य इदंतोपलक्षितेन वा इदन्तोपलक्षितस्य तत्तोपलक्षितेन वा ऐक्यं बोध्यताम् । न चैतावताऽखण्डार्थत्वादिकमित्युक्तम् । तदेतदभिप्रेत्योक्तम्– ''अनित्यदेशकालसम्बन्धस्य सत्त्वान्न सोऽयं देवदत्त इत्याद्युपमाचे''ति टीकायां तु तद्देशकालसम्बन्धमात्रं न तत्ता, किं तु तद्ध्वंसः स चेदानीमस्ति । एवं च पक्षत्रयेऽपि न दोष इत्युक्तं तद्वस्तुस्थितिप्रदर्शनार्थम् । तत्तेदन्तयोर्न केवलं बाल्ययौवनवत्सामानाधिकरण्यमात्रं किं तु नीलत्वोत्पलत्ववत्समानकालत्वमपीति प्रदर्शनार्थं च, न तु सखण्डार्थत्वार्थम् । उक्तरीत्यान्यथापि तत्सिद्धेः । परेण तद्देशकालसम्बद्ध एतद्देशकालसम्बद्ध इत्यस्मिन्नुदाहृते टीकोक्तप्रकाराप्रसराच्च । युक्तं चानुभवकालध्वंस एव तत्तेति । अन्यथा पूर्वकालविषयेऽनुभवेऽपि स्मृताविव तत्तोल्लेखः स्यात् । स्मृत्यनुभवयोः संस्कारजन्यत्वाजन्यत्वाभ्यां भेदेऽपि अनुभवकाले सतः कालस्य स्मृतिकाले वस्तुगत्यातीतत्वेऽपि च विषयकृतवैलक्षण्याभावात् । तत्तामात्रे च स्मृतेरननुभूतविषयत्वमिष्टमेव । न चातिप्रसङ्गः, अनुभवबलेनानुभूतकालध्वंसत्वस्य तन्त्रत्वात् । पूर्वकालसम्बन्धस्तत्तेतिमतेऽपि ह्यननुभूतापि भूतता भातीति वक्तव्यम् । तत् तत्र तदा तथासीदिति स्मृतौ अननुभूतस्य भूतत्वस्योल्लेखात् । ननु पूर्वकालध्वंसविशिष्टो मध्येऽप्यस्ति इदन्ताविशिष्टस्तु मध्ये नेति कथं तयोरभेदः? न चेदन्ता नैतत्कालसम्बन्धः, किं तु तत्प्रागभावः तद्विशिष्टश्च मध्येऽप्यस्तीति वाच्यम् । पूर्वकालध्वंसविशिष्टस्येदानीं सत्त्वेऽपि एतत्कालप्रागभावविशिष्टस्येदानीमभावादिति चेन्न, अनुवृत्तव्यावृत्तयोरभेदस्य विशेष्यमात्रस्यैव ऐक्येऽपि तत्तादेर्विशेषणत्वस्य च समर्थितत्वात् ।

किं च त्वन्मते सोऽयं देवदत्त इति वाक्यस्य किं देवदत्तस्वरूपमात्रे तात्पर्यम्? तत्तेदन्तोपलक्षिताभेदविशिष्टे वा? उक्ताभेदोपलक्षिते वा? नाद्यः, तस्य प्रत्यक्षसिद्धत्वात् । अन्यथा धर्मिज्ञानाभावेन तत्र बुभुत्सानुवादभेदभ्रमाद्ययोगात् । अभेदारोपनिवृत्त्ययोगाच्च । एकेनैव पदेन पूर्णत्वेन पदान्तरवैयर्थ्याच्च । न च लक्षणार्थं सोऽयमिति पदद्वयम्, देवदत्तपदेनैव पूर्णत्वात् । स एक कुण्डल्ययं देवदत्त इत्यादौ

सोऽयमिति पदद्वयेनैव लक्षणासिद्धौ पदान्तरवैयर्थ्याच्च । न द्वितीयतृतीयौ, समान विभक्तिकपदद्वयेन प्रातिपदिकार्थेतरस्याभेदरूपसंसर्गस्य बोधनेऽखण्डार्थत्वहानेः । न हि क्रियाकारकभावान्वय एव संसर्गः । नीलमुत्पलं, निर्घटं भूतलं, घटः पटोनेत्यादेरप्यखण्डार्थत्वापातात् । न च भावांशभेदाभावमात्रेणाखण्डार्थत्वमित्यानन्दबोधोक्तं युक्तम्, स्वोचितसंसर्गान्यसंसर्गाबोधकत्वस्य सर्वत्र सत्त्वात् । उपलक्षणेनाभेदेनोपलक्ष्यस्य देवदत्तस्य प्रागेव निश्चितत्वेन तस्योपलक्षणत्वायोगाच्च । देवदत्ते देवदत्ताभेदस्य प्रत्यक्षसिद्धत्वाच्च । तस्मादभेदो न सिद्ध इति चेत्, तस्मादिति कोऽर्थः? किं तत्ताविशिष्टादिति? किं वा तत्तोपलक्षितादिति? यद्वा तच्छब्देन विवक्षितात्स्वरूपमात्रादिति? नाद्यद्वितीयौ, सखण्डार्थत्वापातात् । उक्तरीत्योलक्ष्याकाराभावेनोपलक्षणत्वायोगाच्च । न तृतीयः, दत्तोत्तरत्वात् । एवं च–

प्रत्यक्षत्वाद्देवदत्तस्वरूपं नैव बोध्यते ।<br>
सोऽयमित्यादिवाक्येन किं त्वैक्यदिविशेषितम् ॥

अपि च सोऽयमिति प्रत्यक्षप्रत्यभिज्ञा तावन्नाखण्डार्थविषया, तत्र शब्दवृत्तेर्लक्षणाया अयोगात् । तत्तेदन्तादेरभेदस्य च प्रकारस्योल्लेखानुभवाच्च । तदनुल्लेखे प्रत्यभिज्ञया अभिज्ञातो विशेषो न स्यात् । तथा च शाब्दप्रत्यभिज्ञापि तथा । स्वप्रत्यभिज्ञावगतस्यैव परं प्रति बोधनात्, तस्मात् दुष्परिहरं साध्यवैकल्यम् ।

किं च तत्त्वमसीत्यस्याभेदविशिष्टे तदुपलक्षिते वा तात्पर्यं चेदुक्तरीत्या अभेदरूपसंसर्गबोधनेन सखण्डार्थत्वम् । किं च चिन्मात्रस्य चिन्मात्रेणाभेदबोधने इष्टापत्तिरप्रसक्तनिषेधश्च । तत्पदादिवाच्यसार्वज्ञाद्युपलक्षिताभेदबोधनेतु सखण्डार्थत्वम् । सार्वज्ञ्यादेः प्रकारत्वेनानुप्रवेशात् । चैतन्यमात्रपरत्वं चेत्, तस्य स्वप्रकाशस्य नित्य सिद्धतयोपदेशवैयर्थ्यम् । वाक्यात्प्राक् चैतन्याज्ञाने उक्तरीत्या तत्र बुभुत्सा च न स्यात्, तस्या धर्मिज्ञानसाध्यत्वात् । भेदभ्रमश्च न स्याद्, अधिष्ठानज्ञानाभावात् । महावाक्येन भेदभ्रान्तिनिवृत्तिश्च न स्यात्, भ्रमकालज्ञाताधिष्ठानादधिकाबोधनात् । महावाक्यस्यावान्तरवाक्येन गतार्थत्वं च स्यात् । तत्पदार्थ-

शोधकेन "सत्यं ज्ञान"मित्यादिना त्वंपदार्थशोधकेन योऽयं विज्ञानमयः इत्यादिना चावान्तरवाक्येन लक्षणया शुद्धचैतन्यबोधनात् । महावाक्य एवानेकपदवैयर्थ्यं च स्यात् । एकेनैव पदेन लक्षणया शुद्धबोधनात्कथं तेन भेदभ्रमनिरास इति चेत् । अधिकार्थाबोधने वाक्येनापि कथम्? न हि वाक्यमदृष्टद्वारा भ्रमनिवर्तकम् । न च तात्पर्याविषयेणाप्यभेदेन तन्निवृत्तिः, अतिप्रसङ्गात् ।

न चैकस्य पदस्य लाक्षणिकत्वाय पदान्तरम् । तत्त्वमिति विरुद्धार्थवाचिपदद्वयस्य समानाधिकरण्याधीनत्वाल्लक्षणाया इति विवरणोक्तं युक्तम्, चैतन्यपदेनैव विवक्षितसिद्धौ तत्त्वमिति लाक्षणिकपदद्वयेन तद्बोधनक्लेशायोगात् । गङ्गायां घोष इत्यत्रापि घोषपदं गङ्गाशब्दस्य लाक्षणिकत्वाय, न तु स्वार्थार्पणायेत्यापाताच्च । अभेदरूपान्वयाबोधने पदद्वयसामानाधिकरण्यस्य लक्षणाकल्पकत्वायोगाच्च । सदेवेत्यादिपूर्ववाक्ये लक्षितचिन्मात्रस्य प्रकृतवाचिना तत्पदेन लक्षणां विनैव परामर्शसम्भवाच्च । "स वा एव महानज आत्मे"त्यादिमहावाक्ये लक्षणायाः स आत्मेति पदद्वयसामानाधिकरण्येनैव सिद्ध्या पदान्तरवैयर्थ्याच्च । वाच्यार्थभेदग्राह्यतत्त्वावेदकप्रत्यक्षबाधकेन तत्त्वावेदकेनाद्वैतवाक्येन तयोरेव तात्त्विकाभेदबोधनसम्भवेन लक्षणाया अनपेक्षितत्वाच्च । एतेन वाक्यस्थपदस्यैव लक्षकत्वादनेकपदोपादानमिति निरस्तम्, अन्वयानुपपत्तिरूपलक्षणाबीजार्थमेव वाक्यस्थत्वस्यापेक्षणात् त्वमसीत्युक्तेऽपि वाक्यस्थत्वसिद्धेश्च ।

एतेन यदुक्तं विवरणे "अभिज्ञातः प्रत्यभिज्ञायाः शाब्द्या वा प्रत्यभिज्ञायास्तावन्न प्रमेयतो विशेषः । अभिज्ञया ज्ञातस्यैव देवदत्तैक्यस्य प्रत्यभिज्ञया ग्रहणात् । न हि देवदत्तस्य स्वेनैक्यमभिज्ञायां न भाति । न चानभिज्ञातं प्रत्यभिज्ञया ज्ञेयं देवदत्तस्य स्वेनैक्यान्तरमस्ति । एकस्य कालद्वयसम्बन्धः प्रत्यभिज्ञागोचर इति चेन्न, ऐक्यस्य कालद्वयसम्बन्धस्य चाभिज्ञाभ्यामेव सिद्धेः, तस्मात्प्रमेयतो न विशेषः किं तु फलतः कालद्वयसम्बन्धिपदार्थैक्यविषयत्वे द्वयोरविशिष्टेऽपि प्रत्यभिज्ञाया एव कालद्वयपरार्शित्वेन पदार्थभेदभ्रमनिवर्तकत्वात्, तत एव च प्रामाण्यमपि । एवं च

तत्त्वमसिवाक्यस्य सत्यज्ञानादिवाक्यात् तत्पदाच्च प्रमेयतोऽविशेषेऽपि धर्मद्वयपरामर्शित्वेन भेदभ्रमनिवर्तकत्वात्प्रामाण्यम् । उक्तं हि– ''सिद्धं तु निवर्तकत्वादि''ति । तन्निरस्तम्, अभिज्ञाभ्यां वस्तुत एकस्मिन् कालद्वयसम्बन्धस्य देवदत्ताभेदस्य च देवदत्ते ग्रहणेऽपि प्रत्यभिज्ञयेव एकस्मिन् कालद्वयसम्बन्ध इति वा कालद्वयसम्बन्धाधार एक इति वा ग्रहणेन प्रत्यभिज्ञायाः प्रमेयत एव भेदात् । न हीदमिति ज्ञानं वस्तुतः शुक्तौ शुक्त्यभेदग्राह्यपीयं शुक्तिरिति ज्ञानवत् इदं त्वशुक्तित्वाधार एक इत्याकारम् । अन्यथा फलतोऽपि विशेषो न स्यात् । कालद्वयपरामर्शमात्रेण भेदभ्रमनिवृत्तौ भेदभ्रमकालेऽपि तस्य सत्त्वात्तेन निवृत्तिः स्यात् । एवं तत्त्वमसीत्यत्रापीति दिक् । एतेन–

उपाधिभेदभिन्नार्थो येनैकः प्रतिपाद्यते ।
तदपि स्यादखण्डार्थं महत् खं कुम्भखं यथा ॥ इति कल्पतरूक्तम्,
सत्यज्ञानादिगीरेतत् संसर्गव्यतिरेकिणि ।
अर्थे प्रमाणं मानत्वान्नयनादिप्रमाणवत् ॥

इति चित्सुखोक्तं चानुमानं निरस्तम्, अप्रसिद्धविशेषणत्वादिदोषजातात् । एकत्वप्रतिपादकत्वरूपस्याद्यहेतोः सखण्डार्थत्वेनैव व्याप्ततया विरुद्धत्वाच्च, आकाशेंऽशः स्वाभाविक इति वक्ष्यमाणत्वेन साधनवैकल्याच्च । घटाकाशो महाकाश इत्यत्रापि आकाशस्वरूपमात्रबोधने भेदभ्रमनिरासायोगेनाधिकस्य बोध्यत्वेन साध्यवैकल्याच्च । द्वितीय हेतौ संसर्गादन्यस्मिन् संसर्गिण्यपि प्रामाण्यस्य मन्मतेऽपि सत्त्वेन सिद्धसाधनाच्च । श्लोकस्य अग्निहोत्रादिगीरिति सत्यज्ञानादिगीरेतत्पदार्थव्यतिरेकिणीत्यपि पठितुं शक्यत्वेनाभाससाम्याच्च । तस्माद्वेदान्ताः सगुणब्रह्मपरा इति ब्रह्मानन्तगुणमिति । तत्त्वमस्यादिवाक्यस्याखण्डार्थत्वानुमानभङ्गः ।

## अद्वैतसिद्धिः

एवं तत्त्वमस्यादिमहावाक्यपक्षकानुमानमपि निर्दोषम् । न च सोऽयं देवदत्त इत्ययं दृष्टान्तः साध्यबिकलः, विशिष्टाभेदस्य बोधयितुमशक्यत्वात् । तथा हि– किमत्र तद्देशकालविशिष्ट

(अद्वैतसिद्धिः)

एतद्देशकालवैशिष्ट्यं प्रतिपाद्यते? एतद्देशकालविशिष्टे वा तद्देशकालवैशिष्ट्यम्? तद्विशेषण-योरैक्यं वा? तद्विशिष्टयोरैक्यं वा? नाद्यः, तद्देशकालवैशिष्ट्यस्याप्रत्यक्षत्वेनानुद्देश्यत्वात्, तत्कालादेरिदानीं सत्त्वापत्तेश्च । न द्वितीयः, एतत्कालादेरन्यदा सत्त्वापत्तेः, न तृतीयः बाधात् । अत एव न चतुर्थोऽपि, विशेषणस्य भिन्नत्वेन विशेषणविशेष्यतत्संबन्धात्मकस्य विशिष्टस्य भिन्नत्वात्, अतिरिक्तत्वेऽपि विशेषणभेदेन विशेष्यभेदेन च तद्भेदनियमात् । तथा चोभयविशेषणपरित्यागेन विशेष्यमात्रमभिन्नं बोध्यत इति सिद्धमखण्डार्थत्वम् । तदुक्तम्–

'अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः ।
घटते न यदैकता तदा नतरां तद्विपरीतरूपयोः ॥' इति

यदा हि 'दण्डी कुण्डली'त्यादौ दण्डकुण्डलादेरेकदेशकालावस्थितत्वेनाविरोधेऽपि न तद्विशिष्टयोरैक्यम्, विशेषणयोरप्यैक्यापत्तेः, तदा कैव कथा सोऽयमित्यत्र तत्तेदन्तयोरेक-कालानवस्थाननियमेन परस्परविरुद्धत्वात्तद्विशिष्टयोरैक्यस्य । लक्षणयैक्यबोधन तूभयत्रापि समानम् । लाक्षणिकत्वेऽपि दण्डी कुण्डलीत्यादौ विशिष्टतात्पर्यान्नाखण्डार्थत्वव्यवहारः, सोऽयमित्यत्र तु 'अयं स न वा? अयं नैव स' इत्यादिसंशयविपर्ययज्ञानविषयीभूताभेदमात्रस्य बुभुत्सितत्वेन तत्रैव तात्पर्यादखण्डार्थत्वं न ह्यन्यस्मिन् बुभुत्सिते अन्यत् प्रतिपादयितुमुचितमित्युक्तम् । प्रत्यभिज्ञाप्रत्यक्षस्याप्यभिज्ञाद्वयोपस्थितस्वरूपातिरिक्ताविषय-त्वेऽपि उभयोपस्थितिद्वारकाभेद बोधनेन भ्रमनिवर्तकत्वम्, तत्समानार्थकं च वाक्यमेतदिति न विशिष्टपरम् । यथा चाभिज्ञाद्वयात् प्रत्यभिज्ञाया विषयवैलक्षण्याभावेऽपि द्वारविशेषनिबन्धन-ज्ञानगतवैलक्षण्यादेव फलभेदः, तथा स्मृतिरूपायास्तदिदम्पदार्थोपस्थितेरनुभवरूपस्य वाक्यार्थबोधस्य । एवं च 'भिन्नप्रवृत्तिनिमित्तयोरेकार्थबोधपरत्वं सामानाधिकरण्य'मिति प्राचां वचोऽपि निष्प्रकारके सुतरामुपपद्यते ।

ननु– सोऽयमिति प्रत्यभिज्ञा तावन्नाखण्डार्थविषया, तत्र प्रत्यक्षे शब्दवृत्तेर्लक्षणाया अभावात्, तत्तेदन्तोल्लेखित्वेन तत्र निष्प्रकारकत्वस्यानुभवपरास्तत्वात्, तदनुल्लेखे त्वभिज्ञातो विषयवैलक्षण्यानुपपत्तेः । तथा च शाब्दप्रत्यभिज्ञाऽपि तथा, स्वप्रत्यभिज्ञावगतस्य परं प्रति बोधनादिति– चेन्न, वृत्त्यनपेक्षत्वेऽपि प्रत्यक्षस्य विशिष्टाभेदविषयत्वे बाधस्य प्रतिबन्धकतया स्वरूपाभेदमात्रविषयत्वात् । अभेदश्च न प्रकारः, स्वरूपतया प्राधान्याद् । तत्तेदन्तयोरपि न

(अद्वैतसिद्धिः)

प्रकारता, भासमानाभेदरूपवैशिष्टयप्रतियोगित्वाभावात् । अत एव न तस्यास्तत्तेदन्तोल्लेखिता, तदभिलाषे तु निरन्तरोत्पन्नाभिज्ञाद्वयादेव तथोल्लेखव्यवहारात्, तत्र च लक्षणा लब्धपदैव । सर्वत्र निर्विकल्पकाभिलाप इयं गतिः । न चाभिज्ञाया अविशेषः, सप्रकारकत्वनिष्प्रकारकत्वाभ्यामेव विशेषात् । फलवैलक्षण्यं तूक्तमेव । अत एव तत्तोपलक्षितप्रतियोगिकभेदरहित इदन्तोपलक्षितदेवदत्तस्वरूपेतात्पर्याद् यथाज्ञानमुपदेशोऽप्युपपद्यते । भेदविरहश्च न कश्चिद्धर्मः, किन्तु स्वरूपमेव । तदेव चैक्यमित्युच्यते । न चायमस्ति नियमः स्वेन यथावगतः परं प्रति तथैव वाच्यमिति, समूहज्ञानेनापि श्रोतृबुभुत्सितैकदेशोपदेशदर्शनात्, ज्ञानमात्रसाध्यत्वात् बुभुत्सानुसारित्वाच्चोपदेशस्य । एवं च विशिष्ट विषयादपि ज्ञानादखण्डोपदेशोपपत्तिः । विशेषणोपलक्षणादिविवेकश्चान्यत्र स्पष्ट इति नेह प्रतन्यते । यथा च न दृष्टान्तः साध्यविकलः । एवं तत्त्वमस्यादिमहावाक्येऽपि बोद्धव्यम् ।

ननु– चिन्मात्रस्य चिन्मात्रेण सहाभेदबोधने इष्टापत्तिः, अप्रसक्तनिषेधश्च अभेदश्चेत्स्वरूपमेव तस्य स्वप्रकाशतया नित्यसिद्धत्वेनोपदेशवैयर्थ्यम्, तदस्फुरणे च तद्बुभुत्साद्यनिवृत्तिश्च तत्त्वम्पदार्थशोधकेनावान्तरवाक्येनैवोपपत्त्या महावाक्यवैफल्यं च एकपदेनैवोपपत्तेः पदान्तरवैयर्थ्यं च, भ्रमकालज्ञाताधिकाप्रतिपत्तेर्महावाक्यात् भेदभ्रमनिवृत्तिश्च न स्यादिति– चेन्न चैतन्यस्य नित्यसिद्धत्वेऽपि सार्वज्ञ्याद्युपलक्षितस्वरूपज्ञान स्याज्ञानादिनिवर्तकस्य साध्यत्वात् । न च सप्रकारता, तत्तादिवत् सार्वज्ञ्यादीनामन्वयबोधाप्रकारत्वाद् उपायान्तरेणैतादृशज्ञानासंभवाच्च नोपदेशवैयर्थ्यादयो दोषाः । भ्रमप्रतीतभेदाश्रयतावच्छेदकप्रतियोगितावच्छेदकद्वयोपलक्षितस्वरूपमात्रज्ञानस्य भेदभ्रमनिवर्तकत्वेन विषयावैलक्षण्येऽपि फलवैलक्षण्यात्, शङ्खश्वैत्यविषयत्वे तुल्येऽपि तदनुमानानिवर्त्यपीतभ्रमस्य तत्प्रत्यक्षनिवर्त्यत्वदर्शनात् । अत एवोक्तं विवरणे– 'अभिज्ञातः प्रत्यभिज्ञायास्तावन्न प्रमेयतो विशेषः, अभिज्ञया ज्ञातस्यैव देवदत्तैक्यस्य प्रत्यभिज्ञयापि ग्रहणात् । न हि देवदत्तस्य स्वेनैक्यमभिज्ञायां न भाति । न च तस्यैक्यान्तरमस्ति यदनभिज्ञातं प्रत्यभिज्ञायते । एकस्य कालद्वयसंबन्धः प्रत्यभिज्ञागोचर इति चेन्न, ऐक्ये कालद्वयसंबन्धस्याभिज्ञाद्वयादेव सिद्धेः । तस्मात् कालद्वयसंबन्धिपदार्थैक्यविषयत्वे द्वयोरप्यविशिष्टे प्रत्यभिज्ञाया एव कालद्वयपरामर्शित्वेन पदार्थभेदभ्रमनिवर्तकत्वम्, नाभिज्ञायाः । एवं तत्त्वमसीति वाक्यस्य सत्यादि वाक्यात्तत्पदाच्च प्रमेयावैलक्षण्येऽपि धर्मद्वयपरामर्शित्वेन भेदभ्रमनिवर्तकत्वात् । प्रामाण्यम् । उक्तं च कात्यायनेन 'सिद्धं तु निवर्तकत्वा'दिति ।

(अद्वैतसिद्धिः)

स्यादेतत्– अभिज्ञया वस्तुत एकस्मिन् कालद्वयसंबन्धस्य देवदत्ताभेदस्य च ग्रहणेऽपि प्रत्यभिज्ञया एकस्मिन् कालद्वयसंबन्ध इति वा, कालद्वयसंबन्ध्येक इति वा ग्रहणेन प्रमेयत एव भेदः । न हीदमिति ज्ञानं वस्तुतः शुक्तौ शुक्त्यभेदग्राह्यपि इयं शुक्तिरिति ज्ञानवदिदं त्वशुक्तित्वाधार एक इत्याकारम्, अन्यथा तु फलतोऽपि विशेषो न स्यात्, कालद्वय-परामर्शस्य भेदभ्रमेऽपि सत्त्वात् । एवं तत्त्वमसीत्यत्रापीति । उच्यते– न हि प्रत्यभिज्ञायामैक्यं प्रकार इति कस्यचिन्मतम्, तस्य स्वरूपत्वेन विशेष्यत्वात् । अभेदस्वरूपविषयत्वे तुल्ये तत्तेदन्तोभयप्रकारिका सेति तव मतम्, निष्प्रकारिकैवेति मम । एकत्वं च नैकत्वसङ्ख्या, गुणादावभावात्, तज्ज्ञानस्य भेदभ्रमाविरोधित्वाच्च, किन्तु भेदविरहरूपं स्वरूपमित्युक्तम् । अन्यथा तदभिलापक वाक्यमपि सोऽयमेक इति स्यात्, न तु सोऽयमिति । सोऽयमिति वाक्ये त्वैक्यस्य प्रकारत्वं तत्प्रतिपादकपदाभावादेव दूरनिरस्तम् । भेदभ्रमे कालद्वयपरामर्शेऽपि भ्रमप्रतीतभेदाश्रयतावच्छेदकेत्यादि निरुक्तफलवैलक्षण्यमुपपन्नमेव । अत एव

'उपाधिभेदभिन्नार्थो येनैकः प्रतिपाद्यते ।
तदपि स्यादखण्डार्थं महत् खं कुम्भखं यथा ॥' इत्यादि कल्पतरूक्तम् ।

'घटाकाशो महाकाश इत्युक्तेश्चैक्यधीर्यथे'ति वार्तिकं च निरवद्यम् । तथा च तत्त्वमसिवाक्यमखण्डार्थम्, उपाधिभेदभिन्नेऽर्थे ऐक्यप्रतिपादकत्वाद्, घटखं महाखमिति वाक्यवदित्युक्तं भवति । एवं च– सत्यज्ञानादिरेतत्संसर्गव्यरेकिणि अर्थे प्रमाणम्, मानत्वात्, 'नयनादिप्रमाणव'दिति चित्सुखाचार्योक्तमपि– साधु । सत्यादिवाक्यमेतत्पदार्थसंसर्गव्यतिरिक्त एवार्थे प्रमाणमिति सावधारणं साध्यं विवक्षितम्, तेन संसर्गातिरिक्तसंसर्गिण्यपि प्रामाण्याङ्गीकारात् न सिद्धसाधनम् । कण्टकोद्धारस्तु पूर्ववत् । एवमन्येषामपि प्रयोगाः यथा यथमुपपादनीयाः ।

तस्मात् वृथा रोदिषि मन्दबुद्धे तव भ्रमादेव हि दुःखमेतत् ।
तस्यापनोदो विहितः प्रमाणैस्तुभ्यं तु रोचेत स नेति चित्रम् ॥
मानं वेदान्तवाक्यानि निर्गुणाखण्डबोधनात् ।
निर्गुणत्वं च तस्योक्तं श्रुत्या युक्तिसहायया ॥ २ ॥

(अद्वैतसिद्धिः)

इह कुमतिरतत्त्वे तत्त्ववादी वराकः प्रलपति यदकाण्डे खण्डनाभासमुच्चैः ।
प्रतिवचनममुष्मै तस्य को वक्तु विद्वान् न हि रुतमनुरौति ग्रामसिंहस्य सिंहः ॥ ३ ॥
इत्यद्वैतसिद्धौ तत्त्वमस्यादिमहावाक्याखण्डार्थत्वोपपत्तिः ॥

## न्यायामृततरङ्गिणी

कोहमित्यात्मस्वरूपमात्रे बुभुत्सिते तत्त्वमसीत्यस्य प्रवृत्तेर्नपक्षे हेत्वसिद्धिरित्याशङ्क्याह । उक्तरीत्येति । वाक्यमात्रस्य संसर्गपरत्वात्सोऽयं देवदत्त इत्यादेरपि तथात्वात्तत्र साध्यवैकल्यमित्याह । उभयत्रेति । सोयं देवदत्त इत्यादेरखण्डार्थत्वमाशङ्कते । नन्विति । तत्कालादेरपीति । तत्कालादेः सत्त्वं विना देवदत्तस्य तत्कालादिविशिष्टत्वं न संभवतीत्यर्थः । एतद्देशे तद्देशस्य सत्त्वापत्तिरादिशब्दार्थः । विशेषणभेदेनापीति । यदा ह्यविरुद्धदण्डकुण्डलादि विशेषणभेदेन विशिष्टभेद आवश्यकस्तदा तदेतद्देशकालरूपविरुद्धविशेषणभेदेन विशिष्टभेदः सुतरामावश्यक इत्यर्थः । तदुक्तं संक्षेपशारीरके ।

अविरुद्धविशेषणद्वयप्रभवत्वेपि विशिष्टयोर्द्वयोः ।
घटते न यदैकता तदा सुतरां तद्विपरीतरूपयोरिति ।

अस्तुतावदिति । अनुभवकालध्वंस एव तत्तेति वस्तुस्थितावपीत्यर्थः । नन्वेकस्मिन् कालद्वयस्य देशद्वयस्य च संबन्धस्य सत्त्वेपि सोयमित्यादिवाक्यं पूर्वकालादिविशिष्टस्योत्तरकालादिवैशिष्ट्यं बोधयद्विरुद्धमेवेत्यत आह । सोयमितीति । नीलमुत्पलमितीति । न च नीलमुत्पलमिति वाक्यस्य विशिष्टे तात्पर्यान्नाखण्डार्थत्वमिति वाच्यम् । अयं स नवा अयं स भवतीत्यादि सन्देहविपर्ययनिरासाय तत्कालसंसर्गस्य बुभुत्सितत्वेनात्रापि विशिष्टे तात्पर्यात् । ननु तत्तासंशयादिनिरासाय प्रयुक्तं सोयमित्यादिवाक्यं माभूदृष्टान्तः । देवदत्तस्वरूपमात्रस्य बुभुत्सायां प्रयुक्तं सोयमिति वाक्यं दृष्टान्तो भविष्यतीत्यत आह । स्वरूपमात्रमिति । तत्ताया इति । अनुभवकालसंबन्धस्येत्यर्थः । अतीतेति । सोयमित्यनेनानुभवकालसंबन्धलक्षणतत्तारूपस्वार्थस्य सोयमितिवाक्यप्रयोगकालेऽतीतस्याप्यत्यागादित्यर्थः । अन्यथेति । त्यागे सतीत्यर्थः । शब्द इति । विधेयेनानित्यत्वेन शब्दत्वस्यानन्वयात् । दण्डीति । विधेययोः प्रागभावप्रध्वंसयोः काले दण्डसंबन्धस्यासत्त्वात् । गृहेति । विधेयस्य देवदत्तीयगृहत्वस्य काले विद्यमानस्य काकादेरित्यर्थः । नहीति । काकादिषु काकाद्यन्विततया ज्ञात एव गृहे

(तरङ्गिणी)

देवदत्तीयत्वादिबुद्ध्यहेतुत्वान्नतेषां विशेषणत्वम् । तत्रेति । तत्ताविशिष्ट इदं त्वादिसंबन्धस्याप्रत्यक्षत्वेनोद्देश्यत्वेपि तत्र तत्तोपस्थापितदेवदत्तसंस्थानविशेषवतीदंत्वादि संबन्धस्य प्रत्यक्षत्वेनानुपदेश्यत्वमित्यर्थः । अतीतमपीति । विशेषणतायां वर्तमानत्वं न प्रयोजकमित्यर्थः । अत एवोक्तं गुणकिरणावल्याम् । स्थिरं विशेषणं विशिष्टप्रतीतौ स्वात्मानमवेशयत्यपि न तु विशेषणतायां तदुपयोग इति । विशिष्टप्रतीतौ विशिष्टो चितायां क्रियायामित्यर्थः । समानाधिकरणमिति । ननु सामानाधिकरण्यं नैकविभक्तिनिर्देश्यत्वम् । विभक्तिनिर्देशस्य सर्वत्राभावात्। नाप्यैकाधिकरण्यम् । तद्धि न विशेष्येण । उत्पलनीलरूपयोरेकत्रावृत्तेः । नापि तद्धर्मेण प्रत्याय्यव्यावृत्त्या वा । उपलक्षणस्यापि तत्सत्त्वात् । न हि तापसे जटा न तिष्ठतीति । उच्यते । यदन्विततया ज्ञात एवेत्याद्युक्तलक्षणे तात्पर्यान्नदोषः । तत्ताविशिष्ट इति । तत्तान्विततया ज्ञाते । पुरोवर्तिनीति । पुरोवर्तिनीदन्तादि वैशिष्ट्यस्यैव बुभुत्सिततया साक्षादबुभुत्सितस्याभेदस्य साक्षादलाभेपि न दोष इति भावः । ननु भेदभ्रमनिरासायाऽभेदः साक्षाद्बुभुत्सित एवेत्यत आह । भेदभ्रम इति । अभेदकोक्त्यैव भेदभ्रमनिरासान्नाभेदोऽवश्यं बुभुत्सित इत्यर्थः । तस्यैव चेति । अपरान्वयधीप्रयोजकज्ञानविषयभूतेतरान्वितरूपस्य विशिष्टस्य तादृशेन विशिष्टान्तरेणैक्य बोधनेपि न तद्विशेषणयोरैक्यापत्तिरित्यर्थः । अन्यथेति । विशेषणभेदस्य विशिष्टैक्यविरोधित्वे । रूप्याभेदेति । इदंत्व रूप्यत्वादिविशेषणभेदादिदंरूप्ययोर्विशिष्टयोरभेदाप्रतीतिः। न चात्रापि लक्षणयाऽभेदमात्रं बोध्यत इति युक्तम् । पुरोवर्तिनि रजताभेदबोधं विना पुरोवर्तिनि प्रवृत्तिर्नस्यात् । नाप्युपलक्षणमात्रेणेति । यथा दण्डादिविशेषणवाचकपदस्य दण्डादिरूपस्वार्थात्यागेनालाक्षणिकत्वं तथा तत्तादिरूपोपलक्षणवाचकस्यापि तत्पदस्य न लाक्षणिकत्वम् । स्वार्थात्यागादित्यर्थः । अर्थस्योपलक्षणत्वेपि शब्दस्य मुख्यत्वं दृष्टमित्याह । दृश्यतेहीति । शब्दस्य लाक्षणिकत्वेप्यर्थस्य विशेषणत्वं दृष्टमित्याह । दृश्यतेचेति । उपलक्षणपरपदे लक्षणामभ्युपेत्याह ॥ वरमिति । उभयपदलक्षणातः सकाशाद्योऽर्थ उपलक्षणं तत्परे एकस्मिन्नेव पदे लक्षणा श्रेष्ठेत्यर्थः । उपलक्षणस्य काकादेः स्वसंबन्धं यद्देवदत्तीयगृहत्वादि विशिष्टं देवदत्तगृहं तत्प्रत्युपलक्षणत्वं दृष्टम् । नचेह तत्तेदन्तयोरिदन्तातत्ताभ्यां विशिष्टेन संबन्धोस्ति । अतः कथमिदंताविशिष्टे तत्ताविशिष्टेदन्ता चोपलक्षणं स्यादित्याशङ्कां परिहरति । न चेदन्तेति । ते प्रतीति । इदन्ताविशिष्टस्वरूपं तत्ताविशिष्टस्वरूपं च प्रतीत्यर्थः । तयोरिति । उक्तस्वरूपयोः । ताभ्यां तत्तेदन्ताभ्याम् । विशिष्टयोर्भेदेऽपीदन्ताविशिष्टे यद्विशेष्यं देवदत्तस्वरूपं तत्र तत्तासंबन्धात्स्वविशेष्यसंबद्धत्वरूपइदन्ताविशिष्टस्य तत्तया सह संबन्धोस्त्येव । एवं तत्ताविशिष्ट-

(तरङ्गिणी)

स्यापीदन्तया संबन्धोस्त्येवेत्यर्थः । परंपरेति । उपलक्ष्यसंबन्धित्वमेवोपलक्षणस्यापेक्षितम् । न तु साक्षात् । गौरवादित्यर्थः । यद्वेति । अस्तुवेत्यादिना विशिष्टमुद्दिश्योपलक्षणसंबन्धादि विधीयतामित्युक्तम् । इदानीमुपलक्षितमुद्दिश्य विशेषणसंबन्धो विधीयतामित्युच्यत इति भेदः । अभेदपक्षौत्विति । इदन्तोपलक्षितस्य तत्ताविशिष्टाभेदस्तत्तोपलक्षितस्येदन्ताविशिष्टाभेद इति-पक्षौ । अनुवृत्तेति । इदन्तोपलक्षितस्यानुगतस्य विशेष्यमात्रस्य तत्ताविशिष्टेन व्यावृत्तेनाभेदो न संभवति । एवन्तत्तोपलक्षितस्यानुगतस्य विशेष्यमात्रस्येदन्ताविशिष्टेनापि । केवलविशेष्यस्य विशिष्टेनाभेदोप्यस्तीत्याह । समवायेति । ननु जातिव्यक्त्योरित्यादिदृष्टान्तासङ्गतिः । अयुत-सिद्धयोरभेदाभावादित्याशङ्कापरिहारायोक्तं समवायस्थाने भेदाभेदादित्यादि । अन्यथेति । केवलस्य विशिष्टेनाभेदाभाने निर्विकल्पिकापर्वतस्याग्निमदभेदं न विषयीकुर्यादित्यर्थः । नन्विदन्तो-पलक्षिततत्ताविशिष्टयोर्भिन्नयोरभेदबोधनं न युक्तमित्यत आह । केवलेति । भेदवत्यभेदबो-धाद्विभ्यत्त्वं तत्ताद्युपलक्षिते स्वरूपमात्रेऽभेदो बोध्यत इति कथं ब्रूयाः । देवदत्तपिण्डेऽपि भेदस्य सत्त्वादित्यर्थः । नचैतावतेति । तत्तोपलक्षितत्वादेरेव प्रकारत्वात् । उक्तमिति । तत्वोद्योत इति शेषः । अनित्येति । अनित्याभ्यामिदानीमविद्यमानाभ्यां देशकालाभ्यां स्वकाले यःसंबन्धस्त-द्देशकालोपलक्षितत्वादि रूपस्तस्य देवदत्ते सत्त्वात्सोयं देवदत्त इत्यादिवाक्यं तत्वमस्यादि-वाक्यस्याखण्डार्थतायामुपमा दृष्टान्तोऽन भवतीत्यर्थः । तद्देशकालसंबद्ध इति । मधुरासंबन्धः काशीसंबन्धेऽष्टमीसंबन्धः पूर्णमासीसंबन्ध इत्यादिवाक्ये परेणोदाहृत इत्यर्थः । एतेन तद्देश-कालसंबन्ध इत्यत्रापि तत्तेदन्तयोः प्रवेश इति निरस्तम् । तदेतत्पदयोर्देशविशेषार्थत्वात् । अन्यथेति । तद्देशकालसंबन्धस्य तत्तात्वे । स्मृत्यनुभवयोरिति । तयोः कारणकृतस्य वैषम्यस्य सत्त्वेपि तद्विषये च सत्त्वासत्त्वरूपवैषम्यसत्त्वेपि स्मृत्यनुभवगतेऽर्थविषयीकारित्वांशे वैषम्या-भावात् । न च संस्कारजन्यत्वेन तत्तोल्लेख इति वाच्यम् । लिङ्गकरणतापक्षे संस्कार-लिङ्गकानुमितौ तत्तोल्लेखः स्यात् । तत्तास्मृतिरेव प्रत्यभिज्ञायां हेतुर्नसंस्कार इति पक्षे तदभावाच्च। तत्तामात्रेचेति । अनुभूतकालध्वंसस्याननुभूतस्यापि भानात् । लक्षणार्थमिति । वाक्यस्थपदस्यैव लक्षकत्वात् । ननु विरुद्धार्थवाचिपदद्वयसामानाधिकरण्याधीना लक्षणा । न च देवदत्त इत्यादिषु विरोधोस्तीत्यत आह । स एवेति । समानेति । तदिदंपदाभ्यां स्वार्थाभेद-संबन्धस्य देवदत्ते बोधने । ननु निर्घटं भूतलं घटः पटोनेत्यादावभावसंसर्गभानेना-खण्डार्थत्वाभावाभावेपि भूतलत्वघटत्वादिभावपदार्थसंसर्गस्य भानादखण्डार्थत्वाभावः । सोय-मित्यत्रत्वभेदसंसर्गस्य भावेप्यखण्डार्थत्वमेव । अत एव प्रमाणमालायामानन्दबोधोक्तिः ।

(तरङ्गिणी)

आरोपितभेदाभाव मात्रस्यत्वतिरेकिणः प्रतिभासेपि विरोधाभावः । भावांश एव विभागानभ्युपगमादिति । तदेतन्निराकरोति । नचाभावांशेति । तृतीये दोषान्तरमाह । उपलक्षणेनेति । तत्तेदन्ताभ्यामुपलक्षितं यत्स्वरूपं तस्य योऽभेदस्तेनोपलक्षणीयं यद्देवदत्तस्वरूपं तस्याभेदस्वरूपादुपलक्षणात्प्रागेव सिद्धत्वान्न तत्सिद्ध्यर्थमभेदरूपोपलक्षणापेक्षेत्यर्थः । ननु देवदत्तस्वरूपमात्रस्योपलक्षणात्प्राक् सिद्धत्वेप्यभिन्नं यद्देवदत्तस्वरूपं तत्सिद्ध्यर्थमुपलक्षणं भविष्यतीत्यत आह । देवदत्त इति । वस्तुगत्या यदभिन्नं देवदत्तस्वरूपं तत्प्रत्यक्षत एवसिद्धमस्ति । तस्मादिति । वस्तुतोऽभिन्नसिद्धावपि तस्मादभिन्नं तत्सिद्धमित्यर्थः । द्वितीये दोषान्तरमाह । उक्तरीत्येति । तत्तारूपोपलक्षणात्प्रागेव देवदत्तस्वरूपस्य सिद्धत्वेन न तत्र सत्तोपलक्षणम् । दत्तेति । देवदत्ताद्देवदत्ताभेदः प्रत्यक्षत एव सिद्धइत्युक्तम् । नाखण्डार्थेति । लक्षणयाऽखण्डार्थविषया नेत्यर्थः । तत्रेति । प्रत्यक्षे वृत्तेरनपेक्षणात् । ननु प्रत्यक्षे वृत्त्यनपेक्षायामपि विशिष्टाभेदविषयत्वे तस्य बाधेन प्रतिबद्धान्न प्रत्यक्षस्य विशिष्टाभेदविषयत्वम् । किन्तु स्वरूपाभेदमात्रविषयत्वमिति चेन्न । यदन्विततया ज्ञात एवेतरान्वयधीस्तद्विशेषणमित्याद्युक्तविशेषणलक्षणयोगित्वे तत्तायास्तद्विशिष्टाभेदबोधने बाधाभावात् । ननु माभूत्प्रत्यक्षप्रत्यभिज्ञा लक्षणयाखण्डार्था । निष्प्रकारकत्वेन तुसाऽखण्डार्था भविष्यतीत्यत आह । तत्तेति । तत्त्वेनेदंत्वेन च तदभेदेन च देवदत्तं प्रत्यभिजानामीति प्रत्यभिज्ञानुव्यवसाये तृतीयार्थोल्लेखात्प्रत्यभिज्ञायास्तत्तादि प्रकारकत्वमवसीयत इत्यर्थः । यत्तु प्रत्यक्षप्रत्यभिज्ञायां न तत्तेदन्तयोः प्रकारत्वम् । भासमानाभेदरूपवैशिष्ट्यप्रतियोगित्वाभावादिति । तन्न । तत्तावैशिष्ट्यादिप्रतियोगित्वेन तत्तादेः प्रकारत्वोपपत्तेः । नह्यन्यवैशिष्ट्यप्रतियोगित्वेनान्यस्य प्रकारत्वं कोप्याह । यत्त्वभेदो नप्रकारः स्वरूपतया प्राधान्यादिति । तदपि न । देवदत्तत्वाभेदत्वाभ्यां स्वरूपस्यापि गुणप्रधानभावोपपत्तेः । कर्तृत्वभोक्तृत्वाभ्यामिव स्वर्गं प्रति पुरुषस्य तदनुल्लेख इति तत्ताविशिष्टाभेदानुल्लेखः । स्वप्रत्यभिज्ञेति । ननु नायमस्ति नियमः स्वेन यथावगतं तथैव परं प्रति वाच्यमिति । समूहज्ञानेनापि श्रोतृबुभुत्सितैकदेशोपदेशदर्शनात् । ज्ञानमात्रसाध्यत्वाद्बुभुत्सानुसारित्वाच्चोपदेशस्येति । मैवम् । अयं स न वेत्यादि स्वकीयसंदेहादिकं प्रति स एवायमिति तत्तादिप्रकारिकायाः प्रत्यक्षप्रत्यभिज्ञायाः निवर्तकत्वमवधारयमाणेन कोयमिति प्रष्टृवाक्यावगततादृशसन्देहवंतं परं प्रति स्वप्रत्यक्षप्रत्यभिज्ञासमानाकारकज्ञानजनकवाक्यस्योपदेष्टव्यत्वात् । तदिदमुक्तं स्वेति । परमिति च । उक्तसन्देहोत्तरकालीनस्वकीयप्रत्यभिज्ञयाऽवगतस्येत्यर्थः । उक्त सन्देहवंतं परं प्रतीत्यर्थः । सार्वज्ञादेरिति । सार्वज्ञाद्युपलक्षितत्वस्येत्यर्थः । चैतन्यमात्रेति ।

(तरङ्गिणी)

तत्त्वमसीत्यस्येत्यनुषङ्गः । भ्रमकालज्ञातेति । यत्तु भ्रमप्रतीतभेदाश्रयतावच्छेदकतत्प्रतियोगितावच्छेदक द्वयोपलक्षितस्वरूपमात्रज्ञानं चेद्भ्रमनिवर्तकमिति । तन्न । भेदाश्रयतातत्प्रतियोगितयोरवच्छेदकस्यार्थं प्रत्युपलक्षणत्वेपि ज्ञाने विषयतयाऽनुप्रवेशश्चेत्खण्डार्थत्वमेव । नचेद्भ्रमकालज्ञाताधिष्ठानज्ञानादनधिकविषयमेव महावाक्यज्ञानम् । महावाक्यस्य तत्त्वमसीत्यस्यावान्तरवाक्येन सत्यं ज्ञानमित्यादि वाक्येन गतार्थत्वे हेतुमाह । तत्पदार्थशोधकेनेत्यादिना । ननु महावाक्येऽनेकपदाभावे तज्जन्यज्ञानेन भ्रमनिवृत्तिर्नस्यादिति शङ्कते । कथमिति । ननु शङ्खश्वैत्यानुमानादनधिकविषयस्यापि श्वैत्यप्रत्यक्षस्यपीतभ्रमनिवर्तकत्ववत्प्रकृतेपि स्यादित्यत आह । नहीति । शङ्खश्वैत्यानुमिति प्रत्यक्षयोर्विषयवैजात्याभावेपि कारणवैजात्यात् तथा प्रकृते नोभयवैजात्यमित्यर्थः । न चतात्पर्याविषयेणापीति । तत्त्वमसीत्यस्य चैतन्यमात्रपरत्वेऽभेदे तात्पर्याभावेन प्रतीतस्याप्यभेदस्याकिंचित्करत्वान्न तेन भेदभ्रमनिवृत्तिः स्यात् । अतिप्रसंगादिति । तात्पर्याविषयेणापि यजमानप्रस्तराभेदेन तद्भेदधीनिवृत्तिप्रसङ्गः । ननु महावाक्येऽधिकबोधार्थं नानेकपदोपादानम् । किंत्वेकपदसहायार्थमिति शङ्कते । नचैकस्येति । चैतन्यस्येति । सहायान्तरानपेक्षपदप्रयोग एवोचित इत्यर्थः । अभेदरूपेति । यदनुपपत्त्यायत्कल्प्यते तस्य तदुपपादकत्वनियमादभेदरूपान्वयबोधकत्वेन निर्णीतस्य पदद्वयसामानाधिकरण्यस्योपपादनार्थं कल्प्यमानालक्षणामुख्यार्थबाधेसति पदद्वयामुख्यार्थाभेदरूपान्वयमादाय पदद्वयसामानाधिकरण्यमुपपादयेदित्यर्थः । एकस्मिन्नपि पदे लक्षणाया अयोगान्नतदर्थं पदान्तरमर्थवदिति भावेनाह । सदेवेत्यादीति । चिन्मात्रं यदि न बुद्धिस्थं तर्हि न तत्र लक्षणापि । यदि बुद्धिस्थं तर्हि तदितिपदेन शक्त्यैव तत्प्रतिपादनमस्तु । सर्वनाम्नां प्रकृतेऽर्थे शक्तत्वादित्यर्थः । वाच्यार्थेति । प्रस्तरवाक्ये हि प्रत्यक्षानुरोधेन लक्षणा कल्प्यते । नचेहाद्वैतवाक्यस्य तत्वावेदकस्यातत्वावेदकप्रत्यक्षानुरोधोस्ति । तथाच तत्त्वमादिवदवाच्यविशिष्टयोरेवाभेदो महावाक्येन बोध्यतामिति लक्षणाऽनपेक्षितेत्यर्थः । अभिज्ञाभ्यामेवेति । एकस्मिन्नेव देवदत्ते कालभेदोनोत्पन्नाभ्यां देवदत्तोऽयं देवदत्तोऽयमिति ज्ञानाभ्याम् । प्रत्यभिज्ञाया एवेति । एकस्या इति शेषः । नन्वभिज्ञाधिगतमात्रबोधकत्वात्प्रत्यभिज्ञातः प्रामाण्यं न स्यादत आह । तत एवेति । अर्थवादवत्सप्रयोजनत्वात्प्रामाण्यम् । धर्मद्वयेति । पदार्थातिरिक्तवाक्यार्थाभावेपि भेदभ्रमनिवर्तकत्वात्प्रामाण्यमित्यर्थः । कात्यायनेन संमतित्वेनोदाहृतं वाक्यं स्वोक्तार्थे संमतित्वेनाह । उक्तं हीति । अभिज्ञाभ्यामिति । वस्तुगत्यैकस्मिन्कालद्वयसंबन्धस्याभिज्ञाभ्यां ग्रहणेपि न ताभ्यां कालद्वयसामानाधिकरण्यं गृह्यते । प्रत्यभिज्ञयात्वेकाधिकरणत्वरूपं कालद्वयस्य सामानाधि-

(तरङ्गिणी)

करण्यं गृह्यत इति तस्यास्ताभ्यां प्रमेयत एव भेदः । यथैकस्मिन्धूमे कालव्यवधानेन जातयोर्विशकलितव्यभिचाराभावसहचारज्ञानयोस्तदु भयसामानाधिकरण्याविषयत्वेन व्याप्त्यविषयकत्वादव्याप्यत्वभ्रमनिवर्तकत्वम् । विशिष्टज्ञानस्य तु व्याप्तिविषयकत्वात्तथात्वं तद्वत् । एकस्मिन्निति । समानेऽधिकरण इत्यर्थः । एतेन प्रत्यभिज्ञायां नैकत्वं विषयः । सङ्ख्यारूपस्य तस्य गुणादावभावात् । तदभिलापवाक्यस्यापि सोयमित्याकारतापत्तेश्चेति निरस्तम् । समानाधिकरणविभक्त्या सामानाधिकरण्यस्योल्लेखाच्च । अन्यथेति । समानजातीयज्ञानयोरभिज्ञाप्रत्यभिज्ञानयोः प्रमेयभेदाभावे । भेदभ्रमेति । शुक्तावियं न शुक्तिरिति ज्ञानानन्तरमियमिति ज्ञानेन पुरोवर्तिनि कालद्वयपरामर्शाद्भेदभ्रमनिवृत्तिःस्यात् । न चैकेन न कालद्वयपरामर्श इति वाच्यम् । एकेनैकस्मिन्काल द्वयपरामर्शे तत्सामानाधिकरण्यविषयकत्वावश्यकत्वात् । ननु तत्त्वमसिवाक्यम् अखण्डार्थं भेदभ्रमनिवर्तकवाक्यत्वात् । घटाकाशो महाकाश इति वाक्यवत् । तदुक्तं वार्तिके । घटाकाशो महाकाश इत्युक्तेरेवैक्यधीर्यथेति । तदेतन्निराकरोति । घटाकाश इति । द्वितीय हेताविति । नचैतत्संसर्गव्यतिरिक्तार्थ एव प्रमाणमिति साध्यम् । अप्रयोजकत्वात् । श्लोकस्येति । अग्निहोत्रादिर्गीरेतत्संसर्ग व्यतिरेकिणी इत्यपि च पठितुं शक्यत्वात् । तत्वमस्यादिवाक्यस्याखण्डार्थत्वानुमानभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

पदार्थपरवाक्यस्याखण्डार्थत्वं प्रदूष्य महावाक्यस्यापि अखण्डार्थत्वं पूर्वोक्तदूषणेन दूषयति ॥ तत्त्वमस्यादीति ॥ उक्तरीत्येति ॥ स्वरूपमात्रस्य प्रागेव ज्ञातत्वेन प्रश्नाद्ययोगादित्युक्तरीत्येत्यर्थः ॥ उभयत्रेति ॥ महावाक्यस्याखण्डार्थत्वसाधकयुक्ति- द्वयेऽपीत्यर्थः । अतो न पौनरुक्त्यमिति हृदयम् । ननु सोऽयं देवदत्त इत्यादेर्विशिष्टार्थत्वे बाधकसद्भावादखण्डार्थत्वमेव स्वीकर्तव्यमिति कथं साध्यविकलतेति शङ्कते ॥ नन्विति ॥ नन्वेतत्कालवैशिष्ट्यादेः प्रत्यक्षत्वेऽपि न तत्कालावच्छेदेन प्रत्यक्षत्वमतस्तद्बोधनं युक्तमेवेत्यत आह ॥ तत्कालादेरपीति ॥ ननु विशेषणभेदे विशिष्टाभेदो नेति नियमोऽप्रयोजक इत्याशङ्क्याह ॥ विशिष्टं हीति ॥ विशेषणभेदेनापीति ॥ ननु विशेष्यस्य समवायिकारणत्वात् तद्भेदेऽस्तु विशिष्टभेदः । विशेषणसंबन्धस्तु निमित्तम् । न च निमित्तभेदे कार्यभेदः । अतिप्रसंगात् इति चेन्न । समवायिभेदेऽपि पटादिकार्याणां निमित्तविशेषवशात् अभेददर्शनात् । तदभेदेऽपि पाकजस्थले रूपरसादौ निमित्तविशेषात् भेददर्शनादिति ॥ अस्तु तावदिति ॥ उक्तविकल्पदोषनिरासेन त्रेधाप्यखण्डार्थत्वं साधयिष्यामीति तावच्छब्दः । नन्वेकस्य कालद्वयसंबन्धे तयोरेकविशेष्यवृत्तित्वं कालद्वयसंबन्ध एकैकस्य नेत्यत आह ॥ कालद्वयेति ॥ पूर्वोत्तररूपकालद्वयेत्यर्थः । नन्वेकस्य देशद्वयसंबन्धो विरुद्ध इत्यत आह ॥ देशद्वयेति ॥

(कण्टकोद्धारः)

नन्वस्य वाक्यस्य तत्तेदन्तयोरेकवृत्तित्वबोधकत्वे किं प्रमाणम्? प्रत्यक्षस्य विप्रतिपन्नत्वादित्यत आह ॥ सोऽयमिति ॥ न च नीलमुत्पलमित्यादौ व्यभिचार इति वाच्यम् । तत्तेदन्ताशब्देन विशेषणद्वयस्य गृहीतत्वात् । न च तद्विशिष्टपरमिति व्यभिचार एवेति वाच्यम् । अधिकबोधनेप्येकवृत्तित्व बोधकत्वात् । ननु समानाधिकरणत्वं तदधिकरणाधिकरणत्वम् । तच्च प्रकृतेऽसिद्धमित्यत आह ॥ भिन्नमिति । अत एवाप्रयोजकत्वमपि न । उक्तहेतोः साध्यं विनानुपपत्तेरिति भावः । ननूक्तयोःर्विशेषणयोर्विरुद्धत्वात् कथमेकत्रावस्थानमिति शंकां परिहरन्नेवोक्तमर्थं कारिकया सङ्गृह्णाति ॥ एवञ्चेति ॥ एतेनेति परामृष्टमाह ॥ मयेति ॥ ननु विशेषणयोरेकत्रावस्थानबोधकत्वे प्रश्नवैयधिकरण्यम् । देवदत्तस्वरूपमात्रस्यापृष्टत्वादित्यत आह ॥ देवदत्तेति ॥ ननु तत्ताया अतीतत्वात् तत्पदे लक्षणेत्यत आह ॥ न चेति ॥ अन्यथेति ॥ तत्पदस्य स्वार्थत्यगे । उपसंहरति ॥ तस्मादिति ॥ कथं पूर्वोक्तपक्षत्रयेऽपि न दोष इत्यत आह ॥ किञ्चेति ॥ ननु कथं न दोषः तत्तादेरतीतत्वेन विशेषणत्वस्यासंभवेन तत्ताविशिष्टादौ तद्वैशिष्ट्यादेरसंभवादित्यत आह ॥ तत्तादेरपीति ॥ न च नेदं विशेषणत्वलक्षणम् । दण्डी देवदत्तः इत्यादौ दण्डादेर्विशेषणत्वं न स्यात् दण्डवत्तया पूर्वं देवदत्तज्ञानाभावात् । विशेषणज्ञानस्य कारणत्वानभ्युपगमादिति वाच्यम् । ज्ञात इत्यस्य ज्ञायमान इत्यर्थात् । तस्य च तत्रापि सत्त्वात् । अत एव प्रतियोगित्वादेरपि विशेषणत्वमुपपन्नमिति भावः । नन्वन्यान्यपि विशेषणत्वलक्षणानि संभाव्यन्ते । तत्कथमिदमेव विशेषणत्वमित्यतः परिशेषादित्याह ॥ न चेत्यादिना ॥ सदेव विशेष्य इति शेषः । अन्यथा विशेष्ये अतिव्याप्तेः । वक्ष्यमाणदूषणासंगतेश्च । न चैवमपि दण्डयस्तीत्यादौ प्रमेयत्वादेरपि विशेषणत्वापत्तिरिति वाच्यम् । सदेवेत्यस्य सत्त्वे सति प्रतीयमानमित्यर्थात् । एवञ्च रजतमस्तीत्यादौ रजतत्वादेरविशेषणत्वप्रसङ्गः । तदर्थं च सत्त्वत्यागे प्रकृतेऽपि न कोपि दोषः । तथापि यथाश्रुते दोषमाह ॥ दण्डीति ॥ स्वप्रत्याय्येति ॥ स्वेन प्रत्याय्या ज्ञाप्या या वृत्तिः तदधिकरणतावच्छेदकत्वमित्यर्थः । नचैवं प्रमेयत्वादेर्विशेषणत्वं न स्यात् । तज्ज्ञाप्यव्यावृत्तेरसंभवादिति वाच्यम् । आवयोर्मते अप्रामाणिकादपि व्यावृत्तिसंभवेन प्रमेयत्वादेरपि तथाभाव संभवात् । न हि प्रमेयत्वं केवलान्वयीत्यावयोर्मतम् । अवच्छेदकत्वं किमन्यूनानतिरिक्तदेशवृत्तित्वं किं वा यदन्विततया ज्ञात एवेत्यादिकम्? आद्ये दोषमाह ॥ अवच्छेदकत्वस्येति ॥ अभासमानस्यापि तत्समनियतस्य विशेषणत्वप्रसंग इत्यपि द्रष्टव्यम् । द्वितीय आह ॥ अवच्छेदकत्वस्येति ॥ उपलक्षणमेतत् । गौरवश्चेत्यपि द्रष्टव्यम् । प्रकृते सत्त्वमेवोपपादयति ॥ न हीति ॥ काकतुल्यतां परिहरति ॥ न चात्रापीति ॥ तत्रेति ॥ संस्थानविशेषवतीत्यर्थः । न चैवमुत्तृणत्ववदिति देवदत्तगृहत्वं प्रत्यक्षसिद्धम् । येन तत्रोपदेशानर्थक्यमिति भावः । तस्मादतीतत्वं वर्तमानत्वं वा न प्रयोजकम् । किन्तु यदन्वितत्वमेवेत्युपसंहरति ॥ तस्मादिति ॥ समानाधिकरणं यदन्विततया ज्ञातमेवेत्येवंरूपमित्यर्थः । अप्रत्यक्षत्वात् । तथाच न वाक्यवैयर्थ्यमिति शेषः ॥ अभेदस्येति ॥ न च लक्षणया स्वरूपमात्रपरत्वमिति नाखण्डार्थत्वभङ्ग इति वाच्यम् । प्रश्नोत्तरयोर्वैयधिकरण्यापत्तेः ॥ विशिष्टमिति ॥ न च द्वयोरुद्देश्यतावच्छेदकत्वमयुक्तम् । विधेयाभाव प्रसंगादिति वाच्यम् । ऐक्यस्य विधेयत्वसंभवात् । न च तत्प्रत्यायकपदाभावात् कथं तद्विधेयमिति वाच्यम्?

(कण्टकोद्धारः)

विशेषणोत्तरविभक्त्यादेरेव तत्प्रत्यायकत्वसंभवात् । अत एव विशेषणोत्तर विभक्तेरर्थसाधुत्वमिति गंगेशचरणाः । नन्वेवं विशेष्यमात्राभेदेऽपि न विशिष्टाभेद इत्यत आह ॥ तस्यैव चेति ॥ यत्र धर्मद्वयमुद्देश्यतावच्छेदकीकृत्यैवं विधीयते तत्रैव विशिष्टाभेद इति भावः ॥ पदार्थान्तरमितीति ॥ ननु विशेष्यभेद इव विशेषणभेदस्यैव बाधकत्वात् कथं विशिष्टयोरभेद इति चेन्न । विशेष्यभेद इव विशेषणभेदे नायं स इति भेदबुद्धेरभावेन प्रत्युत स एवायमिति अभेदबुद्धेरेव सत्त्वेन विशेषणभेदस्य विशिष्टभेदाप्रयोजकत्वात् । अत एवोक्तमबाधितेति ॥ अन्यथेति ॥ विशेषणभेदस्य विशिष्टभेदप्रयोजकत्वे इत्यर्थः । रूप्यार्थिप्रवृत्तौ तदभेदप्रतीतेः कारणत्वादित्यर्थः । न च न मया विशिष्टैक्यं बोध्यत इत्युच्यते । किन्तु स्वरूपैक्यमेवेति वाच्यम् । तस्य पूर्वमेव सिद्धत्वात् । एवं तत्ताया अतीतत्वेऽपि पदान्वितयेति विशेषणलक्षणसद्भावात् सत्त्वस्य विशेषणत्वेऽतन्त्रत्वात् तत्ताया विशेषणत्वमेवेति पक्षत्रये न दोष इत्युक्तम् । इदानीमस्तु विशेषणत्वे सत्त्वं तन्त्रम् । तथाप्येकसत्त्वाद्विशेषणत्वमपरस्योपलक्षणत्वम् । न चैतावताऽखण्डार्थत्वमित्याह ॥ अस्तु वेति ॥ नन्वेकस्योपलक्षणत्वेऽखण्डार्थत्वं स्यादित्यत आह ॥ उपलक्षणस्येति ॥ न ह्युपलक्षितार्थविषयत्वमात्रमखण्डार्थत्वम् । काकवद्देवदत्तगृहमित्यत्रापि तथात्वापत्तेः । किन्तु संसर्गागोचरप्रमाजनकत्वपर्यवसन्ननिष्प्रकारकत्वमेव । न च तत्प्रकृतेऽस्तीति भावः । ननूपलक्षणत्वाभ्युपगमे लक्षणाप्रसंगात् कथं स्वप्रकारकबोधजनकत्वमित्यत आह ॥ नापीति ॥ ननु भिन्नत्वे उपलक्षणवाचकस्य लाक्षणिकत्वाभावो वा लाक्षणिकस्योपलक्षणत्वाभावो वा स्यादित्यत इष्टापत्या परिहरति ॥ दृश्यते हीति ॥ अस्तु वोपलक्षणवाचकस्य लाक्षणिकत्वम् । न चैतावता साम्यम् । पदद्वयलक्षणायाः एकपदलक्षणाया ज्यायस्त्वादित्याह ॥ वरञ्चेति ॥ ननु कदाचित् संबद्धमेवोपलक्षणम् । प्रकृते च तत्तेदन्तयोर्न विशिष्टसंबन्ध इति कथं तयोरुपलक्षणत्वमित्याशंक्य निषेधति ॥ न चेति ॥ यद्वेति ॥ न चेदमस्तु वेत्यादिना पुनरुक्तम् । तत्रापीदन्ताविशिष्टादेरुपलक्षणात् काकसंबन्धादेरेव प्रतिपादनादिति वाच्यम् । एकस्य विशेषणत्वमपरस्योपलक्षणत्वमित्यस्य साम्येऽपि पूर्वत्र विशेषणोपलक्षणयोः परंपरासंबन्धोऽत्र तु साक्षादिति न पौनरुक्त्यम् । अत एवोक्तं विशेष्यद्वारेति । न च तदसंभवः । उद्देश्यविधेयभावादेरनेकविधस्य तस्य संभवात् ॥ अनुवृत्तेति ॥ विरुद्धधर्मवतोरैक्यायोगादिति भावः ॥ समवायस्थान इति ॥ अनुवृत्तत्वादिकं भेदेन निर्वाह्यम् । न चैवमेकत्र भेदाभेदौ विरुद्धाविति वाच्यम् । विशेषवत्त्वेन तच्छमनादिति ॥ अन्यथेति ॥ अनुवृत्तव्यावृत्तयोरैक्यासंभवांगीकारे इत्यर्थः । बाधकात् स्वरूपमात्रविषयत्वे निर्विकल्पकत्वम् । बाधानवतारदशायान्तु भ्रमत्वमेव स्यादिति बोध्यम् । ननु प्रकृते केवलाभेदाङ्गीकारात् कथमनुवृत्तत्वादिकं निर्वाह्यमित्यत आह ॥ केवलेति ॥ अस्तु वा पदद्वयमुपलक्षणपरम् । तथापि प्रकृते सखण्डार्थत्वमेवेत्याह ॥ यद्वेति ॥ नन्वेवं साध्यवैकल्यं सिद्धान्ते नोक्तम् । तथाच तद्विरोध इत्यत आह ॥ तदेतदिति ॥ ननु भवद्भिः विशेषणत्वैकोप-लक्षणत्वोभयोपलक्षणत्वरूप पक्षत्रयेऽपि सखण्डार्थत्वमुक्तम् । तट्टीकाविरोधि । टीकायां प्रकारान्तरेण सखण्डार्थत्वासंभवात् तच्छब्दस्यार्थान्तरं वर्णयित्वा सखण्डार्थत्वाभिधानादित्यत आह ॥ टीकायां त्विति ॥

(कण्टकोद्धारः)

अन्यथापीति ॥ उक्तप्रकारत्रयेणेत्यर्थः । टीकोक्तप्रकारेणैव सखण्डार्थत्वं किमिति नोच्यते । किं प्रकारत्रयोपादानेनेत्यत आह ॥ परेणेति ॥ ननु अनुभवकालसंबंधस्तत्ताशब्दार्थत्वेन वर्णितः । अनुभवध्वंसकालोऽपि । तत्र का तत्ता इति संदिह्यत इत्यत आह ॥ युक्तश्चेति ॥ अन्यथेति ॥ यद्यनुभवकालसंबन्ध एव तत्तेत्यर्थः । ननु स्मृत्यनुभवयोर्भिन्नविषयत्वात् कथमनुभवे तत्तोल्लेख आपाद्यत इत्यत आह ॥ स्मृत्यनुभवयोरिति ॥ यद्यपि अनुभवे कालो वर्तमानत्वेन भासते स्मृतावतीतत्वेन तथा च कथं विषयकृतवैलक्षण्याभावः । तथापि अनुभवविषयैव स्मृतिरिति परमतावष्टम्भेनेदमुक्तमिति हृदयम् ।

ननु तद्देशकालसंबंध ध्वंसस्तत्तेति पक्षे कथं स्मृतौ तत्ताभानम्? ध्वंसस्याननुभूतत्वात् । अननुभूतभाने अनागतस्यापि भानप्रसङ्गादित्यत आह ॥ तत्तामात्रे चेति ॥ अनुभवबलेनेति ॥ अनागतत्वस्याननुभवेन नियामकान्तरस्याकल्प्यत्वादिति । ननु पूर्वकालसंबन्ध एव तत्तास्तु । तथाचाननुभूतभाने न नियामककल्पनागौरवमित्यत आह ॥ पूर्वकालेति ॥ टीकोक्त सखण्डार्थत्वपक्षेषु अभेदपक्षेऽनुपपत्तिमाशङ्कते ॥ न चेति ॥ पूर्वोक्तमेव परिहारं स्मारयति ॥ अनुवृत्तेति ॥ ननु सखण्डार्थत्वेऽनुपपत्यभावेऽपि अखण्डार्थत्वस्य मदुक्तरीत्याऽसंभवात् कथं साध्यवैकल्यमित्यत आह ॥ किञ्चेति ॥ तस्य स्वरूपस्य ॥ अन्यथेति ॥ स्वरूपज्ञानाभावे इत्यर्थः । पूर्णत्वेन, स्वरूपबोधनस्येति शेषः । पूर्णत्वात्, लक्ष्यार्थबोधनस्येति शेषः । ननु स्वरूप ज्ञानेऽप्यसाधारणस्वरूपज्ञानार्थं पदान्तरमिति चेन्न । दत्तोत्तरत्वात् । ननु क्रियाकर्मभावत्रयसंसर्गाप्रतिपादकत्वात् अखण्डार्थत्वमित्यत आह ॥ न हीति ॥ ननु तत्र भावाभावांशयोर्भेदाभावो बोध्यते । प्रकृते तु भावांशयोरेवेति सखण्डार्थत्वमित्यत आह ॥ न चेति ॥ तथात्वेऽतिप्रसंग इति । तमेवाह ॥ स्वेति ॥ उपलक्षणेनेति ॥ उपलक्ष्यतावच्छेदकाभावे उपलक्षणत्वं न युक्तम् । देवदत्तत्वं चेत् तस्य प्रागेव निश्चितत्वात् नोपलक्ष्य तावच्छेदकत्वमिति भावः । उक्तमर्थं कारिकया संगृह्णाति ॥ एवञ्चेति ॥ किञ्च किं प्रत्यभिज्ञामात्रस्य स्वरूपमात्रविषयत्वं किं शाब्द्या एव वा? न द्वितीयः । नियामकाभावात् । न प्रथम इत्याह ॥ अपि चेति ॥ ननु प्रत्यक्षप्रत्यभिज्ञायास्तथात्वेऽपि शाब्द्यास्तत्कुत इत्यत आह ॥ स्वेति ॥ एवमुपपादितं साध्यवैकल्यमुपसंहरति ॥ तस्मादिति ॥

एवं दृष्टान्ते साध्यवैकल्यमुपपाद्य पक्षं प्रकारान्तरेण दूषयितुं पृच्छति ॥ किञ्चेति ॥ किमिदं वाक्यं चितश्चिदभेदविशिष्टतात्पर्यवत्? अथवा सार्वज्ञाद्युपलक्षितचिदभेदविशिष्टपरम्? चैतन्यमात्रपरं वा? आद्यं दूषयितुं पृच्छति ॥ किञ्चेति ॥ किञ्चेत्यारभ्य प्रतिषेधश्चेत्यन्तम् । तत्र सखण्डार्थत्वमित्यनेन बाधः । इष्टापत्तिरित्यादिना वाक्यस्यानुपादेयत्वेनाप्रामाण्यप्रसंगेन च प्रामाण्याय तदखण्डार्थत्वसाधनेऽर्थान्तर त्वमित्यनुमानस्य दूषणमुक्तं भवति । द्वितीय आह ॥ सार्वज्ञ इति ॥ तथा च बाध एवेति भावः । तृतीय आह ॥ चैतन्येति ॥ तथाचानुमानेऽर्थान्तरमिति भावः । ननु चैतन्यस्य प्रागज्ञानात् न वाक्यवैयर्थ्यमित्यत आह ॥ वाक्यादिति ॥ अत्र च प्राक् चैतन्याज्ञाने बुभुत्सा न स्यात् । भ्रमश्च न स्यादिति सहेतुकं बाधकमुक्तम् । तथाच वैयर्थ्यमित्युपपादितम् । इदानीं चैतन्यमात्रबोधनेऽतिप्रसंगान्तरमाह ॥ वाक्येति ॥ न

(कण्टकोद्धारः)

च द्वारतया विशिष्टार्थबोधनात् तन्निवृत्तिरिति वाच्यम् । तस्य तात्पर्याविशिष्टार्थस्य त्याज्यत्वात् । एवमुत्तरत्रापि द्रष्टव्यम् । अत एवाह ॥ न चेति ॥ अतिप्रसंगादिति ॥ यजमानः प्रस्तर इत्यादौ यजमानत्वादिना प्रस्तरादेरयजमानादिव्यावृत्तिप्रसङ्गादित्यर्थः ॥ चैतन्यपदेनैवेति ॥ उपलक्षणमेतत् । सगुणवाक्यादावपि लक्षणायै पदान्तरमित्यपि स्यादिति द्रष्टव्यम् । विशेषाभावस्य पूर्वमेवोपपादितत्वादिति । अति प्रसङ्गमाह ॥ गंगायामिति ॥ अभेदेति ॥ न च तात्पर्यानुपपत्या लक्षणेति वाच्यम् । स्वरूपमात्रे तात्पर्यायोगस्य पूर्वमेवोपपादितत्वात् ॥ एतेनेति परामृष्टं हेतुमाह ॥ अन्वयेति ॥ यदि तात्पर्यानुपपत्या लक्षणा तर्हि एकपदे वाक्यस्थत्वाभावेऽपि तात्पर्य विषयीभूतपदार्थज्ञानार्थं लक्षणा स्यादिति भावः ॥ एतेनेति ॥ प्रत्यभिज्ञाया अभिज्ञातो विषयभेदाभावे फलविशेषासंभवेनेत्यर्थः । एतेनेति परामृष्टमेवाह ॥ अभिज्ञायामिति ॥ अन्यथेति ॥ यदि कालद्वयसंबन्धः एकस्मिन्न गृह्यते तदेत्यर्थः । ननु कालद्वयसंबन्धाग्रहणेऽपि कालद्वयपरामर्शमात्रेण फलभेदो भविष्यतीत्यत आह ॥ कालेनेति ॥ उक्तदूषणैरेव तदेकदेश्युक्तानुमानान्यपि दुष्टानि ज्ञातव्यानीत्यभिप्रायेणातिदेशमाह ॥ एतेनेति ॥ सत्यादि-वाक्यमखण्डार्थमेकार्थप्रतिपादकत्वात् महाकाशो घटाकाश इति वाक्यवदित्यनुमानेनोक्तमित्यर्थः ॥ सत्येति ॥ सत्यादिवाक्यं एतत्पदवाच्यसंसर्गान्यप्रमापकम् । प्रमाणत्वात् चक्षुरादिवदित्यर्थः । एतच्छब्देन परामृष्टानि उत्तवक्ष्यमाणदूषणानि व्यवस्थया दर्शयति ॥ अप्रसिद्धेत्यादिना ॥ आद्यानुमान इति शेषः ॥ एकत्वेति ॥ न च संभावितदोषाणामादिपदेनैव गृहीतत्वात् पुनर्विरुद्धत्वोक्तिरयुक्तेति वाच्यम् । सामान्योक्तस्यै-वोपपादनेनादोषात् ॥ आकाश इति ॥ एकार्थप्रतिपादकत्वाभावादिति वक्ष्यमाणत्वेनेत्यतः परं द्रष्टव्यम् ॥ द्वितीय हेताविति ॥ न च संसर्गादन्यस्मिन्नेवेति विवक्षितम् । अतो न सिद्धसाधनमिति वाच्यम् । एतत्संसर्गे प्रमाणत्वस्यानुभवसिद्धतया बाधात् संसर्गप्रमापकत्वेनापि हेतोरुपपत्याऽप्रयोजकत्वाच्च ॥ श्लोकस्येति ॥ अग्निहोत्रादिगीरेतत्संसर्गव्यतिरेकिणि अर्थ इत्यादि वा सत्यज्ञानादिगीरेतत्पदार्थव्यतिरेकिणि अर्थ इत्यादि वा पठितुं शक्यत्वादित्यर्थः । अखण्डार्थत्वनिरासेन लब्धमर्थमुपसंहरति ॥ तस्मादिति ॥ अखण्डार्थत्वस्यानन्तदोषदुष्टत्वादित्यर्थः । विस्तरभयादुपराम इति भावः । अत्र गुणशब्दः सद्धर्मपरोऽतो नोत्तरवादासंगतिरिति ध्येयम् । इति तत्त्वमस्यादिवाक्यस्याखण्डार्थत्वानुमानभङ्गः ।

न्यायामृतप्रकाशः

उक्ताप्रसिद्धेति ॥ प्रत्यक्षादिनापीदमित्थमिति सप्रकारकज्ञानस्यैवोत्पत्तेः संसर्गागोचरप्रमाजनकत्वरूपा-खण्डार्थत्वं कुत्राप्यप्रसिद्धमित्युक्तेत्यर्थः । कोहमित्यात्मस्वरूपमात्रे बुभुत्सिते सति तत्त्वमसीत्यस्य प्रवृत्तेर्न तन्मात्रप्रश्नोत्तरत्वस्यासिद्धिरित्यत आह ॥ उक्तरीत्येति ॥ स्वरूपमात्रस्य सिद्धत्वान्नस्वरूपमात्रे प्रश्न इत्याद्युक्त-रीत्येत्यर्थः । वाक्यमात्रस्य संसर्गपरत्वात्सोयं देवदत्त इत्यादेरपि तथात्वात्तत्र साध्यवैकल्यमित्याह ॥ उभय-त्रापीति ॥ अकार्यैत्याद्यनुमाने तन्मात्रप्रश्नोत्तरत्वानुमाने चेत्यर्थः । सोऽयं देवदत्त इत्यादेरखण्डार्थत्वान्न साध्यवैकल्यमित्याशंकते ॥ नन्विति ॥ तत्कालादेरपीति ॥ तद्देशकालादिविशिष्टस्य एतद्देशकालादिवैशिष्ट्यबोधने

(प्रकाशः)

तद्देशकालादेस्तावद्विशेषणत्वं प्रतीयते विधेयान्वय्येव च विशेषणं तथाचैतद्देशकालादिवैशिष्ट्यस्य विधेयत्वेन तद्देशकालयोर्विधेयभूतैतद्देशकालान्वयाभावे विशेषणत्वायोगेन तदन्यथानुपपत्त्या विधेयान्वयित्वे वाच्ये तद्देशकालयोरपीदानीं सत्वापत्तिरित्यर्थः । एतद्देशे तद्देशस्य सत्वापत्तिरादिशब्दार्थः । एवमेव एतत्कालादेरित्यस्यापि उपपादनं द्रष्टव्यम् । तद्देशे एतद्देशसत्वापत्तिरादिशब्दार्थः ॥ विशेषणभेद इति ॥ यदाह्यविरुद्धदण्डकुण्डलादिविशेषणभेदेन विशिष्टभेद आवश्यकस्तदा तदेतद्देशकालरूपविरुद्धविशेषणभेदेन विशिष्टभेदः सुतरामावश्यक इत्यर्थः । तदुक्तं संक्षेपशारीरके–

''अविरुद्धविशेषणद्वयप्रभवत्वेपि विशिष्टयोर्द्वयोः ॥
घटते न यदैकता तदा सुतरां तद्विपरीतरूपयो''रिति ।

विशिष्टं विशेषण विशेष्यतत्संबंधात्मकम् अतिरिक्तं चेति पक्षद्वयेपि विशेषणभेदे विशिष्टभेद एवेत्याह ॥ विशिष्टंहीत्यादिना ॥ विशेषणभेदेनेति ॥ विशेषणस्यैव विशिष्टत्वेन तद्भेद एव विशिष्टभेद इत्यर्थः । पदार्थांतरं विशेषणाद्यतिरिक्तम् । अत्र तद्देशकालविशिष्टस्य एतद्देशकालवैशिष्ट्यमेतद्देशकालविशिष्टस्य तद्देशकालवैशिष्ट्यमित्येवमादिरूपेण न बोध्यते येनोक्तदोषः किं नाम तदेतद्देशकालसंबंधरूपयोस्तत्तेदंतयोर्बाल्ययौवनयोरिव श्यामरक्तरूपयोरिव चैकविशेष्यमात्रवृत्तित्वमेव सोयमितिवाक्यार्थः । न च विशिष्टैक्यतात्पर्याभावेन विशेष्यैक्यमात्रपरत्वप्राप्त्याऽखण्डार्थपरत्वमेव प्राप्तमिति वाच्यम् । तथात्वे नीलोत्पलमित्यादेरपि भिन्नप्रवृत्तिनिमित्तकशब्दानामेकविशेष्यवृत्तित्वसद्भावेना खण्डार्थत्वापातादतो न तत्कालादेरपीदानीं सत्वापत्तिरित्यादिदोष इत्यभिनवसमाधानमाह ॥ उच्यत इति ॥ अस्तु तावदिति ॥ अनुभवकालध्वंस एव तत्तेति टीकाकारोक्तवस्तुस्थितौ सत्यामपीत्यर्थः । तर्हि तद्विशिष्टस्य एतद्देशकालवैशिष्ट्यबोधनेनुभवकालस्यापीदानीं सत्वापत्तिस्तथा वैपरीत्यमपीत्याशंकायामाह ॥ तथापीति ॥ तत्तेदंतयोर्विशे(ष्यान्वयो)षणयोरनन्वयेपि विधेयानन्वयेपि । इतरस्य विशेषणस्य । तदेतत्कालसंबंधरूपयोस्तत्तेदंतयोरेकविशेष्यवृत्तित्वाभावे पूर्वोत्तरकालद्वयासंबंधप्राप्त्या देवदत्तादिपदार्थानां क्षणिकत्वापत्तेस्तदेतत्कालयोरेकविशेष्यवृत्तित्वं तावदंगीकार्यमित्याशयेनाह ॥ कालद्वयेति ॥ तदेतद्देशसंबंधयोरपि एकविशेष्यवृत्तित्वमङ्गीकार्यमनुभवसिद्धत्वादित्याह ॥ देशद्वयेति ॥ नन्वेकस्मिन्विशेष्ये वस्तुगत्या कालद्वयसंबंधस्य देशद्वयसंबंधस्य च सत्वेपि सोयमिति पदद्वयस्य न तद्बोधकत्वं सोयमिति पदद्वयस्य देशकालसंबंधस्य एकविशेष्यवृत्तित्वबोधने शक्त्यभावः । अतः पूर्वकालादिविशिष्टस्य एतत्कालादिवैशिष्ट्यमेव तदर्थ इति तद्बोधयदिदं वाक्यं विरुद्धार्थमेवापन्नमित्यत आह ॥ सोयमितीति ॥ समानाधिकरणत्वेन कथं तयोरेकविशेष्यवृत्तित्वलाभ इत्यत आह ॥ भिन्नेति ॥ अर्थे विशेष्ये । तत्तेदंतान्वयपरं तदेतद्देशकालसंबंधमात्रबोधनपरम् ॥ विशिष्टस्येति ॥ तद्देशकालविशिष्टस्य एतद्देशकालवैशिष्ट्यान्वयपरं न भवतीत्यर्थः ॥ इत्येतावतेति ॥ विशेष्यमात्रवृत्तित्वबोधनादित्यर्थः । एकविशेष्यमात्रवृत्तित्वेनाखण्डार्थत्वांगीकारेऽतिप्रसंगमाह ॥ नीलमिति ॥ नीलत्वोत्पलत्वरूपभिन्नप्रवृत्तिनिमित्तकशब्दयोरेकविशेष्यमात्रवृत्तित्वसद्भावादित्यर्थः । संगृह्णाति ॥ एवं चेति ॥ योगस्य संबंधस्य । तद्रूपयोस्तत्तेदंतयोरिति यावत् । तदुक्तौ सोयमितिपदद्वयेन एकस्मिन्विशेष्ये कालद्वयसंबंधमात्रस्य शक्त्या बोधने । धर्मसंसर्गः

(प्रकाशः)

कालद्वयसंबंधः । विशेषिते विशिष्टे । सर्वं नीलोत्पलमित्यादिवाक्यम् । तथा । अखण्डार्थम् ॥ विशेष्यस्येति ॥ केनचिदखण्डार्थत्वे युक्तिरुक्ता तद्देशकालविशिष्टस्य एतद्देशकालवैशिष्ट्यं न बोध्यते येन सखण्डार्थत्वं स्यात् न च तद्देशकालविशिष्टस्यैतद्देशकालवैशिष्ट्याबोधनेन कालद्वयासंबंधित्वादस्य क्षणिकत्वापात इति वाच्यं सोयमित्यादे र्विशेष्यस्वरूपमात्रबोधकत्वांगीकारेण विशेष्यस्वरूपमात्रस्य च कालद्वयसंबंधित्वेनोक्तदोषाभावात् तथाच विशेष्यमात्रबोधकत्वे नाखण्डार्थत्वमिति । एतेनेत्युक्तमेव विशदयति ॥ मयापीति ॥ त्वदुक्तरीत्यैवेति शेषः । न चैतावताऽखण्डार्थत्वापत्तिः विशेष्ये कालद्वयसंबंधमात्रपरत्वेपि विशिष्टे तत्परत्वाभावादिति वाच्यं नीलोत्पलमित्यादेरपि अखण्डार्थत्वापातादित्युक्तत्वादिति भावः । ननु सोयमिति एकस्मिन्विशेष्ये कालद्वय-संबंधबोधनमप्ययुक्तमेव देवदत्तस्वरूपमात्रस्य बुभुत्सितत्वेन तस्यैव वक्तव्यत्वात् अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यं स्यादित्यत आह ॥ देवदत्तेति ॥ यदुक्तं सोयमिति पदद्वयं तत्तेदंतयोरेकविशेष्यवृत्तित्वबोधने शक्तमिति तदयुक्तं अनुभवकालसंबंधरूपतत्ताया अतीतत्वात् । तत्तावाचिनः स इति पदस्य अनुभवकालसंबंधे लक्षणैव प्राप्ता न शक्तिरित्याशंक्य निराकरोति ॥ न चेति ॥ घट इति ॥ नष्टो घट इत्यत्रापि घटस्यातीतत्वेन घटपदस्यापि तत्र लक्षणा स्यादिति भावः ॥ स्वार्थात्यागादिति ॥ सोयमित्यनेनानुभवकालसंबंधलक्षणतत्तारूपस्वार्थस्य सोयमिति वाक्यप्रयोगकालेऽतीतस्याप्यत्यागात् । विशेष्यमात्रे तत्तत्संबंधस्य सद्भावादित्यर्थः । अन्यथेत्यस्यैव विवरणम् ॥ तत्तादेरतात्पर्यविषयत्व इति ॥ अतीततत्तारूपस्वार्थे तात्पर्याभावे सोयमिति वाक्यप्रयोगकाले त्यागे सतीत्यर्थः न सिद्ध्येत् ततश्च कालद्वयासंबंधिदेवदत्तस्वरूपस्य क्षणिकत्वापात इत्यर्थः । एवं तदेतद्देशकालसंबंधरूपतत्तेदंत-योरेकविशेष्यमात्रवृत्तित्वेऽखण्डार्थत्वं नास्तीत्युपसंहरति ॥ तस्मादिति ॥ विशेष्यस्य विशेष्यस्वरूपमात्रस्य ॥ क्रमिकेति ॥ बाल्ययौवनवत् क्रमिकतदेतद्देशकालसंबंधद्वयसद्भावेपि तात्पर्यसद्भावात्सखण्डार्थत्वमेवेत्यर्थः । समाधानांतरमुत्प्रेक्षयति ॥ किं चेति ॥ त्वदुपन्यस्त इति ॥ ननु सोयमित्यत्रेत्यादिना त्वदुपन्यस्त इत्यर्थः । ननु कथं न दोषः तद्देशकाल विशिष्टे एतद्देशकालवैशिष्ट्यबोधने तद्देशकालयोर्विधेयान्वयित्वरूपविशेषणत्वे वक्तव्ये तद्देशकालयोरिदानीं सत्वापात इत्याशंक्य तयोरिदानीमभावेपि विशेषणत्वमुपपद्यत इत्याशयेन स्वमते विशेषणत्वं निर्वक्ति ॥ तत्तादेरिति ॥ ननु यथा दंडी देवदत्त इत्यत्र दंडान्विततया ज्ञात एव दंडिनि तात्पर्यविषयी भूतस्य देवदत्तत्वस्यादंडिव्यावृत्तेर्वा बोधो भवतीति दंडो विशेषणम् । एवं काकान्विततया ज्ञाते गेहे देवदत्तीयत्वान्वयधीर्भवतीति उपलक्षणस्यापि काकस्य विशेषणत्वापत्तिरत उक्तम् ॥ यदन्विततया ज्ञात एवेति ॥ तत्र काकान्विततया ज्ञात एव नेतरान्वयधीः । किंतु काकस्य गतत्वेन तदुपस्थाप्योत्तृणत्वादिविशिष्ट इति नातिव्याप्तिरिति भावः । एवं च प्रकृते तद्देशकालयोरतीतत्वेपि तदन्विततया ज्ञात एव एतद्देशकालान्वयधी-र्भवतीति युक्तं तयोरिदानीमभावेपि विशेषणत्वमिति ध्येयम् ॥ विधेयेति ॥ तथा च न तद्देशकालयोर्विशेषण-त्वमिति भावः ॥ अव्याप्तेरिति ॥ शब्दत्वे शब्दविधेयभूतानित्यत्वान्वयाभावादिति भावः ॥ विधेयेति ॥ तथाच शब्दत्वे नाव्याप्तिः विधेयान्वयकाले सत्वात् प्रकृते तु विधेयैतद्देशकालान्वयकाले तद्देशकालयोरभावान्न विशेषणत्वमिति भावः ॥ दण्डीति ॥ विधेययोः प्रागभावध्वंसयोः काले दण्डसंबंधस्यासत्वादिति भावः ॥ गृहेति ॥ विधेयस्य देवदत्तीयगृहत्वस्य काले विद्यमाने काकादावित्यर्थः ॥ विधेयेति ॥ अवच्छेदकत्वं नाम

(प्रकाशः)

अन्यूनानधिकदेशकालवृत्तित्वम् । दण्डी देवदत्त इत्यत्र विधेयो यो दण्डिनि देवदत्तत्वान्वयः तत्प्रतियोगिता दण्डिनि तिष्ठति तदवच्छेदको दण्ड इति भवति दण्डो विशेषणं तथा स्वप्रत्याय्या या व्यावृत्तिः अदण्डिव्यावृत्तिस्तदधिकरणता दण्डिन्यस्ति तदवच्छेदकत्वं दण्डस्यास्ति तथा गृहनिष्ठेपि काके विधेयं यद्देवदत्तीयगृहत्वं तदन्वयप्रतियोगित्वं देवदत्तगृहेऽस्ति तदवच्छेदकत्वं तथा स्वप्रत्याय्या या व्यावृत्तिरदेवदत्तगृहव्यावृत्तिस्तदधिकरणतावच्छेदकत्वं चास्तीति विशेषणत्वमेवाभिप्रेतम् । एवं च तद्देशकालयोस्तुदेवदत्ते विधेयभूतैतद्देशकालान्वयप्रतियोगितास्वप्रत्याय्यव्यावृत्त्यधिकरणता चास्ति तदवच्छेदकत्वं नास्ति प्रतियोगित्वव्यावृत्त्योरिदानीमपि सत्वेन तद्देशकालयोश्चेदानीमभावेन तन्न्यूनकालवृत्तित्वादिति ध्येयम् । तद्देशकालयोरप्यवच्छेदकत्वमस्तीत्याशयेनाह ॥ अवच्छेदकत्वस्येति ॥ कालत्वमितिबहुव्रीहिः ॥ लक्ष्यतेति ॥ सास्नादिमत्पिण्डनिष्ठलक्ष्यतावच्छेदकेष्वित्यर्थः । विशेषणेषु गोत्वादिषु । विधेयभूतगोत्वान्वय प्रतियोगिता यत्रास्ति सास्नादिमत्पिण्डे तदन्यूनानधिकदेशकालवृत्तित्वाद्गोत्वस्य । तथा स्वप्रत्याय्या याऽगोव्यावृत्तिस्तदधिकरणताऽन्यूनानधिकदेशकालवृत्तित्वाच्चेत्यर्थः ॥ गौः शुक्लेति ॥ अत्र शुक्लत्वलक्षणस्य गोत्वं न लक्ष्यतावच्छेदकं शुक्लत्वस्य बकादावतिव्याप्तत्वात् अतोऽत्र गोत्वं न लक्ष्यतावच्छेदकरूपमित्यर्थः । अव्याप्तिमेवोपपादयति ॥ न हीति ॥ विधेयभूतशुक्लान्वयप्रतियोगिताऽशुक्लव्यावृत्तिर्वा यत्र देशे कृष्णायांगवि नास्ति तत्रापि गोत्वस्य विद्यमानत्वेनाधिकदेशवृत्तितयाऽन्यूनानधिकदेशवृत्तित्वरूपावच्छेदकत्वाभावात् ॥ इहापीति ॥ तद्देशकालान्विततया ज्ञात एवैतद्देशकालान्वयधीर्भवत्येवेत्येतादृशावच्छेदकत्वगर्भं विधेयान्वयप्रतियोगितावच्छेदकत्वादिरूपमपि विशेषणत्वमस्तीत्याशयः । नन्वेतादृशावच्छेदकत्वमपि प्रकृते नास्ति । तथाहि यथा काकान्विततया ज्ञात एव गृहे न देवदत्तीयत्वादिधीः किंतु काकोपस्थापितसंस्थानविशेषवत्तया ज्ञात एवातो न काकोऽवच्छेदक । एवं प्रकृतेपि तद्देशकालसंबंधरूपतत्तोपस्थापित एव देवदत्ते नैतद्देशकालान्वयधीः किं नाम तत्तोपस्थापितधर्मांतरवत्तया ज्ञात एवातो न तत्ताया अवच्छेदकत्वमित्यत आह ॥ न हीति ॥ स्वप्रत्याय्येति द्वितीयलक्षणाभिप्रायेणादेवदत्तगृहव्यावृत्तिधीवच्चेत्युक्तम् एवमुतरत्रापि किंत्विति ॥ प्रकृते तादृशधर्मांतराभावादिति भावः । संस्थानविशेषः आकारविशेषः ॥ तत्रेति ॥ तत्ताविशिष्टे इदं तासंबंधस्य प्रत्यक्षसिद्धत्वाभावेनोपदेश्यत्वेपि तत्तोपस्थापितदेवदत्तसंस्थानविशेषवति इदंत्वादिसंबंधस्य प्रत्यक्षत्वेनानुपदेश्यत्वादित्यर्थः ॥ तस्मादिति ॥ विधेयान्वयित्वस्य विधेयान्वयकाले सत्वस्य च विशेषणत्वाप्रयोजकत्वादित्यर्थः । वर्तमानं गृहनिष्ठं काकादिकम् । सदिति ॥ वर्तमानमवर्तमानं वां भवतु यदि समानाधिकरणम् । यदन्विततया ज्ञात एवेत्याद्युक्तलक्षणवच्चेति यावत् । तर्हि तद्विशेषणमेवेति तदर्थः ॥ पक्षत्रयेपीति ॥ तत्तान्विततया ज्ञात एवेदंतान्वयो बोध्यते इदंतान्विततया ज्ञात एव तत्तान्वयो बोध्यते उभयान्विततया ज्ञात एवाभेदान्वयधीरिति तद्देशकालयोरिदानीं सत्वापत्तिरित्यादिदोषो नेत्यर्थः ॥ आद्य इति ॥ तत्ताविशिष्टे इदं तावैशिष्ट्यबोधनपक्षे इदं तावैशिष्ट्यस्य प्रत्यक्षसिद्धत्वेनानुपदेश्यत्वात्सोयमिति वाक्यं व्यर्थमित्यर्थः । तत्ताविशिष्टे तत्तान्विततया ज्ञाते ॥ साक्षादिति ॥ तत्तेदंताविशिष्टयोरभेदबोधनरूपतृतीयपक्षे यथा साक्षादभेदो लभ्यते । नैवमाद्यद्वितीयपक्षयोः । तत्ताविशिष्टे इदंतावैशिष्ट्यस्य इदंताविशिष्टे तत्तावैशिष्ट्यस्य बोधनेत्वभेदोऽर्थादेव लभ्यते न साक्षादित्यर्थः । किमभेदस्य

(प्रकाशः)

साक्षाद्बोधनेन यदि परस्य भेदभ्रमनिरासायेदं वाक्यं स्यात् तर्ह्येव स साक्षाद्बोध्यः स्यात् न चैवं किंनाम पुरोवृत्तिनि एतद्देशकालविशिष्टस्तद्देशकालविशिष्टो न वेत्यभिप्रायेण कोयमिति पृष्टे सोयमिति वचनेन तत्ताद्यवैशिष्ट्यभ्रमो निवर्तत एवेति भावेनाह ।। पुरोवर्तिनीति ।। अयं स वा नवेति ।। अयम् एतद्देशकाल-विशिष्टः । स वा न वा तद्देशकालविशिष्टो न वेत्यर्थः । सोयमित्यत्र अयं स इत्युद्देश्यविधेयभावः । यदा तु सः अयं न वेत्यभिप्रायेण प्रश्नस्तदापीदं ताद्यवैशिष्ट्यभ्रमनिरासाय सोयमिति यथास्थित एव उद्देश्यविधेयभाव इति द्रष्टव्यम् । अस्तु वा साक्षाद्भेदभ्रमनिरासायैवेदं वाक्यं तर्हि प्रथमद्वितीय पक्षयोरभेदकधर्मस्यैवोक्त्या साक्षाद-भेदानुक्तेः कथं तद्भ्रमनिवृत्तिरित्यत आह ।। भेदभ्रम इति ।। अभेदकेति ।। तद्देशकालविशिष्टस्यैतद्देशकालवैशिष्ट्य रूपाभेदव्याप्यधर्मेत्यर्थः । किं चाभेदस्य बुभुत्सितत्वस्य साक्षादलाभ इति वदता अभेदस्य बुभुत्सितत्वं यद्यंगीक्रियते तर्ह्युत्तरत्र सोयमित्यत्रोभेदविशिष्टतयैवबोधनं कार्यम् अन्यथा तद्बुभुत्साऽनिवृत्तेः एवं चाभेदरूपसंसर्गपरत्वात्सुखण्डार्थत्वमेवेत्याह ।। अभेदस्येति ।। तृतीय इति ।। विशिष्टद्वयमनूद्याभेदमात्रबोधनपक्षे ।। विशेषणेति ।। तद्देशकालरूपविशेषणेत्यर्थः । अस्य तर्कस्य व्यभिचारमाशंक्य निराकरोति ।। न चेति ।। आपादकस्यैवाभावान्नव्यभिचार इत्याह ।। तत्रापीति ।। तथाच तत्र वैशिष्टैक्यमेव नास्तीत्यर्थः ।। दृष्टांता-भावादिनेति ।। यदि विशिष्टैक्यं स्यात् । तर्हि विशेषणैक्यं स्यादित्यापादनायोगः । धूमवदग्निमतोर्विशेष्यैक्यमात्रेण विशिष्टैक्याभावेन विशिष्टैक्योपेतस्थलस्यैवाभावादित्याशंक्य निराकरोति ।। नं चेति ।। दृष्टांतोस्तीत्याह ।। अग्निमत इति ।। विशिष्टैक्ये विशेषणैक्यं स्यादित्येवापाद्यते नतु विशिष्टद्वयैक्ये विशेषण द्वयैक्यं स्यादिति तत्रायं दृष्टांतः । अग्निमतोऽग्निमतैक्यंतावदस्ति स्वस्य स्वेनैक्यसद्भावात् विशेषणस्याप्येकत्वेन विशेषणैक्यमप्यस्त्येव प्रकृते तु विशिष्टद्वयमस्तीति तस्यैक्ये विशेषणद्वयस्याप्यैक्यापत्तिरिति भावः । किंच न विशिष्टैक्यबोधनं युक्तं विशिष्टं हि विशेषणादि समुदायात्मकं समुदायश्च समुदाय्यनतिरिक्तः एवं च समुदायिरूपविशेषण-योस्तत्तेदंतयोर्भिन्नत्वेन तदवच्छिन्नसमुदायरूपविशिष्टस्यापि भेद एव अतस्तदैक्यापादनं व्याहतमित्याह ।। समुदायीति ।। विवक्षितत्वादिति ।। यथा गामानयेत्यत्र गोत्वस्यानयनानन्वयेपि गोत्वं तद्व्यक्तौ न परित्यज्यते तदप्युद्देश्यतावच्छेदकत्वेन विवक्षितमेव । एवं विशिष्टस्य विशेष्याद्यनतिरिक्तत्वेन विशेष्यरूपविशिष्टैक्येपि न तद्विशेषणयोरैक्यान्वयः गोत्वस्यानयनेनेव । परं तु तत्तेदंतारूपविशेषणे न त्यज्येते उद्देश्यतावच्छेदकत्वेन विवक्षितत्वादित्यर्थः । तर्हि विशिष्टाभेदो न प्राप्त इति चेत्तत्राह ।। तस्यैवेति ।। उद्देश्यतावच्छेदकी-भूततत्तादियुक्तविशेष्याभेद एव विशिष्टाभेदशब्दार्थः न चैतावतोद्देश्यतावच्छेदकस्याप्यैक्यान्वयः तथा च विशेषणैक्यापादनं न युक्तमिति भावः । पदार्थांतरं विशेषणाद्यतिरिक्तम् ।। सामानाधिकरण्येति ।। धूमवत्त्वाग्नि-मत्त्वरूपभिन्नप्रवृत्तिनिमित्तकयोर्धूमवदग्निमच्छब्दयोरेकस्मिन्विशेष्ये वृत्तिरूपसामानाधिकरण्येत्यर्थः । तथाचा-वयोर्मते व्यभिचारापादनमयुक्तमिति भावः । विशेषणभेदस्य विशिष्टैक्यविरोधित्वे इदं रूप्यमित्यत्रापि इदं त्वरूप्यत्वविशेषणभेदसद्भावेन इदंत्वरूप्यत्वाधारयोरभेदाप्रतीत्याऽभेदग्रहरूपकारणाभावेन रूप्यार्थिनः पुरोवर्तिनि प्रवृत्तिरेव न स्यादित्याह ।। अन्यथेति ।। कुत इत्यत आह ।। तत्तेति ।। तथाच तत्तोपलक्षितत्वेदंतोपलक्षितत्व-रूपविशेषणभेदात्तद्विशिष्टयोरैक्यायोगेन तत्तेदंतोपलक्षितयोरभेदो बोध्यत इति त्वन्मतमयुक्तं स्यादित्यर्थः । एवं

(प्रकाशः)

सति पक्षत्रयेपि न दोष इति भावः । एवं प्रकारद्वयेन समाधानमुक्त्वा रामानुजीयरीत्यापि समाधानमाह ॥ अस्तु वेत्यादिना ॥ एतावतेति ॥ तत्कालसंबंधादेरुपलक्षणमात्रत्वेन विशेष्येऽबोधनादिति भावः । उपलक्षणस्यैव प्रकारत्वेन तद्बोधकतया वाक्यस्य निष्प्रकारकत्वरूपाखण्डार्थत्वाभाव इत्याह ॥ उपलक्षणस्येति ॥ प्रकारांतरं संस्थानविशेषरूपम् ॥ अन्यस्येति ॥ इदंताविशिष्टस्योपलक्षणीभूततत्काल संबंधादिबोधनेनेदंत्वस्यैव प्रकारस्य सत्वादित्यर्थः । ननु तत्तादेरुपलक्षणत्वे तद्वाचिनस्तत्तादिपदस्य लाक्षणिकत्वं स्यात् तयोरैक्यात् तथाच जघन्यवृत्त्या वाक्यार्थवर्णनमयुक्तमित्यत आह ॥ वृत्तीति ॥ पदवृत्तिविशेषेत्यर्थः । तथाच लक्षणायाः पदधर्मत्वादुपलक्षणत्वस्य चार्थगतत्वान्नतयोरैक्यमिति भावः । अर्थस्योपलक्षणत्वेपि शब्दस्य मुख्यत्वदर्शनाच्च न तयोरैक्यमित्याह ॥ दृश्यते हीति ॥ अभावः प्रागभावादिः भिन्नविभक्त्यंतपदवाच्यत्वाज्जटानामुपलक्षणत्वमिति ध्येयम् ॥ अलाक्षणिकत्वम् ॥ स्वार्थवाचकत्वमेवास्तीत्यर्थः । शब्दस्य लाक्षणिकत्वेप्यर्थस्य विशेषणत्वदर्शनाच्च न तयोरैक्यमित्याह ॥ दृश्यते चेति ॥ अनुपलक्षणत्वमिति ॥ दण्डे विशेषणताया एव सर्वैरङ्गीकारादिति भावः । उपलक्षणत्वलक्षणयोरैक्यमङ्गीकृत्य उपलक्षणपरपदे लक्षणामङ्गीकृत्याप्याह ॥ वरं चेति ॥ त्वया तत्तेदंताशब्दयोः उभयोरपि लाक्षणिकत्वमङ्गीकृतम् अतस्तल्लज्जाकरं मया तु इदंताविशिष्टस्य तत्तोपलक्षिताभेदाङ्गीकरेण एकस्य पदस्य मुख्यत्वमङ्गीकृत्यापरस्यैकस्यैव पदस्य लाक्षणिकत्वाङ्गीकारादिदमेव वरमित्यर्थः । किंचोपलक्षणस्य काकादेः कदाचित्स्वसंबद्धगृहं प्रत्युपलक्षकत्वं दृष्टम् इदंताविशिष्टे तत्ता उपलक्षणं चेत् कदाचिद्वा इदंताविशिष्टे तत्तासंबंधेन भाव्यं तत्ताविशिष्टे इदंता उपलक्षणं चेत्तत्ताविशिष्टे कदाचिद्वा इदंतासंबंधेन भाव्यं, न च तदस्तीत्यतो न तयोर्मध्य एकस्योपलक्षणत्वपक्षो युक्त इत्याशंक्य निराकरोति ॥ न चेति ॥ ते प्रतीति ॥ इदंताविशिष्टस्वरूपं तत्ताविशिष्टस्वरूपं च प्रतीत्यर्थः । तयोः इदंताविशिष्टतत्ताविशिष्टस्वरूपयोः । ताभ्यांतत्तेदंताभ्याम् ॥ विशेष्यद्वारेति ॥ विशिष्टयोर्भेदेपि इदंताविशिष्टे यद्विशेष्यं देवदत्तस्वरूपं तत्र तत्तासंबंधात् स्वविशेष्यसंबद्धत्वरूपम् इदंताविशिष्टस्य तत्तया सहसंबंधोस्त्येव । एवं तत्ताविशिष्टस्याप्युक्तरीत्या विशेष्यद्वारकपरं परासंबंधोस्त्येवेत्यर्थः । नन्वेवं तत्ताविशिष्टेदंताविशिष्टयोस्तत्तेदंताभ्यामुक्तरीत्या परंपरासंबंधेपि साक्षात् संबंधस्यैवोपलक्षणत्वे तंत्रत्वेनतस्यात्राभावात्कथमुपलक्षणत्वमित्यत आह ॥ परंपरेति ॥ उपलक्ष्यसंबंधित्व-मेवोपलक्षणस्यापेक्षितं न तु साक्षात् गौरवादित्यर्थः । अस्तु वेत्यादिना विशिष्टमुद्दिश्योपलक्षण-संबंधादिर्विधीयतामित्युक्तम् इदानीं तूपलक्षितमुद्दिश्य विशेषणसंबंधो विधीयतामतोपि न दोष इत्याह ॥ यद्वेति ॥ एतत्पक्षोपरि शंकते ॥ नन्विति ॥ विशेष्य इति ॥ इदंतोपलक्षिततत्तारूपविशेषणांतरान्वयात् तत्तोपलक्षिते वा इदंतारूपविशेषणांतरान्वयादित्यर्थः ॥ अभेदपक्षौत्विति ॥ इदंतोपलक्षितस्य तत्ताविशिष्टाभेदः तत्तोपलक्षितस्य इदंताविशिष्टाभेदः इत्यभेदपक्षावित्यर्थः । कुतो न युक्तावित्यत आह ॥ अनुवृत्तेति ॥ अनुगतेत्यर्थः । इदंतोपलक्षितस्यानुगतस्य विशेष्यमात्रस्य तत्ताविशिष्टेन व्यावृत्तेनाभेदो न संभवति एवं तत्तोपलक्षितस्य विशेष्यस्यानुगतस्य व्यावृत्तेनेदंताविशिष्टेनाभेदो न संभवतीत्यर्थः । अनुवृत्तव्यावृत्तयोरभेदायोगादित्ययुक्तं व्यावृत्ताग्निमत्त्वसत्वासत्वदशायां व्यावृत्तव्यक्तिसदसद्भाव दशायां व्यावृत्तघटसदसद्भावदशायामप्यनुगतानां पर्वत-जातिमृदां तैरभेददर्शनाद्व्यभिचार इत्यत आह ॥ अनुवृत्तेति ॥ ननु अग्निमद्व्यक्तिघटैः पर्वतादीनां नाभेदः

(प्रकाशः)

मयाऽयुतसिद्धिमङ्गीकृत्य समवायांगीकारेणाभेदाभावात् अग्निमानित्यत्राग्निसंयोगवानित्यर्थः । एवं च जातिव्यक्त्योरिव मृद्धटयोरिव च पर्वताग्निसंयोगयोरपि समवाय एव संबंधः एवं च न व्यभिचार इत्यत उक्तम् ।। समवायेति ।। यत्र त्वया समवायोङ्गीक्रियते तत्र मया भेदाभेदाङ्गीकारादित्यर्थः ।। अन्यथेति ।। विशेष्यस्य विशिष्टेनाभेदानङ्गीकारे पर्वतोऽग्निमानित्यत्र पर्वतेऽग्निसंसर्गः सिद्ध्यतीति सर्वसंमतं तन्न स्यात् विशेष्यस्य पर्वतस्य विशिष्टादग्निमतः सकाशाद्भेदांगीकारेलैंगिकी धीरनुमितिर्निर्विकल्पिका पर्वतस्याग्निसंसर्गाविषयिणी स्यादित्यर्थः । अत्र प्रसिद्धं संसर्गाविषयकत्वप्रयुक्तं निष्प्रकारकत्वरूपनिर्विकल्पकत्वं नापाद्यं किं नाम संसर्गाविषयकत्वमात्रमेव अन्यथा पर्वतोऽग्निमानित्यत्र पर्वतत्वाधारः पर्वतोऽग्निमानिति हि प्रतीयते तथाचात्र संसर्गाविषयकत्वेपि पर्वतत्वरूपप्रकारस्यैव प्रतीत्योक्तनिर्विकल्पकत्वापादनायोगादिति मन्तव्यं नन्विदंतोपलक्षिततत्ताविशिष्टयोर्भिन्नत्वात्तयोरभेदबोधनं न युक्तमित्यत आह ।। केवलेति ।। भेदवति अभेदबोधनाद्भिभ्यता तत्ताद्युपलक्षिते विशेष्ये देवदत्ते अभेदो बोध्यत इति कथमङ्गीकर्तुं शक्यं देवदत्तपिंडेपि भेदसद्भावादित्यर्थः । तदुपपादनायोक्तम् ।। परिणामिनीति ।। प्रतिक्षणं विकारवतीत्यर्थः । तत्र भेदसद्भावेप्यभेदबोधनं युक्तं मया भेदाभेदांगीकारेण केवलभेदानङ्गीकारादिति यदि ब्रूयात् तर्हि प्रकृतेपीदं समानम् इदंतोपलक्षिततत्ताविशिष्टयोरपि भेदाभेदाङ्गीकारेण केवलभेदानङ्गीकारादिति भावः । पूर्वमेकस्य विशेषणत्वमपरस्योपलक्षणत्वमित्यभिप्रेत्योपपादनं कृतम् इदानीं तूभयोरप्युपलक्षणत्वमभिप्रेतमित्याह ।। यद्वेति ।। ननु तत्तेदंतयोरुभयोरप्युपलक्षणत्वाङ्गीकारे विशेष्यमात्राभेदबोधनप्राप्त्याऽखण्डार्थत्वापत्तिरित्यत आह ।। न चेति ।। इत्युक्तमिति ।। तत्तोपलक्षितत्वादेरेव प्रकारत्वादिति भावः । स्वोत्प्रेक्षितमर्थं मूलारूढंकरोति ।। तदेतदिति ।। उक्तमिति ।। तत्वोद्योते भगवत्पादैरित्यर्थः ।। अनित्येति ।। अनित्याभ्याम् इदानीमविद्यमानाभ्यां देशकालाभ्यां स्वकाले यः संबंधः तद्देशकालोपलक्षितत्वादिरूपः तस्य देवदत्ते सत्वात्सोयं देवदत्त इत्यादिवाक्यं तत्वमस्यादिवाक्यस्याखण्डार्थतायाम् उपमा दृष्टान्तो न भवतीत्यर्थो द्रष्टव्यः ।। एवं चेति ।। तथाच तद्देशकालध्वंसविशिष्टे एतद्देशकालवैशिष्ट्यं बोध्यते तद्देशकालध्वंसरूपतत्ताया इदानीं सत्वेन विधेयान्वयित्वरूपविशेषणत्वस्यैव सत्वेनोक्तदोषाभावात् । तथा एतद्देशकालविशिष्टस्तद्देशकालध्वंसविशिष्टः तद्देशकालध्वंसविशिष्ट एतद्देशकालविशिष्टश्चाभिन्न इत्येवं पक्षत्रयांगीकारोपि नदोष इत्यर्थः ।। वस्तुस्थितीति ।। वस्तुगत्या तद्देशकालध्वंस एव तत्तेति स्वमते वस्तुस्थितिप्रदर्शनार्थमेवोक्तं न तु सोयमिति वाक्यस्य सखण्डार्थत्वायेत्यर्थः ।। सामानाधिकरण्यमात्रमिति ।। दैशिकं सामानाधिकरण्यमित्यर्थः ।। समानकालिकत्वमिति ।। इदं तायास्तद्देशकालध्वंसस्य च कालिकमपि सामानाधिकरण्यमिति प्रदर्शनार्थं चेत्यर्थः । तर्हि सोयमिति वाक्यस्य कथं सखण्डार्थत्वमुपपादनीयमित्यत आह ।। उक्तरीत्येति ।। अस्मदुक्तपक्षत्रयेणेत्यर्थः ।। तद्देशेति ।। मधुरासंबंधः काशीसंबंधः अष्टमीसंबंधः पौर्णमासीसंबंधः इत्यादिपरोदाहृतवाक्यम् । एतेन तद्देशकालसंबंधः एतद्देशकालसंबंध इत्यत्रापि तत्तेदंतयोः प्रवेशात्कथंटीकोक्तप्रकाराप्रसरोक्तिरिति शंकानवकाशः । अत्रत्ययोस्तदेतत्पदयोर्देशकालविशेषार्थत्वादिति ध्येयम् । अयमर्थः परेण तत्वमस्यादि वाक्यस्याखण्डार्थत्वे सोयमित्येवं तत्तेदंते विहाय मधुरासंबंध इत्याद्युदाहृतं तत्र मधुरादेशसंबंधे काशीसंबंधबोधने मधुराया अपि काशीसंबंधापत्तिः एवं वैपरीत्येनापि द्रष्टव्यम् एवमष्टमीकालसंबंधस्य पौर्णमासीकालसंबंधबोधने अष्टमीकालस्यापि पौर्णमासीकाल-

(प्रकाशः)

संबंधापत्तिः अतो लक्षणया विशेष्यैक्यमात्रपरत्वमेवेति परेणोदाहृतमस्ति तत्रास्मदुक्तप्रकारः संभवति । मधुराष्टमीरूपदेशकालोपलक्षिते काशीपौर्णमासीरूपतेशकालसंबंधेन उपलक्षणादिरूपप्रकारयुक्तत्वेन सखंडार्थत्व-मुपपद्यते अत्र च तत्तादेरनुप्रवेशाभावेन तद्देशकालध्वंसमादायोपपादनाप्रसारादिति ध्येयं । अस्त्वेवं तत्वोद्यो-तटीकावस्तुस्थितिकथनपरेति तत्र तत्ता नाम किं भवदुक्तरीत्या अनुभवकालसंबंधः उत अनुभवकालध्वंस इति चिंतायां टीकोक्तमेव तत्तास्वरूपं साध्वित्याह ॥ युक्तं चेति ॥ अन्यथेति ॥ अनुभवकालसंबंधस्यैव तत्तात्व इत्यर्थः ॥ पूर्वकालेति ॥ पूर्वकालस्य वस्तुविषयेऽनुभवेपीत्यर्थः ॥ स्यादिति ॥ अनुभवकालसंबंधरूपतत्तायाः सत्वादित्यर्थः । ननु स्मृतेः संस्कारजन्यत्वात्तत्तोल्लेखित्वं । अनुभवस्य तदजन्यत्वात्तत्तानुल्लेखित्वमिति कारण-कृतवैषम्यस्यापि सत्वातित्यत आह ॥ स्मृत्यनुभवयोरिति ॥ सतः विद्यमानस्य ॥ विषयकृतेति ॥ अर्थविष-यीकरणकृतवैषम्याभावादित्यर्थः । यद्यपिस्मृत्यनुभवयोः कारणकृतवैषम्यमस्ति तथाप्यनुभवकाले विद्यमानकालस्य स्मृतिकाले वस्तुगत्याऽतीतत्वेपि तत्रातीतत्वं स्मृतौ त्वन्मत न भासते अतीतत्वस्य तत्ताशब्दार्थत्वाभावात् प्रत्युत सघट इति स्मृतौ त्वन्मतेऽनुभवकालसंबंध एव प्रतीयते स चानुभवे प्यस्तीति स्मृत्यनुभवयोरर्थविषयीकारित्वांशे वैषम्याभावेन स्मृताविवानुभवेपि तत्तोल्लेखः स्यादेवेति भावः । नन्वनुभवकालध्वंसस्तत्तेति मते यद्यपि न स्मृताविवानुभवेपि तत्तोल्लेखस्तथापि स्मृतौ तत्ताभानं न संभवति अननुभूतत्वात् तन्मते चानुभवकालसंबंधस्यैव तत्तात्वात्तस्य च वस्तुगत्याऽतीतत्वस्याभानादनुभवविषयीकृतपूर्वकालसंबंधरूपतत्ताविषयकत्वं स्मृतेर्युक्तमित्यत आह ॥ तत्तामात्रेचेति ॥ अतिप्रसंग इति ॥ घटस्मृतौ न तावत्तत्तैव विषयः अपि तु पटोपि विषयः स्यात् अननुभूतत्वाविशेषादित्यतिप्रसंग इत्यर्थः ॥ अनुभवेति ॥ अननुभूतोप्यनुभवकालध्वंस एव प्रतीयते नान्यः कुतः अनुभवकालध्वंसत्वादेव । न च घटकालोपि प्रतीयतामिति वाच्यं स्मृतिविषयकानुभवरूपाऽनुव्यवसायेन स्मृतौ अनुभूतकालध्वंसस्याननुभूतस्यापि विषयीकरणेनाननुभूतैतावन्मात्रविषयकत्वस्येष्टत्वादिति भावः ॥ पूर्वकालेति ॥ अनुभवकालेत्यर्थः । कुतो वक्तव्यमित्यत आह ॥ तत्रेति ॥ उल्लेखादिति ॥ तथाचैतन्मते भूतत्वविषयकत्वमिव अनुभवकालध्वंसस्तत्तेति मतेपि स्मृतेरननुभूतविषयैकत्वमिष्टमेवेत्यर्थः ॥ पूर्वकालेति ॥ पूर्वघटिकाध्वंसविशिष्टो देवदत्तो मध्ये या द्वितीयघटिका तस्यामस्ति । तृतीयघटिकाख्यैतत्कालसंबंधरूपेदंताविशिष्टस्तु मध्ये नास्तीति कथं तयोरभेद इत्यर्थः । तयोः तत्तेदंताविशिष्टयोः । तत्प्रागभावः एतत्कालसंबंधप्रागभावः । इदानीं सत्वेपि तृतीयघटिकायां सत्वेपीत्यर्थः ॥ एतत्कालेति ॥ तृतीयघटिकाप्रागभावविशिष्टस्य तृतीयघटिकायामभावादित्यर्थः ॥ अनुवृत्तेति ॥ पूर्वकालध्वंसविशिष्टस्यानुवृत्तत्वेपि इदंताविशिष्टस्य व्यावृत्तस्य मध्येऽभावेपि व्यावृत्तानुवृत्तयोरैक्यं मृद्घट इत्यादावस्त्येव । अथवा पूर्वकालध्वंसविशिष्टेदंताविशिष्टयोर्नैक्यं किंनाम विशेष्यमात्रैक्यमेव । तच्च मध्येप्यस्ति । न च विशेषणयोः त्यागादखण्डार्थत्वमिति वाच्यं विशेष्यमात्रैक्येपि उद्देश्यतावच्छेदकत्वेन तत्तादेर्विशेषणत्वस्य समर्थितत्वादित्यर्थः । न चायमिति प्रागभाव इति टीकाकारैरुक्तत्वेन पूर्वकालध्वंस-विशिष्टस्येदानीं सत्वेप्येतत्कालप्रागभावविशिष्टस्येदानीमभावात्कथमिति वाच्यम् । यथाहि प्रध्वंसो हि तथोच्यत इति तत्ताया अनुभवकालध्वंसरूपत्वमङ्गीकृत्य उक्तपक्षत्रयेपि दोषाभावोपपादनम् एवम् अयमिति प्रागभाव इत्येवमिदंत्वस्यापि एतत्कालसंबंधप्रागभावरूपत्वमङ्गीकृत्यापि पक्षत्रये दोषाभावादित्याशयात् । इदंताया

(प्रकाशः)
एतद्देशकालप्रागभावरूपत्वविवक्षायां तत्ताया ध्वंसरूपत्वं न विवक्षितं किंनामानुभवकालसंबंधरूपत्वमेव । एवं तत्ताया ध्वंसरूपत्वविवक्षायाम् इदंत्वम् एतत्कालप्रागभावरूपत्वेन न विवक्षितं । तथाच तत्ताया ध्वंसरूपत्वमङ्गीकृत्य पूर्वकालध्वंसविशिष्टस्य इदानीं सत्वाभिप्राये इदंत्वं नामैतत्कालसंबंधरूपत्वेन विवक्षितमिति न दोष इति ध्येयम् । एवं स्वमते बाधकमुद्धृत्य परपक्षे बाधकमाह ।। किंचेत्यादिना ।। तात्पर्यं लक्षणयेति शेषः ।। उक्ताभेदेति ।। तत्तेदंतोपलक्षिताभेदोपलक्षित इत्यर्थः । तस्य देवदत्तस्वरूपमात्रस्य । अन्यथा देवदत्तस्वरूपमात्रस्यासिद्धत्वे ।। अनुवादेति ।। नह्यज्ञातमनुवादार्हमिति भावः ।। भेदभ्रमेति ।। अधिष्ठानज्ञानाभावादिति भावः । अभेदबोधनमनङ्गीकृत्य स्वरूपमात्रबोधनाङ्गीकारे बाधकमाह ।। अभेदेति एकेनैवेति ।। सोयमित्यत्रेति शेषः ।। पूर्णत्वेनेति ।। स्वरूपमात्रबोधनस्येति शेषः । ननु न पदान्तरवैयर्थ्यं वाक्यस्थपदस्यैव लक्षकत्वाङ्गीकारात् अत एकपदस्य लक्षकत्वाङ्गीकारे तस्य वाक्यस्थत्वाभावेन तदर्थं सोयमिति पदद्वयं ततश्च लक्षकत्वसिद्धिरित्याशङ्क्य निराकरोति ।। न चेति ।। देवदत्तपदेनैवेति ।। सोयमित्यत्रत्यान्यतरपद सहितेनेति शेषः । तथाच स देवदत्त इति वा अयं देवदत्त इति वा पूर्णत्वेन वाक्यत्वसिद्ध्या लाक्षणिकत्वसिद्धौ तृतीयं पदं व्यर्थमिति भावः । तथाचानभिमततृतीयपदव्यावृत्त्यर्थोऽत्रैवकार इत्युक्तं भवति । एवकारस्यानभिमतव्यावृत्त्यर्थत्वं च नरं च नारायणमेव चादा''वित्यत्र प्रसिद्धमिति संप्रदायविदः । ननु न पदांतरवैयर्थ्यं विरुद्धाकारवाचिपदद्वयसामानाधिकरण्याधीनत्वाल्लक्षणायाः तथाचायं देवदत्त इति वा स देवदत्त इति वा उक्तौ विरुद्धाकारप्रतिपादकपदद्वयसामानाधिकरण्यासिद्ध्या लक्षकत्वानुपपत्तेस्तदर्थं सोयमिति पदद्वयं सार्थकमिति चेत्तत्राह ।। स एवेति ।। यः पूर्वं कुण्डली स एवायं देवदत्त इति वाक्ये सोयमितिपदद्वयेनैव विरुद्धाकारप्रतिपादकपदद्वयसामानाधिकरण्यसिद्ध्या लक्षकत्वोपपत्तौ कुण्डल्यादिपदवैयर्थ्यमित्यर्थः ।। समानेति ।। सोयमितितदिदंपदाभ्यामित्यर्थः । अभेदरूपसंसर्गस्यापि प्रातिपदिकार्थत्वान्नतद्बोधनेऽखण्डार्थत्वहानिरित्यत उक्तं प्रातिपदिकार्थेतरेति । नन्वभेदरूपसंसर्गबोधकत्वेपि नाखण्डार्थत्वहानिः गामानयेत्यादाविव क्रियाकारकभावान्वय एव संसर्गस्तद्बोधकस्यैव सखण्डार्थत्वमित्यङ्गीकारेणाभेदरूप- संसर्गस्यातथात्वान्नाखण्डार्थत्वहानिरित्यत आह ।। न हीति ।। क्रियाकारकभावरूपान्वय इत्यर्थः ।। इत्यादेरपीति ।। क्रियाकारकभावरूपान्वयाप्रतिपादकत्वादित्यर्थः । ननु भावभेदाभावमात्रेणाखण्डार्थत्वं विवक्षितं नीलमुत्पलमित्यादौ तु नीलत्वोत्पलत्वरूपभावरूपधर्मभेदात् निर्घटमित्यादौ तु घटध्वंसपटान्योन्याभावसंसर्गप्रतिपादनेपि घटत्वभूतलत्वघटत्वपटत्वरूपभावपदार्थसंसर्गस्यापि भानात्सखण्डार्थत्वं । सोयमित्यत्र तु अभेदसंसर्गस्य भानेपि अखण्डार्थत्वमेव । भावांशे देवदत्तस्वरूपे भेदरूपसंसर्गाबोधनादित्याशङ्क्य निराकरोति ।। न चेति ।। एवं वदता त्वया स्वोचितप्रातिपदिकार्थव्यतिरिक्ताभेदरूपसंसर्गगोचरत्वेपि तदितरस्य भावांशे भेदरूपसंसर्गस्याबोधकत्वेनाखण्डार्थत्वं तथा स्वोचितप्रातिपदिकार्थव्यतिरिक्ताभेदरूपसंसर्गगोचरत्वेपि तदितरक्रियाकारकभावरूपसंसर्गाप्रतिपादनादखण्डार्थत्वमित्युक्तं भवति । तथाच स्वोचितसंसर्गान्यसंसर्गाबोधकत्वमखण्डार्थत्वमिति पर्यवसितं स्यात् । ॐमिति चेत्तर्हि नीलमुत्पलमित्यादावपि स्वोचितो यो नीलोत्पलत्वादिसंसर्गस्तदन्यो यः संसर्गो गोकर्मकानयनक्रियाकारकादिसमस्तसंसर्गस्तद्बोधकत्वसद्भावादखण्डार्थत्वापात इत्याह ।। स्वोचितेति ।। तृतीये

(प्रकाशः)

दोषांतरमाह ॥ उपलक्षणेनेति ॥ तत्तेदंताभ्यामुपलक्ष्यं यद्देवदत्तस्वरूपं तस्य योऽभेदस्तेनोपलक्षणीयं यद्देवदत्तस्वरूपं तस्याभेदरूपादुपलक्षणात्पूर्वमेव निश्चितत्वेन तत्सिद्ध्यर्थमभेदरूपोपलक्षणापेक्षाया अभावेन तस्योपलक्षणत्वायोगाच्चेत्यर्थः । ननु देवदत्तस्वरूपमात्रस्योपलक्षणात्प्राक्सिद्धत्वेपि अभिन्नस्वरूपस्यासिद्धत्वात्तत्सिद्ध्यर्थमुपलक्षणापेक्षेत्यत आह ॥ देवदत्तेति ॥ देवदत्तेनाभिन्नं यद्देवदत्तस्वरूपं तस्यापि प्रत्यक्षत एव सिद्धत्वादित्यर्थः । वस्तुतोऽभिन्नदेवदत्तस्वरूपस्य सिद्धावपि तस्मादभिन्नत्वमसिद्धमित्यत आह ॥ तस्मादिति ॥ तत्ताविशिष्टात्तत्तोपलक्षिताद्वाऽभेदो न सिद्ध इति तस्मादभेद एव वाक्येन बोधनीयः तथाच सखण्डार्थत्वमित्यर्थः। द्वितीये दोषान्तरमाह ॥ उक्तरीत्येति ॥ काकादेरुपलक्ष्ये गृहे संस्थानरूपाकारविशेषोपस्थापकत्वेनोपलक्षकत्वं दृष्टं प्रकृते च तत्तादिनोपलक्षित आकारविशेषः स्वरूपमात्रे नास्ति तथात्वे सखण्डार्थत्वापत्तेः । अत उपलक्षणत्वायोग इत्यर्थः ॥ दत्तोत्तरत्वादिति ॥ तच्छब्देन विवक्षितात्स्वरूपमात्रादभेदो न सिद्ध इति स्वरूपमात्राभेद एव बोध्यत इति वक्तव्यं तदयुक्तं देवदत्ते देवदत्ताभेदस्य प्रत्यक्षसिद्धत्वेनानुपदेश्यत्वादिति दत्तोत्तरत्वादित्यर्थः । स्वरूपाभेदस्य सिद्धत्वादित्यर्थः । सङ्गृह्णाति ॥ एवं चेति ॥ किं च सोयमिति शाब्दप्रत्यभिज्ञायाः प्रत्यक्षप्रत्यभिज्ञासमानविषयकत्वात्प्रत्यक्षप्रत्यभिज्ञायाश्च सप्रकारकत्वेन सखण्डार्थत्वाच्छाब्दप्रत्यभिज्ञाया अपि तथात्वं स्वप्रत्यभिज्ञावगतस्यैव परंप्रति वाक्येन बोधनादित्याह ॥ अपि चेति ॥ नाखण्डार्थेति ॥ लक्षणयाखण्डार्थविषयेत्यर्थः । कुतो नेत्यत आह ॥ तत्रेति ॥ प्रत्यक्ष इत्यर्थः ॥ अनुभवादिति ॥ तत्वेनेदंत्वेन तदभेदेन च देवदत्तप्रत्यभिज्ञानमिति प्रत्यभिज्ञानुव्यवसाये तृतीयार्थोल्लेखात् प्रत्यभिज्ञायास्तत्तादिप्रकारकत्वमवसीयत इत्यर्थः ॥ तदनुल्लेख इति ॥ तत्ताविशिष्टाभेदरूपप्रकारानुल्लेखेऽयमित्येव प्रत्यभिज्ञाकारापत्त्या अयमित्यभिज्ञातो भेदो न स्यात् अधिकविषयकत्वाभावादित्यर्थः । ततः किमित्यत आह ॥ तथाचेति ॥ ननु प्रत्यक्षप्रत्यभिज्ञायाः सप्रकारकत्वे शाब्दप्रत्यभिज्ञाया अपि तथात्वं कुत इत्यत आह ॥ स्वेति ॥ स्वप्रत्यक्षप्रत्यभिज्ञेत्यर्थः ॥ परं प्रतीति ॥ वाक्येनेति शेषः । सोयमित्यादिवाक्यस्याखण्डार्थत्वाभावोपपादनेन सिद्धं साध्यवैकल्यमुपसंहरति ॥ तस्मादिति ॥ किंच त्वन्मते सोयं देवदत्त इत्यादिवाक्यस्येत्यादिनोक्तं प्रमेयं दार्ष्टान्तिके तत्वमस्यादिवाक्येप्यतिदिशति ॥ किंचेत्यादिना ॥तत्वमसिवाक्यस्याभेदविशिष्टे तात्पर्यं तदुपलक्षिते वा । केवलचिन्मात्राभेदे वा सार्वज्ञाद्युपलक्षिताभेदे वा चैतन्यमात्रे वा । नाद्यद्वितीयावित्याह ॥ तत्वमसीत्यस्येति ॥ उक्तरीत्येति ॥ अभेदाबोधने भेदारोपनिवृत्त्ययोगादित्यर्थः । न तृतीय इत्याह ॥ किंचेति ॥ इष्टापत्तिरिति ॥ चिन्मात्रस्य चिन्मात्रेणाभेदस्यास्माकमपि इष्टत्वात् अभेदरूपसंसर्गबोधनेन सखण्डार्थत्वाच्चेत्यर्थः ॥ अप्रसक्तेति ॥ चिन्मात्रस्वरूपे भेदस्याप्रसक्तत्वादित्यर्थः । उक्तदूषणपरिहारायाह ॥ तत्पदादीति ॥ कुत इत्यत आह ॥ सार्वज्ञादेरिति ॥ सार्वज्ञाद्युपलक्षितत्वस्येत्यर्थः । न चतुर्थ इत्याह ॥ चैतन्येति ॥ चिन्मात्रेणाभेदादिबोधने न तात्पर्यं तत्वमसिवाक्यस्य किं नाम केवलचैतन्यमात्रपरत्वमेवोच्यते चेदित्यर्थः । उपदेशस्तत्वमसीत्यादिः । चैतन्यमात्रपरत्वे दूषणकथनायोत्तरो ग्रन्थः । वाक्यात् चैतन्यमात्रबोधकतत्वमसिवाक्यात् । उक्तरीत्येत्युक्तमेव दर्शयति ॥ तस्या इति ॥ अधिकेति ॥ चैतन्यमात्रातिरिक्ताधिकबोधने तु सखण्डार्थत्वमिति भावः । महावाक्यस्य तत्वमसीत्यस्य । अवान्तरवाक्येन सत्यज्ञानादिवाक्येन । कुतो गतार्थत्वमित्यतो लक्षणया

(प्रकाशः)

शुद्धचैतन्यमात्रबोधकत्वादुभयोरित्याह ॥ तत्पदार्थेति ॥ सार्वज्ञादिवाक्यं मिथ्याभूतसार्वज्ञादिप्रतिपादनपरत्वेनैक्य बोधनविरोधित्वान्न शुद्धब्रह्मप्रतिपादकं सत्यादिवाक्यं तु सत्यादिरूपशुद्धब्रह्मस्वरूपमात्रप्रतिपादकं नाभेदबोधन-विरोधीति तत्पदार्थशोधकमित्युच्यते । एवं जीवे दुःखित्वादिप्रतिपादकवाक्यम् ऐक्यबोधनविरोधि योयमित्यादिकं तु विज्ञानादिरूपस्वरूपमात्रप्रतिपादकं तदविरोधीति त्वंपदार्थशोधकमित्युच्यते इत्यर्थः । ननु भेद भ्रमनिरासाय तत्वमसीति महावाक्येऽनेकपदाभावे एकपदजन्यज्ञानेन कथं भेदभ्रमनिवृत्तिरिति शंकते ॥ कथमिति ॥ अधिकार्थबोधनाद्वाक्येन भेदभ्रमनिवृत्तिर्भविष्यतीत्यत उक्तम् ॥ अधिकार्थाबोधन इति ॥ तद्बोधने तु न चैतन्यमात्रपरत्वं सखण्डार्थत्वापत्तेरिति भावः । ननु महावाक्ये न पदानांवैयर्थ्यं तस्यादृष्टद्वारा भेदभ्रमनिवर्त-कत्वात् अदृष्टस्य चैकपदजन्यज्ञानेनानुत्पत्तेरित्यत आह ॥ न हीति ॥ अप्रामाणिकत्वादिति भावः । ननु वाक्यस्य पदानां यद्यपि लक्षणया चिन्मात्र एव तात्पर्यं नत्वभेदे तर्हि भेदभ्रमनिवृत्तिर्न स्यादिति चेत् तात्पर्याविषयीभूताभेदबोधनेनापि भवतीति वदाम इत्यत आह ॥ न चेति ॥ अतिप्रसंगादिति ॥ ''यजमानः प्रस्तर'' इत्यादिवाक्यानामपि गौणीवृत्त्या तत्सिद्ध्यादावेव तात्पर्येण यजमानप्रस्तरयोरभेदतात्पर्या-भावादतात्पर्यविषयेणाप्यभेदेन तदुभयभेदनिवृत्तिः स्यादिति भावः । ननु महावाक्ये अधिकबोधनार्थं नानेकपदानि किंत्वेकस्य पदस्य सहायार्थमित्यत आह ॥ न चेति ॥ पदान्तरप्रयोगे कथमेकस्य पदस्य लाक्षणिकत्वसिद्धिरित्यत आह ॥ तत्वमिति ॥ अनेन महावाक्येनैक्यं न बोध्यते किंतु चैतन्यस्वरूपमेव बोध्यत इत्युच्यते तत्र सहायांतरानपेक्षचैतन्यपदप्रक्षेपेणैव विवक्षितशुद्धचैतन्यस्वरूपसिद्धौ विरुद्धार्थवाचिपदद्वयसामानाधिकरण्याधीनत्वं लक्षणायाः प्रकल्प्य तत्त्वमिति पदद्वयेन लक्षणया शुद्धचैतन्यबोधनमित्यादि क्लेशो नानुसर्तव्य इत्याह ॥ चैतन्येति ॥ एकस्य पदस्य सहायार्थमेव पदान्तरं न तु स्वार्थार्पणायेत्यङ्गीकारे दूषणमाह ॥ गङ्गायामिति ॥ अभेदेति ॥ यदन्यथानुपपत्त्या यत्कल्प्यते तस्य तदुपपादकत्वमिति रात्रिभोजनादौ दृष्टत्वात् प्रकृते सार्वज्ञदुःखाद्युपे-तयोरन्वयरूपमुख्यार्थबोधकत्वेन निर्णीतस्य तत् त्वमिति पदद्वयसामानाधिकरण्यस्याऽन्यथानुपपत्त्या कल्प्यमाना शुद्धचैतन्यलक्षणा मुख्यार्थबाधे सति चैतन्यस्य चैतन्येनाभेदरूपामुख्यान्वयमादाय पदद्वयसामानाधि-करण्यमुपपादयतीति वक्तव्यं न ह्येवं त्वयाङ्गीकृतं चैतन्यमात्रबोधकत्वाङ्गीकारेणाभेदरूपसंसर्गबोधकत्वानङ्गीकारात् तथात्वे सखण्डार्थत्वापत्तेः तथाच पदद्वयसामानाधिकरण्यस्य लक्षणाकल्पकत्वमेव न संभवतीत्यर्थः । एकस्मि-न्नपि पदे लक्षणाया एवायोगेन तदर्थं पदान्तरमर्थवदित्याह ॥ सदेवेति ॥ तस्यापि लक्षणया चिन्मात्रे तात्पर्यादित्यर्थः ॥ तत्पदेनेति ॥ चिन्मात्रं यदि न बुद्धिस्थं तर्हि लक्ष्यार्थज्ञानाभावादेवालक्षणा यदि बुद्धिस्थं तर्हि तदितिपदेन शक्त्यैव तत्प्रतिपादनमस्तु न लक्षणया । सर्वनाम्नां बुद्धिस्थतया प्रकृतार्थबोधने शक्तत्वादिति भावः । लक्षणाया विरुद्धार्थवाचिपदद्वयसामानाधिकरण्याधीनत्वात् । एकपदस्य लाक्षणिकत्वाय पदांतरमित्युक्ते दृष्टान्ते सोयमिति वाक्ये स एव कुण्डल्ययं देवदत्त इत्यादौ सोयमिति पदद्वयेनैव लक्षणासिद्धौ पदान्तरवैयर्थ्यमिति दूषणमुक्तं तदेतदत्रापि सममित्याह ॥ स वा इति ॥ इदमपि वाक्यं स आत्मा जीव इत्यभेदबोधने तत्वमसीति महावाक्यतुल्यं तत्र स आत्मेति विरुद्धार्थवाचिपदद्वयसामानाधिकरण्येनैव चैतन्यलक्षणायाः सिद्ध्या ''एष महानज'' इति पदांतराणां वैयर्थ्याच्चेत्यर्थः । किंच लक्षणैव नाङ्गीकार्या सार्वज्ञदुःखादिविशिष्टयोस्तत्त्वं

(प्रकाशः)

पदवाच्यार्थयोरेव तत्वमसीति वाक्येनाभेदो बोध्यत इत्यस्तु । न च भेदग्राहिप्रत्यक्षविरोधः तत्वावेदकाद्वैत-वाक्यविरोधित्वेन भेदग्राहिप्रत्यक्षस्यातत्वावेदकत्वोपपत्तेः ''नेह नाने''ति जगन्मिथ्यात्वश्रुतेः सन्घट इत्यादि-प्रत्यक्षबाधेऽभिहिते तत्वावेदकश्रुतिविरोधेन प्रत्यक्षस्यातत्वावेदकतायास्त्वयैवोच्यमानत्वेन तद्रीत्याऽत्राप्युपपत्तेरि-त्याह ॥ वाच्यार्थेति ॥ एतेनेत्युक्तं विशदयति ॥ अन्वयेति ॥ एकस्यैव पदस्य लक्षकत्वेऽन्वयानुपपत्ति-रूपलक्षणाबीजाभावेन तदर्थमेव वाक्यस्थत्वमपेक्षितं तच्च स वा एष महानज आत्मे तिमहावाक्ये स आत्मेति पदद्वयेनैव भविष्यतीति पदान्तरोपादानं व्यर्थमिति भावः । किंच तत्वमसिवाक्येपि त्वमसीत्युक्तेपि वाक्यस्थत्वसिद्ध्या लक्षणोपपत्तौ तत्पदवैयर्थ्यमित्याह ॥ त्वमसीति ॥ यदुक्तं चैतन्यमात्रबोधकत्वेन महावाक्यस्यावान्तरवाक्येन गतार्थत्वं च स्यादिति तदयुक्तं चैतन्यमात्रबोधकत्वेन प्रमेयतो विशेषाभावेपि फलतो विशेषोस्ति तथाहि यथा सोयं देवदत्त इति प्रत्यक्षप्रत्यभिज्ञायाः शाब्द्या वाऽयंदेवदत्त इत्यभिज्ञायाः प्रमेयतो न विशेषोस्ति प्रत्यभिज्ञाविषयस्य देवदत्तैक्यस्याऽभिज्ञायां प्रतीयमानत्वात् न ह्यभिज्ञायां स्वस्य स्वेनैक्यं भाति । न वाऽभिज्ञयाऽविषयीकृतं प्रत्यभिज्ञया विषयीक्रियमाणं देवदत्तस्य स्वेनैक्यांतरमस्तियेन प्रमेयतो विशेषः स्यात् । नन्वेकस्य कालद्वयसंबंधोऽभिज्ञयाऽविषयीकृतः प्रत्यभिज्ञया विषयीक्रियते अयं देवदत्त इति अभिज्ञया देवदत्तैक्यस्य विषयीकरणेपि न कालद्वयसंबंधो विषयीक्रियते एककालसंबंधस्यैव विषयीकरणादिति चेत् न एकस्मिन्नेव देवदत्ते कालभेदेनोत्पन्नाभ्याम् अयं देवदत्त अयं देवदत्त इत्यभिज्ञाभ्याम् ऐक्यस्य देवदत्ते कालद्वयसंबंधस्य च सिद्धेः । तथाच प्रत्यभिज्ञायां स इत्यस्याप्ययमित्येवार्थः अतोऽभिज्ञाप्रत्यभिज्ञयोः कालद्वय-संबंधिपदार्थैक्यविषयकत्वेन प्रमेयतो न विशेषः तथापि फलतो विशेषोऽस्ति प्रत्यभिज्ञाया भेदभ्रमनिवर्तकत्वात् अभिज्ञायास्तदभावात् । ननु प्रमेयतो विशेषाभावे भेदभ्रमानिवर्तकत्वमेव प्रत्यभिज्ञायाः कुत इति चेन्न प्रत्यभिज्ञाया अभिज्ञाभ्यां प्रमेयतो विशेषाभावेपि देवदत्ते कालद्वयसंबंधावगाहित्वम् एकस्यैव प्रत्यभिज्ञा-रूपज्ञानस्यास्ति अभिज्ञयोस्तु द्वयोः कालद्वयसंबंधावगाहित्वम् अतो भेदभ्रमनिवर्तकत्वम् । एवं तत्वमसिवाक्यस्य 'सत्यं ज्ञानं' 'यः सर्वज्ञः' 'स सुखी' त्याद्यवान्तरवाक्यात् महावाक्यस्थपदानाम् अवान्तरवाक्यस्थपदाच्च न प्रमेयतो विशेषः सर्वेषामपि लक्षणया चैतन्यमात्रबोधकत्वात् तथापि सार्वज्ञदुःखाद्युपलक्षितचैतन्ययोर्वस्तुतो भेदेपि विशकलितं यत्सार्वज्ञदुःखाद्युपलक्षितचैतन्यरूपतत्त्वं पदार्थबोधकं वाक्यं तज्जन्यज्ञानस्य न भेदभ्रमनिवर्तकत्वं किन्तु तत्त्वमसीति महावाक्यजन्यज्ञानस्यैव । कुतः? एकस्यैव तस्य ज्ञानस्य उपलक्षणीभूतसार्वज्ञदुःखादि-रूपधर्मद्वयपरामर्शेन चैतन्यैक्यावगाहित्वात् । अतःपलतो विशेषसद्भावान्नमहावाक्यस्यावान्तर वाक्येन गतार्थत्व-मिति विवरणोक्तमप्येतेनैव निरस्तमित्याह ॥ एतेन यदुक्तं विवरण इत्यादिना ॥ उक्तरीत्या स्पष्टोऽर्थः । द्वयोः अभिज्ञाप्रत्यभिज्ञयोः अविशिष्टेपि समानेपि । प्रत्यभिज्ञायाः । एकस्या एवेति शेषः ॥ परामर्शित्वेनेति ॥ कालद्वयसंबंधावगाहित्वेनेत्यर्थः । नन्वभिज्ञावगतमात्रबोधकत्वेन प्रत्यभिज्ञाया अनधिगतार्थगंतृत्वरूपप्रामाण्यं न स्यादित्यत आह ॥ तत एवेति ॥ अर्थवादवाक्यवदनधिगतार्थत्वाभावेपि सप्रयोजनत्वात् प्रामाण्यमित्यर्थः ॥ तत्त्वमसिवाक्यस्येति ॥ तत्त्वमसिवाक्यजन्यस्यैकस्यैव ज्ञानस्येत्यर्थः ॥ धर्मद्वयपरामर्शित्वेनेति ॥ तत्त्वंपदाभ्याम् उपलक्षणभूतसार्वज्ञदुःखादिपरामर्शेन असीतितदुपलक्षितचैतन्यैक्यावगाहित्वादित्यर्थः । इदं च विशकलिततत्त्वं

(प्रकाशः)

पदार्थबोधकवाक्यजन्यज्ञानयोरपि समम् । तत्रापि वाक्ये सार्वज्ञदुःखाद्युपलक्षितचैतन्ययोः प्रतिपादनात् तयोरैक्यस्यापि सत्वादिति न प्रमेयतो विशेष इत्याशयः । (भामत्या) स्वोक्तार्थे संमतित्वेनोदाहृतं वाक्यं स्वोक्तार्थे संमतित्वेनाह विवरणकारः ॥ उक्तंहीति ॥ सिद्धम् अवान्तरवाक्यमहावाक्ययोरगतार्थत्वं सिद्धं प्रमेयतो विशेषाभावेपि फलतो विशेषसद्भावादित्याशयेनोक्तम् ॥ निवर्तकत्वादिति ॥ भेदभ्रमनिवर्तकत्वादित्यर्थः । अभिज्ञाभ्यां प्रत्यभिज्ञायाः प्रमेयत एव भेदोस्तीत्याशयेनोक्तम् । एतेनेत्युक्तं विशदयति ॥ अभिज्ञाभ्यामिति ॥ प्रत्यभिज्ञयेवेति ॥ सोयमिति प्रत्यभिज्ञाया एकस्मिन्नेवाधिकरणे कालद्वयसंबंध इत्येवमाकारेण वा कालद्वयसंबंधाधार एक इत्येवमाकारेण वा यथाऽर्थो गृह्यते एवमभिज्ञाभ्याम् अग्रहणादित्यर्थः । यथा ह्येकस्मिन्नेव धूमे कालव्यवधानेन जातयोः धूमो वह्न्यव्यभिचारी वह्निसहचारीति च विशकलितव्यभिचाराभावसहचारज्ञानयोस्तदुभयसामानाधिकरण्याविषयकत्वेन व्याप्त्यविषयकत्वादव्याप्यत्वभ्रमानिवर्तकत्वं वह्निव्याप्यधूमवानयमिति विशिष्टज्ञानाजनकत्वं च स्यात् वह्निव्याप्यधूमवानयमिति विशिष्टज्ञानस्य तु तदुभयसामानाधिकरण्यरूपव्याप्तिविषयकत्वेन अविशकलिततदुभयविषयकत्वादव्याप्यत्वभ्रमनिवर्तकत्वं तद्वत् अभिज्ञाभ्यां वस्तुगत्या एकस्मिन् कालद्वयसंबंधग्रहणेपि न ताभ्यां कालद्वयस्य सामानाधिकरण्यं गृह्यते प्रत्यभिज्ञयात्वेकाधिकरणत्वरूपं कालद्वयस्य सामानाधिकरण्यं गृह्यत इति प्रत्यभिज्ञाया अभिज्ञाभ्यां प्रमेयत एव भेद इति भाव इति संप्रदायः ॥ इयं शुक्तिरिति ॥ यथेयं शुक्तिरिति ज्ञाने इदंत्वशुक्तित्वयोरैकाधिकरण्यरूपसामानाधिकरण्यावगाहित्वमस्ति एवम् इदमितिज्ञानस्य वस्तुगत्या शुक्तौ शुक्त्यभेदावगाहित्वेपि इदंत्वशुक्तित्वयोः सामानाधिकरण्यावगाहित्वं नास्तीत्यर्थः । एवमुक्तरीत्या अभिज्ञाभ्यां प्रत्यभिज्ञायाः प्रमेयतो विशेषाभावे फलतोपि विशेषो न संभवति तत्र निमित्ताभावादित्याह ॥ अन्यथेति ॥ भेदभ्रमनिवर्तकत्वमपि न स्यादिति भावः । नन्वेकस्या अपि प्रत्यभिज्ञायाः कालद्वयपरामर्शित्वेन भेदभ्रमनिवर्तकत्वमुपपद्यत इति चेत्तत्राह ॥ कालद्वयेति ॥ भेदभ्रमकालेपीति ॥ अयमिह संप्रदायः एकस्यैव ज्ञानस्य कालद्वयपरामर्शिकत्वस्य भ्रमनिवृत्तिप्रयोजकत्वे अयं स नेति भेदभ्रमकालेपि यथाकथंचित्कालद्वयपरामर्शसत्वात्तेनापि भेदभ्रमेण भेदभ्रमनिवृत्तिः स्यात् । अतस्तस्याप्रयोजकत्वादुक्तरीत्या प्रमेयत एव विशेषो वाच्य इत्यर्थः ॥ एवमिति ॥ विशकलिततत्त्वं पदार्थभूतसार्वज्ञदुःखाद्युपलक्षितचैतन्यप्रतिपादकवाक्यजन्यज्ञानयोः स्वविषये वस्तुतोऽभेदसद्भावेपि सार्वज्ञाद्युपलक्षितत्वदुःखाद्युपलक्षितत्वयोरभेदसामानाधिकरण्यानवगाहित्वात्तत्वमसीति वाक्यजन्यैकज्ञानस्य तदवगाहनाद्भेदभ्रमनिवर्तकत्वमिति प्रमेयत एव विशेषः प्राप्त इत्यर्थः ॥ इति दिगिति ॥ यदुक्तं तत एव प्रामाण्यमपीति तदयुक्तं न हि फलवत्त्वं प्रामाण्यम् । तृणादिज्ञाने अव्याप्तेः । यथोक्तम् । फलवत्त्वं न चास्माभिः प्रामाण्यं हि विवक्षितम् । तृणादिदर्शने किं च फलवत्त्वं निगद्यत इति, इति दिगर्थोद्रष्टव्यः ॥ उपाधिभेदेति ॥ तत्वमस्यादिमहावाक्यस्याखण्डार्थत्वेऽनुमानं श्लोकेनोच्यते येन तत्वमस्यादिवाक्येन अन्तःकरणाद्युपाधिभेदभिन्नार्थो जीवो ब्रह्मणा एक इति प्रतिपाद्यते तदप्यखण्डार्थम् । कुम्भखं घटाकाशः महत्खं महाकाशः इति वाक्यं यथेत्यर्थः । घटोपाधिं विहाय आकाशस्वरूपैकतायास्तत्राभिप्रेतत्वादिति ध्येयम् । तथाच तत्त्वमसिवाक्यम् अखण्डार्थम् उपाधिभेदभिन्नैक्यार्थप्रतिपादकत्वात् घटाकाशो महाकाश इति वाक्यवदित्यनुमानमुक्तं भवति । तदुक्तं वार्तिके ''घटाकाशो महाकाश

(प्रकाशः)

इत्युक्ते चैक्यधीर्यथे''ति ॥ सत्येति ॥ पदार्थनिष्ठवाक्यस्याखण्डार्थत्वे अनुमानमनेन श्लोकेनोच्यते । सत्यज्ञानादिगीः सत्यज्ञानादिवाक्यम् एतत्संसर्गव्यतिरेकिणि अर्थे सत्यत्वादिसंसर्गशून्येऽर्थे प्रमाणम्, मानत्वात् प्रमाणत्वात् प्रत्यक्षादिप्रमाणवदित्यर्थः नयनादौ प्रकृतसत्यत्वज्ञानत्वानन्तत्वादि संसर्गशून्ये घटादौ मानत्वमस्ति । पक्षे तु सत्यत्वादिसंसर्गशून्ये चैतन्यरूपाखण्डार्थे मानत्वेन साध्यं पर्यवसितव्यम् ॥ अप्रसिद्धेति ॥ निर्विकल्पकानङ्गीकारात्प्रत्यक्षादिप्रमाणत्रयेणापि इदमित्थमित्यादिसप्रकारकज्ञानस्यैवोत्पत्त्या पूर्वानुमानसाध्याखण्डार्थत्वस्य द्वितीयानुमानाभिप्रेताखण्डार्थत्वस्य च कुत्राप्यप्रसिद्धत्वादिति भावः ॥ एकत्वेति ॥ एकत्वाधारेत्यर्थः । तथाचोपाधिभेदभिन्नो यः एकत्वाधारभूतोर्थः तत्प्रतिपादकत्वादित्यर्थः स्यात् एवं चैकत्वसङ्ख्यासंसर्गस्य प्रतिपादनात् सखण्डार्थत्वमेवेत्यर्थः ॥ आकाशेंऽश इति ॥ तथाच घटाकाशरूपांशस्य स्वाभाविकत्वेनौपाधिकत्वाभावात्कुम्भखं महत्खमिति वाक्यस्य नोपाधिभिन्नैकार्थप्रतिपादकत्वमस्तीति साधनवैकल्यमित्यर्थः ॥ घटाकाश इति ॥ को घटाकाश इति पृष्टे भेदभ्रमनिरासाय घटाकाशो महाकाश इति कथ्यते । अत्रापि प्रश्नोत्तरयोर्वैयधिकरण्यान्यथानुपपत्त्या आकाशस्वरूपमात्रपरत्वेनाऽखण्डार्थत्वमङ्गीकार्यमिति हि त्वदभिप्रेतम् । तन्न युक्तम् । घटाकाशमहाकाशयोः भेदभ्रमेण को घटाकाश इति पृष्टे भेद भ्रमनिरासाय घटाकाशो महाकाश इति वाक्यं प्रवर्तते तत्र स्वरूपमात्रबोधने भेदभ्रमनिरासायोगादधिकोऽभेदरूपः संसर्गो बोध्यत इत्यवश्यं वाच्यम् । एवं च साध्यवैकल्यमित्यर्थः । संसर्गिणि पदार्थपरब्रह्मरूपे । तथा च सत्यज्ञानादिगीरेतत्संसर्गव्यतिरेकिणि अर्थे प्रमाणमिति मां प्रति साधने सिद्धसाधनमित्यर्थः ॥ आभासेति ॥ तथा चाखण्डकर्मपरत्वमपि स्यादिति भावः । उत्तरग्रन्थमुपक्षिपन्नखण्डार्थत्वनिराकरणेन सिद्धमर्थमुपसंहरति ॥ तस्मादिति ॥ तत्वमस्यादिवाक्यस्याखण्डार्थत्वानुमानभङ्गविवरणम् ॥ ३ ॥

## ४. ब्रह्मणो निर्गुणत्वभङ्गः

**तथा हि ब्रह्मणो धर्माः किं साधकाभावान्न सन्ति? उत बाधकसद्भावात् । नाद्यः, 'बृहन्तो ह्यस्मिन्गुणाः', 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।' 'सत्यकामः सत्यसङ्कल्पः' इत्यादिश्रुतीनाम्,**

**ब्रह्मेशानादिभिर्देवैः समेतैर्यद्गुणांशकः ।**
**नावसाययितुं शक्यो व्याचक्षाणैश्च सर्वदा ॥**

**'मय्यनन्तगुणेऽनन्ते' 'तेजो बलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिः' 'परःपराणा'मित्यादिस्मृतीनाम्'**

**'अन्तस्तद्धर्मोपदेशाद्' 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशाद्, 'अदृश्यत्वादिगुणको धर्मोक्तेः' 'सर्वधर्मोपपत्तेश्च'– इत्यादीनां निर्णायकसूत्राणाम्**

(१) ब्रह्म धर्मिसत्तासमानसत्ताकधर्मवद्, उक्तसत्ताकभावरूपधर्मवद्वा, यावत्स्वस्वरूपमनुवर्तमानधर्मवद्वा, उक्तविशेषणवद्भावरूपधर्मवद्वा, स्वज्ञानाबाध्यभावरूपधर्मवद्वा, धर्मैर्भावरूपैर्धर्मैर्वा हीनं नावतिष्ठते पदार्थत्वाद्, भावत्वाद्, अभावविलक्षणत्वाद्वा, घटवत् । (२) ब्रह्म स्वज्ञानाबाध्यप्रकारवत्, स्वारोपितव्यावर्तकस्वज्ञानाबाध्यप्रकारवद्वा, अधिष्ठानत्वाच्छुक्तिवत् । (३) ब्रह्म स्वज्ञानाबाध्यदुःखव्यावृत्तिमत्, स्वज्ञानाबाध्यदुःखव्यावर्तकधर्मवद्वा, दुःखानात्मकत्वाद् घटवत् । (४) ब्रह्म स्वज्ञानाबाध्यप्रकारकज्ञानविशेष्यम्, सन्दिग्धत्वाद्, विचार्यत्वात्, निर्णेतव्यत्वाच्च, स्थाणुवत् । (५) ब्रह्मवेदान्ततात्पर्यगोचरप्रकारवद्, वेदान्तविचारविषयत्वात्, यदेवं तदेवं यथा कर्मकाण्ड विचारविषयो धर्मः । (६) ईश्वरः सदाऽवाप्तसमस्तकल्याणगुणः, सदा तत्प्रेप्सुत्वे सति तत्र शक्तत्वाद्, यो यदा यत्प्रेप्सुत्वे सति यत्र शक्तः, स तदा तद्वान्, यथा चैत्रः । (७) ईश्वरः सदा त्यक्तसमस्तदोषः सदातज्जिहासुत्वे सति तत्त्यागे शक्तत्वाद्, यो यदा यज्जिहासुत्वे सति यत्त्यागे शक्तः, स तदा त्यक्ततद्दोषः, यथा चैत्रः । तत्प्रेप्सादिकं च प्रेक्षावत्त्वादिनाविपक्षेऽधिष्ठानत्वसन्दिग्धत्वादिकं न स्यादित्याद्यनुकूलतर्कसनाथानुमानानां च सत्त्वात् ।

न चानवस्थानिरासाय कश्चिद्धर्मो निर्धर्मक इति तत्राद्यहेतोर्व्यभिचारः, साध्यस्वरूपस्य निर्धर्मकत्वस्य पदार्थत्वात्मकस्य हेतुरूपस्य च धर्मस्य भावाभावाभ्यां व्याघातात् । प्रमेयत्वाभिधेयत्वादीनामबाधितानुभवबलेन त्वदभिमतमिथ्यात्वदृश्यत्वादिवत् स्ववृत्तित्वाच्च । गोत्वादेरपि गोव्यक्तिरेव वा गोत्वं वा तं स्वाश्रयव्यक्तिं प्रति अन्यस्माद्व्यावर्तकत्वं वा व्यावर्तकमिति न दुःखानात्मकत्वस्य तत्र व्यभिचारः । न च श्रुतिः सगुणब्रह्मपरा, न तु परब्रह्मपरेति वाच्यम्, सगुणातिरिक्तस्य परस्याद्याप्यसिद्धेः । त्वत्पक्षेऽपि तात्त्विकगुणवद्व्यक्त्यन्तराभावाच्च । परः पराणामित्यादिस्मृतौ परात्परत्वोक्तेश्च । अन्यथा 'सदेव सोम्येदम्, असद्वा इदमग्र' इति सदसत् श्रुती अपि परापरब्रह्मविषये, ग्रहणाग्रहणश्रुती अपि परापरयागविषये स्याताम् । 'असन्नेव स भवति असद् ब्रह्मेति वेद चे'दिति

श्रुतिरपि नासत्त्वनिन्दार्था, किं तु शून्यतापत्तिरूपपरममोक्षपरेति स्यात् । न चेदानीं सगुणं दशान्तरे तु निर्गुणम् । तथात्वेऽपि गुणानामनित्यत्वमात्रापत्त्या त्वदभिमतमिथ्यात्वासिद्धेः ।

'ज्ञानं नित्यं क्रिया नित्या बलं नित्यं परात्मनः' । 'एष नित्यो महिमा ब्राह्मणस्य' । इत्यादि श्रुतेश्च । 'एष नित्य' इति श्रुतिश्च ब्रह्मपरा, पूर्वत्र नावेदविन्मनुते तं बृहन्तमिति ब्रह्मणः प्रकृतत्वात् । उत्तरत्र न कर्मणा वर्धते नो कनीयान् । तस्यैव स्यात् पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति ब्रह्मलिङ्गात् । बृहदरण्यके सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः । स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् । एष सर्वेश्वर एष भूताधिपतिः एष भूतपाल इत्यादिना ब्रह्मोक्त्वा तत्र संमतित्वेन तदेतदृचाभ्युक्तमिति एष नित्य इत्यादिमन्त्रस्योदाहृतत्वाच्च । अन्यथा ब्रह्मेदानीं सद्दशान्तरे त्वसदिति स्यात् । न चौपाधिका धर्माः औपाधिकत्वस्य सोपाधिकाध्यस्तत्वरूपत्वे श्रुत्यप्रामाण्यापातात् । वक्ष्यमाणसत्यत्वश्रुतिविरोधाच्च । उपाधिकृतत्वरूपत्वे तूक्तनित्यत्वश्रुतिविरोधाद्, अन्तःकरणादिरूपोपाधिसृष्टेः प्रागेवेक्षितृत्वादिश्रुतेश्च । स्वाभाविकी ज्ञानबलक्रिया चेत्यादि श्रुतेश्च । न च योगलब्धयोगिशक्त्यादिवैधर्म्यमात्रेण तदुक्तिः, सङ्कोचका-भावेनोक्तनित्यत्वश्रुत्यनुसारेण स्वाभाविकज्ञानसमभिव्याहारेण चोपाधिमात्रनिषेधात् । अन्यथा ब्रह्मणः सत्त्वमौपाधिकम् असत्त्वं तु स्वाभाविकमिति स्यात् । न चातात्त्विका गुणाः । श्रुत्या गुणमात्रोक्त्या तात्त्विकानुक्तेरिति वाच्यम्, नित्यत्वो-क्तिसामर्थ्याद्, विषयाबाधलक्षणप्रामाण्यस्यौत्सर्गिकत्वात्, 'सत्यः सोऽस्य महिमे'-त्यादि श्रुतेश्च तत्सिद्धेः । अन्यथा सत्यं ज्ञानं तत्त्वमसीत्यादि श्रुत्युक्तं ब्रह्म-सत्त्वैक्यादिकमपि तात्त्विकं न स्यात् । निर्गुणश्रुतिविरोधस्तूद्धरिष्यते ।

किं च तद्विरोधेऽपि श्रुतेर्नातात्त्विकविषयता युक्ता । उक्तं हि–

को हि मीमांसको ब्रूयाद्विरोधे शास्त्रयोर्मिथः ।
एकं प्रमाणमितरत् त्वप्रमाणं भवेदिति ॥ इति ।

तथा हि पूर्वतन्त्रे प्राप्तबाधोऽप्राप्तबाधश्चेति द्विविधो बाध उक्तः । तत्र दाशमिके प्राप्तबाधे प्रकृतिवत्कुर्यादित्यादिरूपस्य प्राप्तस्य चोदकादेः कृष्णलादाववघातवर्जमित्यादिरूपः संकोच एव । एवं तार्तीयेऽप्यप्राप्तबाधे गार्हपत्यमिति द्वितीयाश्रुत्यनुसारेणेन्द्र शब्दप्रयुक्तमन्त्रलिङ्गस्य गार्हपत्ये गौणत्वादिकमेव । एवं व्याकरणेऽपि परेण पूर्वस्य, नित्येनानित्यस्य, अन्तरङ्गेण बहिरङ्गस्य, प्रतिपदोक्तेन लक्षणोक्तस्येत्यादिर्बाध उक्तः । तत्रापि सङ्कोच एव एवं ब्रह्ममीमांसायामपि 'विकारशब्दान्नेति चेन्न प्राचुर्याद्,' 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्,' 'गौण्यसम्भवादि'-त्यादौ शास्त्रयोर्विरोधे तात्त्विकार्थान्तरपरत्वमेवोक्तम्, न त्वारोपितार्थत्वम् । अन्यथा ईक्षत्याद्यधिकरणेषु सिद्धान्तसाधकानाम् ईक्षणादीनां साङ्ख्याद्यभिमतप्रधानादावारोपसम्भवात् क्वापि सिद्धान्तो न सिध्येदिति सर्वमपि शास्त्रमुन्मूलितं स्यात् ।

किं च दशमे विकृतिभूतमहापितृयज्ञप्रकरणस्थे नार्षेयं वृणीते– इत्यादिवाक्ये प्रकृतिवत्कुर्यादार्षेयवरणवर्जमिति महापितृयज्ञीयप्रकृतिवच्छब्दैकवाक्यतया पर्युदासादार्थत्वमेवेत्युक्त्वा यत्र प्रकृतिभूतदर्शपूर्णमासप्रकरणस्थाज्यभागविधायकवाक्य सन्निहिते 'न तौ पशौ करोति' इत्यादौ पाशुकप्रकृतिवच्छब्दैकवाक्यत्वयोगेन नञः पर्युदासार्थत्वासम्भवात्, प्रकृतिवत्कुर्यादाज्यभागौ तु न कुर्यादिति वाक्यभेदेन प्रसज्यप्रतिषेधार्थत्वमेव युक्तं तत्र पशावाज्यभागयोरन्येनाप्रसक्तेः, शास्त्रप्रसक्तस्य च सर्वथा बाधायोगात् विकल्प इत्युक्तम् । एवं च यदा प्रतिषेधोन्नीतप्रसक्तेरपि न सर्वथा बाधः तदा किमु वक्तव्यं प्रत्यक्षसगुणशास्त्रप्रमितानां गुणानां न सर्वथा बाध इति? ननु निर्गुणवाक्येन निषेद्धुं सगुणवाक्यस्यानुवादकत्वेनैकवाक्यत्वसम्भवे वाक्यभेदेन गुणप्रापकता न युक्तेति चेन्न, सत्यकामत्वादीनामन्यतोऽप्राप्तेः । श्रुतिप्राप्तस्य च श्रुत्या निषेधेऽहिंसावाक्यमग्नीषोमीयहिंसायाः अग्रहणवाक्यं च षोडशिग्रहणस्य असद्वेत्यादिवाक्यं च ब्रह्मसत्त्वस्य भेदवाक्यं चैक्यस्य निषेधकं स्यादित्युक्तत्वात् ।

किं च सुढमृदेत्यादिविधिर्नक्त्वासेऽडिति निषेधस्येव सगुणवाक्यमेव निर्गुणवाक्यस्य बाधकं किं न स्यात्? न च जगत्कर्तृत्वाक्षिप्तस्य सार्वज्ञ्यादेर्निषेधायानुवादः । श्रुत्याक्षिप्तस्य पुनः श्रुत्या निषेधायोगात् । अन्यथा श्रुतेन ज्ञाननिवर्त्यत्वेन जगदरोपाधिष्ठानत्वेन 'स एवेदं सर्वमि'ति श्रुतेन जीवब्रह्मणोः सार्वात्म्येन चाक्षिप्तं सर्वमिथ्यात्वं ब्रह्मसत्त्वं जीवब्रह्मैक्यं च 'विश्वं सत्यमि'त्यनेन 'असद्वा इदमि'त्यनेन 'द्वा सुपर्णे'त्यनेन च निषेद्धुं 'नेह नाने'त्यनेन सत्यं ज्ञानमित्यनेन तत्त्वमसीत्यनेन चानूद्यत इति स्यात् । किं च श्रुत्याक्षिप्तस्य सार्वज्ञ्यादेः श्रुत्या निषेधेऽपि श्रुतस्य सर्वकर्तृत्वादेः कथं निषेधः? किं चाद्वैतश्रुतेर्निर्गुणश्रुत्यन्तरस्य वा तात्पर्यपरिज्ञानप्राप्तं निर्गुणत्वमेव सगुणवाक्येन निषेद्धुं सगुणवाक्येनानूद्यत इति किं न स्यात्? वैगुण्यमेव पश्यन्ति न गुणान्विनि नियुंजत इति भारतोक्तेः । किं च निर्गुणवाक्य एव साक्षी चेतेत्यादिना द्रष्टृत्वादिगुणविधानान्न तेन निषेध इति न तदर्थं सावज्ञ्यादि वाक्यमनुवादकम् । अन्यथा सार्वज्ञ्यादेर्व्यावहारिकं सत्त्वमपि न स्यात् । न हि निषिद्धे ब्राह्मणहननादौ अवान्तरमपि तात्पर्यम् । न चौपनिषदस्य ब्रह्मणः सार्वज्ञ्यादिकमनुमानादिसिद्धम् । ननु सगुणवाक्यं वाचं धेनुमुपासीतेत्यादिवदुपासनार्थम्, उपासनायाः कर्तव्यत्वे गुणेषु च तात्पर्ये वाक्यभेदादिति चेन्न–

उपासनायाः कार्यत्वे विष्णोरात्मत्व एव च ।
उभयत्रापि तात्पर्यमात्मोपासादिके विधौ ॥

इति स्मृतिविरोधात् । 'यः सर्वज्ञ' इत्यादौ उपासनाविधेरश्रवणाच्च । कल्पनस्य च निर्गुणवाक्येऽपि शक्यत्वात् ।

किं च 'आत्मेत्येवोपासीत', 'अथ योऽन्यां देवतामुपास्ते' इत्यादावद्वैतस्याप्युपास्यत्वं श्रूयते । किं च त्वयैव तृतीयस्य तृतीये पादे 'आनन्दादय' इति सूत्रे 'आनन्दं ब्रह्मे'त्यादि श्रुतिसिद्धा आनन्दादयः । 'व्यतिहार'इति सूत्रे तद्योऽहमिति श्रुत्युक्तं जीवस्येश्वरत्वमीश्वरस्य च जीवत्वमुपास्यमित्युक्तम् । तथा–

उत्तरस्मिंस्तापनीये शैव्यप्रश्नेऽथ काठके ।
माण्डूक्यादौ च सर्वत्र निर्गुणोपास्तिरीरिता ॥

इति निर्गुणं ब्रह्माप्युपास्यमित्युक्तम् । एवं चोपास्यत्वेऽप्यानन्दादेरिव ऐक्यस्यैव निर्गुणब्रह्म इव च सत्यकामत्वादेरपि तात्त्विकतास्तु । भाषितं हि त्वयैव व्यतिहार इति सूत्रे 'यथा ध्यानार्थेऽपि सत्यकामत्वाद्युपदेशे तद्गुण ईश्वरः सिध्यति तद्वदैक्यम्' इति । भामात्यां च तादात्म्यदार्ढ्यं तु भवन्नोपेक्षामहे । सत्यकामादिगुणोपदेश इव तद्गुणेश्वरसिद्धेरिति । न चानन्दादिवाक्यसत्यकामादिवाक्ययोर्मानान्तराविरोधे तदप्राप्तौ उपासनाविध्यश्रवणे निर्गुणश्रुतिविरोधे च तुल्येऽपि आनन्दादयो वास्तवाः सत्यकामादयस्तु वाग्धेनुत्वादिवत् पुंतन्त्रा वा व्यावहारिका वेति युक्तम् । यदि चानन्दादयः स्वरूपभूता इति न निर्गुणश्रुतिविरोधः, तर्हि बलशक्त्यादयोऽपि तथैव । ज्ञानात्मको भगवान् बलात्मको भगवानित्यादिश्रुतेः । 'समस्तकल्याणगुणात्मक' इत्यादिस्मृतेश्च ।

ननु निर्गुणाद्युपासनं भ्रमेऽपि मणिप्रभायां मणिभ्रम इव फलसंवादि, उक्तं हि–

स्वयं भ्रमोऽपि संवादी यथा सम्यक् फलप्रदः ।
ब्रह्मतत्त्वोपासनापि तथा मुक्तिफलप्रदा ॥ इति ।

न चैवं ब्रह्मासिद्धिः, उपासनस्य भ्रमत्वेऽपि शब्दजन्यस्य ज्ञानस्य प्रमात्वादिति चेन्न, प्रकृतेऽपि तथात्वोपपत्तेः । मणिप्रभायां मणित्वस्यैव ब्रह्मणो मिथ्यात्वाभावेन ध्यानस्यापि सत्यब्रह्मविषयत्वाच्च । न च ब्रह्मविषयशाब्दधीजन्यस्य तदपरोक्षधीजनकस्य च ब्रह्मध्यानस्याब्रह्मविषयता युक्ता, ब्रह्मज्ञानहेतूनां श्रवणादीनामपि तथात्वापातात् । ईक्षतिकर्मेति सूत्रे–

ईक्षणध्यानयोरेकः कार्यकारणभूतयोः ।
अर्थ औत्सर्गिकं तत्त्वविषयत्वं तथेक्षतेः ॥

इति भामत्यां परात्परं पुरिशयं पुरुषमीक्षत इति ईक्षणकर्मणः परब्रह्मण एव 'परं पुरुषमभिध्यायीतेति ध्यातव्यत्वोक्त्या तद्विरोधाच्च । ननु ऐक्याद्युपासनं परोक्षप्रमा-

प्रवाहरूपं न तु 'वाचं धेनुमुपासीते'त्यादाविव ज्ञानविजातीयं वृत्त्यन्तरं बुद्धिपूर्वकारोपो वेति चेत्, समं प्रकृतेऽपि। न चैक्यादिकं ध्येयं ज्ञेयं च सार्वज्ञ्यादिकं तु ध्येयमेवेति युक्तम्, तत्र 'तत्त्वमसी'त्यादेरिवेहाप्यविधिरूपस्य वस्तुतत्त्वनिष्ठस्य 'यः सर्वज्ञ' इत्यादेः सत्त्वेन विशेषहेत्वभावात्। ब्रह्मणो जगत्कर्तृत्वादिनारोप्योपास्यत्वे नाम्नि ब्रह्मवाक्यानामिव ब्रह्मण्यपि कारणवाक्यानां समन्वयस्यावक्तव्यत्वेन समन्वयाध्यायानारम्भापाताच्च। 'य आत्मापहतपाप्मे'त्यारभ्य सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्य स विजिज्ञासितव्य इति सत्यकामत्वादीनामपहतपाप्मत्वादिभिः सह जिज्ञास्यत्वश्रवणाच्च। अपहतपाप्मत्वादीनामप्युपास्यत्वे तस्य भूताकाशेऽपि सत्त्वेन दहराकाशस्य ब्रह्मत्वप्रतिपादकदहराधिकरणविरोधः। 'एष सर्वेश्वर एष भूताधिपतिरित्यादिधर्मानुक्त्वा तेषां 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'ति मुमुक्षुज्ञेयत्वोक्तेश्च। 'यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवी''त्याद्युक्त्वा 'तद्विज्ञानेन परिपश्यन्ति धीरा' इत्यपरोक्षप्रमाविषयत्वोक्तेश्च। तुरीयं सर्वदृक्सदे'ति तुरीये सार्वज्ञ्यश्रवणाच्च। 'सत्यः सोऽस्य महिमे'त्यादौ साक्षात्सत्यत्वश्रुतेश्च। अत्र होममात्रानुवादेन आहवनीयस्येव स इति श्रुत्युक्तमहिममात्रानुवादेन सत्यत्वस्य विधानात्। 'सत्यः सोऽस्य महिमे'त्यादेरैन्द्रसूक्तस्थत्वेऽपि 'तत्त्वायामि' 'सुवीर्यं तद्ब्रह्म पूर्वचित्तय' इति ब्रह्मश्रुत्या 'इन्द्रः सूर्यमरोचयद्' इन्द्र ह विश्वा भुवनानि येमिरत्यादि सूर्यप्रकाशकत्वादि लिङ्गैश्च ज्योतिरधिकरणन्यायेन सूक्तस्य परमेश्वर परत्वात्। इयं श्रुतिर्व्यावहारिकसत्त्वपरा चेद् ब्रह्मसत्त्वश्रुतिरपि प्रातिभासिकसत्त्वपराऽस्तु। न चात्र मानान्तरप्राप्तिरस्ति। अत्र निर्गुणवाक्यं बाधकं चेत्, तत्राप्यसद्वा इत्यादिवाक्यं बाधकम्। तद् अव्यक्तत्वाद्यभिप्रायं चेत्, इदमपि त्रैगुण्यराहित्याद्यभिप्रायम्। यदि च ब्रह्मभ्रमाधिष्ठानत्वात्सत्, तर्हि तत एव सविशेषम्। न च निर्गुणस्यारोपरूपोपासनाविषयत्वे तज्ज्ञानान्मुक्त्ययोगः। धर्मिज्ञानाधीनसन्देहसापेक्षवेदान्तविचारसाध्यसप्रकारकज्ञानस्यैव मोचकत्वोक्तेः। उपासनान्तराणामिव श्रुतिबलादेव विचित्रफलत्वोपपत्तेश्च। सगुणेऽपि साम्यापत्तेश्च। पृथगात्मान''मित्यादि श्रुतिषु–

यो मामशेषदोषोज्झं गुणसर्वस्वबृंहितम् ।
जानात्यस्मै प्रसन्नोऽहं दद्यां मुक्तिं न चान्यथा ॥
भोक्तारं यज्ञतपसां सर्व. भूत महेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥

इत्यादि स्मृतिषु च सविशेषज्ञानादेव मोक्षोक्तेः तस्य तथोपासना कर्तव्यतापरत्वे सगुणोपासनाविशेषार्थवादत्वेननिर्गुणज्ञानान्मुक्ति श्रुतिरपि तथा स्यात् । एतेन एष नित्यो महिमा ब्राह्मणस्य सत्यः सोऽस्य महिमेत्यादेरपि तथोपासनापरत्वादिकं निरस्तम् । श्रूयते च निर्गुणज्ञानस्यापि फलान्तरं 'स यो ह वैतत्परमं ब्रह्म वेद नास्याब्रह्मवित्कुले भवति य एवं वेदाहं ब्रह्मास्मीति तस्य ह न देवाश्च नाभूत्या ईशत' इत्यादौ श्रुतिबलान्निर्गुणज्ञानस्य संयोगपृथक्त्वन्यायेन मुक्तिरपि फलं चेत्, सगुणज्ञानस्यापि तथास्तु । न च सगुणज्ञानात् श्रुता मुक्तिरवान्तरा 'पुण्यपापे विधूये'ति सर्वकर्मनिवृत्युक्तेः । अन्यथा निर्गुणज्ञानात् श्रुताप्यवान्तरैव । परम-मुक्तिस्तु 'असन्नेव स भवती'ति श्रुत्युक्ता शून्यतापत्तिरिति स्यात् । एतेन सगुण-वाक्यं निष्प्रपञ्चप्रकरणस्थं चेन्निषेधायानुवादकम् उपासनाप्रकरणस्थं चेदुपासनार्थ-मिति निरस्तम् । गुणविशेषविधिसन्निहितस्य सामान्यनिषेधकस्य निष्प्रपञ्चवाक्यस्य विहितगुणानिषेधकत्वात् । प्राप्त्यभावेन सगुणवाक्यस्याननुवादकत्वाच्च । अन्यथा 'सद्वा इदमग्र आसीत्' इदं वा अग्रे नैव किंचनासीदिति सर्वनिषेधप्रकरणस्थं 'रसो वै स' इत्यादिकमपि निषेधाय ब्रह्मानुवादकं स्यात् । उपासनाप्रकरणस्थत्वमात्रेण चोपास्यत्वे उद्गीथोपासनाप्रकरणस्थस्य स एषोऽनन्त' इति श्रुतानन्तत्वादेरपि भूता-काशे उपासनामात्रमिति सुवचत्वेनाकाशाद्यधिकरणेषु अनन्तत्वादि लिङ्गैर्ब्रह्मत्वो-क्त्ययोगाच्च । अनुपास्तिप्रकरणेऽपि सत्यकामत्वादेः श्रवणाच्च । यदि च 'वेधाद्यर्थ-भेदादि'तिसूत्रेत्वद्भाष्योक्तरीत्या यथा सर्वं प्रविध्येत्यादि मन्त्राणामुपासनाप्रकरणा-दुत्कर्षः, तथानन्तादिवाक्यस्यापि । यदि वाऽनन्तादिवाक्यस्योपास्यत्वे वस्तुत्वे च तात्पर्यम्, तर्हि सगुणवाक्यस्यापि तथास्तु । तस्मान्नासदुपासनार्था गुणोक्तिः ।

अन्यथा सार्वज्ञ्यादिकं वाग्धेनुत्वादिवत् प्रातीतिकमेव स्यात् । किं च न क्वाप्यसदुपासना–

नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिकाः ।
न च रमन्त्यहो असदुपासनयात्महनः ॥

इत्यादिस्मृतिभिः 'अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्' इति सांकर्षणसूत्रेण च तन्निषेधात् । 'वाचं धेनु'मित्यत्रापि धेनुमिवायतीमिति श्रुत्यन्तराद्धेनुशब्दो गौणः । 'योषितमग्निं ध्यायीते'त्यत्रापि रेतो जुह्वतीति श्रुतेर्योषितो रेतोरूपाहुत्याधारत्वादग्निशब्दो गौणः । छान्दोग्यभाष्यरीत्या यौगिको वा, न त्वारोपः । 'नाम ब्रह्मेत्युपासीते'त्यत्रापि नामाभिमानिनी चोषास्तस्यां ब्रह्म हरिं स्मरेदि'त्यादि स्मृतेः ब्रह्माधिष्ठाने नामादौ ब्रह्मशब्दः । नामेति प्रथमा वा 'वनं वसति मारुत' इत्यादिवत्सप्तम्यर्थे, ब्रह्मेति प्रथमा वा ब्राह्मणोऽस्य मुखमितिवत् पञ्चम्यर्थे, सुपां सुलुगित्यादिसूत्राद्, अन्यथा 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदि'ति पृष्टवन्तं नारदं प्रति अनात्मोपास्त्युक्तिरयुक्ता स्यात् । प्रतिमायामपि देवताधिष्ठानत्वबुद्धित एव फलं न तु देवतात्वबुद्धितः । 'शिला देव इति ज्ञानं भौम इज्यधीरित्यादिना तन्निषेधात् । यथा च 'अन्यदेव तद्विदितादि'ति श्रुतावश्रौतज्ञानस्याकात्स्न्र्येन ज्ञानस्य वा निषेधः । तथा 'तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासत' इति श्रुतावपि अश्रौतध्यानस्याकास्न्र्येन ध्यानस्य वा निषेधः । अन्यथा तस्याभिध्यानादिति श्रुतिविरोधात् । तस्मात्साधकाभावादित्याद्यो न युक्तः ।

नापि बाधकसद्भावादिति द्वितीयः । सामान्यतो मिथ्यात्वश्रुतिभङ्गे अखण्डार्थत्वभङ्गे चोक्तन्यायेनाद्वैतश्रुत्यादीनामबाधकत्वात् । नापि निर्गुणवाक्यं बाधकम् । वैपरीत्यस्यापि सुवचत्वात् । न च निषेधत्वादिना तत्प्रबलम्, असद्वा इत्यादिवाक्यस्य सदेवेत्यादिवाक्यात्प्राबल्यापत्तेरित्युक्तत्वाद्, अपच्छेदन्यायस्य च निरासात् । न च निर्गुणत्वं पुरुषार्थः येन तद्वाक्यं तत्परं स्यात् । किं तु गुणितैव । न च निर्गुणज्ञानस्य मोचकत्वात्फलवत्सन्निधाविति न्यायेन सगुणवाक्यं तदनुगुणं नेय-

मिति युक्तम् । सगुणज्ञानस्यैव मोचकत्वोक्तेः । तस्मात् सगुणत्वनिर्गुणत्वयोर्विरोधेन समुच्चयायोगाद्, अनुष्ठान इव च वस्तुनि विकल्पासम्भवाद्, एकेनान्यस्य प्रतीतार्थत्यागरूपे बाधे वक्तव्ये निर्गुणवाक्यस्यैव स युक्तः, न तु प्रबलस्य सगुणवाक्यस्य । तस्य प्राबल्यं च उपक्रमाधिकरणन्यायेनाऽनुपसंजातविरोधित्वाद्, लिङ्गात् श्रुतेरिव शीघ्रगामित्वाच्च । निर्गुणश्रुतिर्हि प्रतियोगिप्रतीत्यपेक्षया विलम्बते । पदे जुहोतीति वद्विशेषविषयत्वाच्च । सार्वज्ञ्यश्रुतिर्हि विशिष्य सार्वज्ञ्यादिपरा निर्गुणश्रुतिस्तु सामान्येन गुणनिषेधिका । दीक्षणीयायामनुब्रूयादितिवत्, निरवकाशत्वाच्च । निर्गुणश्रुतिर्हि'देवात्मशक्तिं स्वगुणैर्निगूढां' 'दैवी ह्येषा गणमयीत्यादि श्रुतिस्मृतिष्विव सत्तादिगुणे सावकाशा । बहुत्वाच्च । निर्गुणशब्देतरे सर्वेऽपि हि शब्दाः स्वनिमित्तगुणार्थकाः । धर्मिग्राहकत्वेनोपजीव्यत्वाच्च । प्रवृत्तिनिमित्तापेक्षैर्हि ब्रह्मादिशब्दैर्धर्मिणं निर्दिश्य तत्र धर्मा निषेध्याः । न चोद्देश्यविशेषणत्वाद् ग्रहैकत्ववत् निमित्तमविवक्षितम् । ग्रहैकत्वनये उद्देश्यस्वरूपे लब्धेऽपि यदधिकं तस्यैवाविवक्षेति स्थितिः । अन्यथा ग्रहत्वस्याप्यविवक्षा स्यात् । अत एवोक्तं हविरार्तिनये 'मृष्यामहे हविषा विशेषणम्' –इति । लक्षकेणापि हि शब्देन इरव्यावृत्तमसङ्कीर्णमेव स्वरूपमुद्देष्टव्यम् । अन्यथा यत्र क्वचन धर्मनिषेधः स्यात् ।

किं च निर्गुणवाक्यस्य छागपशुन्यायेन 'त्रैगुण्यवर्जितं विना हेयैर्गुणादिभिरित्यादि विशेषोपसंहारोऽस्तु । न चैवं 'न हिंस्यादि'त्यस्यापि 'ब्राह्मणो न हन्तव्य' इत्यत्रोपसंहारात् व्यर्थहिंसा न निषिध्येतेति वाच्यं, सार्वज्ञ्यादिगुणेष्विव व्यर्थहिंसायां विध्यभावात् । एतेन 'त्रैगुण्यवर्जित'मित्यादेरेव काकेभ्यो दधिरक्ष्यतामित्यादिवत् सामान्यपरतास्त्विति निरस्तम् । अत्र सार्वज्ञ्यादिश्रुतिभिरिव तत्र मानान्तरेण विरोधाभावात्, प्रत्युत तदानुगुण्यात् । किं च एवं धर्मान् पृथक् पश्यन्ति'ति श्रुतौ 'सविशेषणे ही'ति न्यायेन गुणानां पार्थक्यस्यैव निषेधात् । तत्सामान्यादन्यत्रापि तथैव निषेधो युक्तः । पार्थक्याभावेऽपि च विशेषबलादेव ज्ञानानन्दयोरिवैकतरपरिशेषाभावो युक्तः । अन्यथानन्दस्फुरणाभावान्मुक्तिरपुमर्थः स्यात् ।

अपि च 'साक्षी चेता केवलो निर्गुण' इति वाक्यात्पूर्वत्रोत्तरत्र च गुणोक्तेस्तन्मध्यस्थं निर्गुणवाक्यम् उपांशुयाजन्यायेन तदनुगुणं नेयम् । किं च निर्गुणशब्देन गुणमात्रनिषेधोऽयुक्तः साक्षी चेतेत्यादिभिर्द्रष्टृत्वादि विधानेन व्याघातादिति संकोचोऽस्तु । साक्षित्वादेरतात्त्विकत्वादविरोध इति तु निरस्तम् । उक्तं च–

युक्तोऽयुक्तश्च यत्रार्थ आगमस्य प्रतीयते ।
स्यात्तत्र युक्त एवार्थो न वाक्यायुक्तिरिष्यत ॥

एवं च– उपक्रमादिन्यायेन श्रुतिलिंगनयात् तथा ।
विशेषसामान्यनयान्न्यायान्निरवकाशतः ।
बाहुल्यन्यायतश्चोपजीव्यत्वन्यायतस्तथा ।
पशुच्छागनयाच्चैव सविशेषनयात् तथा ॥
उपांशुयाजन्यायेन युक्तायुक्तनयात् तथा ।
आदृतत्वात्सूत्रकृता प्रबला सगुणश्रुतिः ॥

तस्मादहिंसावाक्यमग्नीषोमीयेतरहिंसाया इव निर्गुणवाक्यं श्रौतसार्वज्ञ्यादीतरतर्काभासप्राप्तहेयसुखादिगुणानां निषेधकमिति न तद्बाधकम् । एवं च ।

हिंसाऽहिंसावाक्यसाम्याद्गुणिनिर्गुणवाक्ययोः ।
अविरोधेऽप्यमानत्वं ब्रूषे सौगतसौहृदात् ॥

नाप्यनुभूतिर्निर्विशेषा अनुभूतित्वादिति व्यतिरेक्यनुमानं बाधकम्, अप्रसिद्धविशेषणत्वस्वव्याघात श्रुतिबाधाभाससाम्याप्रयोजकत्व प्रतिकूलतर्कपराहत्यादिदोषात् । नापि भिन्नत्वेऽभिन्नत्वे च धर्मत्वानुपपत्तिः । एवमसम्बद्धत्वे धर्मत्वायोगः सम्बद्धत्वे सम्बन्धस्यापि सम्बन्धान्तरमित्यनवस्थेति न ब्रह्म धर्मवदित्यादिकुतर्का बाधकाः, धर्माभावरूपधर्मभावाभावाभ्यां व्याघाताद् । अभेदेऽपि ज्ञानानन्दयोरेकतरपरिशेषाभाववद्विशेषबलादेव धर्मधर्मिभावोपपत्तेश्च । सम्बन्धस्यापि मिथ्यात्वादिवत्स्वनिर्वाहकत्वाच्च । अन्यथानन्दस्य ज्ञानमात्रत्वे दुःखज्ञानमप्यानन्दः स्यात् ।

भिन्नत्वेऽखण्डार्थत्वहानिः । एवं ब्रह्म जगदभिन्नं चेन्मिथ्या स्याद्, भिन्नं चेद् भेदस्य सत्यत्वमित्यादितर्कबाधात् त्वदभिप्रेतं ब्रह्मापि न सिध्येत् । श्रुतिबाधात्तर्काणामाभासत्वं त्विहापि समम् । एवं च–

शुष्कतर्कैः श्रौतगुणबाधे ब्रह्मापि बाधितम् ।
भवेच्छ्रुत्या शुष्कतर्कधिक्कारस्तु द्वयोः समः ॥

किं च निर्विशेषत्वरूपविशेषभावाभावाभ्यां मूकोऽहमितिवत् स्वव्याघातः । यदि निर्विशेषत्वरूपविशेषोऽप्यनेनैव निषिध्यते, तर्हीयमपि वचनक्रिया मूक इत्यनेनैव निषिध्यत इति समम् । तदुक्तम्– निर्विशेषत्वमेतेन मूकोऽहमितिवद् भवेदिति । किं च ब्रह्मणः शून्यादनिर्वाच्याच्च तत्त्वतो विशेषाभावे तत्त्वतस्तदेव स्यात् । भावे तु सविशेषत्वम् । किं च ब्रह्मणो निर्विशेषत्वे वेदान्तविचारविषयत्वमयुक्तम् । तदुक्तम्–

इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनम् ।
इत्थंभावो हि धर्मोऽस्य न चेन्न प्रतियोगिता ॥ इति ।

किं च ब्रह्मणि धर्मारोपार्थमेव केचिद्धर्माः सत्याः स्वीकार्याः इदंत्वादिना ज्ञात एव शुक्त्यादौ धर्मान्तरारोपात् । तदुक्तम्–

धर्मारोपोऽपि सामान्यधर्मादीनां हि दर्शने ।
सर्वधर्मविहीनस्य धर्मारोपः क्व दृश्यते ॥ इति ।

अभावरूपधर्माः सन्तीति चेन्नाभावत्वं तत्र हेतुः, अतिप्रसङ्गात् । किं तु प्रामाणिकत्वं तच्च भावेष्वपि समम् । यदि चाभावो ब्रह्माभिन्नः यदि वा पञ्चमप्रकारो न तु सन्निति सदद्वैताविरोधी, तर्हि भावोऽपि तथास्तु । तस्मात्–

ब्रूतेऽसतोऽपि मोहादीन्दोषान्विष्णोर्गुणान् सतः ।
निह्नुते परमे तत्त्वे द्वेषादेवासुरो जनः ॥

तस्माद् ब्रह्मसगुणमेवेति । ब्रह्मणो निर्गुणत्वभङ्गः ॥ ४ ॥

(तरङ्गिणी)

स्यात् । आज्यभागवर्जं दर्शपूर्णमासवत्कुर्यात् । इदं तु दर्शपूर्णमासप्रकरणे श्रूयते । तत्र कः प्रसङ्गः पाशुकप्रकृतिवच्छब्दस्य । द्वितीयेत्वाज्यभागवर्जं दर्शपूर्णमासौ कुर्यादिति वचनव्यक्तिः स्यात् । तथा चाज्यभागविधानमनर्थकं स्यात् । पशाविति चानर्थकं स्यात् । द्वितीये यद्दर्शपूर्णमासयोराज्यभागौ कुर्यात्तदपशौ पशुवर्जितयोरिति वचनव्यक्तिः स्यात् । तथा चापशाविति व्यर्थम् । अपशुत्वाद्दर्शपूर्णमासयोः । तस्मादाज्यभागयोश्चोदकप्राप्तयोः प्रतिषेध इति तयोः पशौ विकल्पः । शास्त्रप्रकृतस्य चेति । प्रतिषेधापेक्षितप्रसक्तिजनकशास्त्रेण प्रसक्तस्येत्यर्थः । उक्तमिति । दशमाध्यायस्याष्टमपादे । प्रतिषेधोन्नीतेति । उपलक्षणमेतत् । कल्पितत्वसावकाशत्वाभ्यां दुर्बलस्यापि महापितृयज्ञीयचोदकस्य प्रत्यक्षश्रुतत्वनिरवकाशत्वाभ्यां प्रबलेनापि नार्षेयं वृणीत इत्यनेन प्रतिषेधपक्षे न सर्वथा बाधः अपि तु विकल्प इत्युक्तं । प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यादित्यत्र पूर्वपक्षसूत्रे 'प्रदेशे प्रकृतिवत्कुर्यादिति' चोदकेन प्रदिष्टे अनारभ्यविधानेनानूयाजेषु ये यजामहं करोतीत्यादिषु नञ् प्रतिषेधार्थः । तथा च विहितप्रतिषिद्धत्वाद्विकल्पः स्यादिति सूत्रार्थः । तन्त्र रत्नेपि । न चेदं प्रतिषेधपक्षे विकल्पाभिधानं पूर्वपक्षोक्तिमात्रम् । अपि तु पारमार्थिकमेवेति । यस्तु न तौ पशावित्यस्य पशुप्रकरणस्थस्य पाशुकप्रकृतिवच्छब्दैकवाक्यतया पर्युदासार्थत्वं दर्शपूर्णमासप्रकरणस्थस्य तु पशावाज्यभागौ न स्तः । अत्र तौस्त इति स्तुत्यर्थत्वमित्याह । सत्वात्मगौडमीमांसकतामाविश्चकार । न हि भाष्यटुपटीकातन्त्ररत्नशास्त्रदीपिकाधिकरणमालादिषु न तौ पशौ स्त इत्यस्य वाक्यस्य पशुप्रकरणस्थतोक्ता । नाप्यर्थवादत्वम् । अपि तु प्रतिषेधार्थत्वमेव । तथा च पशावाज्यभागयोर्विकल्प इत्येवोक्तम् । न सोमेऽध्वर इत्यस्य त्वर्थवादार्थत्वमुक्तम् । सगुणवाक्यमेवेति । ननु सगुणवाक्ये निषेधाश्रवणात्तस्य न निर्गुणवाक्यबाधकत्वमत उक्तम् । मृडमृदेत्यादि । न च तत्र मृडाद्यनुत्तरसेट्कक्त्वाप्रत्ययकित्त्वनिषेधपरत्वेनैकवाक्यतया वाक्यभेदेन कित्त्वनिषेधायोग इति वाच्यम् । निर्गुणवाक्यस्यापि सगुणवाक्यविहितेतरगुणनिषेधपरत्वसंभवात् । न च नेति नेतीति वीप्सया सर्वनिषेधे विशेषपरिशेषाभाव इति वाच्यम् । उपदेशत्वेन वीप्सोपपत्तौ तस्याः सगुणवाक्यविरोधेन सर्वनिषेधकत्वासंभवात् । अत एवाह भगवान् सूत्रकारः आवृत्तिरसकृदुपदेशादिति । विश्वं सत्यमित्यनेनेति । न चात्रनिषेधवाचकपदाभावः । शरमयं बर्हिर्भवतीत्यादाविव निषेधपदाभावेपि निषेधसिद्धेः । असद्वेति । नन्वत्र नञ्सत्त्वेपि तस्य नामपदसमभिव्याहृतत्वेन निषेधकत्वायोगः । मैवम् । घटो न पट इत्यादाविव नामपदसमभिव्याहारेपि तादात्म्यनिषेधवदत्रापि सदात्मता

(तरङ्गिणी)

निषेधोपपत्तेः। असूर्यंपश्या इत्यादौ निषेधार्थत्वाच्च। अन्यथेति। सगुणवाक्यस्य गुणनिषेधाय गुणानुवादकत्वे। ननु निषेधायानूदितस्यापि सार्वज्ञादेरवान्तरतात्पर्यवशात्सिद्धिः स्यादत आह। न हीति। ननु तात्पर्याभावेपि मानान्तरप्राप्तिविरोधयोस्त्यागहेत्वोरभावेन देवताविग्रहादेरिव तदत्यागमात्रेण सार्वज्ञादिसिद्धिः। मैवम्। त्वद्रीत्या निर्गुणश्रुतिविरोधेन मानान्तराविरोधाभावात्। त्वन्मतेप्युपक्रमादेः प्रत्येकं तत्वार्थलिङ्गत्वेन मानान्तराप्राप्तिरूपापूर्वत्वस्य तात्पर्यलिङ्गस्य सत्त्वेन तात्पर्याभावस्य वक्तुमशक्यत्वाच्च। तात्पर्याभावेऽनिषेध्यत्वेन तत्प्रतीतेरयोगाच्च। नह्यत्र ब्राह्मणहननादिवन्निषेध्यत्वेन प्रतीतिः। एतेन विशिष्टविधेर्विशेषणे तात्पर्येपि विशेषणस्येव सगुणवाक्याद्गुणस्य सिद्धिरिति निरस्तम्। तस्य विशेषणांशे पृथग्विधित्वाभावेपि विशेषणतात्पर्यकत्वात्। अत एव वार्तिके पूर्णमास्यधिकरणे।

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोप्येकयत्नत

इत्यादि नानेकविध्यंतरप्रसवसमर्थैकविशिष्टविधिप्रसादेनानेक गुणविधानमित्यन्तेन विशिष्टविधेर्विशेषणे तात्पर्यमुक्तम्। आत्मेत्येवेति। उपासनाविधेरुपास्ये तात्पर्याभावे आत्मेत्येवेत्यादि वाक्यादैक्यासिद्धिः स्यादित्यर्थः। ननु बृहदारण्यके तद्धेदं तर्ह्यव्याकृतमासीदिति खण्डिकायां हिरण्यगर्भादिपिपीलिकान्तशरीरसृष्टिमुक्त्वा जलपात्रेष्वाकाशस्येव सर्वशरीरेषु चिदात्मनः प्रवेशमुक्त्वा तं प्रविष्टं चिदात्मानं केपि न पश्यन्तीत्युक्त्वा ननु पश्यति सर्वोप्यात्मानमहं प्राणी द्रष्टा श्रोतेत्यादिनेत्याशंकायां प्राणनकर्तुर्दर्शनकर्तृत्वाभावेनासंपूर्णत्वात्तज्ज्ञानं नात्मज्ञानमित्युक्त्वा कथं तर्ह्यात्मा ज्ञातव्य इति जिज्ञासायां सर्वत्रानुगतः सर्वप्रत्ययसाक्षी चिदानन्दस्वभावो शेषविशेषशून्य आत्मा शब्दार्थो ज्ञातव्य इत्यभिप्रायेणोक्तमात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्तीति। अस्मिन्पूर्वोक्त आत्मन्येते प्राणादयोऽविद्यापगमे सत्यैक्यमापद्यन्त इति श्रुत्यर्थे कः प्रसङ्ग उपासनायाः पूर्ववाक्ये तन्न पश्यन्तीति ज्ञानस्य प्रकृतत्वात्। उत्तरवाक्ये चानेन ह्येतत्सर्वं वेदेति विदिश्रवणाच्च। मैवम्। प्राण इत्यादिनामानि परमेश्वरस्य न सर्वगुणसंपूर्णतां वदन्ति। किं तु प्राणनादिकर्मकर्तृत्वमेव वदन्ति। आत्मशब्द एव सर्वगुणसंपूर्णत्वं वदति। अस्य सर्वस्य गुणजातस्यायमात्मैव पदनीयः आश्रयो यस्मादतस्तं सर्वगुणवाचकेनात्मशब्देनैवोपासीतेति बृहदारण्यकभाष्य उक्तत्वात्। प्राणनाद्येकैकविदज्ञ इत्युक्त्वा कथं तर्ह्यात्मज्ञानं स्यादिति जिज्ञासायामात्मत्वोपासनेन तत्स्यादित्यभिप्रायेण तदेतत्पदनीयमस्य सर्वस्य यदयमात्माऽनेन ह्येतत्सर्वं वेद यथा पदेनानुविन्दे देवं कीर्तिं

(तरङ्गिणी)

श्लोकं विन्दते य एवं वेदेत्यात्मत्वोपासनस्य सर्वफलहेतुत्वमुच्यते । तदिदमुक्तमुपास्यत्वं श्रूयत इति । अनेन ह्येतत्सर्वं वेदेत्यस्य तु चक्षुराद्येकैकावच्छिन्नेनैकैक ज्ञानमात्मना तु सर्वं वेदात आत्मेत्येवोपासीतेत्यर्थः । ननु अथ योन्यां देवतामित्यत्र न स वेदेत्युत्तरवाक्ये भेददर्शिस्तिपरत्वम् । मैवम् । त्वद्रीत्यात्मभेदोपासननिन्दयाऽभेदोपास्ति परत्वात् । आनन्दादय इति । व्याख्यातमिदं सा खण्डार्थत्वभङ्गे । व्यतिहार इति । ननु तद्योहं सोसौ योसौ सोहमित्यत्र निकृष्टे जीवे उत्कृष्टब्रह्माभेदचिन्तनं जीवाभेदचिन्तनं युक्तमिति पूर्वपक्ष्येतरेतरानुवादे नेतरेतररूपताचिन्तनं विधीयते । न चैवमुत्कृष्टस्य निकृष्टत्व तिहारानुचिन्तनमात्रमुपदिश्यते फलायातो न निकृष्टता भवत्युत्कृष्टस्येति समाहितं व्यतिहारोविशिंषंति हीतरवदित्यत्र । उत्तरस्मिंस्तापनीय इति । देवा ह वै प्रजापतिमब्रुवन्नणीयां समित्यादिके । शैब्येति । अथ हैनं शैब्यः सत्यकामः पप्रच्छ स यो ह वैतन्मनुष्येष्वित्यादिके । काठक इति । पुरमेकादशद्वारमित्यादिके । माण्डूकेति । ओमित्येतदक्षरमिदं सर्वमित्यादौ । तद्गुण इति । ते प्रसिद्धाः सार्वज्ञादयो गुणा यस्य स सार्वज्ञादिगुणविशिष्ट इत्यर्थः । यस्तु स्वभाष्यस्थे तद्गुणशब्देऽतद्गुणसंविज्ञानं बहुव्रीहिमाश्रित्येश्वरसिद्धिरेवैक्यसिद्धौ निदर्शनं न गुणसिद्धिरित्याह स स्वीयभाष्यतट्टीकागतं तद्गुणपदं प्रमाणपदपाठमङ्गीकृत्य चकारेत्युपेक्षामहे । ननु मानान्तराविरोधादौ तुल्येप्यानन्दादयः स्वरूपभूतत्वाद्वास्तवा इत्यत आह । यदि चेति । तस्मादुपास्यत्वाविशेषान्निर्गुणब्रह्मण इव सगुणस्यापि तात्त्विकतास्तु । अन्यथा आरोपितविषयत्वेन सगुणोपासनवन्निर्गुणोपासनस्यापि भ्रमत्वापत्त्या परममुक्तिफलकत्वं न स्यादिति भावः । अत्र वैषम्यं शङ्कते । नन्विति । ननु निर्गुणोपास्तेर्भ्रमत्वे तद्विषयस्य निर्गुणब्रह्मणोऽसिद्धिरेव स्याच्छुक्तिरूप्यवदित्याशङ्क्याह । न चैवमिति । प्रकृतेपीति । सगुणोपास्तेर्भ्रमत्वेपि तां प्रति हेतुभूतस्य सगुणवाक्यजन्यज्ञानस्य प्रमात्वात्सगुणसिद्धिः स्यात् । मणिप्रभायामिति । मणिप्रभायां मणित्वस्याभावेन तत्र मणित्वं विषयीकुर्वन्भ्रमोस्तु ब्रह्म तु सगुणं निर्गुणं चेत्यतस्तदुभयविषयके ध्याने अपि सगुणनिर्गुणवाक्यजन्यप्रमे इव यथार्थे एवेत्यर्थः । ननु विशिष्टस्याब्रह्मत्वात्तद्विषयकं ध्यानमब्रह्मविषयकमित्याशङ्क्याह । न च ब्रह्मेति । ध्यानज्ञानयोः समानविषयत्वेन कार्यकारणभावावगमाद्भिन्नविषयकध्यानस्य न ब्रह्मज्ञानजन्यत्वं न वा ब्रह्मापरोक्षज्ञानजनकत्वं स्यात् । श्रवणादीनामिति । आदिपदेन मननं महावाक्योपदेशाश्च । न चोपास्तिर्विशिष्टविषया श्रवणादि तु विशिष्टाविषयमिति युक्तम् । धर्मादिश्रवणादीनामिव ब्रह्मविषयकाणमपि तेषां विशिष्टविषयकत्वनियमात् । ईक्षणेति । ईक्षणं कार्यं ध्यानं

(तरङ्गिणी)
कारणंतयोरेको र्थो विषयः । भामत्यामिति । शैब्यप्रश्नेयः पुनरेतमर्धचतुर्थमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि परे संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव सपाप्मना विनिर्मुक्तः सोऽथर्वभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत इत्यत्र ब्रह्मविषयकत्वेन निर्णीतस्येक्षणस्य यो विषयः स एव पुरुषमभिध्यायीतेति ध्यानस्य विषय इत्युक्तं भामत्यां तद्ध्यानस्य ब्रह्माविषयत्वे विरुध्येतेत्यर्थः। विशेष्यांशमादायसमानार्थत्वं त्वेकमात्रोंकाराद्युपासनसाधारणं नार्धचतुर्थमात्रोंकारोपासने विशेषमावहति। नन्वैक्यादेर्विध्यविधिरूपवाक्यद्वयबोधितत्वेन ध्येयत्वं ज्ञेयत्वं च सार्वज्ञादेस्तूपासनाविधिमात्रविषयत्वाद्धयेयत्वमेवेत्याशङ्क्य निराकरोति । न चैक्यादिकमिति । ब्रह्मण इति। नाम ब्रह्मेत्युपासीतेति विधेर्नाम्नि ब्रह्मत्वमारोप्योपास्यते न तु वस्तुतो नाम ब्रह्म। अत एव ब्रह्मवाक्यानां सत्यं ज्ञानमित्यादीनां नाम्नि समन्वयो नोच्यते । तथा ब्रह्मण्यपि कर्तृत्वादिकमारोप्योच्यते । न तु वस्तुतो ब्रह्म कर्तृ । एवं च कर्तृत्वपरवाक्यानां सदेव सोम्येत्यादीनां ब्रह्मणि समन्वयो न वक्तव्यः । न च कारणवाक्यानां कर्तृत्वादितटस्थलक्षणबोधनद्वारा ब्रह्मण्येव तात्पर्यमतस्तेषां समन्वयो वाच्य इति वाच्यम् । लक्ष्यसमसत्त्वस्य लक्षणत्वेनारोपितस्यालक्षणत्वात् । अन्यथा नाम्नोपि ब्रह्मत्वं लक्षणमिति तत्रापि तत्समन्वयो वाच्यः स्यात् । अपहतेति । न चापहतपाप्मत्वादीनां स्वरूपतया सोऽन्वेष्टव्य इति तच्छब्देन परामर्शसंभवाज्जिज्ञास्यत्वम् । न सत्यकामत्वादीनां तच्छब्देन परामर्शः । स्वरूपबहिर्भावादिति वाच्यम् । अप्रयोजकत्वात् । यथा यो लंबकर्णश्चित्रगुणश्चतमानयेत्युक्ते उभावपि परामृश्येते तच्छब्देन, तथापहतपाप्मत्वसत्यकामत्वादेरपि तच्छब्देन परामर्शसंभवात्सत्यकामत्वादेरपि स्वरूपत्वाविरोधाच्च । तस्येति । उपास्यत्वस्य । न च सत्यकामत्वादेर्भूताकाशेऽभावनिश्चयान्न तत्र तस्योपास्यत्वम् । बुद्धिपूर्वकारोपे तस्याप्रतिबन्धकत्वात् । अन्यथा वाचि धेनुत्वारोपोपि न स्यात् । एष भूताधिपतिरिति । एष भूतपाल एष सेतुर्विधरणः एषां लोकानामसंभेदाय तमेतं वेदानुवचनेनेत्यादिबृहदारण्यकवाक्ये सगुणस्य मुमुक्षुज्ञेयत्वमुक्त्वा तत्रैव एतमेव विदित्वा मुनिर्भवतीति तज्ज्ञानस्य मोक्षसाधनत्वोक्तेश्च । महिमा भुवीति । दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठित इत्यादि मुण्डकवाक्ये तद्विज्ञानेन परिपश्यन्ति धीरा आनन्द रूपममृतं यद्विभातीत्यत्र तच्छब्देन सार्वज्ञादिविशिष्टं परामृश्यते । तुरीयमिति ।

नात्मानं न परांश्चैव न सत्यं नापि चानृतम् ।
प्राज्ञः किंचन संवेत्ति तुरीयं तत्सर्वदृक्सदेति

(तरङ्गिणी)

माण्डूक्ये श्लोकः । ननु सत्यः सो अस्येति वाक्ये सार्वज्ञादीनां सत्यत्वं नोच्यते । किंतु समुद्र इव पप्रथ इति पूर्ववाक्योक्तस्य प्रथितत्वगुणस्येत्यत आह । अत्रेति । यदाहवनीये जुहोतीति वत्सत्यः सो अस्येत्यस्याप्यनारभ्याधीतत्वाविशेषात् । सत्यत्वविशिष्टप्रथितत्वमहिम-विधिरेवायमस्त्वित्यत उक्तम् । स इति । तथात्वे स इत्यस्यासङ्गतिः । नहि यदाहवनीये जुहोतीत्यत्राप्याहवनीयविशिष्ट होमविधिरित्युक्तं सामान्यविशेषनये । विधानात् ज्ञापनात् । ननु मत्स्वान इन्द्रगोमत इति पूर्ववाक्ये इन्द्रमिद्देवतातय इत्युत्तरवाक्ये च प्रकृतस्येन्द्रस्यास्त्येत्यनेन परामर्शान्नपरमेश्वरमहिमात्रोच्यते । न चेन्द्रशब्दः परमेश्वर इति वाच्यम् । पिबासुतस्यरसिन इतत्यस्य सूक्तस्यैन्द्रत्वात् । तथा चानुक्रमणिका । पिबचतुर्विंशतिर्मेधातिथिः प्रागाथंत्वित्यादिः । माचित्प्रगाथ इत्यादेर्मण्डलादित इन्द्रो देवोनुवर्तते । तथा चेन्द्रसूक्तरूपैन्द्रप्रकरणे-नेन्द्रेनियमितस्येन्द्रशब्दस्य न परमेश्वरपरत्वमित्यत आह । सत्यः सो अस्येत्यादेरिति । तदेव ब्रह्म परमं कवीनामिति तदेव ज्योतिषां ज्योतिरायुर्होपासतेमृतमिति च श्रुत्या ब्रह्म श्रुतिसूर्यप्रकाशकत्वलिङ्गयोर्विष्णुतोऽन्यत्र निरवकाशत्वात् । ज्योतिरधिकरणेति । ज्योतिश्चरणा-भिधानादित्यत्र चिन्तितं ज्योतिर्हृदय आहितं यदित्युक्तं ज्योतिरग्न्यादिर्वा परमात्मा वेति संशये ज्योतिः शब्दस्याग्न्यादिषु प्रसिद्ध्या अहश्च कृष्णमहरर्जुनं चेति सप्तर्चस्य सूक्तस्य वैश्वानरदेव-तत्वेन तन्मध्यवर्तिनो विमे कर्णेत्यादिमन्त्रस्यापि वैश्वानरदेवतत्वाच्च श्रुतिप्रकरणाभ्यामग्न्यादिरेव ज्योतिःशब्द इति प्राप्ते कर्णादि विदूरत्वरूपनिरवकाशलिङ्गेन सावकाशश्रुतिप्रकरणाबाधितेन ज्योतिःशब्दः परमात्मैवेति । तथात्रापीत्यर्थः । पूर्वोत्तरवर्तिविष्णुलिङ्गज्ञानाय दशर्चो व्याख्यायन्ते ।

पिबा सुतस्य रसिनो मत्स्वा न इन्द्रगोमतः ।
आपिर्नोबोधिसधमाद्यो वृधे३स्माँ अवंतु ते धियः

(ऋ० ८।३।१) हे इन्द्र सधमाद्यः सहितैरस्माभिः तर्पयितव्यः आपिः प्राप्तिस्थानं एवं भूतस्त्वं रसिनः द्वितीयार्थे षष्ठी रसिनं गोमतः गोमन्तं गोविकारैः पयः प्रभृतिभिः श्रपणद्रव्यैर्युक्तं नः सुतस्य सुतं सोमं पिब पीत्वा चमत्स्व तृप्तो भव । नोस्माकं वृधे वर्धनाय बोधि बोधयते त्वदीयाः धियः अनुग्रहात्मिकाः बुद्धयः अस्मान् अवन्तु रक्षन्तु ।। १ ।।

भूयाम तेसुमतौ वाजिनो वयं मा नः स्तरभिमातये ।
अस्मांचित्राभिरवतादभिष्टिभिरा नः सुम्नेषुयामय ।

(तरङ्गिणी)

हे इन्द्र वाजिनो हविष्मन्तो वयं त्वत्संबंधिसुमतौ शोभनबुद्धौ भूयाम भवाम । अभिमन्यत इत्यभिमातिः शत्रुस्तस्मै तदर्थं नः अस्मान् मा स्तः मा हिंसीः । स्तृहिंसायां माङि लुङिछान्दसः सिचोलुक् । अभिष्टिभिः प्रार्थनीयाभिः चित्राभिः बहुविधाभिः त्वदीयाभि-रूतिभिः अस्मान् अवतात् रक्ष । नः अस्मान् सुम्नेषु सुखेषु यामय । आयतात् कुरु ॥ २ ॥

इमा उ त्वा पुरूवसो गिरो वर्धंतु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभिस्तोमैरनूषत ।

हे पुरुवसो बहुधनेन्द्र मम मदीयाः इमाः गिरः शस्त्ररूपाः वाचः त्वां वर्धयन्तु तथा पावकवर्णाः अग्निसमानतेजसः विपश्चितो विद्वांसः उद्गातास्स्तोमैः स्तोत्रैः बहिष्पवमानादि-भिरभ्यनूषत अभिष्टुवन्ति । णुस्तुतौ कुटादिः ॥ ३ ॥

अयं सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे ।
सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ।

अयं इन्द्रः सहस्रसङ्ख्यैः ऋषिभिः सहस्कृतः बलेन युक्तः ख्यापितः । स चेन्द्रः समुद्रवत्प्रथितो बभूव । अस्येन्द्रस्य सः प्रसिद्धो महिमा यशोबलं सत्यः अबाधितः । तं महिमानं शवः सुखमिच्छन्नहं विप्रराज्ये विप्राणां राज्यभूतेषु यज्ञेषु गृणे स्तौमि ॥ ४ ॥

इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इंद्रंसमीकेवनिनो हवामह इन्द्रं धनस्य सातये ।

वनिनः संभजमाना वयं इंद्रमेव देवैस्तायते विस्तार्यत इतिदेवतातिर्यज्ञः तद्योगाय अध्वरे प्रयति उपक्रांते सति समीके सम्यक्गते संपूर्णे च यज्ञे सति धनस्य सातये लाभाय इन्द्रमेव हवामहे आह्वयाम ॥ ५ ॥

इंद्रो मह्ना रोदसी पप्रथच्छव इंद्रःसूर्यमरोचयत् ।
इंद्रे ह विश्वा भुवनानि येमिरइंद्रे सुवानास इंदवः ।

अयमिंद्रःशवसः आत्मीयस्य बलस्य मह्ना महिम्ना महत्वेन रोदसी द्यावापृथिव्यौ पप्रथत् अप्रथयत विस्तारितवान् । तथा इंद्रः सूर्यम् अरोचयत् । स्वर्भानुनावृतं सूर्यं तद्वधेनेंद्रोऽरोचयदिति माधवीयव्याख्यानेपींद्रः परमेश्वर एव । ज्योतिषामपि तज्ज्योतिरित्युक्तेः ।

(तरङ्गिणी)

इंद्रेह इंद्र एव विश्वानि भुवनानि येमिरे इंद्रेण नियम्यन्ते सुवानासः सूयमानाः इंदवः सोमाः इंद्र एव नियता भवन्ति ॥ ६ ॥

अभित्वा पूर्वपीतय इंद्रस्तोमेभिरायवः ।
समीचीनासऋभवः समस्वरन् रुद्रागृणंत पूर्व्यम् ।

आयवः मनुष्याः ऋत्विजः । पूर्वपीतये प्रथमं सोमपानाय त्वामेवाभि अभिष्टुवन्ति । समीचीनासः शोभनाः ऋभवः ऋभुर्विभ्वावाज इत्येते त्रयः त्वामेव समस्वरन् सम्यगस्तुवन् । तथा रुद्राः रुद्रपुत्राश्च पूर्व्यं पुरातनं त्वामेव गृणन्त अभ्यस्तुवन् । वृत्रवधे प्रहरगर्भावोजहिवीरयस्वेत्येवं रूपया वाचात्वां स्तुतवन्तः ॥ ७ ॥

अस्येदिंद्रो वावृधे वृष्ण्यं शवोमदेसुतस्य विष्णवि ।
अद्या तमस्य महिमानमायवोऽनुष्टुवन्ति पूर्वथ ।

अस्येत् अस्यैव यजमानस्य वृष्ण्यं वृषत्वं वीर्यं शवो बलं च इंद्रो वावृधे वर्धयति । कस्मिन् सति । विष्णवि विष्णौ । सुतस्य सोमस्य संबंधेन मदे हर्षे सति यद्यजमानदत्तसोमसंबंधेन विष्णौ हर्षो जातोस्ति । तस्य बलादिकमिन्द्रो वर्धयतीत्यर्थः । आयवः मनुष्याः पूर्वथ पूर्वकाले यथा तथैव अद्य अस्मिन् कालेपि तं पूर्वोक्तं सत्यभूतं महिमानम् अनुष्टुवन्ति आनुपूर्व्येण स्तुवन्ति ॥ ८ ॥

तत्त्वायामि सुवीर्यं तद् ब्रह्मपूर्वचित्तये ।
येनायतिभ्यो भृगवेधने हिते येन प्रस्कण्वमाविथ ।

सुवीर्यं शोभनवीर्यं तत् प्रसिद्धं ब्रह्मस्वरूपं त्वा त्वां पूर्वचित्तये स्वरूपानुभवार्थं यामि प्राप्तो भवामि । येन वीर्येण यतिभ्यः उपरतेभ्यः अयष्टृभ्यः सकाशादाहृत्य भृगवे भृगुनाम्ने ऋषये धने हिते स्थापिते सति येन वीर्येण प्रस्कण्वसंज्ञमृषिम् आविथ भृगवे धनं दत्तं प्रस्कण्वश्च रक्षित इत्यर्थः । ननु सुवीर्यं त्वां पूर्वचित्तये सर्वेभ्यः सर्वलाभाय तत् ब्रह्म अन्नं यामि याचामि । वर्णलोपः छान्दसः इति माधवीये व्याख्यातत्वान्नात्र ब्रह्मशब्दः परमेश्वर इति चेन्मैवम् । तदेव ब्रह्मपरममिति श्रुत्या ब्रह्मशब्दो विष्णाववधारित इत्युक्तत्वात् । स्वरूपानुभवप्रार्थनापेक्षयाऽन्न-प्रार्थनस्याल्पत्वाच्च । वर्णलोपस्य कल्प्यत्वाच्च । तस्माद्विष्णुरेव ब्रह्मशब्दः ॥ ९ ॥

(तरङ्गिणी)

येनासमुद्रमसृजो महीरपस्तदिन्द्र वृष्णि ते शवः ।
सद्यः सो अस्य महिमा न संनशे यं क्षोणीरनुचक्रदे ।

हे इंद्र तत् प्रसिद्धं ते त्वदीयं शवो बलं वृष्णि वर्षकम् अभीष्टफलदमित्यर्थः । तत्किम् । येन बलेन महीर्महतीः अपः उदकानि समुद्रं प्रतिगमनाय असृजः समुद्रो यावद्भिर्जलैः पूर्यते तावन्ति जलानि त्वं सृष्टवानित्यर्थः । अस्येंद्रस्य सः प्रसिद्धो महिमा महत्वं न संनशे न नाशनीयः नित्य इत्यर्थः । नशः कृत्यार्थे केन् प्रत्ययः । यं महिमानं क्षोणीः पृथिव्युपलक्षितं सर्वम् अनुचक्रदे अनुगच्छति । ऋ गताविति धातुः । पृथिव्यादिकं सर्वं यदधीनं वर्तत इत्यर्थः ॥ १० ॥ उत्तरत्रापि न हीन्वस्य महिमानमिन्द्रियं स्वर्गृणंत आनशुरित्यादि । स्वः सुष्टुवरणीयं प्राप्तव्यं एवं विधं इंन्द्रं गृणन्तः स्तुवन्तोपि जनाः अस्येंद्रस्य इन्द्रियं इंद्रस्य लिङ्गम् असाधारणधर्मभूतम् इन्द्रियमिन्द्रलिङ्गमित्यादिनिपातः । महिमानं न हि नु आनशुः नैव खलु प्रापुः । अश्नोतेर्लिटि व्यत्ययेन परस्मैपदम् । हिचेति तिङो निघाताभावः । उत्तरतापनीयादौ निर्गुणोपास्तिरस्ति । तथाचोपास्यत्वाविशेषे निर्गुणब्रह्मण इव सत्यकामत्वादेरपि तात्विकतास्त्वित्युक्तं तदयुक्तमित्याशङ्क्यपरिहरति । नच निर्गुणस्येति । निर्गुणस्योपास्यत्वे सगुणवन्निर्गुणस्याप्युपासनार्थमेवोपयोगः स्यान्नतु मोक्षहेतुज्ञान इति शङ्काभिप्रायः । निर्गुणज्ञानस्य मोक्षहेतुत्वमसिद्धमित्याह । धर्मीति । मोचकत्वोक्तेः । मोचकत्वोपपत्तेः । ननु सर्वज्ञत्वादिगुणोपासनस्य मोचकत्वमयुक्तं सगुणोपासनांतराणां तददर्शनादित्यतआह । उपासनान्तराणामिवेति । भूय एतमेवमुपास्ते सर्वेषां भूतानां मूर्धा राजा भवति सय एतमेवमुपास्तेनास्यान्नंक्षीयत इत्यादिद्दप्तबालाकिब्राह्मणादिषूक्तानां सगुणोपासनांतराणामन्योन्यविलक्षणं फलं श्रुतिबलाद्यथाङ्गीक्रियते तथा सर्वज्ञत्वोपासनस्याप्युपासनान्तरफलविलक्षणं मुक्तिरूपं फलं भविष्यतीत्यर्थः । सगुणेपीति । निर्गुणस्यारोपरूपोपासनविषयत्वे निर्गुणज्ञानान्मुक्त्ययोग इति यत्त्वयोक्तं तत्सगुणेपि सममित्यर्थः । ननु स एष नेति नेत्यात्मेत्याद्युक्त्वाऽभयं वै जनकप्राप्तोऽसीत्युक्तेर्निर्गुणज्ञानान्मुक्तिः श्रूयते न तु सगुणज्ञानात् । येन सगुणस्यारोपरूपोपासनविषयत्वे तज्ज्ञानान्मुक्त्ययोगो मां प्रत्यापाद्यः स्यादित्यत आह । पृथगिति । ननूक्तवचनानि ज्ञायमानत्वप्रयुक्तमुक्तिदत्वोपेतगुणवत्त्वेनोपसनकर्तव्यतापराणि नतु सगुणोपासनमोचकत्वपराणीत्याशङ्क्य परिहरति । तस्येति । निर्गुणज्ञानं मुक्तिसाधनमित्युपासनमात्रं कर्तव्यमित्येवंपरा निर्गुणश्रुतिर्नतु वस्तुतो निर्गुणवस्तुसाधिकेति स्यात् । एष इति । नित्यत्वसत्यत्वोपेतमहिमत्वेनोपासनमात्रपरा न तु वस्तुतो महिमनित्यत्वपरेत्यादि-

(तरङ्गिणी)

निरस्तम् । ननु निर्गुणोपासनस्य फलान्तराश्रवणान्मुक्त्यर्थत्वं सगुणस्य तु फलान्तरश्रवणान्न मुक्त्यर्थतेत्यत आह । श्रूयते चेति । शङ्कते । श्रुतीति । एकस्य वस्तुन उभयार्थत्वे उभयार्थत्वनिमित्तं संयोगपृथक्त्वं संयोगो विधिस्तस्य नानात्वम् । अनेकप्रयोजनकत्वबोधने यदि प्रमाणमस्ति तदा एकस्यानेकं प्रयोजनमिति जैमिनिसूत्रार्थः । उक्तेरिति । यदा पश्यः पश्यते रुग्मवर्णमित्यादिमुण्डकवाक्य इति शेषः । अन्यथेति । विहितस्यापि निषेधे प्राप्त्यभावेप्यनुवादत्वे च । असद्वा इत्यस्य सन्निधौ रसो वै स इति श्रूयते । नैवेहे-त्यादिबृहदारण्यके । आदिपदेनात्मैवेदमग्र आसीदित्यादिनैवेहेत्यादिनिषेधायानुवादकं स्यादि-त्यापादयति । उद्गीथेति । छान्दोग्ये ओमित्येतदक्षरमुद्गीथमुपासीतेत्युपक्रम्यास्य लोकस्य का गातिरित्याद्युक्त्वा स एषोऽनन्त इत्याद्युक्तम् । वेधातीति । सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्येत्याद्युक्तानि वेधादीन्युपासनायां नोपसंहर्तव्यानि भिन्नार्थत्वादिति परसूत्रार्थः । प्रकरणादिति । दर्शपूर्णमासयोः पूषा देवता नास्ति पूषानुमन्त्रणमन्त्रस्तु वर्तते तस्य प्रयोजनाभावाद्दर्शपूर्णमासप्रकरणादुत्कृष्य पूषदेवताके कर्मणि विनियोगः क्रियते यथा तथा वेधादिमंत्राणामाभिचारिके विनियोगस्तद्वदनन्तादिवाक्यमुपासनप्रकरणादुत्कृष्य ज्ञानप्रकरणे निवेश्यत इति यदि तदा सगुणवाक्यस्याप्युत्कर्षादिकमस्तु । अन्यथेति । असदुपासनार्थं गुणोक्त्यङ्गीकारे सार्वज्ञादेरीश्वरादन्यत्राभावादीश्वरेऽपि तदनङ्गीकारे तदसिद्धिरेव स्यात् । अचेतनेति । अचेतनानि जडानि शिलाजलादिमात्राणि । नन्वचेतनेभ्योऽपि यज्ञीयदर्भ-चर्मग्रावफलकस्रुगादिभ्यो लोके चौषधादिभ्यः फलदर्शनात् कथमचेतनोपास्तिरफला । मैवम् । सर्वत्र चेतनानां देवानामेवोपासितानां फलदत्वात् । तदुक्तं छान्दोग्यभाष्ये ।

दर्भचर्मादिगास्तेऽतो देवा एवाभिमानिनः ।
नह्यचेतनकं किंचित्फलदं स्यात् कदाचन ।
धेनुमिवायतीमिति । अष्टकामंत्रे
यां जनाः प्रतिनंदंति रात्रिं धेनुमिवायतीम् ।
संवत्सरस्य या पत्नी सा नो धेहि सुमङ्गली

स्वाहेत्यत्र रात्रौ धेनुशब्दो मन्त्रेणैव व्याख्यातः । इवशब्दात् तथा वाच्यपिगौणोऽस्तु । आयतीम् । आगच्छन्तीम् । एतेः शतरिरूपम् । अन्यत्रापि

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा सव प्रवयामुज्जिहानाः प्रभानवः सिस्रते नाकमच्छ ।

(तरङ्गिणी)

धेनुमिव आयतीम् आगच्छन्तीम् उषसं प्रति उषः काले इत्यर्थः । अयमग्निर्जनानामध्वर्य्वादीनां समिधा समिद्भिरबोधि प्रवृद्धोऽभूत् । वयां शाखां प्रोज्जिहानाः स्वाधिष्ठानं त्यजन्तो नाकमन्तरिक्षम् अच्छ आभिमुख्येन प्रसिस्रते प्रसरन्ति । उषः कालेऽध्वर्य्वादय उद्धृत्याग्निं समिद्भिर्वर्धयन्तीत्यर्थः । अत्राप्युषः काले धेनुशब्दो मन्त्रेणैव गौणो व्याख्यातः । छान्दोग्येति । असौ वा व लोको गौतमाग्निरित्यादौ स्वर्गादेरेवाग्नित्वमुच्यत इति प्रतीतिं वारयितुं नारायणादीनां पंचानामग्नित्वं प्रतिपादयतो नारायणादयः पंच क्रमात् पंचाग्नयः स्मृताः । अदनादगनेतृत्वान्नितरामचलत्वत इति भाष्यस्य रीत्येत्यर्थः । यत्त्वारोपेण मुख्यार्थत्वसंभवे गौणता न युक्तेति । तन्न । देवदत्तयजमानादिष्वपि सिंहत्वादेरारोपेण सिंहादिशब्दमुख्यतापत्त्या गौण्युच्छेदापत्तेः । श्रुतं हीति । ऋग्वेदादिसर्वविद्याध्यायिना नारदेन सोऽहं भगवोमन्त्रविदेवास्मि नात्मवित् श्रुतं ह्येवेत्यादि सोऽहं भगवः शोचामि तं माभवाञ्शोकस्य पारंतारयत्वित्यात्मनि पृष्टे नारदं प्रत्यनात्मानमुपदिशन् सनत्कुमारः प्रतारकः स्यात् । यथाचेति । केनेषितोपनिषदि ।

अन्यदेव तद्विदितादथो विदितादधि ।
इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ।
यद्वाचानभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धिनेदं यदिदमुपास ते ।

इत्यादिनिरन्तरवाक्येषु यथा ज्ञाननिषेधोऽश्रौतज्ञानादिपरस्तथोपासनानिषेधोप्यश्रौतोपासनस्येत्यर्थः । सामान्यत इति । अपच्छेदादिन्यायाः प्रथमपरिच्छेदे विवृताः । श्रुतेर्गुणाभावरूपगुणबोधकत्वेन सर्वथा गुणनिषेधकत्वायोगात् संकोचस्यावश्यकतया विहितेतरगुणनिषेधकत्वं लक्षणयाऽखण्डार्थत्वेन विशेष्यमात्रपरतया विरोधाभावश्चेत्यादि तत्रोक्तम् । धर्मीति । केनचिच्छब्देन ब्रह्म निर्दिश्य तत्र गुणा निषेध्याः तथाच येन ब्रह्म निर्दिश्यते तच्छब्दप्रवृत्तिनिमित्तरूपगुणलाभे पुनस्तत्र गुणनिषेधो न युज्यते । ननु धर्मिनिर्देशरूपशब्दप्रवृत्तिनिमित्तं ब्रह्मणि प्रतीतमपि न विवक्षितमतो न धर्मिग्राहकबाध इत्याशङ्क्य निराकरोति । न चोद्देश्येति । ग्रहेति । एतच्च प्रागुपपादितम् । ग्रहैकत्वेति । येन विशेषणेन विनोद्देश्यस्वरूपं न ज्ञायते तादृशमुद्देश्यविशेषणमपि विवक्षितमेव । यथा ग्रहत्वमित्यर्थः । अत एवोक्तमिति । यस्योभयं हविरार्तिमार्च्छेदैंद्रं पंचशरावमोदनं निर्वपेदित्यत्र यस्य कस्यचिदार्तेः सदा संभवेनानिमित्तत्वा-

(तरङ्गिणी)

दार्तेर्हविषा विशेषणं व्यावर्तनं हविरार्तिरित्येवं मृष्यामहे अङ्गीकुर्म इत्यर्थः । उभयत्वं तु न विशेषणम् । तेनैकैकहविरार्तिरपि निमित्तम् । ननु प्रवृत्तिनिमित्तानर्पकेण लक्षकेण शब्देन ब्रह्म निर्दिश्य गुणा निषिध्यन्तेऽतो न धर्मिग्राहकविरोध इत्यत आह । लक्षकेणापीति । अन्यथेति । असंकीर्णस्वरूपानुद्देशे । च्छागेति । एतदुक्तं प्राक् । उपसंहार इति । सामान्यतो गुणनिषेधस्त्रैगुण्यनिषेधे हेयगुणनिषेधे वोपसंह्रियताम् । यथा पुरोडाशं चतुर्धा करोतीति श्रूयते । पुनश्च शाखान्तरे आग्नेयं चतुर्धा करोतीति । तत्र सामान्यतः पुरोडाशस्य चतुर्धाकरणं श्रुतमाग्नेयपुरोडाशे उपसंह्रियते । आग्नेयपुरोडाशं चतुर्धा करोतीत्यर्थः । तथेहापि । तदुक्तं वार्तिके ।

सत्यमस्त्यविशेषेण श्रुतिर्येयमुदाहृता ।
विशेषे स्थाप्यते नित्यं सा तु शाखान्तरी यथा ।

तथा ।

अवश्यमेव सामान्यं विशेषं प्रतिगच्छति ।
गतमात्रं च तत्तेन विशेषे स्थाप्यते ध्रुवमिति ।

अन्यथेति । विशेषबलादेकतरपरिशेषाभावासमर्थने । आनन्देति । आनन्दस्फुरणयोरेकतरस्य परिशेषादानन्दस्फुरणाभावः । साक्षीचेतेति ।

तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ।
न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च विद्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच
इत्यादिना बहुतमा गुणा उक्ताः । साक्षी चेतेत्यादिवाक्यात्पूर्वम्
अनाद्यनन्तं सलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः
इत्यादिना बहुवाक्यैस्तज्ज्ञानान्मुक्तिश्चोक्ता । उत्तरत्र च ।
एको वशी निष्क्रियाणां बहूनामेकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषामिति

बहूनां गुणानां तज्ज्ञानान्मुक्तेश्चोक्तेः । शाश्वतसुखप्राप्तेरुक्तत्वात् सर्वमेतत् श्वेताश्वतरोपनिषद्युक्तम् । उपांशुयाजन्यायः प्रागुक्तः । साक्षित्वादेरिति । श्रुतिबोधितस्यातात्त्विकत्वमयुक्तम् ।

(तरङ्गिणी)

अवाक्येति । वाक्यरूपमूलप्रमाणरहिता युक्तिर्नेष्यते । अनुव्याख्याने । युक्तो युक्त इत्यादिश्लोके युक्तिश्च त्रिविधा मतेति चतुर्थपादस्य पाठः । सविशेषनयादिति । सविशेषणे हीतिन्यायः । बाधकसद्भावाद्ब्रह्मणि गुणा नाङ्गीक्रियन्त इति द्वितीयपक्षस्य दूषणमुपसंहरति । तस्मादिति । सौहृदादिति । अस्य साधुतोक्ता । अन्यथेति । भिन्नाभिन्नादिकुतर्कैर्ब्रह्मधर्मखण्डने । ज्ञानमात्रत्वे । ज्ञानादभेदे । अखण्डार्थत्वेति । तथाच ब्रह्मज्ञानमपि न सिध्येदिति भावः । निर्विशेषत्वमेतेनेति । यथा मूकोऽहमित्येतत् स्वक्रियाविरुद्धं तथा निर्विशेषं ब्रह्मेत्यपि । तत्र हेतुः एतेन निर्विशेषत्वरूपविशेषेणापातेन हेतुनेत्यर्थः । तदुक्तमिति । युक्तिपादे । यदि धर्मा न केचन । ब्रह्मणो नैव जिज्ञास्यं जिज्ञासाधर्मनिर्णयः । इदमित्थमित्याद्युक्तम् । नन्वित्थमिति ज्ञानं जिज्ञासाफलं चेत् ब्रह्मणीत्थं भाव एवाङ्गीकार्यः किं धर्मेणेति मन्दाशङ्कानिरासायोक्तम् । इत्थं भावो हीति । ननु माभूद्व्याप्यवत्त्वज्ञानप्रयुक्त व्यापकवत्त्वज्ञानरूपा ब्रह्माणि जिज्ञासा । तथापि धर्मांतरनिवृत्त्या भ्रान्तिप्रसक्तधर्मान्तरनिवृत्तिज्ञानरूपा जिज्ञासा निर्धर्मकेपि स्यादेवेत्यत उक्तं न चेदिति अस्येत्यनुषज्यते । अस्य ब्रह्मणः प्रतियोगिता विरोधिता । धर्मान्तरव्यावृत्तिमत्तेत्यर्थः । अयमर्थः । निराधारया कस्यचिद्धर्मस्य निवृत्त्या निराधार-धर्मान्तरनिवृत्तिरनुमातुमशक्येति ब्रह्मनिष्ठयैव ब्रह्मनिष्ठा साऽनुमातव्या । यदि चास्य धर्मो न स्यान्न तर्हि व्यावृत्तिमत्तापि स्यादिति । केचिदिति । आरोपाधिष्ठाने ब्रह्मणीदंत्वादयः सत्याः स्वीकार्याः । तथा प्रधानज्ञानं विना भ्रान्तेरयोगाद् ब्रह्मणोऽन्यत्र सार्वज्ञाभावाद् ब्रह्मणि सार्वज्ञारोपार्थं ब्रह्मण्येव सत्यं सार्वज्ञमङ्गीकार्यम् । तथा च विरोध इत्यर्थः । धर्मादीनामिति । आदिपदेन प्रधानम् । अत्र दर्शन इत्यस्यानन्तरम् इदं तदादिधर्मित्वे धर्मोऽन्यः कल्प्यतेऽत्र हि इत्यर्धः पठ्यते । युक्तिपादे । अनन्तरं सर्वधर्मविहीनस्येत्यर्धः पठ्यते । तच्चेति । उक्तं ह्यनुव्याख्याने । यदि स्युस्तादृशा धर्माः सर्वज्ञत्वादयो न किमिति । तादृशाः अदृश्यत्वा-दयोऽभावरूपाः । असतः अविद्यमानान् । श्रुतिं गुणान्वेत्यपि धन्वनोमे किम्बात्मभूतस्त्विति दर्शयन्यः । धनुश्चकर्षाश्रुतिदूषणस्य भिदे सदेहावतु मां स रामः ॥ ब्रह्मणोनिर्गुणत्वभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

ननु वेदान्तानां सखण्डार्थत्वेऽपि कथं ब्रह्मणोऽनन्तगुणत्वम्? तत्र प्रमाणाभावात् बाधकसद्भावात् । न ह्यप्रामाण्यकमनेकबाधकोपेतमङ्गीकर्तुमुचितम् । तथात्वे नरविषाणाद्यप्यङ्गीकर्तव्यं स्यादित्याशंकायां तत्रासिद्धिं वक्तुं प्रतिजानीते ॥ तथा हीति ॥ अत्र श्रुतीनामित्यादीनां सत्त्वादित्यनेनान्वयः । अत्र

(कण्टकोद्धारः)

सर्वत्रानुमानेषु ब्रह्मशब्दोवेदान्ततात्पर्यविषयवस्तुपरोऽतो ब्रह्मशब्दवाच्यं शबलं चेत् पक्षः, तदा सिद्धसाधनम्। यदि लक्ष्यं निर्गुणं तदाऽश्रयासिद्धिः । भवद्भिस्तादृशस्यानङ्गीकारात् । निर्गुणे सगुणत्वसाधने बाधश्चेत्यादिदूषणमलग्नकं वेदितव्यम् । न चैतेष्वनुमानेषु धर्मादिपदानां यत्किञ्चिद्धर्म्यादिपरत्वे घटादिसमसत्ताककल्पितधर्मवत्त्वेन सिद्धसाधनम् । ब्रह्मपरत्वे साध्याप्रसिद्धिः । घटादिधर्मे ब्रह्मसमानसत्ताकत्वादेरप्रसिद्धेरिति वाच्यम् । धर्म्यादिपदानां समभिव्याहृतपरत्वादन्यथा स्वप्रागभावेत्यादि परोदाहृतानुमानेष्वप्युक्तदोषापत्तेः । न च पदार्थत्वस्यासत्यपि भावात् व्यभिचार इति वाच्यम् । सत्पदार्थत्वस्य विवक्षितत्वात् । तस्य चासत्यभावात् । न चेश्वरपक्षके सिद्धसाधनम् । ईशानः सर्वविद्यानामित्यादौ ईश्वरपदतात्पर्यविषयस्य विवक्षितत्वात् । तस्य च समस्तगुणपूर्णत्वस्य त्वयाऽनंगीकारात् । साध्ये च ज्ञानाबाध्येत्यपि विशेषणम् । तेन न कल्पितगुणवत्त्वेन सिद्धसाधनम् । एवमुत्तरत्रापि द्रष्टव्यम् । अप्रयोजकत्वपरिहारार्थमुक्तम् विपक्ष इति । तथा च विपक्षबाधकसत्त्वात् नोपाध्यादिशङ्का युक्तेति भावः ॥ निर्धर्मकत्वरूपेति ॥ अनवस्थापरिहारश्च धर्मधर्मिणोरभेदेन वा बीजाङ्कुरन्यायेन वा द्रष्टव्यः । ननु प्रमेयत्वादीनां निर्धर्मकत्वात् तत्र हेतोर्व्यभिचार इत्यत आह ॥ प्रमेयत्वाभिधेयत्वादीनामिति ॥ ननु गोत्वादौ न व्यावर्तको धर्मः तस्य स्वत एव विलक्षणत्वात् । तथा च तत्र व्यभिचार इत्यत आह ॥ गोत्वादेरपीति ॥ किञ्चिदिति नियमोऽसिद्ध एवेति भावः ॥ न चेति ॥ तथाच न वेदान्ततात्पर्यविषयस्य सगुणत्वमिति भावः ॥ सगुणेति ॥ तत्र प्रमाणाभावात् वेदान्तैश्च सगुणस्यैव प्रतिपादनादिति भावः । ननु मया सगुणब्रह्मातिरिक्तं निर्गुणं ब्रह्म स्वीक्रियत इत्यत आह ॥ त्वत्पक्ष इति ॥ गुणानाञ्च तात्त्विकत्वस्य प्रतिपादयिष्यमाणत्वादिति भावः ॥ परात् परत्वोक्तेः ॥ सगुणस्यैवेति शेषः ॥ अन्यथेति ॥ सगुणसत्यादिवाक्यानां परापरब्रह्मविषयत्व इत्यर्थः । न चेष्टापत्तिः । अपसिद्धान्तात् पूर्वतन्त्रविरोधाच्च । ननु न मया परापरं व्यक्तिद्वयं स्वीक्रियते । किंत्वेकस्यैव दशाभेदेन सगुणत्वनिर्गुणत्वे यथैकस्य घटस्य श्यामत्वरक्तत्वे । अतो नेदमनिष्टापादनमित्याशंक्य निषेधति ॥ न चेदानीमिति ॥ ननु गुणानामपगमे निर्गुणमेव सेत्स्यतीत्यत आह ॥ ज्ञानमिति ॥ नन्वेषा श्रुतिर्ब्राह्मणस्य महिम्नो नित्यत्वं प्रतिपादयति न ब्रह्मगुणानां तत्र ब्रह्मज्ञापकाभावादित्यत आह ॥ एवेति ॥ ननु लिंगप्रकरणाभ्यां ब्रह्मपरत्वेऽपि मध्ये प्रासंगिकोक्तिः किं न स्यादिति चेन्न । अन्यस्य नित्यमहिमत्वासंभवात्, त्वयाऽनङ्गीकाराच्च । न च ब्रह्मपरत्वे कथं ब्राह्मणशब्दः तस्मिन् ब्राह्मणत्वजातेरसंभवादिति वाच्यम् । पत्यादिशब्देभ्य इत्युक्तन्यायेन सर्वस्योपपत्तेः । नन्वियं श्रुतिर्नेनित्यत्वपरा । किन्तु बहुकालीनत्वपरेति । अतः अस्या बृहदारण्यके स्वोक्तार्थे सम्मतित्वेनोदाहृतत्वेनासंदिग्धार्थत्वान्निश्चितं हि दृष्टान्तत्वेनोपादीयत इत्याह ॥ बृहदारण्यक इति ॥ अन्यथेति ॥ एवं प्रमाणेन नित्यत्वे सिद्धेऽपि चेद्दशाभेदेन व्यवस्था स्वीक्रियत इत्यर्थः । औपाधिकत्वं किमुपाधावनुभूयारोप्यमाणत्वमथवोपाधिकृतत्वम्? आद्य आह ॥ औपाधिकत्वस्येति ॥ द्वितीय आह ॥ उपाधिकृतत्वेति ॥ अन्तः करणेति ॥ अन्यस्यचोपाधेरसंभवादिति भावः । न च विद्यैवोपाधिरिति वाच्यम् । तस्याः प्रलयेऽपि सत्त्वेन तदापीक्षितृत्वापत्तेरपसिद्धान्ताच्च ॥ अन्यथेति ॥ प्रमाणसिद्धस्य

(कण्टकोद्धारः)
स्वाभाविकत्वानङ्गीकार इत्यर्थः ॥ न चेति ॥ न च पौनरुक्त्यम् । पूर्वं सोपाधिकाध्यासनिरासाय, अत्र तु निरुपाधिकाध्यासनिरासाय शङ्क्यत इत्यर्थभेदात् । यद्वा पूर्वं सामान्येन सोपाधिकत्वमाशङ्कितम् । अत्र तु विशेषत आशङ्क्यत इति भेदात् ॥ अन्यथेति ॥ प्रामाणिकस्य तात्विकत्वस्यानङ्गीकारे इत्यर्थः । अतात्त्विकविषयत्वेन विरोधपरिहारः क्वापि न दृष्ट इत्याह ॥ किञ्चेति ॥ तथाङ्गीकारे तव सम्मतपूर्वतन्त्र व्याकरणविरोध इत्याशयेनाह ॥ उक्तं हीति ॥ सामान्येनोक्तं विशदमाह ॥ तथाहीति ॥ कृष्णलादाविति । दशमाध्याये प्रथमपादे प्रथमाधिकरणे चिन्तितम् । विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् । प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः इति श्रूयते । तत्र सन्देहः अवघातः कर्तव्यो न वेति । पूर्वपक्षस्तु कर्तव्योऽवघातः । प्रकृतिवत् कुर्यादिति चोदकेन चरुधर्माणां प्राप्तत्वात् । किञ्च चरुशब्दोऽचरौ चरुधर्मविधानार्थः । न च द्वारबाधात् कथमवघात इति वाच्यम् । वचनात् श्रपणवत् वचनात् लुप्तार्थस्यापि कर्तव्यत्वादिति । सिद्धान्तस्तु– नावघातो द्वारबाधात् । न च चोदकेन तत्प्राप्तिः ।

तस्य अवघातवर्जं प्रकृतिवत् कुर्यादिति सङ्कोचसंभवात् । न च चरुशब्दात् तत्प्राप्तिः । विनाप्यवघातेनालुप्तार्थैरेव धर्मैः वैशद्येन चोपपद्यमानश्चरुशब्दो नावघातं कल्पयितुमलम् । श्रपणं तु घृतं श्रपयतीत्याहत्य विधानात् क्रियत इति वैषम्यम् । तथाच न तत्रापि सर्वथा बाधः । किन्तु सङ्कोच एवेति भावः ॥ एवमिति इदमधिकरणं प्रत्यक्षबाधस्थले विवृतम् । तथाच गौणोऽपि तात्विक एवार्थो न त्वारोपितः । तथा च नाप्रामाण्यमिति भावः ॥ एवं व्याकरणेऽपीति ॥ तथा च पूर्वादेः परादिना सङ्कुचिततात्विकार्थविषयत्वरूपो बाधो न त्वरोपितार्थविषयत्वादिरूप इत्यर्थः । अत्र यद्यपि सुग्लः सुम्न इत्यत्र श्याद्व्यधा इति आकारान्तलक्षणो णप्रत्ययः उत्सर्गः । तं परमपि अनुपसर्गे सावकाशं बाधित्वा अनवकाशत्वादातश्चोपसर्गे इति क एव भवति । तथापि वृक्षाभ्यां वृक्षे पित्वादौ चारितार्थयोर्दीर्घत्वेत्वयोः तुल्यबलयोः पूर्वपरयोः वृक्षेभ्य इत्यत्र उभयप्रसंगे परमेत्वमेव भवति । रधेर्णिच् रधिजभोरचीति नुम् कृताकृतप्रसङ्गित्वान्नित्यः । उत उपधाया इति वृद्धिरनित्या नुमिकृते अकारस्यानुपधात्वादप्राप्तेः । अत्र नित्यत्वान्नुमेव भवति । अशिश्रियत् अदुद्रवत् इत्यत्र अंतर्भूत चङपेक्षत्वात् इयङ्वङौ अन्तरंगौ बहिर्भूततिङपेक्षत्वात् बहिरंगं लघूपधगुणं परमपि बाधेते । अपवादादीनां परस्परसंप्रधारणायां नित्यादन्तरंगः तस्मादप्यपवादः । अत एवोक्तं– 'परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव । नित्यान्तरंगोपगमेऽन्तरंगमिग्लक्षणं गुणं प्रतिपद उवङ् बाधत इति क्रमेण उदाहरणानि ज्ञातव्यानीत्यर्थः । ननु शास्त्रान्तरे यथा तथा अस्तु । ब्रह्ममीमांसायान्तु अतात्विकविषयत्वादिरूप एव बाध उच्यत इत्यत आह ॥ एवमिति ॥ अन्यथेति ॥ यदि ब्रह्मणि श्रूयमाणा धर्मा आरोपिता एव तदेत्यर्थः । कैमुत्यन्यायेनापि अतात्विकविषयत्वरूपो बाधो वक्तुं न शक्यत इत्याह ॥ किञ्चेति ॥ न तौ पशाविति ॥

दशमाध्यायेऽष्टमपादे चिन्तितम् । अपूर्वे चार्थवादः स्यात् । दर्शपूर्णमासयोः आज्यभागौ अग्नीषोमाभ्यां नयतीति विधाय श्रूयते । न तौ पशौ करोति न सोमे नाध्वरे इति । तत्र सन्देहः । किमयं प्रतिषेधः?

(कण्टकोद्धारः)

पर्युदासः? अर्थवादो वा इति । पूर्वपक्षस्तु– असमस्तत्वात् प्रतिषेधः । न च तथात्वे विकल्पः स्यादिति वाच्यम् । प्रतिषेधासंभवेऽपि पर्युदासत्वसंभवात् । न चासमस्तत्वं बाधकं, नानुयाजेषु इत्यादौ पर्युदासस्य समर्थितत्वात् । ननु सोमस्योपदेशातिदेशाभ्यामाज्य भागप्राप्त्यभावादुभयमयुक्तमिति चेत् यत्यं साक्षात् सोमे नाज्यभागौ स्तः । दीक्षणीयादिद्वारेण तु आज्यभागाभ्यां सोमस्यास्ति संबंधः । सः प्रतिषिध्यते तदनेन प्रकारेण सोमांगेषु दीक्षणीयादिषु आज्यभागप्रतिषेधः पर्युदासो वेति । सिद्धान्तस्तु– न सोम इति न प्रतिषेधः । न च पर्युदासः । सोमे उपदेशातिदेशाभ्यामाज्यभागयोरप्राप्तेः । सोमे आज्यभागयो-रनाम्नानेनोपदेशासंभवात् । सोमस्य दर्शपूर्णमासविकृतित्वाभावेनातिदेशासंभवाच्च । न च दीक्षणीयादिषु तयोरतिदेशतः प्रसक्त्या सोमद्वारा तेषु प्रतिषेधादिः शक्य इति वाच्यम् । तथासति न सोम इत्यनेनैव अग्नीषोमीयेऽपि पशौ प्रतिषेधसिद्धस्तत एव तद्विकारेषु निरूढपशुष्वपि प्राप्त्यभावात् न पशाविति निषेधोऽनर्थकः स्यात् । सोमशब्दस्यैवं लक्षणा स्यात् । न च वाजपेयस्येव यूपेनांगद्वारकः सोमाज्यभागसंबंधो निर्दिश्यत इति वाच्यं षष्ठी हि संबंधमात्रमभिधत्ते । सप्तमी तु आधाराधेयभावमेवा न चांगांगित्वेनाधाराधेयभावः संभवति । तस्मादंगांगि भावनिर्देशोऽयम् । स चाप्राप्त इति तत्प्रतिषेधपर्युदासावयुक्तौ । तस्मात् न पशावित्यात्यायमर्थवादः । यथा सोमस्य नाज्यभागौ एवं पशाविति । अथ न पशाविति किमयं प्रतिषेधः पर्युदासो वा? विकल्पपरिहाराय पर्युदास इति केचित् । तदयुक्तम् । अनन्तरवृत्तस्य आज्यभागांगविधेः केवलदर्शपूर्णमासविषयत्वेन पशुसाधारण्याभावात् । न च पाशुकस्य प्रकृतिवच्छब्दस्य अयं वाक्यशेषः । तस्यासंनिधानात् । तच्छेषत्वेन सोम इत्यर्थवादः नावकल्प्यते । न ह्येवं संभवति । यथा सोमस्याज्यभागव्यतिरिक्तमंगमैष्टिकं कर्तव्यं तथा पशोरपीति । सोमस्यापूर्वत्वादैष्टिकांगाभावात् । संभवत्येवं यथा सोमस्याज्यभागौ न कर्तव्यौ तथा पशोरपीति । तस्मात् प्रतिषेधः । प्रतिषेधश्च न प्राप्तिमन्तरेति प्राप्तिरनुमीयते । तथाचोन्नीतप्राप्तेर्न सर्वथा बाधो युज्यत इति विकल्पः समाश्रीयते । एवञ्चोन्नीतप्राप्तेः यदा न सर्वथा बाधः तदा किमु वक्तव्यं प्रत्यक्षसिद्धगुणानामिति । ननु सगुणवाक्येन गुणा अनूद्यन्ते । अतः तस्य तत्प्रापकत्वाभावात् न तस्य बाध इति शङ्कते ।। नन्विति ।। एकवाक्यत्वासंभव एव वाक्यभेदस्याश्रयणीयत्वादिति भावः । अनुवादो हि वादपूर्वकः । न हि सत्यकामत्वादिगुणाः अन्यप्रमाणेन प्राप्ताः । तथा चानुवादासंभवात् सगुणवाक्यस्य तत्प्रापकत्वात् अतात्विक विषयत्वे बाध एवेत्याह ।। सत्यकामत्वादीनामिति ।। ननु श्रुतिप्राप्तमेव श्रुत्या निषिध्यते चेत् को दोष इत्यतः अतिप्रसंग एवेत्याह ।। श्रुतिप्राप्तस्येति ।। किञ्च निर्गुण वाक्यस्य सगुणवाक्यमेव बाधकं किं न स्यात्? नच विधेर्निषेधबाधकत्वं न दृष्टमिति वाच्यम् । मृडमृदेति विधेः न क्त्वा सेट् इति निषेधबाधकत्वस्य दृष्टत्वादित्याह ।। किञ्चेति ।। ननु उक्तातिप्रसंगः तदा स्याद्यदि श्रुतिप्राप्तस्य श्रुत्या निषेध इति ब्रूमः । किन्तु तदाक्षिप्तस्ये त्याशंक्य निषेधति ।। न चेति ।। अन्यथेति ।। यदि श्रुत्याक्षिप्तस्य श्रुत्यानिषेध इत्यर्थः । तथाचातिप्रसंग एवेति भावः ।। किञ्चेति ।। न च ज्ञानाद्यभावे कर्तृत्वानुपपत्तेः सर्वकर्तृत्वं न श्रुत्यर्थ इति वाच्यम् । शरीराद्यभावेपि ज्ञानवत् ज्ञानाद्यभावेऽपि कर्तृत्वोपपत्तेः ।

(कण्टकोद्धारः)

अभ्युपगमश्चायमित्यदोषः । ननु सगुणवाक्यं कथं निर्गुणवाक्यस्य बाधकम्? न च सामान्यतः निषेध श्रवणे विशेषविषयत्वेन सावकाशत्वमन्याय्यमिति वाच्यम् । स्ववाक्ये एव गुणानां विहितत्वेन सामान्यनिषेधायोगादित्यत आह ।। किञ्चेति ।। अन्यथेति ।। यदि सगुणवाक्यस्य सार्वज्ञयादौ अर्थान्तरेऽपि तात्पर्यं न स्यादित्यर्थः । ननु श्रुतितात्पर्याभावेऽपि अनुमानादिसिद्धसार्वज्ञ्या घटादेरिव व्यावहारिकत्वं गुणपरत्वस्याप्यङ्गीकारे किं बाधकमिति तत्राह ।। उपासनाया इति ।। किमत्र यत्रोपासना श्रूयते तत्र न गुण परत्वमित्युच्यतेऽथवा सर्वत्रोपासना श्रूयते इति क्वापि गुणपरत्वं नेति । अथवा क्वचिच्छ्रवणात् यत्रोपासनं न श्रुतं तत्रापि कल्प्यत इति वा? नाद्य इत्याह ।। उपासनाया इति ।। व्याख्यानरूपस्मृत्या विरोधात् उभयत्र तात्पर्यं स्वीकर्तव्यं वाक्यभेदश्च सोढव्य इति भावः । द्वितीय आह ।। सर्वज्ञ इतीति ।। तृतीय आह ।। कल्पनस्येवेति ।। यद्वाक्यं यदर्थोपासनाकर्तव्यतापरं तन्न तदर्थ तात्पर्यकमिति व्याप्तेः व्यभिचारमप्याह ।। किञ्चेति ।। ननु नोदाहृतवाक्येष्वद्वैतस्योपास्यत्वमुच्यते किन्त्वन्यथोपासननिषेध एवेति चेन्न । विशेषनिषेधस्य शेषविधिनान्तरीयकत्वेन भेदोपासननिषेधेऽद्वैतोपासनमेव विहितं भवतीति । तथापि स्पष्टव्यभिचारस्थलान्तरमाह ।। किञ्चेति ।। प्रकृते संगमयति ।। एवञ्चेति ।। ननु कारणांतरबलात् सत्यकामत्वादीनामवास्तवत्वमुच्यत इत्यत आह ।। नचेति ।। कारणान्तरमेवाशंक्य निषेधति ।। यदि चेति ।। न च शक्त्यादीनां सोपाधिकत्वान्न स्वरूपत्वमिति वाच्यम् । ज्ञानादीनामपि तथात्वापत्तेरिति । ननु ज्ञानादीनां स्वरूपत्वे विज्ञानमानन्दं ब्रह्मेति प्रमाणमस्ति । न तु बलादीनां स्वरूपत्वे इत्यत आह ।। ज्ञानात्मक इति ।। नन्विति ।। तथा च निर्गुणोपासनस्य फलसंवादित्वात् निर्गुणत्वं तात्विकं यदुपासनं फलसंवादि तस्य तात्विकत्वादिति । नचैवं मणिप्रभायां मणित्वस्य तात्विकत्वा पत्तिरिति वाच्यम् । तस्य बाधादिति ।। प्रकृतेऽपीति ।। तमेवं विद्वानित्यादिना सगुणज्ञानस्य य एवं विद्वानित्यादि ना तदुपासनस्य च फलवत्त्वादिति भावः ।। ब्रह्मेति ।। यद्यपि कार्यस्य मिथ्याविषयत्वे कारणस्यापि मिथ्याविषयत्वमिति न नियमः बाधानवतारदशायां गंधप्रागभावावच्छिन्नो घटो गंधवानित्यनुमितेरयथार्थत्वेऽपि परामर्शस्य यथार्थत्वात् । तथापि श्रवणादीनामेकविषयत्वेन हेतुत्वात् अन्यथातिप्रसंगात् तथोक्तमिति भावः । प्रकारान्तरेण वैषम्यं शंकते ।। नन्विति ।। उभयत्राप्युपास्तिधातुश्रवणेऽविशिष्टे वैषम्यकल्पनानुपपत्तेः । न च निर्गुणस्य निराकारत्वात् ध्यानविषयत्वानुपपत्या तथा कल्प्यते इति वाच्यम् । ज्ञानस्यापि तद्विषयत्वानापत्तेः । निर्गुणत्वेनैव ध्यानोपपत्तेश्च । एतदेवाभिप्रेत्याह ।। सममिति ।। ननु ऐक्यविषये वस्तुतत्वनिष्ठवाक्यस्य विद्यमानत्वात् ऐक्यं ज्ञेयं न तु सार्वज्ञं ज्ञेयम् । तत्र तथा वाक्याभावादित्यत आह ।। तत्रेति ।। ब्रह्मण इति ।। आरोपस्योपपादक सापेक्षत्वाभावादिति भावः । नन्वपहतपाप्मत्वादिकमपि उपास्यमेवेत्यत आह ।। अपहतपाप्मत्वादीनामिति । अपहतपाप्मत्वादीनां मध्ये यत्त्वमेवेत्यंगीकारे बहुश्रुतिविरोध इत्याह ।। एष इति ।। नन्वनया श्रुत्या कथं सार्वज्ञादिमहिम्नः सत्यत्वसिद्धिः तेनाभेदादिमहिम्न एव सत्यत्वप्रतिपादनादित्यत आह ।। अत्रेति ।। असिद्धिवाचकेन तच्छब्देन महिममात्रस्यानुवादत्वप्रतीतेरिति भावः । अभेदस्य महिमत्वाभावात् । ननु दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् । यदाहवनीयमिति वाक्यमनारभ्या

(कण्टकोद्धारः)

धीतमिदं चेन्द्रसूक्ते श्रूयते तथाचेन्द्रस्य सप्तमहिमत्वप्रतिपादकमित्यत आह ।। सत्य इति ।। ज्योतिरधिकरणन्यायेनेति ।। ज्योतिश्चरणाभिधानादित्यत्र विमे कर्णा पतयत इति वाक्ये कर्णविदूरत्वलिंगेनाग्निसूक्तस्थस्यापि ज्योतिश्शब्दस्य ब्रह्मपरत्वं सूक्तमिति तत्परमित्युपपादितं तद्वदत्रापीत्यर्थः। ननु यद्वाक्यं पदार्थस्यारोप रूपोपासनाकर्तव्यतापरं तन्न पदार्थपरमिति व्याप्तिः । निर्गुणज्ञानान्मुक्तिर्न स्यात् । अस्ति च सेति न व्यभिचार इत्याशंक्य निराकरोति ।। न चेति ।। धर्मीति ।। तथाचेष्टापादनरूपत्वात् तर्काभासोऽयमिति भावः ।। सगुणेऽपीति ।। सगुणज्ञानान्मुक्तिर्न स्यादित्यापादनसंभवादिति भावः । ननु सगुणज्ञानस्य मोक्षसाधनत्वाश्रवणात् कथं साम्यमित्यत आह ।। पृथगिति ।। तथाच सगुणज्ञानस्य मोक्षसाधनत्वश्रवणात् तद्विरोधान्निर्गुणश्रुतिः विशेषाभावविषयेति भावः । ननु तर्हि सगुणनिर्गुणश्रुत्योः सत्प्रतिपक्षतया नैकस्यापि सिद्धिरित्यतः स्मृतिषु सगुणज्ञानस्यैव मोक्षसाधनत्वोक्तेः तदनुसारेण निर्गुणवाक्यं नेयमित्याशयेनाह ।। यो मामिति ।। ननु तत्तथोपासनपरमित्यत आह ।। तस्योति । उपासनस्याश्रवणे तत्कल्पनमप्रामाणिकमिति भावः ।। एतेनेति ।। उपासनकल्पनेऽतिप्रसंगेनेत्यर्थः । ननु निर्गुणवाक्यस्य फलान्तरं न श्रुतं सगुणवाक्यस्य तु फलांतरं श्रूयतेऽतो निर्गुणवाक्यं प्रबलमित्यत आह ।। श्रूयते चेति ।। न च तदवान्तरफलं न मुख्यमिति वाच्यम् । सगुणवाक्येऽपि तुल्यत्वात् ।। शंकते ।। श्रुतिबलादिति ।। संयोगेति ।।

चतुर्थाध्याये तृतीयपादे तृतीयाधिकरणे चिन्तितम् । एकस्य तूभयत्वे संयोगपृथक्त्वम् । अग्निहोत्रे श्रूयते। दध्नेन्द्रियकामस्य जुहुयादिति । तत्र संदेहः । किं काम्यार्थमपि दधि नित्यमपि स्यात् उतान्यत् नित्यमिति । पूर्वपक्षस्तु पूर्वाधिकरणे यथा नैमित्तिकं न नित्यार्थं तथा काम्यत्वेन श्रुतं दधि न नित्यार्थं काम्यत्वनित्यत्वयोर्विरोधात् । तथा चान्यदेव नित्यम् । न च दध्ना जुहोतीति नित्यार्थे दध्येव श्रूयते इति वाच्यम् । एतस्य कामवाक्यैकवाक्यतावगमात् । तथाहि दध्नेन्द्रियं कुर्यादित्युक्ते किमाश्रितेनेत्यपेक्षते । तथा च कामवाक्यस्याश्रयापेक्षा होमसंयुक्तदध्नः फलापेक्षा । तयोरेवमाकांक्षावशात् एकवाक्यता 'यद्दध्नेन्द्रियं कुर्यात् तद्धोमाश्रितेन । यच्च दध्ना जुहोति तदिन्द्रियार्थमि'ति । तस्मान्नित्ये दध्यविधानात् काम्यमेव स्यात् । तस्मान्नित्यार्थे पृथक् दधिविधिरिति । सिद्धान्तस्तु- एकस्यैवोभयार्थत्वे विधिपृथकृत्वात् । न च तयोरेकवाक्यत्वमुक्तमिति वाच्यम् । परस्पराकांक्षाभावेनैकवाक्यत्वायोगात् । न तावत् कामवाक्यं होमवाक्यसापेक्षां तद्धि आश्रयार्थं वा दधिस्वरूपसिद्ध्यर्थं वा? नाद्यः विपरिवृत्तिलब्धहोमस्यैवाश्रयत्वसंभवात्। न द्वितीयः । दधिस्वरूपस्य लोकत एव सिद्धेः । नापि होमसंयुक्तस्य कामवाक्यापेक्षा। फलतद्धोमसंबंधेनैव निराकांक्षत्वात् । तथाचैकवाक्यत्वा योगात् । संयोग पृथकृत्वेनैकस्यैवोभयार्थत्वसंभवे भिन्नकल्पने गौरवात् । काम्यत्वेपि अकरणे प्रत्यवायमात्रेण नित्यत्वोपपत्तेः न भिन्नं दधि किन्त्वेकमेवोभयार्थमिति । तथाच तन्न्यायेनैकस्यैव सगुणज्ञानस्य वाक्यभेदेनोभयार्थत्वमस्त्वित्यर्थः । पुण्यपापविधूननश्रवणेपि चेत् अवान्तरमुक्तिरुच्यते तदाऽतिप्रसंग इत्याह ।। निर्गुणेति ।। एतेनेति परामृष्टहेतुमाह ।। गुणविशेषेति ।। नन्वनुवादकत्वे एकवाक्यता भवतीत्यत आह ।।

(कण्टकोद्धारः)

प्राप्तीति ।। ननु स्वयमेव प्राप्तस्य निषेधोऽस्त्वित्यत आह ।। अन्यथेति ।। ननूपासनाप्रकरणस्थत्वात् सगुणत्वमुपास्यमित्यत आह ।। उपासनेति ।। अनुपास्तीति ।। य आत्मा अपहतपाप्मेत्यादि-जिज्ञासावाक्येऽपि श्रुतत्वादिति भावः ।। अन्यथेति ।। सार्वज्ञ्यादौ श्रुतेस्तात्पर्याभावे इत्यर्थः । किञ्चास्तु सार्वज्ञ्यादेरुपास्यत्वं तथापि नासत्वं सत एवोपास्यत्वादविद्यमानोपासनायामनर्थश्रुतेरित्याह ।। किञ्चेति ।। ननु तर्हि वाचं धेनुमुपासीतेत्यादेः का गतिरिति तत्राह ।। वाचमिति ।। ननु नाम ब्रह्मेत्यादौ नाम्नि अविद्यमानस्य ब्रह्मत्वस्योपासनं कथ्यते इत्यत आह ।। नामेति ।। ननु मुख्यार्थे संभवति कथं लक्षणाश्रयणमित्यत आह ।। नामेतीति ।। ननु प्रथमायाः सप्तम्याद्यर्थत्वे किं नियामकमित्यत आह ।। अन्यथेति ।। न चात्मत्वेनोपासनमेवात्मोपासनमिति वाच्यम् । आत्मशब्दस्य प्रधानधर्मिपरत्वत्यागेन प्रकारपरत्वकल्पनस्यायुक्तत्वात् । आत्मानमेव लोकमुपासीतेत्यादि श्रुत्यादिविरोधाच्च । ननु प्रतिमायां देवत्वध्यानात् फलस्योक्तत्वात् तस्याश्च देवत्वाभावात् कथमविद्यमानध्यानं निषिध्यत इति तत्राह ।। प्रतिमायामपीति ।। ननु विद्यमानस्यैवोपास्यत्वे तदेव ब्रह्मत्वं विद्धि नेदमिति वचनविरोध इत्यत आह ।। यथेति ।। तथाचाश्रौतसर्वध्याने निषेधस्तत्रेति भावः । ननु यथा अन्यदेव तद्विदितादित्यत्र ज्ञानमात्रनिषेधे तमेवमित्यादिबाधकभावात् अस्तु अश्रौतादिज्ञाननिषेधः । नेदमित्यत्र तु उपासनमात्रनिषेधे बाधकाभावात् तन्मात्रनिषेधः किं न स्यादित्यत आह ।। अन्यथेति ।। तथाच सगुणश्रुतेः अपरब्रह्मविषयत्वसोपाधिकाध्यस्तविषयत्वानित्यविषयत्वानुवादकत्वाताात्विक विषयत्वोपासनपरत्वादेरभावात् निर्गुणश्रुतितुल्यत्वात् तया तु गुणसिद्धेर्नाद्य इत्युपसंहरति ।। तस्मादिति ।। प्रबलं हि बाधकं भवति । प्राबल्यं च निषेधरूपाद्वा अपच्छेदन्यायेनोत्तरत्वाद्वा निर्गुणत्वस्य पुरुषार्थत्वाद्वा तज्ज्ञानस्य मोचकत्वाद्वा? नाद्य इत्याह ।। असदिति ।। न द्वितीय इत्याह ।। अपच्छेदेति ।। न तृतीय इत्याह ।। नचेति ।। न चतुर्थ इत्याह ।। न च निर्गुणेति ।। ननूभयोस्तुल्यबलत्वे समुच्चयो विकल्पो वा स्यात् । तथा च सर्वदा सगुणमेवेत्यस्य हानिरेवेत्यत आह ।। तस्मादिति ।। ननु भेदवाक्यस्य कथं प्राबल्यमित्यत आह ।। तस्येति ।। उपक्रमाधिकरणन्यायादिकश्च प्रत्यक्षबाधप्रस्ताव एव विचारितम् । प्रकारान्तरेण भेदवाक्यप्राबल्यमाह ।। धर्मीति ।। ग्रहैकत्वनयस्तु पूर्वमेव विचारितः ।। हविरार्तिनय इति षष्ठे चतुर्थपादे विचारितम् । यथाश्रुतीति चेत् ।

दर्शपूर्णमासयोः दोहार्तिं प्रकृत्य श्रूयते– यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत् इति । तत्र संशयः । उभयार्तौ पञ्चशरावः उतान्यतरार्तौ अपीति । पूर्वपक्षस्तुग्रहाधिकरणन्यायेन उद्देश्यनिमित्तविशेषणमविवक्षितमेवेति आर्तिमात्रे निमित्तं स्यात् । यदि च हविषा विशेष्यते तर्हि स उभयत्वसंख्ययापि विशेष्यताम् । तथा चोभयार्ताविव पञ्चशरावो नान्यतरमात्रार्ताविति । सिद्धान्तस्तु– हविषाऽर्तिर्विशेष्टव्या । यथा ग्रहाधिकरणे ग्रहत्वं विवक्षितम् । न चैवं संख्यापि विवक्षणीया स्यादिति वाच्यम् । यावता विना न निमित्तपर्यवसानं तावदवश्यं विवक्षणीयम् । प्रकृते यस्यार्तिमार्च्छेदित्येव विवक्षितेर्यत्किञ्चिदार्तिरेव निमित्तं स्यात् । न च तस्या निमित्तत्वं संभवति । यस्यकस्यचिदार्तेर्नित्यत्वात् ।

(कण्टकोद्धारः)

अन्ततश्चिन्तितनिमिषादेरेव अवश्यं हविषा विशेषणमेष्टव्यम् । तावन्मात्रेण निमित्तत्वपर्यवसानात् संख्या न विवक्षणीयेति अन्यतरार्तावपि पञ्चशराव इति । तर्हि कथमुभयशब्दस्यान्वय इति चेदित्त्यम् । न केवलं प्रातर्दोहार्तिरेव निमित्तम् । नापि सायं दोहार्तिरेव । किन्तूभयमपि प्रत्येकं निमित्तमिति-योज्यम् ।

ननु शब्दलक्षितस्वरूपमेव धर्मि । न तु वाच्यतावच्छेदकविशिष्टम् । तथा च धर्मिग्राहिवाक्यं कथमुपजीव्यमित्यत आह ॥ लक्षकेनापीति ॥ तथाचासाधारणधर्मोपस्थापकत्वेन वाक्यस्योपजीव्यत्वमिति भावः ॥ अन्यथेति ॥ साधारणेन वा स्वरूपेण वोपस्थित्यंगीकारे इत्यर्थः । तथा च ब्रह्मणि निर्गुणत्वं न सिद्ध्येदित्यर्थः । किञ्च विरोधित्वमङ्गीकृत्य गुणवाक्यस्य प्राबल्यमुक्तम् । विरोधित्वमेव नास्ति । सामान्यनिषेधस्य विशेषनिषेधेनोपसंहारः यथा छागपशुनये विधिस्थपशुशब्दस्य विशेषपरमंत्रवर्णेनोपसंहारः । तथाच निर्गुणवाक्यस्य विशेषपरत्वात् न विरोधितेत्याह ॥ किञ्चेति ॥ अत्रेति । त्रैगुण्यवर्जितमित्यादेर्निर्गुणवाक्येनोपसंहार इत्यर्थः । प्रकारान्तरेणाविरोधित्वमाह ॥ किञ्चेति ॥ ननु पार्थक्याभावे कथं गुणगुणिभाव इति तत्राह ॥ पार्थक्याभावे चेति ॥ ननु ज्ञानानन्दयोरप्यन्यतरपरिशेषस्वीकारात् कथं दृष्टान्तीकरणमिति तत्राह ॥ अन्यथेति ॥ अन्यतरमात्रपरिशेषाङ्गीकारे इत्यर्थः । ज्ञानमात्रस्वीकारे आनन्दाभावेन तत्स्फुरणाभावः । आनन्दमात्रस्वीकारे ज्ञानाभावेन तत्स्फुरणाभावः इत्युभयथाप्यपुमर्थत्वमानन्दानुभवस्यैव पुरुषार्थत्वादिति भावः । प्रकारान्तरेणाविरोधमाह ॥ अपि चेति ॥ अन्यथा पूर्वोत्तर वाक्यविरोधः स्यादिति भावः ॥ किञ्चेति ॥ अन्यथा स्ववाक्यविरोधः स्यादिति भावः । सगुणवाक्यस्य प्राबल्ये उक्तन्यायान् कारिकया संगृह्णाति ॥ एवञ्चेति ॥ नचैवं निर्गुणवाक्यस्य दुर्बलत्वात् अप्रामाण्यमेवेत्यत आह ॥ तस्मादिति ॥ दूषणान्तरं वदन्नुक्तमर्थं कारिकया संगृह्णाति ॥ एवञ्चेति ॥ एवं श्रुतेर्बाधकत्वं निराकृत्यानुमानादीनामपि तन्निराकरोति ॥ नापीति ॥ अप्रसिद्धेति ॥ अत्र निर्विशेषत्वस्य काप्यसिद्धत्वात् अप्रसिद्धविशेषणत्वम् । न च विशेषवत्त्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वादित्यादिना सामान्यतः साध्यप्रसिद्धिरिति वाच्यम् अप्रयोजकत्वात् । अनुभूतिपदेनानुभूतित्वरूपविशेषस्योक्तेः निर्विशेषपदेन तदभावोक्तेः धर्मिसाध्यपदयोर्व्याघात इत्यर्थः । श्रुत्या विशेषाणामुक्तत्वात् तद बाधसाधने श्रुतिबाधः । अनुभूतिर्न ज्ञानं क्रियात्वात् गमनवदित्यपि साधयितुं शक्यमिति आभाससाम्यम् । विपक्षे बाधकाभावादप्रयोजकत्वम् । यदि निर्विशेषा स्याद्वेदान्तप्रतिपाद्या न स्यात् इति प्रतिकूलतर्कपराहतिः । आदिशब्देन विरुद्धत्वादिकं ग्राह्यम् ॥ नापीति ॥ न च तर्काणामनुमानत्वात् कथं पृथगाशंकेति वाच्यम् । परमते तर्कस्याप्रमाणत्वात् अनुमानविशेषत्वेन तदुपपत्तेश्च । कुतर्कत्वमेवाह ॥ धर्माभावेति ॥ तर्हि कः पक्षः समाश्रियत इत्यतो भेदपक्षः संबन्धपक्षश्चेत्यभिप्रेत्य तत्पक्षोद्भावितदोषं परिहरति अभेदेपीति ॥ अन्यथा ॥ विशेषस्वनिर्वाहकत्वाद्यनंगीकारे इत्यर्थः । उक्तमर्थं कारिकया संगृह्णाति ॥ एवञ्चेति ॥ अनुमाने प्रकारान्तरेण स्वव्याघातमाह ॥ किञ्चेति ॥ प्रतिकूलतर्कपराहतिमाह ॥ किञ्चेति ॥ यद्वोक्तमेव विशदयति ॥ किञ्चेति ॥ नन्वेवं साधकसत्त्वे बाधकाभावे च सति किमिति सगुणत्वं परे नांगीकुर्वन्ति इत्यत आह ॥ तस्मादिति ॥ एवं सगुणत्वमुपपाद्योपसंहरति ॥ तस्मादिति ॥ ब्रह्मणो निर्गुणत्वभङ्गः ।

## ९. निर्गुणे प्रमाणविचारः

निर्गुणे प्रमाणभङ्गः –

किं च निर्विशेषे किं प्रमाणम्? न च तत्स्वतः सिद्धम्, निरस्तत्वाद्, यद् यद्विप्रतिपन्नं तत्सर्वमपि स्वतः सिद्धमिति सुवचत्वाच्च, विप्रतिपत्त्ययोगाच्च, शास्त्र वैयर्थ्याच्च। न चाज्ञाननिवृत्त्यर्थं शास्त्रम्, अज्ञानाविरोधिन्याः स्वतः सिद्धेर्घटादावपि सुवचत्वात्। न च तत्र प्रत्यक्षं मानम्, अपसिद्धान्तात्, ''नेंद्रियाणि नानुमान''-मित्यादिश्रुतेश्च, शास्त्रवैयर्थ्याच्च। अत एव नानुमानं। व्याप्त्या व्यापकतावच्छेदक-विशिष्टत्वेन पक्षधर्मतया च पक्षसंसृष्टत्वेन सिद्ध्या तेन निर्विशेषासिद्धेश्च। नापि पदरूपः शब्दस्तत्र मानम्, गुणक्रियाजातिरूपनिमित्ताभावेन मुख्यवृत्तेरयोगात्। अस्वीकाराच्च। वैदिकशब्दस्य डित्थादिवत्सांकेतिकत्वायोगाच्च। आरोपितनिमित्त-विशिष्टविषयप्रतीतेश्च निर्विशेषे प्रामाण्यायोगात्। गौण्याश्च मुख्यार्थगुणयुक्ततयैव स्वार्थोपस्थापकत्वात्। लक्षणायाश्च शक्यार्थसम्बन्धितावच्छेदकरूपवत्तयैव स्वार्थो-पस्थापकत्वात्। पदस्यान्वयप्रतियोगितावच्छेदकरूपेणैव स्वार्थोपस्थापकतया निर्विशेषे वृत्तिमात्रायोगाच्च। अत एव नोपनिषद्वाक्यरूपः शब्दस्तत्र मानम्, असंसर्गत्वात्। धर्मिज्ञानाधीनविचारजन्यं निर्धारितैककोट्यवलम्बितं सप्रकारक-निश्चयं प्रत्येव तस्य हेतुत्वाच्च। निष्प्रकारकज्ञानं नेत्युक्तत्वाच्च। निर्विशेष-विषयकज्ञानस्य निष्प्रकारकत्वे तेन निर्विशेषत्वासिद्ध्या तत्सिद्ध्यर्थमेव विशेषा-भावरूपविशेषविषयकत्वस्यावश्यकत्वाच्च। तस्मात्सगुणमेव ब्रह्मेति। निर्गुणे प्रमाणभङ्गः ॥ ९ ॥

### अद्वैतसिद्धिः

ननु– निर्विशेषे किं प्रमाणमिति चेत्, स्फूर्त्यर्थं वा अज्ञाननिवृत्त्यर्थं वा प्रमाणप्रश्नः। आद्ये स्वप्रकाशतया प्रमाणवैयर्थ्यम्। न च विप्रतिपन्ने स्वतःसिद्धेर्वक्तुं शक्यतया अतिप्रसङ्गः, अभावव्यावृत्तिबोधकप्रमाणसत्त्वासत्त्वाभ्यां विशेषाद्; द्वितीये उपनिषद एव प्रमाणत्वात्। अत एव प्रत्यक्षमनुमानं वेत्यादिविकल्पस्य नावकाशः। ननु– कथं तत्रोपनिषत् मानम्? जातिगुणक्रियादिरूपनिमित्ताभावेन मुख्यवृत्तेरयोगाद् अस्वीकाराच्च, आरोपितनिमित्तविषय-

(अद्वैतसिद्धिः)

प्रतीतेनिर्विशेषे प्रामाण्यायोगाद्, गौण्याश्च मुख्यार्थगुणयुक्ततयैव लक्षणायाश्च शक्यार्थसंबन्धितावच्छेदक रूपवत्तयैव स्वार्थोपस्थापकत्वात्, पदस्यान्वयितावच्छेदकरूपेण स्वार्थोपस्थापकतया निर्विशेषे वृत्तिमात्रायोगात्, पदविधया वाक्यविधया चोपनिषद् मानं न निर्विशेषे, संसर्गागोचरत्वाच्चेति– चेन्न, मुख्यगौण्यसंभवेऽपि लक्षणायाः संभवात् । न च लक्षकपदे शक्यार्थसम्बन्धित्वावच्छेदकरूपवत्तया पदमात्रेऽन्वयितावच्छेदकरूपवत्तया च उपस्थितिनियमः, संसर्गबोधकवाक्यस्थपदानामेव तथात्वात् । न च संसर्गागोचरत्वे प्रमाणवाक्यत्वानुपपत्तिः, असन्दिग्धाविपर्यस्तबोधकतया निर्विकल्पकत्वेऽपि प्रामाण्यस्याकाङ्क्षादिमत्तया वाक्यत्वस्य चोपपत्तेर्वृत्तिमन्तरेणापि सुप्तोत्थापकवाक्यस्येव वेदान्तवाक्यस्य निर्विशेषे प्रामाण्यस्य वार्तिककृद्भिरुपपादितत्वाच्च । तथा हि–

अगृहीत्वैव सम्बन्धमभिधानाभिधेययोः ।
हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ॥
जाग्रद्वन्न हि सम्बन्धं सुषुप्ते वेत्ति कश्चन ॥

इत्यादिना ग्रन्थेन विनापि सम्बन्धं वाक्यस्य प्रामाण्यमुपपादितम् । लक्षणापक्षेऽपि तात्पर्यविशेषाग्रहेणैवातिप्रसङ्गभङ्गो वाच्यः । शक्यसम्बन्धस्यानेकत्र संभवात्, तात्पर्यविशेषग्रहश्च पुरुषविशेषस्य भवति, न सर्वस्य, पुरुषगतो विशेषः अन्तःकरणशुद्धिरूपः प्रतिबन्धाभावः । अन्तःकरणशुद्धिरूपस्य पापस्य च प्रतिबन्धकत्वं 'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मण' इत्यादिशास्त्रसिद्धम् । तथाच प्रतिबन्धक्षये विनापि संबन्धं शब्दादात्मसाक्षात्कारः इति निरवद्यम् । विस्तृतमिदमस्माभिःगीता निबन्धने । न च– अनिर्धारितैककोटिप्रकारकनिश्चयं प्रत्येव धर्मिज्ञानाधीनविचारस्य जनकत्वात् कथं विचारसध्रीचीनवेदान्तवाक्यज्ञानस्य निष्प्रकारकत्वमिति वाच्यम् । संशयनिवृत्तिक्षमज्ञानस्यैव विचारफलत्वात् । तस्याश्च विरोधिकोटिप्रतिक्षेपकोपलक्षितधर्मिज्ञानादप्युपपत्तेर्नतदर्थं सप्रमाणकत्वनियमः । न च गौरवम्, प्रमाणवतो गौरवस्य न्याय्यत्वात् । न च– निर्विशेषविषयकस्य ज्ञानस्य निष्प्रकारकत्वे निर्विशेषत्वासिद्ध्या तत्सिद्ध्या तत्सिद्ध्यर्थं विशेषाभावरूपविशेषविषयत्वस्यावश्यकत्वमिति वाच्यम्, विशेषाभावस्य स्वरूपतया तत्स्फूर्तौ प्रमाणानपेक्षत्वात्, अखण्डार्थसिद्ध्यनुकूलपृथग्जात पदार्थोपस्थिति विषयत्वमात्रेण विशिष्टव्यंवहारोपपत्तेः । तस्मात्सगुणत्वे साधकाभावाद् बाधकसद्भावाच्च निर्गुणत्वे तदभावात् निर्गुणमेव ब्रह्मेति सिद्धम् । इति अद्वैतसिद्धौ ब्रह्मणो निर्गुणत्वे प्रमाणोपपत्तिः ॥

## न्यायामृततरङ्गिणी

ब्रह्मसिद्धिरेव निर्विशेषब्रह्माभावसहकृता सगुणासिद्धिरित्याह ।। किंचेति ।। ननु तस्य स्वयंप्रकाशत्वान्न तत्सिद्ध्यर्थं प्रमाणप्रश्नो घटत इत्याशंक्याह ।। नचेति ।। निरस्तत्वादिति ।। परैःस्वविषयत्वाङ्गीकारादित्यर्थः ।। यद्यदिति ।। नन्वभावव्यावृत्तिबोधकप्रमाणसत्त्वान्न निर्विशेषस्य विप्रतिपन्नान्तरसाम्यमिति चेन्न । तत्सत्त्वबोधकस्यैव तदभावव्यावृत्तिबोधकतया तस्य पृच्छ्यमानत्वात् ।। विप्रतिपत्तीति ।। निर्विशेष इत्यनुषज्यते ।। शास्त्रेति ।। केवलो निर्गुणश्चेत्यादित्वदभिमतस्य निर्गुणशास्त्रस्य । ननु निर्विशेषस्य सिद्ध्यर्थं शास्त्रस्यानपेक्षणेऽपि तदज्ञाननिवृत्त्यर्थं शास्त्रापेक्षेत्याशंक्याह ।। अज्ञानेति ।। एतादृशसिद्धिः परिभाषामात्रम् । सिद्धिसमेत्यर्थः । ननु मा भूतां निर्विशेषेऽक्षानुमे मानं शब्दस्तु भविष्यतीत्याशंक्य स किंपदरूपो वा वाक्यरूपो वेति विकल्प्याद्यं दूषयति ।। नापीति ।। गौण्याश्चेति ।। नच संसर्गबोधकवाक्यस्थपदानामेवायं नियम इति वाच्यम् । संसर्गबोधकस्य प्रमाणवाक्यत्वासिद्धेः । वाक्यत्वप्रयोजकाकांक्षादेः संसर्गघटितत्वादित्युक्तम् । विशिष्ट वृत्तीर्दूषयित्वा सामान्यतोऽपि ता निराचष्टे ।। तदस्येति ।। ननु वृत्तिमन्तरेणापि सुप्तोत्थापकवाक्यस्येव वेदान्तवाक्यस्य निर्विशेषे प्रामाण्यमस्तु । तदुक्तं वार्तिके ।

अगृहीत्वैव संबंधमभिधानाभिधेययोः ।
हित्वा निद्रां प्रबुध्यंते प्रसुप्ते बोधिताः परैः ।
जाग्रद्वन्नहि संबंधं प्रसुप्तो वेत्ति कश्चनेति ।

मैवम् । संबंधग्रहं विना शब्दस्याबोधकत्वात् । अनेवंविधस्थलेऽनुमानतया तस्य बोधकत्वात् । ननु वृत्तिपक्षेऽपि तात्पर्यविशेषग्रहेणैवातिप्रसंगभङ्गो वाच्यः । शक्तेः शक्यसंबंधादेर्वाऽनेकत्र सत्त्वात् । वेदान्ततात्पर्यग्रहो हि कस्य चिदेव क्षीणपापस्य भवति । पापस्य प्रतिबन्धकत्वं तु ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मण इत्यादि सिद्धम् । तथाच प्रतिबंधकक्षये विनापि संबंधग्रहं शब्दादात्मसाक्षात्कार इति । मैवम् । प्रतिबंधकाभावो हि कारणसहकारी न तु चरमकारणम् । येन वृत्त्यादिकं विनैव साक्षात्कारहेतुः स्यात् । अन्यथा सवाक्यमपि नापेक्षेत ।। असंसर्गत्वादिति ।। संसर्ग एव वाक्यप्रामाण्यम् । ननु लौकिकवाक्यस्य तथात्वेप्युपनिषद्वाक्यं निर्विकल्पकहेतुरस्त्वित्यत आह ।। धर्मीति ।। तस्य उपनिषद्वाक्यस्य । ननु विरोधिकोटिप्रतिक्षेपकोपलक्षितधर्मिज्ञानादपि संशयनिवृत्त्युपपत्तेर्न तदर्थमुपनिषद्वाक्यं सप्रकारकज्ञानजनकमिति चेन्न । उक्तोपलक्षितत्वस्य धर्मिणि धर्मिज्ञानविषयत्वे तस्य

(तरङ्गिणी)
सप्रकारकत्वापातात् । अविषयत्वे संशयहेतोर्धर्मिज्ञानादपि संशयनिवृत्त्यापत्तेः ।। निर्विशेषेति ।। निर्विशेषं ब्रह्मेत्यादिशब्दजन्यज्ञानस्य ब्रह्मणि निर्विशेषत्वाप्रकारकत्वे तज्ज्ञानान्निर्विशेषं ब्रह्मेति व्यवहारो न स्यादित्यर्थः । परिशेषसिद्धं सगुणत्वमुपसंहरति ।। तस्मादिति ।। ।। निर्गुणे प्रमाणभङ्गः ।।

## न्यायामृतकण्टकोद्धारः

एवं सगुणत्वे साधकसद्भावात् बाधकाभावाच्च सगुणत्वमेष्टव्यमित्युक्तम् । निर्विशेषत्वस्याप्रामाणिकत्वाच्च तदेष्टव्यमित्याह ।। किञ्चेति ।। किं निर्विशेषे स्वतः सिद्धिः प्रमाणमुत प्रत्यक्षमथानुमानम् पदरूपः शब्द आहोस्वित् वैदिकवाक्यरूपः शब्द इति विकल्पान् हृदि निधायाद्यमाशङ्क्य निषेधति ।। न चेति ।। शास्त्रेति। शास्त्रस्य परार्थत्वात् सिद्धबोधने वैयर्थ्यमेवेति भावः ।। न चेति ।। ननु च स्वतः सिद्धचैवाज्ञानादिनिवृत्तिसंभवात् शास्त्रं व्यर्थमेवेति वाच्यम् । स्वतःसिद्धज्ञानाविरोधित्वादिति भावः ।। अज्ञानेति ।। तथा च तादृशी स्वतः सिद्धिः प्रमेयसिद्ध्यनुपयोगिनीति भावः । द्वितीयमाशङ्क्य निषेधति ।। न चेति ।। अपसिद्धान्तादिति ।। त्वया उपनिषदेकसमधिगम्यत्वाङ्गीकारादिति भावः । तृतीय माशङ्क्यातिदेशेन दूषयति । अत एवेति ।। शास्त्रवैयर्थ्यादिवेत्यर्थः । चतुर्थमाशङ्क्य निषेधति ।। नापीति ।। पदमपि शक्त्या वा सङ्केतेन वा गौण्या वा लक्षणया वेति विकल्पान् हृदि निधायाशङ्क्य क्रमेण दूषयति ।। गुणक्रियेत्यादिना ।। निर्विशेषत्वाङ्गीकारादन्यथा व्याघातादिति भावः ।। वैदिकेति ।। अपौरुषेयत्वेन संकेतके तत्कर्तुरभावादिति भावः । पक्षचतुष्टयसाधारण दोषमाह ।। पदस्येति ।। पञ्चममाशङ्क्यातिदेशेन दूषयति ।। अत एवेति ।। पदस्यान्वयप्रतियोगितावच्छेदकरूपेणैव स्वार्थोपस्थापकत्वात् पदसमूहस्यैव वाक्यत्वादित्यर्थः ।। असंसर्गत्वात् ।। ब्रह्मण इति शेषः । संसर्ग एव प्रामाण्यादिति भावः ।। तस्येति ।। उपनिषद्वाक्यस्येत्यर्थः । उपसंहरति ।। तस्मादिति ।। निर्गुणे प्रमाणभङ्गः ।

## ६. ब्रह्मणो निराकारत्वभङ्गः

एतेन ब्रह्मणो निराकारत्वमपि निरस्तम् । ''आदित्यवर्णं तमसः परस्ताद्'' ''यदा पश्यः पश्यते रुग्मवर्णम्'', ''ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलम्'', ''विश्वतश्चक्षुः'', ''सहस्रशीर्षा पुरुषः'', ''सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । यदेकमव्यक्तमनन्तरूपम्''– इत्यादि श्रुतिभिः । ''पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः'', नानाविधानि दिव्यानि नानावर्णाकृतीनि च । सर्वतः पाणिपादन्तत् सर्वतोऽक्षिशिरोमुखम्– इत्यादिस्मृतिभिः । तदनुगृहीतैः 'ब्रह्म सविग्रहं स्रष्टृत्वात् पालयतृत्वाद्वेदोपदेष्टृत्वात्'– इत्याद्यनुमानैश्चाकारसिद्धेः । विग्रहं विनापि नित्यज्ञाने-

नैव कर्तृत्वे ज्ञानेच्छे अपि विना नित्यप्रयत्नेनैव तत्स्यात् । किं च कुलालादौ न शरीरं ज्ञानाद्युपक्षीणं किं तु ज्ञानादिकमेव शरीरचेष्टोपक्षीणम् । अत एव विकरणत्वान्नेति चेत्तदुक्तमिति सूत्रे ईश्वरस्य कर्तृत्वार्थं ''बुद्धिमान् मनोवान् अङ्गप्रत्यङ्गवानि''ति श्रुत्या सकरणत्वमुक्तम् । किं च ''तदेवानुप्राविशत्'' ''ब्रह्मविदाप्नोति परम्''– इत्यादिश्रुतिसिद्धं सर्वगतस्य ब्रह्मणः प्रवेष्टृत्वं गम्यत्वमित्यादि न विग्रहविशेषं विना युक्तम् । न च श्रुतिरवान्तरब्रह्मपरा वा रूपोपासनापरा वा आरोपितरूपपरा वेति युक्तम्, ''आदित्यवर्ण''मित्यत्र प्रकृत्याख्यतमःपरत्वोक्तेः । ''य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते''– इत्यत्र च वर्तमानत्वेनापरोक्षज्ञानविषयत्वोक्तेश्च । न हि योषित्यग्नित्वं दृश्यत इत्युच्यते । ''सहस्रशीर्षा''त्यत्र तमेवं विद्वानमृत इह भवती''ति ''यदा पश्य'' इत्यत्र च ''तदा विद्वान्पुण्यपापे विधूये''ति ''न संदृशे तिष्ठति रूपमस्ये''त्यत्र च ''य एनं विदुरमृतास्ते भवन्ती''ति तज्ज्ञानस्य मोचकत्वोक्तेश्च । ''देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिण'' इत्युक्तरूपस्य ''ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतपे''ति स्मृतौ मुक्तगम्यत्वाद्युक्तेश्च । अत एवेदं रूपं न भौतिकं प्राकृतम् अनित्यं वा । ''नाभ्या आसीदन्तरिक्ष''मित्यादौ भूतकारणत्वस्य, तमसः परस्तादिति श्रुतौ ''तमसः परत्वस्य, सर्वतः पाणिपादन्त''दिति स्मृतौ च न सत्तन्नासदुच्यत इति पूर्वत्राभौतिकत्वस्य, तमसः परमुच्यत इति परत्राप्राकृतत्वस्य चोक्तेः । एको नारायण आसीन्न ब्रह्मा न च शंकर इत्यादिषु महाप्रलये स्थित्युक्तेश्च । प्रलये विग्रहरहितचेतनमात्रसत्त्वस्य सर्वसाधारण्यात् । विग्रहानित्यत्वे नित्यो नित्यानां चेतनश्चेतनानामिति विशेषोक्त्ययोगात् । पुराकल्पापाये स्वकृतमुदरीकृत्य विकृतमित्यादौ साक्षान् महाप्रलये स्थित्युक्तेश्च । पश्यन्त्युक्तेश्च । पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतमित्यारभ्य एतन्नानावताराणां निधानं बीजमव्ययम् (भा.१।३।५) इत्यत्र ।

सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः ।
परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वशः ॥

इत्यादौ च साक्षान्नित्यत्वाद्युक्तेश्च । अत एव न जडं नापि ततो भिन्नम् । आनन्दरूपममृतं यद्विभाति आप्रणखात्सर्व एवानन्दः मोदो दक्षिणः पक्षः यदात्मको भगवांस्तदात्मिका व्यक्तिः । किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मक– इत्यादिश्रुतेः । भेदाभावेऽप्यहिकुंडलाधिकरणन्यायेन विशेषबलाद्विग्रहवत्त्वोपपत्तेश्च । आत्मनि चैवं विचित्राश्च ही''ति सूत्रे विचित्रशक्तिः पुरुषः पुराण'' इत्यादि श्रुतिभिर्विचित्रशक्तेरुक्तत्वेन आनन्दस्य नित्यत्ववदपराधीनत्ववच्च विग्रहवत्त्वस्यापि सम्भवाच्च । ''नैषा तर्केण मतिरापनेये''त्यादि श्रुतिभिस्तर्कागम्यत्वोक्तेश्च । पिशाचादिवदन्तर्धानशक्त्यानुपलम्भसम्भवाच्च । न चाऽपाणिपाद इत्यादिविरोधः, अदुःखमसुखं समं न प्रज्ञान धनमिति सुखज्ञाननिषेधकवाक्यवत् प्राकृतावयवादिनिषेधपरत्वाद्, अन्यथोक्तश्रुतिस्मृतिभिः, पश्यति शृणोतीत्यादिवाक्यशेषेण च विरोधात् । ''अरूपोऽप्राकृतत्वाच्चे''त्यादिस्मृत्यैवारूपश्रुतिगत्युक्तेश्च । विग्रहवत्त्वेन दुःखं चेत्, स्रष्टृत्वादिनापि तत्स्यात् । स्वतंत्रत्वादिना समाधिरपि समः । अप्राकृतानन्दमयविग्रहस्य दुःखाभावादिनैव व्याप्तेश्च । सर्वैरपीश्वरे लीलाविग्रहाङ्गीकाराच्च । न च भगवद्विग्रहस्य महत्त्वविशिष्टरूपवत्त्वसावयत्वादिनाऽनित्यत्वं शंक्यम्, उक्तश्रुत्यादिविरोधात् । प्राकृतत्वस्योपाधित्वाच्च निरवयवविशेषस्येव ज्ञानानन्दादिविशेषस्येव च सावयवविशेषस्यापि श्रुत्यादि बलान्नित्यत्वोपपत्तेश्च ।

किं चावयवशब्देनोपादानोक्तावसिद्धिः, एकदेशोक्तौ गगनात्मादौ व्यभिचारः । न चोपादानातिरिक्त एकदेश एव नास्ति, पटादावुपादानतन्त्वन्यस्य हस्तवितस्त्यादि परिमाणस्यैकदेशस्यानुभवात् । विस्तृतं चैतदन्यत्र । नित्यस्य गगनादेरपि संयोगित्वेनैकदेशसाधनाच्च । अन्यथाकाशे पक्षिसंयोगतदत्यन्ताभावयोः, आलोके त्रसरेणुसंयोगतदत्यन्ताभावयोः, आत्मनि च सुखदुःखयोर्देशभेदेन प्रतीतिर्न स्यात् । एतेनैकदेशाभावेऽपि संयोगादेः स्वात्यन्ताभावसामानाधिकरण्यात्तथाधीरिति निरस्तम् । यत्र देशे संयोगस्तत्रैव तदभावप्रतीत्यापत्तेः । ''गौरनाद्यन्तवती''त्यादि श्रुत्या अनादिनित्याऽया अपि प्रकृतेः सत्त्वरजस्तमोरूपैकदेशदर्शनाच्च । त्वन्मतेऽप्यनाद्यविद्याया उपादानत्वाय अनणुत्वे सति परिच्छिन्नत्वाय त्रिगुणत्वाय जीवन्मुक्तौ

**लेशानुवृत्त्यर्थं चैकदेशस्य वक्तव्यत्वाच्च । जीवानामपि 'द्रोणं बृहस्पतेर्भागं द्रौणिं रुद्रांशसम्भवम् । दुर्वासाः शंकरस्यांश' इत्यादिनांशोक्तेश्च ।**

**यस्यायुतायुतांशेऽपि विश्वशक्तिरवस्थिता ।**
**परब्रह्मस्वरूपस्य प्रणमामि तमव्ययम् ॥**

**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्यादावीश्वरस्याप्यंशोक्तेश्च । न चायमौपाधिकोंऽशः । न चेदुपाधीतिन्यायेन स्वाभाविकांशाभावे तदयोगात् । एतेन सावयवत्वादिना भगवल्लोकादेरनित्यत्वसाधनमप्यपास्तम् ।**

**अतो हि वैष्णवा लोका नित्यास्ते चेतनात्मकाः ।**
**मत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥**

**इत्याद्यागमविरोधात् । तस्मात्सगुणं साकारं च ब्रह्मेति । ब्रह्मणो निराकारत्व-भङ्गः ॥ ६ ॥**

## अद्वैतसिद्धिः

एवं निराकारमपि । ननु– 'आदित्यवर्णं तमसः परस्ताद्', 'यदा पश्यः पश्यते रुक्मवर्णम्, 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्', 'विश्वतश्चक्षुः,' 'सहस्रशीर्षा'– इत्यादिश्रुतिभिः 'पश्य मे पार्थ रूपाणि', 'सर्वतः पाणिपादं तद्– इत्यादिस्मृतिभिः ब्रह्म, सविग्रहम्, स्रष्टृत्वात्, पालयितृत्वादुपदेष्टृत्वादित्याद्यनुमानैश्च विग्रहसिद्धिरिति– चेन्न, आदित्यवर्णमित्यस्याविद्याविलक्षणस्वप्रकाशस्वरूप प्रतिपादनपरतया उपास्यपरतया चोपपत्तेः । न च तमसः परत्वोक्त्योपासनापरत्वानुपपत्तिः, उपास्यविग्रहोपलक्षितस्य तमसः परत्वोक्तेः, न तु रूपविशिष्टस्य । न च– 'एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत' इत्यत्र वर्तमानत्वेनापरोक्षज्ञानविषयत्वोक्तेरनारोप्यत्वम्, न हि योषितोऽग्नित्वं दृश्यत इत्युच्यत इति वाच्यम्, प्रतीकोपासने उपास्यसाक्षात्कारनियमाभावेऽपि सगुणोपासने उपास्यसाक्षात्कारस्य तस्य स्यादद्धेति श्रुतिसिद्धस्य नियतत्वेन तस्यैव दर्शनशब्देनाभिधानाद्, विश्वतश्चक्षुरित्यादि-श्रुतिस्मृतीनां सर्वात्मकतया सर्वान्तर्यामितया च नियम्यजीवशरीरचक्षुः पाणिशिरःप्रभृत्यनु-

(अद्वैतसिद्धिः)

वादित्वोपपत्तेः, सर्वतः पाणिपादत्वादेस्तु असंभवात्, त्वयाप्येवमेव वक्तव्यत्वात् । अन्यथा देशविशेषावच्छेदेन परममुक्तिप्रतिपादनं गम्यत्वप्रवेष्टृत्वाद्युपपादनं च त्वदीयमसङ्गतं स्यात् । अनुमानेऽप्येवमेव सिद्धसाधनम् । 'विकरणत्वान्नेति चेत्तदुक्त'मिति सूत्रे अविद्यापरिणामस्य करणस्थानीयस्याङ्गीकारादविरोधात् ।

यत्तु– 'तदेवानुप्राविशद् ब्रह्मविदाप्नोति पर'मित्यादिश्रुतिसिद्धं सर्वगतस्य ब्रह्मणः प्रवेष्टृत्वं गम्यत्वं च विग्रहं विना न युज्यते इति, तन्न; स्वसृष्टकार्याभिव्यक्तत्वस्यैवानुप्रवेशशब्दार्थतया व्यापकस्य मुख्यप्रवेशासंभवात्, स्वतः प्राप्तस्यापि अविद्यातिरोधाननिवृत्त्यपेक्षया प्राप्यत्वोपचारेण विग्रहानाक्षेपकत्वात् । यत्तु 'तमेवं विद्वानमृत इह भवति यदा पश्य इत्यादिश्रुतौ सर्वनाम्ना सविग्रहस्यैव परामर्शात् तज्ज्ञानस्यैव मोचकत्वे सविग्रहत्वमिति, तन्न; सगुणविद्यायाः क्रममुक्त्यर्थत्वेनान्यथासिद्धेः, साक्षान्मुक्तिजनकत्वपक्षे तदुपलक्षितात्मज्ञानस्यैव मोचकत्वात् । अत एव– देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः'– इत्यादिस्मृतिरपि व्याख्याता । किं च विग्रहः किं भौतिकः? अभौतिको वा? अभौतिकोऽपि मायिकः? अमायिको वा? अमायिकोऽपि ब्रह्मभिन्नः? अभिन्नो वा? भौतिकमायिकावपि कर्मार्जितौ? परकर्मार्जितौ वा? आद्ये संसारित्वापत्तिः, द्वितीये इष्टापत्तिः । ब्रह्मभिन्नत्वे तवापसिद्धान्तः नेति नेतीतिश्रुतिविरोधः, 'अपाणिपाद' इत्यादि श्रुतिविरोधश्च । अभौतिकामायिकब्रह्माभिन्नदेहाङ्गीकारे उक्तश्रुतिविरोधः, चार्वाकमतप्रवेशश्च, प्रमाणाभावश्च, प्रमाणाभावश्च । न च 'नाभ्या आसीदन्तरिक्ष'मिति भूतकारणत्वोक्त्या अभौतिकत्वासिद्धिः; अग्निर्मूर्द्धे'-त्यादिश्रुतिपर्यालोचनयान्तरिक्षादीनां नाभित्वादिपरिकल्पनया विराड्देहप्रतिपादकतया शरीरस्य भूतकारणत्वाप्रतिपादकत्वात्, तमसः परस्तादित्यादेश्च विराड्देहोपलक्षितब्रह्मपरतया विग्रहस्य तमसः परत्वाप्रतिपादकत्वात् । न च 'एको नारायण आसीत् न ब्रह्मा न च शङ्कर' इति श्रुत्या महाप्रलये नारायणस्थित्युक्त्या नित्यविग्रहसिद्धिः नारायणशब्दस्य 'सदेव सोम्येमग्र आसी'दिति श्रुत्यनुसारेण मायोपहितब्रह्मपरत्वेन विग्रहपरत्वाभावात् । न चैतावता चेतनान्तरसाधारण्यम्; अखण्डमायोपहितत्वस्यैव व्यावर्तकत्वात् । न च 'नित्योनित्यानां चेतनश्चेतनाना'मिति विग्रहनित्यत्वाभावे विशेषोक्तिविरोधः; विग्रहानङ्गीकारेऽपि स्वरूपचैतन्यमादायोपपत्तेः । नापि 'पुराकल्पापाये स्वकृतमुदरीकृत्य विकृत'मित्यादौ महाप्रलये

(अद्वैतसिद्धिः)

देहस्य साक्षात्स्थित्युक्त्या नित्यविग्रहसिद्धिः, सर्वविकारमूलकारणाविद्यायाः संस्कारात्मनावस्थानस्य उदरीकरणशब्दार्थत्वात् । न च मुख्यार्थत्यागः, त्वयाप्यस्यार्थस्यैव वक्तव्यत्वाद्, अन्यथा सकलस्य ब्रह्माण्डस्य तदनुप्रवेशमात्रेण प्रलयासिद्धेः । यत्तु-

सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः ।
परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वदा ॥

इत्यादौ साक्षान्नित्यत्वोक्तिविरोधः इति, तन्न, प्रलयपर्यन्तस्थायिदुःखभोगानायतन ज्ञानमात्रप्रधानदेहपरतया त्वद्विवक्षितपरत्वाभावात् । अत एव जडस्ततो भिन्नश्च । न च ''आनन्दरूपममृतं यद्विभाति'', ''आप्रणखात् सर्व एवानन्दः'', ''मोदो दक्षिणः पक्षः,'' ''यदात्मको भगवान् तदात्मिका व्यक्तिः, किमात्मको भगवान्? ज्ञानात्मक ऐश्वर्यात्मक'' इत्यादिश्रुतेर्भेदाभावेऽपि अहिकुण्डलन्यायेन विशेषबलाद्विग्रहवत्त्वोपपत्तिरिति- वाच्यम्, आत्मनो ज्ञानानन्दरूपत्वप्रतिपादनपरत्वेन विग्रहाप्रतिपादकत्वात् । 'विचित्रशक्तिः पुरुषः पुराण' इत्यादिवाक्यस्य 'आत्मनि चैवं विचित्राश्च ही'ति सूत्रस्य च मायाशक्तिवैचित्र्यप्रतिपादकत्वेनात्मशक्त्यप्रतिपादकत्वाद्, आप्रणखादित्यादेश्च लीलाविग्रहावच्छेदेन दुःखाद्यभोक्तृतयोपपत्तेः । मोदो दक्षिण इत्यादेरानन्दमय कोशप्रतिपादकतया ब्रह्मपरत्वाभावात् । न हि श्रुत्युक्तत्वमात्रेण ब्रह्मणो विग्रहरूपता, 'ब्रह्मैवेदं सर्वं पुरुष एवेदं सर्व'मित्यादि श्रुत्या प्रपञ्चरूपतापि ब्रह्मण्यापद्येत । स्वरूपानन्द एव नित्यत्ववदपराधीनत्ववच्च विग्रहत्वकल्पनस्य परिभाषामात्रत्वात् । मन्मतेऽपि ब्रह्मातिरिक्तस्य ब्रह्मसत्तासमानसत्ताकत्वाभिमतस्य ब्रह्मणि निषेधाङ्गीकारात् । न च- नैषा तर्केण मतिरापनेये'ति तर्कागम्यत्वोक्त्या आत्मन एव विग्रहवत्त्वमिति वाच्यम्, निर्विशेषात्मन एव तर्कागम्यत्वोक्त्या आत्मनो विग्रहवत्त्वस्य तर्कागम्यत्वानुक्तेररूपत्वेन चाक्षुषत्वाप्रसक्त्या पिशाचादिवदन्तर्धानशक्त्यानुपलम्भसमर्थनस्याप्रसक्तसमर्थनत्वाद्, विग्रहपक्षे 'अपाणिपाद' इत्यादिश्रुतिविरोधस्योक्तत्वाच्च ।

न च- 'अदुःखमसुख'मित्यादौ प्राकृतसुखनिषेधवदत्रापि प्राकृतावयवनिषेधपरता, अन्यथा 'शृणोति पश्यती'ति वाक्यशेषविरोधः स्यादिति वाच्यम्, आनन्दादिरूपताप्रतिपादकश्रुतिविरोधेन तत्र सङ्कोचवदत्र सङ्कोचकारणाभावात्, श्रवणदर्शनयोः शब्दरूपसाक्षित्वमात्रेण उपपत्तेर्न तद्विरोधः । अन्यथा त्वन्मतेऽपि ब्रह्मणि चक्षुरादिसाध्यज्ञानानङ्गीकारेण तद्विरोधो

(अद्वैतसिद्धिः)

दुष्परिहरः स्यात् । अत एव– 'अरूपोऽप्राकृतश्चे'ति स्मृत्यैवारूपश्रुतिगत्युक्तेः नारूपमित्यनेन रूपमात्रनिषेध इति– निरस्तम्, स्मृतेरुपास्यपरत्वेन ज्ञेयब्रह्मप्रतिपादिकायाः श्रुतेः सङ्कोचे कारणाभावात्, श्रुतिस्मृत्योरतुल्यबलत्वाच्च, प्रत्युत 'यत्तदद्रेश्य'मित्यादिना परविद्याविषयस्य विग्रहवत्त्वप्रति पादनविरोधाच्च । किञ्च भगवद्विग्रहो न नित्यः, महत्त्वे सति रूपवत्त्वाद्, विग्रहत्वाद्वा, नित्यताबोधकत्वाभिमतश्रुतेरन्यथासिद्धेरुक्तत्वाच्च । न च प्राकृतत्वमुपाधिः, साधनव्यापकत्वात् । सावयवत्वादपि न नित्यत्वम् । न च श्रुतिबलात् क्वचित् सावयवोऽपि नित्यः, श्रुत्यन्यथासिद्धेरुक्तत्वात् । ननु– अवयव उपादानं चेत्, ब्रह्मविग्रहे नास्त्येव; एकदेशमात्रं चेद्, गगनात्मादौ व्यभिचारः, तयोरप्येकदेशसत्त्वात् । न चोपादानातिरिक्तस्यैकदेशस्यैवाभावः, उपादानतन्त्वन्यहस्तवितस्त्यादि परिमाणस्यैकदेशस्य पटादावनुभवादिति– चेन्न, उपादानतन्तूनामेव हस्तवितस्त्यादिपरिमाणवतामनुभवात् । गगनादौ संयोगित्वादिना यदेकदेशसाधनं तदिष्टमेव, अस्माभिस्तत्र सावयवत्वानित्यत्वयोरङ्गीकारात् ।

यत्तु आत्मनि सुखदुःखयोर्देशभेदेन प्रतीतेरेकदेशसाधनम्, तन्न, सुखदुःखयोरन्तःकरणगततया तद्गतत्वाभावात् । न च– ''गौरनाद्यन्तवतीत्यादि'' श्रुत्या अनादिनित्या अपि प्रकृतेः सत्त्वरजस्तमोरूपैकदेशदर्शनाद् व्यभिचार इति वाच्यम्, प्रकृतौ नित्यत्वाभावादविद्यातिरिक्तप्रकृतेरभावाच्च । न चाविद्यायामेव व्यभिचारः, तस्या अप्यनित्यत्वेन व्यभिचाराभावात् । न च– जीवानामपि 'द्रोणं बृहस्पतेर्भागं द्रौणिं रुद्रांशसंभवम् । दुर्वासाः शङ्करस्यांश' इत्यादिनांशोक्तेः,

> यस्यायुतायुतांशोऽपि विश्वशक्तिरवस्थिता ।
> परब्रह्मस्वरूपस्य प्रणमामि तमव्ययम् ॥
> विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।

इत्यादिना ईश्वरस्याप्यंशोक्तेर्जीवेशयोर्व्यभिचार इति– वाच्यम्, आत्मनोंऽशस्यौपाधिकतया स्वाभाविकत्वाभावात्, त्वन्मते जीवानामणुरूपतया स्वाभाविकांशाभावेन काल्पनिकांशस्यैव वक्तव्यत्वात् । एतेन भगवल्लोकादेरपि नित्यत्वमपास्तम् ।

(अद्वैतसिद्धिः)

न च– 'अतो हि वैष्णवा लोका नित्यास्ते चेतनात्मकाः ।
मत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥

इत्याद्यागमविरोधः, तस्यावान्तरप्रलयस्थत्वपरत्वात् । तस्मान्निर्गुणं निराकारं ब्रह्मेति सिद्धम् ॥ इत्यद्वैतसिद्धौ ब्रह्मणो निराकारत्वसिद्धिः ॥

## न्यायामृततरङ्गिणी

एतेनेति ॥ सगुणत्वेन । हेत्वंतरं चाह ॥ आदित्येति ॥ इत्यादिश्रुतिस्मृत्यनुमानैराकारसिद्धेश्च निराकारत्वं निरस्तमित्यन्वयः । तैत्तिरीयारण्यके सहस्रशीर्षेत्यनुवाके वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसस्तु पारे इति पाठः । तत्रैवाद्भ्यः संभूत इत्यनुवाके आदित्यवर्णं तमसः परस्तादिति पाठः । मंत्रद्रष्टा स्वानुभवं प्रकटयति । य आदित्यवर्णः प्रकृतेः परस्तमेतं पुरुषमहं वेदेत्यर्थः ॥ यदा पश्य इति ॥ मुण्डके ॥ ऋतं सत्यमिति ॥ तैत्तिरीयारण्यके ऋतं सत्यमित्याद्युक्त्वा ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नम इत्युक्तम् । सहस्रशीर्षं देवमित्याद्युक्त्वा विश्वं नारायणं देवमक्षरं परमं प्रभुमित्युक्तम् ॥ यदेकमिति ॥ यदेकमव्यक्तमनन्तरूपमादित्यवर्णं तमसः परस्तात् । तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामिति श्रुतिशेषः । श्रुतेरवान्तरब्रह्मपरत्वं निराकरोति ॥ आदित्यवर्णमित्यत्रेति ॥ उपासनापरत्वं निराकरोति ॥ य एष इति ॥ य एषों तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी इति छान्दोग्यवाक्ये वर्तमानार्थकलडंतदृशिधातुना यग्विकरणकेन हिरण्मयपुरुषस्यापरोक्षज्ञानविषयतया वर्तमानत्वप्रतीतेरित्यर्थः । क्रियायामेव वर्तमानत्वान्वयो न तु कर्मणीति चेन्न । क्रियाद्वारा कर्मण्यन्वयात् । यद्यपि धातुमात्रे वा दृशिधातौ वा नोक्तनियमः । पूरेण वृष्टिरनुमीयते शुक्तौ रूप्यं दृश्यत इत्यादौ तदभावात् । तथापि प्रमाणवाक्यस्थलेऽननुवादके दृशौ तथा नियमः । अयमत्रप्रयोगः । आदित्यवर्णमिति वाक्योक्तमादित्यवर्णत्वं नोपास्यमात्रं वर्तमानत्वेनापरोक्षज्ञानविषयहिरण्मयत्वादितुल्यत्वात् । अत्र व्यतिरेकव्याप्तिमाह ॥ नहीति ॥ ननु प्रतीकोपासने उपास्यसाक्षात्कारनियमाभावेऽपि सगुणोपासने सोऽस्तीति चेत्तत्किमुपासनं सत्युपास्यसाक्षात्कार उच्यतेऽसतिवा । आद्ये इष्टापत्तिः । द्वितीये तस्य भ्रान्तित्वापत्तिः । एतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह शाण्डिल्य इत्यादि श्रुतिविरोधश्च । यद्रूपस्योपासकोऽहं तद्रूपमभिसंभविता याता । इति यस्य निश्चयः स्यात्सतद्रूपं

(तरङ्गिणी)

प्राप्नोत्येव न संशय इत्यर्थः । उपास्यरूपाभावे तत्प्राप्तिरयुक्तेति श्रुतिविरोधः । आरोपितरूपपरत्वं निराकरोति ॥ सहस्रशीर्षेति ॥ उपलक्षणमेतत् । सहस्रशीर्षेत्यत्र वेदाहमेतमित्याद्युक्त्वा आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्यधीरः नामानि कृत्वाऽभिवदन्यदास्ते । इति नामरूपस्रष्टृत्वमुक्तम् । धीरः पुरुषः सर्वाणि रूपाणि विचित्य निर्माय तेषां रूपाणां नामनि कृत्वा तैर्नामभिरभिवदन् व्यवहरन् वर्तत इत्यर्थः । तथा धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्च तस्र इति ब्रह्मादि भिरुपदेश्यत्वमुक्तम् । धाता ब्रह्मा पूर्वमनादिकाले यं पुरुषं स्वशिष्यान् प्रत्युदाहृतवान् सर्वज्ञ इन्द्रोऽपि चतुर्दिग्वर्तिशिष्यान् प्रति यमुपदिष्टवान् तमेतमेवं सहस्रशीर्षत्वादिना जानन्नमृतो भवतीति श्रुत्यर्थः ॥ न संदृशइति ॥ काठके श्वेताश्वतरे च-

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ती-

त्युक्तम् । तैत्तिरीयाणां तु य एनंविदुरिति पाठः । ऋतं सत्यं परमित्यत्र सत्यज्ञानादिवाक्योक्तपरब्रह्मस्वरूपलक्षणान्यपि पिंगलरूपाण्यभिहितानि । विश्वतश्चक्षुरित्यत्र यतो वा इमानि भूतानि जायंते इत्यादि वाक्योक्ततटस्थलक्षणान्येकमेवाद्वितीयमिति वाक्योक्तैकत्वादीनि चोक्तानि । सहस्रशीर्षमित्यत्राक्षरत्वं नारायणं परं ब्रह्मेति परब्रह्मत्वमनन्तमव्ययमित्यनन्तत्वं चोक्तम् । यदेकमव्यक्तमित्यतः पूर्वम् अतः परंनान्यदणीयसं हि परात् परं यन्महतो महांतमिति परात्परत्वादिकमुत्तरत्र च देवब्रह्मेति ब्रह्मत्वं तदेवाग्निस्तद्वायुरिति सर्वात्मकत्वं चोक्तम् । तस्मादादित्यवर्णमित्यादिषूक्तं परं ब्रह्मैव ॥ अस्येति ॥ विश्वरूपाख्यस्य ॥ अत एवेति ॥ मुक्तगम्यत्वादेः ॥ सर्वत इति ॥ ज्ञेयं तच्च प्रवक्ष्यामि यज्ज्ञात्वा मृतमश्नुत इति प्रतिज्ञाय

अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते ।
सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति

इत्युक्त्वा ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यत इति तमः परत्वोक्त्याऽप्राकृतत्वसिद्धिः । अनित्यत्वं निराकरोति ॥ एक इति ॥ एको नारायण इति श्रुतिश्चेतनस्य प्रलयेऽवस्थानमाह न तु तच्छरीरस्यापीत्यत आह ॥ प्रलय इति ॥ विशिष्य नारायणावस्थानोक्तिर्न स्यादित्यर्थः । व्यक्तिः । शरीरम् । ननु विग्रहस्य भगवदात्मकत्वे तस्य विग्रहित्वं न स्यादत आह ॥ भेदाभावेऽपीति ॥ नन्वानन्दस्यामूर्तस्य कथं हस्तपादाद्यात्मकविग्रहत्वमत आह ॥ आत्मनीति ॥ परमात्मनि विचित्राः शक्तयो वर्तंत इति सूत्रार्थः ।

(तरङ्गिणी)

परमात्माभिन्नस्यानन्दस्यापि विचित्रशक्तित्वोपपत्तिः । ननु गुणिशक्तिः कथं गुणे स्यात् जलाहरणशक्तेर्घटाभिन्नेऽपि रूपेऽदर्शनादत आह ॥ नैषेति ॥ अपाणिपाद इति वाक्ये जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तमिति श्वेताश्वतरे श्रवणाद्युक्तेस्तद्विरोध इत्याह ॥ अन्यथेति ॥ प्राकृतावयवाद्यनिषेधे विग्रहवत्त्वेन दुःखित्वानुमाने व्यापकानुपलब्धिबाधमाह ॥ अप्राकृतेति ॥ एतच्च प्राकृतविग्रहा-भावोपलक्षणम् । अप्राकृतानन्दमयविग्रहवत्त्वादीश्वरस्य प्राकृतविग्रहवत्त्वं नास्तीत्यर्थः । तथा च प्राकृतविग्रहाभावदुःखाभावयोर्व्याप्यव्यापकभावात्तत्प्रतियोगिनोर्व्यापकव्याप्यभावोऽवधारित इति प्राकृतविग्रहवत्त्वस्य भगवत्यभावात्तद्व्याप्यदुःखस्याप्यभाव इति भावः । उक्तानुमानेऽदृष्ट-वत्त्वमुपाधिमभिसंधाय तस्यासाधनाव्यापकत्वशंकां परिहरति ॥ सर्वैरिति ॥ तथाच विग्रहव-तीश्वरेऽदृष्टाभावान्नोपाधिः साधनाव्यापक इत्यर्थः ॥ निरवयवेति ॥ गुणादौ व्यभिचारा-न्निरवयवमात्रे नित्यत्वाभावेपि तद्विशेषे नित्यत्वं न त्यज्यते । यथावाऽऽज्ञानानन्दादि मात्रे नित्यत्वाभावेऽपि तद्विशेषे तदस्ति । यथा सावयवविशेषेऽपि नित्यत्वं युज्यते । उपादाना-भावेऽपि गगनादेरेकदेशोऽस्तीत्याह ॥ गगनादेरपीति ॥ अन्यथेति ॥ वृक्षे शाखाद्यवयवस्येव गगने संयोगतदत्यंताभावयोराधारतावच्छेदकस्यावयवस्याभावे न तदवच्छेदकांशसिद्धिः । नन्वाकाशे पक्षिसंयोगाद्याधारतायां पक्ष्यवयवसंयोगोऽवच्छेदको भविष्यतीत्यत आलोकेत्युक्तम् । उक्तरीत्याऽऽलोकत्रसरेणुसंयोगाद्याधारता गगने त्रसरेण्ववयवद्व्यणुकसंयोगेनावच्छिद्यत इति वाच्यम् । तच्चायुक्तम् । अवच्छेदकस्य द्व्यणुकसंयोगस्यातीन्द्रियतया त्रसरेणुसंयोग आकाशे प्रत्यक्षो न स्यादित्यर्थः ॥ न चेदुपाधीति । औपाधिकमंशं संपादयितुमाकाशे संबध्यमान उपाधिः सर्वस्मिन्नाकाशे वा संबध्यते तदेकदेशे वा । आद्ये सर्वोऽपि घटाकाशः स्यात् । द्वितीये सोंशः किमाकाशे स्वाभाविको वौपाधिको वा । नाद्यः । प्रथमस्यैव तथौचित्यात् । द्वितीयेऽपि प्रकृतोपाधिकृतो वोपाध्यंतरकृतो वा । आद्येऽन्योन्याश्रयः । एतदुपाधिसंबंधे सत्याकाशेंऽशसिद्धिरंशसिद्धौ च तत्रैतदुपाधिसंबंध इति । उपाध्यंतरकृतत्वपक्षेऽप्येवंदोषः । तस्मान्नौपाधिका अंशाः ॥ इत्याद्यागमेति ॥ आदिपदेन अमृते लोके अक्षिते आरोहसूर्ये अमृतस्य लोकमित्यादिश्रुतिः ॥ ब्रह्मणो निराकारत्वभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

ननु तथाप्यनन्तगुणत्वमनुपपन्नम् । सुन्दराकारवत्त्वगुणाभावात् । तदभावे च ज्ञानाद्यनुपपत्तिः । ज्ञानादेस्तन्नियतत्वात् । न च विग्रहादिकमप्यङ्गीक्रियत एवेति वाच्यम् । तत्र प्रमाणाभावात् ।

(कण्टकोद्धारः)

अनित्यत्वाद्यापत्तिरूपबाधकसद्भावाच्चेत्यत आह ॥ एतेनेति ॥ प्रमाणसद्भावेन बाधकाभावेन चेत्यर्थः । तत्र प्रमाणसद्भावं दर्शयति ॥ आदित्येत्यादिना सिद्धेरित्यन्तेन ॥ उपलक्षणमेतत् । ज्ञानिप्रत्यक्षसूत्रे अपि ग्राह्ये । अत एव पश्यत्यदो रूपं विकरणत्वादिना तथैव दर्शयिष्यति । ननु कर्तृत्वानुपपत्त्या विग्रहः स्वीकर्तव्यः । कर्तृत्वं च त्वात्तदंगीकारस्तदा विग्रहोऽपि तत एव स्वीकर्तव्य इति तुल्यमिति भावः । ननु विग्रहो ज्ञानादावुपक्षीणः ज्ञानादिकं तु न कुत्राप्युपक्षीणमित्यत आह ॥ किञ्चेति ॥ न हि ज्ञानादिकं दण्डादिवत् साक्षात् कारणम् । किंतु शरीरचेष्टाद्वारा । तथाचेश्वरे शरीरचेष्टां नित्यां स्वीकृत्य ज्ञानादिकमेव न स्वीकर्तव्यम् । न च शरीरचेष्टा ज्ञानादेर्व्यापार इति ज्ञानादिकं कार्यं प्रति कारणमिति तदङ्गीक्रियते । तर्हि शरीरमपि तथेति तथाप्यङ्गीकर्तव्यमेवेति भावः ॥ अत एवेति ॥ यतः शरीरकर्तृत्वोपयोगि न कुत्राप्युपक्षीणमत एवेत्यर्थः । श्रौतार्थापत्त्यापि ईश्वरस्य शरीरं साधयति ॥ किञ्चेति ॥ न च कल्पितविग्रहेण लीलाविग्रहेण वा तदुपपत्तिरिति वाच्यम् । श्रुतत्यागाश्रुतकल्पने स्याताम् । भगवत्प्राप्तिरूपफलस्यापि कल्पितत्वप्राप्तेश्च । नन्विदं साकारत्वं परब्रह्मणस्साध्यते उतापरब्रह्मणः नाद्यः । तत्र प्रमाणाभावात् । द्वितीये त्विष्टापत्तिरित्याशंक्य निषेधति ॥ न चेति ॥ प्राकृतस्येति ॥ तथा च नापरब्रह्मविषयत्वं । न चारोपितरूपविषयत्वं तयोस्तमः परत्वायोगादिति भावः । य एष इति उपासनामात्रविषयस्य वर्तमानत्वेन दर्शनोक्तेरदृष्टत्वादिति भावः ॥ सहस्रेति ॥ रूपवतोऽपरब्रह्मत्वे रूपादेरारोपितत्वे च तज्ज्ञानान्मुक्तिर्न स्यात् । न ह्यन्यज्ञानान्मिथ्याज्ञानान्मुक्तिरिति भावः । न चेयं न परममुक्तिरिति वाच्यम् । तदतिरिक्तमुक्तौ मानाभावात् । न च परम्परयाऽपरब्रह्मज्ञानस्यापि मुक्तिसाधनत्वं साक्षात्साधनस्य बाधकाभावात् प्रतीतेः ॥ मुक्तेति ॥ मुक्तज्ञेयं च नाविद्यकम् । मुक्तानामविद्याभावादिति भावः । ननु तर्ह्यस्तु प्राकृतं वा भौतिकं वेत्यत आह ॥ अत एवेति ॥ परामृष्टं हेतुं दर्शयति ॥ नास्या इति ॥ महाप्रलये एकस्य नारायणस्यैव स्थित्युक्त्य न्यथानुपपत्त्या शरीरनित्यत्वसिद्धिरित्याह ॥ एक इति ॥ ननु स्थित्युक्तिः स्वरूपस्थित्यैव किं न स्यात् इत्यत आह ॥ प्रलय इति ॥ विग्रहेति ॥ न च ज्ञानादिनित्यत्वे विशेषोक्तिरिति वाच्यम् । मुक्तानामपि ज्ञाननित्यत्वस्य वक्ष्यमाणत्वात् । सर्वेषामपि स्वरूपज्ञानस्य नित्यत्वात् ॥ साक्षादिति ॥ शरीरस्येति शेषः । अत्र हरिविग्रहस्य प्रस्तुतिप्रदर्शनार्थं पश्यन्तीति पूर्ववाक्योदाहरणम् । नन्वस्तु शरीरं नित्यं जडं तेन भिन्नमेवेति किं न स्यादित्यत आह ॥ अत एवेति ॥ ननु भेदाभावे शरीरिभावः कथमित्यत आह ॥ भेदाभावेऽपीति ॥ यथा अहिकुण्डलयोर्भेदाभावेपि अहिः कुण्डलीति व्यपदेशो विशेषबलेन तथेत्यर्थः । ननु विग्रहित्वे कथं विग्रहत्वं विरुद्धत्वादित्यत आह ॥ आत्मनीति ॥ विचित्रशक्तित्वात् यथाऽऽनन्दित्वेऽप्यानन्दत्वं तथा विग्रहित्वेऽपि विग्रहत्वमुपपद्यत इति भावः । ननु विमतो न विग्रही विग्रहत्वादिति युक्तिविरुद्धत्वात् कथं विग्रहित्वमङ्गीक्रियते इत्यत आह ॥ नैषेति ॥ ननु परमात्मा विग्रहवांश्चेत् प्रत्यक्षेणोपलभ्येत न चोपलभ्यते तस्मात् न विग्रहवानित्यत आह ॥ पिशाचादिवदिति ॥ अन्यथेति ॥ विग्रहत्वावच्छिन्ननिषेध इत्यर्थः । एवं साधकाभावं परिहृत्य बाधकमपि परिहरति ॥ विग्रहवत्त्वेनेति ॥ विग्रहवत्त्वमात्रस्य दुःखव्याप्तत्वे भवद्भिरपि लीलाविग्रहाङ्गीकारात् भवतामपीदं दूषणं

(कण्टकोद्धारः)

तुल्यमित्याह ॥ सर्वैरपीति ॥ ननु तथापि विग्रहस्य नित्यत्वं नोपपद्यते । विमतो विग्रहोऽनित्यो महत्त्वविशिष्टरूपवत्त्वाच्च सावयवत्वाच्च घटादिवदित्यनुमानविरोधादित्याशंक्य निषेधति ॥ न चेति ॥ निरवयवेति ॥ तथाचान्यथासिद्धिरपीति भावः ॥ असिद्धिरिति ॥ उपादानरूपावयवानंगीकारादिति भावः । ननु कथं गगने व्यभिचारः? तत्रैकदेशानंगीकारादित्यत आह ॥ नित्यस्येति ॥ ननु संयोगित्वेप्येकदेशानंगीकारे किं बाधकमित्यत आह ॥ अन्यथेति ॥ एतेनेति परामृष्टं हेतुमाह ॥ यत्रेति ॥ उपलक्षणमेतत् । भावाभावयोरेकत्र विरोधात् । अवश्यमवच्छेदभेदार्थं प्रदेशः स्वीकार्य इत्यपि द्रष्टव्यम् । नन्वनादिनित्यस्य सांशत्वं क्वापि न दृष्टम् । तत्कथं स्वीक्रियत इत्यत आह ॥ गौरिति ॥ अनादिनित्यस्य मयैव सांशत्वं स्वीकर्तव्यमित्येव न किन्तु त्वयापि स्वीकर्तव्यमित्याह ॥ त्वन्मतेऽपीति ॥ जीवपरमेश्वरयोरंशोक्तेश्चोपादानातिरिक्ता अंशाः स्वीकर्तव्या इत्याह ॥ जीवानामपीत्यादिना ॥ न चेदिति ॥ उपाधिसंबन्ध एकदेशे सर्वत्र वा? आद्येऽनवस्था द्वितीये भेदकत्वानुपपत्तिरिति न्यायेनेत्यर्थः ॥ एतेनेति ॥ उपादानतयैकदेशानंगीकारेणेत्यर्थः । तस्मात् भगवतो विग्रहवत्त्वे साधकसद्भावाद्बाधकाभावाच्च भगवतः सुन्दरविग्रहवत्त्वसंभवात् अनन्तकल्याणगुणकत्वं सिद्धमित्युपसंहरति ॥ तस्मादिति ॥ ब्रह्मणो निराकारत्वभङ्गः ।

## ७. परमते ब्रह्मणो ज्ञानत्वानन्दत्वाद्वितीयत्वनित्यत्वसाक्षित्वभङ्गः

यच्चेदमुच्यते ब्रह्म ज्ञानानन्दात्मकमद्वितीयं नित्यं साक्षिरूपं च, न तु ज्ञानादिगुणकमिति । तत्र परमते (१) ज्ञानत्वं किं जातिविशेषः? साक्षाद्व्यावहारजनकत्वं वा? जडविरोधित्वं वा? जडव्यावृत्तत्वं वा? अज्ञानविरोधित्वं वा? अर्थप्रकाशात्मकत्वं वा? पराङ्गीकृतं वा? नाद्यः, वृत्तिप्रतिबिम्बितज्ञानाभासेषु तत्संभवेऽप्यखण्डे स्वरूपज्ञाने तदयोगात् । न द्वितीयः, फलोपधानस्य सुषुप्त्यादावभावात् । शक्त्यादिरूपयोग्यताया अपि मुक्तावभावात् । न तृतीयः, स्वरूपज्ञानस्य नित्यत्वेन तद्विरुद्धस्य जडस्य नित्यनिवृत्त्यापातात् । न चतुर्थः, ''सत्यं ज्ञान''मित्यत्र जडव्यावृत्तेरार्थिकत्वोक्त्ययोगात् । किं च जडत्वस्याज्ञातृत्वादिरूपत्वेऽसम्भवः । अज्ञानत्वरूपत्वेत्वन्योन्याश्रयः । न पञ्चमः, अज्ञानस्य नित्यनिवृत्त्यापातात् । द्वितीयादिषु ज्ञानत्वस्य कारणत्वादिवद् व्यवहाराद्यन्यतमोपाधिकत्वेन ब्रह्मणो ज्ञानस्वभावत्वायोगाच्च । न च षष्ठः, मोक्षे अन्यार्थोल्लेखाभावात्, स्वरूपोल्लेखे च ?विषयत्वापातात् । न सप्तमः, पराङ्गीकृताया जातेर्व्यवहारहेतुत्वादेर्वा ?तेऽसम्भवात् । एवं च–

अर्थप्रकाशरूपत्वं ज्ञानत्वं ब्रह्मणः कथम् ।
अन्यार्थाभावतो मोक्षे स्वेन स्वस्याप्यवेदनात् ॥

(२) किं चेदमानन्दत्वं जातिविशेषो वा? अनुकूलतया वेदनीयत्वं वा अनुकूलवेदनरूपत्वं वा? अनुकूलत्वमात्रं वा? विज्ञानात्मकत्वमेव वा? दुःखविरोधिस्वरूपत्वं वा? दुःखाभावोपलक्षितस्वरूपत्वं वा? पराङ्गीकृतं वा? नाद्यः, अखण्डस्वरूपानन्दे तदयोगात् । न द्वितीयः, मोक्षे वेदितुरभावात् । आत्मनोऽवेद्यत्वाच्च । किं चानुकूल्यं किंचित्सापेक्षं न चान्यं प्रति तद्युक्तमिति स्वं प्रत्येव वक्तव्यत्वेन सविशेषत्वापातः । अत एव न तृतीयः, अपि च वेदनस्वभावादधिकस्यानुकूल्यस्यस्वाभाविकत्वे सखण्डार्थत्वापातः । औपाधिकत्वे कदाचिदानन्दनिवृत्त्यापातः । न चतुर्थः, उक्तरीत्यानुकूल्यासम्भवात् । एतेन निरुपाधिकेष्टत्वमानन्दत्वमिति निरस्तम् । न पञ्चमः, दुःखादिज्ञानस्याप्यानन्दत्वापातात् । विषयानुल्लेखिज्ञानं तथेति चेन्न, विरोधात् । 'विज्ञानमानन्दं ब्रह्मे'त्यदौ विज्ञानपदेनैव दुःखव्यावृत्तिसिद्धावानन्दपदवैयर्थ्याच्च । न षष्ठः, विरोधस्य निवर्तकत्वादिरूपत्वे दुःखस्य नित्यनिवृत्त्यापत्तेः । तादात्म्यायोग्यत्वरूपत्वे घटादेरप्यानन्दत्वापातात् । 'विज्ञानमानन्दं ब्रह्मे'त्यादौ दुःखव्यावृत्तेरार्थिकत्वोक्त्ययोगाच्च । न सप्तमः, वैशेषिक मोक्षवत् त्वदुक्तस्य दुःखस्याभावे सत्यपि आनन्दाभावेनापुमर्थत्वस्य त्वन्मोक्षेऽप्यापातात् । नाष्टमः, पराङ्गीकृतस्य निरुपाध्यनुकूलतया वेदनीयत्वादेस्त्वन्मतेऽसम्भवात् । यदि चानन्दत्वादेर्दुर्निरूपत्वेऽपि तदधिकरणं ब्रह्माबाध्यमानन्दाद्यात्मकं च, तर्हि सत्यत्वादेर्दुर्निरूपत्वेऽपि तदधिकरणं जगदप्यबाध्यं सदात्मकं च स्यात् । एवं च–

निरुपाध्यनुकूलत्ववेदनीयं सुखं मतम् ।
निर्विशेषमवेद्यं च कथं ब्रह्मसुखात्मकम् ॥

(३) किं चेदमद्वितीयत्वं द्वितीयाभावविशिष्टत्वं वा? तदुपलक्षितत्वं वा? नाद्यः, द्वितीयाभावस्य प्रामाणिकत्वे तेनैव, अप्रामाणिकत्वे द्वितीयेनैव सद्वितीयत्वापातात् । न

चाऽभावस्य प्रामाणिकत्वेऽपि प्राभाकरमत इवाऽधिकरणमात्रत्वाददोषः । ''अनुपलब्धिगम्योऽभाव'' इत्यादित्वन्मतभङ्गात् । अनृतव्यावृत्तेरपि ब्रह्ममात्रत्वेन भेदसत्यत्वापाताच्च । प्राभाकरमतेऽपि प्रतियोगिमदधिकरणव्यावृत्त्यर्थं कैवल्यादिविशेषितस्यैवाधिकरणस्याभावत्वाच्च । न चेत्तन्मतेऽप्यनुपपत्तिरेव । अन्यथा गुणगुण्यभेदमते शौक्ल्यादेरिव शक्त्यादिभावधर्माणामपि ब्रह्ममात्रत्वं स्यात् । न च भावरूपद्वितीयाभावविशिष्टत्वमद्वितीयत्वं । तथा चाभावस्य द्वितीयस्य प्रामाणिकत्वेऽप्यदोष इति वाच्यम्, दृश्यस्याप्यभावस्येव श्रुत्यादिसिद्धस्य धर्माधर्मादिरूपभावस्यापि मिथ्यात्वायोगादित्युक्तत्वात् । अत एव नान्त्यः, उपलक्षणस्याप्यभावस्याप्रामाणिकत्वे तत्प्रतियोगिनो द्वितीयस्य प्रामाणिकत्वावश्यम्भावात् । किं चाभावस्य प्रागभावादित्वे द्वितीयस्यानित्यत्वमात्रं स्यान्न तु मिथ्यात्वम् । अत्यन्ताभावत्वे उपलक्षणत्वमयावद्द्रव्यभावित्वेन चेदत्यन्ताभावत्वहानिः । वेदान्ततात्पर्यविषयत्वादिकार्यानन्वयित्वेन चेदत्यन्ताभावासिद्धिः । किं चाप्रामाणिकेन द्वितीयाभावेनेव द्वितीयेनाप्युपलक्षितत्वसम्भवात्, तेन सद्वितीयं किं न स्यात्? एवं च–

द्वैताभावस्तात्त्विकश्चेत्तेन स्यात्सद्वितीयता ।
अतात्त्विकश्चेद् द्वैतेन सद्वितीयत्वमापतेत् ॥

(४) किं चेदं नित्यत्वं यद् ब्रह्मण एवाभिमतं सर्वकालसम्बन्धित्वं वा? कालावच्छेदराहित्यं वा? ध्वंसाप्रतियोगित्वं वा? उभयावधिराहित्यं वा? नाद्यौ, अविद्यायां काले चाऽतिव्याप्तेः । सापि हि सर्वकालोपादानत्वत्तत्सम्बन्धिनी । इदानीमेव नान्यदेत्येवं रूपतदवच्छेदरहिता च । न तृतीयः, ध्वंसेऽतिव्याप्तेः । ननु ध्वंसोऽपि ध्वंसप्रतियोगी, प्रतियोग्यनुन्मज्जनं तु प्रागभावनिवृत्तिरूपस्य घटस्य निवृत्तावपि प्रागभावानुन्मज्जनवद् युक्तमिति चेन्न, एवं सति मोक्षेऽप्यात्मान्यस्य कस्यचिद् ध्वंसस्य वक्तव्यतया लाघवार्थम् आद्यध्वंसनित्यताया एव युक्तत्वात् । न च ध्वंसस्य नित्यत्वेऽपि भावेषु ब्रह्मैव नित्यमित्यस्याहानिरिति वाच्यम्, निष्प्रतियोगिकत्वेन भावस्य ध्वंसत्वादेर्नित्यत्वावश्यम्भावात् । न चतुर्थः, एवं

परिभाषायामपि ब्रह्मण एव नित्यत्वमित्येतत्फलस्य मुक्तावन्याभावस्यासिद्धेः । एवं च–

काले कालापरिच्छेन्ने ध्वंसे चाध्वंसयोगिनि ।
नित्ये सति कथं नित्यं ब्रह्मैवेति मतं तव ॥

(५) कथं च दृग्रूपस्यात्मनः साक्षाद् द्रष्टृत्वरूपं साक्षित्वम्? "साक्षाद् द्रष्टरिसंज्ञाया"मिति हि सूत्रम् । बुद्ध्युपाधिकस्यापि द्रष्टृत्वस्य सुषुप्त्यादावभावात् । बुद्धेः साक्ष्यधीनसिद्धिकप्रातीतिका विद्याकार्यत्वेन चक्रकाश्रयत्वाच्च । किं च साक्षी किं जीवकोटिः? ब्रह्मकोटिर्वा? उभयानुगतं चिन्मात्रं वा? नाद्यः, जीवो बुद्ध्युपाधिकोऽणुरिति पक्षे इदमंशावच्छिन्नचिद्वेद्यस्य शुक्तिरूप्यादेः साक्षिवेद्यत्वायोगात्, चक्रकाच्च । "अज्ञानोपाधिकः सर्वगत" इति पक्षेऽपि अज्ञानस्य साक्ष्यधीनसिद्धिकत्वेनाऽन्योन्याश्रयात् । न द्वितीयः, तेन ब्रह्मण एव साक्षिवेद्यसुखदुःखादिधीः, न तु जीवस्येति वैपरीत्यापातात् । अन्यथाऽनवच्छिन्नानन्दधीरपि जीवस्य स्यात् । न च ब्रह्मचैतन्यं घटादिप्रकाशकमिति मतेऽज्ञानाभिभवद्वारा तस्य जीवचैतन्याभेदाभिव्यञ्जकान्तः करणवृत्तिरिवेह तादृशी वृत्तिरस्ति । न तृतीयः, ईश्वरेणेव चिन्मात्रेणापि सांसारिकदुःखस्य तद्गतत्वेनाऽग्रहणेऽपि यद्भागो मुक्तस्तस्य चिन्मात्रस्य दुःखाद्युल्लेखरूपोपप्लवापातात् । सुप्तमैत्रं प्रति मैत्रीयाज्ञानादेर्मैत्रीयतयेव जाग्रच्चैत्रीयदुःखादेरपि चैत्रीयतया सुप्तमैत्रं प्रति प्रतीतिप्रंसङ्गेन मैत्रस्यैतावंतं कालं दुःखं नावेदिषमिति परामर्शायोगाच्च । नापि साक्षात्कर्त्तव्याकाराविद्यावृत्तिप्रतिफलितं चैतन्यं साक्षि, सुषुप्तौ चाज्ञानाद्याकाराविद्यावृत्तिर्नास्तीति वाच्यम्, दुःखादेः स्वानन्तरभाव्यविद्यावृत्तिप्रतिफलितचिद्वेद्यत्वे ज्ञातैकसत्त्वायोगात् । अविद्यावित्तेरपि साक्ष्यधीनसिद्धकत्वेनान्योन्याश्रयाच्च विस्तृतं चैतदसतः साधकत्वभङ्गे । परमते ब्रह्मणो ज्ञानत्वानन्दत्वाद्वितीयत्वनित्यत्वसाक्षित्वभङ्गः ॥ ७ ॥

## अद्वैतसिद्धिः

वंशीविभूषितकरान्नवनीरदाभात् पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात् कृष्णात्परं किमपि तत्त्वमहं न जाने ॥

(अद्वैतसिद्धिः)

(१) ननु– निर्विशेषं चेद् ब्रह्म, तर्हि ब्रह्मैवेकं ज्ञानात्मकमानन्दात्मकमद्वितीयं नित्यं साक्षि चेति नोपपद्यते । तथा हि– तत्र तावत् ज्ञानत्वं किं जातिविशेषो वा? साक्षाद्व्यवहारजनकत्वं वा? जडविरोधित्वं वा? जडान्यत्वं वा? अज्ञानविरोधित्वं वा? अर्थप्रकाशात्मकत्वं वा? पराङ्गीकृतं वा? नाद्यः, वृत्तिप्रतिबिम्बितज्ञानाभासेषु तत्सम्भवेऽप्यखण्डरूपब्रह्मज्ञाने तदयोगात् । न द्वितीयः, फलोपधानस्य सुषुप्त्यादावभावात्, शक्त्यादिरूपस्वरूपयोग्यताया अपि मुक्तावभावात् । न तृतीयः, स्वरूपज्ञानस्य नित्यत्वेन तद्विरुद्धस्य जडस्य नित्यनिवृत्त्यापातात् । न चतुर्थः, 'सत्यं ज्ञान'मित्यादौ अनृतव्यावृत्तेरार्थिकत्वोक्तिविरोधात् । न च पञ्चमः, अज्ञानस्य नित्यनिवृत्त्यापातात् । न षष्ठः, मोक्षे अन्यार्थोल्लेखाभावात्, स्वरूपोल्लेखे च स्वविषयत्वापातात् । न सप्तमः, पराङ्गीकृतजातेर्व्यवहारहेतुत्वादेर्वा त्वन्मते असंभवादिति चेन्न, अर्थप्रकाशत्वमेव ज्ञानत्वम् । मुक्तावर्थाभावेऽपि तत्संसृष्टप्रकाशत्वस्य कदाचिदर्थ संबन्धेनाप्यनपायात्, अत एव–

> 'अर्थप्रकाशरूपत्वं ज्ञानत्वं ब्रह्मणः कथम् ।
> अन्यार्थाभावतो मोक्षे स्वेन स्वस्याप्यवेदनात् ॥' इति निरस्तम् ।

(२) यत्तु– आनन्दत्वं जातिविशेषो वा? अनुकूलतया वेदनीयत्वं वा? अनुकूलवेदनत्वं वा? अनुकूलत्वमात्रं वा? ज्ञानात्मकत्वमेव वा? दुःखविरोधित्वं वा? दुःखाभावोपलक्षितस्वरूपत्वं वा? पराङ्गीकृतं वा? नाद्यः, अखण्डस्वरूपानन्दे तदभावात् । न द्वितीयः, मोक्षे वेदितुरभावाद्, आत्मनोऽवेद्यत्वाच्च । किं च आनुकूल्यं किंचित्सापेक्षम्, न चान्यं प्रति तद्युक्तमिति स्वं प्रत्येव वक्तव्यत्वेन सविशेषत्वापातात् । अत एव न तृतीयः । किं च वेदनस्वभावादधिकस्यानुकूलस्य स्वाभाविकत्वे सखण्डत्वापातः, औपाधिकत्वे कदाचिदानन्दनिवृत्त्यापातः, न चतुर्थः, उक्तरीत्या आनुकूल्यासम्भवात् । अत एव– निरुपाधीष्टत्वमानन्दत्वमिति– निरस्तम् । न पञ्चमः, दुःखादिज्ञानस्यापि आनन्दत्वापातात् । विषयानुल्लेखिज्ञानं तथेति चेन्न, ज्ञानस्य सविषयत्वनियमाद्, 'विज्ञानमानन्दं ब्रह्मेत्यादौ विज्ञानपदेनैव दुःखव्यावृत्तिसिद्धावानन्दपदवैयर्थ्यापाताच्च । न षष्ठः, विरोधस्य निवर्तकत्वादिरूपत्वे दुःखस्य नित्यनिवृत्त्यापत्तेः, तादात्म्यायोग्यत्वरूपत्वे घटादावप्यानन्दत्वापाताद्, 'विज्ञानमानन्दं ब्रह्मे'त्यादौ दुःखव्यावृत्तेरार्थिकत्वोक्त्ययोगाच्च । न सप्तमः, वैशेषिकमोक्षवत्

(अद्वैतसिद्धिः)

त्वदुक्तस्य दुःखस्याभावे सत्यपि आनन्दाभावेनापुमर्थत्वस्य त्वन्मोक्षेऽप्यापातात् । नाष्टमः, पराङ्गीकृतस्य निरुपाध्यनुकूलवेदनीयत्वादेस्त्वन्मते असंभवात् । यदि चानन्दत्वादेर्दुर्निरूपत्वेऽपि तदधिकरणं ब्रह्माबाध्यमानन्दाद्यात्मकं च, तर्हि सत्यत्वादेर्दुर्निरूपत्वेऽपि तदधिकरणं जगदबाध्यं सदात्मकं च स्यादिति चेन्न, आनन्दत्वस्य निरुपाधिकेष्टत्वरूपत्वात् । न च दुःखाभावे अतिव्याप्तिः, दुःखाभावस्यापि सुखशेषत्वाद्, अभावस्य विरोधिभावान्तरत्वाभ्युपगमात् । न च मुक्ताविच्छापाये आनन्दापायापत्तिः इष्टत्वोपलक्षितस्य स्वरूपस्यानपायाद्, उपलक्ष्ये च तदवच्छेदकसत्त्वस्यातन्त्रत्वात् । न च– निरुपाधिकेष्टत्वं स्वाभाविकमौपाधिकं वा, नान्त्यः, ब्रह्मणः आनन्दरूपत्वापत्तेः, आद्ये ज्ञानातिरेकि, तदनतिरेकि वा, आद्ये सखण्डत्वापत्तिः, द्वितीये आनन्दपदवैयर्थ्यमिति वाच्यम्, ज्ञानानन्दयोरभेदेऽपि कल्पितजातिभेदनिबन्धनप्रवृत्तिकतया पदद्वयप्रयोगस्य व्यावृत्तिभेदेन साफल्यात् । एतेन विषयानुल्लेखिज्ञानमेवानन्द इत्यपि युक्तम्, ज्ञाने विषयोल्लेखनियमस्य प्रागेव निरासात् । एवं चानन्दत्वस्य सुनिरूपतया न तन्न्यायेन जगतश्च सदात्मकत्वापादनमिति ।

किंच जगति सदाद्यात्मकत्वे बाधकं दृश्यत्वादिकम्, न त्वानन्दे, तस्य दृगनतिरेकात् । एतेन–

'निरुपाध्यनुकूलत्ववेदनीयं सुखं मतम् ।
निर्विशेषमवेद्यं च कथं ब्रह्म सुखात्मकम् ॥'

इति– निरस्तम्, परमप्रेमास्पदत्वेन वेद्यत्वात्, सुखवेदनभेदाभावात्, वेदनाभावेनासुखत्वापादनानुपपत्तेः ।

(३) ननु– अद्वितीयत्वं द्वितीयाभावविशिष्टत्वम्? तदुपलक्षितत्वं वा? उभयथापि विशेषणमुपलक्षणं वा द्वितीयाभावः प्रामाणिकश्चेत्, तदा तेन सद्वितीयत्वापत्तिः अप्रामाणिकश्चेत्, तदा द्वितीयेन सद्वितीयत्वापत्तिः । न चाभावे द्वितीयेऽपि न भावाद्वैतहानिः, अभाववद् दृश्यस्य धर्मादेरप्येवं प्रामाणिकत्वे बाधकाभावादिति चेन्न, प्राभाकररीत्या द्वितीयाभावस्याधिकरणानतिरिक्तत्वेन प्रामाणिकत्वेऽपि तेन सद्वितीयत्वाभावात् । न च– एवमनुपलब्धेः पार्थक्येन प्रमाणत्वोक्तिरयुक्ता, प्रमेयानतिरेकादिति– वाच्यम्, अतिरिक्ताभाववादिमत एव तदुक्तेः, अतिरिक्ताभावानभ्युपमेऽपि अभावत्वप्रकारकज्ञाने तत्प्रामाण्योपपत्तेश्च ।

(अद्वैतसिद्धिः)

न चामृतव्यावृत्तेरपि ब्रह्ममात्रतया भेदसत्यत्वापत्तिः, इष्टापत्तेः, अनृतनिरूपितत्वं परमनृतमिथ्यात्वान्मिथ्या । भेदो ब्रह्माभिन्नतया सत्य एवेति । न च प्राभाकरमते प्रतियोगिमदधिकरणव्यावृत्त्यर्थं कैवल्यादिविशेषोऽवश्यमधिकरणे वक्तव्यः, तथा च स एवाभावः, अन्यथा तेषामप्यनुपपत्तिरेवेति वाच्यम्, यस्मिन् कदापि न प्रतियोगिसम्बन्धः, तस्मिन् स्वरूपरूपोऽभेद एव कैवल्यम् । यस्मिंश्च कदाचित् सोऽपि, तदा तस्मिन् प्रतियोगिमदधिकरणकालभिन्न कालावच्छिन्नमधिकरणमिति न कैवल्यस्याधिकरणातिरेकः, न वानुपपत्तिरिति । न च एवं गुणगुण्यभेदवादिमते शौक्ल्यादेरिव शक्त्यादेरपि भावरूपधर्मस्य ब्रह्माभेदोऽस्त्विति वाच्यम्, शक्त्यादिना सहाभेदग्राहकमानाभावात् । अस्तु वा द्वितीयाभावोपलक्षितस्वरूपत्वम् अद्वितीयत्वम्, तस्य च प्रामाणिकत्वेऽपि तत्प्रतियोगिनो द्वितीयस्य स्वप्नोपभुक्तनिगरणादाविव प्रामाणिकत्वानापत्तेः । एतेन– द्वितीयाभावस्य प्रागभावादित्वे द्वितीयस्यानित्यत्वमात्रं स्यात्, न तु मिथ्यात्वम्, अत्यन्ताभावत्वे तूपलक्षणत्वानुपपत्तिः, सदातनत्वात्, श्रुतितात्पर्यविषयत्वादिकार्यानन्वयित्वेन उपलक्षणत्वे अत्यन्ताभावासिद्धिः । एवं च–

'द्वैताभावस्तात्त्विकश्चेत् तेन स्यात् सद्वितीयता ।
अतात्त्विकश्चेद् द्वैतेन सद्वितीयत्वमापतेत् ।'

इति परास्तम्, स्वरूपातिरेकितया तत्प्रमाया अनुद्देश्यत्वात्, तद्बोधस्यावान्तरतात्पर्येण यथाकथञ्चित्संभवात्, तात्त्विकत्वे ब्रह्मानतिरेकात्, अतात्त्विकत्वे स्वप्ननिगरणन्यायस्योक्तत्वात् । उपपादितं चैतद्विस्तरेण प्रागिति शिवम् ।

(४) ननु– ब्रह्मण एव यन्नित्यत्वमभिमतम्, तत् किं सर्वकालसम्बन्धत्वं वा? कालावच्छेदराहित्यं वा? ध्वंसाप्रतियोगित्वं वा? उभयावधिराहित्यं वा? नाद्यौ, अविद्यायां काले चातिव्याप्तेः, अविद्यायाः सर्वकालोपादानत्वेन तत्संबन्धनियमादिदानीमेव नान्यदेत्येवंरूपतदवच्छेदरहितत्वाच्च । न तृतीयः, ध्वंसेऽतिव्याप्तेः । न च ध्वंसोऽपि ध्वंसप्रतियोगी, प्रतियोग्यनुन्मज्जनं तु प्रागभावनिवृत्तिरूपस्य घटस्य निवृत्तावपि प्रागभावानुन्मज्जनवद्युक्तमिति वाच्यम्, एवं सति मोक्षेऽप्यात्मान्यस्य कस्यचिद् ध्वंसस्य वक्तव्यतया लाघवार्थमाद्यध्वंसनित्यताया एव युक्तत्वात् । न च– ध्वंसस्य नित्यत्वेऽपि भावेषु ब्रह्मैव नित्यमिति– वाच्यम्, निष्प्रतियोगिकत्वेन भावस्य ध्वंसत्वादेरपि नित्यत्वावश्यं भावात् । न चतुर्थः, एवं

(अद्वैतसिद्धिः)

परिभाषायामपि ब्रह्मण एव नित्यत्वमित्येतत्फलस्य मुक्तावन्याभावस्यासिद्धिरिति चेन्न, चतुर्थपक्षस्य क्षोदसहत्वात् । न च– अन्त्यावधिरहितस्य ब्रह्मान्यस्य मुक्तावसत्त्वं न सिद्धमिति– वाच्यम्, विशेषणान्तरस्यैव सिद्धेः । अत एव–

काले कालापरिच्छेदेन्ने ध्वंसे चाध्वंसयोगिनि ।
नित्ये सति कथं नित्यं ब्रह्मैवेति मतं तव ॥

इति– निरस्तम्, कालस्याप्याविद्यकत्वेनान्त्यावधिमत्त्वाद्, ध्वंसस्याध्वंसप्रतियोगित्वेऽपि आद्यावधिमत्त्वाच्च । न च तावता सद्वितीयत्वम्, तात्त्विकस्य द्वितीयस्यैवमप्यभावात् । न चैवमतात्त्विकत्वे ध्वंसनिवृत्तिः, इष्टत्वात् । न च प्रतियोग्युन्मज्जनम्, तादृग्ध्वंसोपलक्षितस्वरूपस्यैव विरोधित्वात् प्रागभावस्य प्रतियोगिध्वंसादाविव ।

(५) ननु– कथं दृग्रूपस्य ब्रह्मणः साक्षाद् द्रष्टृत्वरूपं साक्षित्वम्? 'साक्षाद् द्रष्टरिसंज्ञाया'मित्यनुशासनादिति चेत्, अविद्यातत्कार्यान्यतरप्रतिफलितचैतन्यस्यैव साक्षित्वात् । तथा च दृग्रूपस्यापि उपाधिना द्रष्टृत्वम् । नचोपाधेरपि साक्ष्यधीनसिद्धिकप्रातीतिकाविद्याकार्यत्वेन चक्रकाद्यापत्तिः, उत्पत्तिज्ञप्तिप्रतिबन्धस्याभावादविद्यातदुपाधिक द्रष्टृत्वयोरुभयोरप्यनादित्वात् ।

ननु– साक्षी जीवकोटिर्वा, ब्रह्मकोटिर्वा, उभयानुगतं चिन्मात्रं वा? नाद्यः, जीवो बुद्ध्युपाधिकोऽणुरिति पक्षे इदमंशावच्छिन्न चिद्वेद्यस्य शुक्तिरूप्यस्य साक्षिवेद्यत्वायोगाच्चक्रकाद्यापातात् । अज्ञानोपाधिकः सर्वगत इति पक्षेऽप्यज्ञानस्यापि साक्ष्यधीनसिद्धिकत्वेनान्योन्याश्रयात् । न द्वितीयः, ब्रह्मण एव साक्षिवेद्यदुःखादिधीः, न जीवस्येति वैपरीत्यापाताद्, अन्यथा अनवच्छिन्नानन्दधीरपि जीवस्येति स्यात् । ब्रह्मचैतन्यं घटादिप्रकाशकमिति मते अज्ञानाभिभवद्वारा तस्य जीवचैतन्याभेदाभिव्यञ्जकान्तःकरणवृत्तिवत्तादृशवृत्त्यभावाच्च । न तृतीयः, ईश्वरेणेव चिन्मात्रेणापि संसारिदुःखस्य तद्गतत्वेना ग्रहणेऽपि यद्भागो मुक्तस्तस्य चिन्मात्रस्य दुःखाद्युल्लेखरूपोपप्लवापायात् । सुप्तमैत्रं प्रति मैत्रीयाज्ञानादेर्मैत्रीयतयेव जाग्रच्चैत्रीयदुःखादेरपि चैत्रीयतया सुप्तमैत्रं प्रति प्रतीतिप्रसङ्गेण मैत्रेणैतावन्तं कालं दुःखं नावेदिषमिति परामर्शायोगादिति चेन्न, शुद्धब्रह्मातिरिक्तस्य बुद्ध्युपाधिकजीवातिरिक्तस्य साक्षिणोऽङ्गीकृतत्वेन तत्पक्षोक्तदोषाभावात् । तथा चाविद्या-

(अद्वैतसिद्धिः)

वृत्तिप्रतिफलितं चैतन्यं साक्षि, सुषुप्तावप्यविद्यावृत्तिस्वीकारस्य प्रागुक्तेः । न चान्योन्याश्रयः, प्रागेव निरासात्, शुद्धस्य साक्षित्वाभावेन मुक्तोपप्लवापाताभावात् । यस्तु सुप्तमैत्रे चैत्रः दुःखग्रहणापत्त्या एतावन्तं कालं दुःखं नावेदिषमिति परामर्शाविरोध उक्तः, तन्न, साक्षिणः सर्वजीवसाधारण्येऽपि तत्तज्जीवचैतन्याभेदेनाभिव्यक्तस्य तत्तद्दुःखादिभासकतया अतिप्रसङ्गाभावात् । यच्च सुखादेः स्वानन्तरभाव्यविद्यावृत्तिप्रति फलितचिद्वेद्यत्वे ज्ञातैकसत्त्वायोग इति, तन्न, मानसत्ववादिमतेऽप्यस्य समानत्वात् । न हि तन्मते ज्ञातैकस्थितिकत्वातिरिक्तं ज्ञातैकसत्त्वमस्ति, दुःखादिसमसमयोत्पन्नवृत्त्यापि ज्ञातैकसत्त्वोपपत्तेश्च । तस्मात् ज्ञानानन्दैकरूपमद्वितीयं नित्यं साक्षि च ब्रह्मेति सिद्धम् । इत्यद्वैतसिद्धौ ब्रह्मणो ज्ञानत्वानन्दत्वाद्वितीयत्वनित्यत्वसाक्षित्वोपपत्तिः ॥

## न्यायामृततरङ्गिणी

**अखण्डरूपे** । एकव्यक्तिके ॥ **नित्येति** ॥ अन्यथा विरोधायोगः ॥ **आर्थिकत्वेति** ॥ ज्ञानत्वजडव्यावृत्तत्वयेरेकत्वात् । **द्वितीयादिष्विति** ॥ परमते घटज्ञानस्यापि ब्रह्मस्वरूपज्ञानत्वेन द्वितीयादिषु घटज्ञानेष्वज्ञानविरोधित्वरूपज्ञानत्वायोगाज्ज्ञान व्यवहारयोगित्वं ज्ञानत्वमस्वाभाविकं ब्रह्मणो जगत्कारणत्वादिवदित्यापद्येत । ननु कदाचिदर्थोल्लेखमात्रेण मोक्षेऽर्थाभावेप्यर्थप्रकाशत्वमुपपद्यते । मैवम् । कदाचिदावृतत्वमात्रेण मोक्षेप्यावृतत्वापातात् । अर्थोल्लेखस्य ज्ञानस्य भावत्वेन मोक्षे तदभावे ज्ञानस्वभावहानेश्च ॥ **अवेद्यत्वाचेति** ॥ तथाचात्मरूपे सुखेचासंभवः ॥ **अन्यंप्रतीति** ॥ मोक्षेऽन्याभावात् ॥ **वेदनेति** ॥ वेदनप्रकारभूतस्यानुकूल्यस्य वेदनादधिकत्वे स्वाभाविकत्वे च सखण्डार्थत्वम् ॥ **औपाधिकत्व इति** ॥ उपाधिवृत्त्यौपाधिकनिवृत्तेरावश्यकत्वात् ॥ **एतेनेति** ॥ आनुकूल्यवन्निरुपाधिकेष्टत्वस्य स्वरूपादधिकस्य स्वाभाविकत्वे औपाधिकत्वे च दोषात् । दुःखाभावेऽतिव्याप्तेश्च । यत्तु दुःखाभावोऽपि सुखविशेष एव अभावस्य विरोधिभावान्तररूपत्वादिति । तन्न । परस्पराभावरूपयोः सुखदुःखयोर्विरहस्यैकत्रपाषाणादावसत्त्वापत्तेः । अपसिद्धान्ताच्च । मुक्ताविच्छाभावेनानन्दाभावापत्तेश्च । नचेष्टत्वोपलक्षितस्वरूपं मोक्षेऽप्यस्तीति वाच्यम् । तथा सति तदुपलक्षितत्वस्य तदाप्यापातात् ॥ **विरोधादिति** ॥ ज्ञानस्य विषयोल्लेखिभावत्वात् । **विज्ञानमिति** ॥ विज्ञानस्यानन्तत्वे विज्ञानपदस्यार्थभूतेन विज्ञानेनानंदकार्यदुःखव्यावृत्ति सिद्ध्याऽऽनंदपदस्य वैयर्थ्यं विज्ञानपदार्थाधिकार्थत्वाभावः । तथाच विज्ञानानन्दयोरेकतरपरिशेषापत्त्या मोक्ष आनन्दप्रकाशो

(तरङ्गिणी)

न स्यादिति भावः । यस्तु कल्पितजातिभेदनिबंधनप्रवृत्तिकपदद्वयस्य व्यावृत्तिभेदेन साफल्यमाह तदबोधात् । नह्यत्र पदयोर्वैफल्यमापाद्यते । किंत्वानन्दस्याप्रकाशः ॥ आर्थिकत्वेति ॥ आनन्दपदेनैव दुःखव्यावृत्तेरभिधानात् ॥ उक्तस्येति ॥ दुःखाभावोपलक्षितस्वरूपस्य दुःखाभावानन्दयोर्द्वयोरुभयमतेऽप्यभावादित्यर्थः ॥ अनुपलब्धीति ॥ अधिकरणस्वरूपस्याभावस्य यथायथमिन्द्रियादिभिरेव बोधनसंभवात् ॥ सत्यत्वेति ॥ सत्यब्रह्मरूपत्वात् ॥ प्राभाकरेति ॥ यत्र कदाऽपि न प्रतियोगिसंबंधस्तत्र तत्स्वरूपत्वमेव कैवल्यमन्यत्र तु प्रतियोगिमदधिकरणकालभिन्नकालावच्छिन्नत्वादिकं कैवल्यं विशेषणं वाच्यम् ॥ अन्यथेति ॥ कैवल्याद्यविशेषितस्याधिकरणमात्रस्याभावत्वेऽपि प्राभाकरमतेऽनुपपत्त्यभावे ॥ गुणगुणीति ॥ यथा प्राभाकरमतं प्रविश्य द्वितीयाभावस्य ब्रह्ममात्रत्वमुक्त्वा ब्रह्मणः सद्वितीयत्वं परिहृतं तथाऽधिकरणाभिन्नशौक्ल्याद्यंगीकर्तृमतं प्रविश्य शक्त्यादिधर्मान्ब्रह्मस्वरूपानङ्गीकृत्य द्वैतपरिहारः सुकर इति किं शक्त्यादीनां मिथ्यात्ववर्णनेन ॥ प्रामाणिकत्वेति ॥ ननु स्वप्नोपभुक्तनिगरणादेरिव न प्रामाणिकत्वमत उक्तं तत्प्रतियोगिन इति । तद्विरहरूपस्येत्यर्थः ॥ अत्यन्ताभावासिद्धिरिति ॥ यत्त्वत्यंताभावप्रमाया अनुद्देश्यत्वेऽप्यवान्तरतात्पर्येण तत्सिद्धिरिति तन्न । सार्वज्ञादिष्ववान्तरतात्पर्याभावमत्यन्ताभावे च तद्भावमभिदधानमवधानवन्तं प्रत्यवक्तव्यत्वात् ॥ अप्रामाणिकेनेति ॥ द्वितीयाभावद्वितीययोरप्रामाणिकत्वे ब्रह्मप्रत्युपलक्षणत्वे चाविशेषाद्वितीयाभावेनाद्वितीयेन सद्वितीयं कथं न स्यात् ॥ सापीति ॥ येन काले नाविद्यमानं संबध्यत इत्युच्यते तत्कालस्वरूपमेवोपादानाभावान्न सिध्येत् ॥ इदानीमेवेति ॥ अन्यदेत्यस्य कालवाचित्वादुपादेयं कालमङ्गीकृत्य तदुपादानाविद्यानङ्गीकारे व्याघातः ॥ अनुन्मज्जनं त्विति ॥ घटवद्धटनिवृत्तेरपि प्रागभावविरोधित्वाद्यथा घटप्रागभावानुन्मज्जनं तथा घटध्वंसवद्धटध्वंसस्य ध्वंसो घटविरोधीति न घटोन्मज्जनम् ॥ एवं सतीति ॥ घटप्रागभावानुन्मज्जनार्थं घटध्वंसस्य स्थायित्वं यथा मयाङ्गीक्रियते तथा घटध्वंसवत् ध्वंसादीनामनुन्मज्जनाय कश्चित् ध्वंसः स्थायीति चरमंगत्वा स्वीकार्यम् । तद्वरं प्रथमत एव ध्वंसे स्थायित्वं स्वीकर्तुम् ॥ निष्प्रतियोगिकत्वेनेति ॥ ध्वंसस्य नित्यस्याङ्गीकारे निष्प्रतियोगिकत्वेन भावरूपाणि ध्वंसत्वादीन्यप्यङ्गीकरणीयानि । आदिपदेन ध्वंसाधिकरणे ध्वंसाधिकरणत्वादीनि ॥ एवमिति ॥ ब्रह्मण एवोभयावधिराहित्यस्यान्यदीयतथात्वं प्रति विरोधित्वेऽपि मुक्तौ च तथाभूतान्यसत्यं प्रत्यविरोधित्वात् । ननु दृगेव साक्षिशब्देनाभिधीयतामत आह ॥ साक्षादिति ॥ द्रष्टर्येव साक्षिशब्दस्यानुशासनात् । ननु स्वरूपेण दृश्येऽप्यन्योपाधिकं द्रष्टृत्वमत आह ॥ बुद्ध्युपाधिकस्येति ॥ तथाच सुषुप्तिसाक्षिण्य-

(तरङ्गिणी)

व्याप्तिरित्यर्थः ॥ बुद्धेरिति ॥ साक्षिस्वरूपलाभे तदधीनप्रतीतिमात्रशरीराविद्यासिद्धचैत्तत्सिद्धौ च तत्कार्या बुद्धिस्तत्सिद्धौ च तदुपाधिकस्य द्रष्टृत्वस्य साक्षिस्वरूपे लाभ इति चक्रकाश्रयः । एतेनाविद्यातदुपाधिकद्रष्टृत्वयोरनादित्वादुत्पाद्य प्रतिबंधकत्वान्नचक्रकादिदोष इति निरस्तम् । परस्परस्वरूपे परस्परापेक्षणात् । नहि द्रव्यत्वगुणवत्त्वयोः स्वरूपेऽन्योन्यापेक्षा ॥ जीव इति ॥ जीवकोटेः साक्षिणः सकाशादिदमंशावच्छिन्नचैतन्यस्य ब्रह्मस्वरूपस्येदमंशप्रकाशकस्य भेदादित्यर्थः । जीवः परिच्छिन्न इति पक्षे ब्रह्मचैतन्यस्य घटादिप्रकाशकत्वात् ॥ तेनेति ॥ ब्रह्मकोटिना साक्षिणा । ननु ब्रह्मणो दुःखादिधीरेव जीवस्य तद्धीरत आह ॥ अन्यथेति ॥ ब्रह्मधिय एव जीवधीत्वे । ननु बह्मचैतन्यस्य घटादिप्रकाशकत्वेऽपि जीवोपाधिभूतांतःकरणीयवृत्त्या जीवस्य घटप्रकाशकब्रह्मचैतन्याभेदाभिव्यक्तौ जीवस्य घटप्रकाशः तथा ब्रह्मकोटिनः साक्षिणो दुःखाद्यनुभवेऽपि तेन जीवस्याभेदाभिव्यक्तौ जीवस्यापि दुःखादिधीर्युज्यत इत्याशङ्क्याह ॥ न चेति ॥ साक्षिजीवयोरेकोपाध्यवच्छिन्नत्वाभावादित्यर्थः ॥ ईश्वरेणेवेति ॥ चिन्मात्ररूपः साक्षीश्वरवत्स्वाश्रित्वेन दुःखमगृह्णन्नपि परकीयदुःखोल्लेखित्वाद्दुःखोपप्लुत एवातस्तद्भावापत्तिरूपा मुक्तिरप्यपुरुषार्थः स्यात् ॥ सुप्तेति ॥ चैत्रं प्रति चैत्रदुःखादेश्चैत्रीयतया ग्राहकस्य चिन्मात्ररूपसाक्षिणो मैत्रं प्रत्यनुपगतत्वात् ॥ साक्षात्कर्तव्येति ॥ चिन्मात्रस्य साक्षीतरस्य मुक्तत्वान्न तत्र संसारो पप्लवः । सुप्तमैत्रे चाविद्यावृत्तिश्चैत्रदुःखाकारा नास्तीति न तं प्रति चैत्रदुःखग्रह इत्यर्थः । यत्तु साक्षिणः सर्वजीवसाधारणत्वेऽपि तत्तज्जीवचैतन्याभेदेनाभिव्यक्तस्य तत्तदुःखादिभासकतया नातिप्रसंग इति तन्न ॥ आवरणाभिभवद्वाराऽभेदाभिव्यंजिकाया अन्तःकरणवृत्तेः सुखादावभावात् । अविद्यावृत्तेरावरणानिवर्तकत्वात् ॥ दुःखादेरिति ॥ दुःखे हि सति तदाकारावृत्तिः स्यात् । अतो दुःखाद्यनन्तरभाविनी सा । ननु वृत्त्यर्थौ समसमय एवोत्पद्येते इत्यत आह ॥ अविद्यावृत्तेरिति ॥ अविद्यावृत्तौ सत्यां तत्प्रतिफलितचैतन्यरूपसाक्षिसिद्धिः तत्सिद्धौ साक्षिरूपप्रतीतिमात्रशरीराविद्यावृत्तिसिद्धिरित्यन्योन्याश्रयः ॥ परमते ब्रह्मणो ज्ञानत्वानन्दत्वाद्वितीयत्वनित्यत्वसाक्षित्वभङ्गः ॥ ७ ॥

## न्यायामृतकण्टकोद्धारः

ननु तथापि ब्रह्मणो नानन्तगुणपूर्णत्वं वक्तुं शक्यम् । ज्ञानादीनां तत्स्वरूपत्वेन तद्गुणवत्त्वाभावात् । न चात्रप्युक्तमहिकुण्डलवदिति वाच्यम् । तथात्वे उपचारोपपत्तेः । वस्तुतो गुणित्वाभावापत्तेश्च । न चात्राप्युक्तमात्मनि चैवं विचित्राश्च हि इति । शक्तेरपि तदभिन्नत्वात् । न च विशेषबलेन

(कण्टकोद्धारः)

शक्तिमत्त्वाद्युपपत्तिरिति वाच्यम् । विशेषस्यापि तदभिन्नत्वात् । न च तस्य स्वनिर्वाहकत्वम् । तदनंगीकारादित्यतस्तदनङ्गीकारे परमते जात्यसंभव इत्यर्थः । नचाभासाखण्डसाधारणमेव ज्ञानत्वमेवमस्त्विति वाच्यम् । तथात्वे तस्य शुद्धलक्षणत्वाभावापत्तेस्तेन जडव्यावृत्तिसिद्धेश्च । द्वितीये जनकत्वं विवक्षितं स्वरूपयोग्यत्वरूपं वा? आद्य आह ॥ फलेति ॥ द्वितीय आह ॥ शक्तीति ॥ शक्त्यादिधर्महीनस्वरूपमात्रस्य मुक्तित्वादिति भावः । न च तदा ज्ञानत्वमेव नेति वाच्यम् । तथात्वे तस्य स्वरूपलक्षणत्वाभावापत्तेः ॥ स्वरूपेति ॥ न च वृत्युपहितस्यैव तद्विरोधित्वमतो नोक्तदोष इति वाच्यम् । मुक्तौ वृत्यभावेन जडात्मकतापत्तेः । न च वृत्युपलक्षितस्य तद्विरोधित्वमिति वाच्यम् । पूर्वमपि जडविरोधित्वापत्तेः ॥ सत्यमिति ॥ ज्ञानपदेनैव ज्ञानत्वाभिधायिना जडान्यत्वस्योक्तत्वादिति भावः ॥ असंभव इति ॥ बुद्धेरेव ज्ञातृत्वेन वस्तुतो ब्रह्मणोऽज्ञातृत्वेन तदन्यत्वमसंभवीत्यर्थः ॥ अज्ञानत्वेति ॥ अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वस्यैवाज्ञानलक्षणत्वेनान्योन्याश्रय इत्यर्थः । न च भ्रमोपादानत्वमेवाज्ञानत्वमतः कथमन्योन्याश्रय इति वाच्यम् । तस्य धर्म्यज्ञानादावव्यापकत्वेनालक्षणत्वादिति भावः । देहलीप्रदीपन्यायेन प्रथमपक्षातिरिक्त सर्वपक्षेषु साधारणं दूषणमाह ॥ द्वितीयादिष्विति ॥ सोपाधिकत्वेऽपि ज्ञानत्वस्य स्वभावत्वे कारणत्वस्यापि तदापत्तेरिति भावः ॥ स्वरूपेति ॥ स्वविषयत्वं च कर्तृकर्मविरोधात् परैःनांगीकृतमिति भावः । उक्तमर्थं कारिकया संगृह्णाति ॥ एवञ्चेति ॥ एवं ज्ञानत्वासंभवमभिधायानन्दत्वमपि न संभवतीति वक्तुं विकल्पेन दूषयति ॥ कञ्चेति ॥ मोक्ष इति ॥ वेदनीयत्वं हि वेदनकर्मत्वम् । न च कर्तुरभावे कर्मत्वं संभवतीति भावः ॥ अवेद्यत्वादिति ॥ अकर्मत्वादित्यर्थः ॥ औपाधिकत्वेति ॥ औपाधिकस्य त्वन्मते निवृत्तिनियमादिति भावः ॥ एतेनेति ॥ आनुकूल्यासंभवेनेष्टत्वासंभवादेवेत्यर्थः । नहीच्छादिविषयत्वमिष्टत्वं मुक्तौ संभवति । मुक्तौ इच्छानंगीकारादिति भावः ॥ विरोधादिति ॥ विषयोल्लेखितस्य ज्ञानत्वादिति भावः ॥ विज्ञानमिति ॥ आनन्दपदेनैव दुःखतादात्म्यायोग्यत्वरूपदुःखव्यावृत्तेरुक्तत्वादित्यर्थः । नन्वानन्दत्वादेर्दुर्निरूपत्वेऽपि तदधिकरणं ब्रह्मबोध्यं श्रुतिबलादंगीक्रियते चेत् कोदोष इत्यत आह ॥ यदि चेति ॥ जगतो सत्यत्वादौ श्रुत्यादेरुक्तत्वादिति भावः । उक्तमर्थं कारिकारूढं करोति ॥ एवञ्चेति ॥ अनुपलब्धिगम्य इति ब्रह्मण उपनिषदेकसमधिगम्यत्वादिति भावः । उपलक्षणमेतत् । सोपाधिनिरुपाधिकयोरैक्यासंभवादन्यथा सार्वज्ञादेरपि स्वरूपत्वापत्तिरित्यपि दूषणं द्रष्टव्यमिति ॥ अनृतेति ॥ अभावत्वाविशेषादिति भावः ॥ प्राभाकरमतेऽपीति ॥ तथाचाभावस्य ब्रह्मस्वरूपत्वे ब्रह्मणः सविशेषत्वापत्तिः । अन्यथा प्रतियोगिमत्यपि प्रसंगादिति भावः ॥ न चेदिति ॥ कैवल्यादिविशेषितस्याधिकरणस्याभावत्वमिति शेषः ॥ अन्यथेति ॥ अभावस्य ब्रह्मस्वरूपत्वे इत्यर्थः ॥ न चेति ॥ तथाचाभावस्य द्वितीयस्य सत्त्वेऽपि न दोष इति भावः ॥ दृश्यस्येति ॥ उपलक्षणमेतत् । साधारणाद्वितीयशब्दस्य भावत्वमिति शेषः ॥ अन्यथेति ॥ अभावस्य ब्रह्मस्वरूपत्वे इत्यर्थः ॥ न चेति ॥ तथाचाभावस्य द्वितीयसत्वेऽपि न दोष इति भावः ॥ दृश्यस्येति ॥ उपलक्षणमेतत् । साधारणाद्वितीयशब्दस्य भावरूपद्वितीयाभावविषयत्वेन संकोचे अभावरूपद्वितीयाभावरूपत्वेनापि संकोचः किं न स्यात् स्वविरोधप्रमाणविरोधातिप्रसंगानां तुल्यत्वादित्यपि द्रष्टव्यम् ॥ उपलक्षणस्यापीति ॥ सति धर्मिणि विरुद्धयोरेकस्याप्रामाणिकत्वे परस्य प्रामाणिकत्वमिति व्याप्तेरिति भावः

(कण्टकोद्धारः)
॥ नन्विति ॥ न हि प्रागभावादि प्रतियोगित्वं मिथ्यात्वम् । घटाद्यंशे सिद्धसाधनप्रसंगादिति भावः ॥ अत्यन्तेति ॥ त्रैकालिकाभावस्यैवात्यन्ताभावत्वादिति भावः ॥ अत्यन्ताभावासिद्धिरिति ॥ न च प्रत्यक्षादिना तत्सिद्धिरिति वाच्यम् । तेन द्वितीयस्यैवावगाहनेन तदभावस्यानवगाहनात् । नापि श्रुत्या । त्वया तत्र तात्पर्यानभ्युपगमात् । अभ्युपगमे वोपलक्षणत्वायोगादिति भावः । उक्तमर्थं कारिका रूढं करोति ॥ एवञ्चेति ॥

अद्वितीयत्वं दूषयित्वा नित्यत्वमपि दूषयितुं पृच्छति ॥ किञ्चेति ॥ इदानीमेवेति ॥ न च सर्वमुक्तौ अविद्या नेति वाच्यम् । तदापि कालस्य वक्तव्यतया तदुपादानाविद्याया आवश्यकत्वात् । न च तदा कालोपि नेति वाच्यम् । तदा इत्यनेन कालं स्वीकृत्य पुनस्तन्निषेधे व्याघातात् ॥ एवं सतीति ॥ अप्रामाणिकानन्तध्वंसस्वीकारात् प्रामाणिकमाद्यध्वंसस्यैव नित्यत्वं स्वीकर्तव्यमित्यर्थः ॥ निष्प्रतियोगित्वेनेति ॥ अभावनित्यत्वं स्वीकुर्वता अवश्यम् अभावत्वध्वंसत्वादिकं नित्यमिति स्वीकर्तव्यमन्यथा ध्वंसनित्यत्वस्य व्याहतत्वात् । तथा च भावेषु ब्रह्मैव नित्यमित्यस्यापि नियमस्य भंग एवेति भावः ॥ एवमिति ॥ उभयावधिविधुराणां कालादीनां विद्यमानत्वादिति भावः । उक्तमर्थं कारिकारूढं करोति ॥ एवञ्चेति ॥

एवं साक्षित्वमपि दुर्निरूपमित्याह ॥ कथञ्चेति ॥ एकस्यैव कर्तृत्वक्रियात्वयोर्विरोधात् लोके क्रियाश्रयस्यैव कर्तृत्वदर्शनादिति भावः ॥ ननु साक्षिशब्दोऽपि क्रियामात्रवाचीत्यत आह ॥ साक्षादिति ॥ ननु स्वतो दृग्रूपत्वेऽपि बुद्ध्युपाधिकद्रष्टृत्वमंगीक्रियत एवेत्यत आह ॥ बुद्ध्युपाधिकस्यापीति ॥ न च द्रष्टृत्वमेव नेति वाच्यम् । अज्ञानादि द्रष्टृत्वस्य आवश्यकत्वात् । अन्यथा एतावन्तं कालमिदमहं नाज्ञासिषमिति परामर्शो न स्यात् । न च तदज्ञानोपाधिकमेव द्रष्टृत्वमिति वाच्यम् । अज्ञानस्य साक्ष्यधीनसिद्धिकत्वेनान्योन्याश्रयात् । अत एवाह ॥ बुद्धेरिति ॥ साक्षिणो जीवकोटित्वेऽपि जीवः किं बुद्ध्युपाधिकोऽणुरज्ञानोपाधिकः सर्वगतो वा? नाद्य इत्याह जीवोपीति ॥ चक्रकाच्चेति ॥ जीवरूपसाक्षिसिद्धौ अज्ञानसिद्धिः । तत्सिद्धौ तत्कार्यबुद्धिसिद्धिः । तत्सिद्धौ तदुपाधिकजीवरूप-साक्षिसिद्धिरिति चक्रकमित्यर्थः । द्वितीय आह ॥ अज्ञानेति ॥ ननु ब्रह्मणः साक्षित्वेऽपि जीवस्य तत्प्रतिबिंबत्वात् तत्र दुःखादि धीरित्यत आह ॥ अन्यथेति ॥ ननु जीवस्य साक्षिभूतब्रह्माभेदेनाभिव्यक्ततत्तद्धीरित्याशंक्य निराकरोति ॥ न चेति ॥ इह तस्या एवाभावादित्यर्थः ॥ ईश्वरेणेवेति ॥ निरुपपदचिद्भावस्यैव मुक्तित्वांगीकारादिति भावः ॥ सुप्तमैत्रं प्रतीति ॥ चिन्मात्रेण यथा ज्ञानं विषयीक्रियते तथा चैत्रीयदुःखादिकमपि विषयीक्रियत एव । तथाचाज्ञानादिपरामर्शवत् । चैत्रीयदुःखादिविषयेऽपि परामर्शः स्यादिति भावः । नापीति ॥ चैत्रीयदुःखाद्याकारा च नाविद्यावृत्तिरिति न दुःखादिधीरित्यर्थः ॥ दुःखादेरिति ॥ तस्य च ज्ञातैकसत्त्वं सर्वसिद्धम् । त्वयापि दुःखादेः प्रातिभासिकत्वाङ्गीकारादिति भावः ॥ अविद्यावृत्तेरिति ॥ वृत्तेरपि वृत्यंतरस्वीकारेऽनवस्थेति भावः । परमते ब्रह्मणो ज्ञानत्वानंदत्वाद्वितीयत्वनित्यत्वसाक्षित्वभङ्गः ।

## ८. ब्रह्मण उपादानत्वभङ्गः

यच्चेदमुच्यते ब्रह्म जगत उपादानत्वे सति कर्त्रित्यभिन्ननिमित्तोपादानं जगदिति । तन्न, यतः ।

विकारवत्कारणत्वमुपादानत्वमुच्यते ।
निर्विकारतया वेदसिद्धे ब्रह्मणि तत्कथम् ॥

परिणामापरपर्यायविकारवत्त्वं ह्युपादानत्वम्, तच्च ब्रह्मणि 'निर्विकारोऽक्षरः शुद्ध' इत्यादिश्रुतिविरुद्धम् । ननु विवरणे रज्वाः सूत्रद्वयवन्मायाविशिष्टं ब्रह्म जगत्कारणमिति वा मायशक्तिमद्ब्रह्म कारणमिति वा जगदुपादानमायाश्रयतया ब्रह्म कारणमिति वेति मतत्रयमुक्तम् । तत्राद्ये रज्वाः सूत्रे इव मायाब्रह्मणी उपादाने । निर्विकारश्रुतिस्तु केवलब्रह्मपरेति विवक्षितम् । द्वितीये मायोपरागाद्ब्रह्म विकारि, निर्विकारश्रुतिस्तु तदनुपरक्ताभिप्रायेति विवक्षितम् । तृतीये तन्तुद्वारांऽशुः पटस्येव मायाद्वारा ब्रह्मोपादानम्, श्रुतिस्तु अद्वारकविकारनिषेधिकेति विवक्षितमिति चेन्न, आद्ये मायावत्तं तु वच्च ब्रह्मापि विकारीति विशिष्य ब्रह्मणो निर्विकारत्वोक्त्य-योगात् ।

किं च परमार्थसज्ज्ञानानन्दस्वभावस्य ब्रह्मणोऽप्युपादानत्वे कार्यमपि तथा स्यात् । अविद्योपादानत्वेऽपि सितासितसूत्रकार्ये पटे सितत्ववज्जगति परमार्थसत्यादेरपि दुर्वारत्वात् । न ह्युपादानस्वभावस्योपदेये धीमात्रम्, अविद्यास्वभावस्याऽनिर्वाच्य-त्वस्याऽपि प्रपञ्चे धीमात्रत्वापातात् । सन्मात्रोपादानकत्वं सत्त्वे तन्त्रं चेत्, अनिर्वाच्यत्वमपि न स्यात्, तन्मात्रोपादानकत्वाभावात् । द्वितीये मायाख्यहेतूप-रागभावाभावाभ्यां विकारभावाभावविवक्षा चेत्, मृदादिसाधारण्यम् । मायाविशिष्टं ब्रह्म विकारि निर्विकारश्रुतिस्तु विशेष्याभिप्रायेति विवक्षायां तु विशिष्टस्य ब्रह्मत्वे निर्विकारश्रुतिविरोधः । अब्रह्मत्वे न नो हानिः । एतेन प्रकृतिविशिष्टं ब्रह्मोपादानमिति निरस्तम् । विस्तृतं चैतदन्यत्र ।

किं च विशिष्टस्य मृदादिवद्धर्मिसमसत्ताकरूपान्तरापत्तिरूपपरिणामाद्विवर्तमत हानिः स्यात् । विशिष्टस्य परिणामः शुद्धस्य तु विवर्त इति चेत्, तर्हि शुद्धेऽपि विवर्तार्थम् आरोपितविकारस्यावश्यकत्वान्निर्विकारश्रुतेस्तत्परत्वं न स्यात् । श्रुतिर्विशेष्यस्यैव तात्त्विकविकाराभावपरा चेद्, विशिष्टे विकारोक्तिरयुक्ता स्यात् । तत्त्वतो निर्विकारे आरोपितविकाराविरोधात् । तृतीयोऽप्ययुक्तः, अंशोस्तन्तुं प्रतीव ब्रह्मणः अनादिमायां प्रति उपादानत्वाभावात् । भ्रमाधिष्ठानत्वमुपादानत्वमिति चेत्, न। उपादाने मृदादौ भ्रमाधिष्ठानत्वस्य भ्रमाधिष्ठाने च शुक्त्यादौ उपादानत्वस्य चाऽव्यवहारात् । पारिभाषिकोपादानत्वस्य चाऽनुपादानत्वे पर्यवसानात् ।

एतेनाऽसत्यरूपान्तरापत्तिर्विवर्तः, सत्यरूपान्तरापत्तिस्तु परिणामः, रूपान्तरापत्तिमात्रम् उपादानत्वम् । तच्च ब्रह्मणो विवर्तरूपविशेषेणाप्युपपन्नम्, निर्विकारश्रुतिस्तु तात्त्विकविकारभावाभिप्राया । ब्रह्म चाज्ञातं प्रपञ्चरूपेण विवर्तते इति अज्ञानमपि परिणामितयोपादानान्तर्गतम् । रूप्यमपि शुक्तिविवर्तत्वादज्ञानपरिणामत्वाच्चोभयोपादनकमिति निरस्तम् । त्वयापि मिथ्याभूतस्य मिथ्याभूतमेवोपादनमन्वेषणीयं सत्यत्वे कार्यस्याऽपि कारणस्वभावतया सत्यत्वप्रसङ्ग इति वदता सत्यस्यासत्यरूपापत्तेर्निषेधात् । सत्यारोपितधूमानुगतधूमत्वसामान्यस्येव सत्यासत्यरूपान्तरापत्त्यनुगतो पादानत्वसामान्यस्याप्यभावाच्च । शुक्तिब्रह्मणोरेव रूप्याकाशाद्युपादनत्वसम्भवे अविद्यान्वयव्यतिरेकयोर्निमित्तत्वेनाप्युपपत्तेरविद्योपादानकत्वकल्पनायोगाच्च । न च परिणामित्वेनाविद्याकल्पनम् । असत्यस्य रूप्यादेः सत्यरूपापत्तिमत्परिणाम्यपेक्षाभावाद् । विकारित्वेनाविद्याकल्पनं तु तत्त्वतो निर्विकारे ब्रह्मणि अतात्विकविकाराङ्गीकारात् परेणैव निरस्तम् । न च कार्यापेक्षितस्वसमानसत्ताकोपादानत्वेना विद्याकल्पनम्, अविद्यार्थापत्तिभङ्गे निरस्तत्वात् ।

किं च रूप्येऽपि रूप्यमिदमिति प्रतीतेः अविद्याविकारभूतं रूप्यम्, इदं रूप्यतादात्म्यं वाऽस्तु । इदमो रूप्यरूपापत्तिरूपो विकारस्तु कथम्? न हीदं रूप्यरूपमापन्नमिति धीरस्ति । न चारोपितमप्यारोपं विना युक्तम् ।

**एतेन रूपान्तरापत्तिप्रतीतिविषयत्वम् उपादानत्वं प्रतीतेः प्रमात्वाप्रमात्वाभ्यां परिणामविवर्ताविति निरस्तम् । शुक्तिर्वा ब्रह्म वा रूप्यत्वं वा आकाशत्वं वा आपन्नमित्यप्रतीतेः । सच्च त्यच्चाभवदि त्यादि श्रुतेश्चात्माश्रयप्रसङ्गेन स्वजन्य-रूपान्तरापत्तिधीविषयत्वप्रत्यायकत्वायोगात् ।**

**एतेन रूपान्तराभेदधीविषयत्वं वा कार्याभेदधीविषयत्वं वोपादानत्वम् । प्रतीतेः प्रमात्वाप्रमात्वाभ्यां परिणामविवर्ताविति निरस्तम्, आद्ये तत्त्वंपदार्थयोः क्षीर-नीरयोः खण्डगोत्वयोश्चोपादानोपादेयत्वापातात् । द्वितीये सदृशे संनिहिते निमित्तेऽपि कार्याभेदभ्रमसम्भवेनातिव्याप्तेः । तस्मादकारणस्यातीतादेरत्यन्तासतश्च भ्रमाधिष्ठानत्वदर्शनाद् भ्रमाधिष्ठाने च शुक्त्यादौ कारणत्वोपादानत्वयोरव्यवहारात् न परपक्षे भ्रमाधिष्ठानस्य ब्रह्मण उपादानत्वकारणत्वे । ननु मायोपादानम्, ईश्वरो निमित्तं शुद्धं ब्रह्माधिष्ठानमिति चेन्न, अभिन्ननिमित्तोपादनत्वाभावेन त्वन्मते तदर्थस्य प्रकृत्यधिकरणदेरनुपपत्तेः । ब्रह्मण उपादानत्वभङ्गः ।**

## अद्वैतसिद्धिः

ननु– निर्विशेषं चेद् ब्रह्म, कथं तदेव निमित्तमुपादानमिति अभिन्ननिमित्तोपादानकत्वं जगतः? विकारवत्कारणस्यैवोपादानत्वाद्, ब्रह्मणोऽविकारत्वाद्, अन्यथा 'निर्विकारोऽक्षरः शुद्ध' इत्यादि श्रुतिविरोधापत्तेरिति चेन्न । परिणामितयोपादानत्वाभावेऽपि विवर्ताधिष्ठानतयो-पादानत्वसंभवात् । विवर्ताधिष्ठानत्वं च विवर्तकारणाज्ञानविषयत्वमेव । तदुक्तं वार्तिककृद्भिः–

> अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ।
> अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ।। इति ।

न चोपादानलक्षणाभावः, आत्मनि कार्यजनिहेतुत्वस्यैव उपादानलक्षणत्वात्, तस्य च परिणाम्यपरिणाम्युभयसाधारणत्वात् । ननु– ब्रह्मैवोपादानम्? उताज्ञानमपि? आद्ये सत्यो-पादानत्वे सत्यत्वापत्त्या अज्ञानोपादानकत्वकल्पनविरोधः, द्वितीये सूत्रद्वयस्य रज्जुं प्रतीव ब्रह्माज्ञानयोः समप्राधान्येन वा उपादानत्वम्, निर्विकारश्रुतिस्तु केवलब्रह्मपरेति विवक्षितम्?

(अद्वैतसिद्धिः)

उत मायाशक्तिमद् ब्रह्म उपादानम्, निर्विकार श्रुतिस्तु तदनुपरक्तब्रह्मविषयेति विवक्षितम्? उत मायाद्वारा ब्रह्म कारणम्, अंशुरिव तन्तुद्वारा पटं प्रति । निर्विकारश्रुतिस्तु अद्वारक-विकारनिषेधिकेति विवक्षितम्? नाद्यः, उभयोः समतयैव विकारित्वेन ब्रह्मणो विशिष्य निर्विकारत्वोक्त्ययोगात्, सितासितसूत्रारब्धपटे सितासितत्ववज्जगति पारमार्थिकत्वानिर्व-चनीयत्वयोरापाताद्, ब्रह्मस्वभावस्य पारमार्थिकत्वस्य उपादेयधीमात्रस्थत्वे अविद्यास्व-भावस्यानिर्वाच्यस्यापि धीमात्रस्थत्वापातात्, तन्मात्रोपादानकत्वस्य तत्तत्सत्त्वप्रयोजकत्वे अनिर्वाच्यत्वस्याप्यभावप्रसङ्गात्, तन्मात्रोपादानकत्वाभावात् । द्वितीये ब्रह्मणो मायाख्यहेतू-परागमपेक्ष्य विकारित्वे मृदादिवत् परिणामित्वापत्तिः, विशिष्टस्य ब्रह्मत्वे निर्विकार श्रुतिविरोधः । अब्रह्मत्वे ब्रह्मणः कार्यत्वा सिद्धिः । विशिष्टस्य मृदादिवद्धर्मि-समसत्ताकरूपान्तरा पत्तिरूपपरिणामाद्विवर्तमतहानिश्च । न च– विशिष्टापेक्षया परिणामत्वं शुद्धापेक्षया विवर्तत्वमिति– वाच्यम्, शुद्धेऽपि विवर्तार्थमारोपितविकारस्यावश्यकत्वेन निर्विकारश्रुतेः तत्परत्वाभावप्रसङ्गात् । तस्या विशेष्ये तात्त्विकविकाराभावपरत्वे विशिष्टे विकारोक्त्ययोगः, तत्त्वतो निर्विकारे आरोपितविकाराविरोधात् । न तृतीयः, अंशोस्तन्तुं प्रतीव ब्रह्मणो मायां प्रत्युपादानत्वाभावादिति चेन्न, उभयापरिणामित्वेन तयोः कारण-त्वाङ्गीकारात् । न च तत्पक्षोक्तदोषावकाशः, उभयोः परिणामितया कारणत्वानङ्गीकारात्, किंत्वज्ञानस्यैव । अत एवासाधारण्येन निर्विकारत्वमपि । न ह्यविद्यासाहित्येऽपि ब्रह्म परिणमते, किन्तु विवर्तत इति । न चाविद्यापरिणामत्वेऽपि सत्यत्वापत्तिः, परिणाम्युपादान-समसत्ताकत्वरूपस्य सत्यत्वस्य परिणामत्वनिर्वाहकत्वाद्, ब्रह्मसमसत्ताकत्वाभावेन तदपेक्षया परिणामत्वाभावात्, स्वसमानसत्ताकविकाराहेतुतया निर्विकारत्वोपपत्तेश्च । न च सत्योपा-दानत्वे सत्यत्वापत्तिः, परिणाम्युपादानधर्माणामेव मृत्त्वसुवर्णत्वादीनां कार्येऽन्वयदर्शनात् सत्योपादानत्वेऽप्यसत्यत्वोपपत्तेः । न च– सत्यासत्यधूमानुगतधूमत्वस्येव सत्यासत्यानुगतो-पादानत्वस्यैकस्याभाव इति– वाच्यम्, स्वनिष्ठकार्यजनिहेतुत्वस्योक्तत्वात् । न हि सत्या-सत्यत्ववैधर्म्यसाधर्म्यविरोधि, अन्यथा किञ्चिद्वैधर्म्यस्यैव साधर्म्यविरोधित्वे साधर्म्यकथोच्छेदा-पत्तेः, अनाभासविषयसंस्कारजन्यज्ञानविषयत्वादेराभासा नाभाससाधारणस्य दृष्टान्तेऽपि सत्त्वाच्च ।

ननु– अविद्योपादानत्वकल्पना न युक्ता, ब्रह्मण एव रूप्याकाशाद्युपादानत्वसंभवाद्, अविद्यान्वयव्यतिरेकस्य निमित्ततामात्रेणान्यथासिद्धेरिति– चेन्न, घटकुण्डलादेः परिणाम्य-पेक्षादर्शनेन गगनादावप्यविद्यायाः परिणाम्युपादानत्वस्यावश्यकत्वात् । न च– असत्यस्य

(अद्वैतसिद्धिः)

रूप्यादेः सत्यरूपापत्तिमत्परिणाम्यपेक्षा नास्तीति न सर्वत्रोपादेये तदपेक्षानियम इति वाच्यम्, स्वविषयकाज्ञानानपेक्षस्य तद्भाव इत्येव सत्यरूपापपत्तिपदेन विवक्षितत्वात् । न हि ब्रह्माज्ञानस्य रूप्यादिभावापत्तौ स्वविषयकाज्ञानं व्यवधायकमस्ति । किञ्च विकारित्वेनाप्य- विद्याया उपादानत्वकल्पनम् । न च– ब्रह्मण एवातात्त्विकविकारसंभवात्, न तत्कल्पनमिति वाच्यम्, तद्विषयकाज्ञानपरिणामत्वव्यतिरेकेण विकारे अतात्त्विकत्वानिर्वाहात् । किं च कार्यापेक्षितस्वसमानसत्ताकोपादानत्वेनाप्य विद्योपादानत्वम् । समानसत्ताकत्वं च रूप्यस्थले सत्त्वद्वैविध्येन वा ब्रह्मज्ञानेतरबाध्यत्वरूपप्रातिभासिकत्वमादाय वोपपद्यते । तस्माद्रूप्यतत्ता- दात्म्ययोरविद्याविकारत्वेऽपि इदमो रूप्यरूपापत्तिरूपो विकारः कथम्? इदं रूप्यरूप- मापन्नमित्यप्रतीतेः, आरोपितस्यारोपं विना अयोगादिति निरस्तम् । रूप्याकारपरिण- ताज्ञानाधिष्ठानचैतन्यावच्छेदकमात्रतयेदमोरूप्यापत्तेरनङ्गीकारात् । यत्तु किमिदमुपादानत्वम्? रूपान्तरापत्तिप्रतीतिं प्रति विषयत्वं वा? रूपान्तराभेदधीविषयत्वं वा? कार्याभेदधीविषयत्वं वा? नाद्यः, असिद्धेः, 'शुक्ती रूप्यभावमापन्ना ब्रह्माकाशभावमापन्न'मित्यप्रतीतेः । न द्वितीयः, तत्त्वं पदार्थयोः क्षीरनीरयोर्मुण्डगोत्वयोश्चोपादानौपादेयतापत्तेः । न तृतीयः, सदृशे सन्निहिते निमित्तेऽपि कार्याभेदभ्रमसंभवेनातिव्याप्तेरिति, तदनुक्तोपालम्भनतया अपास्तम् । यदपि भ्रमाधिष्ठानत्वेन ब्रह्मणो नोपादानत्वम्, अतीतासतोरनुपादानयोरपि भ्रमाधिष्ठान- त्वदर्शनाद्, भ्रमाधिष्ठानेऽपि शुक्त्यादावुपादानत्वाव्यवहाराच्चेति, तन्न, चैतन्यस्यैवाधिष्ठान- त्वेनातीतादेरनधिष्ठानत्वात् । किं च न हि व्यवहाराभावमात्रेण वस्तुव्यतिरेकः, वृक्षादिषु पृथिवीति व्यवहाराभावेऽपि पृथिवीत्वसत्त्वात् । यत्तु मायोपादानमीश्वरो निमित्तं शुद्धं ब्रह्माधिष्ठानमिति पक्षे अभिन्ननिमित्तोपादानत्वाभावेन त्वन्मते तदर्थस्य प्रकृत्यधिकरणा- देरनुपपत्तिरिति, तन्न, एकस्यैवाविद्योपहितत्वेनोपादानत्वस्याविद्यापरिणामेच्छाकृत्याद्याश्रयत्वेन निमित्तत्वस्यापि संभवात् । इति अद्वैतसिद्धौ ब्रह्मणो जगदुपादानत्वोपपत्तिः ॥

## न्यायामृततरङ्गिणी

॥ अंशुरिति ॥ कार्पासः ॥ मायाद्वारेति ॥ तदुक्तं वार्तिके ।

अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ।
अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यत

(तरङ्गिणी)

इति ॥ आद्य इति ॥ मायाविशिष्टस्य ब्रह्मविकारित्वेऽपि केवलस्य निर्विकारत्ववद् ब्रह्मसंबद्धमायायाः विकारित्वेऽपि केवलाया मायाया निर्विकारत्वमित्यस्यापि वक्तुं शक्यत्वात् । ननूपादानधर्म उपादेयप्रतीत्यात्मना वर्तत एवेत्यत आह ॥ नहीति ॥ हेतूपरागेति ॥ हेतूपरागो हेतुसमवधानम् । दण्डचक्रादिमेलनवत् ॥ मृदादीति ॥ कुलालादिकारणसमवधाने मृदादिरपि विक्रियते ॥ विवर्तेति ॥ अतात्त्विकोऽन्यथाभावो विवर्तः । स च धर्मिसदसत्त्वविकाराङ्गीकारे त्यक्तः स्यात् ॥ एतेनेति ॥ भ्रमाधिष्ठाने उपादानत्वाव्यवहारेण । यदि रूपान्तरापत्तिमात्रमुपादानत्वं तर्हि शुक्त्यादावुपादानत्वव्यवहारः स्यात् । नचैवमित्यर्थः ॥ शुक्तिब्रह्मणोरेवेति ॥ विवर्ताख्यरूपान्तरापत्तिमात्रेण । ननु वियदादिगतविवर्तत्वस्य ब्रह्मणोपपन्नत्वेऽपि वियदादिगतपरिणामत्वस्य परिणामिनं विनाऽनुपपत्तेस्तदर्थमविद्याकल्पनमित्याशंक्याह ॥ नचेति ॥ विवर्तरूपे आकाशादौ रूप्यादौ सत्यरूपान्तरापत्तिरूपपरिणामत्वस्यैवाभावान्न तस्य परिणाम्याक्षेपकत्वमित्यर्थः । परिणामिनि । विषये ॥ आरोपितमिति ॥ आरोपेण यादृशं विषयीक्रियते तादृशं सिध्यति । नचारोपेणेदंपदार्थो रूप्यस्वरूपमापन्न इति विषयीक्रियत इत्यर्थः ॥ सच्चेति ॥ सोऽकामयतेत्याद्युक्त्वा सच्च त्यच्चाभवदिति वाक्यं सच्छब्दवाच्यतेजोबन्नानि प्रतित्यच्छब्दवाच्यवाय्वाकाशौ प्रति ब्रह्मण उपादानत्वं बोधयतीत्युच्यते । तन्न युक्तम् । रूपान्तरापत्तिप्रतीतिविषयत्वरूपोपादानत्वस्य ब्रह्मणि निरूप्यमाणस्यैतद्वाक्यजन्यरूपान्तरापत्तिप्रतीतेः पूर्वमसत्त्वात् । एतद्वाक्येनैव रूपान्तरापत्तिप्रतीतिमुत्पाद्य ब्रह्मण्युपादानत्वं सम्पादनीयम् । तथा च सच्चेत्यादिवाक्यजन्यायाः रूपान्तरापत्तिप्रतीतेरुपादानत्वान्तर्गतैतद्वाक्य जन्य रूपान्तरापत्तिप्रतीति प्रत्यपेक्षायामात्माश्रयः । स्वजन्येति । सच्चेत्यादिवाक्यजन्यां रूपान्तरापत्तिधियं प्रति विषयत्वेत्यर्थः ॥ ब्रह्मण उपादानत्वभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

ननु तथापि न ब्रह्मणो ज्ञानादिगुणत्वं युक्तम् । तथात्वे तस्य जगदुपादानत्वेन कारणगुणानाञ्च कार्ये स्वसमानगुणारम्भकत्वनियमेन जगत्यपि ज्ञानादिप्राप्तेरित्यतो जगदुपादानत्वमेव नेति वक्तुमनुवदति ॥ यच्चेदमिति ॥ उपादानत्वे प्रमाणानि परोक्तानि द्रष्टव्यानि । कर्तृत्वे तु तदैक्षतेतीक्षापूर्वकस्रष्टृत्वस्य प्रतिपादकानि । तथा चोभयप्रमाणबलात् ब्रह्मोपादानं कर्तृचेति भावः । ननु परिणामिकारणत्वमुपादानत्वम् । तत्कथमुच्यते विकारिकारणत्वमुपादानत्वमिति तत्राह ॥ परिणामेति ॥ परिणामविकारशब्दयोरर्थैक्यात् न विरोध इति भावः । त्रेधा निर्विकारश्रुतिविरोधं परिहर्तुं शङ्कते ॥ नन्विति ॥ आद्य इति ॥ केवलाया मायाया अपि नोपादानत्वम् । किन्तु ब्रह्मसहिताया एव । तथासति तां विकारकोटौ निवेश्य ब्रह्मण एव निर्विकारत्वकथनमयुक्तमित्यर्थः ॥ किञ्चेति ॥ उपादानस्व-

(कण्टकोद्धारः)

भावस्योपादेयेऽनुवृत्तिदर्शनात् मृत्स्वभावस्य घटादाविवेति भावः । नन्वविद्याया अप्युपादानत्वात् न ब्रह्मस्वभावानुवृत्तिरित्यत आह ॥ अविद्येति ॥ ननु प्रकृतेऽप्युपादानस्वभाव धीरस्ति । तावताप्युपादानत्व-निर्वाहात् । यत्स्वभावस्य यत्र धीस्तत्तस्योपादानमित्यङ्गीकारादित्यत आह ॥ न हीति ॥ तन्मात्रेति ॥ अनिर्वाच्यमात्रोपादानकत्वस्यानिर्वाच्यत्वे तन्त्रत्वादिति भावः ॥ द्वितीय इति ॥ मृदादेरपि हेतुः सम्बन्धेनैव विकारित्वात् ब्रह्मणोऽपि मृदादिसाधारणात् विशिष्य निर्विकारत्वोक्तिरयुक्तेति भावः । एतेन विशिष्टस्य ब्रह्मत्वाब्रह्मत्वविकल्पनिराकरणेनेत्यर्थः । ननु विशिष्टस्याब्रह्मत्वेऽपि विशेष्यस्य ब्रह्मणो विशिष्टमध्यपतित्वात् ब्रह्मोपादानकत्वाहानिरेव । न हि तन्मात्रोपादानकत्वं तदुपादानकत्वमभिमतम् । किन्तु यथाकथञ्चित् ब्रह्मण उपादानप्रवेश एवेत्यत आह ॥ विस्तृतमिति ॥ प्रकृत्यधिकरणे चन्द्रिकायामिति शेषः । ब्रह्मस्वभावानुवृत्तिश्च स्यात् । यस्य हि यथाकथञ्चिदुपादानप्रवेशः तत्स्वभावस्य तदुपादेयेऽनुवृत्तिनियमादित्यपि द्रष्टव्यम् ॥ विशिष्ट इति ॥ तस्यापि तत्त्वतो निर्विकारात् विशेष्यतुल्यत्वादिति भावः । ननु तात्त्विकविकाराभावेऽपि आरोपितविकारसद्भावात् तदुक्तिरित्यत आह ॥ तत्वत इति ॥ तथा च विशेष्यस्याप्यारोपितविकारवत्त्वेन निर्विकारश्रुतिविरोध इति भावः ॥ अंशोरिति ॥ तथा च मायाया अनादित्वेन तद्द्वारा जगदुपादानत्वानुपपत्तौ साक्षादुपादानत्वे वाच्ये निर्विकार श्रुतेर्नाद्वारकविकारनिषेधकत्वमिति भावः । ननु मायां प्रति परिणामित्वरूपोपादनत्वाभावेऽपि भ्रमाधिष्ठानत्वरूपं तदस्तीति शङ्कते ॥ भ्रमेति ॥ भ्रमाधिष्ठानत्वस्योपादनत्वं किं व्यवहारसिद्धम्? उत पारिभाषिकम्? नाद्य इत्याह ॥ उपादान इति ॥ तथा च न व्यवहारसिद्धंतदिति भावः । भ्रमविषयत्वे चानादित्वायोग इत्यपि द्रष्टव्यम् । द्वितीयं दूषयति ॥ पारिभाषिकेति ॥ परिभाषायास्तदभावेऽपि कर्तुं शक्यत्वादिति भावः ।

उक्तातिदेशेन पक्षान्तरं दूषयति ॥ एतेनेति ॥ अत्र असत्यसत्यपदे न प्रातिभासिकव्यावहारिकपरे । ननु ब्रह्मणो रूपान्तरोत्पत्तिरूपविकाराङ्गीकारे निर्विकार श्रुतिविरोध इत्यत आह ॥ निर्विकार श्रुतिस्त्विति ॥ न च तात्त्विकविकाराभावस्य प्रपञ्चेऽपि सत्वात् श्रुत्या असाधारण्येन ब्रह्मणो निर्विकारत्वप्रतिपादनमयुक्तमिति वाच्यम् स्वरूपतस्तात्विकत्वे सति तात्विकविकाराभाववत्त्वं निर्विकारत्वम् । न च तत् प्रपञ्चेऽस्तीत्य-भिप्रायात् । नन्वेवं ब्रह्मण एवोपादानत्वेऽज्ञातं ब्रह्मोपादानमिति सिद्धान्तो भज्येतेत्यत आह ॥ ब्रह्मेति ॥ असाधारणाकारेणावगतस्यासत्यरूपापत्तिरूपोपादानत्वाभावाच्छुक्त्यादौ तथा दर्शनादिति भावः । नन्वेवं शुक्तेरप्यधिष्ठानत्वात् ब्रह्मवदुपादानत्वे व्यावहारिकत्वापत्तिरिति वाच्यम् । ब्रह्मज्ञानेतरबाध्यत्वेन प्रति-भासिकत्वात् । एतेनेति परामृष्टं हेतुमाह ॥ त्वयेति ॥ अन्यथा मिथ्याभूताज्ञानकल्पनानुपपत्तेरिति भावः । न चोपानतावच्छेदकत्वेन तत्कल्पनम् । तस्य मिथ्यात्वं तु प्रमाणान्तरावसेयमिति वाच्यम् । ब्रह्मगतासाधारणाकारस्यैव तदवच्छेदकत्वसम्भवात् । मिथ्यात्वप्रमाणानां च निराकृतत्वात् । तन्तुत्वा-वच्छेदेनोपादानत्वासम्भवाच्च ॥ सत्येति ॥ ननु भवन्मते सदसत्साधारणज्ञेयत्ववत् सत्यारोपितसाधारण-धूमत्वादि भविष्यति । न चासति ज्ञेयत्वं नैव मयाऽङ्गीक्रियत इति वाच्यम् । ख्यात्यनुपपत्त्याऽसद्वैलक्षण्यं निराकुर्वतस्तेऽस्यावश्यकत्वात् । न च ज्ञेयत्वं प्रातिस्विकमेव न साधारणमिति वाच्यम् । साधारण-बुद्ध्यनुपपत्तेः । धूमत्वस्यापि तथात्वोपपत्तेश्चेति चेन्न । धूमत्वसामान्यस्योभयसाधारणत्वे बाष्यारोपितधूमेन

(कण्टकोद्धारः)

तात्त्विकवह्निसिद्धिरूपबाधकवत् ज्ञेयत्वस्योभयसाधारणत्वे बाधकाभावात् । न च रूपान्तरापत्तेः साधारणत्वेऽपि न बाधकमिति वाच्यम् । रूपान्तरमापन्नस्यार्थक्रियाकारित्वनियमात् । अन्यथाऽत्यन्तासतोऽपि तदापत्तेरिति । किञ्च ब्रह्मण उपादानत्वाङ्गीकारेऽविद्याया तन्न स्यात् । तदुपादानत्वं विनाऽनुपपत्तेरभावादित्याह ॥ शुक्तिब्रह्मणोरिति ॥ नन्वविद्याया अनुपादानत्वे तदन्वयव्यतिरेकानुविधानं न स्यादित्यत आह ॥ अविद्येति ॥ परिणामी किं विकार्यतिरिक्तोऽनतिरिक्तो वा । आद्ये सत्यो मिथ्या वा । नाद्य इत्याह ॥ असत्यस्येति ॥ सत्येति परिणामिनो विशेषणम् । सत्यस्यासत्यपरिणामादृष्टेरिति भावः । न च शुक्तेरेव स दृष्ट इति वाच्यं तस्याग्रे निरसिष्यमाणत्वात् । द्वितीयः । ब्रह्मणो विकारित्ववत् मिथ्याभूतपरिणामित्वस्याप्युपपत्तेर्न सत्वेनाज्ञानकल्पनमिति भावः । न तृतीय इत्याह ॥ विकारित्वेनेति ॥ अविद्येति ॥ असमानसत्ताकस्य ब्रह्मणोऽनुपादानत्वाभावप्रसङ्गेनेत्यर्थः । ननु मुख्योपादान एव स्वसमानसत्ताकत्वनियमः । अज्ञानं च मुख्योपादानम् । अतस्तत्वेन कल्पनं युक्तम् । ब्रह्म तु न मुख्योपादानम् । अतस्तत्र स्वसमानसत्ताकत्वाभावेऽपि न दोष इत्यतोऽमुख्योपादानत्वमनुपादानत्व एव पर्यवस्यतीत्यभिप्रायेणामुख्योपादानमुक्तरूपं प्रतीति बलादुतानुपपत्त्या एवमेव वा ? इति विकल्प्याद्य आह ॥ किञ्चेति ॥ न द्वितीय आह ॥ न चारोपितमिति ॥ तृतीयस्त्वतिप्रसङ्गनिरस्तः । अतो न ब्रह्मोपादानमिति भावः । एतेनेति परामृष्टं हेतुमाह ॥ शुक्तिर्वेति ॥ न च सच्चाभवदित्यादि श्रुत्या तथाप्रतीतिरस्त्येवेत्यत आह ॥ सच्चेति ॥ न स्वाध्यायाध्ययनविधिवत् सत्वादिना तादृशप्रतीतिविषयत्वरूपभवनप्रतिपादकत्वोपपत्तेः कथमात्माश्रयत्वम् । अन्यथा स्वाध्यायाध्यायनविधेरपि स्वाध्यायाध्ययनबोधकत्वं न स्यादिति वाच्यम् । सदभवदित्यादेः सदाद्यभेदप्रतिपादकत्वस्य कथञ्चित् सम्भवेऽप्युक्तरूपोपादानत्वप्रतिपादकत्वासम्भवादित्यत्र तात्पर्यात् । सदभवदिति श्रुतेरन्यथाव्याख्यानाच्चेति भावः ।

एतेनेत्युक्तवक्ष्यमाणदूषणादित्यर्थः । कार्याभेदधीविषयत्वमित्यत्र यत्किञ्चित् कार्याभेदो वा? स्वकार्याभेदो वा? नाद्य इत्याह ॥ द्वितीय इति ॥ न द्वितीयः । स्वोपादानत्वरूपस्वकार्यत्वस्यासिद्धेः ।

उपसंहरति ॥ तस्मादिति ॥ ननु मायैवोपादानं न ब्रह्मेति शङ्कते ॥ नन्विति ॥ तर्हीष्टापत्तिः । तवापसिद्धान्तश्चेत्याह ॥ अभिन्नेति ॥ इति ब्रह्मण उपादानत्वभङ्गः ॥

## ९. ब्रह्मणो निमित्तत्वभङ्गः

किं चेदं कर्तृत्वं किं परिभाषया शुक्त्यादिवदधिष्ठानत्वमात्रम्? भ्रान्तवदध्यासद्रष्टृत्त्वं वा? मायाविवद् व्यामोहकत्वं वा? कुलालादिवदुपादानादिगोचरप्रयत्नादिमत्त्वं वा? नाद्यः, त्वन्मतेऽधिष्ठानत्वातिरिक्तोपादानत्वाभावेन कर्तृत्वोपादानत्वयोः सामानाधिकरण्योक्त्ययोगात् । "तदैक्षत नामरूपे व्याकरोदि" इत्यादि श्रुत्यनुपपत्तेश्च । न हि चेतनोऽचेतनो वा स्वस्मिन्नारोपितं सङ्कल्प्य करोति ।

अत एव न द्वितीयः, भ्रान्तस्य प्रेक्षापूर्वकारोपितकर्तृत्वाभावात् । ब्रह्मणोऽभ्रान्तत्वेनाकर्तृत्वस्य जीवस्य भ्रान्तत्वेन जगत्कर्तृत्वस्य चापातात् । न चेष्टापत्तिः, श्रुत्यादिविरोधात् । जगत ईश्वरं मुक्त्वा संसारिण उत्पत्त्यादि सम्भावयितुमपि न शक्यमित्यादित्वद्भाष्यविरोधाच्च । ननु शुद्धस्याभ्रान्तत्वेऽपि मायाशबलितः कर्त्तेश्वरो भ्रान्त इति चेन्न, ईश्वरस्य भ्रान्तत्वे जीववत्संसाराद्यापातेन बहुश्रुत्यादिविरोधात् । किं च पक्षद्वयेऽपि वैषम्यनैर्घृण्येन सापेक्षत्वादि त्यादिसूत्रेषु कर्मसापेक्षत्वेन वैषम्यादिपरिहारो न युक्तः स्यात् । अधिष्ठानत्वेन तदप्रसक्तेः । न तृतीयः, व्यामोहनीयजीवादर्शने व्यामोहकत्वायोगाद्, दर्शने च भ्रान्तत्वापत्तेः । व्यामोहकत्वस्यापि आरोपितत्वेनान्योन्याश्रयाच्च । नामरूपे व्याकरवाणी त्यादि श्रुत्यनुपपत्तेश्च । न हि मायावी गजादिकं करवाणीति सङ्कल्प्य करोति, किं तु दर्शयानीति सङ्कल्प्य दर्शयति । किं च पक्षत्रयेऽपि जन्मादिसूत्रेऽर्थलब्धसार्वज्ञ्यादिस्फोरणार्थं शास्त्रयोनिसूत्रमिति यत्परमतं तद्भंगः स्याद्, भ्रमाधिष्ठानत्वादिना सार्वज्ञ्यालाभात् । न चतुर्थः, कल्पितत्वे तस्यायोगात् । न हि घटादिकं कुलालेनेव कल्पितं रूप्यादि भ्रान्तेन वान्येन वा क्रियते । विस्तृतं चैतत्पुरस्तात् । तस्मात्–

अधिष्ठाने तथा भ्रान्ते भ्रामके च न कर्तृता ।
लौकिकी कृतिमत्ता तु न दृष्टारोपितं प्रति ॥

परमते ब्रह्मणो निमित्तत्त्वभङ्गः ॥ ९ ॥

## अद्वैतसिद्धिः

ननु– एवं कुलालादिवदुपादानगोचरप्रयत्नादिमत्त्वं कर्तृत्वमुक्तं स्यात्, तच्च कार्यस्य कल्पितत्वे न घटते, कुलालादेरकल्पितं प्रत्येव कर्तृत्वदर्शनात्, कल्पितं च रूप्यादिकं प्रति भ्रान्तस्यान्यस्य वा कर्तृत्वादर्शनाच्चेति चेन्न, कुलालकार्यघटादावप्यकल्पितत्वस्या सम्प्रतिपत्तेः, रूप्यादेरप्यकर्तृकत्वासिद्धेश्च, तत्रापि साक्षिण एव कर्तृत्वात्, न ह्यदर्शनमात्रेण कर्त्रपलापः, त्वन्मतेऽपि सर्वज्ञकर्तुरसिद्ध्यापत्तेः ।

(अद्वैतसिद्धिः)

एतेनाधिंष्ठानत्वं न कर्तृत्वम्, एवं सत्यतिरिक्तोपादानत्वाभावेन कर्तृत्वोपादानत्वयोः सामानाधिकरण्योक्त्ययोगात्, नापि भ्रान्तवदध्यासद्रष्टत्वम्, भ्रान्तस्य प्रेक्षापूर्वकमारोपितकर्तृत्वस्याभावात् । नापि भ्रान्तवदध्यासद्रष्टृत्वम्, भ्रान्तस्य प्रेक्षापूर्वकमारोपितकर्तृत्वस्याभावात् । नापि मायाविवद्व्यामोहकत्वमेव कर्तृत्वम्, व्यामोहनीयजीवादर्शने व्यामोहकत्वाभावात्, तद्दर्शने भ्रान्त्यापत्तेः, व्यामोहकत्वस्याप्यारोपितत्वेनान्योन्याश्रयाच्च, 'नामरूपे व्याकरवाणी'ति श्रुत्यनुपपत्तेश्च । न हि मायावी जगदादिकं करवाणीति सङ्कल्प्य करोति, किन्तु दर्शयानीति सङ्कल्प्य दर्शयति । पक्षत्रयेऽपि जन्मादि सूत्रेऽर्थलब्धसार्वज्ञ्यादिस्फुरणार्थं 'शास्त्रयोनित्वा'दिति सूत्रमिति यत् परमतं, तद्भङ्गः स्याद्, भ्रमाधिष्ठानत्वादिना सार्वज्ञ्यालाभात् । नाप्युपादानगोचरप्रयत्नादिमत्त्वम्, कल्पितं प्रति तदयोगात् । तस्मात्–

अधिष्ठाने तथा भ्रान्ते भ्रामके च न कर्तृता ।
लौकिकी कृतिमत्ता तु न दृष्टा कल्पितं प्रति ॥

इति निरस्तम्, अभिमतचतुर्थपक्षस्य समर्थितत्वात् । यत्तूक्तं तृतीयपक्षे व्यामुग्धजीवद्रष्टृत्वे भ्रान्तत्वापत्तिरिति, तद् भूषणमेव, भ्रान्तिज्ञस्याभ्रान्तत्वात् । यदपि मायाविनः सङ्कल्पपूर्वककर्तृत्वादर्शनेन व्याकरवाणीति श्रुत्यनुपपत्तिरिति, तन्न, तादृशसङ्कल्पादर्शनस्य मायाविन्यसंप्रतिपत्तेः । यदप्युक्तं जन्मादिसूत्रार्थसिद्धसार्वज्ञ्यस्फोरकं 'शास्त्रयोनित्वा'दिति सूत्रमिति परमतभङ्गः स्यादिति, तन्न, मायावित्वेऽपि स्रक्ष्यमाणमायिकविश्वाकारमाया सत्त्वांशपरिणामाधारतया सार्वज्ञ्यलाभात् । तस्माद् ब्रह्मणो निमित्तत्वमुपादानत्वं च । इत्यद्वैतसिद्धौ ब्रह्मणो विश्वकर्तृतोपपत्तिः ॥

## न्यायामृततरङ्गिणी

**अधिष्ठानत्वातिरिक्तेति ॥ उपादानत्वाभिन्नेनाधिष्ठानत्वेनाभिन्नस्य कर्तृत्वस्योपादानत्वरूपत्वान्नोपादानत्वकर्तृत्वयोः सामानाधिकरण्योक्तिः सम्भवति ॥ तदैक्षतेति ॥ भ्रमाधिष्ठानरूपस्य पारिभाषिककर्तुरीक्षणायोगादित्यर्थः ॥ अत एवेति ॥ ईक्षणायोगादेव ॥ भ्रान्तस्येति ॥ रूप्याद्यध्यासद्रष्टुः भ्रान्तस्य रूप्यं प्रति प्रेक्षापूर्वककर्तृत्वं न दृष्टम् । ननु रूप्यादौ भ्रान्तस्य कर्तुरदर्शनेऽपि जगति भ्रान्तः कर्ताऽस्त्वित्यत आह ॥ ब्रह्मण इति ॥ जगत्प्रति भ्रान्तः कर्ताऽन्विष्यमाणो ब्रह्मभिन्नो जीव एव स्यादित्यर्थः ॥ अधिष्ठानत्वेति ॥ अध्यासाधिष्ठाने तद्द्रष्टरि च वैषम्यादि प्रसक्तेरदर्शनात्तत्परिहारो न युक्तः ॥ व्यामोहकत्वस्येति ॥ व्यामोह-**

(तरङ्गिणी)

नीयस्य सिद्धौ तेनारोपितस्य व्यामोहकत्वस्य ब्रह्मणि सिद्धिः तत्सिद्धौ च व्यामोहनीयसिद्धिरित्यन्योन्याश्रयः । प्रसिद्धमायाविन्यौषधादिमत्त्वरूपं व्यामोहकत्वं व्यामोहनीयैर्नारोपितमतोनान्योन्याश्रयः ॥ इत्यादीति ॥ आदिपदेन नामरूपे व्याकरोदिति करणश्रुतिः ॥ भ्रमेति ॥ भ्रमाधिष्ठाने तद्द्रष्टरि मायाविनिच न सार्वज्ञम् ॥ कल्पितत्व इति ॥ कल्पित उपादानगोचरप्रयत्नाद्यदर्शनादकल्पित एव च तद्दर्शनात् ॥ परमते ब्रह्मणोनिमित्तत्वभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

एवमुपादानत्वं दूषयित्वा परेण यदुपादानस्यैव कर्तृत्वमित्यभिन्नोपादानकत्वमङ्गीक्रियते तद्दूषयितुं विकल्पेन पृच्छति ॥ किञ्चेति ॥ अत्राद्यपक्षत्रये स्वासाधारणपरिभाषा । चतुर्थे तु सर्वसाधारणपरिभाषेति द्रष्टव्यम् । नन्वस्मिन् पक्षे परिणामित्वमेवोपादानत्वम् । तथा च कथं सामानाधिकरण्याभावः । न च ब्रह्मणो निर्विकारत्वात् तदभाव इति वाच्यम् । मायाविशिष्टस्य परिणामोपपत्तेरिति चेन्न । विशिष्टेऽधिष्ठानत्वाभावेन सामानाधिकरण्यायोगात् न चाभेदेऽपि सामानाधिकरण्याविरोध इति वाच्यम् । मुख्यतस्तदभावात् । भावे वैकस्यैव नामद्वयकरणेन विवक्षितार्थासिद्धेः । अत एवेति परामृष्टं हेतुमाह ॥ भ्रान्तेति ॥ ब्रह्मण इति ॥ शुद्धस्येति शेषः ॥ श्रुत्यादीति ॥ श्रुत्यादौ ब्रह्मण एव जगत्कर्तृत्वाभिधानादिति भावः ॥ भ्रान्तत्व इति ॥ भ्रान्तेरेव रागद्वेषादिमूलत्वेन संसारकारणत्वात् । अन्यथा जीवस्यापि तदनुपपत्तेरिति भावः । ननु संसारस्य मिथ्यात्वात् न श्रुत्यादिविरोधः । श्रुत्यादेः परमार्थतस्तदभाव विषयत्वोपपत्तेः । शुद्धविषयत्वोपपत्तेश्चेत्यत आह ॥ किञ्चेति ॥ अधिष्ठानत्वादिनेति ॥ उपलक्षणमेतत् । संसारस्य मिथ्यात्वे ईश्वरस्य कर्मापेक्षया तत्कारित्वं न स्यादित्यपि द्रष्टव्यम् ॥ दर्शने चेति ॥ ननु सत्वेन दर्शने भ्रान्तत्वम् । अन्यथा नेदमिति दर्शिनोऽपि भ्रान्तत्वापत्तेः । न चेश्वरस्य सत्वेन दर्शनम् । अतः कथं भ्रान्तत्वापादनमिति वाच्यम् । सत्त्वेनादर्शने तद्व्यामोहनायोगात् । न हि मायावी ज्ञात्वा व्यामोहयतीति ॥ व्यामोहकत्वस्येति ॥ तथा च व्यामोहकत्वारोपे सति कर्तृत्वं कर्तृत्वे च सति तदारोप इत्यन्योन्याश्रय इत्यर्थः ॥ नामरूप इति ॥ तत्र व्यामोहकस्यानुक्तत्वादित्यर्थः । एतदेव विशदयति ॥ न हीति ॥ विवृतं चेति ॥ भावि बाधकशङ्काभङ्ग इत्यर्थः । उक्तमर्थं सङ्गृह्याह ॥ तस्मादिति ॥ इति परमते ब्रह्मणो निमित्तत्वभङ्गः ॥

## १०. ब्रह्मण उपादानत्वे प्रमाणभङ्गः

किं चोपादानत्वे न तावद् ''आत्मन आकाशः संभूतः'', ''यतो वा'' इत्यादि पञ्चमीश्रुतिर्मानम्, तस्या अनेकार्थत्वात् । अपादानार्थत्वेऽपि ''ध्रुवमपायेऽपादान'' मित्यनेनाऽपादानसंज्ञासम्भवाच्च । ''जनिकर्त्तु''रित्यनेनापादानसंज्ञायामपि वृत्तौ

''पुत्रात्प्रमोदो जायत'' इत्यस्याप्युदाहृतत्वात् । न्यासेऽपि प्रकृतिपदं हेतुमात्रपरमित्याश्रित्य असति प्रकृतिग्रहणे उपादानस्यैव स्यात् । प्रत्यासत्तेर्नेतरस्य प्रकृतिग्रहणात् सर्वस्य कारणस्य भवतीति प्रकृतिपदं पुत्रात्प्रमोदो जायत इत्यादावनुपादानेऽप्यपादान संज्ञार्थमित्युक्तत्वात् । ''शृंगाच्छरो जायते गोलोमाविलोमभ्यो दूर्वा जायन्त'' इत्यादावपि शराङ्कुरं प्रत्युपादानभूतो यः शृंगैकदेशः, तत्संसृष्टं शृंगैकदेशान्तरं शराङ्कुरनिमित्तमस्ति । माषाङ्कुरोपादानभूतो यस्तुषान्तरवस्थितो माषभागस्तत्संसृष्टो माषाङ्कुरनिमित्तभूतस्तुषभाग इवापरिणतशृंगभागस्यानुभवात्, तदेव शृंगादिति पञ्चम्यन्तेनोच्यते । अत एव महाभाष्ये ''अयमपि योगः शक्योऽवक्तुम्, गोलोमाविलोमभ्यो दूर्वा जायन्ते, अपक्रामन्ति तास्तेभ्य'' इत्यादिना लोमादीनां दूर्वादीन्प्रत्यवधित्वाद् ''ध्रुवमपायेऽपादान''मित्यनेनैवाऽपादानसंज्ञासिद्धेरिदं सूत्रं प्रत्याख्यातम् । कैयटेऽपि यथा बिलाद्दीर्घभोगो भोगी निष्क्रामन्नप्यविच्छेदात्तत्रोपलभ्यते तथा दूर्वा अपीत्यादिनाऽवधित्वमेवोपपादितम् । तदुक्तम्–

शृंगाच्छरोऽविलोमभ्यो दूर्वा गोमयतस्तथा ।
वृश्चिकश्चेत्येवमाद्येष्वपादानत्वमिष्यते ॥ इति ।

अत एवाकाशाद्वायुरित्याद्युपादानपञ्चमी साहचर्याद् आत्मन इत्यप्युपादानपञ्चमीति निरस्तम्, आकाशादित्यादावपि निमित्तांशस्यैव पञ्चमीनिर्देशात् । अन्यथा सम्भूत इत्युक्तम् । न हि शुक्ते रूप्यं सम्भूतमित्युच्यते । नापि सोऽकामयत बहुस्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किं च तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाभवदि''ति श्रुतिस्तत्रमानम्, सदादिभवनस्य जगत्सृष्टितदनुप्रवेशानन्तरभावित्वेन जगत्सृष्टित्वानुपपत्त्या परमेश्वरस्य सत्त्वादिगुणाभिव्यक्तिपरत्वात् । अन्यथाऽभवदित्ययुक्तम् । न हि शुक्ती रूप्यमभवदित्युच्यते । मूर्तामूर्तात्मकप्रपञ्चस्य सदसत्पदाभ्यामेवोक्तत्वेन ''निरुक्तं चानिरुक्तं च निलयनं चानिलयनं चे''त्यादिवाक्यशेषस्थनिरुक्तादिपदवैयर्थ्यं च ।

''सोऽकामयत बहुस्या''मित्यादि तु परमेश्वरस्य ''अजायमानो बहुधा विजायते यदेकमव्यक्तमनन्तरूप''मित्यादिश्रुतिसिद्धतत्तदनन्तपदार्थप्रेरकानन्तरूपैर्बहुभावसंकल्पमाह। न च स्वस्याऽनन्तरूपैर्बहुभावं सङ्कल्प्य ''इदं सर्वमसृजते''ति प्रपञ्चसर्जनानुपपत्तिः, नियामकरूपैर्बहुभावस्य नियम्यसापेक्षात्वात् । नियम्यं सर्वं सृष्ट्वा नियामकरूपैः प्रवेशोक्त्युपपत्तेः । उक्तं हि–

बहु स्यामिति सङ्कल्प्य तेजः प्रभृतिसर्जनम् ।
गुरुः स्यामिति सङ्कल्प्य शिष्यसम्पादनादिवत् ।। इति ।

अन्यथा स्यामिति सत्त्वोक्तिरयुक्ता । स्यामिति सङ्कल्पितस्य सत्त्यदादिभवनस्य ''सच्चत्यच्चाभवदि''त्यनेनैवोक्तत्वेनेदं सर्वमसृजतेत्यादिवैयर्थ्यं च । सृष्टेः पूर्वमन्तःकरणाभावेन तद्विशिष्टाहमर्थाभावादुत्तमपुरुषानुपपत्तिश्च । ''एतेन तदैक्षत बहुस्यां प्रजायेये''त्येतदपि व्याख्यातम् ।

किं च तत्तेजोऽसृजतेति यत्तेजःप्रभृतिसृज्यं तत्तदात्मना हि त्वया बहुभावो वाच्यः ''तेजःप्रभृति च चेतनं तत्तेज ऐक्षत तदपोऽसृजत ता आप ऐक्षन्त ता अन्नमसृजन्त तिस्रो देवता'' इति ईक्षितृत्वस्रष्टृत्वदेवतात्वादीनां श्रवणात् । न च चेतनं प्रति उपादानता तवापीष्टा । एतेनैव ''असद्वा इदमग्र आसीत्ततो वै सदजायत तदात्मानं स्वयमकुरुते''त्येतदपि व्याख्यातम्, ''तदात्मानं सृजाम्यहं सम्भवामि युगे युगे'' इत्यादिवदुपपत्तेः । न ह्यत्रात्मानमाकाशाद्यात्मनाऽकरुतेति श्रूयते, अन्यथा अकुरुतेति सत्त्वोक्तिरयुक्ता । किं च परमते ''ततो वै सदजयते''ति पूर्ववाक्येनैव तच्छब्दनिर्दिष्टाद् ब्रह्मणः प्रपञ्चोत्पत्तेः सिद्धत्वात् ''तदात्मान''मिति व्यर्थम् ।

नापि ''सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ती''ति ब्रह्मण्येव सृष्टिलयोक्तिस्तत्र मानम्, निमित्ते कार्यस्य लयाभावादिति युक्तम्, निमित्तेऽप्यूर्णनाभौ तन्तोर्लयदर्शनात् । ब्रह्मणोऽप्यूर्णनाभिवदेव संहर्तृत्वस्य

''यथोर्णनाभिरित्यादिश्रुतिसिद्धत्वात् । न चोर्णनाभिरपि तन्तुकोशादीन्प्रत्युपादानम्, ऊर्णनाभिनाशेऽपि तन्तूपलम्भात् । न च दधि कुण्डलं वा क्षीरं सुवर्णं वा प्रत्यस्तं यातीत्युच्यते । नापि यथोर्णनाभिः सृजते गृह्णते च यथा सतः पुरुषात्केशलोमानि ससर्जमातापितृवदि''त्यादि दृष्टान्तकथनादुपादानता । ऊर्णनाभिदेहधातुविशेषस्यैव तन्तूपादानत्वात्, केशादीन् जडोपादानकान्प्रति चेतनस्य निमित्तमात्रत्वात् । ''पितृदेहधातोः पुत्रदेहं प्रत्युपादनत्वेऽपि पितृचेतनस्य निमित्तमात्रत्वात् । नाप्येकमेवाद्वितीयमिति वस्त्वन्तरनिषेधादात्मन एवोपादानत्वम्, त्वन्मतेऽप्यविद्यादेः सत्त्वात् । यद् भूतयोनि''मिति योनिशब्दस्तु ''योनिष्ट इन्द्र सदने'' इत्यादिप्रयोगान्नोपादानत्वे नियत इति परैरप्यङ्गीकृतम् ।

नाप्येकविज्ञानेन सर्वविज्ञानानुपपत्तिरुपादानत्त्वे मानम्, सादृश्यप्राधान्याभ्यामेव तदुपपत्तेरुक्तत्वात् । नापि ''सर्वं खल्विदं ब्रह्मे''त्यादि सामानाधिकरण्यानुपपत्तिस्तत्र मानम्, सर्वं समाप्नोषि ततोऽसि सर्व'' इति स्मृत्यैवान्यथा व्याख्यातत्वात् । प्रकृत्यधिकरणं तु भाष्य एवाऽन्यथा व्याख्यातम् । एतेन ब्रह्मण एव परिणाम इति भास्करादिमतमपास्तम् ।

नापि महाभूतानि सद्वस्तुप्रकृतिकानि, सत्स्वभावानुरक्तत्वे सति विविधविकारत्वात्, मृदनुस्यूत घटादिवदिति विवरणोक्तमनुमानं मानम्, विवर्तमते उपादानता न युक्तेत्युक्तत्वात् । सत्प्रधानप्रकृतिकत्वस्य मन्मतेऽपि सत्त्वाच्च, खण्डो गौर्मुण्डो गौरिति गोस्वभावानुरक्ते खण्डादौ व्यभिचाराच्च । सदनुपादानकत्वेऽपि सद्ब्रह्मेतिवत्सतीपृथिवीत्यादि प्रतीतेरुपपत्त्याऽप्रयोजकत्वाच्च । अत्रेदानीं सन् घट इति वद् अत्रेदानीमसन् घट इत्यपि प्रतीत्या घटादेः असन्नृभृङ्गम् असत्खपुष्पमित्यादिप्रतीत्या नृभृङ्गादीनामप्यसदुपादनकत्वापाताच्च । ब्रह्म न द्रव्योपादानं चेतनत्वाच्चैत्रवत् । जगन्नानन्दप्रकृतिकम्, तत्स्वभावाननुरक्तत्वाद्, यद्यत्स्वभावाननुरक्तं' न तत्तत्प्रकृतिकम्, यथा घटयस्वभावाननुरक्तः पटो न घटोपादानक इत्यादिना सत्प्रतिपक्षत्वाच्च । यच्च जगदभिन्ननिमित्तोपादनकं प्रेक्षापूर्वजनितकार्य-

**त्वात्, सुखदुःखादिवदिति विवरणोक्तमनुमानम् । तन्न । विवर्तमते उपादानत्वानुपपत्तेरुक्तत्वात् । कार्यत्वादित्येतावत एव हेतुत्वसम्भवाच्च । त्वन्मते दुःखादीनाम् अन्तःकरणोपादानकत्वेन साध्यवैकल्याच्च । जगदुपादानं न कर्तृ, द्रव्योपादानत्वान्मृद्वत् । जगत्कर्ता वा न द्रव्योपादानं कर्तृत्वात्कुलालवदित्यादिना सत्प्रतिपक्षत्वाच्च । एतेन विमतमभिन्ननिमित्तोपादनकं कार्यत्वात्, सर्वकार्यनिमित्तकालघटसंयोगवदिति निरस्तम् । तस्माद्ब्रह्म जगत्कर्तृत्वादिनैव श्रुत्यादिवेद्यं न तूपादनत्वेनेति । ब्रह्मण उपादानत्वे प्रमाणभङ्गः ॥ १० ॥**

## अद्वैतसिद्धिः

'यतो वा इमानि भूतानि जायन्त' इति 'जनिकर्तुः प्रकृति'रिति सूत्रप्रकृत्यर्थविहितपञ्चमीश्रुत्या 'यत् प्रयन्त्यभिसंविशन्ती'ति स्थितिलयाधारत्वलिङ्गाच्चोपादानत्वसिद्धिः, 'तदैक्षत व्याकरवाणी'ति ईक्षणाद्याधारतया कर्तृत्वसिद्धिश्च ।

अथ– वृत्तौ 'पुत्रात् प्रमोदो जायत' इत्यादावनुपादानेऽपि पञ्चमीदर्शनात् प्रकृतिपदं हेतुमात्रपरमित्युक्तम्, न्यासेऽपि इदमेवाश्रित्य 'असति प्रकृतिग्रहणे उपादानस्यैवापादानसंज्ञा स्यात्, प्रत्यासत्तेः, नेतरस्य । प्रकृतिग्रहणात् कारणमात्रस्य भवतीति प्रकृतिपदमनुपादानेऽपि अपादानसंज्ञासिद्ध्यर्थ'मित्युक्तम्, महाभाष्येऽपि 'अयमपि योगः शक्योऽवक्तुम्, गोलोमाजलोमाविलोमभ्यो दूर्वा जायन्ते अपक्रामन्ति तास्तेभ्य' इत्यादिना लोमादीनां दूर्वादीन् प्रत्यवधित्वाद् 'ध्रुवमपायेऽपादान'मित्यनेनैवापादानसंज्ञासिद्धेः इदं सूत्रमनारम्भणीयमिति सूत्रं प्रत्याख्यातम् । कैयटेऽपि अपक्रमणावधित्वे लोमादिषु कार्यस्य प्रतीतिर्न संभवतीति आशङ्क्य बिलान्निष्क्रामतो दीर्घभोगस्य भोगिनः अवच्छिन्नतया तत्रोपलब्धिवत् कार्यस्यापि दूर्वादेस्तत्रोपलब्धिरित्यवधित्वमेव तत्रोपपादितम् । ततश्च मतद्वयेऽपि 'जनिकर्तुः प्रकृति'रित्यनेन उपादान एव पञ्चमीति नियमो न सिध्यतीति चेत्, मैवम्, पशुना यजेते'त्यादौ पशुशब्दस्य पशुमात्रवाचकत्वेऽपि 'छागस्य वपाया' इति वाक्यशेषानुसारेण पशुविशेषपरत्ववदत्रापि कारणमात्रार्थत्वेऽपि उपादानपरत्वोपपत्तेः । अवधिपञ्चमीपक्षे 'शृङ्गाच्छर' इत्यादौ शृङ्गादिपदस्य नियामकाभावात् निमित्तपरत्वेऽपि प्रकृते नियामकसत्त्वेन निमित्तपरत्वाभावात् ।

(अद्वैतसिद्धिः)
अत एव 'आत्मन आकाशः संभूत' इत्यादावपि प्रकृतिपञ्चमी । 'सच्च त्यच्चाभव'दिति वाक्यशेषेण 'सोऽकामयतेत्येतच्छाखान्तरस्थितवाक्येन च प्रतीतिसामानाधिकरण्यस्य नियामकत्वात् । न च– 'स तपोऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजत, तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाभव'दित्यादिश्रुत्या सदादिभवनस्य जगत्सृष्टितदनुप्रवेशानन्तरभावित्वेन जगत्सृष्टित्वानुपपत्तौ परमेश्वरस्य सत्त्वादिगुणाभिव्यक्तिपरत्वेन ब्रह्मोपादानत्वे नास्य प्रामाण्यम्, अन्यथा कथमभवदित्युक्तं स्यात्? न हि शुक्तिः रूप्यमभवदित्युच्यत इति वाच्यम्, सदादिभवनस्यैव जगत्सृष्टिरूपतया तदानन्तर्याभावात्, तदनुप्रविश्येत्यस्य मुखं व्यादायेतिवदुपपत्तेः । न चेदं सर्वमसृजतेत्यनेन पौनरुक्त्यम्, निमित्तत्वमात्रभ्रान्तिव्युदासपरत्वात् । यच्च शुक्तिः रूप्यमभवदित्यनुभवादर्शनमुक्तम्, तच्छुक्तेरनुपादानत्वप्रयुक्तमिति तददर्शनस्यानुदाहरणत्वात् । न च मूर्तामूर्तप्रपञ्चस्य सत्त्यत्पदाभ्यामेवोक्तत्वेन निरुक्तादिपदवैयर्थ्यमिति शङ्क्यम्, सङ्ग्रहविवरणरूपतयोपपत्तेः ।

ननु– 'सोऽकामयत बहुस्या'मिति वाक्यं न सृज्यसाहचर्यमाह येन तत्समानाधिकरण्यमीश्वरस्य प्रतीयते किन्तु परमेश्वरस्य 'अजायमानो बहुधा विजायते यदेकमव्यक्त'-मित्यादिश्रुतिसिद्धतत्तदनन्तपदार्थप्रेरकानन्तरूपैर्बहुभावसङ्कल्पमाह । नच स्वस्यानन्तरूपैर्बहुभावं सङ्कल्प्य 'इदं सर्वमसृजते'ति जगत्सर्जनानुपपत्तिः, नियामकरूपबहुभावस्य नियम्यसापेक्षत्वात्, नियम्यं सर्वं सृष्ट्वा नियामकरूपैः प्रवेशोक्त्युपपत्तेः । अन्यथा स्यामिति सत्त्वोक्तिर्न स्यात्, सृष्टेः प्रागन्तःकरणाभावेन तद्विशिष्टाहमर्थाभावेन उत्तमपुरुषानुपपत्तिश्च स्यादिति चेन्न, स्यामित्यनेन सुखी स्यामित्यादिवद् भाविसत्त्वोक्तौ तदनुपपत्त्यसंभवात् । अन्यथा सङ्कल्पविषयत्वानुपपत्तेः, सिद्धे इच्छाविरहात् । इदमेव च बहुपदस्य सृज्यपरत्वे विनिगमकम्, नियामकरूपाणां च तवापि मते ईश्वराभिन्नतया सिद्धत्वात् । तथा चेच्छाया नियम्य एव त्वन्मतेऽपि पर्यवसानात् । तथाचेच्छायास्तेजःप्रभृतिविषयत्वेन बहु स्यामिति सङ्कल्प्य तेजःप्रभृतिसर्जनं गुरुः स्यामिति सङ्कल्प्य शिष्यसंपादनादिवदिति निरस्तम् । यच्चोक्तमुत्तमपुरुषानुपपत्तिरिति, तन्न, तादृशाविद्यापरिणामविशिष्टे अहमिति प्रयोगसंभवेन उत्तमपुरुषोपपत्तेः । एवमेव 'तदैक्षत बहुस्या'मित्याद्यत्रमानं बोध्यम् ।

ननु च– यत्तेजःप्रभृति सृज्यं, तदात्मना हि त्वया बहुभावो वाच्यः । तेषां तु तेजआदीनामीक्षितृत्वस्रष्टृत्वदेवतात्मत्वश्रवणात्तानि चेतनानि । न च चेतनं प्रत्युपादानं नामेति

(अद्वैतसिद्धिः)
चेत्, सत्यम्, सृज्यानामीक्षितृत्वाद्यसंभवेन ईक्षणादिकर्तृप्रतिपादकतेजआदिपदैस्तेज आद्यवच्छिन्न आत्मा बोध्यते । पूर्वपूर्वकार्यवच्छिन्नस्य तस्यैवोत्तरोत्तरकार्यनिमित्तत्वात् । तथा चावच्छेदके तेज आदौ न चैतन्यनिबन्धनदोषावकाशः । 'असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मानं स्वयमकुरुते'त्याद्यप्युक्तार्थे प्रमाणम् । न चात्मनः करणे अकुरुतेति सत्त्वोक्त्यनुपपत्तिः, आकाशाद्यात्मना क्रियमाणत्वेऽपि स्वरूपेण सत्त्वोपपत्तेः । एतदर्थमेवात्मानमाकाशाद्यात्मना अकुरुतेत्यश्रूयमाणोऽप्यर्थः कल्प्यते । एवं तदात्मानं सृजाम्यह'-मित्यादिस्मृतिषु धर्मस्थापकशरीराद्यात्मनेति व्याख्येयम् । न च– 'ततो वै सदजायते'ति तच्छब्दोपात्तब्रह्मणः प्रपञ्चोत्पत्तेः प्राक् सिद्धत्वात्तदात्मानमिति व्यर्थमिति वाच्यम्, निमित्तत्वे पूर्ववाक्येन लब्धेऽपि उपादानत्वबोधनेनास्यापि सफलत्वात् ।

ननु– यदुक्तं ब्रह्मण्येव सृष्टिलयश्रवणाद् ब्रह्मोपादानमिति, तन्न, ऊर्णनाभौ तन्तुनिमित्ते तन्तुलयस्य दर्शनात्, तत्र हि यथा पुत्रं प्रति पितृदेहधातोरुपादानत्वेऽपि न पिता तदुपादानम्, किन्तु निमित्तमात्रं, तथा ऊर्णनाभिधातोस्तदुपादानत्वेऽपि तस्य निमित्तत्वमेव, ब्रह्मणोऽपि ऊर्णनाभिवदेव संहर्तृत्वस्य यथोर्णनाभिरित्यादिना श्रवणाच्चेति चेन्न । यद्यप्यूर्णनाभेर्न तन्तूपादानत्वम्, तस्मिन्नष्टेऽपि तन्तूपलम्भात्, किन्तु भुक्ताहारस्यैव, तथापि तत्र न तन्तोर्लयः, किन्तु बहिष्ठस्यान्तःप्रवेशमात्रम् । अत एव 'यथोर्णनाभिः सृजते गृह्णते चे'त्युक्तम् । न च– ब्रह्मणस्तन्न्यायेन संहर्तृत्वोक्त्या तद्वदेव तदस्त्विति वाच्यम् । 'तज्जलानित्यादिना तत्र लयश्रवणात्, तिरोभावमात्रे च तस्य निदर्शनत्वात्, सर्वसाम्यस्य दृष्टान्तत्वाप्रयोजकत्वात् । 'तद्भूतयोनि'मिति योनि श्रुत्या चोपादानत्वम् । न च 'योनिष्ट इन्द्र सदने'त्यादौ निमित्तेऽपि योनिशब्दप्रयोगात् न तेनोपादानतासिद्धिः, 'मुख्यस्तु शब्दस्वरसा'दिति न्यायेन कदाचिदन्यत्र कथञ्चिन्निमित्ते प्रयोगेऽपि औत्सर्गिकमुख्यार्थत्यागस्य प्रकृतेऽयोगात् । एकविज्ञानेन सर्वविज्ञानश्रुतिरप्युपादानत्वे मानम् । यथा च न सादृश्यप्राधान्याभ्यामुपपत्तिः तथोक्तं प्राक् । 'सर्वं खल्विदं ब्रह्मे'ति सामानाधिकरण्यश्रुतिरपि तत्र मानम् । न च– 'सर्वंसमाप्नोषि ततोऽसि सर्व' इति स्मृत्याऽन्यथाव्याख्यातत्वान्न तत्र मानतेति वाच्यम्, अधिष्ठानतया सर्वव्यापित्वस्य सर्वशब्दप्रयोगनिमित्तत्वाद्, अन्यथा आकाशेऽपि सर्वपदप्रयोगापत्तेः । अनुपादानत्वे प्रकृत्यधिकरणविरोधापत्तेश्च उपादानत्वम् । श्रुत्यनुगृहीतानुमानमप्यत्र विवरणोक्तमध्यवसेयम् । तथा हि– 'महाभूतानि, सद्वस्तुप्रकृतिकानि, सत्स्वभावानुरक्तत्वे सति विविधविकारत्वात्, मृदनुस्यूतघटादिदवदि'ति । न च

(अद्वैतसिद्धिः)

विवर्तमते उपादानत्वानुपपत्तिः, सत्प्रधानप्रकृतिकत्वेनार्थान्तरता वा, आदावेव तदुपादानत्वस्य स्थापितत्वात् । प्रकृतेः सत्त्वाभावस्य प्रसाधितत्वेनार्थान्तरता वा, आदावेव तदुपादानत्वस्य स्थापितत्वात् । प्रकृतेः सत्त्वाभावस्य प्रसाधितत्वेनार्थान्तरानवकाशाच्च । न च 'खण्डो गौर्मुण्डो गौ'रिति गोत्वानुरक्तखण्डादौ व्यभिचारः तदनुरक्तत्वे सति सद्विकारत्वादित्यत्र तात्पर्यात्, सदतिरिक्तगोत्वाद्यनभ्युपगमाच्च । अत एव– 'सन् घट' इति वदन्नेदानीमसन् घटः असन्नृशृङ्गमित्यादिप्रतीत्यनुसारेण घटनृशृङ्गादेरसदुपादानत्वापत्तिरिति निरस्तम् ।

नापि, ब्रह्म न द्रव्योपादानम्, चेतनत्वाच्चैत्रवत्, जगन्नानन्दप्रकृतिकम्, तत्स्वभावानुरक्तत्वात्, यद् यत्स्वभावाननुरक्तं तत् न तत्प्रकृतिकं, यथा घटस्वभावाननुरक्तं पटादि न घटोपादानकमित्यादिना सत्प्रतिपक्षत्वम्, व्याप्तिपक्षधर्मतयोरापातप्रतीत्या साम्येऽपि श्रुत्यनुग्रहेण स्थापनाया बलवत्त्वात् । द्वितीयानुमाने कपालस्वभावाननुरक्ते घटे व्यभिचारः, 'कपालं घट' इत्यप्रतीतेः । न च– मृत्त्वेन तदनुरक्तत्वमस्तीति– वाच्यम्, सत्त्वेनात्राप्यनुरक्तत्वस्य समानत्वात् । एवं च जगदभिन्ननिमित्तोपादानकम्, प्रेक्षापूर्वकजनितकार्यत्वात्सुखदुःखादिवदित्यभिन्ननिमित्तोपादानं ब्रह्म सिध्यति । न च व्यर्थविशेषणत्वम्, प्रेक्षापूर्वकत्वात् कार्यत्वादिति हेतुद्वये तात्पर्यात् । न च– त्वन्मते दुःखादीनामन्तःकरणोपादानकत्वेन साध्यवैकल्यमिति वाच्यम्, अस्मन्मते अन्तःकरणस्य परिणाम्युपादानत्वेऽपि अन्तःकरणरूपेण परिणताज्ञानाधारतया विवर्तोपादानत्वस्यानपायात्, कार्यत्वादिति हेतौ सर्वकार्यनिमित्तकालघटसंयोगस्य उभयवादिसंप्रतिपन्नस्य दृष्टान्तस्य लाभाच्च । न च जगदुपादानं, न कर्तृ, द्रव्योपादानत्वात्, मृद्वत्, जगत्कर्ता वा न द्रव्योपादानम्, कर्तृत्वात्, कुलालादिवदित्यादिना सत्प्रतिपक्षत्वम्, श्रुतिविरोधेन हीनबलत्वात्, आद्येऽनुमाने जडत्वस्य द्वितीयानुमाने सर्वान्तर्यामित्वस्य चोपाधित्वात्, बाधोन्नीततया पक्षेतरत्वेऽपि दोषत्वात् । तस्माज्जगदुपादानं ब्रह्म कर्तृ चेति सिद्धम् । इत्यद्वैतसिद्धौ ब्रह्मणो जगदभिन्ननिमित्तोपादानत्वे प्रमाणोपपत्तिः ।

## न्यायामृततरङ्गिणी

तस्या इति ॥ पुण्यात्सुखमित्यादौ निमित्तार्थकत्वात् ॥ अपादानार्थकत्वेति ॥ वृक्षात् पततीत्यादिवद्विश्लेषावधित्वस्य ध्रुवशब्दार्थत्वात् । ननु जनिकर्तुः प्रकृतिरिति सूत्रेण

(तरङ्गिणी)

जायमानस्य कार्यस्य यः प्रकृतिरुपादानं तस्यापादानसंज्ञा न विधीयत इत्यत आह ॥ जनीति ॥ जनिकर्तुरिति सूत्रेणापि नोपादानस्यैवापादानसंज्ञा किन्तु निमित्तस्यापि । अन्यथा पुत्रात्प्रमोदो जायत इत्युदाहरणमस्मिन्सूत्रे वृत्तिगतमसङ्गतं स्यात् । पञ्चमीश्रुतिर्न मानमित्यन्वयः ॥ न्यासेऽपीति ॥ अत्र सूत्रे प्रकृतिपदं हेतुमात्रपरमित्युक्तम् । ननु तर्हि जनिकर्तुर्हेतुरित्येव सूत्रणीयमित्याशङ्कापरिहारार्थमुक्तमसतीत्यादि । हेतुशब्देन मुख्यस्य हेतोरुपादानस्यैव ग्रहणं स्यात् । उपादानरूपेण हेतुना कार्यस्य संश्लेषात् । प्रकृतिशब्देन हेतुलक्षणायां तु हेतुसामान्यस्य ग्रहणं स्यात् । लक्षणासामर्थ्यादित्यर्थः । एतावत्पर्यन्तमुपादानत्वमपि पञ्चम्यर्थो भवतीत्यङ्गीकृत्योक्तम् । इदानीं नोपादानत्वं क्वचिदपि पञ्चम्यर्थ इत्याह ॥ शृङ्गादिति ॥ शरस्तृणजातिः । महिष्यादिशृङ्गात्कर्दमे निक्षिप्ताच्छराङ्कुरा जायन्त इति लोकप्रसिद्धिः । शराकारपरिणतशृङ्गभागातिरिक्तस्तत्संसृष्टो यः शृङ्गभागः स शरस्यापादानं नोपादानम् । स पञ्चम्या निर्दिश्यते शृङ्गादिति । एवं दूर्वादावपि ॥ अयमपीति ॥ योगः सूत्रम् । यथा भीत्रार्थानां भयहेतुरित्यादिसूत्राणि न कर्तव्यानि तथा जनिकर्तुः प्रकृतिरिति योगोऽपि अवक्तुम् अकर्तुं शक्यः । अपक्रामन्ति निर्गच्छन्ति । ताः दूर्वाः । तेभ्योऽविलोमभ्यः । ननु वैशेषिकादिप्रक्रियया परमाण्वादिसमवेतं कारणेभ्योऽपृथक्देशं कार्यमुत्पद्यतेऽतो नास्ति कारणात्कार्यस्यापक्रम इत्यतोऽनुपपन्नमिदं भाष्यमित्याशङ्कायाः लोकप्रसिद्ध्याश्रयणेनैतदुच्यते । लोके हि यद्यस्माज्जायते तत्तस्मान्निर्गच्छतीत्युच्यत इति कैयटोक्तं परिहारं सूचयति ॥ अवधित्वादिति ॥ लोके निष्क्रमणावधित्वेन प्रसिद्धत्वादित्यर्थः । तन्तुभ्यः पटो जायत इत्यादावपि तुर्युपारूढेभ्यस्तं तुभ्यो निर्गमः पटस्यास्त्यास्त्येव । वैशेषिकादिप्रक्रियात्वप्रामाणिकी । यथोक्तं कैयटे । आख्यातोपयोग इत्यत्र । पूर्वाचार्याणां वचनमप्युदाहृतम् ।

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।<br>
कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थित

इति । नन्वपक्रामन्ति तास्तेभ्य इत्ययुक्तम् । लोमसु दृश्यमानत्वात् । यद्यतोऽपक्रामति तत्पुनस्तत्र न दृश्यत इति प्रसिद्धम् । इह तु तत्रास्ति दर्शनमिति शङ्कां परिहरति ॥ कैयटेऽपीति ॥ तत्र दर्शनं ततो निर्गमनाभावे न प्रयोजकं किंत्वविच्छेदादिकमित्यर्थः ॥ तदुक्तमिति ॥ प्रकृत्यधिकरणानुव्याख्यान इति शेषः ॥ अपादानत्वमिति ॥ सूत्रार्थतयेतिशेषः ॥ अत एवेति ॥ पञ्चम्या उपादानार्थत्वाभावात् ॥ अन्यथेति ॥ आकाशादिति पञ्चम्या निमित्तार्थत्वाभावे ।

(तरङ्गिणी)

उपादानार्थत्वे हि विकाररूपोपादानत्वाङ्गीकाराद्विवर्ताधिष्ठान- त्वरूपमुपादानत्वं पञ्चम्याऽभिधातव्यं स्यात् । नच तदभिधाने तस्याः सामर्थ्यमस्तीत्याह ॥ नहीति ॥ परमेश्वरस्येति ॥ परमेश्वरस्य प्रकृतिमहत्प्राणेभ्योऽन्यत्रावसादनकर्तृत्वरूपो यः सत्त्वगुणः ततत्वनियामकत्वरूपो यस्त्यत्वगुणः अन्ये ये निरुक्तादिगुणास्तदभिव्यक्तिपरं सच्चत्यच्चाभवदित्यादिवाक्यम् । न तु परमेश्वरस्य सदादिविवर्तपरमित्यर्थः । सोऽकामयतेत्यादेरयमर्थः । स आनन्दमयः स्वस्य बहुभावं सङ्कल्प्य तदर्थमधिष्ठानानि बहूनि स्युरित्यालोचनरूपं तपस्तप्त्वा इदं वक्ष्यमाणं सदादिशब्दवाच्यं श्रीप्रभृतिकमसृजत् । तत्सृष्ट्वा तदेवानुप्रविश्य स्वयं सत्यत्वादिगुणैरभिव्यक्तोऽभूदिति सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवदिति श्रुतौ सन्निरुक्तानृताविज्ञाननिलयनशब्दैः श्रीरुच्यते । त्यदनिरुक्तनिलयनविज्ञानशब्दैर्महानुच्यते । सत्यशब्देन प्राणः सत्यत्वादिगुणः परमेश्वरश्च । तत्सम्बन्धेनैव श्रीप्रभृतीनां सदादिशब्दवाच्यत्वम् । सत्यमभवदिति द्वितीयसत्यशब्दस्य सदादिशब्दवाच्या येऽवसादनहेतुत्वादयः परमेश्वरगुणास्ते साधुरूपा इत्यर्थः । तथाच तैत्तिरीयभाष्यम् ।

त्यच्चानिरुक्तं विज्ञानं तथाऽनिलयनं महान् ।
सत्यं प्राणस्तथा श्रीश्च सन्निरुक्तं तथानृतम् ।
अविज्ञानं चानिलयनमिति ।
तथा तद्वविष्णोस्तु सम्बन्धात्स्वतस्तन्नामगो हरिः ।
ततो नियामकश्चेति त्यदानन्त्यादवाच्यतः ।
अनिरुक्तं निलयनं सर्वाधारत्वतो हरिः ।
विज्ञानं सर्वविज्ञानात्सत्यं साधुस्वरूपतः ।
अवसादसु वाच्यत्वदौर्बल्याद्व्यस्यसाधुताः ।
प्रकृतिप्राणतोन्यत्र कुर्वंस्तन्नामको हरिः ।
अतः साधुस्वरूपः सन्सत्यनामेति ॥

अन्यथेति ॥ सदादिभवनस्य त्वदभिमतविवर्तरूपसृष्टित्वे ॥ मूर्तेति ॥ त्वया सदादिपदैर्मन्वादिग्रहणान्निरुक्तादिपदवैयर्थ्यम् । ननु सङ्ग्रहविवरणरूपतया सदादिपदोक्तमेव पृथुबुध्नाकार इत्यादिनिरुच्यमानं घटादिनिरुक्तं जातीचम्पककेतकीगन्धादिकमनिरुक्तमुच्यत इति न वैयर्थ्यम् । मैवम् । अर्थविशेषानुक्तेः । त्वन्मते विज्ञानसत्यशब्दयोश्चित्परत्वेन तदात्मना

(तरङ्गिणी)

सत्यभवनायोगात् । सदादौ भवनशब्देन विवर्ते विज्ञानसत्ययोस्तु नेत्यस्यायोगाच्च । ननु बहुः स्यामिति प्रत्यगात्मविषयाभिध्ययात्मन एव प्रपञ्चरूपेण बहुभावोऽवगम्यते सूत्रं च अभिध्योपदेशादिति अत आह ॥ सोऽकामयतेति ॥ स्वरूपपरत्वादभिध्यायाः न तयोपादानत्वसिद्धिरित्यर्थः ॥ अन्यथेति ॥ स्वस्वरूपबहुभावसङ्कल्पानङ्गीकारे । बहुविवर्तसङ्कल्पाङ्गीकारे ॥ सत्त्वोक्तिरिति ॥ विवर्ते सत्त्वाभावादित्यर्थः ॥ सृष्टेरिति ॥ नचान्तःकरणाभावेऽप्यविद्यापरिणामविशिष्टेऽहमिति प्रयोग इति वाच्यम् । तादृशपरिणामस्यैव सृष्टेः पूर्वमभावात् । अन्यथा सुषुप्तौ चाहमुल्लेखः स्यात् ॥ श्रवणादिति ॥ छान्दोग्यभाष्ये च ।

सर्वोत्तमत्वात्सन्नामा हरिर्नारायणः प्रभुः ।
सोऽसृजत्प्रथमंदेवीं तेजआख्यां श्रियं सतीम् ।
तेजस्थितेन रूपेण साजैव हि यतः सदा ।
तेज इत्युच्यते तस्माज्जनेर्वा तत एव तु ।
अबाख्यः प्राण एवायमन्नामाजायतेऽथ च ।
ब्राह्मणादिचतुर्वर्णस्ततश्चान्नाभिधो हर इति ।

ननु सद्वा इति वाक्ये स्थूलबुद्ध्यगोचरत्वे नासच्छब्दवाच्यं ब्रह्म सदादिपदवाच्याकाशादिरूपेण स्वमात्मानमकुरुतेति श्रूयते । तथाच सूत्रम् । आत्मकृतेः परिणामादिति । अतस्तस्योपादानत्वमित्येतत् परिहरति ॥ एतेनैवेति ॥ ननु नात्रात्मसर्जनं किन्तु सदात्मनात्मसर्जनमत आह ॥ नहीति ॥ अन्यथेति ॥ आकाशादिविवर्तात्मना सर्जने ॥ सत्त्वोक्तिरिति ॥ कुरुतेति कृतिविषयत्वरूपसत्त्वोक्तिः । असद्वा इत्यादिश्रुतेरर्थस्तैत्तिरीयभाष्येऽभिहितः ।

अनासाद्यस्त्वसन्नामा पूर्वं नारायणाभिधः ।
स आसाद्यश्च सन्नामावासुदेवोऽभवत्प्रभुः ।
स वासुदेवः स्वात्मानं चक्रे सङ्कर्षणाभिधम् ।
तस्मात्स सुकृतं नाम स आनन्दो रसस्तत इति ।

तथाच सूत्रम् । साक्षाच्चोभयाम्नानादिति । साक्षादुपादानान्तरानुपादानेन ब्रह्मणि जन्मलयावाम्नायेते इति सूत्रार्थः । ननूर्णनाभौ न तन्तोर्लयः किन्तु बहिष्ठस्यान्तःप्रवेशमात्रमत आह ॥ ब्रह्मणोपीति ॥ ननु तन्तुलयाश्रयश्चेदूर्णनाभिस्तर्हि तस्याप्युपादानत्वान्निमित्तेऽप्यूर्णनाभावित् युक्तमयुक्तमित्यत आह ॥ नचोर्णनाभिरपीति ॥ ननूर्णनाभिर्नोपादानं किन्तु गृह्णत इत्युक्त्या

(तरङ्गिणी)

संहर्ता । ब्रह्मणि त्वस्तं यान्तीत्यस्य न संहारोऽर्थः । किन्तूपादेयस्योपादानगतो लय इत्यत आह ॥ नेति ॥ तादृशलयेऽस्तं यातीत्यप्रयोगादित्यर्थः । ननूर्णनाभिर्न तन्तुमात्रोपादानं किन्तु यं तन्तुं सृजते गृह्णते च तं प्रत्येव । अत एवोर्णनाभिनाशेऽपि तन्तुप्रतीतिस्तद्दृष्टान्तेन च ब्रह्मण उपादानत्वमत आह ॥ यथेति ॥ तन्तुविशेषेऽपि नोर्णनाभिरुपादानं किन्तु तद्देहधातुरेव। ननु योनिश्च हि गीयत इति सूत्रे यद्भूतयोनिं परिपश्यन्ति धीरा इत्यादिषु योनित्वोक्त्योपादानं ब्रह्मेति साधितमत आह ॥ यदिति ॥ योनिष्ट इति ॥

योनिष्ट इन्द्र सदने अकारि तमानृभिःपुरुहूत प्रयाहि ।
असो यथानोऽविताववृधे च ददोवसूनि ममदश्च सोमैः ।

अस्यार्थः हे पुरुहूत इन्द्र ते तव सदने सदनार्थम् उपवेशनार्थं योनिः स्थानमकारि नृभिर्मरुद्भिः सह तं योनिं प्रति आ प्रयाहि । यथा नोऽस्माकम् अविता रक्षकोऽसः भवसि । वृधे वर्धनाय च पुंसः । तथा वसूनि ददः देहि । सोमैरस्मदीयैर्ममदः मादय चेति ॥ परैरिति ॥ तथाच तद्भाष्ये क्वचित्स्थानवचनोऽपि योनिशब्दः । यथा योनिष्ट इन्द्र निषदे अकारीतीति ।

योनिष्ट इन्द्र निषदे अकारि तमानिषीद स्वानोनार्वा ।
विमुच्यावयोऽवसायाश्वान्दोषावस्तोर्वहीयसः प्रपित्वे

इति । अस्यार्थः । हे इन्द्र तवोपवेशनाय योनिः स्थानमस्माभिरकारि । तं योनिं प्रपित्वे यागकाले प्राप्ते सति आनिषीद । किं कृत्वा वयः अश्वबन्धनात् रश्मीन् रथान् विमुच्य तथा दोषावस्तोः दिवारात्रौ वहीयसः वहनशीलान् अश्वान् अवसाय विमुच्य । स्यतिरुपसृष्टो विमोचन इति निरुक्तम् । तत्र दृष्टान्तः स्वानः हेषाशब्दं कुर्वन् अवनि अश्व इवेति प्रति प्राप्तकाल यास्कः । नन्वेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृत्पिण्डमृन्मयदृष्टान्तेन तदुपपादनं च ब्रह्मण उपादानत्वं गमयति । सूत्रं च प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधादिति । तत्राह ॥ नापीति ॥ ननूदाहृतसूत्राणां तर्हि का गतिरत आह ॥ प्रकृतीति ॥ सत्स्वभावेति ॥ सद् ब्रह्मेत्यादिना ब्रह्मणि व्यभिचारवारणाय विकारेति । आम्राणां वनमित्यादिना वनादावव्यभिचाराय विविधेति ॥ सत्प्रधानेति ॥ नच प्रधाने सत्त्वाभावान्नार्थान्तरता । तत्सत्त्वस्य साधितत्वात् ॥ खण्ड इति ॥ नच तदनुरक्तत्वे सति तद्विकारत्वादित्यत्र तात्पर्यान्न व्यभिचारः । असिद्धेः । विशेषणवैयर्थ्याच्च ॥ तत्स्वभावेति ॥ नच कपालं घट इत्यप्रतीतेः कपालस्वभावाननुरक्ते घटे

(तरङ्गिणी)

**व्यभिचारः । तन्तवः पट इति कपालं घट इत्यस्यापि सत्त्वात् । अन्यथा कपालप्रकृतिकत्वस्याप्यसिद्धेः ।। कार्यत्वादित्येतावत इति ।। नत्र प्रेक्षापूर्वकत्वात् कार्यत्वादिति हेतुद्वये तात्पर्यम् । प्रेक्षापूर्वकत्वं हि प्रेक्षाकार्यत्वमिति घट्टकुटीप्रभातवृत्तान्तः ।। जगदुपादानमिति ।। नचाद्ये जडत्वं द्वितीयेऽनन्तर्यामित्वमुपाधिः । पक्षमात्रवृत्तिव्यतिरेक-प्रतियोगित्वात् । व्यतिरेकहीनत्वाच्च । आद्यस्य सति साध्याव्याप्तेश्च ।। ब्रह्मण उपादानत्वे प्रमाणभङ्गः ।।**

## न्यायामृतकण्टकोद्धारः

एवमुपादानत्वं ब्रह्मणो निर्वक्तुमशक्यमित्युक्तम् । इदानीं प्रमाणाभावादुपादानत्वमयुक्तमित्याह ।। किंचेति ।। प्रत्यक्षं तु ब्रह्मणोऽतीन्द्रियत्वात् तदुपादानत्वे न सम्भवतीत्यनुमानागमयोरन्यतरत् वाच्यम् । तत्रानुमानस्य श्रुतिवदनभिप्रेतत्वात् मूलप्रमाणसापेक्षत्वाच्च; आगमस्य तद्विपरीतत्वादागमदूषणमेव प्रथमं कृतमिति द्रष्टव्यम् ।। तस्या इति ।। हेतौ तृतीयेत्यादिना हेतुत्वेऽपि तद्विधानादिति भावः । ननु बहुभिः सूत्रैरपादानपञ्चम्या विधानात् तद्ग्रहणमेव ज्याय इत्यत आह ।। अपादानार्थत्वेऽपीति ।। तथा च विश्लेषावधित्वमेव ब्रह्मणो न तूपादानत्वमिति भावः । ननु 'ध्रुवमपायेऽपादानम्' इत्यतः 'जनिकर्तुः' इत्यस्य विशेषसूत्रत्वादनेनैवापादानसंज्ञायामुपादानत्वं सेत्स्यति । तत्रोपादानत्वस्य प्रकृतिशब्देन लब्धत्वादित्यत आह ।। जनिकर्तुरितीति ।। न च तत्र प्रकृतिपदमुपदानमात्रपरमिति वाच्यम् । तस्य हेतुमात्रपरत्वात् । अन्यथा वृत्तिन्यासविरोधात् ।। असति प्रकृतिग्रहण इति ।। प्रकृतिपदात् शीघ्रोपस्थितोपादानग्रहण इत्यर्थः ।। उपादानस्यैवेति ।। अपादानसंज्ञेति शेषः । न्यासेऽपि इत्युक्तत्वादिति संबन्धः । नन्वेवमुपादानपञ्चमीस्थले का गतिरित्यत आह ।। शृङ्गादिति ।। तत्रापि निमित्त एव पञ्चमीति भावः । न चैवं पूर्वमस्यार्थस्योक्तत्वात् पौनरुक्त्यमिति वाच्यम् । पूर्वं प्रकृतिपदमुपादाननिमित्त-साधारणहेतुमात्रपरम् । इदानीं तु निमित्तहेतुमात्रपरमिति भेदात् । न चापरिणतांशस्य निमितत्वे प्रमाणाभावः । अन्वयव्यतिरेकयोरेव प्रमाणत्वात् ।। अत एव ।। अपरिणतभागस्यावधित्वादेवेत्यर्थः । न चेदं सिद्धान्तसम्मतमित्यत आह ।। तदुक्तमिति ।। 'शृङ्गात् शरः' इत्यादौ अपरिणतांशस्य विश्लेषावधित्वरूपोपादानत्व एव पञ्चमी । न तु परिणामोपादनत्वरूपापादनत्व इत्यर्थः । अत एवेति परामृष्टं हेतुमाह ।। आकाशादित्यादावपीति ।। अन्यथेति ।। आकाशादेर्विवर्ताधिष्ठानत्वरूपोपादानत्वे इत्यर्थः । न चात्र विकारित्वरूपमेवोपादानत्वं विवक्षितम् । तेन सम्भूतशब्दोपपत्तिरिति वाच्यम् । आत्मन इत्यादावपि तथा त्वापत्तौ निर्विकारश्रुतिविरोधः । तत्र विवर्ताधिष्ठानत्वविवक्षायां सम्भूतशब्दानुपपत्तिः । सकृत् श्रुतस्यार्थद्वयकल्पनापत्तिश्चेति द्रष्टव्यम् । नन्वस्तु विवर्ताधिष्ठानत्व एव सम्भूतशब्दोपपत्तिरिति अत आह ।। नहीति ।। तथा लौकिक प्रयोगाभावादिति भावः ।। नापीति ।। अत्र बहु स्यामिति सङ्कल्प्य

(कण्टकोद्धारः)

सदादिभवनस्योक्तत्वात् अन्यविषयत्वे सङ्कल्पवैयधिकरण्यापत्तेरुपादानत्वं विवक्षितमिति नापीत्यर्थः । सदादिभवनस्य जगत्स्रष्टृत्वाभावे तत्प्रतिपादकवाक्यस्य निर्विषयत्वं स्यादित्यत आह ॥ परमेश्वरस्येति ॥ सत्त्वादिगुणानां सदा सत्त्वात् भवनानुपपत्तिरित्यत उक्तम् । अभिव्यक्तीति ॥ अन्यथा विवर्ताधिष्ठानत्व-रूपोपादानत्व इत्यर्थः । ननु तर्हि सदादिरूपजगद्भवनसङ्कल्पानुपपत्तिरित्यत आह ॥ स इति ॥ स्वस्यानन्तरूपैराविर्भावार्थत्वात् न व्यधिकरणतेति भावः ॥ अन्यथेति ॥ विवर्ताधिष्ठानत्वरूपोपादानत्व इत्यर्थः । न च सुखी स्यामितिवत् भाविविवक्षया सत्वोक्तिरस्तु । अन्यथा इच्छैव न स्यात् सिद्धे इच्छाविरहात् ईश्वरस्वरूपाणामीश्वराभिन्नत्वेन सिद्धत्वादिति वाच्यम् । ब्रह्मविवर्तत्वपक्षे भाविनोऽपि सत्त्वाभावात् । भाविनोऽपि सुखस्य सत्त्वात् । स्वरूपाणामीश्वराभेदेन सिद्धत्वे आविर्भावापेक्षया इच्छोपपत्तेः । अत एव बहुशब्दः सृज्यपर इति निरस्तम् ॥ सृष्टेरिति ॥ न च तादृशाविद्यापरिणामविशिष्ट उत्तमपुरुषप्रयोगसंभवेन सर्वस्योपपत्तिरिति वाच्यम् । संकल्पं विनाऽविद्यापरिणामरूपसृष्ट्यसम्भवात् । तथा च सत्यहमर्थे उत्तमपुरुषेण सङ्कल्पे अविद्यापरिणामः तत्सृष्ट्यसंक्षत्याकेऽस्मिन् सङ्कल्प इत्यन्योन्याश्रय इति भावः ॥ एतेनेति ॥ बहु स्यामिति तैत्तिरीय कश्रुतेरनन्तरूपैर्बहुभावपरत्वप्रतिपादनेनेत्यर्थः । तेजः प्रभृतीनां चेतनत्वे युक्तिमाह ॥ तत्तेज इति ॥ न चेति ॥ न च तेज आदिपदैस्तदवच्छिन्न आत्मा बोध्यते । पूर्वपूर्वकार्यावच्छिन्नस्योत्तरोत्तरकार्यावच्छिन्नं प्रति निमित्तत्वात् तदवच्छेदके चैतन्याभावात् तत्प्रत्युपादानत्वोपपत्तिरिति वाच्यम् । अवच्छिन्नस्य मिथ्यात्वेन जडत्वात् ईक्षणाद्यनुपपत्तौ तेज आदिपदेन चैतन्यस्यैव विवक्षणीयत्वात् । अवच्छिन्ने ईक्षणाद्यनुपपत्तौ अभिमानिचेतनावच्छिन्नप्रधानस्येक्षणसंभवात् ईक्षतेर्नाशब्दमित्यत्रेक्षणेन प्रधाननिरासो न स्यात् किञ्च चेतनस्यैव निमित्तत्वं वक्तव्यम् । तेज आदीनामुपादानत्वेन निमित्ततानवच्छेदकत्वात् । न हि मृदो दण्डाद्यवच्छेदकत्वमिति भावः ॥ एतेनेति ॥ तत्रापि स्वरूपबहुभावस्यैव संभवादिति भावः । अत्र समाख्याप्रमाणमाह ॥ तदात्मानमिति ॥ न च तत्रापि जगद्रूपेण बहुभाव एव प्रतिपाद्य इति वाच्यम् । प्रक्रमाननुगुणत्वात् । परित्राणायेति अवताराणामेवोक्तत्वात् ॥ न हीति ॥ न चाकाशात्मनेति अध्याह्रियत इति वाच्यम् । वाक्यस्थपदैरेव वाक्यार्थसम्भवेनाध्या-हारानावश्यकत्वात् अन्यथाऽतिप्रसङ्गात् । अत्राकुलतेति कर्तृत्वोक्त्याऽसत्त्वमवगम्यते । सतः कर्तृत्वानुपपत्तेरित्यर्थः । नचाकाशात्मनाऽसत्वेऽपि स्वरूपेण सत्त्वोक्तिर्युक्तेति वाच्यम् । आत्मानमकुरुतेति आत्मन एव कर्मत्वप्रतीतेः स्वरूपसत्त्वासम्भवात् । अन्यथा स इदं सर्वमित्यत्रापि सर्वस्य स्वरूपसत्त्वापातात् ॥ किञ्चेति ॥ न पूर्ववाक्यं निमित्तपरमिदं तूपादानपरमिति वाच्यम् । उपादानत्वासंभवस्य पूर्वमेवोक्तत्वात् । अन्यार्थसम्भवेऽप्रामाणिकस्योपादानत्वस्य तदर्थत्वायोगाच्च । घटं करोतीतित्यादाविव सर्वमकुरुतेति प्रयोगापाताच्च । कृतिविषये उपादानवाचकपदप्रयोगा दर्शनात् ॥ निमित्त इति ॥ तथाचोत्पत्तिलयाधिकरणत्वान्यथानुपपत्तिरुपादानत्वे प्रमाणमिति भावः । अन्यथोपपत्तिं दर्शयति ॥ निमित्त इति ॥ ननु ब्रह्मणो लयकर्तृत्वमूर्णनाभिविलक्षणमेवेत्यत आह ॥ ब्रह्मणो हीति ॥ ऊर्णनाभिविलक्षणसंहर्तृत्वाङ्गीकारे यथोर्णनाभिरिति श्रुतिविरोध इति भावः ॥ दृष्टान्तकथनादिति ॥

(कण्टकोद्धारः)

उपादानविषयदृष्टान्तकथनादित्यर्थः । अत्रापि ऊर्णनाभेर्निमित्तत्वमेव । ननु तर्हि उपादानाभावात् तन्तोरुत्पत्तिरेव न स्यादित्यत आह ॥ ऊर्णनाभिदेहेति ॥ तथा च ऊर्णनाभिदृष्टान्तो निमित्तविषय एव । चेतनस्याचेतनं प्रत्युपादानत्वाभावादिति भावः । ननु पुरुषकेशदृष्टान्ते पुरुषस्य केशान् जडान् प्रति उपादानत्वमुक्तमित्यत आह ॥ केशादीनीति ॥ तत्रापि चेतनस्य निमित्तत्वं जडस्यैवोपादानत्वमिति भावः ॥ पृथिव्यौषधिदृष्टान्तेऽपि यदा पृथिवीशब्दो देवता परः तदा तत्रापि निमित्तमापिरता । यदा तु जडपरस्तदा कारणत्व एवान्यथाऽसम्भवादिति द्रष्टव्यम् । ननु तथापि पितुश्चेतनस्य पुत्रं प्रत्युपादानत्वं दृष्टमस्तीत्यत आह ॥ पितृदेहधातोरिति ॥ नापीति ॥ तथाच परिशेषप्रमाणेन ब्रह्मण एवोपादानत्वमिति भावः ॥ त्वन्मतेपीति ॥ तथाचाद्वितीयपदस्य सजातीयद्वितीयमात्रनिषेधपरत्वमिति भावः । ननु तथापि यद्भूतयोनिमिति श्रुतौ ब्रह्मणि योनिशब्दश्रवणात् तस्य चोपादानवाचित्वात् ब्रह्मण उपादानत्वमित्यत आह ॥ यद्भूतयोनिमितीति योनिशब्दस्योपादानेऽनियतत्वात् न तेनोपादानत्वसिद्धिरिति भावः । न च योनिशब्दस्योपादाने मुख्यत्वात् मुख्यस्यैवोत्सर्गतः प्राप्तत्वात् उपादानत्वस्य सिद्धिरिति वाच्यम् । योनिर्भार्या तथा स्थानंयोनिः कारण एव चेत्यभिधानात् योनिशब्दमुख्यत्वस्योपादानेऽसिद्धेरिति । नन्वस्तु तर्हि अनुपपत्तिर्ब्रह्मण उपादानत्वे प्रमाणम्। तस्या अपि प्रमाणत्वादित्यतः किं सा दृष्टानुपपत्तिः उतश्रुतानुपपत्तिः । नाद्यः । दृष्टानुपपत्तेरभावात् । न द्वितीय इत्याह ॥ नापीति ॥ उक्तत्वादिति ॥ वाचारंभणमिति श्रुति व्याख्यावसर इति शेषः । सर्वं समाप्नोषि ततोऽसि सर्व इतीति ॥ नचाधिष्ठानतया सर्वव्याप्तत्वं सर्वशब्द प्रयोगनिमित्तमिति श्रुत्यर्थ इति वाच्यम् । अध्याहारकल्पकाभावात् । न चाकाशादौ सर्वशब्दाप्रयोग एव कल्पक इति वाच्यम् । निमित्तातिप्रसङ्गस्यादोषत्वात् । नियामकतया सर्वव्यापित्वस्य तथात्वाच्च । ननु प्रकृत्यधिकरणसूत्रकृतैवोपादानत्वं ब्रह्मणः साधितमिति ब्रह्मोपादानमित्यत आह ॥ प्रकृत्यधिकरणं त्विति ॥ एतेनेति ॥ प्रमाणाभावेनेत्यर्थः । ननु ब्रह्मोपादानत्वेऽनुमानमेव प्रमाणम् । तस्यापि व्याप्तिपक्षधर्मतोपेतस्यार्थसाधकत्वादित्यत आह ॥ नापीति ॥ अत्र सद्वस्तु प्रकृतिकत्वं साक्षात् द्रष्टव्यम् । अत एव घटदृष्टान्तस्सामान्यव्याप्तौ द्रष्टव्यः । यद्विविधविकारात्मकं तदेकप्रकृतिकमित्युच्यमाने घटपटादौ व्यभिचारः तद्वारणार्थमाद्यं प्रतीकम् । यद्यत्स्वभावं तत्तत्प्रकृतिकमित्युच्यमाने ब्रह्मणि व्यभिचारस्तद्वारणार्थं द्वितीयम् ॥ विवर्तमत इति ॥ अत्र प्रकृतिकत्वं किं विवर्ताधिष्ठानत्वं विकारित्वं वा? नाद्यः । दृष्टान्तस्य साध्यवैकल्यात् । न हि मृदि घटोऽध्यस्तः । न द्वितीयः । शुक्तिरूप्यादौ व्यभिचारश्चेत्यपि द्रष्टव्यम् ॥ सदिति ॥ न च प्रधानस्य सत्त्वमसिद्धमिति वाच्यम् । जगत्सत्यत्वस्य साधितत्वात् मां प्रत्यर्थान्तरापरिहाराच्च ॥ खण्डोगौरिति ॥ तथा च तत्र व्यभिचार इति भावः । न च तदनुरक्तत्वे सति तद्विकारित्वादिति विवक्षितमिति वाच्यम् । विवर्तमते सद्विकारत्वाभावेनासिद्धेः । न च तद्विकारत्वादित्यस्य तद्विवर्तत्वादित्यर्थ इति वाच्यम् । मां प्रत्यसिद्धेरिति भावः ॥ ब्रह्मेति ॥ न च स्थापनाया श्रुत्यनुग्रहेण बलवत्त्वात् न सत्प्रतिपक्षत्वमिति वाच्यम् । श्रुत्यनुग्रहाभावस्योपपादितत्वात् । तत्स्वभावेन च कपालस्वभावानुरक्ते घटे व्यभिचारः कपालं घट इति प्रतीतेः । न च तत्रापि मृत्त्वेन

(कण्टकोद्धारः)
तत्स्वभावानुरक्तत्वमेवेति वाच्यम् । अत्रापि सत्त्वेन तदनुरक्तत्वस्य सत्त्वादितुल्यमिति वाच्यम् । तदनुपरक्तस्वभावत्वादित्यस्य तदघटितस्वभावत्वादिति विवक्षितम् । तथा च घटे न व्यभिचारः । न घटः कपालात्मक इत्यप्रतीतिः । जगदानन्दात्मकमिति तु न प्रतीतिः । अतो न व्यभिचारो न वाऽसिद्धिः ॥ कार्यत्वादित्येतावत एवेति ॥ न च हेतुद्वये तात्पर्यात् न व्यर्थविशेषणतेति वाच्यम् । तथाप्यप्रयोजकत्वानिस्तारात् ॥ त्वन्मत इति ॥ न च दुःखादिकं प्रति अन्तःकरणादीनां परिणाम्युपादानत्वेऽपि आत्मनोऽधिष्ठानतया तदस्तीति वाच्यम् । तस्य प्रतिवादिनं प्रत्यसिध्या साध्यवैकल्यापरिहारात् ॥ जगदिति ॥ न च जडत्वमुपाधिरिति वाच्यम् । तस्य परमते पक्षे सत्वेन साधनव्यापकत्वात् । त्वन्मते शुद्धे कर्तृत्वशून्ये जडत्वाभावेन साध्याव्यापकत्वाच्च ॥ जगत्कर्तेति ॥ न च सर्वान्तर्यामित्वमुपाधिः । तस्य पक्षेतरत्वात् । न च बाधोन्नीतः पक्षेतरोऽप्युपाधिरेवेति वाच्यम् । उपादानत्वे श्रुत्यभावस्योपपादितत्वेन बाधाभावात् ॥ एतेनेति ॥ सत्प्रतिपक्षत्वेनेत्यर्थः । पराभिमतस्वप्रकाशत्व दूषणोपक्रमार्थमुपसंहरति ॥ तस्मादिति ॥ ब्रह्मण उपादानत्वे प्रमाणभङ्गः ।

## ११. स्वप्रकाशत्वलक्षणभङ्गः

यच्चेदमुच्यते– ब्रह्म न वेद्यं स्वप्रकाशत्वात् । तच्च यद्यपि न वृत्त्यव्याप्यत्वं दृश्यत्वभङ्गे उक्तरीत्याऽसम्भवात् । नापि फलाव्याप्यत्वम्, अतीतादौ नित्यातीन्द्रिये चातिव्याप्तेः । नाप्यवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वम्, सुषुप्तिप्रलयादौ व्यवहाराभावेनाव्याप्तेः । नाप्यवेद्यत्वे सत्यपरोक्षव्यवहारविषयतायोग्यत्वम्, मोक्षे योग्यतारूपधर्मस्याप्यभावात् । तथाप्यवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वयोग्यतात्यन्ताभावानधिकरणत्वं तत् । प्रमाणं चात्र अनुभूतिः स्वप्रकाशा अनुभूतित्वादिति व्यतिरेकि । न चाप्रसिद्धविशेषणता, वेद्यत्वं किंचिन्निष्ठात्यन्ताभावप्रतियोगि, धर्मत्वाच्छौक्ल्यवदिति सामान्यतस्तत्सिद्धेः । आत्मा चानुभूतिरूप इति । तन्न, त्वन्मते आत्मनि सत्त्वाद्यनधिकरणत्वरूपानिर्वाच्यत्वस्येव मोक्षे योग्यतात्यन्ताभावानधिकरणत्वरूपस्य वाऽनधिकरणत्वोपलक्षितत्वरूपस्य वा धर्मस्याप्यभावात् । किं च त्वन्मते ब्रह्मणि योग्यतापि मिथ्या, मिथ्यात्वं च स्वसमानाधिकरणात्यन्ताभाव प्रतियोगित्वं तथा च तदत्यन्ताभावानधिकरणत्वमसम्भवि । न च व्यावहारिको योग्यतात्यन्ताभावो ब्रह्मणि नेति वाच्यम्, अत्यन्ताभावस्य ब्रह्मान्यत्वेन व्यावहारिकत्वात् । किं चेदमवेद्यत्वं न तावद् वृत्त्यव्याप्यत्वम्, असम्भवात् । नापि

फलाव्याप्यत्वम्, दृश्यत्वभङ्गे उक्तरीत्या प्रातिभासिके रूप्यादौ व्यावहारिके अविद्यान्तःकरणतद्धर्मसुखादौ घटादौ च लक्षणस्यातिव्याप्तेः, तत्रोक्तरीत्यैव ब्रह्मणोऽपि चरमवृत्तिप्रतिबिंबित चिद्रूपफलव्याप्यत्वेना सम्भवाच्च । एतेन फलव्याप्यत्वं वृत्तिप्रतिबिंबितचिज्जन्यातिशय योगित्वम्, अतिशयश्च नावरणभङ्गः, नापि व्यवहारः, किं तु भग्नावरणचित्सम्बन्धः, स च घटादावस्ति न त्वात्मनि । यद्वा फलव्याप्यत्वं वृत्त्या तत्प्रतिफलितचिता वाऽभिव्यक्ताधिष्ठानचिद्विषयत्वम्, तज्जन्यव्यहारयोगित्वं तच्च घटादावस्ति न त्वात्मनीति निरस्तम् । घटादौ वृत्तिविषयत्वमेव, न तु तत्प्रतिफलितचिद्विषयत्वं न वा तदभिव्यक्ताधिष्ठान-चिद्विषयत्वमित्युक्तत्वात् ।

एतेनैव चिद्रूपज्ञानाविषयत्वमवेद्यत्वं रूप्यादिरपि साक्षिविषय एव । लक्षणे विशेष्यं तु नित्यातीन्द्रियेष्वनतिव्याप्त्यर्थमिति निरस्तम्, घटादावतिव्याप्तेः । चित्सुखेन तत्स्वभावस्यापि स्फुरणस्य तद्विषयत्वमित्युक्तत्वेन असम्भवाच्च । ननु तर्हि चिदकर्मत्वमवेद्यता चित्सुखेनैव चितश्चिद्विषयत्वमुपेत्य तदकर्मत्वोक्तेरिति चेत्, कर्मत्वं किं कारकविशेषत्वम्, तज्जन्यातिशयवत्त्वं वा? परसमवेतक्रियाफल-शालित्वं वा? नाद्यः, अनवच्छिन्नं नित्यं चैतन्यं प्रति घटादेरप्यकारकत्वात् । स्वाकारवृत्तिप्रतिबिंबितं तु प्रति घटतद्रूपादेरिवापरोक्षचरमवृत्तिव्याप्यस्य ब्रह्मणोऽपि कारकत्वावश्यम्भावात् । न द्वितीयः, ब्रह्मण्यप्युक्त न्यायेन प्रतिफलितचित्फल-भूतावरणभङ्गरूपस्य तदभिव्यक्तचिज्जन्यव्यवहाररूपस्य वातिशयस्य सत्त्वात् । तदन्यस्य च घटादावप्यभावात् । न तृतीयः, शुद्धचितोऽसमवेतत्वादक्रियात्वाच्च तत्फलशालिनोऽपि जडस्याकर्मत्वापातात् । प्रतिबिंबिते चिति तु समवेतत्वादेः सत्त्वेऽपि ब्रह्मणोऽपि चरमवृत्तिप्रतिफलितचित्फलभूतावरणभङ्गादि शालित्वाच्च ।

एतेन ज्ञप्त्यविषयत्वमवेद्यत्वं वृत्तिस्तु न ज्ञप्तिरिति निरस्तम्, घटादौ वृत्त्यन्यज्ञप्त्यभावस्योक्तत्वात् । तस्मादवेद्यत्वं दुर्वचम् ।

कश्चायमपरोक्षव्यवहारः? अपरोक्षज्ञानजन्यो वा? अपरोक्षवस्तुविषयो वा? अपरोक्षोऽयमित्याकारो वा? नाद्यः, धर्माधर्मादावप्यपरोक्षेण योगजज्ञानेनानु-

व्यवसायेन व्याप्तिज्ञानेन च जन्यव्यवहारस्य सत्त्वेनातिव्याप्तेः । अपरोक्षज्ञानशब्देनानागतगोचर साक्षात्कारजनकप्रत्यासत्त्यजन्यजन्य साक्षात्कारविवक्षायां चात्मस्वरूपज्ञानस्य नित्यत्वेनासम्भवात् । विषयगतापरोक्षव्यवहारहेतुसाक्षात्कारविवक्षायां तु साक्षिवेद्ये रूप्यादौ चाविद्यादौ चातिव्याप्तेः । द्वितीये वस्तुन आपरोक्ष्यम् अपरोक्षज्ञानविषयत्वं चेदात्मापि घटादिवद्वेद्यः स्यात् । तस्यैव लक्षणत्वोपपत्त्या कुसृष्टिवैयर्थ्यं च । अपरोक्ष व्यवहारविषयत्वं चेत्, वस्तु व्यवहारयोरापरोक्ष्येऽन्योऽन्यसापेक्षत्वादन्योन्याश्रयः । न तृतीयः, निराकारशुद्धब्रह्मविषयस्याऽखण्डार्थनिष्ठवेदान्तजन्यस्य च व्यवहारस्य अपरोक्ष इत्याकारत्वायोगात् । अभावेऽतिव्याप्तेश्च । अस्ति हि गज इव गजाभावेऽप्यपरोक्ष इति लोकव्यवहारः । स चावेद्यः । त्वयैव नाभावस्य प्रत्यक्षत्वं किं त्वनुपलब्धिगम्यत्वमिति फलव्याप्यत्वनिषेधात् । यदि चापरोक्षज्ञानं अपरोक्षव्यवहारशब्दार्थः, तदा स्वव्याहतिः ।

किं च अपरोक्षव्यवहारयोग्यत्वं न तावत्सर्वान्प्रति, चैत्रस्य ज्ञाने मैत्रं प्रति तदभावात् । नापि ज्ञानं प्रति, तस्याव्यवहर्तृत्वात् । नापि ज्ञानाश्रयं प्रति, चितोऽनाश्रितत्वात् । किं चावेद्यस्यापरोक्षव्यवहारविषयत्वं व्याहतम्, तदपरोक्षव्यवहारे तद्विषयकस्फुरणस्य हेतुत्वात् । यदि च स्फुरणाविषयेऽपि स्फुरणे तद्विषयकापरोक्षवृत्तिर्वा तदविषयकं स्फुरणमेव वा स्वाभावभेदादेव अपरोक्षस्वव्यवहारहेतुः, तर्ह्यवैरूप्याय घटादावपि तथैव स्यात् । ननु घटादिकमस्फुरणरूपं स्फुरणं तु तद्रूपमिति चेत्, सत्यं तावता स्फुरणे स्फुरणान्तरं नापेक्षितं न तु क्लृप्तं तद्विषयकत्वमपि । अन्यथा प्रमेयत्वमपि स्ववृत्तिं विनैव स्वस्मिन्प्रमेयव्यवहारं कुर्यादिति केवलान्वयि न स्यात् । गतिरपि ग्राम इव स्वस्मिन्नपि स्वकार्यं कुर्यात् । अस्मन्मतेऽबाध्यत्वरूपसत्त्वस्य स्ववृत्तित्वादेव सत्ता सतीति व्यवहारः ।

एतेन चिदविषयस्वरूपत्वमेव स्वप्रकाशत्वं । चिदन्यत्सर्वमपि दृश्यत्वनिरुक्तिप्रस्तावे उक्तन्यायेन चिद्वेद्यमेव । चित्तु न स्ववेद्या, स्वात्मनि वृत्तिविरोधात् । न हि

**छिदा छेद्या भवतीति निरस्तम्, मिथ्यात्वानुमित्यादेः स्वविषयकत्ववदुपपत्तेः । अन्यथा चितिः स्वात्मनि व्यवहारमपि न जनयेत्, न हि छिदाकार्यं छिदायां दृश्यते । नापि स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वं वा स्वव्यवहारे स्वावच्छिन्न-संवि(त्सापे)दनपेक्षत्वं वा स्वप्रकाशत्वम्, अस्य स्ववेद्यत्वेऽप्युपपत्त्या संमतत्वात् । स्वविषयत्वं विना स्वव्यवहारहेतुत्वायोगादित्युक्तत्वाच्च ।**

**किं च स्वप्रकाशत्वम् आत्मस्वरूपमेव वा? तद्धर्मो वा? नाद्यः, इष्टापत्तेः । नान्त्यः, तात्त्विकस्य तस्याभावेन स्वप्रकाशत्वस्यातात्त्विकत्वापत्त्या तत्साधकानु-मानादेर्बाधात् । स्वप्रकाशत्वलक्षणभङ्गः ॥ ११ ॥**

## अद्वैतसिद्धिः

ननु– परिणममानाविद्याधिष्ठानत्वेनोपादानत्वं वाच्यम्, अधिष्ठानत्वं तु नावेद्यस्य, तद्वेदनार्थं प्रमाणापेक्षायामन्योन्याश्रयात् । न च– स्वप्रकाशतदपेक्षमेवाधिष्ठानत्वमितिवाच्यम्, स्वप्रकाशताया वक्तुमशक्यत्वात् । तथा हि– किमिदं स्वप्रकाशत्वं? वृत्त्यव्याप्यत्वं वा? फलाव्याप्यत्वं वा? अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वं वा? तद्योग्यत्वं वा? तद्योग्यत्वा-त्यन्ताभावानधिकरणत्वं वा? नाद्यः, ब्रह्मणोऽप्यावरणभङ्गाय चरमवृत्तिव्याप्यत्वात् । न द्वितीयः, अतीतादौ नित्यातीन्द्रये चातिव्याप्तेः । न तृतीयः, सुषुप्त्यादौ व्यवहाराभावेना-व्याप्तेः । न चतुर्थः, योग्यत्वरूपधर्मस्य मोक्षकालेऽभावेन तदा ब्रह्मण्यव्याप्तेः । नापि पञ्चमः, अनधिकरणत्वस्यापि धर्मत्वेन मोक्षदशायां तस्याप्यभावेनाव्याप्तेः । अत एव न तादृगनधिकरणत्वोपलक्षितमपि तत्, तस्यापि धर्मत्वे मुक्तावभावादिति चेन्न, पञ्चमपक्षस्यैव क्षोदसहत्वात् । न च मोक्षेऽव्याप्तिः, अनधिकरणत्वस्य स्वरूपतया तदापि सत्त्वात् । न च स्वरूपत्वे लक्षणत्वानुपपत्तिः, त्वन्नये ब्रह्माभिन्नानन्दादौ गुणत्वव्यवहारवत् स्वरूपभूतेऽप्य-नधिकरणत्वे लक्षणत्वव्यवहारात् । न च– त्वन्मते योग्यत्वमपि ब्रह्मणि मिथ्येति तदत्यन्ता-भावोऽपि वाच्यः, तथा च कथं तदत्यन्ताभावानधिकरणत्वमितिवाच्यम्, योग्यत्वविरोध्य-त्यन्ताभावस्य विवक्षितत्वात्, स्वाश्रयनिष्ठात्यन्ताभावस्य मिथ्यात्वप्रयोजकस्य स्वाश्रयनिष्ठत्वे-नैवाविरोधित्वात् । यद्वा– व्यावहारिकात्यन्ताभावो विवक्षितः, ब्रह्मणि च योग्यतात्यन्ता-भावस्य ब्रह्मस्वरूपत्वेन तात्त्विकत्वात् ।

(अद्वैतसिद्धिः)

नाप्यवेद्यत्वानिरुक्तिः, फलाव्याप्यत्वस्यैव तत्त्वात्, आवरणभङ्गे चित एव फलत्वात् । न च– एवं घटादेरपि वृत्तिवेद्यतया फलविषयत्वाभावाद् रूप्यसुखादेरपि अपरोक्षव्यवहार-योग्यतया विशिष्टलक्षणस्यातिव्याप्तिरिति वाच्यम्, घटादौ फलव्याप्यत्वस्य समर्थितत्वाद्रूप्य-सुखादौ साक्षिभास्यतयाऽपरोक्षव्यवहारेऽपि प्रमाणजन्यापरोक्ष वृत्तिविषयत्वाभावात् । तथा च फलाव्याप्यत्वसमानाधिकरणतद्वत्त्वस्य पर्यवसिततया सकलदोषनिरासात् । न च ब्रह्मणोऽपि वृत्तिप्रतिबिम्बितचिद्रूपफलभास्यत्वेनासंभवः, तस्य फलरूपत्वेन तद्विषयत्वाभावात् । न च चित्सुखाचार्यैः तत्स्वभावस्यापि स्फुरणस्य तद्विषयत्वमित्युक्तेरसंभवः, तस्याचार्यवचस-स्तत्प्रयुक्तव्यवहारविषयतया तद्विषयत्वोपचारनिबन्धनत्वात् । अयमत्र निष्कर्षः– वृत्तिप्रति-बिम्बितचिज्जन्यातिशययोगित्वं वृत्त्या तत्प्रतिफलितचिता वा अभिव्यक्ताधिष्ठानचिद्विषयत्वं वा फलव्याप्यत्वम् । चिज्जन्यातिशयश्च नावरणभङ्गः, नापि व्यवहारो विवक्षितः, किंतु भग्नावरणचित्संबन्धः । स च घटादावस्ति, नात्मनि, संबन्धस्य भेदगर्भत्वात् । एवमुक्त-चिद्विषयत्वमपि भेदघटितं घटादावस्ति, नात्मनीति स्थितं प्रतिकर्मव्यवस्थायाम् । नाप्यपरोक्ष व्यवहारो दुर्वचः अपरोक्ष इति शब्दप्रयोगस्यैव विवक्षितत्वात् । न चालौकिकप्रत्यक्ष-विषयधर्माधर्मादौ तादृशव्यवहारयोगितया अतिव्याप्तिः, योगजधर्मातिरिक्तालौकिक-प्रत्यासत्तेरनङ्गीकारात्, तस्यापि स्वयोग्यव्यवहित एव सामर्थ्यापादकत्वात्, न तु धर्मादौ । तदुक्तं 'यत्राप्यतिशयो दृष्ट' इत्यादि । एतेन– कश्चायमपरोक्षव्यवहारो नाम? अपरोक्ष-ज्ञानजन्यो वा? अपरोक्षवस्तुविषयो वा? अपरोक्ष इत्याकारो वा? नाद्यः, धर्मादावप्य-परोक्षयोगिज्ञानानुव्यवसायव्याप्तिज्ञानजन्यव्यवहारसत्त्वेनातिव्याप्तेः, न द्वितीयः, वस्तुन आपरोक्ष्यम् अपरोक्षज्ञानविषयत्वं चेत्, आत्मनोऽपि घटादिवद् वेद्यत्वापातात् । अपरोक्षव्यवहारविषयत्वं चेत्, वस्तुव्यवहारयोरापरोक्ष्ये अन्योन्यसापेक्षतयाऽन्योन्याश्रयात् । न तृतीयः, निराकारशुद्धब्रह्मविषयस्याखण्डार्थनिष्ठवेदान्त जन्यव्यवहारस्यापरोक्ष इत्याकारा-योगादितिनिरस्तम्, व्यवहारपदेनाभिवदनस्य विवक्षितत्वेन चरमवृत्तेस्तदनाकारत्वेऽपि क्षत्य-भावात् । न चानुपलब्धिगम्यतया अवेद्ये अपरोक्षे लोकव्यवहारसत्त्वेनाभावेऽतिव्याप्तिः, प्रामाणिकव्यवहारस्य विवक्षितत्वात् ।

ननु– अपरोक्षव्यवहारयोग्यत्वं न तावत्सर्वान् प्रति, चैत्राज्ञाने मैत्रस्य तदभावात् । नापि ज्ञानं प्रति, तस्याव्यवहर्तृत्वात् । नापि ज्ञानाश्रयं प्रति, ज्ञानस्य चितोऽनाश्रितत्वादिति– चेन्न,

(अद्वैतसिद्धिः)

प्रमातारं यं कश्चित् प्रत्येवापरोक्षव्यवहारयोग्यत्वं विवक्षितम् । प्रमाता चाहमर्थ एव सर्वसंमतः । यत्तूक्तं चैत्रस्य ज्ञाने मैत्रस्याव्यवहार इति, तस्य चैत्रज्ञाननिमित्तको मैत्रस्याव्यवहार इति वार्थः? चैत्रज्ञानविषयको मैत्रस्याव्यवहार इति वार्थः? आद्ये चैत्रज्ञानेन मैत्रस्याव्यवहारेऽपि स्वज्ञानेनैव घटे ब्रह्मणि चापरोक्षव्यवहारसंभवेन व्यर्थविशेषणत्वासंभवयोरभावात् । द्वितीये चैत्रज्ञाने तादृग्व्यवहाराभावेऽपि क्षत्यभावात् । अस्माकमपि हि चितिरेव स्वप्रकाशा, न तु चैत्र ज्ञानत्वेन व्यपदिश्यमानवृत्त्युपहितचिदपि, वृत्तेरस्वप्रकाशत्वात् । एवं च सर्वप्रमातॄन् प्रति तादृग्व्यवहारविषयतायोग्यत्वमपि सङ्गच्छत एव । ननु– अवेद्यत्वे सत्यपरोक्ष व्यवहारविषयत्वं तद्योग्यत्वं च व्याहतम्, तदपरोक्षव्यवहारे तद्विषयकस्फुरणस्य हेतुत्वादिति चेन्न, अन्यत्र तद्विषयस्य तद्व्यवहारजनकत्वेऽपि स्फुरणस्य स्वाविषयस्य स्वस्मिन् व्यवहारजनकत्वम्, स्वभावभेदात् । न च घटादावपि तथैवास्तु, तेषामस्फुरणरूपत्वेन तद्विषयत्वं विना नियामकान्तराभावात्, तार्किककल्पितस्यानुव्यवसायस्यापि घटज्ञानज्ञानत्वापेक्षया लघुना घटज्ञानत्वेनैव घटज्ञानव्यवहारहेतुत्वकल्पनाच्च ।

ननु– अनवस्थाभिया स्फुरणान्तरानङ्गीकारात् स्वस्यस्वविषयत्वमस्तु, अन्यत्र क्लृप्तस्य तद्विषयत्वस्य नियामकस्य त्यक्तुमयुक्तत्वाद्, अन्यथा प्रमेयत्वस्य स्ववृत्तित्वं विनैव स्वत एव प्रमेयमिति व्यवहारजनकत्वोपपत्त्या केवलान्वयित्वभङ्गप्रसङ्ग इति चेन्न, अनवस्थया स्फुरणान्तरत्यागवदभेदे भेदनियतस्य विषयिविषयभावस्याप्ययुक्ततया त्यागोपपत्तेः, प्रमेयत्वादौ केवलान्वयित्वभङ्गस्येष्टत्वात् । न च– एवं गतिरपि ग्राम इव स्वस्मिन्नपि स्वकार्यं करोत्विति वाच्यम्, भेदाविशेषात्तन्तुरिव मृदपि पटं करोत्वित्यस्याप्यापत्तेः । स्वभावभेदेन परिहारश्च सर्वत्र समानः ।

यद्वा– चिदविषयस्वरूपत्वमेव स्वप्रकाशत्वम्, चिदन्यस्य सर्वस्य चिद्विषयत्वात्तुच्छस्य नि. स्वरूपत्वेन नातिव्याप्तिशङ्का । नाप्यसंभवः, स्वात्मनि वृत्तिविरोधेन छिदाया अच्छेद्यत्ववत् स्वस्य स्ववेद्यत्वायोगात् । न च– एवं मिथ्यात्वानुमितेरपि अस्वविषयत्वापत्तिरिति वाच्यम्, स्वपरसाधारणस्यैकस्य विषयतानियामकस्य तत्र सत्त्वेन विशेषात् । अत एव यथा छिदादौ परशुसंयोगो न स्वपरसाधारण इति स्वस्मिन् वृत्तिविरोधः, तथा प्रकृतेऽपि । न च तर्हि छिदाकार्यस्य छिदायामिव चिज्जन्यव्यवहारस्य चित्यनापत्तिरिति वाच्यम्, फलदर्शनस्यैव छिदापेक्षया स्वभावभेदनियामकत्वात् ।

(अद्वैतसिद्धिः)

यद्वा– स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वं स्वावच्छिन्नसंविदनपेक्षत्वं वा स्वप्रकाशत्वम् । न च स्ववेद्यत्वेऽप्युपपत्त्या स्वाभिमतप्रकाशत्वानुपपत्तिः, स्ववेद्यत्वस्य बाधितत्वेन तदादायोपपत्त्यसंभवात् ।

ननु स्वप्रकाशत्वधर्मस्य तात्त्विकत्वे अद्वैतव्याघातः, अतात्त्विकत्वे अस्वप्रकाशत्वस्यैव तात्त्विकत्वापत्त्या तत्साधकानुमानादेर्बाध इति– चेन्न, स्वरूपत्वस्योक्तत्वात् । न च– परेषामिदमिष्टम्, वेद्यत्वविरोधिस्वरूपस्य परैरनङ्गीकारात् । इत्यद्वैतसिद्धौ ब्रह्मस्वप्रकाशत्वलक्षणोपपत्तिः ॥

## न्यायामृततरङ्गिणी

अत्यन्ताभावेति ॥ मोक्षे योग्यताया अभावेऽपि तदत्यन्ताभावो नास्ति । योग्यतावत्तदत्यन्ताभावस्यापि धर्मत्वात् ॥ स्वप्रकाशेति ॥ अवेद्येत्यर्थः । तथापीत्यादिनोक्तलक्षणस्य मुक्तात्मन्यव्याप्तिमाह ॥ त्वन्मत इति ॥ ननु मुक्तात्मा नोक्तात्यन्ताभावाधिकरणत्वाभाववान् उक्तात्यन्ताभावानधिकरणत्वात् । यो यदनधिकरणं न स तदनधिकरणत्वाभाववान् यथा रूपानधिकरणं वायुः रूपानधिकरणत्वाभाववान्न । तथा च कथमव्याप्तिरित्यत उक्तं सत्वादीति । तथाचात्मनि व्यभिचारान्नोक्तविधया लक्षणाभावानुमानमित्यर्थः । नचानधिकरणत्वं स्वरूपमेवातो मुक्तावपि तदस्तीति वाच्यम् । स्वरूपत्वे लक्षणत्वानुपपत्तेः । मम मते त्वानन्दादेः स्वरूपत्वेऽपि धर्मत्वाल्लक्षणत्वम् ॥ स्वेति ॥ एतेनात्यन्ताभावस्याधिकरणरूपतया तदनधिकरणत्वं नासम्भवीति निरस्तम् । योग्यतामिथ्यात्वानुपपत्तेः । स्वात्यन्ताभावसामानाधिकरण्याभावात् ॥ ब्रह्मान्यत्वेनेति ॥ ब्रह्मरूपत्वे तु योग्यता मिथ्या न स्यादिति बोध्यम् ॥ दृश्यत्वेति ॥ रूप्यादौ विशेषणवद्विशेष्यस्यापि सत्त्वाद्घटादौ विशेष्यवद्विशेषणस्यापि सत्त्वादित्युक्तत्वादित्यर्थः । नन्वपरोक्षेत्यादिना प्रमाणजन्यापरोक्षवृत्तिविषयत्वं विवक्षितम् । प्रातिभासिकादौ च न प्रमाणवृत्तिः । अतो न तत्रातिव्याप्तिः । मैवम् । प्रमाणजन्यापरोक्षवृत्तिविषयचैतन्यैक्याध्यासमात्रेण घटादावापरोक्ष्योपपत्तेस्तदर्थं घटादौ तादृशवृत्तिविषयत्वस्य स्वीकर्तुमनुचितत्वेनोक्तवृत्तिविषयत्वस्यैव लक्षणत्वसम्भवेऽवेद्यत्वे सतीत्यस्य वैयर्थ्यात् ॥ स चेति ॥ सम्बन्धस्योभयनिष्ठत्वादिति भावः ॥ नन्विति ॥ आत्मनोऽधिष्ठानाभावात् भग्नावरणचिदभेदरूपस्य सम्बन्धस्य चित्यपि सत्त्वादाद्यपक्षमुपेक्ष्य

(तरङ्गिणी)

द्वितीययोर्दोषमाह ।। घटादाविति ।। एतेनेति ।। घटादौ वृत्त्यतिरिक्तचिद्रूपज्ञानं प्रत्यविषयत्वेन ।। स्वाकारेति ।। तथाचासम्भवः । ननु चरमवृत्तिर्न ब्रह्माकारा । तस्य निराकारत्वात् । अत उक्तं रूपादेरिवेति । रूपाकारत्ववद् ब्रह्माकारत्वमपि वृत्तेर्युक्तम् ।। उक्तेति ।। चरमवृत्तिप्रतिफलितचित्फलभूतस्य ।। तदन्यस्य चेति ।। तादृशचिद्विषयत्वादेः ।। शुद्धेति ।। शुद्धचित्तः परसमवेतत्वे क्रियात्वे च तत्फलभूतया वृत्तिप्रतिफलितचिता भासमानघटादेः कर्मत्वं स्यात् । नचैवम् । शुद्धचितः समवेतत्वाद्यभावात् ।। जन्यसाक्षात्कारेति ।। तादृशेश्वरज्ञानजन्यव्यवहारविषये धर्मादावनतिव्याप्तये जन्येति ।। साक्षीति ।। विषयगतापरोक्ष-व्यवहारहेतुसाक्षात्कारत्वात्साक्षिणो परोक्षज्ञानशब्देन वृत्तिप्रतिफलितचैतन्यादिकं वाऽपरोक्ष-वृत्तिमात्रं वा । आद्य आह ।। आत्मापीति ।। द्वितीय आह ।। तस्यैवेति ।। अवेद्यत्वे सत्यपरो-क्षज्ञानविषयत्वस्यैव ।। कुसृष्टीति ।। ज्ञानापरोक्ष्येण विषयापरोक्ष्यं सम्पाद्य लक्षणाकरणं कुसृष्टिः । साक्षिवेद्यरूप्यादौ अतिव्याप्तिस्तु उभयथापि समैवेत्यर्थः ।। वस्त्विति ।। वस्त्वापरो-क्ष्याधीनं व्यवहारापरोक्ष्यं तदधीनं च वस्त्वापरोक्ष्यम् । अभावे लक्षणगतविशेष्यांशमुपपादयति ।। अस्ति हीति ।। विशेषणांशमुपपादयति ।। सचेति ।। नन्वनुपलब्धिगम्येऽभावेऽपरोक्षज्ञान-विषयत्वरूपोऽपरोक्षव्यवहारो नास्तीति न तत्रातिव्याप्तिरत आह ।। यदि चेति ।। उक्तरूपा-परोक्षज्ञानाविषयत्वरूपमवेद्यत्वमङ्गीकृत्य पुनरपरोक्षज्ञानविषयत्वाङ्गीकारे व्याहतिः ।। चैत्रेति ।। घटाद्यधिष्ठानचैतन्यं स्वयं प्रकाशं घटप्रकाशकमित्युच्यते तत्र घटविषयचैत्रस्थवृत्त्यादिना घटादिष्ठानचितश्चैत्रं प्रत्यपरोक्षव्यवहारेऽपि मैत्रं प्रति तदभावाद्धटाधिष्ठानचित्स्वप्रकाशो न स्यात् ।। ज्ञानं प्रतीति ।। घटाधिष्ठानचितं प्रतीत्यर्थः । ननु प्रमातारं यं कञ्चित्प्रत्यपरोक्ष-व्यवहारविषयत्वं विवक्षितम् । न प्रमातुः । चित्त्वे विरोधाभावात् । जडत्वे त्वसम्भवात् । अन्यस्याहमर्थस्याभावात् । स्वभावभेदात् । स्वभावविशेषात् ।। नापेक्षितमिति ।। अनवस्थाभयात् । ननु भेदाभावात्तद्विषयत्वमपि त्यज्यते । मैवम् । कल्पितभेदस्य संभवाद्वृत्तिप्रतिबिम्बितस्य विषयित्वम् । घटाधिष्ठानस्य विषयत्वमित्युपपत्तेः ।। अन्यथेति ।। क्लृप्तस्यापि त्यागे ।। चिदविषयेति ।। तुच्छवारणाय स्वरूपत्वमिति ।। मिथ्यात्वेति ।। नच मिथ्यात्वानुमितौ स्वपरसाधारणमेकविषयत्वनियामकमस्तीति सा स्वविषयेति वाच्यम् । तद्व्यवहारजनकत्वप्रयोजकस्य चित्यपि संभवात् । अत एवाह ।। अन्यथेति ।। ननु बाधात्स्ववेद्यत्वेन नोपपत्तिरत आह ।। स्वविषयत्वमिति ।। तथाचावेद्यत्वमेव बाधितमिति भावः ।। इष्टापत्तेरिति ।। नच वेद्यत्वविरोधिस्वरूपं नेष्टमिति वाच्यम् । अचिन्त्यशक्त्या-वेद्यस्यापि तथात्वात् । जानन्तोऽपि न जानन्तीति श्रुतेः ।। स्वप्रकाशत्वलक्षणभङ्गः ।।

## न्यायामृतकण्टकोद्धारः

ननु जगत्कर्तृत्वादिना ब्रह्म वेद्यमित्युक्तं तदयुक्तम् । ब्रह्मणोऽवेद्यत्वात् । अवेद्यत्वं च स्वप्रकाशत्वादित्याक्षिपति ॥ यच्चेदमिति ॥ ननु स्वप्रकाशत्वं लक्षणाभावात् प्रमाणाभावादयुक्तमित्यतो लक्षणं प्रतिपादयितुमनभिप्रेतानि लक्षणानि निराकरोति ॥ तच्च यद्यपीति ॥ उक्तन्यायेनेति ॥ वेदान्तवैयर्थ्यप्रसङ्गादिनेत्यर्थः । व्यवहारविषयत्वं फलोपधानरूपं वा? योग्यत्वरूपं वा? आद्य आह सुषुप्तीति ॥ व्यवहाराभावेनेति ॥ सर्वेन्द्रियाणामुपरतत्वादिति भावः । न द्वितीय इत्याह ॥ नापीति । अभावादिति ॥ तथा च मोक्षदशायामव्याप्तिरिति भावः । एवं लक्षणासम्भवं परिहृत्य प्रमाणासंभवं परिहरति ॥ प्रमाणंत्विति ॥ त्वन्मत इति ॥ तथाच मोक्षेऽव्याप्तिरिति भावः । नचाभावरूपो धर्मः स्वीक्रियते इति वाच्यम् । अखण्डत्वविरोधित्वेन भावरूपतुल्ययोगक्षेमत्वेन तस्याङ्गीकर्तुमनुचितत्वात् । नचाधिकरणत्वं स्वरूपमेवेति वाच्यम् । सोपाधिकनिरुपाधिकयोरैक्यायोगात् । अभेदलक्षणत्वानुपपत्तेश्च । न च ब्राह्मानन्दज्ञानादेर्भवन्मते ब्रह्मलक्षणत्वादिवदुपपत्तिरिति वाच्यम् । मन्मते लक्ष्यलक्षणभावसम्पादकविशेषवत् त्वन्मते तदभावात् तदङ्गीकारे चाखण्डत्वविरोधेनापसिद्धान्तात् । अव्याप्तिमुक्त्वाऽसंभवमाह ॥ किञ्चेति ॥ न च योग्यत्वविरोध्यत्यन्ताभावानधिकरणत्वं विवक्षितम् । मिथ्यात्वप्रयोजकश्चाभावः स्वसमानाधिकरण एवेति न स्वविरोधीति वाच्यम् । स्वाविरोधिनः स्वात्यन्ताभावस्य पारिभाषिकत्वात् । अत्यन्ताभावोहि तत्प्रतिषेधविशेषः । न हि तत्स्वरूपसहिष्णुः तत्प्रतिषेधः संभवति इति भावः ॥ न चेति ॥ तथाच नासंभवः । मिथ्यात्वप्रयोजकस्त्वत्यन्ताभावस्तात्विकः । स च ब्रह्मस्वरूप एवेति भावः ॥ अत्यन्ताभावस्येति ॥ मिथ्यात्वप्रयोजकोऽत्यन्ताभावो न ब्रह्मस्वरूपः । सोपाधिकत्वेन निरूपाधिक-ब्रह्मस्वरूपत्वायेगात् । तथा च तस्यापि ब्रह्मान्यत्वेन व्यावहारिकत्वात् तदधिकरणत्वं न संभवतीति भावः । एवं विशिष्टं लक्षणम् अव्याप्त्यसंभवाभ्यां दूषयित्वा लक्षणांशावेद्यत्वमनिरुक्त्या दूषयति ॥ किञ्चेदमिति ॥ असंभवादिति ॥ अन्यथा वेदान्तानां वैयर्थ्यप्रसङ्गादिति भावः ॥ उक्तरीत्येति ॥ शुक्तिरूप्यादेः प्रातिभासिकत्वेन संनिकर्षजन्यवृत्तेरसंभवेन तद्घटितफलासंभवः । घटादौ च वृत्तेः संभवेपि तद्विशिष्टचैतन्यसद्भावे प्रमाणाभावात् फलासंभवेनातिव्याप्तिरित्यर्थः । तवोक्तरीत्यैवेति ॥ न च तस्य फलरूपत्वेन तद्विषयत्वरूप तद्व्याप्यत्वाभावविषयत्वस्य भेदनियतत्वादिति वाच्यम् । वृत्तिघटितस्यैव फलत्वेन केवलस्य फलत्वाभावेन विशिष्टाविशिष्टभेदसंभवात् केवलस्यैव फलत्वे च सर्वदा तस्य सत्त्वेन घटादिकं सर्वदा प्रकाशेत । न च धर्मिसमानसत्ताको भेदस्तत्र, नचासौ प्रकृतेऽस्तीति वाच्यम् । तथात्वे चैतन्यस्य वृत्तिविषयतानापत्तेः । नहि वृत्तेश्चैतन्यस्य चैतन्यसमानसत्ताको भेदोऽस्ति । विषयिसमानसत्ताकश्च भेदः प्रकृतेऽप्यस्तीति भावः । वृत्तिविषयत्वं च दृश्यत्वभङ्ग एवोपपादितम् । एतेन चैतन्यस्य फलसम्बन्धप्रतिपादनेनेत्यर्थः ॥ उक्तत्वादिति ॥ दृश्यत्वभङ्गे इति शेषः । एतेनैव ॥ घटादौ चैतन्यरूपज्ञानाभावप्रतिपादनेनैवेत्यर्थः ॥ चित्सुखेनेति ॥ न च तज्जन्यव्यवहारविषयत्वात् तद्विषयत्वोपचार

(कण्टकोद्धारः)

इति वाच्यम् । मुख्यासम्भव उपचारस्वीकरणात् प्रकृते च मुख्यविषयत्वस्योक्तत्वात् । अत्र किं चैतन्यमनवच्छिन्नं विवक्षितम्? विशिष्टं वा? आद्य आह ॥ अनवच्छिन्नमिति ॥ तथाच घटादावतिव्याप्तिरित्यर्थः । द्वितीय आह ॥ स्वाकारेति ॥ न च ब्रह्मण उदासीनत्वेन कारकत्वं नेति वाच्यम्। उदासीनत्वेनैव जगज्जन्मादिकारणत्वस्याप्यभावापातात् । उपाधिसंबन्धादिना कथञ्चित् समाधाने च प्रकृतेऽपि तुल्यमिति ॥ तदन्यस्य चेति ॥ नच चित्सम्बन्ध एवातिशयः स च प्रकृते न सम्भवति अभेदादिति वाच्यम् । अभेदेऽपि सम्बन्धस्योपपादितत्वात् ॥ तदिति ॥ तथाच जडेऽव्याप्तिरिति भावः । ब्रह्मणोपीति ॥ तथा चासम्भव सति भावः ॥ एतेनेति ॥ परामृष्टं हेतुमाह ॥ घटादाविति ॥ अवेद्यत्वानिर्वचनमुपसंहरति ॥ तस्मादिति ॥ ननु चैतन्यविषयत्वमेव स्वप्रकाशत्वं नचासत्यतिव्याप्तिः । नचासन्नाम किञ्चिदस्ति । येन तत्रातिव्याप्तिः शङ्कास्पदा । नच ब्रह्मण्यसंभवस्तस्य तद्विषयत्वाभावे तद्व्यवहारासंभवादिति वाच्यम् । व्यवहारमात्रे तद्विषयज्ञानत्वेनाकारणत्वात् । न च पटप्रकाशेन घटव्यवहारापत्तिः । सामान्यसामग्र्या विशेषस्यापादयितुमशक्यत्वात् । अनात्मव्यवहारे तद्विषयज्ञानत्वेनैव कारणत्वात् । न चात्मव्यावहारेऽपि विशेषसामग्री वाच्येति वाच्यम् । सामान्यसामग्र्यैव तदुपपत्तेः । न च सामान्यसामग्र्या विशेषप्रयोजकत्वमदृष्टचरमिति वाच्यम् । भट्टमते सामान्यसामग्र्यैव प्रमारूप-विशेषकार्यदर्शनात् । यद्वा आत्मव्यवहारे आत्माभिन्न प्रकाशत्वेन हेतुतास्तु । तथा च नात्मनो विषयत्वमावश्यकम् । किञ्च विषयत्वं नाम सम्बन्धः । स च भेदनियतः । कथमभिन्न चैतन्यस्य स्यात् । न च प्रमेयत्वादावभेदेऽपि सम्बन्धो दृष्ट इति वाच्यम् । प्रमेयत्वादेः केवलान्वयित्वखण्डनेन तदसम्मतेः । तस्मान्नात्मन्यसम्भवः । न च घटादिषु वृत्तिरेव घटादिव्यवहारहेतुः न चैतन्यमिति वाच्यम् । इच्छादिषु वृत्तिं विनापि व्यवहारदर्शनेन चैतन्यस्य तत्र हेतुत्वात् । घटादिषु विनिगमनाविरहादुभयोरपि हेतुत्वम् । तथा च न घटादिष्विति व्याप्तिः ॥ एवं चैतन्यविषयत्वमेव स्वप्रकाशत्वमिति ॥ अत्रोच्यते । अत्र चैतन्यं शुद्धं वा विवक्षितम्? उत घटितम्? उत सामान्यम्? नाद्यः । केवलचैतन्यविषयत्वस्य घटादावभावेन तत्रातिव्याप्तेः । धर्मादौ सुतरामतिव्याप्तेश्च । घटादेः केवलचैतन्यवेद्यत्वे सर्वदा प्रकाशापत्तेश्च । न द्वितीयः ब्रह्मणोपि विशिष्ट चैतन्यविषयत्वस्य संभवेनासम्भवापत्तेः । न च विषयत्वप्रयोजकसम्बन्धाभावात् कथं विषयत्वं तदभावश्च तन्नियत भेदाभावादिति वाच्यम् । विशिष्टाविशिष्टभेदस्य समर्थितत्वात् पारमार्थिक भेदस्य च घटादावप्यभावात् धर्मिसमसत्ताकभेदस्य वृत्तावप्यभावात् । किञ्च धर्मादौ येन रूपेण चैतन्यविषयत्वं तेनैव रूपेण चितोऽप्यस्तु । न च प्रकाशत्वेन सामान्यकारणत्वात् तेनैव व्यवहारनिर्वाह इति वाच्यम् । सामान्यविशेषकारणपरापेक्षया तद्व्यवहारे तद्विषयप्रकाशेनैकेनैवरूपेण कारणत्वकल्पने लाघवात् । विषयत्वस्य चोपपादितत्वात् । न तृतीयः । सामान्यस्य ब्रह्मणि भावेन तदभावस्या-सम्भवित्वात्। न च ब्रह्मणो निर्धर्मकत्वात् विषयत्वरूपधर्मानधिकरणत्वमिति वाच्यम् । तत एवानधिकरणत्वस्याप्यभावापत्तेः । अभावरूपधर्मानधिकरणत्वञ्चाखण्डत्वविरोधादयुक्तम् । असत्यति व्याप्तेश्च । न चासन्नास्त्येवेति वाच्यम् । असत्त्वादेव विषयत्वाभावसम्भवात् । नचासतो निर्धर्मकत्वात्

(कण्टकोद्धारः)

विषयत्वाभावोऽपि नेति वाच्यम् । असत्त्वादिवत्तदुपपत्तेः । अन्यथा व्याघातादिति । एवं स्वप्रकाशत्वलक्षणावेद्यत्वनिर्वचनं निराकृत्य विशेष्यनिर्वचनमपि निराकरोति ॥ कश्चायमिति ॥ कीदृग्लक्षण इत्यर्थः ॥ धर्माधर्मादिवपीति ॥ नचालौकिकप्रत्यासत्तेरनङ्गीकारात् इदमयुक्तमिति वाच्यम् । नैयायिकमतावलम्बनेनोक्तत्वात् । ज्ञानादेः प्रत्यासत्तित्वानङ्गीकारेऽपि नियामकत्वाभ्युपगमाच्च ॥ अपरोक्षेति ॥ नचानागतगोचरप्रत्यासत्तेरप्रामाणिकत्वात् तदजन्यत्वमप्रसिद्धमिति वाच्यम् । उभयोरपि मते अप्रामाणिकस्य प्रतियोगित्वात् । न च पदत्यागान्नासम्भव इति वाच्यम् । व्यवहारस्य तादृशेश्वर-साक्षात्कारजन्यत्वेनासम्भवापरिहारात् ॥ साक्षिवेद्य इति ॥ साक्षिणोऽपि सुखादिगतापरोक्ष व्यवहारहेतुत्वात् साक्षात्कारत्वाच्चेति भावः ॥ आत्मापीति ॥ अपरोक्षत्वेन अपरोक्षज्ञानविषयत्वादित्यर्थः । नचात्मनः स्फुरणरूपत्वेनापरोक्षत्वमिति वाच्यम् । अपरोक्षद्वैविध्यकल्पने मानाभावात् । आत्मनो भेदेऽपि विषयत्वस्योपपादितत्वाच्च ॥ तस्यैवेति ॥ स्वप्रकाशत्वलक्षणे अपरोक्षज्ञानविषयत्वस्यैव विशेष्यत्वसम्भवे व्यवहारविषयपर्यन्तधावनं कुसृष्टिरित्यर्थः । निराकरोति । व्यवहारस्य ज्ञानस्येत्यर्थः । नचापरोक्षव्यवहारशब्देनापरोक्षशब्दप्रयोगस्य विवक्षितत्वात् नोक्त दोष इति वाच्यम् । तादृशाविद्यासुखादौ धर्मे चातिव्याप्तेः । न च योगजधर्मस्य व्यवहित एव सामर्थ्यापादकत्वं न सन्निहित इति वाच्यम् । योगजधर्मेण व्यवहितं साक्षात्करोमि न सन्निहितमित्यनुभवाभावेन तयोः सामर्थ्यकल्पने मानाभावात् ॥ अभाव इति ॥ न च प्रामाणिकप्रयोगस्य विवक्षितत्वात् नाभावे अतिव्याप्तिरिति वाच्यम् । बाधकाभावेन तस्यापि प्रामाणिकत्वात् । अन्यथा कुत्रापि तस्य तत्त्वं न स्यात् । न चानुपलब्धिगम्यत्वात् कथं तस्याप्रामाणिकत्वमिति वाच्यम् । अनुपलब्धिगम्यत्वस्याप्रामाणिकत्वात् । न ह्यनुपलब्ध्याऽभावं जानामीत्यनुभवः । किन्तु चक्षुषा घटाभावं पश्यामीति । ननु अभावस्य फलव्याप्यत्वात् विशेषणाभावान्न तत्रातिव्याप्तिरित्यत आह ॥ स चेति ॥ ननु नास्माकं कुसृष्टिः । अपरोक्षव्यवहारशब्देनापरोक्षव्यवहारस्यैव विवक्षितत्वादित्यत आह ॥ यदि चेति ॥ अपरोक्षज्ञानस्यैव फलत्वेन तद्विषयत्वं चेति कथं न व्याहतिरितिभावः ॥ तदभावादिति ॥ अपरोक्षव्यवहाराभावादित्यर्थः । ननु चितिः स्वप्रकाशा तस्याश्च मैत्रीयव्यवहार योग्यत्वमस्ति । चैत्रस्थज्ञानत्वेन तु न स्वप्रकाशा । तस्यास्वप्रकाशवृत्त्युपहतत्वेनास्व-प्रकाशत्वादिति चेन्न । चैत्रज्ञानस्याप्रकाशत्वे तस्य तं प्रत्यपरोक्षव्यवहारयोग्यत्वं न स्यात् । तथा च स्वस्वचितिः स्वस्वापरोक्षव्यवहारयोग्येति कथं सर्वान् प्रति चिन्मात्रस्यापरोक्षव्यवहारयोग्यत्वम् । तथाच परस्यापरोक्षयोग्यत्वं तस्यैव स्वप्रकाशत्वं मन्तव्यमिति भावः । यत्तु प्रमातारं प्रति व्यवहारयोग्यत्वं प्रमाता चाहमर्थः सर्वसम्मत इति तन्न । अहमर्थस्य जडत्वेन व्यवहारत्वानुपपत्तेः मुक्तावहमर्थाभावेन व्यवहारायोग्यत्वाभावप्रसङ्गाच्च । व्यवहर्तु-र्मिथ्यात्वेन तदुपाधिव्यवहारायोग्यत्वस्यापि मिथ्यात्वनियतत्वेन वस्तुतः स्वप्रकाशत्वाभावप्रसङ्गाच्च । तथाच मिथ्याभूतव्यवहर्तारमादाय तस्य न स्वप्रकाशत्वोपपत्तिः । ननु क्लृप्तत्वेऽप्यभेदेन भेदनियतस्य विषयविषयिभावस्यायोगात् क्लृप्तत्याग इति वाच्यम् । अभेदेऽपि विषयविषयि-भावस्योपपादितत्वात् ॥ अन्यथेति ॥ न च प्रमेयत्वे प्रमेयत्वं नेति केवलान्वयित्वभङ्ग इष्ट एवेति वाच्यम् ।

(कण्टकोद्धारः)

**प्रमेयत्वं प्रमेयमित्यबाधिताभेदव्यवहारात् । न च प्रमेयान्तरमेव तत्र विषय इति वाच्यम् । अभिन्नमैक्यमज्ञानमज्ञातमित्यादिवत् अभेदेनैव सम्बन्धेन व्यवहारोपपत्तौ अनेकप्रमेयत्वकल्पने गौरवात् । स्ववृत्तित्वाभावेऽपि स्वस्मिन् व्यवहारे अतिप्रसङ्गाच्च । यदि च गत्यादौ स्वविषयत्वं न दृष्टमिति चितो न चिद्विषयत्वं तर्हि गत्यादौ स्वस्मिन् स्वकार्यमपि न दृष्टमिति चितः स्वस्मिन् स्वकार्यमपि न स्यात् । यदि च भावानां विलक्षणत्वादेवमङ्गीक्रियते तर्हि स्वविषयत्वमपि स्वीकर्तव्यमित्याह ॥ गतिरपीति ॥ मिथ्यात्वानुमित्यादेरिति ॥ न च स्वपरसाधारणविषयतानियामकसद्भावे स्वविषयत्वमविरुद्धम् । अस्ति च मिथ्यात्वानुमिते स्वपरसाधारणविषयतानियमकं दृश्यत्वम् । प्रकृते च तत्किमपि नेति कथं स्वविषयत्वमिति वाच्यम् । प्रकृतेऽपि तज्जन्यव्यवहारविषयत्वस्य नियामकस्य सम्भवात् ॥ अन्यथेति ॥ यदि गत्यादौ स्वविषयत्वं न दृष्टमित्यर्थः । चित् स्वस्मिन् स्वकार्यमपि न कुर्याददृष्टत्वादित्यर्थः । स्वभावभेदादन्यत्रादृष्टमपि स्वस्मिन् स्वकार्यं चेत्तस्मादेव स्वविषयत्वमपि स्वीकर्तव्यमिति भावः ॥ अस्य स्ववेद्यत्वेपीति ॥ यथा च स्ववेद्यत्वं न बाधितं तथोक्तं पुरस्तात् ॥ इष्टापत्तेरिति ॥ न च स्वरूपं वेद्यत्वविरोधि भवतां मतेनेति कथमिष्टापत्तिरिति वाच्यम् । त्वया निर्विशेषस्वरूपाङ्गीकारेण वेद्यत्वविरोधित्वविशेषस्य अङ्गीकर्तुमुचितत्वेन स्वरूपमात्रे स्वीकर्तव्ये तस्य मयाप्यङ्गीकृतत्वेनेष्टापत्तिरित्यर्थः । इति स्वप्रकाशत्वलक्षणभङ्गः ।**

## न्यायामृतप्रकाशः

॥ तच्चेति ॥ स्वप्रकाशत्वमित्यर्थः ॥ वृत्त्यव्याप्यत्वमिति ॥ वृत्त्यविषयत्वमित्यर्थः ॥ उक्तरीत्येति ॥ ब्रह्मणो वृत्तिविषयत्वाभावे ब्रह्मविचारयतोर्गुरुशिष्ययोर्मौनं मौढ्यं च स्यादित्युक्तरीत्येत्यर्थः । तथाच लक्षणस्य ब्रह्मण्यसम्भव इत्यर्थः ॥ फलेति ॥ ब्रह्मचैतन्यस्य प्रकाशरूपत्वेन प्रकाशरूपे प्रकाशान्तरानुदयेन ज्ञाततारूपफलाव्याप्यत्वसद्भावादित्यर्थः ॥ नापीति ॥ अतीतादौ विशेष्याभावान्नातिव्याप्तिरिति भावः । घटादिप्रपञ्चे तु विशेषणाभावप्रयुक्तविशिष्टाभावेन स्वप्रकाशत्वाभावो द्रष्टव्यः ॥ व्यवहारेति ॥ यथाच सुषुप्त्यादौ विद्यमाने ब्रह्मचैतन्ये व्यवहारस्यैवाऽभावेनापरोक्षव्यवहारविषयत्वाभावादव्याप्तिरित्यर्थः ॥ योग्यत्वमिति ॥ सुप्त्यादौ विद्यमाने ब्रह्मचैतन्येऽपरोक्षव्यवहारविषयत्वयोग्यतायाः सत्वान्नाव्याप्तिरित्यर्थः । तथापि मुक्तिकालीने ब्रह्म चैतन्ये शक्त्यादिरूपयोग्यताख्यधर्माभावेनाव्याप्तिरित्याह ॥ मोक्ष इति ॥ अत्यन्ताभावेति ॥ मोक्षे योग्यताया अभावेपि तदत्यन्ताभावोपि नास्ति योग्यतावत्तदत्यन्ताभावस्यापि धर्मत्वात् । एवं च योग्यतात्यन्ताभावानधिकरणत्वस्य सत्वान्न मोक्षकालीनात्मन्य व्याप्तिरिति भावः । वस्तुसिद्धेर्लक्षणप्रमाणाधीनत्वात्स्वप्रकाशत्वस्य लक्षणमुक्त्वा तत्र प्रमाणं चाह ॥ प्रमाणं चात्रेति ॥ स्वप्रकाशेति ॥ अवेद्येत्यर्थः ॥ व्यतिरेकीति ॥ व्यतिरेकव्याप्तौ च घटादिर्दृष्टान्त इति भावः ॥ किञ्चिन्निष्ठेति ॥ यन्निष्ठात्यन्ता भावप्रतियोगि तदेवावेद्यरूपं स्वप्रकाशमेवाऽऽयास्यतीति भावः । नन्वनेनानुमानेनानुभूतेः स्वप्रकाशत्वसिद्धावप्यात्मनः स्वप्रकाशत्वमसिद्धमित्यत आह ॥ आत्मा चेति ॥ योग्यतात्यन्ताभावानधिकरणत्वस्यापि मुक्तात्मन्यभावादव्याप्तिरित्याह ॥ त्वन्मत इति ॥ अनधिकरणत्वरूपस्य तद्वैशिष्टयरूपस्य । नन्वात्मनि योग्यतात्यन्ताभावानधिकरणत्वस्यैव सत्वेन तदभावः कथं

(प्रकाशः)

वक्तुं शक्यते येनासम्भवः स्यात् । तथाच मुक्तात्मा योग्यतात्यन्ताभावानधिकरणत्वाभाववान्न भवति योग्यतात्यन्ताभावानधिकरणत्वात् यो यदनधिकरणं स तदनधिकरणत्वाभाववान्न भवति यथा रूपानधिकरणं वायू रूपानधिकरणत्वाभाववान्नेति सामान्यव्याप्तिमूलकानुमानेन योग्यताभावानधिकरणत्वाभावस्याऽभावसिद्धेः कथमव्याप्तिरित्यत उक्तम् ।। सत्वादीति ।। यथा त्वन्मते आत्मनो निर्धर्मकत्वात्तत्र सत्वं नास्ति असत्वं च नास्ति तावता सत्वानधिकरणत्वमसत्वानधिकरणत्वं च तत्र वक्तुं न शक्यते तथात्वेऽनिर्वाच्यलक्षणस्य ब्रह्मण्यतिव्याप्तिप्रसङ्गात् एवं ब्रह्मणि योग्यतात्यन्ताभावाधिकरणत्वं योग्यतात्यन्ताभावानधिकरणत्वं च नास्त्येवेत्यव्याप्तिरेव तथाचोक्तानुमाने सामान्यव्याप्तौ सत्वाद्यनधिकरणत्ववत्यात्मनि व्यभिचारान्नाव्याप्तिपरिहारायोक्तलक्षणाभावस्यानुमानतो व्याप्तिर्दृढेति भावः । उक्तलक्षणस्यासम्भवं चाह ।। किं चेति ।। स्वेति ।। तथाचात्मनि योग्यता तदत्यन्ताभावश्चास्तीति वक्तव्यं तथाचात्मनि योग्यतात्यन्ताभावानधिकरणत्वमसम्भवीत्यर्थः । ननु नासम्भवः योग्यताया मिथ्यात्वेन तदत्यन्ताभावो यो ब्रह्मण्यस्ति स पारमार्थिक एव योग्यतात्यन्ताभावानधिकरणत्वमित्यत्र व्यावहारिको यो योग्यतात्यन्ताभावस्तदनधिकरणत्वं विवक्षितं तस्य चात्मनि सत्वान्नासम्भव इत्याशङ्क्य निषेधति ।। न चेति ।। अत्यन्ताभावस्येति ।। योग्यताया मिथ्यात्वेन यस्तदत्यन्ताभावोऽस्ति स पारमार्थिक इति वक्तुं न शक्यते कुतः तस्य ब्रह्मभिन्नत्वेन व्यावहारिकत्वावश्यंभावात् । योग्यतायन्ताभावस्य विशिष्टस्य ब्रह्मात्मकत्वे योग्यताया अपि ब्रह्मात्मकत्वापत्त्या मिथ्यात्वोक्त्ययोगात् । तथा च ब्रह्मणि योग्यतात्यन्ताभावस्य व्यावहारिकत्वेऽवश्यंवाच्ये व्यावहारिकयोग्यताभावाधिकरणत्वस्यैव प्राप्त्या तदनधिकरणत्वस्यासम्भव एवेत्यर्थः । अवेद्यत्वे सत्यऽपरोक्षव्यवहारविषयत्वमित्यत्रोभयमपि दुर्वचमित्याशयेन तावदवेद्यत्वं न निर्वक्तुं शक्यमित्याह ।। किं चेत्यादिना ।। असम्भवादिति ।। ब्रह्मणो वृत्त्यव्याप्यत्वे ब्रह्मविचारयतोर्गुरुशिष्ययोर्मौनं मौढ्यं च स्यादिति भावः ।। दृश्यत्वभङ्ग इति ।। वृत्तिप्रतिबिम्बितचैतन्ये तदभिव्यक्ताधिष्ठानचैतन्ये ज्ञाततारूपफलस्य विकल्प्य तत्र खण्डितत्वेन प्रातिभासिके रूप्यादौ सर्वत्रापि व्यावहारिके घटादिप्रपञ्चे फलाव्याप्यत्वसद्भावेनाति व्याप्तेरित्यर्थः ।। तत्रेति ।। कल्पितभेदेन जीवब्रह्मणोर्ज्ञातृज्ञेयभाववत् ब्रह्मणोपि स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वाच्च अन्यथा तया तदज्ञाननिवृत्त्ययोगादिति दृश्यत्वभङ्गे उक्तरीत्या अधिकारिणो जायमाना या ब्रह्माकारवेदान्तजन्या चरमवृत्तिस्तत्प्रतिबिम्बिता या चित् तद्रूपं यत्फलं तत्सम्बन्धसद्भावेन फलाव्याप्यत्वाभावादसम्भव इत्यर्थः । फलाव्याप्यत्वरूपावेद्यत्वस्य ब्रह्मण्यसम्भवपरिहारप्रकारमनूद्य दूषयति ।। एतेनेति ।। ननु तथापि ब्रह्मणि स्वाकारवेदान्तजन्यवृत्तिप्रतिबिम्बितचिज्जन्यो योऽतिशयोऽविद्यारूपावरणं भङ्गो व्यवहारो वा तद्योगित्वमेवाऽस्तीति पुनरसम्भव एव स्यादत आह ।। अतिशयश्चेति ।। भग्नेति ।। भग्नावरणा या चित् अधिष्ठानचैतन्यं तत्सम्बन्ध इत्यर्थः ।। घटादाविति ।। तथाच फलाव्याप्यत्वरूपावेद्यत्वलक्षणस्य नातिव्याप्तिरिति भावः ।। नन्विति ।। ब्रह्मणः चैतन्यरूपत्वेन तत्र पुनरधिष्ठानचित्सम्बन्धाभावेन स्वाकारवृत्तिप्रतिबिम्बितचिज्जन्यभग्नावरणचित्सम्बन्धरूपातिशययोगित्वरूपफलव्याप्यत्वाभावेन फलाव्याप्यत्वरूपावेद्यत्वसद्भावान्नाव्याप्तिरिति भावः । वृत्त्याऽभिव्यक्तेति सम्बन्धः ।। नन्विति ।। स्वाकारवृत्त्याप्यभिव्यक्ताधिष्ठानचिद्विषयत्वाभावान्नासम्भव इत्यर्थः । एतेनेत्युक्तमेव विशदयति ।। घटादाविति ।। तथाच घटादावपि फलाव्याप्यत्वसद्भावादतिव्याप्तिरिति भावः ।।

(प्रकाशः)

चिद्रूपेति ।। घटादौ तु चैतन्यरूपज्ञानविषयत्वस्यैव सत्वान्नाऽवेद्यत्वलक्षणस्यातिव्याप्तिरिति भावः । ननु रूप्यादावतिव्याप्तिरिति तत्राह ।। रूप्यादिरपीति ।। तथाचात्रापि साक्षिविषयत्वसद्भावान्नातिव्याप्तिरित्यर्थः । नन्वेवं चिद्रूपज्ञानाविषयत्वमेवा-वेद्यत्वमस्तु चैतन्याख्यज्ञानाविषयत्वरूपावेद्यत्वस्य घटादौ रूप्यादौ च कुत्राप्यतिव्याप्त्यभावात्स्वप्रकाशत्वलक्षणेऽपरोक्षव्यवहारविषयत्वरूपविशेष्यांशो व्यर्थः व्यावर्त्याभावादित्यत आह ।। लक्षण इति ।। नित्यातीन्द्रिये चिद्रूपज्ञानाविषयत्वमस्ति अन्यथाऽपरोक्षचित्सम्बन्धाद्विषयस्याऽप्यपरोक्षापत्तेः । अतस्तत्रातिवाप्तिवारणाय विशेष्यभाग इत्यर्थः ।। घटादाविति ।। दृश्यत्वभङ्गे चैतन्यरूपज्ञानस्य खण्डितत्वेन चिद्रूपज्ञानाविषयत्वरूपावेद्यत्वस्य घटादावपि सत्वेनातिव्याप्तिरित्यर्थः ।। तत्स्वभावस्यापीति ।। चैतन्यरूप-ज्ञानस्वभावस्यापि स्फुरणस्य ब्रह्मरूपज्ञानस्य । तद्विषयत्वं चिद्रूपज्ञानविषयत्वम् । तथाच चिद्रूपज्ञानाविषयत्वस्य ब्रह्मण्यभावादसम्भव इत्यर्थः ।। उपेत्येति ।। कर्मत्वातिरिक्तं विषयत्वमङ्गीकृत्येत्यर्थः ।। अकर्मत्वेति ।। कर्मत्वं कारकविशेषः । क्रियाजनकं कारकं ब्रह्मरूपज्ञानस्य नित्यत्वेन ब्रह्मरूपविषयस्य न तत्कर्मत्वमिति युक्तं ब्रह्मणश्चिदकर्मत्वरूपमवेद्यत्वमित्यर्थः । परसमवेतत्वं क्रियाविशेषणम् । परः कर्ता तत्समवेता या क्रिया तज्जन्यं यत्फलं तच्छालित्वमित्यर्थः । वृत्तिप्रतिबिम्बितचैतन्यस्य वा तदभिव्यक्ताधिष्ठानचैतन्यस्य वाऽवच्छिन्नस्य ज्ञानत्वेन पराभिमतस्य जन्यत्वेन तत्प्रति घटादेः कारकत्वेन कर्मत्वं सम्भवत्येवेति न चिदकर्मत्वस्य घटादावतिव्याप्तिरत उक्तम् ।। अनवच्छिन्नमिति ।। अविद्ययानावृतं सर्वगतमनवच्छिन्नं चैतन्यं ज्ञानमिति पक्षे तस्य नित्यत्वादित्यर्थः । अत्र नित्यमित्यस्य नित्यं विद्यमानमनादीत्यर्थः । नित्यं नित्यत्वेन साधितानादिताकमित्यर्थ इत्यन्ये । स्वाकारवृत्ति-प्रतिबिम्बितचैतन्यस्यावच्छिन्नस्य जन्यत्वेन तत्प्रति वेदान्तजन्यापरोक्षचरमवृत्तिविषयस्य ब्रह्मणोपि स्वावच्छिन्नं चैतन्यं प्रति घटस्यैव कारकत्वेन चिदकर्मत्वाभावादतिव्याप्तिरित्याह ।। स्वेति ।। ननु चरमवृत्तिर्न ब्रह्माकारा ब्रह्मणो निराकारत्वात् अत उक्तम् ।। रूपादेरिवेति ।। निराकारं यद्रूपरासादि तदाकारा-वृत्तिर्यथाङ्गीकृता एवं वेदान्तजन्यचरमवृत्तेरपि निराकारब्रह्माकारत्वं युक्तमित्यर्थः । ब्रह्मण्यतिशयस्य सत्वादि-त्यन्वयः ।। उक्तन्यायेनेति ।। कल्पितभेदेन जीवब्रह्मणोर्ज्ञातृज्ञेयभाववद् ब्रह्मणोपि स्वाकारवृत्तिप्रतिबिम्बित-चिद्विषयत्वं सम्भवत्येव अन्यथा तया तदज्ञाननिवृत्त्ययोगादिति दृश्यत्वनिरुक्तिभङ्गे उक्तरीत्येत्यर्थः ।। प्रतिफलितेति ।। स्वाकारवेदान्तजन्यवृत्तिप्रतिफलितेत्यर्थः । तथाच चिज्जन्यातिशयवत्त्वाभावरूपचिदकर्मत्व-रूपावेद्यत्वस्य ब्रह्मण्यसम्भव सति भावः । ननु चिज्जन्यातिशयो ज्ञाततारूप एव विवक्षितः स च ब्रह्मणि नास्ति अतीन्द्रियत्वात् एवं च चिज्जन्यज्ञाततारूपातिशयवत्त्वाभावरूपचिदकर्मत्वरूपावेद्यत्वस्य न ब्रह्मण्यसम्भव इत्यत आह ।। तदन्यस्येति ।। आवरणभङ्गातिरिक्तज्ञाततारूपातिशयस्येत्यर्थः ।। घटादावपीति ।। ज्ञातताया अप्रामाणिकत्वेन ब्रह्मणीव घटादावपि निरुक्तावेद्यत्वसद्भावादतिव्याप्तिरित्यर्थः । जडेऽतिव्याप्तिरित्याह ।। शुद्धेति ।। चैतन्यफलरूपज्ञानस्य सर्वत्र व्याप्तत्वेन परसमवेतत्वाभावात् । क्रियां कुर्वद्धि कारकमित्युक्तत्वेन कारकजन्याया एव क्रियात्वात् शुद्धचितश्च तदभावेन क्रियात्वाभावात्परसमवेतक्रियाजन्यफलशालित्वरूपकर्मत्वस्य जडेप्यभावेन चिदकर्मत्वसद्भावादतिव्याप्तिरित्यर्थः । ननु शुद्धचितः समवेतत्वाद्यभावेपि वृत्तिप्रतिबिम्बित-चैतन्यस्य परस्मिन् ज्ञातरि वृत्तिवत्समवेतत्वात्कर्मादिकारकजन्यत्वेन क्रियात्वाच्च तज्जन्यव्यवहारादिरूप

(प्रकाशः)

फलशालित्वसद्भावेन घटे कर्मत्वसद्भावान्न चिदकर्मत्वलक्षणस्यातिव्याप्तिरिति चेत्तर्हि ब्रह्मणोपि स्वाकारचरमवृत्तिप्रतिफलितचैतन्यस्य परसमवेततत्वात् क्रियात्वाच्च तज्जन्यावरण भङ्गव्यवहाररूप फलशालित्वेन कर्मत्वाच्चिदकर्मत्वरूपावेद्यत्वस्य ब्रह्मण्यसम्भव इत्याह ॥ प्रतिबिम्बितचितित्विति ॥ ज्ञप्तिः चैतन्यरूपा । ननु ब्रह्मणोपि वृत्तिरूपज्ञप्तिविषयत्वसत्वादसम्भव इत्यत आह ॥ वृत्तिस्त्विति ॥ घटादावपि ज्ञप्त्यविषयत्वसद्भावादतिव्याप्तिरित्यत आह ॥ घटादाविति ॥ ज्ञप्तीति ॥ चैतन्यरूपज्ञप्तीत्यर्थः । अप्रामाणिकत्वादिति भावः । विषयापरोक्ष्यं तु चैतन्याभिव्यञ्जकत्वार्थमावश्यकेन वृत्तिगतविशेषेणैवोपपन्नमिति ध्येयम् । अवेद्यत्वनिरुक्तिखण्डनेन लब्धमर्थमाह ॥ तस्मादिति ॥ अयमिति ॥ यद्विषयत्वं स्वप्रकाशत्वमित्यर्थः ॥ अपरोक्षोयमित्याकार इति ॥ अपरोक्षत्वप्रकारकात्मविशेष्यकव्यवहार एवाऽपरोक्षव्यवहार इत्यर्थः ॥ धर्माधर्मादाविति ॥ योगीश्वराणां योगजधर्मप्रत्यासत्या जन्यं यदपरोक्षज्ञानं तज्जन्योयो योगीश्वरीयव्यवहारस्तद्विषयत्वात् तथाऽस्माकं जायमानं यत् धर्मादिकमनुमित्या शास्त्रतो वा जानामीत्येवमनुव्यवसायरूपापरोक्षज्ञानं तथा यत्प्रमेयं तदभिधेयमिति सर्वोपसंहारेण व्याप्तिज्ञानरूपम् अपरोक्षज्ञानं तज्जन्यव्यवहारविषयत्वस्य धर्मादावपि सत्वेन स्वप्रकाशत्वप्रसङ्गादतिव्याप्तिरित्यर्थः । अपरोक्षेणेत्येतत् योगजन्यज्ञानेनेत्यादित्रयाणामपि विशेषणम् । नन्वपरोक्षज्ञानजन्यो व्यवहार इत्यत्रापरोक्षज्ञानशब्देन लौकिकप्रत्यासत्त्या जन्यसाक्षात्कार एव विवक्षितः । तज्जन्यव्यवहारो धर्मादौ नास्ति योगिनां जायमानस्य धर्मादिसाक्षात्कारस्य योगजधर्मप्रत्यासत्तिरूपालौकिकसंनिकर्षजन्यत्वात् अस्मदादीनां जायमानानुव्यवसायरूपस्य व्याप्तिज्ञानरूपस्य च साक्षात्कारस्य ज्ञानलक्षणप्रत्यासत्तिजन्यत्वान्नातिव्याप्तिः । घटादौत्वेतादृशापरोक्षज्ञानजन्यव्यवहारविषयत्वसत्वेपि अवेद्यत्वरूपविशेषणाभावेन स्वप्रकाशत्वाभावसद्भावात् तत्र व्यवहारजनकापरोक्षज्ञानेऽलौकिकप्रत्यासत्त्यजन्यत्वं नाम किमित्यतस्तत्स्वरूपं निरुच्य दर्शयति ॥ अनागतेति ॥ अनागतगोचरो यः साक्षात्कारस्तज्जनिका या प्रत्यासत्तिर्ज्ञानसामान्ययोगजधर्मरूपालौकिकप्रत्यासत्ति स्तदजन्यो यो जन्यसाक्षात्कारः लौकिकप्रत्यासत्ति जन्यसाक्षात्कारः स एवापरोक्षज्ञानशब्देन विवक्षित इत्यर्थः । अत्रानागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्यो यः साक्षात्कारः ईश्वरसाक्षात्कारस्तज्जन्यव्यवहारविषये धर्मादौ स्वप्रकाशत्वपरिहाराय जन्येति साक्षात्कारविशेषणम् ॥ आत्मेति ॥ आत्मस्वरूपज्ञानस्य नित्यत्वेन उक्तप्रत्यासत्त्यजन्यजन्य साक्षात्कारत्वाभावेन तज्जन्यव्यवहारविषयत्वमात्मनि नास्तीत्यपरोक्षव्यवहारविषयत्वरूप स्वप्रकाशत्वलक्षणस्यासम्भव इत्यर्थः । नन्वपरोक्षज्ञानशब्देन विषयनिष्ठो योऽपरोक्षव्यवहारस्तद्धेतुभूतसाक्षात्कार एव विवक्षितः एवं च धर्मादौ नातिव्याप्तिः । योगजज्ञानानुव्यवसायेऽव्याप्तिज्ञानरूपसाक्षात्काराणाम् अलौकिकप्रत्यासत्तिजन्यतया विषयेऽपरोक्षव्यवहारहेतुत्वाभावादित्याशङ्क्याह ॥ विषयेति ॥ साक्षिरूपसाक्षात्कारस्य स्वविषयभूतरूप्याविद्यागतापरोक्षव्यवहारहेतुत्वेन विषयगतापरोक्षव्यवहारहेतुसाक्षात्कारजन्यव्यवहारविषयत्वं रूप्यादीनामप्यस्तीति तेषामपि स्वप्रकाशत्वप्राप्त्याऽतिव्याप्तेरित्यर्थः ॥ वस्तुन इति ॥ अपरोक्षवस्तुविषयो व्यवहारो हि अपरोक्षव्यवहार इत्यत्र वस्तुनोऽपरोक्षत्वं नाम अपरोक्षज्ञानविषयत्वं तथा चात्मनः स्वप्रकाशत्वं नामाऽपरोक्षज्ञानविषयतयाऽपरोक्षंभूतं यदात्मरूपं वस्तु तद्विषयव्यवहारविषयत्वं वाच्यम् एवं चात्मरूपवस्तुनोऽपरोक्षज्ञानविषयत्वेन घटादिवद्वेद्यत्वापत्त्याऽवेद्यत्वे सतीत्यनेन व्याघात इत्यर्थः ॥ तस्यैवेति ॥ अवेद्यत्वे

(कण्टकोद्धारः)

तयोर्विरोधित्वं मिथ्यात्वं प्रमाणेन तयोः सहावस्थानावगमात् । ब्रह्मणि च विरोध एव । न च विरोधित्वांशमादाय पुनरप्यप्रसिद्धिरेवेति वाच्यम् । वेद्यत्वं विरोध्यत्यन्ताभावप्रतियोगि अत्यन्ताभावप्रतियोगित्वात् घटवदिति प्रसिद्धिसंभवादिति चेन्न । प्रतियोगिसत्त्वसहिष्णोस्तदत्यन्ताभावत्वायोगादित्युक्तत्वात् । घटादावपि वेद्यत्वस्यात्यन्ताभावप्रतियोगित्वेन विरोध्यत्यन्ताभावप्रतियोगित्वसाधनसौलभ्याच्च । न च मिथ्यात्वप्रमाणेन सहावस्थनप्रतीतेर्विरोधसाधने बाध इति वाच्यम् । मिथ्यात्वप्रमाणानां निरस्तत्वात् । ब्रह्मण्यपि वेद्यत्वस्य मिथ्यात्वेन विरोध्यभावप्रतियोगित्वसाधने बाधाच्च । एतेन पूर्वानुमाने अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वं साध्यम् । न च विशिष्टस्याप्रसिद्धिः । फलव्याप्यत्वम् अपरोक्षव्यवहारयोग्यकिञ्चिन्निष्ठात्यन्ताभावप्रतियोगीति साध्यम् । एवञ्चानुमितेः पक्षतावच्छेदकसाध्यसामानाधिकरण्यविषयत्वनियमेन विशिष्टस्य सामान्यतः प्रसिद्धिरिति निरस्तम् । विशिष्टस्यापि दृश्यत्वभङ्गोक्तरीत्या घटादौ निश्चितत्वेनासाधारणानैकान्त्यापरिहारात् । ब्रह्मण्यपि फलव्याप्यत्वस्य समर्थितत्वेन तदभावसाधने बाधाच्च । फलसद्भावे प्रमाणाभावेन साध्यप्रसिद्धिसाधकानुमाने आश्रयासिद्धेश्चेति दिक् ॥ अत एवेति ॥ अनेनानुमानेन एतद्घटान्यत्वे सति यद्वेद्यत्वं तद्विशिष्टं घटातिरिक्तं सर्वं तदधिकरणं पक्ष एव । तदन्यत्वं पक्षातिरिक्तं पटादौ प्रसिद्धम् । पक्षे च न पक्षातिरिक्तत्वेन साध्यपर्यवासानं बाधात् । अतः पक्षातिरिक्तं विशिष्टानधिकरणमादाय तदन्यत्वपर्यवसानम् । विशिष्टानधिकरणत्वञ्च न विशेषणाभावमादाय । ततः पुनः पक्षात्मकत्वापत्या बाधात् विशेष्याभावमादायैव सिध्यतीति युक्ता वेद्यत्वप्रसिद्धिरित्यर्थः ॥ वेद्यत्वानिरुक्तेरिति ॥ न च तद्विषयत्वमेव वेद्यत्वमिति वाच्यम् । पूर्वोक्तरीत्या पटादावपि चिद्विषयत्वाभावेन तदन्यत्वे साध्यपर्यवसानेनार्थान्तरत्वात् । ब्रह्मण्यपि चिद्विषयत्वस्योपपादित्वेन तदभाव सिध्ययोगाच्च ॥ अयं घट इति ॥ अत्र एतद्घटत्वे सतीति वेद्यत्वानधिकरणान्यत्वस्य विशेषणम् । एवञ्च सपक्षे घटान्तरादौ विशेषणाभावात् विशिष्टाभावः । पक्षे च वेद्यत्वानधिकरणान्यत्वाभावमादायेति प्रकरणसमतेत्यर्थः । नचैवं विशिष्टा प्रसिद्धिः । पररीत्या घट एव प्रसिद्धि सम्भवात् । यद्वा एतद्घटत्वे सतीति वेद्यत्वस्यैव विशेषणम् । तदनधिकरणञ्च पटादिकं पराभिमतं च । तत्र च पटादौ तदन्यत्वानधिकरणत्वं सिद्धमेव । पक्षे च न विशिष्टानधिकरणपटान्यत्वाभावमादाय साध्यसिद्धिः । पटाद्यन्यत्वस्य प्रत्यक्षसिद्धत्वेन बाधात् । तथाच पराभिमतान्यत्वाभावमादायैवेति भवति प्रकरणसमतेत्यर्थः । न च स्थापनायाः श्रुत्याद्यनुकूलतर्कसाहित्येन बलवत्त्वं तदभावस्यानुपदमेव वक्ष्यमाणत्वात् । उपसंहरति ॥ तस्मादिति ॥

अत्र कश्चित् । आत्मा स्वप्रकाशः आत्मत्वात् प्रमाणं स्वधर्मविषयो न भवतीति साध्यम् । इच्छादिश्चान्तः करणधर्म एव । अत्रात्मेति अन्तःकरणातिरिक्तोहमिति व्यवहारविषय उच्यते । अतो न बाधो न वाऽश्रयासिद्धिः । नचात्मत्वमसिद्धम् । घटादौ घटत्वादेरिव कल्पितस्यात्मनि सम्भवात् । न च साध्याप्रसिद्धिः । व्याप्तिप्रतीत्यर्थं साध्यप्रसिद्धिर्मृग्यते । प्रकृते च साध्यस्याभावरूपत्वेन तदभावस्य भावरूपत्वात् भावज्ञानेऽभावज्ञानस्याकारणत्वात् व्यतिरेकव्याप्तिसम्भवात् । पक्षता च सिध्यभावरूपा न

(कण्टकोद्धारः)

साध्यसिद्धिमपेक्षते । विशेषण ज्ञानञ्च न विशिष्टज्ञानकारणम् । अतो न साध्याप्रसिद्धिर्दूषणमित्याह । तन्न । अत्र स्वप्रकाशत्वं चिदविषयत्वं चेत् घटादावसाधारणानैकान्तिकता । द्वितीयसाध्ये तु घटादौ स्वधर्मविषयत्वाभावात् स्पष्टैव । साध्यघटादौ चिद्रूपज्ञानाभावस्य साधितत्वात् । नचानुकूलतर्क-सद्भावान्नासाधारण्यं दोष इति वाच्यम् । तदभावस्य वक्ष्यमाणत्वात् । वृत्त्यव्याप्यत्वं चेद्बाधः । ब्रह्मणो वृत्तिव्याप्यत्वस्य श्रुत्यादि सिद्धत्वात् । किञ्चात्मत्वं जातिरुपाधिर्वार्थादकल्पितं हेतूक्रियते तदा शरीरादावनैकान्तिकता यदि वास्तवं तदाऽसिद्धिः । अपि च पक्षः किमात्मशब्दवाच्योऽथ तल्लक्ष्योऽथवाऽह-मिति व्यवहार विषयो नाद्यः । तस्य परेण स्वप्रकाशत्वानङ्गीकारेण परस्यापसिद्धान्तात् । न द्वितीयः । आत्मशब्दलक्ष्यस्य परमचैतन्यस्यासिद्धेः । न तृतीयः । अहमिति व्यवहारस्य विशिष्टव्यवहारत्वेन तद्विषयविशेषणसम्बन्धांशे बाधापत्तेः । न चाहमिति व्यवहार विशेष्यः पक्ष इति वाच्यम् । त्वन्मतेऽहङ्कार-स्यापि तद्विशेष्यत्वात् । नचान्तःकरणातिरिक्तत्वे सतीति विशेषणीयम् । परमते व्यर्थविशेषणत्वात् । नचोपरञ्जकं विशेषणं प्रयोजनाभावे उपरञ्जकत्वस्यातिप्रसञ्जकत्वात् । किञ्च साध्यद्वये सिद्धसाधनम् । आत्मनो वृत्तिव्याप्यत्वाभ्युपगमेन भवदभिमतचिद्विषयत्वानङ्गीकारात् इच्छादिवत् ज्ञानस्याप्यन्तःकरण-वृत्तित्वाभ्युपगमाच्च । अपि च साध्याभावस्य भावरूपत्वेपि अप्रयोजकत्वपरिहारार्थं साध्याभावत्वेनोपस्थिते व्याप्तिर्ग्राह्या तथाच साध्यप्रसिध्यभावे कथं सा स्यादिति । अन्यच्च सर्वं दूषणमनुभूतित्वानुमानवद्द्रष्टव्यमिति दिक् । प्रतिज्ञां दूषयित्वा हेतुं दूषयति ॥ त्वदभिमतमिति ॥ न च कल्पितभेदे शुद्धे अनुभूतित्वं जातिरस्त्येवेति वाच्यम् । कल्पितभेदविशिष्टस्य मिथ्यात्वेन प्रकाशत्वसाधने बाधात् ॥ जातेरिति ॥ न च गौरवम् । प्रामाणिकत्वात् । यथाचैतत्तथाऽखण्डार्थत्वभङ्ग एवोक्तम् ॥ अनुभाव्याद्यभाव इति ॥ न च कदाचिदनुभाव्यसत्वेनानुभूतित्वमन्यथाऽतीतज्ञानादेरनुभूतित्वं न स्यादिति वाच्यम् । अनुभाव्याद्यभावपदेन अनुभाव्यविषयीकरणाभावस्य विवक्षितत्वात् अतीतादिज्ञानादेश्च यावत्सर्वविषयीकरणसत्त्वात् । चिद्रूपानु-भूतेश्च तदभावात् । अन्यथा मुक्तावपि संसारोल्लेखे मुक्तेः संसारतुल्यत्वं स्यादिति ॥ विपक्षादिति ॥ न च वृत्तेरनुभूतिशब्दवाच्यत्वमेव नेति वाच्यम् । चैतन्यस्यापि निर्विशेषत्वेन तद्वाच्यत्वाभावे मुख्यार्थशून्यस्य लक्षणाया अदृष्टशक्यलक्ष्यरूपार्थाभावेन प्रातिपदिकत्वाभावपदत्वाभावापत्तेः । न च चित्त्वरूपमनुभूतित्वं विवक्षितम् । अतो न व्यभिचार इति वाच्यम् । तस्यापि कल्पितस्य देहादौ सत्त्वात् अकल्पितस्यात्मन्यप्य-भावात् अप्रयोजकत्वमिति । न च श्रुत्यनुग्रहादप्रयोजकत्वपरिहारः । श्रुत्यननुग्रहस्याग्रे वक्ष्यमाणत्वात् ॥ जानामीतीति ॥ नचाहमर्थस्य ज्ञस्याश्रयत्वायोगेन ज्ञानपदं तत्र गौणमिति वाच्यम् । विज्ञानमिति प्रतीत्या बाधकाभावेनज्ञस्याश्रयत्वस्यावश्यकत्वात् । अन्यथा घटं साक्षात्करोमीति प्रतीत्या घटादेरपि चिद्विषयत्वं न सिध्येदिति घटादेरपि स्वप्रकाशत्वापत्तेः ॥ दुःखमिति ॥ न च तत्रापि दुःखाद्यकाराविद्यावृत्तिरेव विवक्षितेति वाच्यम् । तथात्वे दुःखादेरपि चिद्विषयत्वे प्रमाणाभावेन स्वप्रकाशत्वापत्तेः, दुःखादेः प्रातिभासिकत्वेन तदाकाराविद्यावृत्त्ययोगाच्च । नचाविद्यावृत्तौ पूर्वसत्त्वं नापेक्षितमिति वाच्यम् । तदसत्त्वे तदाकारवृत्त्यनुपपत्तेः । न च श्रुतिः वृत्तिव्याप्यत्वमेव विषयीकरोति न फलव्याप्यत्वमिति वाच्यम् । श्रुतौ तदात्मानमेवावेदित्यत्र ब्रह्मणः

(कण्टकोद्धारः)

कर्तृत्वोक्त्या वृत्तिरूपज्ञानायोगेन चिद्विषयत्वविषयीकरणस्यावश्यकत्वात् । सत्प्रतिपक्षानाह ॥ अनुभूतिरित्यादिना ॥ न चात्र विषयत्वं नाम तज्जन्यव्यवहारविषयत्वं चेत् साध्यते तस्य मयाप्यङ्गीकारेण सिद्धसाधनतेति वाच्यम् । मयाप्येतदन्यविषयत्वस्य घटादावप्यनङ्गीकारेण त्वया पारिभाषिकविषयत्वाभावसाधने मया सिद्धसाधनस्य वक्तुं शक्यत्वात् व्यवहारं प्रति यदेव विषयत्वं त्वया स्वीक्रियते तस्यैव स्फुरणं प्रति साधनाच्च । व्यवहाराननुसंधानेपि ज्ञानविषयत्वव्यवहाराच्च । अभेदेपि सम्बन्धविशेषस्योपपादितत्वाच्च । नच जडत्वमुपाधिः । लाघवेन स्फुरणविषयत्वे वस्तुत्वस्यैव तन्त्रत्वेन जडत्वस्याप्रयोजकत्वेनानुपाधित्वात् । अन्यथा बाह्यप्रपञ्चत्वस्यैव तन्त्रत्वे सुखादेरपि स्फुरणविषयत्वानापत्तेः ॥ त्वन्मत इति ॥ अहमर्थस्य संशयाद्यविषयत्वं प्रतीयते । शुद्धचैतन्यस्य च विचारविषयता सिद्ध्यर्थं सन्देहादेरावश्यकत्वात् । तथाचान्यनिष्ठेन सन्देहाद्यभावेनान्यस्य परवेद्यत्वाभावसाधनेऽतिप्रसङ्ग इति भावः । किञ्च स्ववेद्यत्वे नैवोपपत्याऽप्रयोजकत्वम् । न च स्ववेद्यत्वं विरुद्धं विरोधप्रयोजकाभावादित्याह ॥ किञ्चेति ॥ अत्र सर्वत्र पञ्चम्यन्तानां हेतुनां स्ववेद्यत्वं विरुद्धमित्यनुवृत्तेरनेनान्वयः ॥ स्वप्रकाशस्येति ॥ ज्ञानं विषयजन्यमिति व्याप्तेरभावात् ज्ञानं प्रति विषयस्य कुत्राप्यजनकत्वात् । यथा चैतत्तथाऽन्यत्र प्रपञ्चितम् । द्वितीयनियमस्तु जन्यज्ञानविषयत्वेन सङ्कोचनीयोऽन्यथातिप्रसङ्गादिति भावः ॥ अन्यथेति ॥ स्वजनकेन्द्रियसंनिकृष्टस्यैव विषयत्वमिति नियमाङ्गीकारे इत्यर्थः । स्वकरणसंनिकर्षजन्यत्वमादिशब्दार्थः ॥ न तृतीय इति ॥ ननु विषयविषयिभावस्य भेदनियतत्वेन कथमभेदे समतीतादौ च विषयविषयिभेदोऽस्त्येवेति वाच्यम् । तस्य भेदनियतत्वासिद्धेः । अन्यथा मिथ्यात्वानुमितेः अज्ञानस्य च स्वविषयत्वं न स्यात् । न च स्वपरसाधारणावच्छेदके सति स्वविषयत्वं मिथ्यात्वानुमितौ च तदस्ति । प्रकृते च तन्नेति वाच्यम् । प्रकृतेऽपि तज्जन्यव्यवहारविषयत्वस्य स्वपरसाधारणस्य संभवात् । स्वविषयत्वेऽनुभवस्यैव तन्त्रत्वेनावच्छेदकैक्यस्याप्रयोजकत्वाच्च । न च व्यवहारोपपादनार्थं तद्विषयत्वस्वभावकल्पनापेक्षया तद्व्यवहारजनकत्वस्वभाव एव कल्पनीयो लाघवादिति वाच्यम् । तद्व्यवहारे तदविषयत्वस्य प्रयोजकत्वेन क्लृप्ततया गौरवस्य प्रामाणिकत्वादिति भावः ॥ कृति विशेषस्येति ॥ न च क्रियाया एव कर्मत्वं विरुद्धम् । अनुभवेनैव विरोधपरिहारात् ॥ अज्ञस्यैवेति ॥ अज्ञानाश्रयत्वेन कर्तृत्वस्य तद्विषयत्वेन कर्मत्वस्यैकत्रैवोपलम्भादित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ मामहमिति ॥ न च साक्षिणः कर्तृत्वे अहङ्कारस्य कर्मत्वमिति वाच्यम् । उभयत्रास्मच्छब्दप्रयोगे द्वैविध्यस्याप्रामाणिकत्वात् । केवलाहङ्कारे केवलचैतन्ये वाऽस्मच्छब्दाप्रयोगाच्च ॥ तदात्मानमिति । न च श्रुतावहमर्थस्य कर्तृत्वमिति वाच्यम् । तच्छब्देन परामृष्टस्याहमर्थत्वात् कर्तुरेव कर्मत्वमिति भावः ॥ क्रियाविषयत्वादिरूपस्येति ॥ न चैवमासनादि क्रियाया अपि आधारादिविषयत्वेन कर्मत्वापत्तिरिति वाच्यम् । आधारे विषयत्वाननुभवेन तत्र विषयत्वाभावात् । अन्यथा परकीयलक्षणस्यापि तत्र सम्भवेन विषयत्वापातात् ॥ अन्यथेति ॥ गत्यादौ स्वविषयत्वादर्शनेन अनुभूतेरपि स्वविषयत्वकल्पने इत्यर्थः । ननु व्याप्तिज्ञानादेः स्वविषयत्वानङ्गीकारात् दृष्टान्तासिद्धिरित्यत आह ॥ व्याप्तिज्ञानेति ॥ ननु यथा चितश्चिदविषयत्वेऽपि तद्व्यवहारस्तथा व्याप्तिज्ञानादेः स्वविषयत्वाभावेऽपि

(कण्टकोद्धारः)

मिथ्यात्वादिसिद्धिः स्यादित्यत आह ॥ न हीति ॥ व्याप्तिज्ञानादेरिति ॥ दृश्यत्वप्रमेयत्वाद्यवच्छिन्नत्वादित्यर्थः । तथाच मिथ्यात्वानुमित्यादेः स्वविषयत्वमावश्यकमिति भावः । कर्तुरेव कर्मत्वे कथितां युक्तिं सङ्गृह्णाति ॥ एवञ्चेति ॥ इति प्रत्यक्षेणेत्यादिक्रमेणान्वयः । ननु गमनादावपि कर्तृकर्मणोरभेदः स्यादित्याशङ्कायामाह ॥ गमनादौ त्विति ॥ प्रत्यक्षाद्यभावान्न तत्र कर्तृकर्मणोरभेद इत्यर्थः । ननु गमनादिदृष्टान्तेन सर्वत्र कर्मकर्तृभेद एव किं न स्यादित्यत आह ॥ अन्यथेति ॥ सर्वत्र कर्मकर्तृभेदाङ्गीकारे इत्यर्थः । तथाच स्ववेद्यत्वेनैवोपपन्नत्वात् अनुभूतित्वमप्रयोजकमिति भावः ॥ अवेद्यत्व इति ॥ वृत्यविषयत्व इत्यर्थः । न च स्वप्रकाशत्वानुमाने चिदविषयत्वं फलाव्याप्यत्वं वा सिषाधयिषितं तथा च तत्र बाधकानुक्तेर्व्यधिकरणतेति वाच्यम् । तादृशावेद्यत्वरूपस्वप्रकाशत्वस्य घटादिसाधारणताया दृश्यत्वभङ्ग उक्तत्वेन वृत्यविषयत्वरूपमेवावेद्यत्वं स्वप्रकाशत्वानुमाने साध्यं सिद्धवत्कृत्य प्रतिकूलतर्काभिधानादिति भावः ॥ ब्रह्मेति ॥ विचार विधिनाहि विचारो विहितः विचारस्य च फलं ब्रह्मविषयकवृत्तिरेवेति तदभावो तदुद्देशेन विचारविधिवैयर्थ्यमिति भावः ॥ ब्रह्मज्ञानेति ॥ तद्विषयकज्ञानस्यैव तदज्ञाननिवर्तकत्वादिति भावः ॥ एतेन तदज्ञाननिवर्तकत्वायोगेनेत्यर्थः । प्रतिकूलतर्कान्तरमाह ॥ आत्मन इति ॥ तत्र प्रमाणाभावादिति भावः ॥ स्वविषयत्वेति ॥ तच्च परेणाङ्गीक्रियते । कर्तृकर्मविरोधादिति भावः ॥ ज्ञानतत्वातिरेकेणेति ॥ ज्ञानाभावे व्यवहारादर्शनेन ज्ञानत्वस्यैव व्यवहारयोग्यतावच्छेदकत्वादिति भावः ॥ मुक्ताविति ॥ मुक्तौ स्वरूपमात्रेणावस्थानाभ्युपगमेन स्वरूपस्य च निर्धर्मकत्वेन योग्यतारूपधर्माभावो द्रष्टव्यः ॥ अन्यथेति ॥ सिध्युपायाभावेऽपि सिध्यङ्गीकारे इत्यर्थः । ननु दृष्टान्त दार्ष्टान्तिकयोर्वैषम्यं । शृङ्गादेरसत्त्वव्यावृत्तिफलक प्रमाणाभावात् प्रकृते तत्फलकवृत्तिसत्त्वादिति शङ्कते ॥ नन्विति ॥ एतादृशेति ॥ तथाच घटादिसाधारण्यपरिहारार्थं वृत्यविषयत्वमेवावेद्यत्वं स्वीकर्तव्यम् । तथा च नृशृङ्गतुल्यतैवेति भावः । किञ्चास्त्ववेद्यत्वं फलाव्याप्यत्वं तदप्यात्मनोङ्गीकर्तव्यम् । आत्मनो ज्ञानरूपत्वात् । अन्यथा तस्य ज्ञानरूपत्वमेव न स्यादित्याह ॥ किञ्चेति ॥ ननु स्ववेद्यत्वाभावेपि वृत्तित्वमस्तु विपक्षे बाधकाभावेनाप्रयोजकत्वादित्यत आह ॥ शुक्तेरिति ॥ ननु परविषयत्वेनैव वृत्तित्वं वृत्तिमदित्यत आह ॥ मुक्ताविति ॥ ननु पराभावेऽपि तद्विषयत्वं स्यात् नहि विद्यमानस्यैव विषयत्वम् अतीतादिविषयकानुमिति दर्शनादित्यत आह ॥ उक्तं चैतदिति ॥ तथा च मुक्तौ दुःखाद्युपप्लवोल्लेखरूपानर्थापत्यादेरुक्तत्वादिति भावः । ननु स्वविषयत्वाभावेऽपि तत्संशयादिनिवर्तकत्वमस्तु विपक्षे बाधकाभावेनाप्रयोजकत्वादित्यत आह ॥ वित्तेरिति ॥ न च तदविषयत्वाभावेऽपि स्वमहिम्नैव संशयादिनिवर्तकत्वमस्त्विति वाच्यम् । कॢप्ततद्विषयत्वपरित्यागेन महिमकल्पने गौरवात् । व्यवहारेऽनेकनियामककल्पने गौरवाच्च । न च तव विषयतायामिव व्यवहारेऽननुगतस्यैव नियामकत्वमस्त्विति वाच्यम् । विषयतायां वस्तुत्वस्यैव प्रयोजकत्वेनाननुगमाभावात् । न च ब्रह्मरूपं ज्ञानं संशयाद्यविरोध्येव । वृत्तेरेव तद्विरोधित्वाङ्गीकारादिति वाच्यम् । संशयादिविरोधित्वानङ्गीकारे ज्ञानत्वानुपपत्तेः । न च निर्विकल्पकज्ञानत्वोपपत्तिरिति वाच्यम् । तस्याप्रामाणिकत्वेनानभ्युपगमात् । न च धर्मिज्ञानवदुपपत्तिरिति वाच्यम् । तस्यापि धर्म्यंशे संशयादिविरोधित्वादेः सत्त्वात् । तथाच संशयादि-

(कण्टकोद्धार:)

विरोधित्वाभावे ज्ञानत्वमनुपपन्नमिति ॥ स्वनिर्वाहकशब्देनैवेति ॥ न च स्वातिरिक्तनिर्वाहकानपेक्षत्वमात्रे स्वनिर्वाहकशब्द औपचारिकः स्वयंदासा इत्यादिवदिति वाच्यम् । तथात्वेऽसत्यपि स्वनिर्वाहक-शब्दप्रयोगापत्तेः । असतोप्यतिरिक्तनिर्वाहकानपेक्षत्वात् । स्वयंदासा इत्यादौ तु दासत्वप्रयोजकस्वीकरण एव तथा प्रयोगात् ॥ स्वनिर्वाहकमिति ॥ नचाध्ययनविधौ स्वपरसाधारणस्वाध्यायत्वरूपावच्छेदक सम्भवेनात्माश्रयानवकाशात् स्वविषयत्वम् । प्रकृते च तदभावेन न स्वविषयत्वमिति वाच्यम् । प्रकृतेऽप्यात्मरूपज्ञानस्य स्वपरविषयत्वाङ्गीकारेण योग्यवस्तुत्वादेरेवावच्छेदकत्वसम्भवात् । योग्यतायाश्च फलबलकल्प्यत्वात् । स्वविषयत्वे कर्तृकर्मत्वादिविरोधस्य परिहृतत्वाच्च । न च दीपादौ स्वविषयत्व-मसिद्धमिति वाच्यम् । तद्विषयतमोविरोधित्वादिना तद्विषयत्वस्यावश्यकत्वात् । अन्यथा घटादेरपि दीपादि विषयत्वं न स्यादिति । अत एव खण्डनमप्यपास्तमित्याह ॥ एतेनेति ॥ न च स्वाविषय इत्यस्यौत्सर्गिक-विषयान्यपदार्थकत्वम् अर्थः । तथाच स्वार्थसम्बन्धादन्यत्रवा स्वस्मिन् फलमिति वा समुदायता-प्रयोजकरूपेण विषयत्वेऽपि समुदायिताप्रयोजकरूपेणाविषयत्वमिति वा स्वाविषय इत्यस्यार्थ इति वाच्यम् । एतावता यथाकथञ्चिदविषयत्वेऽपि सर्वथा विषयत्वाभावेन स्वविषय एव कार्यकारीत्यस्य व्यभिचाराभावात् । अन्यथा घटज्ञानमपि स्वविषये कार्यकारीति स्यात् । यथा कथञ्चिदविषयत्वस्य तत्रापि सम्भवात् ॥ दुःखादिविषयकस्येति ॥ न च ब्रह्मणीव द्वेषादेरपि स्वाभेदात् स्वविषयता किं न स्यात् । यदि फलाभावान्न स्वविषयता तर्हि द्वेषादौ फलाभावान्न स्वाभेदः कार्यकारी । ब्रह्मणि तु फलसद्भावात् स्वाभेदः तद्व्यवहारादौ प्रयोजक इति कल्प्यत इति वाच्यम् । ब्रह्मणि फलस्य क्लृप्ततद्विषयत्वादेव संभवे स्वाभेदस्यापि प्रयोजकत्वे गौरवात् अननुगमाच्च । यथा च न तद्विषयत्वेन बाधकं तथोक्तम् । ननु वृत्तेरपि स्वस्मिन् कार्यकारित्वात् न दोष इत्यत आह ॥ वृत्तेरपीति ॥ न च जडस्य स्वप्रकाशत्वं युक्तमिति भावः ॥ मैत्रचैतन्यस्येति ॥ न च भेदकविरहकाले मैत्रचैतन्य इत्यस्यैवाभावात् साक्षिचैतन्येन च व्यवहारापादनस्येष्टत्वात् यदि च संस्कारात्मनाऽवस्थितमन्तःकरणं तदपि भेदकमित्युच्यते तदा भेदस्यैव सत्त्वान्नापादनमिति वाच्यम् । स्वाभाविकाभेदे औपाधिकभेदस्याप्रयोजकत्वात् अन्यथा हस्तपादाद्युपाधिकृतभेदात् तत्रापि व्यवहारादि न क्रियेत । न केवलं व्यवहारान्यथानुपपत्या स्वविषयत्वं कल्प्यते । किं तर्हि अनुभवादपि स्वविषयत्वमित्याह ॥ स्वात्मानमिति ॥ उक्तमर्थं कारिकया सङ्गृह्णाति ॥ एवञ्चेति ॥ ननु स्वविषयत्वमङ्गीक्रियते । न सर्वस्योपपत्तिः । स्वकर्मत्वम् उताङ्गीक्रियतेऽतः स्वप्रकाशत्वोपपत्तिरित्यत आह ॥ स्वविषयकत्वेपीति ॥ विषयत्वातिरिक्तकर्मत्वाभावस्योपपादितत्वादिति भावः । एवं प्रति कूलतर्कपराहतिमुक्त्वाऽभाससाम्यं चाह ॥ घट इति ॥ न चाप्रयोजकत्वपरिहारेणेदं परिहृतमिति वाच्यम् । अप्रयोजकत्वस्य स्थापितत्वेना-भाससाम्यापरिहारात् । न च घटस्फुरणाभेदतद्विषयत्वयोरभावे तद्व्यवहाराभावप्रसङ्गेन न साम्यमिति वाच्यम् । अभेदस्याप्रयोजकत्वेन तद्विषयत्वस्यैव व्यवहारप्रयोजकत्वेन स्वप्रभासत्वे व्यवहाराभावप्रसङ्गस्य साम्यात् ॥ अन्यथेति ॥ न च प्रतिकर्मव्यवस्थायां वृत्यतिरिक्तं चैतन्यं साधितमिति वाच्यम् । तस्य दृश्यत्वभङ्गे दूषितत्वात् । वृत्यैव सर्वस्योपपत्तौ घटादौ वृत्यन्य चैतन्यरूपज्ञाने मानाभावाच्च ।

(कण्टकोद्धारः)

तस्मादनुभूतिः स्वप्रकाशेत्यनुमानमयुक्तम् । नन्वनुभूतित्वपक्षतावच्छेदककानुमानायोगेऽपि ज्ञानत्वपक्षतावच्छेदकयुक्तमविद्यानुमानं ज्ञानस्य स्वप्रकाशत्वे प्रमाणं स्यादित्यतस्तदपि प्रकरणसमताग्रस्तमित्याह ॥ त्वज्ज्ञानमिति ॥ अत्र चापरोक्षव्यवहारयोग्यत्वे सति यद्वेद्यत्वविशिष्टं तदनधिकरणत्वं साध्यम् । तत्र च विशेषणाभावाद् दृष्टान्ते साध्याभावः । पक्षे च विशेष्याभावादित्यवेद्यत्वं स्वप्रकाशत्वं सिध्यतीत्यर्थः । एवं प्रतिपक्षानुमानसाध्येप्यर्थो द्रष्टव्यः । नचानुकूलतर्कस्योक्तत्वात् स्थापनानुमानमधिकबलमिति वाच्यम् । अनुकूलतर्कस्य दूषितत्वात् ॥ विवादपदानीति ॥ अत्रापि पूर्ववदेव विशिष्टाभावो द्रष्टव्यः । एवमनुभूतिस्वप्रकाशत्वदूषणेनात्मनोऽपि स्वप्रकाशत्वं दूषितमित्याह ॥ एतेनेति ॥ एतेनेति परामृष्टं हेतुं दर्शयति ॥ चित एवेति ॥ असिद्धिरपीत्याह ॥ परपक्ष इति ॥ उक्तत्वाच्च ॥ जडत्वभङ्ग इति शेषः । विज्ञानेति ॥ अनया ज्ञानाश्रयत्वस्यैव प्रतीत्या । ज्ञानरूपत्वमसिद्धमिति भावः । न चात्र वृत्तिरूपज्ञानमेव विवक्षितमिति वाच्यम् । विप्रशब्दाभ्यां मुख्यज्ञानस्यैवाभिधानात् । वृत्तेश्च त्वन्मते मुख्यज्ञानत्वाभावात् ॥ भिन्नाश्रयविषयमिति ॥ भिन्नौ आश्रयविषयौ यस्येत्यर्थः ॥ मामहमिति ॥ न चात्र वृत्तिविषयतोपपत्तिरिति वाच्यम् । जानातेर्ज्ञप्तौ मुख्यत्वात् । चिद्विषयत्वे बाधकाभावस्योक्तत्वाच्च । अज्ञान इवेति । न च वेद्यत्वे वेदनाभावदशायाम् आत्मनि सन्देहाद्यापत्तिः । नह्यात्मनि अहं न वेति संदिग्धे, नाहमिति विपर्यवस्यतीति अस्वप्रकाशत्वे बाधकस्य सत्वाभावप्रयोजकतेति वाच्यम् । वेद्यत्वेऽपि वेदनस्य नित्यत्वेन सन्देहाद्यप्रसङ्गात् । किञ्च त्वन्मतेऽहमिति प्रतीयमानस्यानात्मत्वात् । शब्दैकगम्यात्मनि च सन्देहादिसत्वादिष्टापादनेन तर्कस्याभासत्वम् । न चाहमर्थस्य चिदचित्संवलनात्मकत्वात् अहं त्वावच्छेदेन संदेहाद्यभावसिद्धौ अचिदंश इव चिदंशेऽपि तत्सिद्धिरिति वाच्यम् । संवलितस्य पदार्थान्तरत्वेन संवलितमात्रनिष्ठ धर्मावच्छेदे तत्सिद्धावपि प्रत्येकं तदसिद्धेः । अन्यथा चिद्वदचितोऽपि स्वप्रकाशत्वापत्तेः । संवलितनिष्ठद्वित्वावच्छेदेन देवतात्वसिद्धावपि प्रत्येकं तदभावाच्च तस्मात् यत्किञ्चिदेतत् ॥ अन्तःकरणेति ॥ न च ज्ञानत्वं स्फुरणत्वं विवक्षितमिति वाच्यम् । दृष्टान्ते साधन वैकल्यापत्तेः ॥ द्वितीयस्यापीति ॥ न च ज्ञानवत् रूपस्य न सविषयत्वमिति वाच्यम् । सविषयत्वादेः फलबल कल्प्यत्वेनालोकवत्तस्यापि सविषयत्वात् ॥ न च त्वन्मत इति ॥ न च परमतेनैव हेत्वभिधानमिति वाच्यम् । हेतोरुभयवादि सिद्धत्वस्यावश्यकत्वात् । वादिनो मते हेत्वसिद्धौ स्वार्थानुमानानुपपत्तेश्च । ननु मास्त्वात्मनः स्वप्रकाशत्वेऽनुमानं प्रमाणं श्रुतिस्तु भविष्यति । तत्र स्वयंज्योतिः शब्देन स्वप्रकाशत्वस्योक्तत्वादित्याशङ्कायामाह ॥ नापीति ॥ ज्ञानसाधनमितीति ॥ न चात्र न ज्ञानसाधनं पृष्टम्, किन्त्वासनादि व्यवहारसाधनमेव । उत्तरवाक्ये 'कर्म कुरुत' इत्यादिना व्यवहारस्यैव प्रतीयमानत्वादिति वाच्यम् । आदित्यादेः साक्षाद्व्यवहारसाधनत्वानुमानात् । ज्ञानद्वारैव तत्साधनत्वेन प्रश्नस्य ज्ञानसाधनविषयत्वस्यावश्यकत्वात् । आत्मा परमात्मैवेति ॥ न च पूर्ववाक्ये नाडीसम्बन्धप्रतिपादनात् उत्तरवाक्ये चासम्बन्धप्रतिपादनाज्जीवपरत्वं शब्दस्येति वाच्यम् । उपक्रमोपसंहारयोः प्रकरणनिश्चायकत्वेन लिङ्गस्य प्रकरणादपि बलवत्वात् प्रमाणसम्बन्धस्य तत्तत्प्रेरकतया स्थिते सम्भवेनोपक्रमादेः सावकाशत्वाच्च ॥ स्वप्नेति ॥ न चैतल्लिङ्गं जीवे सम्भवतीति वाच्यम् । तस्य

(कण्टकोद्धारः)

सुप्त्यभिहतत्वेनासुप्तत्वाद्यनुपपत्तेः ॥ द्युभ्वाद्यधिकरणन्यायेनेति ॥ न च तत्रात्मशब्दस्य मुख्यत्वं न विवक्षितमिति वाच्यम् । अमुख्यात्मत्वस्य जीवेपि सम्भवेन तेन प्रधानादिति निरासानुपपत्तेः । नचात्मशब्दो जीवेपि मुख्य इति वाच्यम् । आत्मत्वादेरात्मशब्दप्रवृत्तिनिमित्तस्य तत्राभावात् । जीवे मुख्यत्वे प्राणभृच्चेत्यनेन सूत्रेण तन्निराकरणानुपपत्तेश्च । जीवस्य निर्णीतत्वेन कतम आत्मेति प्रश्नानुपपत्तेश्च। ननूपसंहारे अयं पुरुषः स्वयंज्योतिरिति स्वज्योतिष्ट्वमुक्तम् । अतस्तद्विरोध इत्यत आह ॥ तथाचेति ॥ नचाध्याहारे गौरवम् । विशिष्टस्य जीवस्य पुरुषपदेनोपसङ्क्रान्ततया तस्य स्वज्योतिष्टवानुपपत्या त्वयापि पुरुषपदेऽधिष्ठा न चैतन्यलक्षणयाऽस्य जीवस्य पुरुषोऽधिष्ठान चैतन्यं ज्योतिरित्यर्थकल्पनेनाध्याहार-स्यावश्यकत्वात् । अनुपपत्तेरुक्तत्वाच्च । ननु ज्योतिश्शब्दस्य ज्ञानसाधने प्रयोगाभावात् कथं ज्योतिश्शब्दस्य ज्ञानसाधनपरत्वमित्यत आह ॥ अस्मिन्नेवेति ॥ न च वागादिज्ञान साधनत्वेन ज्योतिषि रूढस्य ज्योतिश्शब्दस्य प्रवृत्तिवज्ज्ञानेऽपि तमो विरोधित्वेन प्रवृत्तिः किं न स्यात् इति वाच्यम् । एकस्य शब्दस्यैकत्र नियामकं विनाऽनेकार्थकल्पनस्यान्याय्यत्वात् ॥ स्वप्रकाशत्वपरत्व इति ॥ न च जाग्रदाद्य-वस्थायामादित्यादि ज्योतिस्सम्भवेन दुर्विवेकतया सुप्तौ तु विवेकतया अत्रेत्युक्तिरिति वाच्यम् । श्रुतेरविवेकविवेकयोरसम्भवात् । ईश्वरस्य सर्वदा विवेकात् । जीवस्य तु सुप्तावविवेकात् । न च भवन्मतेऽपि परमात्मनः सदा ज्ञानसाधनत्वादत्रेति व्यर्थमिति वाच्यम् । ज्ञानसाधनान्तराभिप्रायेण तथोपपत्तेरिति ॥ मुख्यार्थत्वापातादिति ॥ न च मुख्यासम्भव उपचरितार्थत्वमिष्टमेवेति वाच्यम् । स्वविषयत्वे बाधकाभाव-स्योपपादितत्वात् ॥ घटादेरपीति ॥ न च प्रकाशत्वे सतीति विवक्षितमिति वाच्यम् । एतदपेक्षया स्वविषयत्वस्यैव लघुत्वात् । ज्ञानदीपसाधारणप्रकाशत्वस्याभावाच्च ॥ अर्थान्तरमिति ॥ न च स्वप्रकाशत्वस्य बाधिततया तदप्रकाश्यत्वेन पक्षस्य विशेषिततयाऽर्थान्तराभाव इति वाच्यम् । ब्रह्मणः स्वविषयत्वे बाधकस्य परिहृतत्वेन स्वप्रकाशविषयत्वे बाधकस्यापरिहृतत्वेन स्वाप्रकाश्यत्वविशेषणासिद्धेः । घटादेरपि स्वाप्रकाश्यत्वेन तद्वदुपपत्याऽर्थान्तरानिस्ताराच्च । न च सजातीयप्रकाशाप्रकाश्यत्वमेव साध्यमतो नार्थान्तरमिति वाच्यम् । सजातीयत्वं हि ज्ञानत्वेन वा चित्त्वेन वा? नाद्यः । वृत्तिव्याप्यत्वाङ्गीकारेण वृत्तेरपि ज्ञानत्वाङ्गीकारेण तदप्रकाश्यत्वे बाधात् । न द्वितीयः । सजातीयपदवैयर्थ्यात् । विषयाभावेन प्रकाशत्वस्य बाधाच्च । चिदविषयत्वं तु प्रागेव दूषितम् ॥ किञ्चेति ॥ न च सुखादिकमप्याद्यक्षणे न ज्ञायत एवेति वाच्यम् । तथात्वे ज्ञातैकसत्त्वानुपपत्तेः । सामग्रीसत्त्वेन ज्ञानाभावानुपपत्तेश्च घटादाविव संनिकर्षान-पेक्षत्वात् । न च प्रकाशत्वं हेतुविशेषणमतो न व्यभिचार इति वाच्यम् । आत्मनि प्रकाशत्वानु-पपत्तेरुक्तत्वेनासिद्धेः ॥ त्वन्मत इति ॥ न च परीत्या तदुक्तिरिति वाच्यम् । स्वमते हेतोरसिद्धौ स्वार्थानुमानाभावेन परं प्रति प्रयोगानुपपत्तेः । ननु प्रकाशत्वमेव हेतुर्विवक्षित इत्यत आह ॥ निरस्तंचेति ॥ न चावरणनिवर्तकत्वमेव ज्ञानप्रभानुगतं प्रकाशत्वमिति वाच्यम् । द्वितीयज्ञानादौ द्वितीयप्रभादौ च तदभावेन ज्ञानत्वप्रकाशत्वाभावापत्तेः । न च निवृत्तियोग्यत्वं तत्राप्यस्तीति वाच्यम् । योग्यता-वच्छेदकाभावे योग्यत्वस्य वक्तुमशक्यत्वात् । अज्ञानतमस्साधारणस्यावरणत्वस्य निर्वक्तुमशक्यत्वाच्च ।

(कण्टकोद्धारः)

नचात्र व्यवहारप्रतिबन्धकत्वमेवावरणत्वमिति वाच्यम् । परोक्षज्ञानेन त्वन्मते सत्यप्यज्ञाने व्यवहारस्य जायमानत्वेन सत्यपि तमसिचाज्ञानेन व्यवहारस्य जायमानत्वेन तयोस्तादृशावरणत्वाभावात् । विस्तृतश्चैतदविद्यानुमानभङ्गे । नचात्मनः घटादिविषयकजन्यज्ञानस्वीकारात् कथं तदभावे साध्ये सिद्धसाधनमुक्तमिति वाच्यम् । घटादिज्ञानस्योत्पत्यनन्तरमुत्पद्यमानत्वाभावेन विशिष्टाभाव सत्त्वात् । मया वृत्तिज्ञानस्यान्तःकरणपरिणामत्वस्वीकारेणान्तःकरणस्यैव तदाश्रयत्वेनात्मनस्तदाश्रयत्वाभावस्य सिद्धत्वेन सिद्धसाधनसम्भवात् ॥ तवेति ॥ आत्मनः स्वप्रकाशरूपत्वादिति भावः ॥ स्ववेद्यत्वेऽपीति ॥ न च स्वविषयत्वेन पक्षविशेषणान्न तवाभिमतसिद्धिरिति वाच्यम् । स्वविषयत्वस्योपपादितत्वेन तद्विशेषणविशिष्टपक्षाभावादाश्रयासिद्धेः । नचेदं परवेद्यताङ्गीकर्तुर्विषयत्वमिति वाच्यम् परवेद्यत्वस्य प्रमाणबाधितत्वेन तं प्रति तथा प्रयोगस्यानुचितत्वात् । सर्वत्रैवं विधवचन सम्भवेन सिद्धसाधनस्यादूषणत्वापाताच्च । नन्वेवमवेद्यत्वश्रुतेः का गतिरित्यत आह ॥ ब्रह्मण इति ॥ न च सङ्कोचे कारणाभाव इति वाच्यम् । वृत्तिव्याप्यत्वं स्वीकुर्वता त्वयापि सङ्कोचस्य वाच्यत्ववेद्यत्वप्रतिपादकागमविरोधाच्च ॥ एवेति ॥ परामृष्टदूषणजातमेव दर्शयति ॥ असिद्धीति ॥ किमिदं क्रियात्वं किं धात्वर्थत्वं नाद्यः । शब्द शब्द व्यभिचारात् । न द्वितीयोऽसिद्धेः । अनुभूतौ परिस्पन्दत्वाभावात् । एवं प्रकाशत्वं ज्ञानत्वं चेत् ज्ञानपदजन्यज्ञाने सर्वोपसंहारेण जायमाने व्याप्तिज्ञाने च व्यभिचारः । चित्त्वं चेत् दृष्टान्ते साध्य साधनवैकल्यम् । एवं वस्तुत्वेपि द्रष्टव्यम् । स्वविषयत्वस्योपपादितत्वात् बाधश्च । विषयत्वसाधकानुमानैरेव प्राबल्याद्यविवेकदशायां सत्प्रतिपक्षश्च । आदिपदेनाप्रयोजकत्वादिपरिग्रहः । तर्हि कथमात्मरूपं ज्ञानं स्वविषयत्वरूपस्वप्रकाशत्ववत् । तत्र प्रमाणाभावात् । भट्टादिरीत्यापि प्रकाशोपपत्तेरित्यत आह ॥ तस्मादिति ॥ अतीतमिति ॥ अतीतादेरसत्त्वेन तत्र धर्मजननायोगात् । नचातीतस्यापि कारणाकारेण सत्त्वात् तत्र ज्ञाततजननमिति वाच्यम् । तेन कारणाकारज्ञानानुमानसम्भवेपि कार्याकारज्ञानानुमानासम्भवात् ॥ अहमिति ॥ उपलक्षणं चैतत् । सुखं साक्षात्करोमीत्यादिवत् ज्ञानं साक्षात्करोमीत्यनुभवस्य क्षणिकात्मविशेषगुणत्वादियुक्तीनाञ्च समानत्वादित्यपि द्रष्टव्यम् । तथा च भट्टमतरीत्या न ज्ञानप्रकाश इति भावः ॥ विरोधादिति ॥ तथाच प्राभाकरमतमयुक्तमिति भावः ॥ अनुभवविरोधादिति ॥ तथा च न तार्किकमतरीत्या प्रकाश इति भावः । ननु प्राभाकरमत उक्तं दूषणं भवतामपि समानम् । नचास्माभिर्ज्ञानस्य नित्यत्वं स्वीक्रियत इति वाच्यम् । तत्र प्रमाणाभावादित्यत आह ॥ चैत्रसुखदुःखादिकमिति ॥ न च साक्षिरूपापरोक्षनित्यज्ञानविषयत्वेन सिद्धसाधनमिति वाच्यम् । साक्षिरूपज्ञानानङ्गीकर्तारं प्रति साधनात् । त्वन्मते वृत्तिप्रतिबिम्बितस्यैव साक्षित्वेन तस्य नित्यत्वायोगाच्च । न च सहोत्पन्नज्ञानविषयत्वेन ज्ञातैकसत्त्वस्योपपत्या हेतोरप्रयोजकत्वमिति वाच्यम् । जन्यज्ञानस्य संनिकर्षजन्यत्वनियमेन सहोत्पत्ययोगात् । नन्वस्तु नित्यज्ञानम् । तस्य ज्ञानान्तरत्वे नैयायिकं प्रत्युक्तं अनवस्थितिदूषणं स्यादित्यत आह ॥ तत्स्वविषयमिति ॥ चैत्रीयं नित्यज्ञानमिति पक्षः । तेन नेश्वरज्ञानेंशतः सिद्धसाधनमिति भावः ॥ ईश्वरज्ञानवदिति ॥ न च साधनवैकल्यं शङ्क्यम् । तस्य विषयत्वानङ्गीकारे श्रुतिसिद्धसार्वज्ञ्यानुपपत्तेः ।

(कण्टकोद्धारः)

ज्ञानद्वयाङ्गीकारे प्रमाणाभावात् । न च स्वविषयत्वाभावेऽपि व्यवहारोपपत्तिरिति वाच्यम् । तद्विषयक-व्यवहारे तद्विषयकज्ञानस्यैव हेतुत्वस्योपपादितत्वात् । तथाच न द्वितीयहेतावप्रयोजकत्वम् । ननु च नित्यज्ञानविषयत्वे नैकं नियामकम् । न चेश्वर ज्ञानवत् वस्तुत्वमेव नियामकमिति वाच्यम् । सर्वविषय-त्वापत्तेः । नाप्यभेदः । सुखादावभावात् । नापि समानाधिकरणत्वमात्मन्यभावात् । तथाच अननुगतस्यैव नियामकत्वे वाच्ये किमपराद्धं प्राभाकरेण । तेनापि अन्यस्य स्वविषयकत्वे संनिकर्षो नियामकः । स्वाभेद एवेति चेन्न । स्वसंनिकर्षविशेषविषयत्वस्य नियामकत्वात् । स चाभेदात् स्वेन संनिकर्षायोगः । विशेषशक्त्या स्वेन संनिकर्षसंभवात् । न च धर्मादेः प्रत्यक्षत्वापत्तिः तस्यायोग्यत्वात् । योग्यसंनिकर्षस्यैव प्रयोजकत्वात् । योग्यतायाश्च फलबलकल्प्यत्वात् । तथाच न प्राभाकरतुल्यता । किञ्च जन्यज्ञानस्य जडत्वात् कथं स्वप्रकाशत्वमिति ॥ ज्ञानसाधनेति ॥ ज्ञानद्वयस्यानुभवादिति भावः । ननूक्तानुमाना-नामप्रयोजकत्वमनुकूलतर्काभावादित्यत आह ॥ सुप्तोत्थितस्येति ॥ न च संस्कारेण तदुपपत्तिरिति वाच्यम् । सुप्तावनुभवाभावेन संस्कारायोगात् । न च जाग्रत्कालीन संस्कारेण तदुपपत्तिः । सुप्तिकालीनपरामर्शात् । न च नित्यज्ञानस्य संस्काराजनकत्वेन परामर्शायोग इति वाच्यम् । संशयभिन्न विशिष्ट ज्ञानस्यैव संस्कार-जनकत्वात् । ननु वेदान्तरीत्याऽवेद्यत्वेपि व्यवहारादेरुपपत्तेरप्रयोजकत्वमित्यत आह ॥ अद्वैतरीत्येति ॥ नन्वस्तु ज्ञानस्य स्ववेद्यत्वरूपस्वप्रकाशत्वम् आत्मनः स्वप्रकाशत्वे किमायातमिति तत्राह ॥ अत्रात्मापीति ॥ आत्मापि स्ववेद्यत्वरूपस्वप्रकाशत्ववानिति व्यवहितेनान्वयः । अत्र कण्टकोद्धारः ज्ञानस्वप्रकाशत्वसाधनवद् द्रष्टव्यः ॥ स्वसमानकालीनेति ॥ स्वेन समानकालीनः स्वेन समानाधिकरणः अस्तित्वप्रकारकः स्वविशेष्यको यः सन्देहः तद्विरोधित्वादित्यर्थः । अत्र सामान्यव्याप्तौ अयं घट इत्याद्यनुभवे व्यभिचारवारणार्थानि सर्वाणि विशेषणानि । न चासिद्धिः । आत्मनि अहमस्मि न वेति सन्देहाभावात् । न च तेषां विशेषणानामसिद्धिवारकत्वेन वैयर्थ्यमित्यत आह ॥ अयं घट इत्यादि-ज्ञानमपीति ॥ उपसंहरति ॥ तस्मादिति ॥ इति आत्मनः पराभिमतस्वप्रकाशत्वभङ्गः ॥

## न्यायामृतप्रकाशः

॥ वेद्यत्वमिति ॥ पक्षीभूतं वेद्यत्वमित्यर्थः ॥ अर्थान्तरत्वादिति ॥ अनुभूतिः स्वप्रकाशेत्यत्राप्रसिद्धिवारणाय हीदमनुमानं प्रवृत्तम् अत्र सामान्यतः वृत्तिव्याप्यत्वं किञ्चिदवेद्यत्वं वस्तुसिद्धम् । न हि अनुभूतित्वादिति पूर्वानुमाने वृत्त्यव्याप्यत्वरूपं यदवेद्यत्वं तद्रूपं यत्स्वप्रकाशत्वं तत्साध्यम् । येन तेनानुमानेन तस्य सामान्य-प्रसिद्ध्युक्तिः संमता स्यात् । तथात्वेऽनुभूतिपदोक्तस्य ब्रह्मणोपि वेदान्तजन्यचरमवृत्तिविषयत्वेन वृत्तिव्याप्यत्वा-त्तदव्याप्यत्वरूपावेद्यत्वसाधने बाधः स्यादिति भावः ॥ तस्येति ॥ फलव्याप्यत्वस्य किञ्चिन्निष्ठात्यन्ताभावप्रति-योगित्वसाधने फलाव्याप्यत्वरूपस्वत्वप्रकाशत्वसिद्ध्या पूर्वानुमानेऽप्रसिद्धविशेषणत्वाभावेपि असाधारण्यं स्यात् । उक्तरीत्या फलस्याधिष्ठानचैतन्यरूपस्याप्रामाणिकत्वस्योक्तत्वेन अपरोक्षे घटादावभावेन फलाव्याप्यत्वसद्भावात् त्वत्पक्षे शुक्तिरूप्यादौ प्रातिभासिकेऽन्तःकरणवृत्तिप्रतिबिम्बित चैतन्याभिव्यक्ताधिष्ठानचैतन्यरूप फलाभावेन

(प्रकाशः)

फलाव्याप्यत्वसद्भावात् त्वन्मते धर्मादौ परोक्षे फलाभावेन तदव्याप्यत्वसद्भावेन तस्मिन्सपक्षेऽनुभूतित्व-हेतोरवर्तमानत्वादसाधारण्यमित्यर्थः ॥ व्यक्तिविशेष इति ॥ तथाच न तत्र सामान्यप्रसिद्ध्यपेक्षेत्यर्थः । नन्ववेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वस्य विशिष्टस्य पूर्वानुमाने साध्यत्वात् । तच्च न व्यक्तिविशेषे सिद्धम् । घटादौ रूप्यादौ च विशेषणाभावात् धर्मादौ विशेष्याभावात् । अतो नासाधारण्यमित्याशङ्क्य निराकरोति ॥ न चेति ॥ तर्ह्यप्रसिद्धविशेषणत्वं स्यादेव सामान्यतोऽप्रसिद्धावपि विशिष्टाप्रसिद्धेरनुगतत्वादित्याह ॥ तस्येति ॥ ननु नाप्रसिद्धविशेषणत्वम् । फलाव्याप्यत्वरूपावेद्यत्वाख्य स्वप्रकाशत्वस्यैव साध्यत्वेन तस्य सामान्यतः प्रसिद्धत्वात् । न च घटादौ मद्रीत्या त्वद्रीत्या रूप्यादौ व्यक्तिविशेषे तस्य सिद्धत्वेनासाधारण्यमिति वाच्यम् । किञ्चित्प्रत्यपि फलाव्याप्यत्वरूपावेद्यत्वस्यैव साध्यत्वात् मन्मते घटादौ तदभावात् धर्मादेश्च योगिनं प्रति फलव्याप्यत्वेन फलाव्याप्यत्वाभावात् । शुक्तिरूप्यादेरप्यविद्यावृत्तिप्रतिफलितचिद्वेद्यत्वेन फलव्याप्यतया फलाव्याप्यत्वाभावात् । नन्वविद्यावृत्तिप्रतिबिम्बितचैतन्यस्य कथं फलत्वम् अधिष्ठानचैतन्यस्यैव फलत्वादिति चेन्न फलं नाम साध्यं कार्यमिति यावत् यथोक्तं तर्कभाषायां प्रमैव फलं साध्यमित्यर्थ इति । एवं च वृत्तिप्रतिबिम्बितचैतन्यस्यापि जन्यत्वेन साध्यत्वात्फलत्वेन रूप्यादौ तद्व्याप्यत्वसद्भावान्नासाधारण्यमित्याशङ्क्य निराकरोति ॥ न चेति ॥ ननु स्वप्रकाशत्वानुमाने फलाव्याप्यत्वरूपविशेषणसिद्धावपि न विशिष्टस्वप्रकाशत्वसिद्धिरित्यत आह ॥ अवेद्यत्वेति ॥ विशेष्यभागानन्तर्भावेनैव स्वप्रकाशत्वलक्षणकरणान्नासिद्धिरिति भावः ॥ उक्तन्यायेनेति ॥ ब्रह्मणोपि स्वाकार-वृत्तिप्रतिबिम्बितचिद्रूपफलव्याप्यत्वेन तदभावरूपस्वप्रकाशत्वसाधने बाधादित्यर्थः । तृतीयपक्षे धर्मत्वानुमाने चिद्विषयत्वरूपवेद्यत्वस्य पक्षत्वे पूर्वत्र चिदविषयत्वरूपावेद्यत्वाख्यस्वप्रकाशत्वं साध्यं स्यात् । तत्र पृच्छामः किं वृत्तिप्रतिफलितचिदविषयत्वं विवक्षितम् उत शुद्धचिदविषयत्वं वा । आद्ये बाध इत्याह ॥ उक्तरीत्येति ॥ स्वाकारवृत्तिप्रतिफलितेत्यर्थः । न द्वितीयः घटादावसाधारण्यादित्याह ॥ शुद्धेति ॥ प्रतियोगीति ॥ धर्मत्वानु-मानेऽस्वप्रकाशत्वस्य पक्षत्वे स्वप्रकाशत्वरूपप्रतियोगिन एवाप्रसिद्ध्याऽस्वप्रकाशत्वस्यापि ज्ञातुमशक्यत्वेनाश्रयाज्ञानासिद्धेरित्यर्थः । किञ्च यदि स्वप्रकाशत्वरूपसाध्याभावरूपम् अस्वप्रकाशत्वं पक्षीकृत्य पूर्वानुमानसाध्यस्य स्वप्रकाशत्वस्य प्रसिद्धिरुच्यते तर्ह्यप्रसिद्धविशेषणमात्रोच्छेदरूपातिप्रसङ्गः स्यात् भूः शशविषाणोल्लिखिता भूत्वादित्यत्रापि अशशविषाणोल्लिखितत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वादित्येवं पूर्वानुमानसाध्याभावं पक्षीकृत्य साधयितुं शक्यत्वेन शशविषाणोल्लिखितत्वप्रसिद्धेरपि सामान्यतो वक्तुं शक्य त्वादित्याह ॥ सर्वत्रेति ॥ अनिर्वाच्यत्वभङ्ग इति ॥ शब्दप्रतिपाद्यत्वरूपे धर्मे केवलान्वयिनि किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वरूप-साध्याभावाद्व्यभिचारः । न चात्माश्रयप्रसङ्गेन स्ववृत्तित्वाभावेन साध्यसद्भावान्नव्यभिचार इति वाच्यम् । मिथ्यात्वदृश्यत्वादिवच्छब्दप्रतिपाद्यत्वादेरप्य नन्यथासिद्धधीबलेन स्ववृत्तित्वस्य अनिर्वाच्यत्वभङ्गे उक्तत्वा-दित्यर्थः । अत्यन्ताभावप्रतियोगित्वरूपे धर्मे व्यभिचारं चाह ॥ किञ्चेति ॥ तत्रेति ॥ तर्ह्यत्यन्ताभाव-प्रतियोगित्वस्य केवलान्वयित्वप्राप्त्याऽत्यन्ताभावप्रतियोगित्वरूप धर्मे साध्याभावेन धर्मत्वहेतोस्तत्रैव व्यभिचार इत्यर्थः ॥ यत इति ॥ यस्मिन्धर्मेऽत्यन्ताभावप्रतियोगित्वं नास्ति तस्यैव केवलान्वयित्वप्राप्त्याऽत्यन्ता-भावप्रतियोगित्वरूप एव धर्मे साध्याभावेन धर्मत्वहेतोस्तत्रैव व्यभिचार इत्यर्थः ॥ धर्म इति ॥ ननु

(प्रकाशः)

यतोऽत्यन्ताभावप्रतियोगित्वं व्यावर्तते तस्य दैवात् धर्मित्वे तत्र धर्मित्वे धर्मत्वहेतोर्न व्यभिचार इति चेन्न । धर्मधर्मिभावस्य कामगामित्वेन धर्मिणोपि धर्मत्वादिति भावः । स्वप्रकाशत्वानुमानेऽर्थान्तरं चाह ॥ अपि चेति ॥ ब्रह्मणो वेद्यत्वात्यन्ताभावरूपस्वप्रकाशत्वसाधनेऽर्थान्तरता । तथाहि त्वन्मते व्यावहारिकं वेद्यत्वं ब्रह्मणि तावदस्ति तादृशं च वेद्यत्वम् अवेद्यत्वरूपस्वप्रकाशत्वविरोधितया घटादौ दृष्टं तथाविधवेद्यत्वस्य ब्रह्मणि सत्त्वेपि पुनस्तत्र वेद्यत्वात्यन्ताभावरूपस्वप्रकाशत्वसाधने तस्य पारिभाषिकत्वप्राप्त्या तस्याऽस्माकमपीष्टत्वे नार्थान्तरतेत्यर्थः ॥ धर्मीति ॥ ब्रह्मणि च वेद्यत्वस्य सत्वेपि तस्य व्यावहारिकतया धर्मिसमसत्ताकत्वाभावान्न तस्य स्वप्रकाशत्वविरोधित्वं घटादौ धर्मिसमसत्ताकवेद्यत्वस्यैव स्वप्रकाशत्वविरोधितया दृष्टत्वात् । अतो नार्थान्तरमित्यर्थः ॥ तन्निरासेति ॥ ब्रह्मणि वृत्तिव्याप्यत्वफलव्याप्यत्वयोः सद्भावे तयोरवेद्यत्वरूपस्वप्रकाशत्वविरोधात्तन्निरासः क्रियते । स न स्यात् । तत्रापि पटादाविव धर्मि समसत्ताकवृत्तिव्याप्यत्वादेरेव स्वप्रकाशत्वविरोधित्वाद् ब्रह्मणि च व्यावहारिकतया धर्मिसमसत्ताकवृत्तिव्याप्यत्वादेरभावेन स्वप्रकाशत्वोपपत्तेस्तन्निरासस्य व्यर्थत्वादित्यर्थः । ततश्च धर्मिसमसत्ताकत्वविशेषणमदत्वा व्यावहारिकस्यापि वृत्तिव्याप्यत्वादेः स्वप्रकाशत्वविरोधित्वं वक्तव्यं । तथाच प्रकृतेपि व्यावहारिकस्य वेद्यत्वस्यापि स्वप्रकाशत्वविरोधित्वात्तत्सत्त्वेपि तदत्यन्ताभावरूपस्वप्रकाशत्वसाधने तस्य पारिभाषिकत्वापत्त्याऽर्थान्तरतेति भावः । सामान्यतोऽवेद्यत्वरूपस्वप्रकाशत्वप्रसिद्धिसाधकानुमानमाशङ्क्य निराकरोति ॥ अत एवेति ॥ अयं घट इति ॥ अत्र सत्यन्तं वेद्यत्वविशेषणं । तथा चैतद्घटान्यत्वविशिष्टवेद्यत्वेत्यर्थः । अत्र पटो दृष्टान्तः । एवं सति वेद्यत्वाधिकरणस्यापि पक्षीभूतघटस्य एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणत्वेन तदन्यत्वमादाय दृष्टान्ते पटे साध्यप्रसिद्धिः । पक्षे तु नैवं साध्यपर्यवसानम् । एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणं पक्षीभूतो घट एव तत्र तदन्यत्वस्य बाधात् अत एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणं किञ्चिदस्ति तदन्यत्वमादाय पक्षे साध्यपर्यवसानम् । एवं च यदेतद्घटान्यत्वविशिष्टं वेद्यत्वानधिकरणं किञ्चित् तदेवावेद्यरूपस्वप्रकाशमायास्यतीति द्रष्टव्यम् । अत्र वेद्यत्वानधिकरणान्य इत्येव कृते वेद्यत्वाधिकरणत्वस्य केवलान्वयित्वेन वेद्यत्वानधिकरणत्वस्याप्रसिद्धत्वेन तदन्यत्वरूपसाध्यमप्रसिद्धमित्यतः सत्यन्तम् । तथाचैतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणं च पक्षीभूतो घट एव प्रसिद्धः तदन्यत्वरूपसाध्यमपि पटे प्रसिद्धमिति भावः ॥ महाविद्ययेति ॥ नन्वस्यानुमानस्य महाविद्यासाधकत्वाभावान्महाविद्यया साध्यप्रसिद्धिरित्येतदसम्बद्धमिति चेन्न । महाविद्यासाधकानुमानसदृशानुमानेनेत्यर्थः । विशिष्टव्यतिरेक्यनुमानेनेति यावत् । मायिमते महाविद्येति विशिष्टव्यतिरेकिणः सङ्केत इत्यप्याहुः । क्वचित्तु इत्यादिना साध्यप्रसिद्धिरित्येव पाठः । अत एवेत्युक्तं विशदयति ॥ वेद्यत्वेति ॥ एतद्घटत्वे सतीति ॥ एतद्घटत्वविशिष्टेत्यर्थः । अत्रापि पटो दृष्टान्तः एतद्विशेषणाभावेऽप्रसिद्धिः । वेद्यत्वस्य केवलान्वयित्वेन तदनधिकरणत्वस्यैवाप्रसिद्ध्या तद्घटितसाध्यस्याप्रसिद्धत्वात् । तथा पटे व्यभिचारश्च स्यात् । तत्र पदार्थत्वसद्भावेपि तस्य वेद्यत्वेन वेद्यत्वानधिकरणान्यत्वघटिततया तत्वानधिकरणत्वरूपसाध्याभावात् । अत एतद्घटत्वे सतीत्युक्तम् । एवं चैतद्घटत्वविशिष्टवेद्यत्वानधिकरणं पट एवेति न साध्याप्रसिद्धिः न वा व्यभिचारः एतद्घटत्वविशिष्टवेद्यत्वानधिकरणे पटे तदन्यत्वाभावेन तदन्यत्वानधिकरणत्वरूपसाध्यस्यापि सत्वात् । अतो न व्यभिचारः ॥ प्रकरणसमेति ॥

(प्रकाशः)

वेद्यत्वानधिकरणान्यत्वरूप साध्याभावस्यापि तेनैव हेतुना साधयितुं शक्यत्वादित्यर्थः । अत्र केचित् पूर्वानुमान-साध्याभावस्यैवात्र साधनीयत्वेन तदर्थं एतद्घटान्यत्वे सतीति पाठं वदन्ति । तन्न । तथात्वे पुनः पट एव व्यभिचारापत्तेः । उक्तरीत्या एतद्घटान्यत्वविशिष्टवेद्यत्वानधिकरणं पक्षीभूतो घट एव । तदन्यत्वस्यैव पटे सद्भावेन तदन्यत्वानधिकरणत्वाभावादित्यवधेयम् । स्वरूपासिद्धत्वमेव दर्शयति ॥ अखण्डेति ॥ अनुभूतिरूप-शुद्धब्रह्मव्यक्तेरेकत्वेन तत्रानुभूतित्वस्याजातित्वात् । न चात्रापि घटाद्यवच्छिन्नचैतन्यरूपज्ञानान्यनेकानि सन्तीति वाच्यम् । जातेर्धर्मिसमसत्ताकभेदवद्व्यक्तिसापेक्षत्वनियमात् अन्यथा आकाशत्वस्यापि जातित्वापत्तेः । औपाधिकाकाशरूपव्यक्तीनां बहूनां तत्रापि सत्वात् । अतो धर्मिसमसत्ताक एव व्यक्तिभेदो वाच्यः । तथाचाकाशत्वं न जातिः औपाधिकाकाशानां धर्मिभूतस्वाभाविकाकाशसमसत्ताकव्यक्तिभेदवत्त्वाभावात् एवं प्रकृतेप्यवच्छिन्नचैतन्यव्यक्तिभेदस्यौपाधिकत्वेनानुभूतित्वजातिधर्मिभूतशुद्धब्रह्मसमसत्ताकत्वाभावात् । अतो नाऽनुभूतित्वं जातिः । एवं च जातित्वेन त्वदभिमतस्यानुभूतित्वहेतोः पक्षीभूतेऽनुभूतिशब्दाभिधेये शुद्धब्रह्मण्यभावात् स्वरूपा-सिद्धिरिति भावः ॥ अनुभाव्यादीति ॥ विषयाद्यभावादित्यर्थः । आत्मरूपज्ञानस्य विषयाद्यभावाज्ज्ञानत्वमेव नास्ति घटवदित्यर्थः ॥ विपक्षाद्व्यावृत्तमिति ॥ अनैकान्तिकमित्यर्थः । तस्य अनुभूतित्वहेतोः । अनात्मनि वृत्तिरूपज्ञाने ॥ तत्रैवेति ॥ पक्षबहिर्भूते परोक्षानुभव इत्यर्थः । ननु न व्यभिचारः परोक्षज्ञानभिन्नत्वे सतीति विशेषणात् यद्वा अनुभूतित्वादित्यस्य चिद्रूपानुभवत्वादित्यर्थस्य विवक्षितत्वादित्यत आह ॥ तन्निरासार्थमिति ॥ आद्ये परोक्षज्ञाने विद्यमानमनुभूतित्वं यथा तत्र न स्वप्रकाशत्वं साधयति एवं पक्षेपि न साधयेत् । द्वितीये तु हेतुरस्तु साध्य मास्त्वित्यप्रयोजकतेत्यर्थः । प्रत्यक्ष श्रुतिभ्यां बाधं चाह ॥ अपि चेति ॥ दुःखादिवदित्यादि-वतित्रयं च्छलार्थं । दुःखादेरिव स्मृतेरिव परोक्षानुभवस्येव च आत्मनोपीत्यन्वयः । प्रत्यक्षानुव्यवसायाकार-प्रदर्शनम् ॥ अपरोक्षेत्यादि ॥ ननु न प्रत्यक्षबाधः अपरोक्षानुभवं जानामीति प्रत्यक्षेणापरोक्षानुभवस्या-परोक्षवृत्तिवेद्यत्वमेव विषयीक्रियते न तु ज्ञानविषयत्वं वृत्तेरज्ञानत्वात् । अथवा व्यवहारविषयत्वमात्रमेव प्रतीयते न ज्ञानवेद्यत्वम् अतो नावेद्यत्वरूपस्वप्रकाशत्वसाधने तद्बाध इत्याशङ्क्य निराकरोति ॥ न चात्रेति ॥ ज्ञप्तीति ॥ ज्ञाधातोर्ज्ञप्त्यर्थत्वादिति भावः । दृष्टान्तग्रहणाभिप्रायमाह ॥ दुःखमिति ॥ यदि जानामीत्यत्रापरोक्षानुभवस्या-परोक्षवृत्तिवेद्यत्वमपरोक्षव्यवहारविषयत्वं वा प्रतीयत इत्यङ्गीक्रियते तर्हि दुःखं जानामीत्यत्रापरोक्षवृत्ति-विषयत्वमपरोक्षव्यवहारविषयत्वं वा दुःखादेः प्रतीयते न तु साक्ष्यनुभवविषयत्वमित्यपि स्यादित्यर्थः । न चेष्टापत्तिः वृत्तिविलम्बे कदाचिद्दुःखज्ञानविलम्बापातादिति भावः । अनुभूतेरनुभवावेद्यत्वरूपस्वप्रकाशत्व-साधकानुमानम् अनुभववेद्यत्वरूपास्वप्रकाशत्वसाधकानुमानेन सत्प्रतिपक्षितमित्याह ॥ अनुभूतिरिति ॥ स्फुरणम् अपरोक्षानुभवः ॥ व्यवहारयोग्येति ॥ व्यवहारजननयोग्येत्यर्थः । क्वचित्तथैव पाठः । पूर्वानुमानयोः कदाचिद-परोक्षानुभवविषयत्वस्यापि साध्यार्थत्वोपपत्तेः तृतीयानुमानम् । अत्र नञ्द्वयेन सदातद्विषयत्वं लभ्यत इति ध्येयम् । अनुमानद्वयेपि अपरोक्षव्यवहारयोग्येति विशेषणं स्वरूपकथनम् । नचान्त्यानुमाने साध्यावैशिष्ट्यम् । अपरोक्षव्यवहारजननयोग्यत्वविशिष्टस्य साध्यत्वादिति ज्ञेयम् । ननु नाप्रयोजकता अनुकूलतर्क सद्भावात् तथाहि अवेद्यत्वरूपस्वप्रकाशत्वानङ्गीकारेऽनुभूतिरूपस्यात्मनो वेद्यत्वमुक्तं स्यात् । तत्र परवेद्यत्वमभिप्रेतं स्ववेद्यत्वं वा

(प्रकाशः)

नाद्य इत्याह ॥ नन्वनुभूतिरूपस्येति ॥ अनवस्थेति ॥ अनुभवावेदकस्य परस्यानुभवस्यापि पुनरन्येन वेद्यत्वेऽनवस्था स्यादित्यर्थः । दूषणान्तरं चाह ॥ परेति ॥ आत्मनि विषये । आदिपदेन विपर्ययः ॥ स्यादिति ॥ अनुभूतिरूपात्मनिश्चायकानुभवाभावादिति भावः । इष्टापत्तिपरिहारायाह । न चेति ॥ न हीत्यर्थः । न द्वितीयः क्रियायाः कर्तृत्वविरोधादित्याह ॥ स्ववेद्यत्वंत्विति ॥ तत्राद्यपक्षं तावदङ्गीकुर्मः । न चानवस्था बुभुत्साभावेन कस्यचिदनुभवस्य स्ववेद्यत्वाङ्गीकारेण वा तत्परिहारसम्भवात् यदत्रोक्तं पराभावदशायामात्मनि संशयादिः स्यादिति तत्रेष्टापत्तिः । नन्वहमनहंवेति संशयादिरात्मनि न दृष्ट इति चेत्तत्राह ॥ त्वन्मत इति ॥ तथाचात्मनि संशयाद्यभावोपपादनायास्योदाहरणमयुक्तमिति भावः । अहमर्थात्मनि तु संशयादिकमस्त्येवेत्याह ॥ तदिति ॥ शब्देति ॥ उपदेशाद्यभावदशायां सन्देहोस्त्येवेत्यर्थः । तथा च यत्र सन्देहादिकं नास्ति स अहमर्थस्त्वन्मते आत्मभिन्न एव । यत्रत्वात्मनि सन्देहः स न त्वन्मते । अत इष्टापत्तिरित्यर्थः । एवं प्रौढवादेनोक्त्वा द्वितीयपक्षमङ्गीकृत्याह ॥ किं चेति ॥ स्वस्य अनुभूतिरूपसाक्षात्कारस्य । तथा च साक्षात्कारे विषयस्य कारणत्वादात्मसाक्षात्कारस्य स्वविषयकत्वे स्वस्य स्वजन्यत्वप्राप्त्यात्माश्रयेणासम्भवादित्यर्थः ॥ स्वजनकेति ॥ साक्षात्कारजनकेत्यर्थः । स्वस्य स्वविषयकत्वे स्वस्य स्वजनकेन्द्रियसंनिकर्षार्थं स्वस्य स्वापेक्षयापूर्ववृत्तित्वं वाच्यं तच्चात्माश्रयेणायुक्तमित्यर्थः ॥ विषयेति ॥ विषयविषयिभावस्य सम्बन्धस्य संयोगादिवद्विष्ठत्वात् । आत्मनः स्वविषयकत्वे विषयविषयिभावरूपद्विष्ठसम्बन्धाभावादित्यर्थः । ज्ञेयत्वे स्ववेद्यत्वे ॥ विरुद्धस्येति ॥ क्रियात्वकर्मत्वयोः सहानवस्थितत्वेन विरुद्धत्वं द्रष्टव्यम् । विषयिणः विषयीकर्तुर्ज्ञानस्य विषयत्वे स्ववेद्यत्वे ॥ तस्येति ॥ परसमवेतक्रियाजन्यफलशालित्वरूपस्य कर्मत्वस्य कर्तृत्वस्य चैकस्मिन् ज्ञानेऽसम्भवादित्यर्थः ॥ अन्यत्वेति ॥ परशब्दस्य स्वभिन्नार्थकत्वात्तस्य चात्माश्रयप्रसङ्गेन कर्त्रन्यत्वे तात्पर्यादित्यर्थः । आत्मस्वरूपज्ञानस्य चैतन्यरूपज्ञानस्य ॥ ईश्वरज्ञानवदिति ॥ तार्किकरीत्या ज्ञाननित्यत्वे सम्भावनायोक्तम् ॥ नित्यत्वेनेति ॥ तथा च विषयजन्यत्वस्य स्वजनकसंनिकर्षापेक्षायाश्चाभावादित्यर्थः ॥ अन्यथेति ॥ नित्यत्वेनाविरोधमनङ्गीकृत्य साक्षात्कारस्य विषयजन्यत्वादिना स्वविषयकत्वनिराकरणे साक्षात्कारस्य स्वविषयकत्वाभावेपि व्यवहारहेतुत्वमङ्गीकृतं तदपि न स्यात् । व्यवहारहेतुसाक्षात्कारस्यापि व्यवहारविषयजन्यत्वनियमेन स्वव्यवहारहेतुसाक्षात्कारस्यापि स्वव्यवहारविषयजन्यत्वावश्यंभावेन स्वजन्यत्वं वक्तव्यं तच्चात्माश्रयेण विरुद्धमित्यादिदोषः सम इत्यर्थः ॥ अतीतेत्यादि ॥ अतीतादित्रयविषयकज्ञानादेरित्यर्थः । स्वमते आरोपितस्यात्यन्तासत्वेपि पररीत्या पृथगुक्तिः ॥ उभयेति ॥ ज्ञानकालेऽतीतादिरूपविषयाभावेपि स्थितस्य विषयविषयिभावस्य द्विष्ठत्वासम्भवादित्यर्थः । क्रियात्वकर्मत्वयोः समावेशसद्भावान्नविरोध इत्याह ॥ कृतीति ॥ यथा पुण्यसाधनीभूतकाशीनिवासरूपो यत्नविशेषो गमनादिप्रयत्नसाध्य इत्येवं कृतिविशेषस्यापि कार्यत्वं कृतिविषयत्वरूपकर्मत्वमस्ति तद्वदित्यर्थः ॥ इच्छेति ॥ अस्माकं धर्ममार्ग एवेच्छा भूयादितीच्छाविशेषस्यापीच्छाविषयत्वरूपेष्टत्ववदित्यर्थः । व्यवहृतेर्व्यवहारस्य । व्यवहार्यत्ववत् व्यवहृतिशब्देनेति शेषः । अभिधायाः वाचकत्वरूपशक्तेः ॥ स्वेति ॥ अभिधाशब्देनेत्यर्थः । वाचकस्यापि वाच्यत्ववदिति यावत् ॥ व्याप्तिज्ञानस्येति ॥ तस्यापि दृश्यत्वेन स्वविषयकत्वात् । अन्यथा सर्वोपसंहारवती व्याप्तिर्नसिद्ध्येदित्यर्थः ॥ मिथ्यात्वेति ॥ अन्यथाऽनुमिति

(प्रकाशः)

मिथ्यात्वालाभेन ब्रह्मातिरिक्तसर्वमिथ्यात्वं न सिध्येदिति भावः ॥ उपपत्तेरिति ॥ एकक्रियाया अपि कर्मत्वोपपत्तेर्विरोधासिद्धिरिति भावः ॥ अज्ञस्यैवेति ॥ अज्ञानं विषयीकर्तुरित्यर्थः । अज्ञेयत्वस्य अज्ञानकर्मत्वस्य । ''आश्रयत्वविषयत्वभागिनी''ति वचनादिति भावः । विषयिण्याः मिथ्यात्वं विषयीकुर्वन्त्याः ॥ शब्दशब्दस्येति ॥ शब्द इति शब्दस्येत्यर्थः । ननु कर्तुरेव कर्मत्वे कर्त्रन्यत्वगर्भितकर्मलक्षणविरोध इत्यत आह ॥ परेति ॥ तर्हि किं कर्मलक्षणमित्यत आह ॥ क्रियेति ॥ कर्तुरपि ज्ञानरूपक्रियाविषयत्वसम्भवेनेदं कर्तुः कर्मत्वोक्त्यविरोधीति ध्येयम् । न चासनादिक्रियाविषये आधारेपि कर्मत्वप्रसङ्ग इति वाच्यम् । आधारस्याविषयत्वात् । अन्यथा स्थाल्यादेरपि पाकविषयत्वापातादिति द्रष्टव्यम् । यदुक्तं क्रियात्वकर्मत्वयोरविरोधोपपादनाय कृतिविशेषस्य कार्यत्ववदित्यादि तत्र शङ्कते ॥ नन्विति ॥ ॥ कृत्याद्यन्तरमिति ॥ स्वभिन्नकृतीच्छाविषय इत्यर्थः । एवं च क्रियात्वकर्मत्वयोरेकत्रैव समावेशो नेदमुदाहरणमिति भावः । परमुखेनैवोत्तरं वाचयितुं प्रतिबन्दीं गृह्णाति ॥ गत्यादाविति ॥ गत्याद्यन्तरेति ॥ स्वभिन्नगत्याद्यन्तरेत्यर्थः । यदुक्तं कृत्यादिः कृत्याद्यन्तरं प्रत्येव विषय इति तन्न युक्तम् । लोके गत्यादिक्रियायाः स्वविषयत्वादर्शनात् स्वभिन्नस्वसजातीयगत्याद्यन्तरविषयत्वस्याप्यदर्शनात् । कृत्यादेस्त्वयोच्यमानं स्वभिन्नकृत्याद्यन्तरविषयत्वमपि न स्यादित्यर्थः । तत्रोत्तरमाशङ्कते ॥ यदि चेति ॥ विचित्रेति ॥ न हि सर्वैर्भावैरेकविधैर्भाव्यमिति नियमोस्तीत्यर्थः ॥ सजातीयेति ॥ कृत्याद्यन्तरेत्यर्थः । अनुभूतेः अनुभूतिरुपक्रियायाः । स्वविषयत्वं स्वकर्मकत्वम् । अन्यथा स्वविषयकत्वाभावे । व्यवहार-जनकत्वं त्वदङ्गीकृतमित्यर्थः ॥ इत्युक्तमिति ॥ तद्व्यवहारजनकत्वमस्तीति चेन्न । तत्र स्वविषयकत्वस्यैवाभावात् । कुत इति चेत्तत्राह ॥ व्याप्तिज्ञानेति ॥ नन्वेतदयुक्तम् । यथाहि मन्मते चितश्चिदविषयत्वेपि न तत्सिद्ध्यभावः वृत्तिव्याप्यत्वमात्रेण तदुपपत्तेः एवं व्याप्तिज्ञानादेः स्वविषयकत्वाभावेपि सर्वोपसंहारवती व्याप्तिरुपायान्तरेण सिद्धा भविष्यतीति चेत्तत्राह ॥ न हीति ॥ एवं व्याप्तिज्ञानादेः स्वविषयकत्वाभावे सर्वोपसंहारवद्व्याप्त्याद्यसिद्धिरूपं दूषणमनादृत्य स्वाविषयकस्यापि व्याप्तिज्ञानादेः चिद्वत् स्वस्मिन्व्यवहारहेतुत्वमात्रमेवाङ्गीक्रियते न स्वविषयकत्वमित्याशङ्क्य निषेधति ॥ न चेति ॥ तदविषयकस्यापि तद्व्यवहारहेतुत्वेऽतिप्रसङ्गमाह ॥ घटादीति ॥ तस्मिन्घटे । तद्धेतुत्वं व्यवहारहेतुत्वम् । तद्विषयकत्वं घटविषयकत्वम् । तथा च घटाविषयकस्यैव घटज्ञानस्य घटव्यवहारहेतुत्वमस्त्वित्यतिप्रसङ्ग इत्यर्थः । किं च यद्दृश्यं तन्मिथ्येति व्याप्तिज्ञानस्य दृश्यत्वरूपव्याप्यतावच्छेदकावच्छिन्नविषयकत्वात् व्याप्तिज्ञानस्यापि दृश्यत्वावच्छिन्नस्वविषयकत्वमेव अन्यथा व्याप्तिज्ञाने दृश्यत्वाभावेऽप्रामाणिकत्वापत्त्या तदसिद्धिप्रसङ्गात् । एवं मिथ्यात्वानुमितेरपि व्यापकतावच्छेदकावच्छिन्नविषयकत्वादनुमितेरपि मिथ्यात्वरूपव्यापकतावच्छेदकावच्छिन्नत्वात्स्वविषयकत्वमेव । अन्यथा अनुमितेः स्वस्मिन्मिथ्यात्वविषयकत्वाभावे ब्रह्मव्यतिरिक्तसर्वमिथ्यात्वसाधकत्वं न स्यादित्याह ॥ व्याप्तिज्ञानादेरपीति ॥ यद्दृश्यं तन्मिथ्येति ज्ञानस्य स्वविषयत्वेऽनुभवं च साधकमाह ॥ घट इति ॥ अनुभवादनुव्यवसायात् । सङ्गृह्णाति ॥ एवं चेति ॥ मामहं जानामीति प्रत्यक्षेण तथा तदात्मानमेवावेदिति श्रुत्येति सम्बन्धः । ननु ज्ञप्तिरूपक्रियायां कर्तुरेव कर्मत्वाङ्गीकारे गमनादिक्रियायामपि कर्तुरेव कर्मता स्यादित्यतो ज्ञप्तिक्रियावैषम्यमाह ॥ गमनादौ त्विति ॥ अन्यथा कर्तुः कर्मत्वानङ्गीकारे ॥ शब्देति ॥ शब्दः इममर्थमभिधत्त इत्यभिधान-

(प्रकाशः)

रूपक्रियाकर्तुरेव शब्दशब्दस्य स्ववाच्यत्वदर्शनेन कर्मत्वं दृष्टं तन्न स्यादित्यर्थः । तामेवाह ॥ अवेद्यत्व इति ॥ ब्रह्मण इति शेषः । यद्यवेद्यत्वरूपं स्वप्रकाशत्वमङ्गीक्रियते तर्हि तत्र पृच्छामः ब्रह्म अवेद्यत्वसाधकप्रमाणवेद्यं न वा आद्ये ब्रह्मणोऽवेद्यत्ववचनं व्याहतं द्वितीये ब्रह्मणोऽवेद्यत्वसाधकप्रमाणवेद्यत्वाभावे तस्यावेद्यत्वासिद्ध्याऽवेद्यत्ववचनं व्याहतमित्यर्थः ॥ प्रामाण्येति ॥ ब्रह्मणोऽवेद्यत्वे वेदान्तानां ब्रह्मप्रमाजनकत्वरूपं प्रामाण्यं न स्यादित्यर्थः । किं च ब्रह्मणोऽवेद्यत्वे ब्रह्मविचारविधिवैयर्थ्यं स्यात् ब्रह्माज्ञाननिवृत्तिश्च न स्यादित्याह ॥ ब्रह्मविचारेत्यादिना ॥ ननु ब्रह्मणोऽवेद्यत्वे वेदान्तानां ब्रह्मणि प्रामाण्यायोग इत्युक्तमयुक्तम् । तत्प्रमाजनकत्वेन तत्प्रामाण्याभावेपि तदज्ञाननिवर्तकत्वमात्रेण प्रामाण्यमुपपद्यत इत्येतदेतेनैव निरस्तम् । तद्विषयकत्वाभावे तदज्ञाननिवर्तकत्वायोगात् अतद्विषयकज्ञानेन तदज्ञाननिवृत्तौ घटज्ञानेनापि निवर्तेतेत्यतिप्रसङ्गस्योक्तत्वादित्याशयेनाह ॥ एतेनेति ॥ आत्मनोऽवेद्यत्वे तदसिद्धिरेव स्यादित्याह ॥ आत्मन इति ॥ ननु स्वतः सिद्ध इत्यस्य स्वेनैव ज्ञात इत्यर्थत्वे हि स्वविषयत्वमापाद्येत किन्तु स्वविषयकत्वाभावेपि स्वजन्यव्यवहारयोग्यत्वाङ्गीकारात् स्वतः सिद्ध इत्यस्य स्वजन्यव्यवहारयोग्य इत्येवार्थो विवक्षित इति न स्वविषयत्वापात इत्याशङ्क्य निषेधति ॥ न चेति ॥ व्यवहारेति ॥ स्वजन्यव्यवहारेत्यर्थः ॥ ज्ञातत्वातिरेकेणेति ॥ ज्ञातत्वव्यतिरेकेणेत्यर्थः ॥ यथा हि वह्निव्यतिरेकेण धूमो नास्तीत्युक्ते धूमस्थितिप्रयोजकत्वं वह्नेर्लभ्यते । एवं ज्ञातत्वव्यतिरेकेण व्यवहारयोग्यत्वं नास्तीति व्यवहारयोग्यतास्थितौ ज्ञातत्वस्य प्रयोजकत्वेन तदभावे व्यवहारयोग्यत्वमेव न स्यादित्यर्थ इति संप्रदायः । तथा च ज्ञातत्वातिरेकेण व्यवहारयोग्यत्वाभावादित्यनेन ज्ञातत्वव्यवहारयोग्यत्वयोरभेदप्रतीतिः परास्तेति ध्येयम् । किं च यदि स्वजन्यव्यवहारयोग्यत्वात्स्वतः सिद्धत्वं तर्हि मुक्त्यवस्थायां स्वतः सिद्धिर्न स्यात् तदा योग्यतारूपधर्माभावादित्याह ॥ मुक्ताविति ॥ अन्यथेति ॥ सिद्ध्युपायभूतप्रमाणेन विनैव वस्तुसिद्धौ ॥ सर्वमिति ॥ वेदान्तानां ब्रह्मणि प्रामाण्यं ब्रह्मविचारविधिर्ब्रह्माज्ञाननिवृत्तिश्चेति सर्वमित्यर्थः ॥ सत्वादिति ॥ चैतन्यादिरूपफलस्याप्रामाणिकत्वेन फलाव्याप्यत्वस्य घटादावपि सुवचत्वादिति भावः । वित्तेः स्ववेद्यत्वाभावे वित्तित्वं न स्यादित्युक्तमप्रयोजकत्वपरिहारायोपपादयति ॥ भुक्तेः सभोज्यत्ववदिति ॥ भोज्यरूपविषयसाहित्यनियमवदित्यर्थः । अस्तु सवेद्यत्वमिति चेत्तत्राह ॥ मुक्तौ चेति ॥ तथाचात्मस्वरूपवित्तेः मुक्तौ पराभावेन तद्विषयकत्वायोगात् स्वविषयकत्वस्य चानङ्गीकाराज्ज्ञानत्वमेव न स्याद्घटवदित्यर्थः ॥ उक्तं चेति ॥

ज्ञातृज्ञेयविहीनं ते ब्रह्म ज्ञानात्मकं यदि ॥
भोक्तृभोज्यविहीनापि भवेत्तर्हि भुजिक्रिये-

त्युक्तमित्यर्थः ॥ आत्मस्वरूपवित्तेः स्ववेद्यत्वाभावे स्वव्यवहारहेतुत्वं स्वस्मिन्संशयादिविरोधित्वं च न स्यादित्युक्तमुपपादयति ॥ वित्तेरिति ॥ ननु तद्विषयत्वाभावेपि स्वस्मिन्व्यवहारहेतुत्वं स्वनिर्वाहकत्वादुपपद्यत इत्यन्यथासिद्धिमाशङ्क्य निराकरोति ॥ न चेति ॥ स्वनिर्वाहकत्वोक्त्यैवैकस्यां क्रियायां कर्तृत्वकर्मत्वयोः प्राप्तिरित्याह ॥ स्वेति ॥ ननु स्वनिर्वाहकत्वेन प्रसिद्धोऽध्ययनविधिस्तथात्त्वेन प्रसिद्धा दीपप्रभा वाऽध्येतव्यत्वविधानरूपम् अन्धकारनिवर्तनरूपं च स्वकार्यमन्यत्रेव स्वस्मिन्नपि करोति तथापि न स्वकर्मकत्वम् एवमिहाप्यात्मरूपवित्तेः

(प्रकाशः)
स्वस्मिन्व्यवहारादिकर्तृत्वेन स्वनिर्वाहकत्वेपि न स्वकर्मकत्वमित्यत आह ॥ स्वनिर्वाहकमिति ॥ स्वस्मिन्निति ॥ अध्ययनविधिः स्वस्याध्येतव्यत्वं विधत्ते प्रभा च स्वस्मिन्नप्यन्धकारसम्बन्धं निवर्तयतीत्यर्थः ।

ननु स्वस्मिन्स्वकार्यकरणे न स्वविषयकत्वं तन्त्रं यथा ''गाङ्कुटादिभ्य'' इति सूत्रे कुट आदिर्येषां कुटादिगणस्थानां तेभ्यः कुटादिभ्यः किञ्चित्कार्यं विहितं तत्र बहुव्रीहेः समस्यमानपदार्थातिरिक्तान्यपदार्थमात्रविषयकत्वेन कुटादिभ्य इति बहुव्रीहेरपि कुटादि रूपान्यपदार्थमात्रविषयकत्वमेव न कुटविषयकत्वं कुरूणां क्षेत्रमित्यत्र कुरूणामिव कुटस्याप्युपलक्षणमात्रत्वात् एवं चायं बहुव्रीहिःयत्स्वकार्यं विहितमस्ति तत्स्वाविषयेपि कुटे कुटादाविव करोत्येव एवमात्मरूपं ज्ञानं स्वाविषयकमपि स्वस्मिन्व्यवहारादिरूपं कार्यं करिष्यत्येवेत्याशङ्क्य तदप्येतेनैव निरस्तमित्याह ॥ एतेनेति ॥ एतेनेत्युक्तमेव विशदयति ॥ बहुव्रीहेरिति ॥ बहुव्रीहावन्यपदार्थस्तावत्समुदाय एव तत्र च बहुव्रीहेः समुदायरूपेऽन्यपदार्थे शक्तिर्वा लक्षणा वास्तु तथापि बहुव्रीहिः स्वाविषये कार्यं न करोत्येव कुटादिभ्य इत्यत्राप्यन्यपदार्थरूपसमुदायान्तर्गतकुटादिवत् कुटस्यापि तत्समुदायान्तर्गतत्वेन शक्त्या लक्षणया वा बहुव्रीहिविषयत्वमेव समुदायेन समुदायिनां सम्बन्धादित्यर्थः । मते वा कुटादिवदन्यपदार्थभूतसमुदायान्तर्गतस्य कुटस्यापि कुटादिवत् शक्त्या लक्षणया वा बहुव्रीहिविषयत्वेनेत्यन्वयः । ननु तद्गुणसंविज्ञानबहुव्रीहौ तस्यान्यपदार्थस्य ये गुणा अवयवादयस्तेषां कार्ये संविज्ञानम् आनयनादिक्रियान्वयो भवति गुणान्विना गुणिनम् आनयनाद्ययोगात् न चेह कुटिः कुटादेरवयवादिर्भवति अतः कथं तस्य बहुव्रीहिविषयत्वमिति शङ्कां कैयटोदाहृतन्यायेन परिहरति ॥ चैत्रेति ॥ तद्गुणसंविज्ञानेत्यत्र गुणशब्देन नावयवादिरेव विवक्षितः अपि तूपलक्षणादिसाधारणं व्यावर्तकमात्रं तथा च चैत्रशालास्था ब्राह्मणा आनीयन्तामित्युक्ते चैत्रोपि यदि ब्राह्मणो भवति स्वशालास्थश्च तदा सोप्यानीयत एव एवं कुटादीन् प्रत्युपलक्षणस्यापि कुटेः कुटादिकार्येऽन्तर्भावः स्यादेव समुदायेन समुदायिनां सम्बन्धादित्यर्थः । अन्यपदार्थः समुदायः स च बहुव्रीहिसमासार्थ इत्यत्र संमतिमाह ॥ उक्तं हीति ॥ उद्भूतानामवयवानां भेदो विशेष एव समुदायः माषादिसमुदाये तथा दर्शनात् स च बहुव्रीहिसमासार्थ इत्यर्थः ॥ स्वस्मिन्निति ॥ व्यवहारजनने संशयादिनिवर्तने चेत्यर्थः ॥ पक्षादन्यत्रेति ॥ ज्ञानं स्वविषयकम् । स्वस्मिन्व्यवहारादिजनकत्वादित्यस्माभिरुक्ते स्वस्मादन्यत्रैव व्यवहारादिजनने स्वविषयकत्वं तन्त्रम् । न तु स्वस्मिन्नित्युक्त्या पक्षादन्यत्रैवायं नियम इत्युक्तं स्यात् तथा च धूमाग्न्योः साहचर्यनियमः पक्षादन्यत्रैव न तु पक्ष इत्यपि वक्तुं शक्यत्वेनातिप्रसङ्ग इत्यर्थः ॥ दुःखादीति ॥ अन्यत्र स्वकार्यजनने तद्विषयकत्वं प्रयोजकं स्वस्मिन्कार्यजनने तु स्वाभेद एव प्रयोजकश्चेत्तर्हि दुःखविषयकत्वाद्वेषस्य द्वेषकार्यभूता निवृत्तिर्दुःखे भवति दुःखद्वेषाद्दुःखं निवर्तत इति यावत् एवं द्वेषः स्वस्मिन्नपि स्वकार्यभूतां निवृत्तिं कुर्यात् स्वाभेदस्य सत्वात् । न चेष्टापत्तिः दुःखद्वेषविषये कस्यापि निवृत्त्यभावात् । तथा दुःखद्वेषे दुःखेच्छानिवर्तकत्वरूपमिच्छाविरोधित्वमस्ति द्वेषेण दुःखेच्छाया अनुत्पत्तेः एवं स्वाभेदस्य स्वस्मिन्सत्वात्स्वस्मिन्नपि स्वस्येच्छानिवर्तकत्वं स्यात् न चेष्टापत्तिः । अस्मिन्पापिष्ठे द्वेष एवास्माकमभिवर्धतामिति द्वेषे इच्छाया एव दर्शनेन द्वेषस्य तद्विरोधित्वाभावात् । एवं च स्वस्मिन्नपि व्यवहारजनने स्वविषयकत्वस्य तन्त्रत्वे तु न दोषः । द्वेषस्य स्वविषयकत्वाभावेन स्वस्मिन्निवृत्त्यभावस्य इच्छाविरोधित्वाभावस्य चोपपत्तेरित्यर्थः ।

(प्रकाश:)

स्वस्मिन्स्वकार्यजनने स्वविषयकत्वं विहाय स्वाभेदमात्रस्य प्रयोजकत्वेऽतिप्रसङ्गानाह ॥ ब्रह्माज्ञानस्येत्यादिना ग्रन्थेन ॥ ब्रह्माज्ञानस्य यथा स्वविषये ब्रह्मणि प्रकाशप्रतिबन्धरूपस्वकार्यकारित्वम् एवं स्वाभेदस्य सद्भावात्स्वस्मिन्प्रकाशप्रतिबन्धकत्वसम्भवादिति भावः ॥ स्मरणेत्यादि ॥ स्मरणस्य वृत्तिरूपस्य परोक्षानुभवस्य च स्वविषये व्यवहारादिरूपस्वकार्यकारित्ववत् स्वस्मिन्नपि व्यवहारादिकं कुर्यात् स्वाभेदसद्भावात् स्वविषयकत्वस्य तन्त्रत्वे तु तदभावान्नोक्तदोष इत्यर्थः । अपरोक्षानुभवस्यैवोक्तौ परमते चैतन्यस्यैवापरोक्षानुभवरूपत्वात्तस्य च स्वाभेदप्रयुक्तं स्वस्मिन्स्वव्यवहारहेतुत्वं परेणाङ्गीकृतमेवेति इष्टापत्तिरेव स्यात् । अतः परोक्षानुभवरूपस्य वृत्तिज्ञानस्येत्युक्तम् । नन्वत्रापीष्टापत्तिः चिद्वद्वृत्तिज्ञानस्यापि स्वस्मिन्स्वव्यवहारहेतुत्वाङ्गीकारादिति चेत्तत्राह ॥ वृत्तेरपीति ॥ स्वप्रकाशत्वं स्यात् तद्वदेवेति वर्तते । न चात्रापीष्टापत्तिः । वृत्तिज्ञानस्य जडत्वेन स्वप्रकाशत्वानङ्गीकारात् । एतावन्तं कालं सुखमहमस्वाप्समिति परामर्शरूपस्वप्रकाशत्वसाधकयुक्तेस्तत्राप्रवर्तनादिति भावः । ननु स्वाभेदप्रयुक्तस्वस्मिन्स्वकार्यकारित्वनियमश्चैतन्यरूपज्ञप्तावेवोच्यतेऽतो नोक्तातिप्रसङ्गसन्ध इत्यत आह ॥ मैत्रेति ॥ चैत्रमैत्रावुभावपि यदा सुप्तौ तदा मैत्रचैतन्यरूपज्ञानस्य चैत्रचैतन्यरूपज्ञानेन पारमार्थिकाभेदसद्भावाच्चैत्रचैतन्ये मैत्रचैतन्यं सुषुप्तौ स्वकार्यं व्यवहारं कुर्यात् न च कल्पितभेदसद्भावान्न व्यवहारादीति वाच्यम् । भेदकल्पनानिमित्तस्याऽविद्यादेः सुप्तौ निवृत्तत्वेन कल्पितभेदस्याभावात् । न च तदापि व्यवहारादिकं भवतीतीष्टापत्तिरिति वाच्यम् । तथात्वे सुप्तोत्थितस्य मैत्रचैतन्यस्य एतावन्तं कालम् अहं चैत्रचैतन्यं व्यवहरमाण आसमिति परामर्शः स्यात् न चैवमस्ति । अतस्त्वयाऽकामेनापि सुषुप्तौ मैत्रचैतन्यस्य चैत्रचैतन्यस्य विषयकत्वाभावान्न व्यवहार इत्येवं स्वस्मिन्स्वव्यवहारजननेपि स्वविषयकत्वमेव प्रयोजकत्वेन स्वीकार्यम् । न स्वाभेद इत्यर्थः एवं स्वविषयकत्वानङ्गीकारेऽति प्रसङ्ग सन्धमभिधायात्मरूपज्ञानस्य स्वविषयकत्वे निरवकाशमनुभवं प्रमाणयति ॥ स्वात्मानमिति ॥ उक्तातिप्रसङ्गसन्धं सङ्गृह्णाति ॥ एवं चेति ॥ अयं कारिकार्थः ज्ञानं स्वाविषये स्वस्मिन् स्वविषयकत्वं विहायेति यावत् स्वाभेदमात्रेण स्वकार्यं व्यवहारादिकं स्वस्मिंश्चेद्यदिकुर्यात्तदाद्वेषाज्ञानादिस्मरणादिकमपि आत्मनि स्वस्मिन् निवृत्त्यादिप्रकाशप्रतिबन्धादिरूपं स्वकार्यं कुर्यादित्यर्थः । नन्वेतावता प्रबन्धेनोपपादितं स्वविषयकत्वमात्मरूपज्ञानस्य स्यात् तथाप्यवेद्यत्वं युक्तं स्वकर्मकत्वाभावात् तस्यैव चावेद्यत्वविरोधित्वात् । न च विषयत्वमेव कर्मत्वमिति वाच्यं तयोर्भेदात् स्वव्यवहारजननयोग्यत्वं हि स्वविषयकत्वं कर्मत्वं च कारकविशेषत्वं चैतन्यरूपज्ञानस्य च नित्यस्य स्वकर्मकत्वं न युक्तं स्वस्यैव क्रियात्वेन क्रियाजनकत्वरूपकारकविशेषत्वाख्यकर्मत्वायोगादित्यत आह ॥ स्वेति ॥ निरस्तमिति ॥ साक्षाद्व्यवहारजननयोग्यत्वरूपविषयत्वस्यैव कर्मत्वशब्दार्थत्वात् । कारकविशेषत्वादिरूपकर्मत्वस्य स्वकपोलकल्पितत्वात् । अथवा क्रियाविषयत्वमेव कर्मत्वम् इदं च स्वविषयकत्वेप्युपपन्नमिति पूर्वमुक्तत्वादिति भावः । अनुभूतिः स्वप्रकाशा अनुभूतित्वादित्यस्य प्रतिकूलतर्कपराहतिमभिधायाभाससाम्यं चाह ॥ घट इति ॥ आभाससाम्यानुमाने दूषणमाशङ्क्य तत्साम्यमनुभूतित्वानुमानस्य दर्शयति ॥ नन्वित्यादिना ॥ बाध इति ॥ तत्रावेद्यत्वरूपस्य स्वप्रकाशत्वस्य विरुद्धत्वादिति भावः । एतदुपपादनार्थमेव चक्षुरादिसिद्धस्येत्युक्तम् ॥ अन्यथेति ॥ चक्षुराद्यसिद्धस्य कस्यचिद्घटस्य पक्षत्वे तस्याप्रामाणिकत्वादाश्रयासिद्धिरित्यर्थः ॥ इहापीति ॥ अनुभूतित्वा-

(प्रकाशः)

नुमानेपीत्यर्थः ॥ बाध इति ॥ तस्य जडत्वेन स्वप्रकाशत्वस्य त्वत्पक्षे बाधितत्वादित्यर्थः ॥ अन्यथेति ॥ तदतिरिक्तचैतन्यरूपानुभवस्य पक्षत्वे तस्याऽप्रामाणिकतायाः पूर्वमुक्तत्वेनाऽऽश्रयासिद्धिरित्यर्थ इति सम्प्रदायः । पुनर्ज्ञानस्य स्वप्रकाशत्वसाधकानुमानद्वयमाशङ्क्य प्रकरणसमत्वेन दूषयति ॥ त्वज्ज्ञानमिति ॥ अत्र वेद्यत्वानधिकरणमित्येवोक्तावप्रसिद्धिः वेद्यत्वस्य केवलान्वयित्वेन तदनधिकरणत्वस्याप्रसिद्धेः । अत उक्तमपरोक्ष-व्यवहारयोग्यत्वे सतीति ॥ तथापि दृष्टान्ते मदीयज्ञाने मदीयापरोक्षज्ञाने मदीयापरोक्षव्यवहारयोग्यत्व-विशिष्टवेद्यत्वस्यैव सत्वात्तदनधिकरणत्वं पुनरप्रसिद्धमतस्तवेत्युक्तम् । एवं च त्वदीयापरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वस्य विशिष्टस्याभावो दृष्टान्ते विशेषणाभावमादाय विशिष्टाभावरूपसाध्यपर्यवसानम् । पक्षे तु वेद्यत्वरूप-विशेष्याभावमादायावेद्यत्वरूपस्वप्रकाशत्वेन विशिष्टाभावरूपसाध्यपर्यवसानं द्रष्टव्यम् । स्वप्रकाशत्वानुमाने अवेद्यत्वरूपस्वप्रकाशत्वानुमाने ॥ त्वज्ज्ञानमिति ॥ अवेद्यत्वानधिकरणमित्येवोक्ते मदीयज्ञानस्य त्वज्ज्ञानेना-वेद्यत्वात्तदनधिकरणत्वं दृष्टान्तेऽप्रसिद्धमतः सत्यन्त विशेषणम् एवं च तवापरोक्षव्यवहारयोग्यत्वे सति अवेद्यत्वरूपस्य विशिष्टस्याभावो दृष्टान्ते विशेषणाभावेन पक्षे त्ववेद्यत्वरूपस्वप्रकाशत्वाख्यविशेष्याभावेनेति द्रष्टव्यम् । ज्ञानानि घटानुभवरूपाणि । अत्राप्यप्रसिद्धिपरिहाराय सत्यन्तम् । अयं च विशिष्टाभावो दृष्टान्ते विशेषणाभावेन । पक्षे तु विशेष्याभावेनावेद्यत्वरूपस्वप्रकाशत्वमादाय साध्यपर्यवसानम् ॥ चिदविषयत्वेति ॥ चिद्रूपज्ञानाविषयत्वरूपस्वप्रकाशत्वानधिकरणानीत्यर्थः । एतावत्युक्ते दृष्टान्ते अप्रसिद्धिः उक्तरीत्या चैतन्यस्यैवा-प्रामाणिकत्वेन तदविषयत्वस्यैव सत्वेन तदनधिकरणत्वमप्रसिद्धमतः सत्यन्तम् । एवं च घटज्ञानान्यत्वे सति चिदविषयत्वरूपविशिष्टस्याभावो दृष्टान्ते विशेषणाभावेन पक्षे तु चिदविषयत्वाख्यावेद्यत्वरूपविशेष्याभावेन पर्यवसानं द्रष्टव्यम् । एतेनेत्युक्तमेव विशदयति ॥ चित एवेति ॥ उक्तरीत्या चिद्रूपज्ञानस्यैव स्वप्रकाशत्वासम्भवेन तद्रूपस्यात्मनोपि स्वप्रकाशत्वमसिद्धमित्यर्थः ॥ परपक्षे इति ॥ आत्मनो ज्ञानरूपत्वमेव न सम्भवति । ज्ञातृज्ञेयशून्यत्वात् । अतः स्वप्रकाशत्वमयुक्तमित्यर्थः ॥ ज्ञातृत्वेति ॥ आत्मनस्त्वन्मते चिद्रूपत्वेन विज्ञातेति श्रुतौ ज्ञातृत्वोक्तिरयुक्ता स्यात् विशेषानङ्गीकारात् । अतस्तदन्यथानुपपत्त्या न स्वप्रकाशत्वमिति भावः । पुनरपि चैतन्यरूपज्ञानस्य स्वप्रकाशत्वसाधकं विद्यासागरोक्तमनुमानमाशङ्क्य निराकरोति ॥ एतेनेति ॥ यद्यपि तन्मते चैतन्यस्यैव ज्ञानत्वेन तदाश्रयत्वं नात्मनो युक्तं विशेषानङ्गीकारात् तथाप्याश्रयत्वानुवादः पररीत्येति द्रष्टव्यम् । वस्तुतस्तु चैतन्यरूपज्ञानस्य स्वविषयत्वं न भवतीति तात्पर्यार्थः । भिन्नाश्रयविषयम् । आश्रयविषययोर्भेदोस्ति विषयत्वोपेताश्रययुतं न भवति – ज्ञानाश्रयस्यात्मनो ज्ञानविषयत्वं नास्ति तथाचावेद्यत्वरूपस्वप्रकाशत्वसिद्धिः । ज्ञानान्तरवत् – वृत्तिरूपज्ञानवत् तत्राश्रयविषययोर्भेद एवास्ति आत्मन आश्रयत्वात् घटादेर्विषयत्वादिति भावः ॥ विमतमिति ॥ चैतन्यरूपज्ञानं च स्वाश्रयं न विषयीकरोति विषयीकरणरूपस्वकार्यं स्वाश्रये न कारोतीत्यर्थः । तथाचावेद्यत्वरूपस्वप्रकाशत्वसिद्धिः ॥ अग्नेरिति ॥ औष्ण्यस्य स्वाश्रयाग्निविषयत्वं नास्ति । दाहादिरूपस्वकार्यं स्वाश्रये अग्नौ उष्णस्पर्शो न करोतीत्यर्थः ॥ प्रत्यक्षेति ॥ आश्रयविषययोरैक्यावगाहिप्रत्यक्षेत्यर्थः ॥ अज्ञान इवेति ॥ ज्ञानत्वेप्याश्रयविषययोरैक्यमेवास्तु । नन्वाश्रयविषययोरैक्यं कुत्राप्यदृष्टं कथं ज्ञाने कल्पयितुं शक्यमित्यत उक्तम् ॥ अज्ञान इवेति ॥ "आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवले"ति वचनादिति भावः ।

(प्रकाश:)

अन्त:करणेत्यादिकं साध्याभावोपपादनाय। तत्रापि स्वप्रकाशत्वेनोक्तसाध्यसद्भावज्ञापनाय शब्दादिजन्येत्युक्तम्। धीर्भीरित्येतत्सर्वं मन एवेति शब्दजन्यान्त:करणाकारावृत्तिर्भवति सा चान्त:करणाश्रिता भवति। एवं च तस्यां वृत्तौ ज्ञानत्वसद्भावेपि भिन्नाश्रयविषयत्वाभावादाद्यहेतोर्व्यभिचार इत्यर्थ:॥ भास्वरेति॥ शुक्लभास्वरेत्यर्थ:। यथा गुणभूतं दीपगतं शुक्लभास्वररूपम् अन्यत्र घटादौ स्वकार्यमन्धकारनिवर्तनं करोति एवं स्वाश्रये दीपेप्यन्धकारं निवर्तयतीत्येवं स्वाश्रयविषयत्वस्यैव सत्वाद्व्यभिचारादित्यर्थ:। द्वितीयहेतो: स्वरूपासिद्धिं चाह॥ त्वन्मत इति॥ विमतं पक्षीभूतं ज्ञानं वृत्तिरूपं चेत्तर्हि तस्यान्त:करणपरिणामत्वेन मृत्परिणामभूतघटादिवत् द्रव्यत्वाद्गुणत्वमसिद्धं चैतन्यरूपं चेत्तस्य ब्रह्म रूपत्वेन द्रव्यत्वात्सुतरां गुणत्वमसिद्धमित्यर्थ इति सम्प्रदाय:। अत्र सुषुप्तौ। पूर्वपक्षिणो ज्योति:शब्द: प्रकाशपर इत्यभिमत: एवं चायं पुरुष: परमात्मा सुषुप्तौ स्वयंज्योति: स्वप्रकाश इत्यर्थ:। नेयं श्रुतिरात्मन: स्वप्रकाशत्वे मानं तत्र ज्योति:शब्दस्य ज्ञानसाधन परत्वात् तथाचात्मैवास्येति पूर्ववाक्योक्तमस्येत्येतदनुवर्त्य अयं पुरुष: पूर्वमात्मशब्दोक्तो भगवान् अस्य जीवस्य स्वयं स्वयमेव ज्योतिर्ज्ञानसाधनमित्युपसंहारवाक्यार्थ इत्यभिप्रेत्य पूर्वमात्मशब्दनिर्दिष्टस्य परमात्मत्वं तावदुपपादयति॥ अस्तमित इत्यादिना॥ ननु परमात्मनो जीवं प्रति ज्ञानसाधनत्वमनेन कथमुच्यते तद्वाचकपदाभावादित्यत उक्तम्॥ अस्येत्यस्येति॥ ननु तमोविरोधिनि ज्योतिषि रूढस्य ज्योति:शब्दस्याज्ञानविरोधिज्ञानार्थकत्वमेव न तु ज्ञानसाधनार्थकत्वमित्यत आह॥ अस्मिन्नेवेति॥ ननु "आदित्येनैवायं ज्योतिषास्ते चन्द्रमसैवायं ज्योतिषास्त" इति वाक्यद्वयं विहाय वाचैवेति वाक्यं कस्मादुदाहृतमिति चेदुच्यते आदित्य चन्द्रमसोर्यावद्द्रव्यभावि-प्रकाशरूपत्वेन तद्वाक्यगतज्योति:शब्दस्य प्रकाशपरत्वस्याप्युपपत्त्या आदित्यादिरूपेण ज्योतिषा प्रकाशेनास्त इत्यर्थोपपत्त्या ज्योति: शब्दस्य ज्ञानसाधनपरत्वज्ञापकत्वाभावात्। अतोऽप्रकाशरूपवाग्ज्योतिष्ट्वप्रतिपादकं वाक्यमुदाहृतं तत्र ज्योति:शब्दो ज्ञानसाधनपर एवेति सम्प्रदाय:। ज्योति: शब्दस्य प्रकाशपरत्वे बाधकं चाह॥ स्वप्रकाशत्वेति॥ पुरुषस्य सदा स्वप्रकाशत्वेनात्रायमिति श्रुतौ विशिष्य सुषुप्तौ प्रकाशत्वोक्तिर्व्यर्थेत्यर्थ:॥ अस्तुवा ज्योति:शब्दो ज्ञानपर एव तथाप्यत्रात्मन: स्वविषयकत्वमेवोक्तं न प्रकाशत्वं कथमिति चेत् आत्मै-वास्येति वाक्येनास्य पुरुषस्य विषये आत्मा स्वयमेव ज्योतिर्ज्ञानमिति षष्ठ्या स्वविषयकत्वस्यैवोक्तत्वादित्याह॥ आत्मैवेति॥ ननु "स्वयंदासास्तपस्विन" इत्यत्र स्वस्य स्वसेवानिबन्धनस्वदासत्वस्य विरुद्धत्वादन्य दासशून्यत्व एव स्वयन्दासा इत्यस्यतात्पर्यम् एवमिहापि स्वयंज्योतिरित्यस्यान्यावेद्यत्व एव तात्पर्यं न तु स्वविषयकत्वे विरोधादिति चेन्न। अपदार्थत्वेनामुख्यार्थत्वादित्याह॥ स्वयंदासा इति॥ किञ्चास्तु स्वयन्दासा इत्यत्र त्वदुक्तार्थ: प्रमितत्वान्न प्रकृते। कुत इत्यत आह॥ वेद्येपीति॥ अन्यावेद्यत्वमात्रेण लोके स्वप्रकाशपदप्रयोगो न दृष्ट: किंनामान्येन चक्षुरादिना वेद्येपि प्रदीपादौ स्वविषयप्रकाशत्वमात्रेण स्वप्रकाशपदप्रयोगादित्यर्थ:। ननु दीपादौ स्वप्रकाशपदप्रयोगे न स्वविषयप्रकाशत्वं निमित्तम्। किं नाम सजातीयप्रकाशाप्रकाश्यत्वमेव निमित्तमित्याशङ्कते॥ तत्रापीति॥ कुत इत्यत आह॥ न हीति॥ घटप्रकाशघटज्ञाने दीपे वा घटत्वजात्याक्रान्तत्वाभावेन घटसजातीयत्वाभावात् घटेपि स्वसजातीयप्रकाशाप्रकाश्यत्वसद्भावात्स्वप्रकाशत्वापत्तेरित्यर्थ:। अत्र साध्य भूतं स्वप्रकाशत्वम् अवेद्यत्वं वा सजातीयप्रकाशाप्रकाश्यत्वं वा स्वविषयकप्रकाशत्वं वा नाद्य इत्याह॥ तत्रेति॥

(प्रकाशः)

साध्येति ।। प्रदीपस्यापि चक्षुरादिवेद्यत्वादिति भावः । न द्वितीय इत्याह ।। सजातीयेति ।। अर्थान्तरमेवाह ।। घटादिवदिति ।। सजातीयप्रकाशाप्रकाश्यत्वेपि घटादिवदप्रकाशत्वस्यैव सम्भवात् घटादिसाधारणमेतादृशस्वप्रकाशत्वं साध्यते चेत्तर्हि तस्य पारिभाषिकत्वापत्तिरित्यर्थः । तृतीये त्वाह ।। स्वेति ।। क्रियायाः कर्मत्वानङ्गीकारादित्यर्थः ।। सिद्धेति ।। एतादृशस्वप्रकाशत्वस्यास्माकं सिद्धत्वादित्यर्थः । स्वसत्तायां प्रकाशव्यतिरेकवैधुर्योपपादनाय ज्ञातैकसतीत्युक्तम् ।। व्यभिचार इति ।। दुःखादेः स्वप्रकाशत्वाभावादिति भावः । असिद्धिमेवोपपादयति ।। त्वन्मत इति ।। त्वन्मते आत्मनः स्वप्रकाशत्वेन प्रकाशाश्रयत्वप्रकाशकर्तृत्वयोरभावादसिद्धिरित्यर्थः ।। निरस्तं चेति ।। पक्षे प्रकाशकर्तृत्वं नामाज्ञाननिवर्तकत्वं दीपे त्वंधकारनिवर्तकत्वमित्येवं पक्षदृष्टान्तानुगतं प्रकाशत्वं न विद्यते ।। शब्दसाम्येन चेत्पृथ्व्या गोत्वाच्छृङ्गं समापतेदिति निरस्तमित्यर्थः ।। स्वोत्पत्तीति ।। आत्मन उत्पत्त्यभावादुत्पत्तिपदं स्थितिपरं यथाऽदित्यप्रकाशस्यादित्येन सहैव स्थितत्वात् आदित्यः स्वोत्पत्त्यनन्तरमुत्पद्यमानप्रकाशाश्रयो न भवतीति दृष्टान्त उपपादनं पक्षीभूत आत्मा तु स्थित्यनन्तरम् उत्पद्यमानप्रकाशाश्रय इति तार्किकादिभिरुच्यते तादृशो न भवति । प्रकाशरूपत्वादिति स्वप्रकाशत्वसिद्धिः ।। तत्रास्माकमिति ।। उत्पद्यमानप्रकाशाश्रयो न भवतीत्युक्ते सिद्धसाधनता नित्यप्रकाशाश्रयत्वाङ्गीकारेणोत्पत्त्यनन्तरमुत्पद्यमानप्रकाशाश्रयत्वाभावस्य सिद्धत्वादित्यर्थः । किञ्चात्मनस्त्वया प्रकाशरूपत्वाङ्गीकारेण प्रकाशाश्रयत्वानङ्गीकारात् हेतोः स्वरूपासिद्धिः स्यादित्याह ।। तवेति ।। अस्माभिः प्रकाशरूपस्यापि प्रकाशाश्रयत्वस्य विशेषबलेनाङ्गीकारात्तवेत्युक्तम् । निर्विशेषवादिन इत्यर्थः ।। विवादेति ।। आत्मरूपा संविदित्यर्थः ।। स्वेति ।। स्वसमानाधिकरणं स्वसमानकालीनं स्वगोचरं यज्ज्ञानं तद्विरहप्रयुक्तो यो व्यवहाराभावस्तद्वती न भवतीत्यर्थः । स्वगोचरज्ञानविरहप्रयुक्तव्यतिरेकप्रतियोगिव्यवहाररहिता न भवति स्वगोचरज्ञानविरहेपि स्वव्यवहारो भवतीति यावत् । ततश्च स्वव्यवहारे संविदन्तरानपेक्षत्वरूपस्वप्रकाशत्वसिद्धिरिति भावः । पूर्वकालीनज्ञानाभावेपि इदानींतनज्ञानेन व्यवहारस्य जायमानत्वात्पूर्वकालीनस्वगोचरज्ञानविरहप्रयुक्ता व्यवहाराभावस्य सिद्धत्वात्सिद्धसाधनता स्यादतः स्वसमानकालीनेत्युक्तम् । तथापि स्वसमानकालीनस्वगोचरयज्ञदत्तीयज्ञानविरहेपि देवदत्तस्य व्यवहारो देवदत्तीयज्ञानेन भवत्येवेति यज्ञदत्तीयज्ञानविरहप्रयुक्तव्यवहाराभावस्य सिद्धत्वात्पुनः सिद्धसाधनता स्यादतः स्वसमानाश्रयेत्युक्तम् ।। अनन्तरमिति ।। आदौ व्यवसायस्तदनन्तरम् अनुव्यवसायस्तदनन्तरं व्यवसाये व्यवहारो भवति एवं च व्यवसायानन्तर भाव्यनुव्यवसायानन्तरं व्यवह्रियमाणव्यवसायरूपसंविद्वदित्यर्थः । तत्र स्वगोचरानुव्यवसायरूपज्ञानप्रयुक्तव्यवहारस्यैव सत्वेन स्वगोचरज्ञानविरहप्रयुक्ताव्यवहारो नास्तीति द्रष्टव्यम् ।।स्ववेद्यत्वेपीति ।। ब्रह्मणः स्ववेद्यत्वेपि स्वगोचरज्ञानप्रयुक्तव्यवहारस्यैवास्माभिरङ्गीकारेण स्वगोचरज्ञानविरहप्रयुक्ताव्यवहाराभावस्यास्माकं सिद्धत्वेन सिद्धसाधनादित्यर्थः । ननु ब्रह्मणोऽन्यावेद्यत्वरूपस्वप्रकाशत्वे "यतो वाचो निवर्तन्त" इत्यादि श्रुतिरेव प्रमाणमिति चेत्तत्राह ।। ब्रह्मण इति ।। क्रियात्वादिहेतूनां त्रयाणामपि प्रत्येकं प्रत्येकं साध्यद्वयेपि हेतुत्वमिति द्रष्टव्यम् । प्रकाशत्वादिहेतुद्वयस्य प्रदीपगतभास्वररूपे स्वविषयत्वाभावरूपसाध्याभावेन व्यभिचारादाह ।। स्वाविषयत्वे सति स्वजातीयाविषय इति ।। स्वविषयत्वाङ्गीकारेण स्वजातीयाविषयत्वस्य मम सिद्धत्वात्सिद्ध-

(प्रकाशः)

साधनता स्यादतः स्वाविषयत्वे सतीत्युक्तम् । च्छिदालोकघटेषु स्वाविषयत्वे सति स्वसजातीयच्छिदान्तरालोकान्तरघटान्तराविषयत्वसद्भावात्साध्यं द्रष्टव्यम् । दृष्टान्ते मैत्रीयानुभवे मैत्रीयापरोक्षानुभवविषयत्वस्यैव सत्वात्साध्यवैकल्यं स्यादित्यतः साध्ये मैत्रीयेति विशेषणम् ॥ असिद्धीत्यादि ॥ क्रियात्ववस्तुत्वयोः कृतीच्छाव्यवहृत्यादिषु द्वितीयसाध्याभावाद्व्यभिचारः तेषां सजातीयकृत्याद्यन्तरविषयत्वस्योक्तत्वात् । प्रकाशत्वस्य सर्वज्ञानं प्रकाश इत्यादिशब्दजन्यवृत्तिज्ञाने स्वविषयकत्वसद्भावेन साध्यद्वयस्याप्यभावाद्व्यभिचारः क्रियात्वहेतोरसिद्धिश्च क्रियां कुर्वद्धि कारकमिति वचनेन कारकजन्याया एव क्रियात्वादात्मानुभूतौ च तदयोगात् । तद्व्यवहारजनकत्वान्यथानुपपत्त्या स्वविषयकत्वस्य समर्थितत्वाद्बाधः । अनुभूतिः स्वविषयिणी स्वव्यवहारजनकत्वादिति प्रतिपक्षो द्रष्टव्यः । ज्ञानं नित्यं तत एव स्वविषयकत्वात्स्वप्रकाशं ततश्च स्वप्रकाशेन नित्येन स्वगुणभूतज्ञानेन यावद्द्रव्यभाविनात्यन्ताभिन्नत्वादात्मनः स्ववेद्यत्वरूपस्वप्रकाशत्वसिद्धिरित्युपसंहरति ॥ तस्मादित्यादिना ॥ नित्यज्ञानं स्वविषयं नित्यज्ञानत्वादिति वक्ष्यमाणानुमाने स्वरूपासिद्धिपरिहाराय परिशेषेण नित्यज्ञानं किञ्चिदङ्गीकार्यमिति साधयति ॥ ज्ञानस्येत्यादिना ॥ ज्ञानग्रहान्यथानुपपत्त्या किञ्चिन्नित्यज्ञानमङ्गीकर्तव्यम् । ननु नित्यज्ञानाभावेपि ज्ञानग्रहो भाट्टरीत्या अयं ज्ञानवान् ज्ञाततावत्त्वादिति ज्ञाततालिङ्गकानुमानेन भविष्यति प्राभाकरैर्य एव व्यवसायः स एवानुव्यवसाय इत्यङ्गीकारेण अयं घट इति जन्यज्ञानस्यैव तन्मते स्वप्रकाशत्वात्तद्रीत्या स्वेनैव वा स्वग्रहो भविष्यति यद्वा तार्किकरीत्या घटज्ञानवानहमिति मानसानुव्यवसायेन ज्ञानग्रहो भविष्यतीति चेत्तत्राह ॥ भाट्टरीत्येत्यादिना ॥ अतीतमिति ॥ असति धर्मिणि धर्मजननानङ्गीकारेण तत्र ज्ञाततारूपलिङ्गाभावादिति भावः ॥ अपरोक्षेति ॥ ज्ञानस्य ज्ञाततालिङ्गानुमेयत्वे परोक्षत्वप्राप्त्याऽहं सुखीतिवदहं जानामीतिज्ञानेऽपरोक्षत्वावगाह्यनुभवविरोध इत्यर्थः । विमतम् अयं घट इति जन्यज्ञानम् ॥ तदसन्निकृष्टेति ॥ ज्ञानेन साक्षादिन्द्रियस्य सन्निकर्षाभावादिति भावः । अयं पट इति पटविषयिण्यां पटप्रमायां व्यभिचारवारणाय तदसंनिकृष्टकरणजन्येत्युक्तं पटप्रमायाश्च पटसन्निकृष्टकरणजन्यत्वान्न व्यभिचारः । रजतासन्निकृष्टकरणजन्ये इदं रजतमिति रजतोल्लेखितया रजतविषयके व्यभिचारवारणायप्रमात्वादित्युक्तम् ॥ क्रमेति ॥ य एव व्यवसायः स एवानुव्यवसाय इत्यङ्गीकारेणायं घट इति व्यवसायस्यैव घटमनुभवामीत्यनुव्यवसायरूपत्वेन तयोर्ज्ञानयोः क्रमानुभवायोगादिति भावः । तार्किकेण त्वया ज्ञानमात्रस्य स्वप्रकाशत्वानङ्गीकारेण ज्ञानज्ञानरूपानुव्यवसायस्यापि परप्रकाश्यत्वमेवावश्यं वाच्यम् । तत्र वक्तव्यं ज्ञानज्ञानरूपानुव्यवसायस्यापि किमबुभुत्सितग्राह्यत्वमभिप्रेतं बुभुत्सितग्राह्यत्वं वा नाद्योऽनवस्थानादित्याशयेनाह ॥ अनुव्यवसायस्यापि परप्रकाश्यत्व इति ॥ अवश्यवेद्यत्वादिति ॥ अबुभुत्सितग्राह्यत्वादित्यर्थः । अनवस्थानादित्यन्वयः । ततश्च तस्याप्यबुभुत्सितग्राह्यत्वेन पुनरन्येन वेद्यत्वावश्यंभावादनवस्था स्यात् ततश्च सुप्तिमूर्च्छाविलोपः स्यादिति भावः । आत्मगुणस्य सङ्ख्यादेरबुभुत्सितग्राह्यत्वाभावाद्विशेषपदम् । आत्मविशेषगुणानामतीन्द्रियाणां धर्माधर्मभावना संस्काराणाम् अबुभुत्सितग्राह्यत्वाभावात्प्रत्यक्षेत्युक्तं द्वितीयेत्याह ॥ बुभुत्सितेति ॥ बोद्धुमिच्छा हि बुभुत्सा एवं चेच्छाया ज्ञानरूपधर्मिज्ञानसाध्यत्वेन तज्ज्ञाने वाच्ये तस्यापि पुनर्बुभुत्सितग्राह्यत्वाद्बुभुत्सायाश्च पुनर्धर्मिज्ञानसाध्यत्वादनवस्था स्यादित्यर्थः । नन्वियं परंपराऽनुभवसिद्धत्वेन प्रामाणिकत्वादवश्यमङ्गीकार्येति चेत्तत्राह ॥ अयमिति ॥

(प्रकाशः)

ज्ञानद्वयेति ॥ व्यवसायानुव्यवसायरूपज्ञानद्वयेत्यर्थः । तस्मादुक्तानवस्थापरिहाराय किञ्चिज्ज्ञानं नित्यमङ्गीकार्यमिति भावः । एवं परिशेषेण भाट्टैः प्राभाकरैस्तार्किकैश्च नित्यज्ञानमङ्गीकार्यमित्यभिधाय तत्रानुमानं चाह ॥ चैत्रेति ॥ ईश्वरेति ॥ नित्यस्येश्वरप्रयत्नस्येश्वरं प्रति ज्ञातैकसत्त्वात् ईश्वरीयनित्यापरोक्षज्ञानविषयत्वमित्यर्थः । ननु सुखोत्पत्तिक्षण एव किं चिज्ज्ञानमुत्पन्नं तेनैव सुखादिकं गृह्यते एवं सुखादिना सहैवोत्पन्नेन ज्ञानेनैव सुखादेर्ज्ञातैकसत्वोपपत्तेर्न तद्ग्राहकज्ञाननित्यत्वापेक्षा एवं च ज्ञातैकसत्वस्य नित्यापरोक्षज्ञानविषयत्वेऽसामर्थ्यादप्रयोजकतेति चेन्न । सुखादिरूपविषयोत्पत्त्यनन्तरमेव तत्संनिकृष्टकरणेन ज्ञानोत्पत्तेरवश्यंवाच्यत्वेन सहोत्पत्तेरेवोपयोगान्नासामर्थ्यमिति भावः । नन्वस्त्वेवं नित्यज्ञानसिद्धिः तथापि तस्यापि पुनरन्येन वेद्यत्वावश्यंभावादनवस्था स्यादित्यतः आत्मनो नित्यगुणभूतं तज्ज्ञानं स्ववेद्यत्वरूपस्वप्रकाशत्ववदित्याह ॥ तत्स्वविषयमिति ॥ स्ववेद्यत्वरूपस्वप्रकाशत्ववदित्यर्थः । यन्नित्यं ज्ञानं परिशेषेण सिद्धं तत्स्वविषयमित्यर्थः ॥ स्वेति ॥ स्वधर्मिकेत्यर्थः ॥ असिद्धिरिति ॥ स्वव्यवहारजनने स्वसंशयविपर्ययनिवर्तने च ज्ञानान्तरापेक्षाङ्गीक्रियते तत्रापि पुनर्व्यवहारादिजनने ज्ञानान्तरापेक्षाङ्गीक्रियत इत्येवं ज्ञानधाराङ्गीकारादित्यर्थः । कुतो नासिद्धिरित्यतोऽयं घटो घटमहं जानामीति ज्ञानद्वयातिरिक्तज्ञानधारानुभवादित्यर्थः ॥ ज्ञानधारेति ॥ हेतुत्रयमङ्गीकृत्य स्वविषयत्वानङ्गीकारेऽनुकूलतर्कमाह ॥ चैत्रस्येति ॥ उक्तज्ञानाभाव इति ॥ स्वविषयकनित्यज्ञानाभाव इत्यर्थः । नित्यज्ञानमङ्गीकृत्य तस्य स्वविषयकत्वरूपस्वप्रकाशत्वानङ्गीकार इति यावत् । परामर्शः स्मरणम् । एतावन्तं कालमहं सुखमनुभवन्नासमिति सुप्तोत्थितस्य सुखानुभवस्मरणान्यथानुपपत्त्या सुखानुभवस्तावदस्ति स चेन्द्रियाद्युपरमेण तदजन्यत्वान्नित्यः तद्ग्राहकं च नानुभवान्तरमस्तीति तत् स्वविषयकतया स्वप्रकाशमङ्गीकार्यमित्यर्थः । नन्वेताद्दशनित्यज्ञानस्य स्वविषयकत्वेन स्वप्रकाशत्वं कुतः अद्वैतिरीत्या आत्मस्वरूपभूतस्य तस्य ज्ञानस्यावेद्यत्वेनैव स्वप्रकाशत्वं किं न स्यादित्यत आह ॥ अद्वैतीति ॥ अवेद्यत्वे स्वविषयकत्वाभावरूपस्वप्रकाशत्वे ॥ दोषाणामिति ॥ स्वव्यवहारजनकत्वाभावप्रसङ्गादिरूपदोषाणामित्यर्थः । साक्षिरूपात्मगुणभूतस्य नित्यज्ञानस्य स्ववेद्यत्वरूपस्वप्रकाशत्वसिद्धौ यावद्द्रव्यभावितयाऽखण्डितेन तेनात्यन्ताभिन्नतया आत्मनोपि स्ववेद्यत्वरूपस्वप्रकाशत्वं सिद्धमित्याह ॥ आत्मापीत्यादिना ॥ आत्मापि यावद्द्रव्यभाविनतिना तेनाऽभिन्नत्वात् मामहं जानामीत्यनुभवाच्च अनुमानैश्च स्ववेद्यत्वरूपस्वप्रकाशत्ववानिति सम्बन्धः ॥ अभिन्नत्वादिति ॥ खण्डिते भेद ऐक्यं चेत्युक्तत्वेन तदभावादत्यन्ताभेद एवेत्यर्थः । यद्वा मामहमित्येतदप्यत्यन्ताभेदसाधकमेव तत्र चानुभवात्सर्वदेति शेषः ॥ यज्जन्येति ॥ यज्ज्ञानजन्येत्यर्थः । यच्च तज्ज्ञानं चेति यज्ज्ञानम् । तद्विषयः तज्ज्ञानविषयः । पूर्वानुमानेन संविदो विषयत्वं प्रसाध्य तस्या एवेदानीं विषयित्वं च साधयति ॥ आत्मरूपेति ॥ सत्वेति ॥ आत्मास्ति न वेत्येवं सत्वप्रकारकस्वधर्मिकसंशयविरोधित्वादित्यर्थः । आत्मरूपायाः संविदः पटादि धर्मिक संशय विरोधित्वाभावादसिद्धिरतः स्वविशेष्यकेत्युक्तम् । आत्मधर्मिको योऽयमात्मा आनन्दरूपो न वेत्याद्यानंदत्वादिप्रकारक संशयः तद्विरोधित्वाभावात् सत्त्वप्रकारकेत्युक्तम् । सत्त्वप्रकारकात्म धर्मिको यःसंशयः पुरुषान्तरीयः स्वस्यैव भिन्नकालीनश्च तद्विरोधित्वाभावात् स्वसमानाधिकरणेत्याद्युक्तम् ॥ उक्तविशेषणवदिति ॥ स्वसमानाधिकरणेत्याद्युक्त विशेषणवदित्यर्थः ।

(प्रकाशः)

ननु आत्मनि अहमनहं वेत्यादि संशयस्य नाहमिति विपर्ययस्य चा भावेन आत्मनरूपायाः संविदः संशयविपर्ययसामानाधिकरण्याभावादाह । स्वेति । स्वापरोक्षेति स्वजन्यापरोक्षव्यवहार योग्येत्यर्थः । यदि आत्मनि संशय विपर्ययौ स्यातां तर्हि संशयं वा विपर्ययं वा अपरोक्षतो जानामीति व्यवहारः स्यादेवेत्येवं स्वजन्यापरोक्षव्यवहारयोग्यत्वमस्त्येवेति न दोषः इत्यर्थः । ननु हेतौ व्याप्तिग्रहोपयुक्तविशेषणस्यैवदेयत्वेन स्वविशेष्यकेत्यादिविशेषणानां उक्तरीत्याऽसिद्धिवारकतयावैयर्थ्यमिति चेन्न । प्रकृतेपि व्याप्तिग्रहौपयिकत्वमेवोच्यते नासिद्धिवारकत्वं । तथाहि संशयविरोधित्वं कुत्राप्यप्रसिद्धम् । नचघटादिज्ञाने प्रसिद्धमिति वाच्यम् । तस्यापि यस्मिन्नात्मनि स्वयंवर्तते तद्भिन्नाधिकरणकभिन्नकालीनान्यप्रकारकपटादिधर्मिकसंशयविरोधित्वाभावेनाप्रसिद्धिरेवस्यादतः तत्परिहारायैवैतानिविशेषणानीति रूपादिषु पञ्चसु मध्य इत्यस्येव नासिद्धिवारकतयावैयर्थ्यशङ्केत्याह ॥ अयं घट इत्यादीति ॥ स्वप्रकाशेन यावद्द्रव्यभाविना तेन ज्ञानेनात्यन्ताभिन्नत्वादात्मा स्वप्रकाश इत्यत्र दृष्टान्तमाह ॥ स्वप्रकाशेति ॥ यावद्द्रव्यभावीति पूर्वं पूरणीयम् । स्वप्रकाशभूता यावद्द्रव्यभाविनी या दीप्तिस्तयाऽत्यन्ताभिन्नो दीपः स्ववेद्यत्वरूपस्वप्रकाशत्वात् भवति तद्वदित्यर्थः । दीप्त्यात्मकेति पाठः । दीप्त्याश्रयेति पाठे तु विशेषबलादाश्रयत्वोक्तिरित्यवधेयम् । 'तस्मान्महागुणो विष्णुर्नाम्नामपुनरुक्तित' इत्यनुव्याख्यानम् 'अतोऽनन्तगुणो विष्णुर्यच्छब्दा योगवृत्तय' इति भाष्यसङ्ग्रहं च हृदि निधायोपसंहरन्वक्ष्यमाणमुपक्षिपति ॥ तस्मादिति ॥ आत्मनः पराभिमतस्वप्रकाशत्वभङ्गविवरणम् ॥

## १३. अवाच्यत्वभङ्गः

**यच्चेदमुच्यते ब्रह्म सर्वशब्दावाच्यमिति । तत्रावाच्यपदेनोच्यते चेत्, वाच्यत्वसिद्धिः । नापि तेनापि लक्ष्यते, अवाच्यरूपमुख्यार्थस्यान्यस्याभावाद्, भावे वा ब्रह्म नावाच्यम्, किं तु तीरवदवाच्यरूपमुख्यार्थसम्बन्धिमात्रमिति स्यात् । मुख्यार्थहीनस्यापि ब्रह्मलक्षकत्वे घटशब्दोऽपि घटलक्षकः स्यात् । एवं निर्विशेषं स्वप्रकाशं परमार्थसदित्यादि शब्दैर्ब्रह्मोच्यते चेद्वाच्यत्वसिद्धिः । नापि तैरपि लक्ष्यते, निर्विशेषस्वप्रकाशादिरूपमुख्यार्थस्यान्यस्याभावात् । एवं लक्ष्यशब्देनोच्यते चेद्वाच्यत्वसिद्धिः, लक्ष्यते चेल्लक्ष्यत्वहानिः, गङ्गाशब्दलक्ष्यस्याऽगङ्गात्ववत् लक्ष्यपदलक्ष्यस्यालक्ष्यत्वात् ।**

**ननु निर्विशेषादिशब्दानां विशेषाभावादिविशिष्टं वाच्यम्, तच्च न ब्रह्म तस्य विशेषाभावाद्युपलक्षितत्वादिति चेत्, तर्हि विशेषाभावोपलक्षितशब्दवाच्यत्वमनिवार्यम् । ननु विशेषाभावोपलक्षितत्वादिकं वा तद्विशिष्टत्वं वा निर्विशेषादि-**

पदवाच्यम्, तच्च न ब्रह्म किं तु तदाश्रयव्यक्तिभूतं विशेष्यम् एवं च मुख्यार्थसिद्धिः। ब्रह्मणो निर्विशेषादिशब्दलक्ष्यत्वेऽपि निर्विशेषत्वाद्यहानिश्चेति चेन्न, व्यक्तिः शब्दार्थः जातिस्तूपधानमिति मते जातिविशिष्टा व्यक्तिः शब्दार्थ इति मते च यत्र विशेष्ये निर्विशेषत्वादिकं तस्य तदवाच्यत्वायोगात् । जातिरेव शब्दार्थः, व्यक्तिस्तु लक्ष्येतिमतस्य च व्युत्पत्तिविरोधादिनान्यत्र निरासात् । अस्मिन्पक्षे घटादिव्यक्तेरपि घटादिशब्दावाच्यत्वेन ब्रह्मणस्ततो विशेषार्थं जातिवाचिभिः सत्यादिशब्दैः मञ्चशब्देन पुरुष इव ब्रह्म जात्याधारव्यक्तिसम्बन्धितयैव लक्ष्यत इति वक्तव्यत्वेन मुख्यार्थाभावादि दोषतादवस्थ्याच्च । सत्यं ज्ञानमित्यादौ ब्रह्मणः सत्यत्वादिधर्माश्रयतयैव लक्ष्यत्वे घटादिवत् सखण्डार्थत्वापाताच्च । किं च निर्गुणस्वप्रकाशादेरब्रह्मत्वे यद्यद् ब्रह्मतयेष्टं तत्तदब्रह्मेति साधु समर्थितो ब्रह्मवादः ।

नन्ववाच्यादिशब्दाः समस्तरूपाः लक्ष्यादिशब्दास्तु यौगिकाः उभयेषामपि वाक्यतुल्यात्वान्न वाचकतेति चेन्न, अन्विताभिधानपक्षे तेषामपि वाचकत्वात् । अभिहितान्वयपक्षेऽपि वाक्य एवाभिहितान्वयस्वीकारेण प्रकृतिप्रत्यययोरन्विताभिधायित्वात् । समासे पदार्थसंसर्गस्य यौगिके प्रकृतिप्रत्ययार्थसंसर्गस्य चानभिधेयत्वेऽपि पदार्थस्य प्रत्ययार्थस्य च वाच्यत्वात् तदर्थस्य च ब्रह्मणः वाच्यत्वापरिहाराच्च । यदि तु ब्रह्म न पदाद्यर्थः किं तु पदाद्यर्थसंसर्गरूपम्, तर्हि सखण्डं स्यात् । यदि तु अवाच्यमित्यादौ पदद्वयादिकं न स्वार्थसंसर्गपरं किं तु ब्रह्ममात्रलक्षकम्, तर्हि न तेनावाच्यत्वादिसिद्धिः । तस्मान्निर्विशेषादिशब्दवाच्यत्वं दुर्वारम् । तदुक्तम्–

पदं च निर्गुण इति कथं गौणं वदिष्यति ।
गुणाभावोपलक्ष्यं चेत्पदं तदपि वाचकम् ॥ इति
येन लक्ष्यमिति प्रोक्तं लक्ष्यशब्देन सोऽवदम् ॥

एवं च–

अवाच्यलक्ष्यादिपदैर्लक्ष्यं चेद्वाच्यतादिकम् । इति
स्यान्नदीशब्दलक्ष्यस्यानदीत्वमिव हि ध्रुवम् ॥

'यतो वाचो निवर्तन्ते, अशब्दमस्पर्श'
मित्यादिश्रुतिस्तु अद्भुतत्वाद्यभिप्राया ।

न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते ।
पश्यंतोऽपि न पश्यंति मेरो रूपं विपश्चितः । इत्यादौ दर्शनात्–

अद्भुतत्वादवाच्यं तदतर्क्याज्ञेयमेव च ।
अनन्तगुणपूर्णत्वादित्यूदे पैंगिनां श्रुतिः ॥
अवाच्यमितिलोकोऽपि वक्त्याश्चर्यतमं भुवि ॥ इत्युक्तेश्च ।

पराभिमतार्थे अशब्दमित्यादिशब्दवाच्यत्वस्यापि निषेधेन अशब्दशब्दावाच्यस्याशब्दत्वासिद्ध्या स्वव्याघाताच्च । 'यतो वाच' इत्यत्र मनसा सहेति श्रुतमतो वृत्तेरिवान्तःकरणवृत्तिव्याप्ये ब्रह्मणि वाग्वृत्तेरपि सर्वथा निषेधायोगाच्च । 'यत' 'आनन्दं ब्रह्मण' इति यदानन्दाद्यनेकशब्दमुख्यार्थत्वाय निवर्तन्त इत्येकामुख्यार्थत्वस्यैव न्याय्यत्वाच्च । त्वन्मते 'यतो वाचो निवर्तन्त' इत्यादेरपि लक्षणया चिन्मात्रपरत्वेन वाच्यत्वाविरोधित्वाच्च । 'अथ कस्मादुच्यते ब्रह्मेति तस्मादुच्यते परं ब्रह्मेतीति' श्रुत्या 'वचसां वाच्यमुत्तमं परमात्मेति चाप्युक्त' इत्यादिस्मृत्या वेदान्ततात्पर्यविषयो ब्रह्म वाच्यम्, वस्तुत्वाल्लक्ष्यत्वाच्च, तीरवत् । परमार्थसदादिपदं कस्यचिद्वाचकम्, पदत्वाद्, घटपदवत् । सत्यज्ञानादिवाक्यं वाच्यार्थतात्पर्यवत्पदयुक्तम्, वाक्यत्वात्, अग्निहोत्रादिवाक्यवदित्याद्यनुमानैश्च विरोधाच्च । विपक्षे लक्ष्यत्वं न स्यात् । तथा हि लाक्षणिकशब्दो न श्रुत एवार्थान्तरधीहेतुः, तत्रागृहीतशक्तिकत्वात्, किन्तु पूर्वधीस्थेवाच्यार्थेऽनुपपत्तिदर्शने सति तत्त्यागेन स्वरूपतो वाच्यार्थसम्बन्धित्वेन चावगतस्यार्थान्तरस्य बोधकः । गङ्गाशब्दादौ तथा दर्शनात् । अन्यथातिप्रसङ्गाच्च । तथा च ब्रह्मणोऽपि लक्ष्यत्वे वाच्यार्थसम्बन्धित्वेन ज्ञेयत्वात् । औपनिषदत्वश्रुत्या वेदैकगम्यस्य चाशब्देनाज्ञेयत्वात्, स्वप्रकाशतया नित्यसिद्धौ च शब्दवैयर्थ्यात्, अवाच्ये च शब्दस्य लक्षकस्यैव वक्तव्यत्वात्, तत्रापि वाच्यसम्बन्धित्वेन ज्ञेयत्वेनानवस्थेति कथमवाच्ये लक्षणा । एवं च–

वाच्ययोगितया बुद्धं लक्ष्यं ब्रह्म च वैदिकम् ।
अवाच्यं चेति वक्तव्ये लक्षके ह्यनवस्थितिः ॥

न च वाचकस्यापि गृहीतसंगतिकस्यैव बोधकत्वात्सम्बन्धग्रहणस्य च संबन्धिज्ञानाधीनत्वात्, सम्बन्धिनश्च ब्रह्मणः शब्दैकगम्यत्वात्, तत्राप्यनवस्थेति वाच्यम्, यौगिकशब्दानां वाक्यतुल्यत्वेन संगतिग्रहणानपेक्षणात् । एवमवाच्यं चेद् ब्रह्म न सिद्ध्येत्, स्वतः सिद्धेर्निरस्तत्वाद् औपनिषदत्वेन चाशब्देनासिद्धेः । लक्षकस्य च शब्दस्य वाच्यार्थसम्बन्धित्वेन ज्ञातं प्रत्येव साधकत्वेनावाच्यस्य सिद्ध्ययोगात् ।

ननु चात्र पक्षो ब्रह्म पदवाच्यं चेत्, सिद्धसाधनम् । लक्ष्यं चेद्, विरोधः । अत एवावाच्यत्वे लक्ष्यत्वं न स्यादिति तर्कोऽप्ययुक्तः । आपाद्यापादकयोरप्रसिद्ध्या व्याप्त्यसिद्धेश्च उक्तं हि–

कथं लक्ष्यत्वमत्यन्तावाच्यस्येति न चोद्यताम् ।
अत्यन्तावाच्यशब्देन लक्ष्यस्यैवावबोधनात् ॥

इति चेन्न, वेदान्ततात्पर्यविषयत्वादिना रूपेण पक्षीकरणात् । अन्यथा त्वदीयेऽवाच्यत्वानुमानेऽपि पक्षो ब्रह्म वाच्यं चेद्विरोधः, लक्ष्यं चेदाश्रयासिद्धिरिति स्यात् । अस्ति च यत्र प्रयोजकाभावस्तत्र प्रयोज्याभाव इति सामान्यव्याप्तिः । उक्ता च लक्ष्यत्वे वाच्यत्वस्य तंत्रता । न चेक्षुक्षीरमाधुर्यादौ वाक्यार्थे च व्यभिचारः, तस्यापि माधुर्य वाक्यार्थादिसाधारणशब्दवाच्यत्वात् ।

विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् ।
गुडस्य पनसादीनां निर्हारीत्यभिधीयते ॥

इत्युक्तत्वेन अन्विताभिधानस्यान्यत्र समर्थितत्वेन चासाधारणशब्दवाच्यत्वाच्च । अभिहितान्वयपक्षेऽपि वाक्यार्थो नोच्यते नापि लक्ष्यते किं त्वन्विताभिधाने विशेषान्वय इव वृत्तिं विनैव संसर्गमर्यादया प्रतीयत इति तार्किकमते वाक्यार्थे

लक्ष्यत्वस्याप्यभावाच्च । न च वाक्यार्थशब्दस्य समासत्वेन लक्षकत्वात् न वाचकतेति वाच्यम्, समासस्य लक्षकत्वपक्षेऽपि राजपुरुष इत्यत्र राजशब्दस्येव वाक्यशब्दस्य षष्ठ्यर्थलक्षकत्वेऽपि पुरुषशब्दस्येव अर्थशब्दस्य वाचकत्वात् । एतेन समासस्य वाक्यतुल्यत्वेनाभिहितान्वयेऽभिधानं विनैव स्वार्थबोधकतेति निरस्तम् । वाक्यशब्दार्थशब्दयोर्यावर्थौ तत्संसर्गत्वेन रूपेण समासावाच्यत्वेऽपि अर्थत्व-रूपेणार्थपदवाच्यत्वात् ।

ननु प्रवृत्तिनिमित्ताभावात् कथं वाच्यत्वम्? उक्तं हि–

दृष्टा गुणक्रियाजातिरूढयः शब्दहेतवः ।
नात्मन्यन्यतमोऽमीषां तेनात्मा नाभिधीयते ॥ इति ।

न च घटादाविवारोपितं निमित्तमस्तीति शङ्क्यम्, आरोपिते श्रुतितात्पर्यायोगेन तात्पर्यविषयस्य वाच्यत्वायोगादिति चेन्न, सत्यादिशब्दानां लक्षकत्वे सिद्धे निमित्ताभावस्तस्मिंश्च सिद्धे लक्षकत्वमित्यन्योऽन्याश्रयात् । स्वरूपमात्रप्रश्नोत्तरत्वेन तल्लक्षकतेत्यस्य च निरासात् । निर्विशेषवाक्यस्य च स्वरूपमात्रपरत्वे सत्यत्वाद्यविरोधात् । तस्य निर्विशेषत्वविशिष्टपरत्वे च निर्गुणत्वभङ्गे उक्तरीत्या प्रामाणिकत्वाविशेषेण भावनिमित्तकशब्दवाच्यत्वस्यापि दुर्वारत्वात् । तस्माद् ब्रह्मणि सर्वेषां वैदिकशब्दानां लक्षणेत्येतदयुक्तम् । उक्तं हि–

एकस्यापि च शब्दस्य गौणार्थस्वीकृतौ सताम् ।
महती जायते लज्जा यत्र तत्राखिला रवाः ॥
अमुख्यार्था इति वदन् यस्तन्मार्गानुवर्तिनाम् ।
कथं न जायते लज्जा वक्तुं शाब्दत्वमात्मनः ॥ इति ।

तस्माद्यौगिकानन्तवैदिकशब्दवाच्यत्वादनन्तगुणं ब्रह्म जीवादिभिन्नमिति । अवाच्यत्वभङ्गः ॥ १४ ॥

## अद्वैतसिद्धिः

निर्धर्मकतया अवेद्यतया च ब्रह्म आनन्दादिपदलक्ष्यं, न वाच्यम्, प्रवृत्तिनिमित्ताभावादिति। ननु– अवाच्यशब्देनोच्यते चेद्, वाच्यत्वसिद्धिः, लक्ष्यते चेद्, अवाच्यरूपमुख्यार्थस्याभावात् कथं लक्षणा? भावे वा ब्रह्म नावाच्यं, किन्तु तीरवदवाच्यरूपमुख्यार्थसंबन्धिमात्रमिति स्यात्। मुख्यार्थहीनस्यापि ब्रह्मलक्षकत्वे घटपदमपि घटलक्षकं स्यादिति– चेन्न, अवाच्यरूपमुख्यार्थाभावेऽपि नञ्समभिव्याहृतवाच्यशब्देन वाच्यत्वात्यन्ताभावबोधनद्वारा स्वरूपे लक्षणयैव पर्यवसानात्। एवं निर्विशेषपदमपि, अखण्डपदलक्षकतायामेव मुख्यार्थावश्यम्भावनियमात्। ननु– एवं लक्ष्यपदेनापि लक्ष्यत्वे तीरस्यागङ्गात्ववत् ब्रह्मणोऽलक्ष्यत्वापत्तिरिति चेन्न, इष्टत्वात्, सर्वथा निर्धर्मकत्वात्, लक्ष्यव्यवहारस्य च वाच्यत्वाभावनिबन्धनत्वात्, तथा प्रतिपादितं प्राक्। न चैवं लक्ष्यत्वाभावेन वाच्यत्वव्यवहारप्रसङ्गः, गौणस्य तस्यापीष्टत्वात्, सत्यज्ञानादिपदानां च कल्पितधर्मवाचिनां ब्रह्मरूपव्यक्तिलक्षकतयाऽखण्डार्थत्वानपायात्। न च– सत्त्वादिधर्माश्रयतया लक्ष्यत्वाभावे मञ्चसंबन्धित्वमात्रेण लक्ष्यस्य पुंसः अमञ्चत्ववत् सत्त्वादिसंबन्धित्वमात्रेण लक्ष्यस्य ब्रह्मणः असत्त्वाद्यापत्तिरिति वाच्यम्, कल्पितचन्द्रत्वादिजातेः परमार्थचन्द्रादिव्यक्तितादात्म्येनाचन्द्रत्वा भाववदत्रापि सत्त्वाद्यभावानापत्तेः। तदुक्तम्– 'लक्ष्यव्यक्तिरपि ब्रह्मे'ति। अत एव– स्वप्रकाशादेरब्रह्मत्वे यद्यद्, ब्रह्मतयेष्टं, तत्तदब्रह्मेति साधु समर्थितो ब्रह्मवाद इति निरस्तम्।

यत्तु निर्विशेषादिपदानां च समासपदतया लक्ष्यादिपदानां यौगिकतया वाक्यतुल्यत्वान्न वाचकतेति वक्तुमशक्यम्, अन्विताभिधानपक्षे तेषामपि वाचकत्वाद्, अभिहितान्वयपक्षेऽपि वाक्य एवाभिहितान्वयस्वीकारेण प्रकृतिप्रत्ययोरन्विताभिधायकत्वाद् वाक्यतुल्यस्यापि वाचकत्वाद् ब्रह्मणः पदार्थसंसर्गरूपत्वे सखण्डत्वापत्त्या पदार्थत्वे वाच्यत्वापरिहारादिति। तन्न। पदलक्ष्यत्वेऽप्यपदार्थत्वोपपत्तेः, अखण्डत्वेऽपि वाक्यार्थत्वस्योपपादितत्वादन्विताभिधाने अन्वितवाचकस्यापि स्वरूपे लक्षणाङ्गीकारात्। न च तर्ह्यवाच्यत्वासिद्धिः, अखण्डब्रह्मसिद्ध्युपायत्वेन प्राप्तस्यावाच्यत्वादेः निवारकाभावेनानुषङ्गिकतया सिद्धेः। 'यतो वाचो निवर्तन्ते, अशब्दमस्पर्श'मित्यादि श्रुतयश्चात्रानुसन्धेयाः, अवाच्यशब्दवदशब्दशब्देऽपि व्याघाताभावात्। न चेयं श्रुतिरद्भुतत्वाभिप्राया, श्रूयमाणार्थत्वे बाधकाभावात्। न च 'यतो

(अद्वैतसिद्धिः)

वाच' इत्यत्रापि मनसा सहेति श्रुतमतो वृत्तेरिवान्तःकरणवृत्तिव्याप्ते ब्रह्मणि वाग्वृत्तेरपि सर्वथा निषेधायोगः, लक्षणायाः स्वीकारेण शक्तिमात्रस्यैव निराकरणात् । न च आनन्दाद्यनेकपदामुख्यार्थत्वापेक्षया निवर्तन्त इत्येकपदार्थामुख्यत्वमेव युक्तमिति– वाच्यम्, ब्रह्मणो निर्धर्मकतया तत्र शक्त्यभावेन बहुत्वस्याप्रयोजकत्वाद्वाच्यत्वविरोध्यर्थद्वारैवाखण्डार्थपरतया तद्विरोधतादवस्थ्यात् । अत एव कस्मादुच्यते परं ब्रह्मेत्यादिश्रुतेः परमात्मेति चाप्युक्त इत्यादिस्मृतेश्च तत्तच्छब्दबोध्यत्वमात्रेण वाच्यत्वाभिलापः, न तु शक्यत्वाभिप्रायेणेति ताभ्यां न विरोधः । तात्पर्यविषयो ब्रह्म वाच्यं वस्तुत्वाल्लक्ष्यत्वाच्च तीरवदिति चेत्, निर्धर्मकतया वाच्यत्वबाधात्, तदुन्नीतसधर्मकत्वाद्युपाधिसंभवाच्च । परमार्थसत्यपदादिकं कस्यचिद्वाचकम्, पदत्वादित्यपि न, किमत्र पदत्वम्? न तावत्सुप्तिङन्तत्वम्, समासपदस्याशक्तत्वेन राजपुरुषादौ व्यभिचारात्, नापि शक्तत्वम्, साध्याविशेषाद्, अवयवद्वारा समासपदस्य वाचकत्वं चेद्, इष्टमेव । नापि सत्यज्ञानादिवाक्यं वाच्यार्थतात्पर्यवच्छब्दयुक्तं वाक्यत्वादित्यपि, विषं भुङ्क्ष्वेत्यादौ व्यभिचारात् ।

ननु– अवाच्यत्वे लक्ष्यत्वानुपपत्तिः, वाच्यार्थसंबन्धित्वेन ज्ञातस्यैव लक्ष्यत्वात्, तज्ज्ञानं च न शब्दभिन्नेन, उपनिषन्मात्रगम्यत्वात्, नापि स्वप्रकाशतया, नित्यसिद्धे शब्दवैयर्थ्यात् । अवाच्यशब्दस्य च लक्षकस्यैव वक्तव्यत्वात्तत्रापि वाच्यसंबन्धित्वेन ज्ञेयत्वे अनवस्थेति चेन्न, तथा ज्ञानमुपस्थितावुपयोगि । ब्रह्म स्वप्रकाशतया स्वत एवोपस्थितमिति किं तेन? न चैवं शब्दवैयर्थ्यम् आवरणाभिभावकवृत्तावुपयोगात् । अत एव नानवस्था । तस्मात् प्रवृत्तिनिमित्तस्य दुर्निरूपत्वादवाच्यत्वम् । तदुक्तम्–

दृष्टा गुणक्रियाजातिसंबन्धाः शब्दहेतवः ।
नात्मन्यन्यतमो ह्येषां तेनात्मा नाभिधीयते ।। इति ।

न चारोपितगुणाश्रयतया वाच्यता, तस्य तात्पर्याविषयतया तात्पर्यविषये अवाच्यत्वस्य स्थितत्वात् । न च सत्यादिपदानां लक्षकत्वे सिद्धे निमित्ताभावः, तस्मिंश्च लक्षकत्वमिति परस्पराश्रयः, निर्विशेषवाक्येन नेति नेतीत्यनेनैव निमित्ताभावस्य सिद्धत्वात् । न च– निर्विशेषवाक्यस्य स्वरूपमात्रपरत्वे प्रवृत्तिनिमित्ताविरोधः, निर्विशेषत्वविशिष्टपरत्वे च तस्यैव सत्त्वेन निर्विशेषपदवाच्यत्वस्यैव प्रसङ्ग इति वाच्यम्, द्वारतया उपस्थितस्य स्वपरविरोधित्वा-

(अद्वैतसिद्धिः)

निर्विशेषस्य वाच्यत्वासंभवाच्च । तस्मान्निर्विशेषत्वादेव जीवब्रह्माभेदः सिद्धः, भेदकासंभवात् । तथा च ।

ब्रह्मण्यवाच्ये यो विद्वान्वाच्यतामधिगच्छति ।
स निस्त्रपो निमित्तानां विरहैः प्रतिबोध्यताम् ॥

इत्यद्वैतसिद्धौ ब्रह्मणः शब्दावाच्यत्वोपपत्तिः ॥

## न्यायामृततरङ्गिणी

॥ अवाच्येति ॥ नन्ववाच्यरूपमुख्यार्थाभावेप्यवाच्यपदस्य वाच्यत्वात्यन्ताभावबोधन द्वारा स्वरूपे लक्षणयैव पर्यवसानम् । मैवम् । अवाच्यपदजन्यज्ञानविषये ब्रह्मणि वाच्यत्वात्यन्ताभावोस्ति चेद् ब्रह्मावाच्यपदवाच्यं स्यात् । नचेत्तर्हि तद्विरुद्धवाच्यत्वापत्त्या ब्रह्मणो वाच्यपदवाच्यत्वापत्तेः । परस्परविरहरूपयोरेकस्य वाधेऽपरस्य धर्मिसत्वनियमात् ॥ मुख्यार्थसिद्धिरिति ॥ निर्विशेषादिपदानामित्यनुषङ्गः ॥ निर्विशेषत्वाद्यहानिरिति ॥ निर्विशेषत्वरूपधर्मबहिर्भावेन निर्विशेषत्वाश्रयव्यक्तेर्लक्ष्यत्वान्न निर्विशेषत्वहानिः । गङ्गापदेन गङ्गात्वानाश्रयस्य लक्ष्यत्वाद्गङ्गापदलक्ष्ये गङ्गात्वहानिरेव ॥ उपधानमिति ॥ शक्तिग्रहदशायां तटस्थैव जातिर्व्यक्तीनामनुगमिकेत्यर्थः ॥ मुख्यार्थाभावादीति ॥ शक्यमश्वत्वतदाश्रयव्यक्तितल्लक्ष्यपुरुषाणामिव शक्यनिर्विशेषत्वतदाश्रयव्यक्ति- तल्लक्ष्यब्रह्मणां त्रयाणामभावात् । ब्रह्मभिन्नस्य निर्विशेषपदस्य वाच्यत्वाभावात् । ब्रह्मणश्च निर्विशेषपदलक्ष्यत्वाङ्गीकारादित्यर्थः ॥ सत्यंज्ञानमिति ॥ जातिः शब्दार्थ इति मते गोत्वाश्रयतया गोर्लक्ष्यत्ववत्सत्यत्वाश्रयतयैव ब्रह्मव्यक्तिर्लक्ष्येति सखण्डार्थत्वम् । निर्विशेषलक्ष्यादिपदानां ब्रह्मान्यस्य मुख्यार्थस्याभावात्ते ब्रह्मवाचका इत्युक्तं तत्र शङ्कते ॥ नन्विति ॥ समासे प्रत्येकपदयोरिव समासस्याप्यन्वितवाचकत्वमस्तीत्याह ॥ अन्वितेति ॥ ननु न समासेपि शक्तिकल्पनं गौरवादत आह ॥ समास इति ॥ तदुक्तमिति ॥ ईक्षत्यधिकरणव्याख्यान इति शेषः ॥ पदं चेति ॥ निर्गुण इति पदं गुणवद्वस्तु कथं वदिष्यति । व्याघातात् । तत्परिहाराय निर्गुणपदेन स्ववाच्यगुणाभावविशिष्टद्वारा निर्गुणमुपलक्ष्यं चेदपि तथापि तत्पदं लक्ष्यपदम् । ब्रह्मणो वाचकमङ्गीकरणीयमित्यर्थः ॥ येनेति ॥ येन पुरुषेण ब्रह्म लक्ष्यमिति प्रोक्तं स लक्ष्यशब्देन ब्रह्मावदत् । लक्ष्यपदं वाचकं तत्र प्रयुक्तवानित्यर्थः । ऊदे ऊचे ॥ यतोवाच इत्यत्रेति ॥ अन्तःकरणवृत्तिव्याप्ये ब्रह्मणि श्रुतस्यापि मनोवृत्तिनिषेधस्य सङ्कोचवद्वा-

(तरङ्गिणी)

ग्वृत्तिनिषेधस्यापि सङ्कोचः कार्यः ॥ यत इति ॥ यतो वाचो निवर्तन्ते अप्राप्यमनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति श्रुतौ यत इति शब्दस्य आनन्दब्रह्मशब्दादीनां च ब्रह्म वाचकत्वरूपमुख्यार्थान्निवर्तन्त इति पदमेव प्रच्यावनीयम् । तथा च यत्पदस्य आनन्दादिपदानां च बहूनामनुग्रहः स्यादित्यर्थः ॥ त्वन्मत इति ॥ यतो वाचो निवर्तन्त इत्यस्य ब्रह्म वाच्यत्वनिषेधार्थकत्वाभावात् ॥ वेदान्तेति ॥ अत्र पक्षासिद्ध्यादिकं स्वयमनुपदमेव परिहरिष्यति । न च सधर्मकत्वमुपाधिः । साध्योपाध्योः केवलान्वयितया तद्व्यतिरेकाद्यसाधनात् ॥ पदत्वादिति ॥ न च समासादिपदे व्यभिचारः । तस्याप्यवयवद्वारा वाचकत्वात् । ब्रह्मणस्त्ववयवार्थत्वे सखण्डत्वापातः ॥ सत्येति ॥ न च विषं भुंक्ष्वेत्यादौ व्यभिचारः । तत्रापि वाच्यार्थपरत्वस्योपपादितत्वात् ॥ शब्दवैयर्थ्यादिति ॥ न चावरणाभिभावकवृत्तौ शब्दस्योपयोगः । घटादेः प्रत्यक्षत्वमेव शब्दस्तु तदावरणनिवर्तकवृत्तौ हेतुरित्यापातात् ॥ वाच्येति ॥ गङ्गापदादौ वाच्यसम्बन्धितया ज्ञातं तीरादिकं लक्ष्यं दृष्टम् । ब्रह्मणो वाच्यसम्बन्धितयावगतिस्तु मानान्तरागम्यत्वादवाच्यत्वाच्च लक्षकपदेनैव वाच्या । लक्षकपदं तु वाच्यसम्बन्ध्यवयवसम्बन्धितया ज्ञातमेव बोधयतीति तथा ज्ञानार्थं ब्रह्मणि लक्षकपदान्तरमेव प्रयोक्तव्यमित्यनवस्थितिर्लक्षकपद इत्यर्थः ॥ यौगिकेति ॥ यौगिकपदावयवार्थसंसृष्टरूपेणोपस्थिते ब्रह्मरूपे सम्बन्धिनि पदान्तरस्य शक्तिरूपः सम्बन्धो ग्रहीष्यते । तव तु नैवं परिहारः । अखण्डार्थत्वहानेः ॥ ब्रह्म न सिद्ध्येदिति ॥ प्रत्यक्षानुमानलौकिकशब्दानां ब्रह्मण्यप्रवृत्तेर्वैदिकशब्दवाच्यत्वस्याप्यनङ्गीकारे वाच्यत्वव्याप्यलक्ष्यत्वस्याप्यभावापत्त्या ब्रह्म न सिद्ध्येदित्यर्थः ॥ अप्रसिद्ध्येति ॥ वाच्यत्वलक्ष्यत्वयोः केवलान्वयितया तदभावाप्रसिद्धिः ॥ व्याप्तीति ॥ वाच्यत्वं न लक्ष्यत्वव्यापकमित्यर्थः । पक्षमद्दढमतर्कोपि युक्त इत्यत आह ॥ अस्ति चेति ॥ न वयं यत्र वाच्यत्वं न तत्र लक्ष्यत्वंनेतिव्याप्तिं ब्रूमः । किन्तु यत्र प्रयोजकं न तत्र प्रयोज्यं नेति । भवति च वाच्यत्वं लक्ष्यत्वे प्रयोजकम् । वाच्यसम्बन्धित्वेनोपस्थितिं विना लक्ष्यत्वायोगात् । लक्ष्यत्ववाच्यत्वयोर्व्याप्यव्यापकभावे व्यभिचारं परिहरति ॥ न चेक्षुक्षीरेति ॥ उक्ताश्च गन्धादिषु विशेषाः महाभाष्ये षष्ठीत्यत्र सूत्रे । घनस्यतीव्रः वदनस्यमृदुरिति तत्रैव कैयटे । तीव्रो गन्धस्य विशेषः मृदुत्वं स्पर्शस्येति ॥ अभिहितेति ॥ अभिहितान्वयपक्षे तार्किकमते च वाक्यार्थे हेतोरेवागमनान्न व्यभिचार इत्यर्थः । वाक्यार्थादिसाधारण शब्दवाच्यत्वाद्वाक्यार्थे न व्यभिचार इत्यत्र शङ्कां निरस्यति ॥ न च वाक्यार्थेति ॥ समासस्य लक्षकत्वे वाचकत्वमप्यस्तीत्याह ॥ समासस्येति ॥ पुरुषशब्दस्येवार्थशब्दस्य वाचकत्वादित्यर्थः ।

(तरङ्गिणी)

नन्वर्थशब्दस्य वाचकत्वेपि वाक्यार्थशब्दस्य न वाचकत्वम् । मैवम् । वाक्यशब्दस्य लक्षकत्वेपि वाक्यार्थशब्दस्य न लक्षकत्वमिति समत्वात् ॥ संसर्गरूपेणेति ॥ तेन रूपेण समासालक्ष्यत्वाच्च न व्यभिचार इति भावः ॥ एकस्यापि चेति ॥ यत्र वेदे सतां विदुषामेकस्यापि शब्दस्य मुख्यार्थपरित्यागेनामुख्यार्थस्वीकृतौ कृतायां सत्यां महती लज्जा जायते तत्राखिला अपि शब्दा अमुख्यार्था इति वदतां तस्यात्मनः शाब्दत्वं शब्दशक्तितात्पर्यज्ञत्वं लज्जा कथं न जायेत । केभ्यः । तन्मार्गानुवर्तिनां शब्दशक्तितात्पर्यानुसारिणां विदुषां सकाशादिति योजना ॥ अवाच्यत्वभङ्गः ॥ १३ ॥

## न्यायामृतकण्टकोद्धारः

ननु ब्रह्मणोऽपि निर्धर्मिकतया प्रवृत्तिनिमित्तविधुरतया अवाच्यत्वात् कथमपुनरुक्तानन्तशब्दवाच्यत्वं तथाऽनन्तगुणत्वमित्यतो निर्धर्मकत्वमसिद्धम् सगुणवादे सधर्मकत्वस्य स्थापितत्वात् । तथा च प्रवृत्तिनिमित्तसम्भवात् वाच्यत्वं युक्तमित्यभिप्रेत्यावाच्यत्वे बाधकानि वक्तुं परमतमनुवदति ॥ यच्चेदमिति ॥ अभावादिति ॥ तथा च मुख्यार्थसम्बन्धरूपलक्षणासिद्धिरिति भावः ॥ स्यादिति ॥ तथाच ब्रह्मणो वाच्यत्वसिध्यर्थं सर्वपदलक्ष्यत्वस्याभावे अन्यस्यैव वाच्यत्वं सिध्यतीत्यर्थान्तरमिति भावः । ननु मुख्यार्थाभावेऽपि लक्षणा स्वीक्रियत इत्यत आह ॥ मुख्यार्थहीनस्यापीति ॥ न च नञ्समभिव्याहृत-वाच्यशब्दस्य मुख्यार्थाभावे वाच्यत्वात्यन्ताभावबोधनद्वारा स्वरूपे लक्षणयैव पर्यवसानमिति वाच्यम् । मुख्यार्थाभावेन लक्षणानुपपत्तौ चोदितायामस्य व्यधिकरणत्वात् । किञ्च वाच्यत्वात्यन्ताभावो ब्रह्मणि बोध्यतेऽन्यत्र वा? तटस्थतया वा? नाद्यः । वाच्यत्वप्रतिपादकश्रुतिविरोधेन तस्य बोधयितुमशक्यत्वात् । न द्वितीयः । अन्यस्यैव वाच्यत्वापत्तेः । न तृतीयः । ब्रह्मणीव घटादावपि पर्यवसानस्य वक्तुं शक्यत्वात् । ब्रह्मणो वाच्यत्वासिद्धेश्च ॥ मुख्यस्यान्यस्याभावादिति ॥ तथाच लक्षणासिद्धिः । ब्रह्मणो निर्विशेषत्वाद्य-सिद्धिश्चेति शेषः ॥ अनिवार्यमिति ॥ तथाच न सर्वथा वाच्यत्वसिद्धिरिति भावः । ननु यत्र लक्ष्यं वाच्यानन्तर्गतं तत्र लक्ष्यं वाच्यसम्बन्धितया सिध्यत् वाच्यान्यदेव सिध्यति । यत्र च तदन्तर्गतं तत्र न तत्सम्बन्धितया सिद्धिः । प्रकृते च विशिष्टं वाच्यम् । तदन्तर्गतमेव विशेष्यं ब्रह्म वाच्यत्वेऽपि ब्रह्मणो नावाच्यत्वाद्यसिद्धिरिति शङ्कते ॥ नन्विति ॥ तत्पदावाच्यत्वायोगादिति ॥ तथा च निर्विशेषत्वादिकं तत्प्रतिपादकपदावाच्यत्वञ्च व्याहतमिति भावः । उपलक्षणमेतत् । लक्षणायामपि निर्विशेषत्वादिसिध्यङ्गीकारे सत्यादिपदलक्ष्यत्वेऽपि सत्त्वादि सिद्धिर्दुर्वारेति लक्षणयाऽखण्डार्थत्वमिति मतं भज्येतेत्यपि द्रष्टव्यम् । नचानन्त्यव्यभिचाराभ्यां व्यक्तिपक्षस्य दुष्टत्वात् जातिपक्षे लाघवात् जातिरेव पदार्थ इत्यतः एवमपि पूर्वोक्तदोषतादवस्थ्यमित्याह ॥ अस्मिन् पक्ष इति ॥ मञ्चशब्देन यथा मञ्चाश्रितपुरुषलक्षणा तथेत्यर्थः । अवाच्यादिशब्देभ्यः ब्रह्मणः सिद्धिः वाक्यार्थतया उत पदार्थतया । न द्वितीय इत्याह ॥ अन्वितेति ॥

(कण्टकोद्धारः)

नचान्वितवाचकत्वेऽपि स्वरूपलक्षणैवेति वाच्यम् । अन्वितस्वरूपातिरिक्तरूपाभावात् । अन्वयानालिङ्गिते लक्षणेति वाच्यम् । तादृशस्य शब्दात् पूर्वमसिद्धत्वेन तत्र लक्षणायोगात् ॥ अन्विताभिधायित्वादिति ॥ तथा च ब्रह्मणः प्रत्ययार्थत्वेन वाच्यत्वसिद्धिरिति भावः ॥ तस्येति ॥ न च वाच्यत्वाभावेऽपि लक्षणया पदार्थत्वमिति वाच्यम् । ब्रह्मातिरिक्त शक्त्यभावेन तत्र लक्षणानुपपत्तेः । प्रथममाशङ्क्य निषेधति ॥ यदि चेति ॥ संसर्गस्य सखण्डत्वनियमादिति भावः । नन्ववागादिपदं नञर्थसंसर्गपरलक्षणया ब्रह्ममात्रपरमित्यत आह ॥ यदि त्विति ॥ उपसंहरति ॥ तस्मादिति ॥ उक्तानि दूषणानि सिद्धान्तसिद्धानीत्याह ॥ उक्तश्चेति ॥ निर्गुण इत्यादिपदं कथं गुणादिविशिष्टं वदिष्यति व्याघातात्, गुणाभावोपलक्ष्यं निर्गुण इति पदं वदिष्यतीति यदि तर्हि तदपि गुणाभावोपलक्ष्यपदमपि वाचकमिति सर्वथा वाच्यत्वसिद्धिरिति सम्मतिश्लोकार्थः । उक्तमर्थं श्लोकेन सङ्गृह्णाति ॥ एवञ्चेति ॥ ननु यदि ब्रह्मणो वाच्यत्वमङ्गीक्रियते तर्हि यतो वेत्यादि श्रुतिविरोधः । तत्रावाच्यत्वस्याप्रतिपादनादित्यत आह ॥ यत इति ॥ न च श्रूयमाणार्थबाधकाभावात् नाद्भुतत्वाद्यभिप्रायता श्रुतेरिति वाच्यम् । बाधकानामुक्तत्वाद्वक्ष्यमाणत्वाच्च । नन्वद्भुतत्वाद्यभिप्रायेणावाच्यत्वप्रयोगस्य काप्यदर्शनात् ब्रह्मणि अद्भुतत्वाभिप्रायेणावाच्यतेत्यत्र किं प्रमाणमित्यत आह ॥ अद्भुतत्वादिति ॥ लोकव्यवहारोपि प्रमाणमित्याह ॥ अवाच्यमितीति ॥ भुवि लोकोऽपि आश्चर्यतमम् अवाच्यमिति वक्तीत्यर्थः । नन्वेवं कल्पना किमर्थं क्रियते पराभिमत एवर्थः किं न स्यादित्यतो बाध्यबाधकादित्युक्तमातरानुपपत्तेश्चेत्याह ॥ पराभिमतार्थ इति ॥ शब्दावाच्यत्वसिद्ध्यर्थमशब्दवाच्यत्वं स्वीकर्तव्यमन्यथा गङ्गाशब्दावाच्यस्यागङ्गात्ववत् अशब्दशब्दवाच्यस्याशाब्दत्वासिद्धेः । तथा च व्याघात इत्यर्थः । किञ्च यतो वेत्यत्र सर्वथा वाक्प्रवृत्तिनिषेधोऽयुक्तः । मनसा सहेत्यनेन सहपाठादित्याह ॥ यतो वाच इत्यत्रेति ॥ नच लक्षणया वाक्प्रवृत्तेरङ्गीकारान्नोक्तदोष इति वाच्यम् । सङ्कोचस्यावश्यकत्वे साकल्येनावाच्यमित्येव न्याय्यम् । अन्यथा वाच्यत्वाभावे लक्षणाभावेन पूर्वोक्तदोषतादवस्थ्यात् ॥ यत इति ॥ न च ब्रह्मणो निर्धर्मकत्वेन प्रवृत्तिनिमित्ताभावेन वाच्यत्वायोगादनेकेषाममुख्यार्थतेति वाच्यम् । निर्धर्मकत्वभावाभावाभ्यां व्याघातात् सधर्मकत्वस्योपपादितत्वाच्च । शक्यतावच्छेदकाभावे शक्त्यभाववत् लक्ष्यतावच्छेदकाभावे लक्षणाया अप्ययोगाच्च ॥ सम्मत इति ॥ न च वाच्यत्वविरोध्यवान्तरार्थस्वीकाराद्विरोधित्वमिति वाच्यम् । तत्र तात्पर्याभावेन तद्विरोधस्याकिञ्चित्करत्वात् । तात्पर्याङ्गीकारे च श्रुति तात्पर्यविषयस्य सत्यत्वनियमेनाद्वैत व्याकोपात् । यतो वेत्यादेः सर्वथाऽवाच्यत्वपरत्वे श्रुतिस्मृत्यनुमानविरोध इत्याह ॥ अन्येति ॥ श्रुतौ स्मृतौ च वच्धातु प्रयोगात् तस्य च वाच्यत्व एव योगात् निरवकाशत्वेन बलवत्त्वम् । यतो वेत्यादौ तु न तथात्वमिति भावः ॥ वेदान्तेति ॥ अत्र विशिष्टब्रह्मणो वाच्यत्वस्य परेणापि स्वीकारात् सिद्धसाधननिवृत्तये पूर्वप्रतीकं ब्रह्मेति स्वरूपकीर्तनम् । यद्वा स्वमते वेदान्तानामपि उपासनादाववान्तरतात्पर्यसम्भवात् तद्दोष तादवस्थ्यमिति ॥ ब्रह्मेति ॥ वस्तुत्वादिति ॥ नन्वसतोऽपि असदादिशब्दवाच्यत्वाङ्गीकारेण तस्य सपक्षत्वात् तत्र हेतोरवृत्तौ असाधारण्यमिति वाच्यम् । कस्मिंश्चित् सपक्षे वृत्तिमात्रेणासाधारण्यासम्भवात् । ननु वस्तुत्वस्य वाच्यत्वप्रयोजकत्वेऽसतो वाच्यत्वं न स्यात् । तत्प्रयोजकवस्तुत्वाभावादिति वाच्यम् ।

(कण्टकोद्धारः)

वस्तुत्वस्य ज्ञेयत्वपरत्वेन तत्रापि तद्भावादिति भावः । नच निर्धर्मकत्वादिना सत्प्रतिपक्षत्वम् । तस्य प्रागेव व्याघातेन दूषितत्वात् ।। पदत्वादिति ।। न च पदत्वं सुप्तिङन्तत्वं वा? शक्तत्वं वा? नाद्यः । समासपदे व्यभिचारात् । न द्वितीयः साध्याविशेषादिति वाच्यम् । आद्यपक्षस्यैव युक्तत्वात् । समासपदेऽपि शक्त्यङ्गीकारेण व्यभिचाराभावात् ।। वाक्यत्वादिति ।। न च विषं भुंक्ष्वेत्यत्र व्यभिचारः । तत्रापि विषभुजिपदाभ्यां परगृहभोजननिवृत्तिलक्षणायामपि वाच्यार्थ तात्पर्यकलोटः सत्त्वेन व्यभिचाराभावात् । वेदवाक्यत्वादिति वा हेतुरतो न कश्चिद्दोषः । अप्रयोजकत्वं परिहरति ।। विपक्ष इति ।। वाच्यत्वाभावेऽपि लक्ष्यत्वमस्त्वित्यत आह ।। तथा हीति ।। बोधक इति ।। लाक्षणिक शब्द इत्यनुषज्यते । नन्वेवं कल्पने प्रमाणाभाव इत्यत आह ।। गङ्गाशब्दाविति ।। अन्यथा मुख्यार्थतानुपपत्याद्यननुसंधानेऽपि यदि लक्षणा तर्हि गङ्गायां जलमित्यत्रापि लक्षणा स्यादित्यर्थः । ननु ब्रह्मणो वाच्यसम्बन्धित्वेन ज्ञानमावश्यकमस्तु । तच्च शब्दातिरिक्तप्रमाणेन भविष्यतीत्यत आह ।। औपनिषदत्वश्रुत्येति ।। ननु स्वप्रकाशतयैव ब्रह्मणः सिद्धिरस्त्वित्यत आह ।। स्वप्रकाशतयेति ।। नचावरणाभिभवजनकवृत्यर्थं शब्दापेक्षेति वाच्यम् । प्रकाशमाने आवरणायोगस्योक्तत्वात् । उपलक्षणमेतत् । त्वयाचावेद्यत्वस्य स्वप्रकाशार्थतया स्वीकृतत्वेनाङ्गीकारादिति भावः ।। अवाच्ये लक्षणेति ।। तथा चानवस्था लक्षणात् प्रतिपक्षबाधकसम्भवात् नाप्रयोजकतेति भावः । उक्तमर्थं कारिकया सङ्गृह्णाति ।। एवं चेति ।। ननु वाच्यत्वाङ्गीकारेप्यनवस्था तुल्येत्याशङ्क्य निषेधति ।। नचेति ।। यौगिकशब्दानामिति ।। तथा च वाक्यार्थतया ब्रह्मोपस्थितौ तत्र शब्दस्य सङ्गतिग्रहणं युक्तमिति भावः । न चैवमेव मयापि वक्तुं शक्यत इति वाच्यम् । त्वन्मते ब्रह्मणोऽखण्डत्वेन वाक्यार्थत्वायोगात् । विपक्षे बाधकान्तरमाह ।। एव मवाच्यं चेदिति ।। ननु स्वत एव ब्रह्म सिध्यत्वित्यत आह ।। स्वत इति ।। नन्वनुमानादिना सिध्यत्वित्यत आह ।। औपनिषदत्वेनेति ।। तर्हि शब्देनैव लक्षणया सिध्यत्वित्यत आह ।। लक्षकस्य चेति ।। वाच्यत्वाभावे लक्षणायोगस्य पूर्वमेवोक्तत्वादिति भावः । तथाच नाप्रयोजकतेति भावः । वाच्यत्वानुमाने दोषं शङ्कते ।। नन्विति ।। अत्र वाच्यत्वानुमाने ।। अत एवेति परामृष्टं हेतुमाह ।। आपाद्यापादकयोरिति ।। नचासति उभयाभाव प्रसिद्धिः । तस्याप्यसदादिशब्दवाच्यत्वात् । अवाच्यस्यापि लक्ष्यत्वमित्यत्रापि सम्मतिमाह ।। उक्तं हीति ।। वेदान्तेति ।। ब्रह्मपदं तु स्वरूपकथनार्थं, ब्रह्मपदतात्पर्य-विषयत्वादिना पक्षतावच्छेदकान्तरकथनार्थं वेति भावः ।। अन्यथेति ।। वेदतात्पर्यविषयत्वादिना पक्षतानङ्गीकारे इत्यर्थः । व्याप्त्यसिद्धिं परिहरति ।। अस्ति चेति ।। न च सामान्यव्याप्त्या विशेषापादनमदृष्टचरमिति वाच्यम् । प्रेक्षावत्प्रवृत्तिविषयत्वसफलत्वयोर्व्याप्तिदर्शनेन यागादिक्रियायाः स्वर्गसाधनत्वानुमानदर्शनादिति भावः । ननु प्रयोज्यप्रयोजकभाव एवासिद्ध इत्यत आह ।। उक्ताचेति ।। वस्तुत्वानुमाने व्यभिचारमाशङ्क्य निषेधति ।। न चेति ।। यद्वा भट्टमतेनोभयत्रापि व्यभिचारमाशङ्क्य निषेधति । अत एवोत्तरत्र वाक्यार्थस्य लक्ष्यत्वाभावोपपादनमिति भावः । किं साधारणशब्दवाच्यत्वं नास्तीत्युच्यते उतासाधारणशब्द वाच्यत्वम्? नाद्य इत्याह ।। तस्यापीति ।। न द्वितीय इत्याह ।। विशदमिति ।। अन्वितेति ।। यद्यप्यवाच्यमित्यादि समासादिपदानां लक्ष्य इत्यादियौगिकपदानाञ्च न विशिष्टे शक्तिः ।

(कण्टकोद्धारः)

**तथाप्यन्विताभिधानस्वीकारेण अवाच्यलक्षणपदान्तर्गतप्रत्येकपदानामपि अन्योन्यपदार्थसंसर्गरूप विशिष्ट-वाक्यार्थवाचकत्वापरिहारात् । अन्यत्र समासेऽपि शक्तिसमर्थनाच्चेति भावः । लक्ष्यत्ववदिति हेतोः वाक्यार्थे अभावाच्च न वाक्यार्थे व्यभिचारः इत्याह ॥ अभिहितेति ॥ तथाचाभिहितान्वय पक्षेऽपि तार्किकमत इव वाक्यार्थभानसम्भवात् न तत्र लक्ष्यतेति भावः । न च वाक्यार्थः प्रकारतया प्रतीयतेऽतस्तत्प्रतीत्यर्थं लक्षणेति वाच्यम् । असिद्धेः । वाक्यार्थादिसाधारणशब्दवाच्यत्वमुक्तमाशङ्क्य निषेधति ॥ न चेति ॥ समासेऽपि शक्तिरावश्यकी मुख्यार्थान्वयानुपपत्तिप्रतिसन्धानं विनापि समासार्थप्रतीतेः । तथाच न व्यभिचार इति सत्येव समाधाने समासे लक्षणां स्वीकृत्य समाधत्ते ॥ समासस्येति ॥ एतेनेति परामृष्टं हेतुमाह ॥ वाक्य शब्दार्थशब्दयोरिति ॥ ननु तथाप्यनुमानमयुक्तं यदि वाच्यं स्यात् प्रवृत्तिनिमित्तवत् स्यात् न च तदस्ति इति प्रतिकूलतर्कपराहतत्वादिति शङ्कते ॥ नन्विति ॥ सत्यादिशब्दानामिति ॥ न च प्रवृत्तिनिमित्ताभावो निर्गुणं निष्क्रियमित्यादि वाक्यसिद्धोऽतो नान्योन्याश्रयतेति वाच्यम् । तस्य व्याहतत्वेन धर्मसामान्याभावाप्रतिपादकत्वात् । विशेषाभावपरतयाप्युपपत्तेः । तथा च यः सर्वज्ञ इत्यादिश्रुतिबलात् प्रवृत्तिनिमित्तानां गुणादीनां भावात् न प्रतिकूलतर्क इति भावः । किञ्च किं सत्यादिपदानां लक्षकत्वं स्वरूपमात्रप्रश्नोत्तरत्वेन वा? निर्विशेषवाक्यानुरोधेन वा? नाद्य इत्याह ॥ स्वरूपेति ॥ न द्वितीय इत्याह ॥ निर्विशेष वाक्यस्य वेति ॥ निर्विशेष वाक्यं किं लक्षणया स्वरूपमात्रपरं उत विशेषाभावविशिष्टपरम्? नाद्यः अविरोधित्वात् । न द्वितीय इत्याह ॥ तस्येति ॥ नन्वभावनिमित्तशब्दवाच्यत्वमङ्गीक्रियते न भावनिमित्तक शब्दवाच्यत्वमित्यत आह ॥ अभावेति ॥ उपसंहरति ॥ तस्मादिति ॥ इदं सर्वंदूषणजातं सिद्धान्त-सिद्धमित्याह ॥ उक्तं हीति ॥ परमप्रकृतमुपसंहरति ॥ तस्मादिति ॥ यौगिकेत्यादि हेतुगर्भम् तथाचानन्त-गुणत्वादनन्तगुणरहितात् भिन्नमित्यर्थः । इति अवाच्यत्वभङ्गः ॥**

## न्यायामृतप्रकाशः

अन्यस्येति ॥ ब्रह्मातिरिक्तस्येत्यर्थः ॥ भावे वेति ॥ अवाच्यरूपमुख्यार्थस्य ब्रह्मव्यतिरिक्तस्य भाव इत्यर्थः ॥ तीरवदिति ॥ गङ्गापदमुख्यार्थस्य प्रवाहस्य तीरान्यस्य सत्वात्तीरं मुख्यार्थसम्बन्धिमात्रमेव न तु तत्र गङ्गात्वमस्ति एवमवाच्यपदमुख्यार्थभूतं यदस्ति तत्सम्बन्ध्येव ब्रह्म । न तु स्वयमवाच्यमित्यर्थः ॥ हीनस्यापीति ॥ अवाच्य-पदस्येत्यर्थः ॥ घट इति ॥ तथाच तत्र त्वया वाच्यं घटपदेन घटरूपार्थस्य लक्ष्यत्वे तद्वाच्य मुख्यार्थस्यान्यस्या-भावाच्च लक्षकत्वमिति तत्प्रकृतेपि तुल्यमिति भावः ॥ इत्यादिशब्दैरिति ॥ ब्रह्म मात्रनिष्ठतया प्रसिद्धैस्त-द्व्यतिरिक्तमुख्यार्थप्रसक्तिशून्यैरित्यर्थः ॥ अन्यस्येति ॥ शुद्धब्रह्मातिरिक्तस्येत्यर्थः । भावे वा ब्रह्म न निर्विशेषा-दिरूपं किं तु तीरवन्निर्विशेषादिरूपमुख्यार्थ सम्बन्धिमात्रमिति स्यात् । मुख्यार्थहीनस्याऽपि लक्षकत्वे घटशब्दोपि घटलक्षकः स्यादिति भावः । तमेवोपपादयति ॥ गङ्गेति ॥ निर्विशेषादिरूपमुख्यार्थस्यान्यस्याभावादित्ये-तदयुक्तमित्याशयेन शङ्कते ॥ नन्विति ॥ ननु तर्हि विशिष्टस्याऽपि ब्रह्मत्वे ब्रह्मण एव वाच्यत्वसिद्धिरिति चेत्तत्राह ॥ तच्चेति ॥ पुनर्निर्विशेषादिपदमुख्यार्थभूतमन्यदस्तीत्याशङ्कते ॥ नन्विति ॥ तच्चेति ॥ निर्विशेषादि-

(प्रकाशः)

पदवाच्यं वस्त्वित्यर्थः । तर्हि ब्रह्म कीदृशमित्यत आह ॥ किं त्विति ॥ तदाश्रयेति ॥ निर्विशेषत्वाद्याश्रयेत्यर्थः । सिद्धिः निर्विशेषादिपदानामिति शेषः । नन्वेवं गङ्गापदलक्ष्यस्य तीरस्यागङ्गात्ववन्निर्विशेषादिशब्दलक्ष्यस्य न निर्विशेषत्वादिकमित्यत आह ॥ ब्रह्मण इति ॥ जातिरेव शब्दार्थः तदाश्रयव्यक्तिर्लक्ष्येति मते सत्पदलक्ष्यस्यापि घटादेर्मुख्यार्थसम्बन्धित्वेनासत्वायोगात् । एवं निर्विशेषादिपदलक्ष्यस्यापि ब्रह्मणो मुख्यार्थभूतनिर्विशेषत्वाश्रयत्वेन तत्सम्बन्धितया तदसिद्धययोगात् ।

'सत्वादीनां तु जातीनां व्यक्तितादात्म्य दर्शनात् ॥
लक्ष्यव्यक्तिरपि ब्रह्मसत्वादि न जहाति न'

इत्युक्तत्वात् । नदीशब्देन तु नदीत्ववाचिना तदाश्रयव्यक्तेर्न लक्षणा किन्तु तदाश्रयव्यक्तिसम्बन्धिनः तीरस्येति तस्यानदीत्वमिति वैषम्यादिति भावः ॥ जातिस्त्विति ॥ अनन्तासु व्यक्तिषु शक्तिग्रहासम्भवेन शक्तिग्रहदशायां तत्स्थैव जातिर्व्यक्तीनामनुगमिकेत्यर्थः । शक्तिग्रहाधिकरणीभूतव्यक्त्यनुगमकत्वमुपधानशब्दार्थः । विशेष्ये विशेष्यव्यक्तौ । ननु जातिर्वाच्या व्यक्तिर्लक्ष्येति मताश्रयणान्न दोष इति चेन्न । तस्य मतस्यायुक्तत्वादित्याह ॥ जातिरेवेति ॥ व्युत्पत्तीति ॥ व्युत्पत्तीति ॥ व्युत्पत्तेर्वृद्धव्यवहारसाध्यत्वात्तस्य च व्यक्तावेव सम्भवेन जातावसम्भवादित्यर्थः । अन्यत्र तर्कताण्डवे ॥ अस्मिन्निति ॥ जातिः शब्दार्थः तदाश्रयव्यक्तिर्लक्ष्येति मताङ्गीकारे घटादिव्यक्तेरपि घटादिशब्दावाच्यत्वेन ब्रह्मणोपि तद्वत्सत्यादिपदावाच्यत्वे ततो विशेषाभावप्रसङ्गेन तदर्थं घटादेर्मुख्यार्थसम्बन्धित्वेन लक्ष्यत्वं ब्रह्मणस्तु मुख्यार्थाश्रयव्यक्तिसम्बन्धित्वेन लक्ष्यत्वेऽङ्गीकार्ये मश्चत्वाधारमश्चरूपव्यक्तिसम्बन्धिपुरुषेषु अमश्चत्ववद् ब्रह्मणोपि सत्यत्वनिर्विशेषत्वाद्यभावादिकं दुर्वारमित्यर्थः ॥ मुख्यार्थाभावादीति ॥ शक्यमश्चत्वतदाश्रयव्यक्तितल्लक्ष्यपुरुषाणामिव शक्यनिर्विशेषत्वतदाश्रयव्यक्तितल्लक्ष्य ब्रह्मणां त्रयाणामभावात् ब्रह्मभिन्नस्य निर्विशेषपदवाच्यस्याभावात् ब्रह्मणश्च निर्विशेषपदलक्ष्यत्वाङ्गीकारादित्यर्थः । ननु घटादिसाधारण्येनैव सत्यं ज्ञानमित्यादौ ब्रह्मणः सत्वादिधर्माश्रयतयैव लक्ष्यत्वमस्त्वित्यत आह ॥ सत्यमिति ॥ जातिः शब्दार्थ इति मते घटत्वाश्रयतयैव घटादि व्यक्तिर्लक्ष्येति वत्सत्यत्वाश्रयतयैव ब्रह्मव्यक्तिर्लक्ष्येति सखण्डार्थत्वमेवेत्यर्थः ॥ अब्रह्मेति ॥ निर्गुणत्वाद्यधिकरणस्य ब्रह्मत्वानङ्गीकारादित्यर्थः । अवाच्यलक्ष्यादिपदानां ब्रह्मान्यस्य मुख्यार्थस्याभावात्ते ब्रह्मवाचका इत्युक्तं तत्र शङ्कते ॥ नन्विति ॥ समस्तेति ॥ नञ्पदस्य वाच्यपदस्य च समस्तत्वादित्यर्थः । यौगिकाः । लक्षधातोः कर्मणि ण्यत्प्रत्यये सति निष्पन्नस्य यौगिकत्वादिति भावः । उभयेषां समस्तानां यौगिकानां चेत्यर्थः ॥ नेति ॥ तथा च मुख्यार्थाभावेपि संसर्गलक्षकत्वाङ्गीकारात् ब्रह्मलक्षकत्वं युक्तम् । पदस्य लक्षकत्वाङ्गीकारे हि तस्य मुख्यार्थो वक्तव्यः । मया तु वाक्यस्य लक्षकत्वमङ्गीकृतं तस्य तु नार्थवाचकत्वमतो न तस्य मुख्यार्थोऽपेक्षितः तथा च मुख्यार्थाभावेपि लक्षकत्वं युक्तमित्यर्थः ॥ अन्वितेति ॥ पदसमुदायो हि वाक्यं समुदायो हि समुदायिभूतपदात्मक एव एवं सति पदानामन्विताभिधानाङ्गीकारेणान्वयस्य वाच्यत्वाङ्गीकारात्पदसमुदायात्मकानां समस्तानां यौगिकानां च शब्दानां वाचकत्वादित्यर्थः । ननु पदैरभिहिताः पदार्था एवान्वयं बोधयन्तीति मते समस्तस्य यौगिकस्य वाक्यस्य न वाक्यार्थभूतान्वयार्थत्वं न

(प्रकाशः)

वा लक्षकत्वं मुख्यवृत्तिं लक्षणारूपां च वृत्तिं विनैवान्वयबोधाङ्गीकारेण पदभिन्नेषु पदार्थेषु च वृत्त्यभावे-नान्वयस्याशाब्दत्वाङ्गीकारादिति चेत्तत्राह ॥ अभिहितेति ॥ पदाभिहितपदार्थबोध्यान्वयस्य वृत्तिं विनैवाभिधाय-कत्वरूपाभिहितान्वयस्य वाक्य एवाङ्गीकारेण वाक्यान्तर्गतपदनिष्ठप्रकृतिप्रत्यययोस्तावत्स्वार्थवाचकत्वमेवास्ति तन्मते । अतः सर्वथा वाचकत्वाभावो नास्ति । नह्येवं सत्यादिवाक्यान्तर्गतस्य कस्यचिद्वा पदस्य वाचकत्वं त्वया स्वीकृतमिति भावः । वाक्यतुल्यत्वान्न वाचकतेत्यत्र दूषणान्तरमाह ॥ समास इति ॥ अवाच्यमित्यत्रेत्यर्थः । यौगिके लक्ष्यमित्यत्र ॥ अनभिधेयत्वेपीति ॥ वृत्तिं विनैव संसर्गबोधकत्वाङ्गीकारादिति भावः । समासे पदार्थस्य यौगिके प्रकृत्याद्यर्थस्येत्यर्थः । तथा च सर्वथाऽवाचकत्वं नास्ति तदन्तर्गतस्य पदादेर्वाचकत्वाङ्गीकारात् । सत्यादिवाक्यपदार्थभूतस्य ब्रह्मणो वाच्यत्वमनिवार्यमिति भावः । ननु मया ब्रह्म पदार्थरूपत्वेन न स्वीकृतं येन वाच्यत्वं स्यात् किं तु वृत्तिं विनैव बोध्यो यः संसर्गस्तद्रूपत्वाङ्गीकारादित्यत आह ॥ यदित्विति ॥ नन्वन्यत्र कुत्रचिद्ब्रह्मपरे समासे यौगिके वाक्ये पदार्थस्य प्रत्ययार्थस्य च वाच्यत्वेपि अवाच्यं लक्ष्यमित्यादौ समासादिवाक्ये पदद्वयस्य प्रकृतिप्रत्यययोर्वा न प्रत्येकं स्वार्थसंसर्गपरत्वं येन पदार्थस्य ब्रह्मणो वा वाच्यत्वापत्तिः किं नाम सर्वेषामपि लक्षणया ब्रह्ममात्रपरत्वादिति चेत्तत्राह ॥ यदित्विति ॥ तर्हीति ॥ ब्रह्मस्वरूपमात्रपरत्वेन तदवाच्यत्वे लक्ष्यत्वे च तात्पर्याभावान्नावाच्य लक्ष्यादिपदेन ब्रह्मणोऽवाच्यत्वादिसिद्धिरित्यर्थः ॥ स्यादिति ॥ अवाच्यत्वपदलक्ष्यस्यावच्यत्वाभावादिति भावः । तत्र दृष्टान्तो नदीति । ननु 'यतो वाचो निवर्तन्त' इत्यादि-श्रुत्याऽवाच्यत्वसिद्धिरित्यत आह ॥ यत इत्यादिना ॥ अशब्दमित्यादेः सर्वथाऽवाच्यत्वाभिप्राये बाधकमाह ॥ परेति ॥ अशब्दत्वासिद्धचेति ॥ गङ्गापदलक्ष्यस्य तीरस्यागङ्गात्ववदित्यर्थः । मनोवृत्तेः सर्वथा निषेधायोगे हेतुरन्तःकरणवृत्तिव्याप्य इति । एवं चान्तःकरणवृत्तिव्याप्ये ब्रह्मणि श्रुतस्यापि मनोवृत्तिनिषेधस्य साकल्यादिना सङ्कोचवत् वाग्वृत्तिनिषेधस्यापि साकल्येनावाच्यत्वादिना सङ्कोचः कार्य इत्याह ॥ यत इति ॥ किं च "यतो वाच" इत्यादि श्रुतौ यत इत्यादिबहूनां पदानां ब्रह्मवाचकत्वरूपमुख्यार्थलाभाय निवर्तन्त इत्येकमेव पदं साकल्येन प्रतिपादनान्निवर्तत इति स्वार्थात्प्रच्यावनीयं बहुबाधस्याऽन्याय्यत्वात् "त्यजेदेक' मिति न्यायाच्चेत्याह॥ यत इति ॥ अविरोधित्वादिति ॥ दण्डीति वाक्यस्य देवदत्त इति वाक्येनाविरोधदर्शनेन विशिष्टपरस्य विशेष्यपरत्वाविरोधादित्यर्थः । वाच्यत्वप्रतिपादकश्रुतिस्मृत्यनुमानविरोधाच्च नाऽवाच्यत्वमित्याह । अथेत्यादिना ॥ ब्रह्म वाच्यं लक्ष्यत्वात्तीरवदित्यनुमानेऽप्रयोजकत्वपरिहाराय 'सर्वशब्दावाच्यस्य लक्षणाऽयुक्ते'रिति भाष्यं हृदि निधाय हेतूच्छित्तिं बाधकमाह ॥ विपक्ष इति ॥ स्वरूप इति ॥ स्वरूपतस्तीर-त्वादिना रूपेणावगतस्य वाच्यार्थनदीसम्बन्धित्वेन चावगतस्य तीरादिरूपार्थान्तरस्य लाक्षणिको गङ्गादिशब्दो बोधक इत्यर्थः ॥ अन्यथेति ॥ किं तु पूर्वधीस्थे वाच्यार्थ इत्युक्तप्रमेयानङ्गीकार इत्यर्थः ॥ अतिप्रसङ्गादिति ॥ गङ्गापदेन घटस्यापि लक्ष्यत्वप्रसङ्ग इत्यर्थः । ज्ञेयत्वं च तस्य न शब्देतरप्रमाणेन वेदैकगम्यत्वात् तदपि कुतः "औपनिषदः पुरुष" इति श्रुतेरित्याह ॥ औपनिषदत्वेति ॥ ननु वाच्यार्थसम्बन्धित्वादिना ब्रह्मज्ञानमपि शब्देनैव भवतीति चेत्तत्राह ॥ अवाच्ये चेति ॥ वाच्येति । वैदिकम् औपनिषदं ब्रह्म वाच्यसम्बन्धितया बुद्धं चेल्लक्ष्यं नान्यथा तद्बोधश्च नाशब्देनेति वैदिकपदमेव वक्तव्यं तेनापि ब्रह्म वाच्यमिति पुनर्लक्षक एव पदे वक्तव्ये

(प्रकाशः)

सत्यनवस्थितिमाशङ्क्य परिहरति ॥ न चेति ॥ शब्दैकेति ॥ तस्यापि गृहीतसङ्गतिकस्यैव बोधकत्वादनवस्थेत्यर्थः ॥ यौगिकेति ॥ पदानामितरत्र लोके सङ्गतेर्गृहीतत्वात्तत्समुदायरूपवाक्येन सङ्गतिग्रहणानपेक्षेणार्थोऽपूर्व एव भासत इत्यङ्गीकारान्नानवस्थेत्याशयः । अवाच्यत्वाङ्गीकारे ब्रह्मासिद्धिरूपं बाधकान्तरं चाह ॥ एवमिति ॥ न सिध्येदिति ॥ प्रत्यक्षानुमानलौकिकशब्दानां ब्रह्मण्यप्रवृत्तेः । वैदिकशब्दवाच्यत्वस्य च त्वयानङ्गीकारात् लक्षकस्य च शब्दस्य वाच्यार्थसम्बन्धित्वेन येन पुंसा ब्रह्म ज्ञातं तं प्रत्येव सिद्धिजनकत्वे न वाच्यार्थसम्बन्धित्वेन ज्ञानस्य चोक्तरीत्याऽसम्भवेनावाच्यरूपब्रह्मसिध्ययोगादित्यर्थः ॥ ननु चात्रेति ॥ ब्रह्म वाच्यं लक्ष्यत्वादित्यत्र पक्षीभूतं ब्रह्म ब्रह्मपदवाच्यमुत ब्रह्मपदलक्ष्यम् । नाद्यः ब्रह्मपदवाच्यं ब्रह्म वाच्यमिति साधने सिद्धसाधनता । उपलक्षण-मेतत् मम आश्रयासिद्धिश्च । द्वितीये विरोधः एवमनुमानस्य पक्षाविवेकेन दुष्टत्वादनेनैव विकल्प्य दूषणेन अवाच्यत्वे लक्ष्यत्वं न स्यादिति तर्कोऽप्ययुक्तः वाच्यत्वलक्ष्यत्वयोः केवलान्वयित्वेन तदभावरूपापाद्या-पादकयोरप्रसिद्धिश्चेत्यर्थः । तथाचैवं पक्षस्य विवेक्तुमशक्यत्वान्न वाच्यत्वानुमानं युक्तमिति भावः । ननु ब्रह्मणोऽवाच्यत्वेपि लक्ष्यत्वायोगेन त्वदभिमतं लक्ष्यत्वमपि न सिद्ध्येदिति चेन्न एवमुक्तरीत्या वाच्यत्वानुपपत्तौ लक्ष्यत्वं स्वत एव सिद्धं भविष्यतीति न पुनस्तत्र पृथक् प्रमाणं वक्तव्यमित्याशयेन तत्र संमतिमाह ॥ उक्तं हीति ॥ अत्यन्तावाच्यशब्देनैवेत्यन्वयः ॥ अन्यथेति ॥ वेदान्ततात्पर्यविषयीभूतं वस्त्वित्येवं रूपेण पक्षीकारेण ब्रह्म अवाच्यं प्रवृत्तिनिमित्तशून्यत्वादिति वक्ष्यमाणानुमाने ब्रह्मपदवाच्यं पक्षश्चेत्तत्रावाच्यत्वसाधने विरोधः ब्रह्मपदलक्ष्यं पक्षश्चेन्ममाश्रयासिद्धिरित्यर्थः । ननु वेदान्ततात्पर्यविषयीभूतं ब्रह्म अवाच्यं चेल्लक्ष्यं न स्यादित्यत्र वाच्यत्व-लक्ष्यत्वयोः केवलान्वयित्वेनापाद्यापादकयोरप्रसिद्ध्या व्याप्यत्वासिद्धिश्चेत्युक्तं दूषणं सामान्यव्याप्त्युक्त्या परिहरति ॥ अस्ति चेति ॥ ननु स्यादियं व्याप्तिः यदि लक्ष्यत्वे वाच्यत्वं प्रयोजकं स्यादित्यत आह ॥ उक्ताचेति ॥ अनवस्थादिना उपपादितेत्यर्थः ॥ व्यभिचार इति ॥ लक्ष्यत्वेपि वाच्यत्वाभावात् ब्रह्म वाच्यं लक्ष्यत्वादित्यनुमाने व्यभिचार इत्यर्थः ॥ माधुर्येति ॥ माधुर्यमित्येवं रूपो वाक्यार्थ इत्येवं रूपो यः साधारणशब्दस्तद्वाच्यत्वादित्यर्थः ॥ इत्युक्तत्वेनेति ॥ तथा च क्षीरमाधुर्यादेः सूदशास्त्रप्रसिद्धविशदाद्यसाधारणशब्दवाच्यत्वादित्यर्थः । वाक्यार्थ-स्याप्यसाधारणशब्दवाच्यत्वमस्ति गवादिपदस्येतरान्वितस्वार्थवाचकत्वाङ्गीकारेण गवादिपदस्यैव वाक्यार्थ-भूतान्वयवाचकत्वादित्याह ॥ अन्वितेति ॥ अभिहितान्वयवादिनां तार्किकाणां मते तु वाक्यार्थस्य पदवृत्ति-विषयत्वाभावेन तत्र लक्ष्यत्वस्यैवाभावेन न व्यभिचार इत्याह ॥ अभिहितेति ॥ पक्षेपि तार्किकमते च वाक्यार्थे लक्ष्यत्वस्याप्यभावादित्यन्वयः । तत्र दृष्टान्तः ॥ अन्वितेति ॥ सामान्यतः कारकपदानां च क्रियान्विते स्वार्थे शक्तिः क्रियापदानां च कारकान्विते स्वार्थे शक्तिरिति पक्षे विशेषान्वये पदवृत्तिं विनैव प्रतीयमाने लक्ष्यत्वाभाववत् वाक्यार्थेपि लक्षत्वाभावात् । तथा च पदवृत्तिं विनैव संसर्गमर्यादया वाक्यार्थः प्रतीयत इति तार्किकमतेपि वाक्यार्थस्य लक्ष्यत्वाभावादित्यर्थः । अस्माभिस्तु सामान्यान्विताभिधानशक्तिरेव पदान्तरसमभि-व्याहारेण विशेषान्वये पर्यवस्यतीत्यङ्गीकारेण शक्तिरूपपदवृत्तेरेवाङ्गीकारात् वृत्तिं विनैव विशेषान्वयः प्रतीयत इत्यपि केषाञ्चिन्मतमिति द्रष्टव्यम् । यदुक्तं वाक्यार्थस्यापि वाक्यार्थ इति साधारणशब्देनैव वाच्यत्वादिति तदयुक्तं वाक्यार्थशब्दस्य समस्तवाक्यत्वेन वाचकत्वाभावात् किं तु लक्षकत्वमेव अतो व्यभिचार एवेत्याशङ्क्य निषेधति

(प्रकाशः)
।। न चेति ।। समासस्य लक्षकत्वेपि वाचकत्वमप्यस्तीत्याह ।। समासस्येति ।। समासस्य लक्षकत्वपक्षेपि न समग्रपदानामपि लक्षकत्वं यथा राजपुरुष इति षष्ठीसमासे राजशब्दस्य षष्ठ्यर्थस्य राजसम्बन्धित्वस्य लक्षकत्वेपि पुरुषशब्दस्तु न लक्षकः किं तु मुख्यार्थ एव एवं वाक्यस्यार्थो वाक्यार्थ इत्यत्रापि वाक्यशब्दस्य षष्ठ्यर्थस्य वाक्यसम्बन्धित्वस्य लक्षकत्वेपि अर्थशब्दस्तु मुख्यार्थ एवातो न समस्तवाक्यार्थशब्दस्य लक्षकत्वमेवेत्यर्थः । पुरुषशब्दस्येवार्थशब्दस्य वाचकत्वादित्यन्वयः । समासस्य वाक्यार्थशब्दस्य अभिधानं विनैव पदशक्तिं विनैवेत्यर्थः ।। स्वार्थेति ।। लक्षणया वाक्यार्थबोधकतेत्यर्थः । तथा च वाक्यार्थे व्यभिचार इति भावः । एतेनेत्युक्तमेव विशदयति ।। वाक्येति ।। अर्थपदेति ।। तथा च साध्यस्यापि सत्वान्न व्यभिचार इत्यर्थः । रूढ्या इत्यत्र रूढिः सङ्केतः । अमीषां मध्ये घटादाविवेति मायावादिशिष्यस्यैव शङ्का न तत्ववादिन इत्यवधेयम् । घटादौ घटत्वादिकमेवारोपितम् आरोपितं व्यावहारिकं निमित्तं गुणादिरूपम् । तथा च वाच्यत्वं युक्तमिति भावः ।। अयोगेनेति ।। अतत्वावेदकत्वेनाप्रामाण्यापत्त्या आरोपितनिमित्ते श्रुतितात्पर्यायोगात् तथा च श्रुतितात्पर्य-विषयस्य 'श्रुतितात्पर्यविषय'निमित्तशून्यस्य वाच्यत्वायोगादित्यर्थः ।। तस्मिंश्च सिद्ध इति ।। वाचकत्वाभावे सिद्ध इति शेषः । ननु सत्यादिपदानां स्वरूपमात्रप्रश्नोत्तरत्वेन तयोर्वैयधिकरण्यानुपपत्त्यैव लक्षकत्वमङ्गीक्रियते न तु निमित्ताभावेनातो नान्योन्याश्रय इत्यत आह ।। स्वरूपमात्रेति ।। किं च ब्रह्मणि सत्यादिपदप्रवृत्ति-निमित्तगुणाभावः कुतः निर्विशेषत्वप्रतिपादकवाक्यविरोधादिति चेन्न । तस्यापि ब्रह्मस्वरूपमात्रे तात्पर्यम् उत निर्विशेषत्वादिविशिष्टे । नाद्य इत्याह ।। निर्विशेषेति ।। निर्विशेषत्वप्रतिपादकेत्यर्थः ।। सत्यत्वादीति ।। विशेष्य-परविशिष्टपरवाक्ययोरविरुद्धत्वेन स्वरूपमात्रपरनिर्विशेषवाक्यस्य निर्विशेषत्वे तात्पर्याभावेन सत्यत्वादिवैशिष्ट्य-प्रतिपादकसत्यादिवाक्याबाधकत्वादिति भावः । द्वितीये त्वाह ।। निमित्तस्येति ।। निर्विशेषत्वविशिष्टे तात्पर्ये निर्विशेषशब्दप्रवृत्तिनिमित्तस्यापि श्रुतितात्पर्यविषयत्वेन सत्वात्तन्निमित्तकनिर्विशेषशब्दवाच्यत्वं स्यादित्यर्थः । ननु निर्विशेषत्वरूपप्रवृत्तिनिमित्तस्याऽभावरूपत्वात्तन्निमित्तकनिर्विशेषशब्दवाच्यत्वमङ्गीकृतम् । न तु सत्यत्वादिभाव-रूपप्रवृत्तिनिमित्तकसत्यादिपदवाच्यत्वमिति चेत्तत्राह ।। अभावेति ।। वक्ष्यमाणमुपक्षिपन्नुपसंहरति ।। तस्मादिति ।। अवाच्यत्वभङ्गविवरणम् ।। १३ ।।

## १४. सामान्यतो भेदखण्डनोद्धारः

**यच्चेदमुच्यते भेदः किं स्वरूपम्? धर्मो वा? नाद्यः निरपेक्षत्वाद्यापातात् । नान्त्यः, अनवस्थाद्यापत्तेः । कुंभस्य स्तंभाद् भेदे प्रतीते स्तम्भस्य कुंभाद् भेदधीरित्यन्योन्याश्रयाद्यापत्तेश्चेति । अत्र ब्रूमः किं भेदप्रतीतिरेव नास्तीत्युच्यते? किं वा सा कारणजन्या नेति? उत बाध्यविषयेति? नाद्यः, भेदभ्रमनिरासाय वेदान्तश्रवणाद्ययोगात् । भेदाप्रतीतौ बहुयत्नैस्तन्निरासायोगाच्च । स्वपरपक्षदूषण-भूषणादेर्भेदाप्रतीतौ बहुविप्लवापत्तेश्च, भेदः स्वरूपं धर्मो वेति विकल्पायोगाच्च । न**

हि पर्यायेण विकल्पः संम्भवति । द्वितीये कारणाजन्यत्वमजन्यत्वेन वा स्यात्, अकारणजन्यत्वेन वा स्यात् । नाद्यः, भेदप्रतीतेर्नित्यत्वापत्त्या स्वप्रातिकूल्याचरणापातात् । न द्वितीयः, व्याघातात् । जनकस्यैव कारणत्वात् । तृतीयेपि किं शुष्कतर्कैरेव भेदस्य बाध्यत्वाध्यवसायः? श्रुत्यादिना वा? नाद्यः, ऐक्यस्यापि ब्रह्मस्वरूपत्वे तद्वदेव निरपेक्षत्वाद्यापातात्, धर्मत्वेऽनवस्थेत्यादि तर्कबाध्यत्वसाम्यात् । त्वयैव वेदान्तानामैदंपर्यं दर्शयितुमिदं शास्त्रं प्रवृत्तं न तर्कशास्त्रवत् केवलाभिर्युक्तिभिः किंचित्सिद्धान्तं साधयितुं दूषयितुं वा प्रवृत्तमित्युक्तत्वाच्च । एवं च–

भेदः स्वरूपं धर्मो वेत्यादिरूपा विभीषिका ।
अकारमात्रप्रक्षेपे स्यादभेदे विभीषिका ॥

भेदाभावादन्यदैक्यं नास्तीति चेदैक्याभावान्यो भेदो नास्तीति समं । भेददूषणेनैवैक्य सिद्धिश्चदैक्यदूषणेनैव भेदसिद्धिः स्यात् । एवं च–

भेदस्य खण्डनेनैव यद्यभेदः प्रसिध्यति ।
अभेदखण्डनेनैव तर्हि भेदोऽपि सिद्धयतु ॥

भेद एव दूष्योऽस्माकं न त्वभेदः साध्य इति चेद्, अभेद एव दूष्योऽस्माकं न तु भेदः साध्य इति समम् । स्वपक्षस्य जल्पादौ त्वयापि स्थाप्यत्वात् । वितण्डायां तु मयाप्यस्थाप्यत्वात् । न च वितण्डा तवैवेति नियमः । सत्यपि पक्षपरिग्रहे तवेव ममापि तदा तदस्थापनेन वितण्डाधिकारात् । अन्यथा तार्किकादेः शब्दानित्यत्वादौ मीमांसकादिना सह वितण्डा न स्यात् । उक्तं च वितण्डा तु सतामन्यैस्तत्वमेषु निगूहितमिति । पक्षपरिग्रहहीनस्य तु निर्मर्यादस्यापसिद्धान्तादिनिग्रहानर्हतया न वितण्डायामप्यधिकारः । नाप्यौपनिषदमन्यस्यापि तवैव वितण्डेति नियमः, त्वदिच्छाननुसारित्वात्प्राश्निकानाम्, उपनिषदां परपक्षनिरासमात्ररूपत्वाभावाच्च । परपक्षनिरासकेन द्वितीयाध्यायेनैव गतार्थत्वेन स्वपक्षसाधनार्थानामाद्याद्यध्यायानां वैयर्थ्यापाताच्च । भाषितं च त्वयैवाद्यद्वितीययोः संगतिं दर्शयता स्वपक्षसाधनं प्रथमं कृतं तद्धयभ्यर्हितं परपक्षप्रत्याख्यानादिति ।

त्वया स्थाप्यम्, मया दूष्यमिति समयबन्धे कथमिति चेन्न, मयापि स्वानभिमतस्यास्थाप्यत्वेन त्वयापि स्वाभिमतस्यादूष्यत्वेन तथा समयबन्धायोगात् । त्वया भेदः स्थाप्यः, मया दूष्य इति तद्बन्धे कथमिति चेत्, त्वयैक्यं स्थाप्यं मया दूष्यमिति तद्बन्धे कथम्? तदापि अस्वव्याघातकैरेव त्वया ऐक्यं दूष्यमिति चेत्, भेदेऽपि तथेति न स्वव्याघातकैर्भेददूषणं युक्तम् । ब्रह्मातिरिक्तमैक्यमेव नास्तीति चेद्, घटाद्यतिरिक्तो भेदोऽपि नास्तीति समम् । श्रुतिविरोधादैक्यदूषकास्तर्का आभासा इति चेत्, प्रत्यक्षादिविरोधाद् भेददूषका अपि तथेति समम् । प्रत्यक्षं तर्कविरोधादप्रमाणं चेत् श्रुतिरपि तद्विरोधादुपचरितार्थेति समम् । त्वन्मतेऽपि स्वस्य स्वाभिन्नत्वादभेदनिरासः स्वव्याहत इति चेत्, त्वन्मतेऽपि ब्रह्मणोऽनृताद् भिन्नत्वाद्भेदनिरासोऽपि स्वव्याहत इति समम् । ब्रह्मणोऽनृतादपि भेदो मिथ्येति चेन्न, स्वस्य स्वाभेदोऽपि मिथ्येति सुवचत्वात् ।

न हि सत्यमसत्येभ्यो भिन्नं नेत्युक्तितोऽपि च ।
सत्यं न सत्यमित्युक्तावधिकास्ति विरुद्धता ॥

एवं च–

शुष्कतर्कैर्भेदबाधे स्यादभेदोऽपि बाधितः ।
प्रमितत्वात्तत्र तर्कास्तुच्छाश्चेत्प्रकृते न किम् ॥

न द्वितीयः, श्रुतेः साक्षिप्रत्यक्षाद्यबाधकत्वस्योक्तत्वात् । श्रुत्यादेः सम्यग्व्याख्यातत्वाच्च । प्रत्यक्षस्यापि भाविबाधकशङ्काभङ्गे उक्तन्यायैर्भेदधीबाधकत्वासम्भवाच्च ।

किं च कल्प्यमानमपि बाधकं किं भेदमेव गोचरयेत्? उताभेदम्? यद्वा यत्किञ्चित्? निरालम्बनज्ञानायोगात् । नाद्यः, साधकत्वात् । द्वितीये तदन्यस्तद्विरोधी तदभावो वा नञर्थो वाच्यः । पक्षत्रयेऽपि दुष्परिहरो भेदः । तदनन्यत्वे च तद्विरुद्धत्वतदभावत्वयोरयोगात् । भेदाभावादिग्राहिणापि प्रतियोगिविलक्षणतयैव स्वविषयस्य ग्राह्यत्वाच्च । औदासीन्येन प्रवृत्तस्य इदमिति ज्ञानवदबाधकत्वात् । अत

एव न तृतीयः । एतेन बाधकं भेदभ्रमाधिष्ठानतत्त्वगोचरमिति निरस्तम्, तस्यापि भेदाद् भेदाभावे भेद विलक्षणत्वेनाग्रहणे च तज्ज्ञानस्य भेदबाधकत्वायोगात् ।

किं च नायं भेद इति वा, नास्त्यत्र भेद इति वा, अन्यदेव भेदात्मना प्रत्यभादिति वा बाधकज्ञानेन भवितव्यं नेदं रजतमित्यादिवत् । तदेतत्सर्वथा भेदावगाहीति कथं तद्बाधकम्? एकमेवानेकात्मना प्रत्यभादिति ज्ञानं बाधकमिति चेन्न, एकानेकयोर्वस्तुतो भेदाभावे वैलक्षण्याग्रहणे च तस्य बाधकत्वायोगात् । एवं च–

भेदाद् भिन्नतया स्वार्थं बाधधीर्गाहते न वा ।
आद्ये भेदः स्थिरोऽन्त्ये तु न सा स्याद् भेदबाधिका ॥

तस्मात् क्लृप्तविषयत्वात् नान्योन्याश्रयतादेरुत्थानम् । उत्थितस्य भवेदाभासत्वम् । एतेन यदुक्तं खण्डने– 'निर्वचनवादिनीदं शोभते नास्मासु । प्रतिभासमानोऽयं भेदः स्वरूपादिपक्षान्तर्भावबहिर्भावाभ्यां सदसत्त्वाभ्यां वा अन्येनापि धर्मेण वाऽनिर्वाच्य इत्यङ्गीकारादिति' । तन्निरस्तम्, तर्कबाधमात्रेणानिर्वाच्यत्वे ऐक्यस्यापि तत्प्रसङ्गात् ।

किं च त्वयापि अनृतजडदुःखपरिच्छिन्नाद्यनात्मके ब्रह्मणि अनृतादिव्यावृत्तिर्ब्रह्म ज्ञानाबाध्येति वाच्यम्, शून्याद्यनात्मके घटादौ शून्यादितः स्वज्ञानाबाध्यभेददर्शनात् । अन्यथाऽनृतादिव्यावृत्तिबोधनेन तद्भ्रान्तिनिवारकस्य सत्यज्ञानादिवाक्यस्य भ्रान्त्यन्तरहेतुत्वं स्यात् । ब्रह्मण्यनृतत्वादेरधिष्ठानज्ञानाबाध्यात्यन्ताभाव प्रतियोगित्वरूपं मिथ्यात्वं च न स्यात् । उक्तं चेतद्देहात्मैक्याध्यासभङ्गे ।

न च प्रतियोगिनोऽनृतत्वात्ततो व्यावृत्तिरप्यनृता । शुक्तौ रूप्याभेदवद् बाधगम्यस्य तद्भेदस्यापि प्रातिभासिकत्वापत्या भ्रान्तिबाधव्यवस्थायोगात् विस्तृतं चैतन्मिथ्यात्वभङ्गे । एवमात्मनि देहाद् आत्मज्ञानाबाध्यभेदाभावे देहात्मैक्यस्य मिथ्यात्वं न स्यादिति त्वदीया तदैक्याध्यासोक्तिरयुक्ता स्यात् । तथा नित्यस्यानित्यात्तात्त्विकभेदाभावे साधनचतुष्टयान्तर्गतो नित्यानित्यवस्तुविवेको भ्रमः स्यादिति तेनानित्यहानेन नित्ये प्रवृत्तिरयुक्ता स्यात् । एवं प्रपञ्चे सद्वैलक्षण्यादि-

रूपमनिर्वाच्यत्वमधिष्ठानज्ञानाबाध्यमिति वाच्यम् । अन्यथाऽधिष्ठानज्ञानाबाध्यसत्वापातात् जगन्मिथ्यात्वप्रमाणानामतत्वावेदकत्वापाताच्च । एवमभेदस्य भेदात्तात्त्विकभेदाभावे तयोरभेदस्तात्त्विकः स्यादिति भेददोषैरभेदबाधनम्, अभेदप्रमाणैर्भेदसाधनं च स्यात् । न च तात्त्विकभेदाभावेऽपि तात्त्विकाभेदाभावमात्रेण व्यवस्थेति वाच्यम्, अभेदाभावे भेदध्रौव्यात् । न च व्यवहारिकभेदाद् व्यवस्था, कल्पितेनाकल्पितकार्याप्रतिबन्धादित्युक्तत्वात् । एवं च–

ब्रह्मणोऽनृततो भेदः सत्यश्चेद् भेदखण्डनम् ।
व्याहतं स्यादसत्यश्चेद् ब्रह्मणोऽनृतता भवेत् ॥
भेदाभेदभिदा चेत्स्यात्कथं भेदो निवार्यते ।
भेदाभेदभिदा नो चेत्कथं भेदो निवार्यते ॥

किं च भेदस्य व्यावहारिकसत्यत्वरक्षार्थमेव त्वयाप्यन्योन्याश्रयादिकमुद्धार्यम् । न ह्यन्योन्याश्रयादिदुष्टस्य व्यावहारिकतापि दृष्टचरी । न हि मृदवास्तवीत्येतावता स्वजन्यघटजन्या । अन्यथाकाशवाय्वादेरेवान्योन्यमुपादानत्वाधिष्ठानत्वे स्यातामित्यज्ञानब्रह्मणोस्ते न कल्प्ये स्याताम् । यदि चान्योन्याश्रयादिदुष्टस्यापि अविद्यासामर्थ्याद् व्यावहारिकता, तर्हीश्वरसामर्थ्यात् तादृशस्यापि पारमार्थिकतैवास्तु ।

अपि च कथमत्रापादनक्रमः? (१) यदि भेददर्शनं स्यात्, तर्ह्यन्योन्याश्रयादिकं स्यात्, न च तद्युक्तं तस्मान्नास्ति भेददर्शनमिति वा? (२) यदि भेददर्शनं वास्तवं स्यात्तर्हि अन्योन्याश्रयादिकं स्यादिति वा? (३) यदि भेददर्शनं प्रमा स्यात्तदाऽन्योन्याश्रयादिकं स्यादिति वा? (४) यदि भेददर्शनं धर्मिप्रतियोग्यादिसापेक्षं स्यात्तदान्योन्याश्रयादिकं स्यादिति वा? नाद्यः, यदि भेददर्शनं न स्यात्तदा परः परमतमिव स्वमतमपि निराकुर्यात् सकलव्यवहारविधुरश्च स्यादित्यादि प्रतिकूलतर्क पराहतेर्भेदादर्शने तन्निरासायोगेन विपर्ययापर्यवसानाच्च । न द्वितीयः, वास्तवेऽन्योन्याश्रयादेरभावेन व्याप्तिवैकल्यात् । दर्शनावास्तवत्वेऽपि अभेदवद् भेदस्यापि सत्त्वो-

पपत्तेश्च । न तृतीयः, त्वया स्तम्भात्कुम्भस्य भेदप्रतीतौ कुम्भात्स्तम्भस्य भेदधीरिति प्रतीतावेवान्योन्याश्रयत्वस्योक्तत्वेन चोरापराधान्माण्डव्यस्य शूलप्राप्तिवत् प्रतीतिगतेनान्योन्याश्रयेण प्रमात्वनिषेधायोगात् । न च प्रतीतेर्विचारासहत्वेन भ्रमत्वं विचारा सहप्रपञ्चान्तर्गतचरमवृत्तिवत् प्रमात्वोपपत्तेः । जीवैस्य ब्रह्मैक्यप्रतीतौ ब्रह्मणो जीवक्यधीरिति ऐक्येऽप्यन्योन्याश्रयस्य वक्ष्यमाणत्वाच्च । रूप्यादिभ्रमस्यापि त्वयाऽख्याति वाद्युक्तहेत्वभावादिबाधकानामुद्धृतत्वेन विचारासहत्वाच्च । चतुर्थेऽपि सापेक्षतामात्रं निवर्ततां भेददर्शनस्य किमायातम्? प्रकारान्तराभावात्स्वयमपि निवर्तत इति चेत्, न प्रतीतेः परेणाप्यपेक्षणीयत्वेन निवर्तयितुमशक्यत्वात् । प्रमात्वनिवर्तने च सामर्थ्याभावस्योक्तत्वात् । अन्यथा स्वाभिमताद्वैतमपि न सिद्ध्येदित्युक्तम् । किं च त्वत्पक्षे घटस्य पटाद् भेद इव घटेनाभेदोऽपि व्यावहारिकः उक्तरीत्या ब्रह्मजीवैक्यमिव ब्रह्मण्यनृतव्यावृत्तिरपि तात्त्विकीति कथमभेदमुपेक्ष्य भेदे द्वेषः । एवं च–

ब्रह्मण्यनृतभेदस्य सत्यत्वे कलशे स्वतः ।
अभेदस्य च मिथ्यात्वे भेदे द्वेषस्तु किं कृतः ॥

इति सामान्यतो भेदखण्डनोद्धारः ॥ १४ ॥

## अद्वैतसिद्धिः

स्यादेतद्– इदमयुक्तम्, भेदस्य प्रमाणसिद्धत्वात् । न च– भेदस्य स्वरूपत्वे अनपेक्षत्वापत्त्या धर्मत्वम्, तथा चानवस्था, स्तम्भकुम्भयोः परस्परभेदग्रहोऽन्योन्यभेदग्रहसापेक्ष इति अन्योन्याश्रयश्च, एवं च भेदासिद्धिरिति– वाच्यम्, तत् किं भेदे प्रतीतिरेव नास्ति? कारणाजन्या वा? बाध्यविषया वा? नाद्यः, विकल्पादिकरणरूप व्यवहारविप्लवापत्तेः, न हि भिन्नतया अज्ञातेन विकल्पः । न द्वितीयः, अकारणकोत्पत्तेर्व्याहतत्वेन नित्यत्वापत्त्या तन्निरासकमोक्षोपायाननुसारणापत्तेः । न तृतीयः, उक्तशुष्कतर्कस्याबाधकत्वात् । अन्यथा ऐक्यस्य स्वरूपत्वे अनपेक्षत्वापत्तिः, धर्मत्वे अद्वैतहानिरित्यादिना ऐक्यबुद्धिरपि बाधितविषया

(अद्वैतसिद्धिः)

स्यात्। न च– मम वैतण्डिकस्य परपक्षमात्रं खण्डनीयमिति– वाच्यम्, स्वपक्षसत्त्वेऽपि तव तथात्वे ममापि तथात्वाविरोधात्। न च मम परपक्षखण्डनमात्रेण स्वमतभूतैक्यसिद्धिः, ममापि तावन्मात्रेण स्वमतभूतभेदसिद्धिसंभवात्। न च– मां प्रति भेदखण्डनमात्रनियोगे ममैव वैतण्डिकत्वमिति वाच्यम्, मां प्रत्यप्यैक्यखण्डनमात्रनियोगसंभवात् मध्यस्थस्य त्वदनधीनत्वात्। अस्वव्याघातकैरेव त्वयैक्यं दूष्यमिति यदा, तदा अस्वव्याघातकैरेव त्वया भेदो दूष्य इत्यपि स्यादिति– चेत्, मैवम्, न हि वयं भेदप्रतीतेः स्वरूपं कारणं वापलपामः। किन्तु बाधितविषयत्वं ब्रूमः, व्याप्तिसध्रीचीनतया अशुष्कस्तर्कैरेवानन्यपरया श्रुत्या स्मृत्या च भेदस्य बाधितत्वात्, विषयभेदादिना प्रत्यक्षविरोधस्य परिहृतत्वेन श्रुत्यादावुपचरितार्थत्वाभावात्। यत्त्वभेदस्याप्येवं निरासः। न चाभेदखण्डनयुक्तीनां स्वस्य स्वाभेदोऽपि सिध्येदिति स्वव्याघातादाभासता, भेदखण्डनयुक्तीनामपि भूषणयुक्त्यभेदेन स्वव्याघातकतायाः समानत्वादिति, तन्न, भेदखण्डनयुक्तीनां तत्त्वतो भेदनिवारकत्वेऽपि व्यावहारिकभेदस्यानिराकरणेन स्वाव्याघातकतोपपत्तेः। न चैवं ब्रह्मण्यनृतभेदस्य तत्त्वतो निषेधे तत्र तत्तादात्म्यापत्तिः, घटे कल्पितघटान्तरभेदभ्रमस्थले तत्तादात्म्यादर्शनात्। न चैवमभेदोऽपि तत्त्वतो निषेध्यः, तर्हि स्वरूपापर्यवसानेन शून्यवादापत्तेः। किञ्च ब्रह्मातिरिक्तमैक्यमस्माकं नास्त्येव। तस्य च तथा निषेधे श्रुतिविरोधः। न च– मम घटातिरिक्तो भेदो नास्ति, तस्य निषेधे प्रत्यक्षविरोध इति– वाच्यम्, प्रत्यक्षस्य पारमार्थिकसत्त्वाविषयत्वेनाविरोधित्वस्य प्रागेवोक्तत्वात्।

ननु– भेदबाधकं न भेदविषयमेव, तत्साधकतापत्तेः, नाप्यभेदविषयम्, एवं हि तदन्यः तद्विरोधि तदभावो वा नञर्थो विषयो वाच्यः। सर्वथा च भेदो दुष्परिहरः, तदनन्यत्वे तद्विरोधतदभावत्वयोरयोगाद्, भेदाभावग्राहिणापि प्रतियोगिविलक्षणतयैवाभावस्य ग्रहणाच्च, औदासीन्येन प्रवृत्तस्य इदमिति ज्ञानवदबाधकत्वाच्चेति– चेन्न, पारमार्थिकत्वाकारेण भेदाभावविषयस्यैव बाधकत्वात्। न च भेदे दुष्परिहरता, व्यावहारिकभेदेनैव व्यावहारिकतद्विरोधित्वतदभावत्वयोरुपपत्ति संभवात्, 'यक्षानुरूपो बलिरिति न्यायात्। भेदभ्रमाधिष्ठानतत्त्वगोचरं ज्ञानं भ्रमबाधकमित्युपपन्नम्, उक्तरीत्या भेदवैलक्षण्येन तद्ग्रहणोपपत्तेः। यत्तु 'नायं भेदो नास्त्यत्र भेदोऽन्यदेव भेदात्मना प्रत्यभा'दित्येवमाकारकं बाधकज्ञानं वाच्यम् 'नेदं रजत'मिति वत्, इदं च सर्वथा भेदावगाहीति कथं तत्र बाधकमिति, तन्न, प्रतियोगितया

(अद्वैतसिद्धिः)

तद्ग्रहणस्य तद्बाधकत्वाविरोधित्वात् । न च– अत्र भेदो नास्तीति धीः सर्वथा न भेदाभावमवगाहत इति– वाच्यम्, अन्यत्र भेदसत्त्वे तद्भेदस्यात्रावश्यकत्वेनात्र भेदो नास्तीत्यस्यैव कुत्रापि नास्तीत्यत्र पर्यवसानाद् एकमेव नानात्मना अभादित्यादि बाधकमनुसन्धेयम् । कोट्योर्व्यावहारिकभेदेन तद्वत्तया ग्रहणाच्च यथा बाधकत्वयोगः, तथोक्तमेव । एतेन–

भेदाद् भिन्नतया स्वार्थं बाधधीर्गाहते न वा ।
आद्ये भेदः स्थिरः, अन्त्ये तु न सा स्यात् भेदबाधिका ॥

इति– निरस्तम्, स्वरूपेण स्थैर्येऽपि तत्त्वतोऽस्थिरत्वसंभवात् । एवं चाक्लृप्त विषयत्वादन्योन्याश्रयत्वादेरुत्त्थानम्, उत्थितस्य च नाभासत्वम् । किं चायं देश्याभासो निर्वचनवादिनः प्रति, नास्मान् । वयं हि भासमानो यो भेदः स स्वरूपादिपक्षान्तर्भावबहिर्भावाभ्यां वा अन्येन वा धर्मान्तरेणानिर्वाच्य इति ब्रूमः । न च तर्काभासेनानिर्वाच्यत्वे ऐक्यस्यापि तत्प्रसङ्गः, भेदबाधकस्यानाभासताया उक्तत्वाद्, ऐक्यभेदयोः श्रुत्यनुग्रहाननुग्रहाभ्यां विशेषाच्च ।

ननु– ब्रह्मण्यनृतादिव्यावृत्तिः ब्रह्मज्ञानाबाध्या वाच्या, शून्याद्यनात्मकघाटदौ शून्यादितः स्वज्ञानाबाध्यभेददर्शनादिति– चेत्, ब्रह्मघटयोरधिष्ठनाध्यस्तत्वाभ्यां विशेषाद्, अनृतत्वस्य मृषात्वेन तद्व्यावृत्तेरपि मृषात्वस्य युक्तत्वेन घटे तज्ज्ञानबाध्यत्वस्य उभयोः समानत्वात् । न च– एवं प्रातिभासिकरूप्यादिव्यावृत्तेरपि प्रातिभासिकत्वापत्तिः, तथा च भ्रान्तिबाधव्यवस्था न स्यादिति– वाच्यम्, विशेषदर्शनजन्यत्व तदजन्यत्वाभ्यां बाधभ्रान्तिव्यवस्थोपपत्त्या प्रातिभासिकत्वस्येष्टत्वात् । न चैवं सत्यादिवाक्यस्यानृतव्यावृत्तिबोधकस्याप्रामाण्यापत्तिः, तस्या आर्थत्वात् । न च– एवं व्यावृत्तिवन्मृषाप्रतियोगिकस्यात्यन्ताभावस्यापि मृषात्वेनाधिष्ठानज्ञानाबाध्यात्यन्ताभाव प्रतियोगित्वरूपमिथ्यात्वं न स्यादिति– वाच्यम्, अधिष्ठानज्ञानबाध्यत्वस्य तत्राविशेषणत्वात् । न च– एवमात्मनि देहभेदस्य बाध्यत्वे देहात्मैक्यस्य मिथ्यात्वं न स्यादिति– वाच्यम्, भेदमिथ्यात्वस्य प्रतियोग्यैक्यामिथ्यात्वाप्रयोजकत्वस्योक्तत्वात् । न च– नित्यानित्यवस्तुविवेकस्य साधनचतुष्टयान्तर्गतस्य ज्ञानं भ्रमः स्यात्, तथा च तेनानित्यपरिहारेण नित्ये प्रवृत्तिर्न स्यादिति– वाच्यम्, हानोपादानोपयुक्तरूपावगाहिबुद्धेर्व्यावहारिकप्रामाण्यशालितया व्यावहारिकहानोपादानस्य निवर्तयितुमशक्यत्वात्। एतेन– प्रपञ्चे सद्वैलक्षण्यस्य मिथ्यात्वे सदैक्यापत्तिः, जगन्मिथ्यात्वप्रमाणानां

(अद्वैतसिद्धिः)

चातत्त्वावेदकत्वापात इति– निरस्तम्, मिथ्यात्वनिरुक्तावुक्तोत्तरत्वाच्च । एतेन– भेदाद्भेदस्य भेदाभावे अन्यतरखण्डनसाधनाभ्यामुभयखण्डनसाधने इति– निरस्तम्, तात्त्विकभेदाभावेऽपि कल्पितभेदेन व्यवस्थोपपत्तेः । न च कल्पितेनाकल्पितकार्यप्रतिबन्धायोगः, अविद्यया स्वप्रकाशरूपब्रह्मकार्यप्रतिबन्धदर्शनात्, कल्पितकान्तया विश्लेषकार्यप्रतिबन्धदर्शनाच्च ।

ननु– भेदस्य व्यावहारिकसत्त्वार्थमपि त्वया अन्योन्याश्रयादिकमुद्धरणीयम्, परस्परसापेक्षेण व्यवहारस्याप्यभावात्, न हि व्यावहारिकमृदः स्वजन्यघटसापेक्षत्वम् । किं चात्र (१) न भेदमात्रेण तद्दर्शनमात्रेण वा अन्योन्याश्रयाद्यापादनम्, तथा सति व्यावहारिकयोरपि तयोरसिद्धिः स्यात् । (२) नापि तत्प्रतीतिवास्तवत्वेन तदापत्तिः, चरमवृत्त्यवास्तवत्वेऽपि तद्विषयवास्तवत्ववदुपपत्तेः, वास्तवे अन्योन्याश्रयादर्शनेन व्याप्त्यसिद्धेश्च । (३) न च प्रमारूपतत्प्रतीत्या तदापादनम्, प्रतीति सामान्य एव त्वयान्योन्याश्रयस्योक्तत्वेन प्रमात्वपर्यन्ते तत्र दोषाभावात् । (४) नापि तत्प्रतीतेर्धर्मिप्रतियोगिसापेक्षत्वेन तदापादनम्, तावतापि तत्सापेक्षतामात्रस्यैव निवृत्तिरिति– चेन्न, अस्माकमविद्यासामर्थ्यात् सर्वानुपपत्तिविधूननोपपत्तेः । न हि मायायामसंभावनीयं नाम । तथा च परस्पराश्रितमपि इन्द्रजालवद्दर्शयिष्यति । न च– ईश्वरसामर्थ्यात्तादृशमपि सत्यं स्यादिति वाच्यम्, उभयसिद्धमृषाभूतेन्द्रजालस्थले कारणादिव्यवस्थोल्लङ्घिकार्यादिदर्शनवदन्यत्र तथा अदर्शनात्, दर्शने च मृषात्व एव पर्यवसानात् । आपादनं च– भेदस्तत्प्रतीतिश्च यदि मायिकी न स्यात्, सर्वव्यवस्थोल्लङ्घिनी न स्यात्, सर्वव्यवस्थोल्लङ्घिनी चेयम् । तस्मान्मायिकीति विपर्ययपर्यवसानात्, मायिके व्यवस्थोल्लङ्घनस्य दर्शनेन व्याप्तिसिद्धेः । उक्तश्रुत्या अस्वव्याघातकयुक्त्या च भेदस्य बाधादभेदस्याबाधाच्च स्वाभेदस्वभेदयोर्व्यावहारिकत्वे समानेऽपि स्वाभेदं परित्यज्य भेद एव सर्वथा प्रद्वेषो नाकारणकः । इत्यद्वैतसिद्धौ सामान्यतो भेदखण्डनम् ।

## न्यायामृततरङ्गिणी

**॥ स्वरूपं धर्मोवेतीति ॥ स्वरूपधर्मयोर्भेदानवगमे स्वरूपं वा धर्मो वेति विकल्पो न युज्यते ॥ अकारमात्रेति ॥ धर्मोऽभेदः स्वरूपं वेत्याद्यप्रकारप्रश्लेषः ॥ तदुक्तमिति ॥ कथालक्षणे ॥ वितण्डात्विति ॥ अन्यैरसद्भिः सह सतां वितण्डैव । यतोऽसत्सु तत्वं निगूहितम् । न प्रकाशनीयम् ॥ निर्वचनवादिनीदं शोभत इति ॥ यस्तु पदार्थान्निरुच्य व्यवस्थापयति तं**

(तरङ्गिणी)

प्रतीदं दूषणं शोभते न मां प्रतीत्यर्थः ॥ अनिर्वाच्य इति ॥ वक्तुमशक्य इत्यर्थः ॥ देहात्मैक्याध्यासभङ्ग इति ॥ अधिष्ठानज्ञानबाध्यात्यन्ताभावप्रतियोगित्वस्य सत्यत्वेपि सत्वादित्यादिनोक्तम् ॥ कल्पितेनाकल्पितकार्याप्रतिबन्धादित्युक्तत्वादिति ॥ एतच्चोपलक्षणम् । दूष्यदूषणव्यवस्थादिरूपस्वकार्यकारिणो भेदस्यैव तात्विकत्वम् । अव्यवस्थारूपस्वकार्याकारिणस्त्वभेदस्य मिथ्यात्वं स्यादिति च वक्ष्यते । यस्तु कल्पितकान्ताया विश्लेषकार्यप्रतिबन्धो दृश्यत इत्याह सोऽश्रद्धेयो बहुधा निरासात् । कान्ताज्ञानस्यैव तथात्वात् ॥ ईश्वरसामर्थ्यादिति ॥ न चोभयसिद्धमृषाभूतेन्द्रजालस्थले कारणादिव्यवस्थोल्लङ्घिकार्यदर्शनवदीश्वरशक्त्या न तथा कार्यं दृश्यत इति वाच्यम् । पामर शब्दादप्यपकृष्टत्वात् । ईश्वरशक्तिरूपकारणस्य सत्त्वेप्यन्यकारणोल्लङ्घनस्य शीतातपवातादिषु सरित्सागरादिषु विचित्रकार्येषु पामरैरपि प्रमितत्वात् ॥ प्रमात्वनिषेधायोगादिति ॥ अर्थबाधः प्रमात्वनिषेधः । तस्यायोगः । अर्थसत्वमेव स्यादित्यर्थः । विचारासाहित्यरूपहेतोरन्वयव्याप्तौ व्यभिचारमाह ॥ विचारेति ॥ जीवस्य ब्रह्मैक्यप्रतीताविति ॥ जीवब्रह्मणोरप्रतीतौ भेदेन प्रतीतौत्वनयोरैक्याप्रतीतेरित्यादिनैक्येप्यन्योन्याश्रयस्य वक्ष्यमाणत्वात् ॥ स्वाभिमतेति ॥ ऐक्यप्रतीतेरप्यन्योन्याश्रयवत्त्वात् ॥ तत्पक्ष इति ॥ न हि सर्वत्र भेदो मिथ्या येन स द्वेष्यः स्यात् । नापि सर्वत्र भेदः सत्यः येन स इष्टः स्यात् ॥ इति सामान्यतो भेदखण्डनोद्धारः ॥ १४ ॥

## न्यायामृतकण्टकोद्धारः

ननु ब्रह्म जीवात् भिन्नं किं व्यवहारतस्तत्वतो वा? आद्ये इष्टापत्तिः । स्वरूपत्वादिपक्षदोषदुष्टत्वेनानुपपन्नत्वादिति मायिमतमुत्थापयति ॥ यच्चेदमिति ॥ स्वरूपं, धर्मिण इति शेषः ॥ निरपेक्षत्वादीति ॥ धर्मिणो निरपेक्षत्वात् यत् यत्स्वरूपं तस्य तादृशत्वादिति भावः ॥ अनवस्थेति ॥ भेदस्य धर्मित्वे धर्मधर्मिणोर्भेदस्यावश्यकत्वात् तस्यापि धर्मत्वेन भेदपरंपरयानवस्थेत्यर्थः ॥ कुम्भस्येति ॥ कुम्भप्रतियोगिकस्तंभभेदज्ञाने कुम्भस्य प्रतियोगित्वेन ज्ञानं कारणं कुम्भस्य प्रतियोगित्वं च स्तम्भप्रतियोगिकभेदवत्त्वमेव । स्तम्भे च भेदप्रतियोगित्वं कुम्भप्रतियोगिकभेदवत्त्वमेव । तथाच कुम्भे प्रतियोगित्वे ज्ञाते स्तम्भनिष्ठभेदधीः । तज्ज्ञाने च तत्प्रतियोगिकभेदवत्त्वरूपप्रतियोगित्वधीरिति अन्योन्याश्राय इत्यर्थः । व्यक्तिभेदाङ्गीकारे चक्रकादिकमादिशब्दगृहीतं द्रष्टव्यम् ॥ भेदभ्रमेति ॥ निरस्याभावेनिरासायोगात् । न चानिर्वचनीयाद्यभावे तन्निरासवत् भेद भ्रमाभावेऽपि तन्निरासोपपत्तिरिति वाच्यम् । अत्र निरासो नाभावज्ञापनं किन्तु ध्वंसः । न हि वस्तुनोऽभावे ध्वंसः सम्भवतीति ॥ भेदप्रतीताविति ॥ अप्रतीतस्याभावज्ञापनायोगादिति भावः ॥ बहुविप्लवेति ॥ दूषणभूषणव्यवस्था न

(कण्टकोद्धारः)

स्यादिति भावः ॥ भेद इति । स्वरूपधर्मयोर्भेदाप्रतीतौ विरुद्धार्थकवाशब्दप्रयोगादित्यर्थः । एतदेवाह ॥ न हीति ॥ पर्यायेण अर्थ भेदज्ञानं विनेत्यर्थः ॥ धर्मत्व इति ॥ धर्मधर्मिणोर्भेदस्य नियतत्वादित्यर्थः । किञ्च शुष्कतर्केण प्रमितार्थनिराकरणे त्वद्वाक्यविरोधोपीत्याह ॥ त्वयैवेति ॥ उक्तमर्थं सङ्गृह्णाति ॥ एवञ्चेति ॥ तथाचैवं भेदखण्डने स्वव्याघात इति भावः । ननु नेयं प्रतिबन्दी । मया पृथगभेदस्यासाधनात् । भेदाभावातिरिक्तस्याभेदस्याभावादिति शङ्कते ॥ भेदा भावादिति ॥ ऐक्याभावादिति ॥ तथाच ममापि पृथक् भेदस्यासाधनात् नायं दोषोममापीति भावः । उक्तमर्थं कारिकया सङ्गृह्णाति ॥ एवञ्चेति ॥ समान-न्यायत्वादिति भावः । ननु कथं साम्यम्? त्वया स्वपरपक्षस्थापनोपालम्भौ विधेयौ । मया परपक्ष एव दूष्य इत्यत आह ॥ स्वपक्षस्येति ॥ ननु ममैव वितण्डा तव तु जल्पादिकमिति कथमनियतमित्याशङ्क्य निषेधति ॥ नचेति ॥ ननु मद्व्यतिरिक्तस्य वितण्डा नैव दृष्टेत्यत आह ॥ अन्यथेति ॥ ननु त्वयापि वितण्डायामधिकाराङ्गीकारे सिद्धान्तविरोधः । त्वत्सिद्धान्ते वितण्डा कर्तव्येत्यनुक्तत्वादित्यत आह ॥ उक्तञ्चेति ॥ ननु पक्ष परिग्रहे वितण्डायां ममाप्यधिकार इत्युक्तम् । तन्न पक्षपरिग्रहस्यानुपयोगादित्यत आह ॥ पक्षपरिग्रहहीनस्येति ॥ ननु मयावितण्डैव क्रियते न जल्पादिकमित्यत आह ॥ नापीति ॥ औपनिषदंमन्यस्येति हेतुगर्भमुक्तं तद्विशदयति ॥ उपनिषदामिति ॥ यदि तव वितण्डैव तदा द्वितीयाध्याया-तिरिक्ता मीमांसा व्यर्थैवेत्याह ॥ परपक्षेति ॥ सर्वत्र वितण्डैवेत्यङ्गीकारे स्वभाष्यविरोधोऽपीत्याह ॥ भाषितञ्चेति ॥ न च व्युत्थितं प्रति मम वितण्डैव । स्वीयान् प्रति वादादिकमपीति वाच्यम् । स्वीयमेव भेदपक्षं गृहीत्वा भेददूषणे तवोत्तराभावप्रसङ्गात् । प्राश्निकानां त्वदननुसारित्वाच्च ॥ मयापीति ॥ न च मया स्वाभिमतं स्थाप्यमिति समयबन्धो भविष्यति । तथाच नाभिमतस्थापनप्राप्तिः । तथा च कथं तद्बन्धायोग इति वाच्यम् । सामान्यसमयबन्धेन कथाविशेषप्रवृत्त्ययोगात् । समयबन्धानुमानप्रयोगादीनां समानविषयत्व-दर्शनाच्च । अत एव विशेषविषयत्वेन शङ्कते ॥ त्वयेति ॥ प्रत्यक्षेति ॥ न च प्रत्यक्षं श्रुतिविरोधात् भिन्नविषयमिति वाच्यम् । प्रत्यक्षस्य प्रबलत्वेन श्रुत्यभिन्नविषयत्वकल्पनायोगात् । यथा चैतत्तथा प्रत्यक्षप्राबल्यप्रस्तावे विचारितम् ॥ स्वस्य स्वाभेदोऽपीति ॥ उपलक्षणमेतत् । ब्रह्मणो न तादात्म्यापत्ति-स्तात्विकी स्यादित्यापि द्रष्टव्यम् । न च घटे कल्पितघटान्तरभेदस्य कल्पितत्वेऽपि तत्तादात्म्यं न वास्तवमिति वाच्यम् । कल्पितघटप्रतियोगिकस्यापि तात्विकस्यैव स्वीकारेण दृष्टान्तासम्प्रतिपत्तेः । प्रतियोगिनः कल्पितत्वेऽपि तत्प्रतियोगिकस्य सत्यत्वमज्ञानस्य कल्पितत्वेऽपि तन्निवृत्तेरिवोपपद्यत इति भावः । ननु भवत्पक्षे व्याघात इत्यत आह ॥ नहीति ॥ आद्यपक्षनिराकरणं कारिक्या सङ्गृह्णाति ॥ एवञ्चेति ॥ न द्वितीय इति । श्रुत्यादिना भेदप्रतीतेर्बाध्यविषयत्वमिति द्वितीयो नेत्यर्थः । श्रुतिः किं साक्षिप्रत्यक्षबाधिका? उत तदतिरिक्तप्रत्यक्षबाधिका? नाद्य इत्याह ॥ श्रुतेरिति ॥ प्रत्यक्षबाधप्रस्तावे इति भावः । न द्वितीयः साक्षिप्रत्यक्षेणैव भेदसिद्धिसम्भवात् । किञ्च यद्विरोधि तद्बाधकम् । श्रुत्यादिकञ्च यथा न विरोधि तथा उपक्रमादिविचार पूर्वकं व्याख्यातमित्याह ॥ श्रुत्यादेरिति ॥ ननु भेदधियो धीत्वात् शुक्तिरजतधीवत् बाधकं शङ्क्यत इत्यत आह ॥ प्रत्यक्षस्येति ॥ धीत्वमात्रेण बाधकं शङ्क्यते? उत बाधित

(कण्टकोद्धारः)

धीत्वेन? नाद्यः भाविबाधक शङ्काभङ्गोक्तन्यायेनैव ब्रह्मज्ञानादीनामपि बाधकशङ्कापत्तौ बहुविप्लवापत्तेः । द्वितीये त्वन्योन्याश्रय इति भावः ।

किञ्च बाधकज्ञानस्य भेदविषयत्वनियमात् तेन भेददूषणं स्वव्याहतमित्याह ॥ किञ्चेति ॥ भेदमेव । धर्मिप्रतियोगिनोरिति शेषः । ननु बाधकज्ञानं किमपि न गोचरयतीत्यत आह ॥ निरालम्बनेति ॥ निर्विषयस्यापि ज्ञानत्वे घटादेरपि तथात्वापत्तेरिति भावः ॥ साधकत्वात् ॥ भेदस्येति शेषः । ननु पक्षत्रयेऽपि भेदस्य दुष्परिहारत्वमुक्तं, तदभावतद्विरोधपक्षे भेदप्राप्तेरभावादित्यत आह ॥ तदनन्यत्व इति ॥ नन्वस्तु तदन्यत्वे तद्विरोधायोगः । तदभावायोगास्तु कथम् ? घटे घटानन्यत्वेऽपि घटाभावाभावादिति चेन्न । तदभाव इत्यत्र तच्छब्देन तत्तादात्म्यस्य विवक्षणात् । घटे च तदभावाभावात् । तद्विरोध तदभावपक्षे साक्षादपि भेदविषयत्वमस्तीत्याह ॥ भेदाभावादिग्राहिणापीति ॥ न च पारमार्थिकत्वाकारेण भेदाभावविषयकं बाधकं तद्विरोधित्वादिव्यवस्था तु व्यावहारिकभेदेन भविष्यतीति वाच्यम् । निराकारे ब्रह्मणि पारमार्थिकत्वाकारेण तदभावविषयकस्याबाधकत्वात् । अस्यापि तद्बाधकत्वायोगात् । त्वन्मतेऽखण्डार्थनिष्ठवेदान्तजन्यनिष्प्रकारकज्ञानस्य बाधकत्वेन तादृशसप्रकारकज्ञानस्य बाधकत्वायोगाच्च । व्यावहारिकस्य बाध्यत्वेन तस्य तद्विरोधित्वादिनियामकत्वे स्वस्यापि स्वविरोधित्वापाताच्च । ननु बाधकज्ञानं तदभावं न प्रतियोगिविलक्षणतया गृह्णाति । येन भेदभानमावश्यकमित्यत आह ॥ औदासीन्येनेति ॥ अत एवेति ॥ औदासीन्येन प्रवृत्तस्य बाधकत्वादेवेत्यर्थः ॥ तस्यापीति ॥ अधिष्ठानत्वस्यापीत्यर्थः । सर्वप्रकारेण बाधकज्ञानपर्यालोचनायां भेदस्य बाधकज्ञानेन विधीयमानत्वमावश्यकम् । तथा च तेन कथं भेदधीबाध इत्याह ॥ किञ्चेति ॥ न च प्रतियोगितया तज्ज्ञानस्य न तद्बाधकत्वविरोधित्वमिति वाच्यम् । अन्यथा विधेयत्वविरोधात् । किं यदि भेदः सर्वथा शशविषाणादिवन्न स्यात् तर्हि अत्रेति न स्यात् । अत्रेत्युक्त्या अन्यत्र सत्त्वप्रतीतेः । न चान्यत्र सत्त्वे अत्रापि सत्वापाते अत्रेत्यस्य कुत्रापि नास्तीत्यत्रैव पर्यवसानमिति वाच्यम् । तथा पर्यवसाने अत्र घटो नास्तीत्यादेरपि तथात्वापत्तौ सर्वप्रमाणविरोधात् । अव्यवस्था च स्यात् । तथा च न सर्वथा भेदधियोबाध इति ॥ तस्येति ॥ एकमेवानेकात्मनाप्रत्यभादित्यस्येत्यर्थः । व्यावहारिकभेदेन च कोट्योर्विरोधापादनं प्रत्युक्तम् । उक्तमर्थं कारिकया सङ्गृह्णाति ॥ एवञ्चेति ॥ भेदः स्थिरः । तत्त्वत इत्यर्थः । बाधकाभावादिति भावः । उपसंहरति ॥ तस्मादिति ॥ क्लृप्तविषयत्वात् । प्रामाणिकत्वात् । यथा बीजाङ्कुरादावन्योन्याश्रयादेरनुत्थानं तथेत्यर्थः । एतेनेति परामृष्टं हेतुं दर्शयति ॥ तर्केति ॥ न चैक्यभेदयोः श्रुत्यनुग्रहाननुग्रहाभ्यां बाधाबाधाभ्यां च महान् विशेष इति वाच्यम् । भेदपक्षे श्रुत्यनुग्रहस्य तद्बाधकानामाभासत्वस्य च वक्ष्यमाणत्वात् ।

किञ्च त्वयापि पञ्चसु स्थलेषु भेदस्य सत्यत्वमङ्गीकरणीयमन्यथा सत्यानृतादिव्यवस्था न सिध्येदित्याह ॥ किञ्चेति ॥ ननु कुतो ब्रह्मज्ञानाबाध्या व्यावृत्तिः स्वीकार्येत्यत आह ॥ शून्येति ॥ न च शून्यानधिष्ठानत्वात् घटस्य ब्रह्मणस्त्वनृताधिष्ठानत्वमिति विशेष इति वाच्यम् अधिष्ठानेऽपि शुक्तिकाशकले

(कण्टकोद्धारः)

प्रातिभासिकप्रतियोगिकधर्मिज्ञानाबाध्यभेददर्शनेनाधिष्ठानानधिष्ठानत्वयोरप्रयोजकत्वात् । यद्यदनात्मकं तत्तत्प्रतियोगिकधर्मिज्ञानाबाध्यभेदवदिति व्याप्तेर्निरुपाधिकसहचारभङ्गरूपविपक्षबाधकतर्केणाप्रयोजकत्वाच्च ॥ अन्यथेति ॥ ब्रह्मण्यप्यनृतव्यांवृत्तेर्मिथ्यात्वादित्यर्थः । न च व्यावृत्तेरार्थत्वात् कथं सत्यादिवाक्यस्य भ्रान्त्यन्तरहेतुत्वमुक्तमिति वाच्यम् । व्यावृत्तेऽपि व्यावर्तकस्यार्थत्वाभावात् । व्यावृत्तिमिथ्यात्वे व्यावर्तकमिथ्यात्वनियमात् । व्यावर्तके तात्पर्याभावे तस्यानृतादि भ्रान्तिनिरासकत्वं न स्यात् ॥ ब्रह्मणीति ॥ न चाधिष्ठानज्ञानाबाध्येति मिथ्यात्वलक्षणे विशेषणं न दीयते इति वाच्यम् । बाध्यात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वस्य मन्मतेऽपि सत्त्वेन सिद्धसाधनात् । यथा चैतत्तथोक्तमित्याह ॥ उक्तं चैतदिति ॥ शुक्ताविति ॥ न च शुक्तौ प्रातिभासिकप्रतियोगिकोऽपि भेदो मिथ्या विशेषदर्शन-जन्यत्वादित्यादिना बाधकत्वादि व्यवस्था युक्तेति वाच्यम् । बाधकज्ञानेन विधीयमानस्य प्रातिभासिकत्वा-योगात् । प्रतियोगितदभावयोरेकत्र समानसत्ताकयोर्विरोधात् । यत्तु विशेषदर्शनजन्यस्यापि भ्रान्त्यन्तरस्या-बाधकत्वात् तदजन्यस्यापि अखण्डार्थनिष्ठवेदान्त साक्षात्कारस्य बाधकत्वात् । तस्मात् बाधकत्वे बाध्यविषयसत्ताधिकसत्ताविषयत्वं तन्त्रमिति न बाधगोचरभेदस्य प्रातिभासिकत्वम् । उक्तन्यायमन्यत्राति-दिशति ॥ एवमिति ॥ न च भेदमिथ्यात्वमैक्यमिथ्यात्वाप्रयोजकमिति वाच्यम् । यत्र यद्भेदो मिथ्या-व्यावहारिक प्रामाण्यशालितया हानोपादानं निर्वर्तयितुमशक्यमिति वाच्यम् । नित्यानित्ययोर्वास्तवभेदाभावे वास्तवैक्यापत्या एकत्रोपादान प्रयुक्तरूपमपरत्र हानोपयुक्तं रूपमित्यस्य व्याहतेः । उदाहरणान्तरै भेदसत्यत्वमङ्गीकरणीयमित्याह ॥ एवमिति ॥ यथोर्भेदस्तात्विकोमतस्तयोरभेदस्तात्विक इति भावः ॥ अभेदाभाव इति ॥ अभावाभावस्य भावत्वादिति भावः ॥ कल्पितेनेति ॥ न चाविद्यया स्वप्रकाशरूपब्रह्मकार्यप्रतिबन्धस्तथा कल्पितकान्तया विश्लेषकार्यप्रतिबन्धो दृष्ट एवेति वाच्यम् । अविद्यायाः कल्पितत्वासिद्धेः । स्वप्रकाशब्रह्मरूपकार्याभावस्य भेदेनाप्युपपत्तेश्च । यत्र कान्तायाः कल्पितत्वं तत्र विश्लेषकार्यप्रतिबन्धादर्शनात् स्वप्नेतु (तत्रतु) कान्तायाः सत्यत्वादेवेति भावः । उक्तमर्थं बुध्यारोहार्थं कारिकायां सङ्गृह्णाति ॥ एवञ्चेति ॥ कथमिति ॥ भेदाङ्गीकारादिति भावः ॥ कथं भेद इति ॥ अभेदसाधनेनैव भेदस्य साधितत्वादिति भावः ॥

किञ्च भेदस्य सत्यत्वं वदताऽवश्यमन्योन्याश्रयाद्युद्धार्यम् । अन्योन्याश्रयादिदुष्टस्य वक्ष्यमाणरीत्या व्यावहारिकसत्त्वानुपपत्तेः । तथा च यत्रोभयोः समोदोष इति न्यायेन भेदसत्यत्वखण्डनं स्वव्याहत-मित्याह ॥ किञ्चेति ॥ अन्यथेति ॥ व्यावहारिकसतोन्योन्याश्रयताया अदूषकत्व इत्यर्थः । तथाचाधिष्ठा-नत्वादिनाब्रह्मसिद्धिर्न स्यादिति भावः ॥ ईश्वरसामर्थ्यादिति ॥ अविद्याया अघटितघटकशक्तित्वे प्रमाणाभावात् जडत्वादिना तदनुपपत्तेश्च । ईश्वरस्य तद्भावात् महाचेतनत्वेन सर्वोपपत्तेश्चेति भावः । न च मायायामिन्द्रजालादौ विचित्र कार्यकरत्वं दृष्टमिति वाच्यम् । मायिकवैलक्ष्यव्यस्योपपादितत्वेन मायामयत्वानुपपत्तेरुक्तत्वात् । एवमन्योन्याश्रयाद्यापादनमयुक्तं स्वव्याहतत्वादित्युक्तं प्रतितर्कपराहतत्वात्

(कण्टकोद्धारः)

**विपर्ययपर्यवसानानुपपत्तेश्चेत्याशयेनाह ॥ अपिचेति ॥ इदं दूषणद्वयं प्रथमकल्प एवेत्याह ॥ यदि भेददर्शनमिति ॥ वास्तव इति ॥ इदं च दूषणं पूर्वकल्पेऽपि द्रष्टव्यम् । अनेनापादनेन भेदस्यावास्तवत्वं सिषाधयिष्यन् तत्र न सिध्यतीत्यर्थान्तरमित्याह ॥ दर्शनमिति ॥ वैयधिकरण्यात् तृतीयपक्षोऽयुक्त इत्याह ॥ न तृतीय इति न च प्रतीतिपदं प्रमिति परं तथा च न वैयधिकरण्यमिति वाच्यम् । प्रमित्यभावेऽपि प्रतीतिमात्रेण कार्योत्पत्तेः व्याप्तिविकलत्वात् । यदेवमन्योन्याश्रयेण भेदनिराकरणं तर्ह्यैक्यनिराकरणमपि सुशकमित्याह ॥ जीवस्येति ॥ वक्ष्यमाणत्वात् । सामान्यत ऐक्यभङ्ग इति शेषः । किञ्च प्रतीतेर्विचारासहत्वेन भ्रमत्वं साधयितुमशक्यम् । असिद्धत्वादित्याह ॥ रूप्यादिति ॥ अन्यथेति ॥ यदि अपेक्ष्यनिवृत्या आपेक्षिकनिवृत्तिस्तदेत्यर्थः । ननु च भेदस्तत्प्रतीतिश्च यदि मायिकी न स्यात् सर्वव्यवस्थोल्लङ्घिनी न स्यात् । मायिके व्यवस्थोल्लङ्घनाभावेन विपर्ययपर्यवसानाभावात् । अप्रयोजकत्वाच्च । अभेदस्तत्प्रतीतिर्यदीत्यापादन सम्भवेनाभाससमान योगक्षेमत्वाच्चेत्यलमति विस्तरेण । किञ्चाभेदं विहाय भेददूषणं द्वेषमात्रकारणकमित्याह ॥ किञ्चेति ॥ उक्तमर्थं कारिकायां सङ्गृह्णाति ॥ एवञ्चेति ॥ कलशे स्वतः अभेदस्य मिथ्यात्वे इत्यन्वयः । इति सामान्यतो भेदखण्डनोद्धारः ।**

## न्यायामृतप्रकाशः

॥ निरपेक्षत्वेति ॥ प्रतियोग्यादिनिरपेक्षधर्म्यभिन्नत्वाद्भेदस्यापि निरपेक्षत्वं स्यादित्यर्थः ॥ अनवस्थेति ॥ भेदस्य धर्मत्वमङ्गीकृत्य भिन्नत्वाङ्गीकारे भेदपरम्परयाऽनवस्थेत्यर्थः ॥ भेदे प्रतीत इति ॥ तथाचं कुम्भस्य स्तम्भधर्मिकभेदं प्रति प्रतियोगित्वसिद्धिरित्यर्थः । भिन्नत्वेन ज्ञानतस्यैव प्रतियोगित्वादिति भावः ॥ किं भेदेति ॥ निरपेक्षत्वानवस्थादिदूषणेनेति शेषः ॥ बाध्येति ॥ बाध्यभूतभेदविषयेत्यर्थः ॥ तन्निरासेति ॥ भेदनिरासेत्यर्थः ॥ भेदः स्वरूपमिति ॥ स्वरूपधर्मयोर्भेदानवगमे तयोरभेदेन पर्यायत्वापत्त्या स्वरूपं धर्मो वेति सहप्रयोगेन विकल्पो न स्यादित्यर्थः । तदेवोपपादयति ॥ न हीति ॥ अयं घटो वा करीरो वेति विकल्पादर्शनादित्यर्थः ॥ नित्यत्वेति ॥ उक्तदूषणेन भेदप्रतीतेः कारणाजन्यत्वेन नित्यत्वप्राप्त्या ब्रह्मज्ञानानिवर्त्यत्वप्राप्तेर्मायावादिनः स्वप्रातिकूल्याचरणप्रसङ्ग इत्यर्थः ॥ श्रुत्यादिनेति ॥ "अद्वितीय"मिति श्रुत्यादिनेत्यर्थः । तद्वदेव निरपेक्ष-ब्रह्मस्वरूपवदेव । ऐदम्पर्यम् इदम्परत्वम् । ब्रह्मणि तात्पर्ययुक्तत्वमित्यर्थः । इदं शास्त्रं मीमांसाशास्त्रम् ॥ इत्युक्तत्वादिति ॥ तथा च शुष्कतर्कैरेव बाध्यत्वोक्तौ तद्विरोध इत्यर्थः ॥ अकारमात्रेति ॥ भेदः स्वरूपं धर्मो वेत्यत्र अभेदः स्वरूपं धर्मो वेत्यकारप्रक्षेपे भेदपक्षोक्तविकल्पादेरभेदपक्षेपि साम्यादिति भावः ॥ भेदेति ॥ तथात्वे हि तत्र विकल्पप्रसर इति भावः ॥ ऐक्यसिद्धिरिति ॥ तथा च तत्र पृथक्प्रमाणं नोच्यते येन तत्रोक्तदूषणप्रसर इति भावः ॥ साध्य इति ॥ तथाचाभेदस्य मयाऽसाध्यत्वान्नोक्तदोष इति भावः । ननु जल्पादौ स्वपक्षस्य भेदस्य स्थाप्यत्वात्तत्र चोक्तदोष इत्यत आह ॥ स्वपक्षस्येति ॥ अभेदस्येत्यर्थः । तत्र चोक्तदूषणमिति भावः । वितण्डायां मयाऽभेदस्यासाध्यत्वान्नोक्तदोष इति चेत्तत्राह ॥ वितण्डायां त्विति ॥ ननु वितण्डायामभेदवादिनो ममैवाधिकारः मम पक्षपरिग्रहशून्यत्वेन स्थाप्यपक्षाभावात् तव तु न वितण्डायामधिकारः

(प्रकाशः)

पक्षपरिग्रहत्त्वात् अतः भेदसाधनेन तवोक्तदूषणं स्यान्न ममेति चेत्तत्राह ॥ न चेति ॥ तवैवेति ॥ अभेदवादिन एवेत्यर्थः । किं तु तत्त्ववादिनो ममाप्यस्तीति भावः ॥ न भेदवादिनस्तव पक्षपरिग्रहवत्त्वान्न वितण्डेति चेत्तत्राह ॥ सत्यपीति ॥ ममेति शेषः । तदा वितण्डावस्थायाम् । तदस्थापनेन परिगृहीतभेदपक्षासाधनेन ॥ अन्यथेति ॥ पक्षपरिग्रहस्य वितण्डानधिकारप्रयोजकत्व इत्यर्थः । शब्दानित्यत्वादौ विषये । मीमांसकादिना शब्दनित्यत्ववादिना । वितण्डा तदसाधनरूपा तार्किकः स्वपरिगृहीशब्दानित्यत्वमप्रसाध्य मीमांसकाभिमतशब्दनित्यत्वमेव खण्डयतीति वितण्डास्ति सा न स्यात् तार्किकस्य पक्षपरिग्रहवत्त्वादिति भावः । एवं शब्दनित्यत्वादौ मीमांसकादेस्तार्किकादिना सह वितण्डा न स्यादित्यपि द्रष्टव्यम् । किं च वितण्डा तत्ववादिनो ममैव युक्तः मम सज्जनत्वात् न तव तदासज्जनत्वादित्याह ॥ उक्तं चेति ॥ किं च पक्षपरिग्रहहीनत्वस्य न वितण्डाधिकारप्रयोजकत्वं तथात्वें वितण्डायामपसिद्धान्तादिनिग्रहोद्भावनं न स्यात् तदङ्गीकृतसिद्धान्ताभावादित्याह ॥ पक्षेति ॥ ननूपनिषदांपरपक्षनिरसमात्ररूपत्वेनौपनिषदंमन्यस्य ममाऽपि वैदिकतया सज्जनत्वाद्वितण्डैवेति चेत्तत्राह ॥ नापीति ॥ त्वदिच्छेति ॥ तथा च तैः स्वपक्षोऽभेदस्त्वया साध्य इत्युक्त्वा मम वितण्डदानेऽभेदस्य त्वया साधनीयत्वेनोक्तदूषणं स्यादेवेत्यर्थः । किञ्चोपनिषदां परपक्षनिरासमात्ररूपत्वाभावाच्चौपनिषदंमन्यस्य तव न वितण्डेत्याशयेनाह ॥ उपनिषदामिति ॥ आद्यादीति ॥ समन्वयसाधनफलाध्यायानां । त्वया तत्ववादिना । मया मायावादिना ॥ कथमिति ॥ तथाचेत्थं समयबन्धदशायां स्वपक्षस्य स्थापनीयत्वे तत्रोक्तदूषणं भवतां स्यादेव न ममेति भावः । त्वया स्थाप्यं मया दूष्यमित्येवं सामान्याकारेण समयबन्ध एवायुक्तः मया मदनभिप्रेतप्रमेयस्यास्थाप्यत्वात् त्वयापि त्वदभिमतस्यादूष्यत्वेन सामान्यतः समयबन्धे स्वानभिप्रेतस्यापि स्थाप्यत्वापत्तेः स्वाभिमतस्यापि दूष्यत्वापत्तेश्च अतो नैवं समयबन्धो युक्त इत्याह ॥ मयापीति ॥ अस्वव्याघतकैरिति ॥ अभेदः किं स्वरूपं धर्मो वेति दूषणं तुं स्वव्याघातकं भेदेपि सम्भवादिति भावः ॥ भेदेपीति ॥ अस्वव्याघातकैरेव दूषणैर्भेदो दूष्यः । भेदः स्वरूपं धर्मो वेत्यादिदूषणं च स्वव्याहतमिति भावः ॥ नास्तीति ॥ तथा च भवदुक्तदूषणविषय एव नास्तीति भावः । अभेदनिरासः अभेदमात्रनिरासः । स्वव्याहत्युपपादनायोक्तम् ॥ स्वस्येति ॥ स्वस्मिन्स्वाभेदाङ्गीकारादिति भावः । भेदनिरासो भेदमात्रनिरासः । अत्रापि स्वव्याहत्युपपादनायोक्तम् ॥ ब्रह्मण इति ॥ ब्रह्मण्यनृतव्यावृत्त्यङ्गीकारादित्यर्थः । ननु स्वस्मिन्स्वाभेदस्य सत्वात् स्वाभेदो मिथ्येत्यङ्गीकारे सत्यं न सत्यमित्युक्तं स्यात् तथा च विरुद्धतेति चेत् तर्हि सत्यस्य ब्रह्मणोऽनृताद्भेदस्य मिथ्यात्वे सत्यमसत्येभ्यो भिन्नं नेत्युक्तं स्यात् तथा च सत्यस्यासत्याभेदप्राप्त्या विरुद्धता स्यादिति सममित्याह ॥ न हीति ॥ अधिकाविरुद्धता नह्यस्ति विरुद्धत्वं सममिति यावदित्यर्थः । प्रकृते भेदविषये ॥ न द्वितीय इति ॥ श्रुत्यादिना बाध्यत्वाध्यवसाय इति द्वितीयोपि नेत्यर्थः ॥ साक्षीति ॥ जीवेशभेदग्राहकसाक्षिप्रत्यक्षेत्यर्थः ॥ श्रुत्यादेरिति ॥ अभेदबोधकाद्वितीयश्रुत्योदेरित्यर्थः ॥ प्रत्यक्षस्येति ॥ प्रत्यक्षे या भाविबाधकशङ्का तद्भङ्ग इत्यर्थः ॥ बाधकेति ॥ क्लृप्तस्य कल्प्यमानस्य वा बाधकस्याभावादित्यर्थः । ननु क्लृप्तस्य बाधकस्याभावेपि कल्प्यमानमस्त्विति चेन्न । भाविबाधेपि बाधकल्पनापातादित्युक्तत्वात् ।

(प्रकाशः)

दूषणान्तरं चाह ॥ किं चेति ॥ यत्किञ्चिद्गोचरत्वं कुतो वक्तव्यमित्यत आह ॥ निरालम्बनेति ॥ ननु अभेद इत्यत्र नञस्तदन्यत्वरूपार्थपक्षेऽन्यशब्देनैव भेदप्राप्त्या तस्य दुष्परिहरत्वेपि तद्विरुद्धत्वतदभावत्वरूपार्थद्वयपक्षे कथं भेदस्य दुष्परिहरत्वमित्यत आह ॥ तदनन्यत्वे चेति ॥ लोके घटस्य घटानन्यत्वेन घटविरुद्धत्वघटाभावत्वयोरयोगदर्शनात्प्रकृतेपि भेदानन्यत्वे भेदविरुद्धत्वादेरयोगेन तदङ्गीकारे तद्व्याप्यमन्यत्वमप्यङ्गीकार्यमिति भेदो दुष्परिहर इत्यर्थः । ग्राहिणा बाधकेन ॥ प्रतियोगीति ॥ भेदरूपेत्यर्थः ॥ विलक्षणतयेति ॥ तथा च वैलक्षण्यस्य भेदरूपत्वेन तदवगाहिनः प्रमाणस्य न भेदधीबाधकत्वमित्यर्थः । बाधकप्रमाणं प्रतियोगिवैलक्षण्येन स्वविषयं न गृह्णाति किंत्वौदासीन्येनेति चेत्तत्राह ॥ औदासीन्येनेति ॥ प्रतियोगिवैलक्षण्यादिप्रकारानवगाहितयेत्यर्थः ॥ अत एवेति ॥ यत्किञ्चिदिति ज्ञानस्य इदमितिज्ञानवद्भेदधीबाधकत्वाभावादेवेत्यर्थः । अधिष्ठनतत्वं ब्रह्मस्वरूपं तस्यापि अधिष्ठानतत्वस्यापि ॥ तज्ज्ञानस्येति ॥ अध्यस्तभेदप्रतियोगिकभेदरहितम् अध्यस्तभेदविलक्षणत्वेनागृहीतं यत् भेदभ्रमाधिष्ठानतत्वं तद्गोचरस्य बाधकज्ञानस्य इदमितिज्ञानवदबाधकत्वादित्यर्थः ॥ नेदमिति ॥ इदं रजतमिति भ्रमे सति यथा नेदं रजतमिति बाधकज्ञानं भवति एवं भेदभ्रमे सति नायं भेद इति बाधकेन भवितव्यमित्यर्थः ॥ इत्यादिवदिति ॥ नास्त्यत्र रजतमितिवत् अरजतमेव रजतात्मना प्रत्यभादितिवदित्यर्थः ॥ तदेतदिति ॥ आद्ये द्वितीये च बाधकज्ञाने अधिकरणप्रतियोगिनोर्भेद आवश्यकः तृतीयेऽन्यदेवेत्युक्त्या स्पष्टं भेदावगाहित्वमिति मन्तव्यम् ॥ अयोगादिति ॥ इदमितिज्ञानवदित्यर्थः ॥ न सेति ॥ इदमितिज्ञानातुल्यत्वादित्यर्थः ॥ भेदेति ॥ प्रमाणप्रमितभेदेत्यर्थः ॥ भवेदिति ॥ प्रमाणविरोधादेवेत्यर्थः ॥ निर्वचनवादिनीति ॥ यस्तु पदार्थान्निरुच्य व्यवस्थापयति तं प्रतिदं दूषणं शोभते नानिर्वचनीयवादिनं मां प्रतीत्यर्थः । अनिर्वाच्यो वक्तमशक्यः । एतेनेत्युक्तम् विवृणोति ॥ तर्केति ॥ स्वज्ञानेति ॥ घटादिज्ञानेत्यर्थः ॥ अन्यथेति ॥ अनृतादिव्यावृत्तेरपि अनृतत्वादिवत् ब्रह्मज्ञानबाध्यत्वेन मिथ्यात्वाङ्गीकार इत्यर्थः ॥ भ्रान्त्यन्तरेति ॥ मुमुक्षोर्ब्रह्मण्यनृतत्वादिभ्रान्तिं बारयितुं प्रवृत्तेन सत्यादिवाक्येन पुनरनृतव्यावृत्तिभ्रान्त्युत्पादनायोगादित्यर्थः ॥ न स्यादिति ॥ अनृतत्वादिव्यावृत्तिरूपस्यानृतत्वाद्यत्यन्ताभावस्याधिष्ठनभूतब्रह्मज्ञानबाध्यत्वङ्गीकारादुक्तरूपमिथ्यात्वं न स्यादित्यर्थः ॥ अनृतेति ॥ प्रतियोगिभूतं यदनृतत्वं तस्य ब्रह्मण्यनृतत्वेन तत्प्रतियोगिकत्वात् तत्र व्यावृत्तिरप्यनृतेत्यर्थः ॥ प्रातिभासिकत्वापत्त्येति ॥ प्रातिभासिकरूप्यप्रतियोगिकाभेदस्येव रूप्यभेदस्यापि रूप्यप्रतियोगिकत्वेन प्रातिभासिकत्वेत्यर्थः ॥ इष्टापत्तिपरिहारायोक्तम् ॥ बाधगम्यस्येति ॥ अयोगादिति ॥ भ्रान्तिबाधयोरुभयोरपि प्रातिभासिकरूप्याभेदरूप्यभेदविषयकत्वाविशेषादित्यर्थः । इतोपि भेदनिराकरणं तवायुक्तमित्याह ॥ एवमिति ॥ मिथ्यात्वमिति ॥ देहात्सदात्मनो भेदस्यात्मज्ञानबाध्यत्वे देहात्मैक्यस्याधिष्ठानज्ञानाबाध्यात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वं न स्यात् । देहात्मभेदस्य देहात्मैक्यात्यन्ताभावरूपत्वात्तस्यं चाधिष्ठानभूतात्मज्ञानबाध्यत्वाङ्गीकारादिति भावः ॥ अयुक्तेति ॥ उक्तरीत्या देहात्मैक्यस्य मिथ्यात्वाभावे तदैक्यस्याध्यस्तत्वोक्तिरयुक्तेत्यर्थः । किं च नित्यानित्यवस्तुविवेकः शमदमादिसम्पत्तिर्वैराग्यं मुमुक्षेति साधनचतुष्टयमध्ये नित्यवस्तुविवेकाख्यं साधनमङ्गीकुर्वताऽवश्यं तात्विको भेदोङ्गीकार्यः कुत इति चेत्तत्राह ॥ तथेति ॥ तेन भ्रमरूपविवेकेन । इतोपि न तव भेददूषणं युक्तमित्याह ॥ एवमिति ॥ अन्यथेति ॥ प्रपञ्चनिष्ठसद्वैलक्षण्यस्याधिष्ठानभूतब्रह्मज्ञानबाध्यत्वे परस्पर-

(प्रकाशः)

विरुद्धयोरितिन्यायेन प्रपञ्चसत्वस्याधिष्ठानज्ञानाबाध्यसत्वापातादित्यर्थः ॥ जगन्मिथ्यात्वेति ॥ सद्वैलक्षण्यरूपा-निर्वाच्यत्वाख्यमिथ्यात्वस्याधिष्ठानज्ञानबाध्यत्वाङ्गीकारेण मिथ्यात्वादित्यर्थः । एवं च सद्वैलक्षण्यरूपभेदस्या-धिष्ठानज्ञानाबाध्यत्वमङ्गीकार्यमिति भावः । किञ्चाभेदभेदयोरेवान्तततस्तात्विको भेदोङ्गीकार्य इति न तद्दूषणं तवयुक्तम् । नन्वभेदभेदयोर्भेदः कुतोङ्गीकार्य इति चेत्तत्राह ॥ एवमिति ॥ अस्त्विति चेत्तत्राह ॥ भेददोषैरिति ॥ स्यादिति ॥ अभेदभेदयोरेकत्वादिति भावः ॥ तात्विकेति ॥ अभेदभेदयोरिति शेषः ॥ व्यवस्थेति ॥ भेददोषैर्भेदस्यैव बाधनम् अभेदप्रमाणैरभेदस्यैव साधनमित्येवंरूपा व्यवस्थेत्यर्थः ॥ भेदेति ॥ परस्परविरुद्ध-योरितिन्यायेन भेदाभेदयोस्तात्विकाभेदाभावे तात्विकभेदध्रौव्यादित्यर्थः । ननूक्तव्यवस्थार्थम् अभेदभेदयो-स्तात्विकभेदः कुतोङ्गीकार्यः व्यावहारिकभेदेनोक्तव्यवस्थोपपत्तेरित्याशङ्क्य निषेधति ॥ न चेति ॥ कल्पितेनेति ॥ एवं च त्वन्मते अभेदभेदयोस्तात्विकाभेदसद्भावेन तत्कार्यस्य भेददोषैरभेदबाधनस्य अभेदप्रमाणैर्भेदसाधनरूपस्य व्यवस्थाभावरूपकार्यस्य कल्पितेन व्यावहारिकभेदेन प्रतिबन्धायोगादित्यर्थः । तथा च व्यावहारिकभेदेनाप्युक्त-व्यवस्था न स्यादेवेति भावः । किं च भेदेऽन्योन्याश्रयादिदोषपरिहारस्तवाप्यावश्यको न ममैवेत्याशयेनाह ॥ किं चेति ॥ ननु व्यावहारिकेऽन्योन्याश्रयो न दोष इति चेत्तत्राह ॥ न हीति ॥ अवास्तवी व्यावहारिकसती । तदप्यस्त्विति चेत्तत्राह ॥ अन्यथेति ॥ ते उपादानत्वाधिष्ठानत्वे । दुष्टस्यापि भेदस्य ॥ अविद्यासामर्थ्यादिति ॥ दुर्घटघटनास्वभावत्वादविद्याया इति भावः ॥ तादृशस्यापीति ॥ अन्योन्याश्रयदुष्टस्यापीत्यर्थः । वास्तवंस्यात् प्रमा स्यादित्यनयोः को भेद इति चेदुच्यते । रूप्याभावेपि रूप्यज्ञानस्वरूपं वास्तवं दृष्टम् एवं भेदरूपार्थाभावेपि तद्दर्शनस्वरूपस्य वास्तवत्वं युक्तं प्रमात्वं त्वर्थसत्ताघटितम् । अतो भेददर्शनस्य प्रमात्वे तद्विषयस्य भेदरूपार्थस्य सत्वमुपपद्यत इति भावः ॥ यदि भेददर्शनं स्यादिति ॥ अन्योन्याश्रयादिना भेददर्शनमेव नास्तीति ब्रूयादित्यर्थः । इत्यादीत्यादिपदेन स्त्रीत्वमपरिगृह्णीयान्मातरं गर्दभीं सुतामित्यतिप्रसङ्गसङ्ग्रहः । तस्मान्नास्ति भेददर्शनमिति विपर्य-यपर्यवसानायोगः कुत इत्यथ उक्तम् ॥ भेदादर्शन इति ॥ भेददर्शनस्यैवाभावे प्रतियोगिज्ञानाभावेन भेददर्शनं नास्तीति भेददर्शननिरासायोगेन भेददर्शनेङ्गीकार्ये विपर्ययापर्यवसानमित्यर्थः । वास्तवे भेददर्शनस्य वास्तवत्वे ॥ व्याप्तीति ॥ यत्र वास्तवत्वं तत्रान्योन्याश्रयादिकमिति व्याप्त्यभावादित्यर्थः । व्याप्त्यभावोपपादनायोक्तम् ॥ वास्तव इत्यादि ॥ भेददर्शनस्य वास्तवत्वाङ्गीकारपक्षे तत्रान्योन्याश्रयादेरेवानुत्थानात्तथात्वे च वास्तवत्वमेव न स्यादित्यर्थः । एवं च व्याप्त्यभाव इति भावः । अस्तु भेददर्शनस्य तर्केणावास्तवत्वं तथापि तद्विषयस्य भेदस्य वास्तवत्वमस्तु तथाहित्वन्मतेऽभेददर्शनस्य ब्रह्मव्यतिरिक्तत्वेनावास्तवत्वेपि तद्विषयस्याभेदस्य वास्तवत्वं यथा तथाऽन्योन्याश्रयादिना भेददर्शनस्यावास्तवत्वेपि तद्विषयस्य भेदस्य वास्तवत्वौचित्यादित्याह ॥ दर्शनेति ॥ प्रमात्वनिषेधायोगादिति ॥ अर्थबाधः प्रमात्वनिषेधःतस्यायोगः भेदरूपार्थसत्वमेव स्यादित्यर्थः । प्रतीतौ अन्योन्याश्रयप्राप्त्या प्रतीतिरेव निवर्तते न तु तस्याः प्रमात्वं प्रतीतिनिवृत्तेरेवापादने चाद्यपक्षान्तर्भाव इति भावः । तत्र दृष्टान्तश्चोरापराधादिति ॥ केचिच्चोरा रात्रौ धनिकगृहस्थद्रव्यमपहृत्य गच्छन्तो ग्रामपालैरनुद्रुताः सन्तस्तद्द्रव्यं माण्डव्यसमीपे प्रक्षिप्यापलायन्त ते ग्रामपालास्तद्द्रव्यं दृष्ट्वाऽयमेव चोरो द्रव्यमपहृत्य मुधासमाधिरास्त इति माण्डव्यं शूलमारोपिवन्त इति कथा । तथा च प्रतीतिगतान्योश्रयापराधेन प्रमात्वनिषेधायोगाद्यदि भेददर्शनं प्रमा

## न्यायामृततरङ्गिणी

।। अविद्यानिवृत्तेरिति ।। नन्वविद्यानिवृत्तिब्रह्मैक्ययोरतात्त्विकं सापेक्षत्वं तात्त्विकनिरपेक्षब्रह्मस्वरूपाविरोधि । मैवम् । अतात्त्विकसापेक्षस्य भेदस्य तात्त्विकनिरपेक्षघटस्वरूपाविरोधित्वस्यापि सुवचत्वात् । ब्रह्मस्वरूपं तात्त्विकं घटस्वरूपं त्वतात्त्विकमित्यस्यासिद्धेः । भेदस्य सत्यता स्यादित्युक्तमुपपादयति ।। यत्र यदध्यस्तमित्यादिना ।। ब्रह्माधिकरणको भेदो ब्रह्मज्ञानाबाध्यः । स्वविरोध्यध्यासाधिष्ठानाधिकरणकत्वात् । सामान्यव्याप्तौ शुक्तावरूप्यत्ववत् ।। ऐक्यमिति ।। ऐक्याध्यासाधिष्ठानाश्रितत्वं हेतुः । तात्त्विकं वेति साध्यनिर्देशः । स्वविरोधीत्याद्युक्तो हेतुः ।। ऐक्यस्य चेति ।। नन्वैक्यस्य निरपेक्षत्वेपि तत्तदर्थभेदभ्रमनिवर्तकवृत्तिजनने तत्तत्पदार्थसापेक्षतया स्वरूपपरवाक्यानामेकवाक्यतास्ति । मैवम् । तत्तत्पदप्रतिपाद्यतत्तदर्थप्रतियोगिकैक्यविषयकत्वं विना वृत्तेर्भेदभ्रमनिवर्तकत्वायोगात् । ऐक्यस्य निरपेक्षत्वे वृत्तेस्तादृशैक्यविषयकत्वायोगात् ।। तादात्म्यनिषेधत्वेनेति ।। तन्निष्ठासाधारणधर्मवत्वादेस्तादात्म्यस्यैक्यरूपत्वात् । यदि चाभेदस्तादात्म्यं तदैक्यमेव भेदापेक्षमित्याह ।। ऐक्य इति ।। सापेक्षत्वं हि युज्यत इति ।। ननु मम मते काल्पनिकं सापेक्षत्वं तव तु सापेक्षत्वनिरपेक्षत्वे द्वे अपि तात्त्विके इति दृष्टान्तवैषम्यम् । न । भेदस्यापि ब्रह्मस्वरूपत्वेन तत्र सापेक्षत्वं काल्पनिकमित्यपि वक्तुं शक्यत्वात् । न च भेदस्य ब्रह्मस्वरूपत्वे मानाभावः । ऐक्येपि साम्यात् ।। प्रमेयत्वादिनेति ।। ननु भेदस्य निरपेक्षत्वे परान्प्रतीव स्वमपि प्रत्यविशिष्टतया स्वस्मिन्भेदत्वापत्तिः ।। मैवम् । अभेदस्यापि तथात्वे स्वं प्रतीवान्यान्प्रत्यप्यभेदत्वापत्तेः । न चेष्टापत्तिः । घटत्वादिना भेदः कल्पितः स्वरूपतस्त्वभेद एवेति वाच्यम् । भेदेपि साम्यात् । घटभेदत्वेन घटावृत्तित्वेपि भेदत्वेन भेदस्य घटेपि वृत्तेः । ननु निरपेक्षघटस्वरूपस्य भेदस्य प्रतीत्योरपि कथं प्रतियोगिप्रतीतिसापेक्षत्वानपेक्षत्वादिकमत आह ।। शब्दस्वभावप्रयुक्तयोरिति ।। घटकर्मत्वमानयनमित्यादिशब्दात् घटमानयेति शब्दात् जन्ययोः प्रतीत्योरन्वयबोधाजनकत्वतज्जनकत्वयोर्दर्शनादिहापि तदुपपत्तेः । एतच्चोपपादितं दृग्दृश्यसम्बन्धानुपपत्तिभङ्गे । अन्यथैक्येपिसमम् । तदेतदाह ।। ब्रह्मशब्दोल्लेखेनेत्यादिना ।। ननु गच्छतिचलत्योरर्थभेद एव । उत्तरसंयोगावच्छिन्नस्पन्दो गम्यर्थः । पूर्वविभागफलकस्पन्दश्चलत्यर्थ इति । मैवम् । उभयत्रापि पूर्वदेशविभागस्योत्तरदेशसंयोगस्य च प्रतीतेः सत्त्वेन गमिचलत्योरर्थाभेदात् । धात्वर्थः फलमिति मण्डनाचार्यमते तु संयोगस्योभयफलत्वेन

(तरङ्गिणी)

तयोरैकार्थ्यात् । न चानुकूलयत्नः करोत्यर्थः फलमानयत्यर्थ इति वाच्यम् । आख्यात-समानार्थतया यत्नमात्रस्य करोत्यर्थत्वात् । एतदप्युपपादितं प्रतिकर्मव्यवस्थाभङ्गे । नियमा-नङ्गीकाराच्चक्वचिद्धात्वभेदेपि तपति ऋषिः तपति पृथिवीं सवितेत्याद्यकर्मकसकर्मक-प्रतीतिरप्युपपद्यते ॥ नान्योन्याभावतेति ॥ ननु नान्योन्याभावः पृथगिति वक्तव्यम् । सत्यम् । नायंभावशब्दो भावसाधनः । किन्तु कर्तृसाधनः । ज्वलितिकसन्तेभ्योण इति णप्रकरणे भवतेश्चत्यनेन कर्तरि भवतेर्णविधानात् । भवतीतिभावस्तस्य भावो भावता भवनम् । एवं चान्योन्याभावतान्योन्याभवनमन्योन्याभाव एव । स न पृथगित्यर्थः । तथा च तल्प्रत्ययो-पपत्तिः । केचित्तु अकर्तरि च कारकेसञ्ज्ञायामिति कर्तरि प्रतिषिद्धमपि घञ्प्रत्ययमुणादयो बहुलमिति बहुलवचनात्कर्तर्यपि विधायकर्तृसाधनं भावशब्दमाहुः ॥ अविद्यानिवृत्त्यद्वैतयोरपि कथं ब्रह्मैक्यमिति ॥ ननु मम मते तत्राभवत्वस्य कल्पितत्वेन विरोधाभावः तव तु द्वयोरपि तात्विकत्वेन विरोधः । मैवम् । निर्विशेषब्रह्माभिन्नेऽविद्यानिवृत्त्यादौ भावत्वाभावत्वयोः कल्पितत्वेन तव विरोधस्य दुर्वारत्वात् । विरुद्धयोरुभयतात्विकत्ववदुभयकल्पितत्वेपि विरोधात् ॥ तदैक्यप्रमित्यविषयत्वमिति ॥ दर्शनादिघटितत्वेऽचाक्षुषत्वाद्यापत्तिः । संस्कारोपनीतभानात् ॥ इतरेत्विति ॥ न चात्यन्ताभावान्योन्याभावयोरैक्यापत्तिः । इष्टत्वात् ॥ प्रतियोगिनिरूप्य-स्येति ॥ घटस्य पटप्रतियोगिकभेदस्वरूपत्वे पटस्वरूपत्वमपि स्यादित्यर्थः । ननु न घट-स्वरूपभेदं प्रति पटस्य निरूपकत्वमात्रेण घटस्य पटरूपतापाद्यते । किन्तु समानाधिकरण-प्रतीतिविषयस्वरूपं प्रति प्रतियोगितयाविरूपकत्वेन । अज्ञाननिवृत्त्यादयस्तु न समानाधिकरण-प्रतीतिविषयाः । भेदस्तु घटः पटो नेतिसमानाधिकरणप्रतीतिविषय इत्याशङ्का तुच्छेत्याह ॥ अनृतेत्यादिना ॥ अनृतं न ब्रह्म अज्ञानप्रकाशो ब्रह्मेत्यादि समानाधिकरणप्रतीतिविषयो यद् ब्रह्म तत्स्वरूपा याऽनृतव्यावृत्तिरज्ञानप्रकाशश्च तत्र प्रतियोगितयानिरूपकस्यानृतस्याज्ञानस्यच प्रह्मरूपतापत्तेरुक्ताशङ्कायास्तुच्छत्वात् । अद्वितीयं ब्रह्मेत्यत्र द्वितीयस्य अदुःखं ब्रह्मेत्यादौ-दुःखादेर्ब्रह्मरूपतापाताच्च । ननु भेदस्य स्वरूपत्वे घटधर्मेषु पटप्रतियोगिकभेदत्ववद्घट-प्रतियोगिकभेदत्वस्याप्यभ्युपगमात्पटाद्भिन्नो घट इतिवद्घटाद्भिन्नो घट इति प्रतीतिः स्यात् । मैवम् । पटप्रतियोगिकभेदस्वरूपा ये घटत्वादयो धर्मास्तद्वत्त्वेन घटे पटभिन्नत्वप्रतीते-रनङ्गीकारात् । किन्तु पटप्रतियोगिको यो घटस्वरूपो भेदस्तेनैव साकं विशेषरूप-सम्बन्धसत्वात्तद्वत्त्वेन घटे पटभिन्नत्वधीः ॥ स्ववृत्तिविरोधादिति ॥ ननु भेदस्य विभागात्मकविदारणरूपत्वे विभागस्य विभज्यमानवृत्तित्वनियमेनावयवानवस्थया शून्यवादा-

(तरङ्गिणी)

पत्तिः । मैवम् । दत्तोत्तरत्वात् । न हि लवित्रादिकं स्वावयवं लुनाति । किन्त्वन्यदेव । विभज्यमानवृत्तित्वं चासिद्धम् । घटस्य स्वावयवान्प्रतिविभागत्वे हि तेषां विभज्यमानता स्यात् । नत्वेवम् । किन्तु पटादिकं संम्बन्ध्येव घटो भेदो विदारणं विभागश्च । ननु स्वावयवैः सह घटस्य भेदोस्ति । मैवम् । अभेदस्याप्यङ्गीकारात् । कचिद्विशेषाङ्गीकाराच्च । अत्यन्तभेद एव विदारणरूप इत्यङ्गीकारात् । संयुक्तयोरोष्ठयोरिति ॥ संयोगकाले भेदव्यवहारहेतोर्विभाग-स्याभावाद्भिन्नाविति व्यवहारो न स्यात् ॥ उक्तश्चेति ॥ समयपादेऽनुव्याख्यान इति शेषः । अद्भुताः पिशाचाः ॥ अविदारणइति ॥ एकाक्षराधिक्येपि न च्छन्दोभङ्गः ॥ यत्रभेदात्मको-घटइति ॥ ननु घटस्यावयवानामनेकत्वंस्यात् । न । अनेकावयवानामनेकत्वस्येष्टत्वात् । एकस्मिन्नवयवे तु घटाख्यस्यानेकत्वस्यापर्याप्तेः । एतेनान्योन्याभावस्यस्वरूपत्वे कपालादि-रूपाश्रयप्रतियोगिकभेदस्य घटादिरूपाश्रितरूपाश्रितरूपतया स्वप्रतियोगिकभेदायत्तत्वादेकत्वं कपालादिषु भज्येतेति निरस्तम् ॥ अनेकेषु कपालेष्वनेकत्वस्येष्टत्वात् । एकस्मिंस्तुघटाख्य-भेदस्यापर्याप्तेः । स्वप्रतियोगिकात्यन्तभेदएवानेकत्वमित्यङ्गीकाराच्च ॥ ऐक्येपि विप्रतिपत्त्याद्य-योगादिति ॥ नन्वज्ञानाश्रयत्वादिनाप्रत्यगर्थं प्रकाशमुपजीव्यन्नावृणोत्यविद्या । ऐक्याद्यंशन्त्वा-वृणोत्येवेति तत्र विप्रतिपत्त्यादयः । मैवम् । निरंशेऽशांभावस्योक्तत्वात् ॥ उक्तरूपेणेति ॥ स्वरूपत्वेनेत्यर्थः । भेदस्वरूपं स्वयं स्वरूपत्वेन प्रकाशत एवेति यावत् । ननु प्रतियोगि-भेदेनाभावभेदस्यावश्यकत्वात्पटादीनां प्रतियोगिनां नानात्वात्तत्प्रतियोगिकभेदरूपो घटोपि नाना स्यादत आह ॥ न हि निरूपकभेदेनेति ॥ ननु तथापि प्रतियोगितावच्छेदकभेदेनाभावभेद आवश्यकः । घटप्रतियोगिकानां चतुर्णां प्रागभावादीनां भेदे प्रतियोगितावच्छेदकभेदस्य प्रयोजकत्वेन क्लृप्तत्वात् । न हि तत्र प्रतियोगिभेदोस्ति । मैवम् । अधिकरणरूपाभाव-वादेऽधिकरणभेदेनैवाभावभेदात् । न च प्रागभावप्रध्वंसयोरैक्यापत्तिः । अन्योन्याभावस्यै-वाधिकरणरूपत्वाङ्गीकारात् । प्रतियोगितावच्छेदकभेदेनाभावभेदे ऐक्यस्यापि भेदः स्यादित्याह ॥ अनेकद्वैतेति ॥ ननु ब्रह्मेतरत्वरूपप्रतियोगितावच्छेदकस्यैक्यान्नैक्यस्यभेदः स्यात् । मैवम् । तादृशस्यैक्यस्य ब्रह्मस्वरूपत्वानुपपत्तेः । भेदसापेक्षत्वाच्च ॥ भेदज्ञानमभ्रमविरोधीति ॥ न चैवं शाब्दाभेदभ्रमस्यशाब्दभेदज्ञानादनिवृत्त्यापत्तिः । एतन्मत इष्टापत्तेः । शाब्दभ्रमेप्यधिष्ठानसत्वात् । भेदस्याप्यभेदविरोधित्वाच्च । अभेदभ्रमविरोधिनीं भेदप्रतीतिमाह ॥ अदोषमूलेति ॥ एतच्चा-प्रतीतौ विशेषणम् । अदोषमूलो यस्ताद्रूप्यप्रकाशकप्रतीत्यभावस्तस्मिन्सति प्रतीतिस्वरूप-भेदलक्षणं स्वरूपभेदो लक्ष्यते विषयीक्रियतेऽनया सा तथा । अभेदभ्रमविरोधिनीतियावत् ।

(तरङ्गिणी)

अदोषमूलेत्यस्यव्यावर्त्यमाह ॥ शुक्तेरिति ॥ शुक्तिःशुक्तेःस्वरूपभेदेन भवतीति शुक्तिप्रतीतिर्ने शुक्तिस्वरूपभेदविषयेति न सा तत्वेनसङ्ग्राह्या दोषकालेशुक्तिरूपत्वेनाप्रतीतिःशुक्तेःप्रतीतिश्च सा भवति तत्र लक्षणमस्तीत्यतिव्याप्तिः । दोषमूलेतिविशेषणे तु न तत्रातिव्याप्तिः । ननु रजतात्मना शुक्तेःप्रतीतिसमयेशुक्तौरजतभेदो न स्यात् । तत्र ताद्रूप्येणप्रतीत्यभावरूप विशेष्यस्याभावेनादोषमूलत्वविशेषणविशिष्टस्यापि तस्याभावात् । न हि विशेष्यहीने विष्टसम्भवः । मैवम् । अबोधमूलत्वात् । स्वरूपभेदलक्षणस्यात्रानभिधानात् । अभेदभ्रमविरोधिस्वरूपभेदप्रतीतेरभिधित्सितत्वात् । अत एवाह ॥ एवञ्चभ्रमस्थलइति ॥ ताद्रूप्येण घटस्य पटादिरूपत्वेन । अत एवोक्तमभेदभ्रमोपपत्तिरिति । लक्षणविवक्षायां हि स्वरूपभेदलक्षणोपपत्तिरित्यवक्ष्यत् । यदपि केनचिदुक्तं ताद्रूप्येणाप्रतीतौप्रतीतेरभेदसाधारण्येना-दोषमूलपर्यन्तज्ञानं भेदव्यवहारकारणं वाच्यम् । एवं च स्वरूपभेदस्य चाक्षुषत्वं न स्यात् । प्रतीतिघटितत्वात् । शुक्तेःरूप्यात्मनाऽप्रतीतिकालेसामग्रीविरहाच्छुक्त्यात्मना चाप्रतीतौरूप्य-भेदत्वं शुक्तेर्नस्याच्च । न च तदापिप्रतीयमानत्वमीश्वर ज्ञानमादायास्त्येवेति वाच्यम् । एवं सत्यप्रतीतिदशाविरहेणप्रतीयमानपदवैयर्थ्यादिति । तदयुक्तम् । अबोधात् । स्वरूपभेदवादे भेदज्ञानं न भ्रमविरोधीत्यत्रपूर्ववाक्येऽभेदभ्रमविरोधिभेदज्ञानस्य प्रकृतत्वेन तस्यैवात्रोच्यमानत्वेन स्वरूपभेदलक्षणस्यात्रानभिधानादित्युक्तत्वात् ॥ तत्त्वेऽद्वैतप्रसङ्गतइति ॥ पटादिनिरूप्यस्य भेदस्य घटस्वरूपत्वे पटादिरपि घटस्वरूपः स्यादित्यद्वैतमेव तत्वं स्यात् ॥ एकाभावादिति ॥ अनेकत्वैकार्थसमवायिनो भेदस्य घटस्वरूपत्वे घटरूपभेदाश्रयो नैकः स्यात् एवं तदाधारोपीत्येकः कोपि न स्यात् ॥ सापेक्षत्वादिति ॥ अभिदा ऐक्यम् । वस्तुनो रूपं न । तत्र हेतवः सापेक्षत्वादय अभेदस्य भेदसापेक्षत्वम् । स्वाभेदः स्वं प्रत्येव । नत्वन्यं प्रत्यपीति सावधित्वम् । अविदारणात्मकस्याभेदस्य ब्रह्मरूपत्वेन शून्येनाप्यविदारणे तदैक्यं स्यादिति शून्यैक्यं तत्वं स्यात् ॥ नैकाभावादिति ॥ न एकं नैकं अनेकम् । तस्याभावात् एकत्वैकार्थसमवायिना घटेन घटभेदस्य पटस्वरूपत्वे घटस्य पटेन सह धर्मिज्ञानाबाध्यमनेकत्वं न स्यात् अभेदस्य प्रकाशमानब्रह्मस्वरूपत्वे अभेदे सम्शयाद्यभावः स्यात् ॥ वस्तुभेद इति ॥ वस्तुनः सकाशाद्भेदस्य भेदो न स्यात् । किन्तूभयमेकमेव स्यादित्यर्थः ॥ घटत्वभेदत्वयोरिति ॥ न च भेदत्वानिरुक्तिः । ज्ञानत्वानन्दयोरपि ब्रह्मण्यनिरुक्तेः । न च तत्र तत्कल्पितं भेदत्वमपीश्वरशक्तिवशाद्भेदे तात्विकम् । वस्तुतस्त्वनिरुक्तावपि न वस्तुक्षतिरित्युक्तं दृग्दृश्य

(तरङ्गिणी)

सम्बन्धानुपपत्तिभङ्गे । ननु प्रमाणसिद्धे ऐक्ये भेदव्यवहारस्यौपचारिकत्वं कल्प्यत इत्याशङ्कते ॥ तत्रगत्यन्तराभावादिति ॥ ननु गत्यन्तराभावेपि नाप्रामाणिकमङ्गीकारार्हमतस्तत्र प्रमाणान्याह ॥ तथाभेदस्येत्यादिना ॥ क्वचित्तु घटे पटात्मकोनेति पाठः । सोपि सामानाधिकरण्योपपादनार्थ एव । ननु घटः पटो नेत्यादेरन्योन्याभावरूपभेदविषयतया न स्वरूपभेदविषयत्वम् । अन्यथा नीलो घट इत्यस्य रूपाभेदविषयत्वापत्तिः । मैवम् । स्वरूपातिरिक्तस्यान्योन्या भावस्या- नङ्गीकारान्नीलो घट इत्यस्य रूपाभेदविषयत्वमस्त्येव । रूपशब्दोल्लेखिव्यवहारस्तु नास्ति ॥ घटतद्भेदयोरेकस्येति ॥ तद्भेदः पटभेदः । ननु पटभेदस्य घटेनाभेदसिद्धेः प्राग्लिङ्गमसिद्धम् । सामान्यव्याप्तौ समानसंवित्सम्वेद्ये जातिव्यक्त्यादौ व्यभिचारः । विशेषव्याप्तौ भेदप्रतियोगिनि घटादौ व्यभिचारः । मैवम् । घटप्रतीताववश्यं तस्य पटादिभेदेन प्रतीतेरुक्तत्वात् । पटादि- साङ्कर्याननुभवात् । अतो नासिद्धिः । सामान्यव्याप्तौ न व्यभिचारः । जात्यादेर्व्यक्तिस्व- रूपत्वात् । भेदत्वज्ञान एव प्रतियोगिज्ञानापेक्षणान्नप्रतियोगिज्ञाने विशेषव्याप्तावपि व्यभिचारः ॥ तथाप्यनेकेष्विति ॥ ननु घटविषयकं ज्ञानं घटविषयिकेच्छेति ज्ञानादिषु घटविषयक- त्वांशेऽनुगमवत्पटप्रतियोगिकत्वंश एवानुगमः स्यान्न भेदाम्शेपि । मैवम् । अबोधात् । अनेकेषु घटकुड्यादिस्वरूपभेदेषु पटप्रतियोगिकत्वस्यैकस्य सम्बन्धात्पटाद्भिन्नमित्यनुगतव्यवहारो भविष्यतीत्युच्यते । अन्यथा गोत्वानुगमेपि न गवाम्शेऽनुगम इत्यपि स्यात् । ननु साक्षी प्रमाणमनपेक्ष्य प्रतियोगिपटादिकं न गृह्णातीति कथं साक्षिसिद्धेन प्रतियोगिना सहैव व्यावृत्तिप्रतीतिरुपपद्यत इत्यत आह ॥ सर्वंसामान्यतोयस्मादिति ॥ तथाच सर्वं वस्तु सामान्यतः साक्षिणा गृह्यत इति साक्षिसिद्धेन कालेन सहैव वस्तुग्रहवत्साक्षिसिद्धेन प्रतियोगिना सहैव व्यावृत्तिः प्रतीयत इत्यदोषः । तृतीयाध्यायेप्युक्तमनुव्याख्याने । अतः सर्वपदार्थाश्च सामान्यात्साक्षिगोचराः । सर्वमित्येव विज्ञानं सर्वेषां कथमन्यथेति ।

ननु तथापि कथं प्रतियोगिज्ञानं विना प्रतियोगिविशिष्टाभावधीः । विशिष्टज्ञानस्य विशेषण- ज्ञानाजन्यत्वेपि प्रतियोगिविशिष्टाभावज्ञानस्य प्रतियोगिज्ञानजन्यत्वात् । सत्यम् । अभावत्व- प्रकारकज्ञाने तथैव । स्वरूपाभावज्ञानेतु न पूर्वप्रतियोगिज्ञानापेक्षेति न दोषः । ननु सर्वस्माद्व्यावृत्ततानुभूयत इत्यत्र सर्वत्वं वा प्रतियोगितावच्छेदकं स्वेतरसर्वत्वं वा । आद्ये स्वस्माद्वैलक्षण्ये स्वासिद्धिप्रसङ्गः । द्वितीयेन्योन्याश्रय इत्यत आह ॥ सर्वस्मादित्यनेनचेति ॥ तदात्मकत्वेनाज्ञानं ज्ञानं विवक्षितंम् । तेन स्वग्रहात्पूर्वं स्वस्यापि स्वात्मतयाऽज्ञानात्स्वस्य प्रतियोगितापत्तिरिति निरस्तम् ॥ तद्विरुद्धाभेदज्ञानानुपपत्तिरितिति ॥ ननु काल्पनिकभेदज्ञानस्य

(तरङ्गिणी)
धर्मिप्रतियोगिभावज्ञाननिर्वाहकस्य तात्त्विकाभेदज्ञानाप्रतिबन्धकत्वम् । मैवम् । अभेदग्रहात्पूर्वं भेदस्य काल्पनिकत्वासिध्यान्योन्याश्रयात् । नन्वभेदो न प्रतियोगिज्ञानाद्यपेक्षः । तस्य निष्प्रतियोगिकवस्तुस्वरूपत्वात् । सप्रतियोगिकत्वव्यवहारस्तु निरूपकभेदे सप्रतियोगिकत्वेनेत्यत आह ।। साम्यादिति ।। निष्प्रतियोगिकवस्तुस्वरूप एव भेदे निरूपकतादात्म्यस्य सप्रतियोगिकत्वेन सप्रतियोगिकत्वव्यवहार इति साम्यस्योक्तत्वात् ।। सप्रतियोगिकपदार्थमात्रेन्योन्याश्रयःस्यादिति ।। यस्त्वत्रेष्टापत्तिमाह सजीवब्रह्मैक्येपि सप्रतियोगिकेन्योन्याश्रयमनुमेयमेव । गौर्गवयसदृश इति व्यावहारिकीमपि व्यवस्थामनास्थित इति स्पष्टं शून्यवादमास्थित इत्युपेक्षणीयः ।। सद्भेदस्येति ।। सन् विद्यमानो भेदो यस्य तत्तथा । मिथः आश्रयः अन्योन्याश्रयः ।। युगपदनेकज्ञानोत्पत्तेर्विरुद्धत्वेपीति ।। तदुक्तं चिन्तामणौ ।। युगपज्ज्ञानानि माभूवन्युगपत् ज्ञानन्तु स्यादेवेति ।। तदुक्तमिति ।। समयपाद इति शेषः । इत्युक्त्वादुभयतःपाशारज्जुरिति ।। तत्रैवानुव्याख्याने । किञ्चभेदः कथं ग्राह्य इति यः परिपृच्छति । धर्म्यादिभेदग्रहणात्तेनोक्तोन्योन्यसंश्रयः 'अन्यत्वाग्रहणे प्रोक्त' इत्यादिना परोद्भावितान्योन्याश्रयत्वस्य व्याहतत्वमुक्तमित्यर्थः ।। विरोधादिति ।। प्राचीनभेदधिया प्रतिबन्धादित्यर्थः । यत्त्वनिर्वचनीयभेदज्ञानस्य तात्त्विकाभेदज्ञानाप्रतिबन्धकत्वमिति । तन्न । द्वैताद्वैतमानयोः काल्पनिकभेदमात्रेण बाध्यबाधकत्ववदिहापि प्रतिबन्धकत्वोपपत्तेः ।। बिम्बप्रतिबिम्बयोर्जीवब्रह्मणोश्चेति ।। यत्त्वभेदस्य वस्तुस्वरूपत्वने दृग्विकल्पानवकाश इति । तन्न । भेदेपि साम्यस्योक्तत्वात् ।। तर्हि प्रकृतेपि तथेति ।। नन्वद्वैतस्याधिकरणातिरेकेऽप्रामाणिकत्वमिष्टमेव । अनतिरेके त्वधिकरणप्रामाणिकत्वस्यैव प्रामाणिकत्वे तन्त्रतया प्रतियोग्यप्रामाणिकत्वेपि प्रामाणिकत्वोपपत्तिः ।। मैवम् ।। भेदेपि साम्यस्योक्तत्वात् । पटेप्रमितस्यपटतादात्म्यस्येति ।। ननु तादात्म्यमात्रस्य निषेधप्रतियोगित्वे दूरस्थवनस्पत्योरिव बाधोत्तरकालमिमौ वनस्पती इतिवदिमे शुक्तिरजते इति प्रतीत्यापत्तिः । मैवम् । सन्निधाने इष्टापत्तेः । असन्निधानेपीयं शुक्तिरेव रजतं तु यन्मयानुभूतं तदेवेति प्रतीतेश्च ।। तन्मत इति ।। प्रतियोग्यभेदेप्यारोप्यसम्बन्धभेदात्संसर्गाभावान्योन्याभावयोर्भेदः ।। प्रतियोगिनमिति ।। अधिकरणप्रतियोगिसंसर्गविषयत्वनियतबुद्धिविषयाभावत्वम् । एवमग्रेपि । एतेनातीन्द्रियभेदे व्याप्तिः शब्दजन्याभावबुद्धौ व्यभिचारेणारोपस्याभावबुद्धावहेतुत्वाच्चेति परास्तम् । आरोपस्य हेतुत्वानुक्तेः ।

अन्ये तु स्वाभावाभावत्वं संसर्गाभावत्वम् । स्वाभावाभावत्वरहिताभावत्वमन्योन्याभावत्वं । अस्ति च घटात्यन्ताभावस्य योऽभावो घटस्तदभावश्च घटात्यन्ताभावः । एवं प्रागभावादिषु ।

(तरङ्गिणी)

घटान्योन्याभावस्य योभावो घटत्वं तदभावस्तु न घटान्योन्याभाव इति । न च संसर्गाभावस्य योन्योन्याभावस्तदभावोन संसर्गाभाव इति स्वसंसर्गाभावाभावत्वं लक्षणार्थो वाच्यस्तथा-चान्योन्याश्रय इति वाच्यम् । स्वाभावाभावत्वमित्यत्र वस्तुतो यद्यपि संसर्गाभावाभाव एव पर्यवस्यति तथापि संसर्गाभावत्वं न तत्र प्रविष्टम् अभावत्वेनैव संसर्गाभाव उपस्थित इति नोक्तो दोष इत्याहुः ।

ननु यद्यपि घटान्योन्याभावाभावो न घटः । किन्तु घटत्वम् । तथापि घटो घटान्योन्याभावो नेति प्रतीत्या घटे घटान्योन्याभावान्योन्या भावो विषयीक्रियते । स च घटस्वरूप एव । अभावप्रतियोगिका भावस्याधिकरणानतिरेकात् । तथाच संसर्गाभावलक्षण-मन्योन्याभावेतिव्याप्तम् । स्वंघटन्योन्याभावस्तदन्योन्याभावो घटः । तदभावश्च तदन्योन्याभाव इति । अत्र ब्रूमः । स्वाभावमात्राभावत्वं संसर्गाभावत्वम् । अन्योन्याभावस्य स्वान्योन्याभावो यः घटस्तदभावरूपत्वेपि स्वात्यन्ताभावो यः घटत्वं तदभावरूपत्वाभावात् । घटान्योन्या-भावस्य घटत्वप्रतियोगिकत्वाभावादिति । केचित्तु संसर्गाभावत्वान्योन्याभावत्वे अखण्डोपाधी इत्याहुः ॥ तस्यैवस्वनिर्वाहकत्वञ्चेति ॥ ननु भेदाधिकरणकभेदव्यवहारस्य स्वरूपेण निर्वाहे स्वरूपभेदपक्षान्तर्भावः । मैवम् । घटे तदनङ्गीकारेण तत्पक्षबहिर्भावात् ॥ तथाचान्योन्य-वृत्तिरितीति ॥ घटभेदघटभेदत्वयोर्भेदस्य घटभेदादन्यत्वेऽनवस्थापातेन घटभेदरूप एव तयोर्भेदो वाच्य इति घटभेदे घटभेदत्वं घटे भेदत्वे च घटभेद इत्यन्योन्यवृत्तिः स्यात् ॥ तस्यस्वाभेद-इति ॥ अभेदत्वस्याभेदत्वेनाभेदसिध्यर्थमभेदत्वेऽभेदो वाच्य इत्यभेदेऽभेदत्वमभेदत्वे चाभेद इत्यन्योन्यवृत्तेः साम्यम् । नन्वभेदमात्रस्याभेदत्वस्य च ब्रह्माभेदाभिन्नतयाऽन्योन्य इत्यस्यैवा-भावेनान्योन्यवृत्तित्वमापादयितुमशक्यमित्यत आह ॥ नचघटस्येति ॥ अभेदत्वस्याभेदेनाभेदः घटस्य घटेनाभेदः एवं सर्वेप्यभेदाः जीवब्रह्माभेदेनाभिन्नाश्चेत्तर्हि घटस्य घटाभेदज्ञानेनैव जीवब्रह्माभेदो ज्ञात इति वेदान्तवैयर्थ्यम् । न च भेदभ्रमनिवर्तकवृत्तिर्महावाक्यं विना नेति वेदान्तावैयर्थ्यम् । अभेदविषयकत्वस्योभयत्र साम्ये एकस्या अनिवर्तकत्वमन्यस्यास्तु निवर्त-कत्वमित्यस्यायोगात् । नन्वभेदत्वस्याभेदत्वेनाभेदो वा घटस्य घटेनाभेदो वा नजीवब्रह्माभेदः किन्तु जीवस्य ब्रह्मणाऽभेद एव जीवब्रह्माभेदः । तथा च घटस्य घटाभेदे ज्ञातेपि जीवब्रह्माभेदाज्ञानात्तज्ज्ञानार्थं वेदान्ता इति न तेषां वैयर्थ्यम् । न चैवमभेदत्वेपि स्वाभेदार्थ-मभेदो वाच्य इति भेदाभेदत्वयोरन्योन्यवृत्तिरापन्नेति वाच्यम् । प्रमेयत्वाभिधेयत्वयोरिव प्रमितत्वात्तदुपपत्तेरित्याशङ्कते ॥ अथ तत्रेति ॥ भेदभेदत्वयोरन्योन्यत्वाज्ञाने तयोरन्योन्य-

(तरङ्गिणी)

वृत्तित्वस्यापादयितुमशक्यत्वात्तज्ज्ञाने च तयोरन्योन्यवृत्तित्वस्यप्रमितत्वान्नतदापादनं दोष इति परिहरति ॥ तर्हिप्रकृतेपीति ॥ नन्वनिर्वाच्यत्वादावयंविकल्पोऽनिर्वाच्यत्वप्रयोजक इत्यस्माकमनुकूल एवेत्यत आह ॥ एवमन्येपीति ॥ बौद्धोद्भावितस्य ब्रह्मण्यनिर्वाच्यत्वस्यानिर्वाच्यत्वे ब्रह्मणि सत्यस्वरूपत्वस्य तात्विकत्ववदनात्मन्य निर्वाच्यत्वस्यानिर्वाच्यत्वेऽनात्मनि सत्यस्वरूपत्वस्य तात्विकत्वापातस्य तव प्रतिकूलत्वात् । ननु भेदखण्डनयुक्तय आभासरूपाः निराकरणानर्हाः किमिति निराकृता इत्यत आह ॥ नह्यत्रेति ॥ यद्यजातिरूपाः युक्तीः परेऽवक्ष्यन् तद्धिता एव निराकरिष्यामः । न चैवम् अतोयक्षानुरूपोबलिरितिन्यायेन तथाविधा अपि निराकृताः । समयपादीयानुव्याख्यानं संमतयति ॥ तदुक्तमिति ॥ 'अनात्माश्रयमृत्तुल्या भित्तिरित्यभ्युपेत्ययः । भित्तेरात्माश्रयं प्राह हतवाक्यस्तथास्तु सः' ॥

॥ विशिष्यभेदखण्डनोद्धारः ॥ १५ ॥

## न्यायामृतकण्टकोद्धारः

नन्वेवमस्तु प्रतिवादिनं प्रति प्रतिबन्द्या समाधानम् । तत्वविचारकं, धर्मिस्वरूपत्वमुत तदतिरिक्तत्वमिति पक्षयोः कस्मिन् पक्षे निर्वाह इति जिज्ञास्मानं प्रति कथं समाधानमित्यत आह ॥ सम्भवति चेति ॥ यद्वा प्रतिवादिनं प्रत्येवं प्रतिबन्द्या समाधानमभिधाय अस्तु धर्मिस्वरूपत्वमेव भेदस्य तथापि न काप्यनुपपत्तिरित्याह ॥ सम्भवति चेति ॥ ब्रह्मव्यक्त्यादीति ॥ तथाच व्यभिचारान्न तर्कमूलभूतव्याप्तिरिति भावः । न च जातिमात्रस्य व्यक्तिभेद एव न व्यक्तिसमानसत्ताकघटकत्वादौ भेदाभावात् । तदसमानसत्ताकसत्तादौ सापेक्षस्य काल्पनिकत्वात् नीलघटत्वादिकं व्यक्त्यभिन्नमेव । अन्यत्र सर्वत्र प्रतीतौ सापेक्षत्वकाल्यमेवेति नैक्यादिप्रतिबन्दीति वाच्यम् । जातौ पृथक् सत्ताभावेन समानासमानविभागकल्पनानुपपत्तेः । न च जातावपि स्वरूपसत्त्वमस्तीति वाच्यम् । तथापि जातिमात्रस्य व्यक्तिसमान सत्ताकत्वेनासमानसत्ताकजात्यसिद्धेः । न च सत्तैव तादृशीति वाच्यम् । घटत्वादावप्येवं वक्तुं शक्यत्वात् । विनिगमकाभावात् । न च सत्ता ब्रह्मात्मिकैवेति वाच्यम् । घटनिष्ठतयाऽनुभवात् । अन्यथा घटत्वादेरपि ब्रह्मात्मकत्वप्रसङ्गात् । यच्च सापेक्षकत्वमाविद्यकतया काल्पनिकमिति तन्न । बाधकाभावात् । भेदेऽपि तथा वक्तुं शक्यत्वाच्च । ननु मास्तु व्याप्तिस्तथापि तर्कस्य किं दूषणमित्यत आह ॥ व्याप्त्यभावे चेति ॥ नन्वैक्यं ब्रह्मस्वरूपमेव न भवति । तथाच कथं तत्र व्यभिचार इत्यत आह ॥ ऐक्यस्येति ॥ ननु भेदस्य सत्यता स्यादित्यापादितं तदयुक्तम् । यत्रैक्यं मिथ्या तत्र भेदः सत्य इति व्याप्तेरस्माकमसिद्धेऽपि भेद सत्यत्वस्य काप्यनभ्युपगमादित्यत आह ॥ यत्रेति ॥ नन्वियं सामान्यव्याप्तिर्न विशेषव्याप्तिः सैव प्रकृतोपयोगिनीत्यभिमानं तं कुप्यतु दुर्जन इति न्यायेनाह ॥ यत्र यदैक्यमिति ॥ सत्यपदेन तज्ज्ञानाबाध्यत्वस्यैव विवक्षितत्वात् नापादनव्याप्त्योर्भिन्नविषयत्वमिति भावः । नन्वैक्यं सापेक्षमेव न तथाच सापेक्षत्व-

(कण्टकोद्धारः)

रूपहेतोरेवाभावात्कथं व्यभिचार इत्यत आह ॥ ऐक्यस्य चेति ॥ न चैक्यस्य स्वरूपप्रतीत्यादौ निरपेक्षत्वेऽपि भेदभ्रमनिवर्तकवृत्तिजनने सापेक्षतया स्वरूपपराणामप्येकवाक्यतेति वाच्यम् । भेद भ्रमनिवर्तिका ऐक्यवृत्तिरेव । तथा चैक्यस्य निरपेक्षत्वे तद्वृत्तेरपि सुतरां निरपेक्षत्वेन पुनरपि पदार्थपराणां वैयर्थ्यं दुष्परिहरमिति भावः ॥ वैपरीत्यस्यैवेति ॥ ऐक्यस्य तादात्म्यरूपत्वेन तन्निषेधरूपत्वात् । भेदस्य तत्सापेक्षतयैव सापेक्षत्वमिति भावः । अस्तु वैक्यस्य भेदनिषेधरूपत्वं तथापि भेदरूपप्रतियोगिसापेक्षत्वं दुर्वारमित्याह ॥ ऐक्य इति ॥ ननु सापेक्ष निरपेक्ष प्रतीति विषयत्वं विरुद्धमेकत्र कथमङ्गीकर्तुं शक्यम् । कुत्राप्यदृष्टत्वादित्यत आह ॥ एकस्यामेवेति ॥ उक्तमर्थं कारिकया सङ्गृह्णाति ॥ एवञ्चेति ॥ ब्रह्मरूपा या धीस्तद्वदित्यर्थः । ननु दृष्टान्ते काल्पनिकत्वाकाल्पनिकत्वयोर्द्वयोस्तात्विकत्वाभावात् दार्ष्टान्तिके च तद्भावात् वैषम्येण दृष्टान्तदार्ष्टान्तिक भावोऽनुपपन्न इति चेन्न । दृष्टान्तेऽप्युभयोस्तात्विकत्वावश्यम्भावात् दार्ष्टान्तिकेपि तथा वक्तुं शक्यम् । स्वभेदस्य निषेधप्रतियोगितया तत्र वक्तुमशक्यमिति वाच्यम् । भेदः स्वातन्त्र्यसार्वज्ञेत्यादि प्रमाणानामन्यत्रोदाहृतत्वात् अभेदस्यैव स्वरूपत्वे न किमपि प्रमाणं पश्यामः । नन्वेकस्यैव केनचिद्रूपेण सापेक्षत्वं केनचिद्रूपेण निरपेक्षत्वमिति न दृष्टम् । तथाचादृष्टकल्पनेत्यत आह ॥ प्रमेयत्वादिनेति ॥ नन्वेवं सर्वस्यापि सापेक्षत्वनिरपेक्षत्वयोः सर्वत्र सत्त्वात् सप्रतियोगित्वव्यवस्था न स्यादित्यत आह ॥ शब्दाभ्यामप्रतियोगिकेति ॥ न च भेदस्य स्वरूपत्वे तदन्यासिद्धिरिति वाच्यम् । स्वरूपत्वेऽपि तदन्यसिद्धेर्वक्ष्यमाणत्वात् । ननु न मया एकस्य वस्तुनस्सापेक्षत्वनिरपेक्षत्वे स्वीक्रियेते किं शब्दद्वारकमेव सापेक्षत्वादिकमित्यत एतदपि तुल्यमिति सदृष्टान्तकमाह ॥ यदि चेति ॥ बुध्युपारोहाय दृष्टान्तान्तराण्याह ॥ एकस्यैवेति ॥ न चार्थ एव सापेक्षत्वनिरपेक्षत्वयोरनुभवात् कथमैक्यमिति वाच्यम् । शब्दोपाधिकतयाऽर्थेऽनुभवसम्भवात् । ननु विधिनिषेधमुखेन प्रवृत्तशब्दाभ्यामेव सापेक्षत्वनिरपेक्षत्वदर्शनेऽपि विधिमुखप्रवृत्तशब्दाभ्यां तयोरदर्शनात् प्रकृते कथं विधिमुखप्रवृत्तशब्दाभ्यामेव सापेक्षत्वनिरपेक्षत्वे इत्यत आह ॥ एकस्यैवेति ॥ नचार्थगतं सकर्मत्वादिकं न शब्दस्वभावाधीनम् । किञ्च तत्रार्थभेदेनैव धातुद्वयं प्रवृत्तम् । यथा तपति ऋषिः तपति पृथिवी सवितेत्यादाविवेति वाच्यम् । अस्मिन् पक्षे शब्दोपाधिकयोरेव सापेक्षत्वनिरपेक्षत्वयोरर्थेऽभ्युपगमात् । न च धात्वोरर्थभेदः । यतिकरोत्योरेकार्थत्वस्मरणात् । यतिकरोतिभ्यां यत्नमात्रस्यैवानुभवाच्च । नचालुकूलयत्नत्वं करोत्यर्थो यत्नमात्रं यत्यर्थ इति वाच्यम् । अर्थभेदकल्पने प्रमाणाभावात् । तथाच शब्दोपाधिकमेव सापेक्षत्वमिति ॥ सममिति ॥ न च विशेष्यस्य भेदस्यैव सापेक्षत्वं वक्तव्यम् । अन्यथा घटप्रतियोगिकं भेदत्वमित्युल्लेखः स्यादिति वाच्यम् । अभेदेऽप्यस्य तुल्यत्वात् । अभेदे सापेक्षत्वं कल्पितमनुपरास्तम् । निरपेक्षित्वस्यैव कल्पितत्वस्य वक्तुं शक्यत्वाच्च । भेदशब्दः कस्मिंश्चित् भावान्तरे सङ्केतित इति शङ्कानिरासार्थम् अन्योन्याभावत्वरूपत्वमित्युक्तम् । अन्योन्याभावत्वरूपं भेदत्वं चेदन्योन्याभाव एव भेदः स्यात् तस्य च स्वरूपत्वं नाङ्गीक्रियत इत्याशङ्क्य निषेधति ॥ न च तद्धीति ॥ तर्ह्यपसिद्धान्त इत्यत आह ॥ उक्तं हीति ॥ कथमिति ॥ भावाभावयोः परस्पर विरुद्धरूपत्वेनैक्यायोगादिति भावः । प्रतिवादिमुखेन प्रतिबन्दीमाह ॥ अविद्येति ॥ न च मन्मते भावत्वं

(कण्टकोद्धारः)

काल्पनिकम् उभयोः काल्पनिकत्वे वस्तुनः शून्यत्वापातात् । अन्यतरस्य काल्पनिकत्वे विनिगमकाभावात् ।। समं प्रकृतेऽपीति ।। स्वाभावेनैव विरोधोऽनुभवासिद्धो न त्वन्योन्याभावेन । प्रत्युत घटः पटोनेति सामानाधिकरण्यादैक्यमेवानुभूयते । अत ऐक्योपपत्तिरिति भावः । नन्वेवं कुत्रापि न दृष्टमित्यत आह ।। अभावाभावस्येति ।। अस्त्विति ।। उपलक्षणमेतत् । ब्रह्मण एवाविद्यानिवृत्तिव्यवहारालम्बनत्वे ब्रह्मणोऽनादिनित्यत्वेन तत्वज्ञानार्थं श्रवणादिप्रयासवैयर्थ्यं स्यादित्यपि द्रष्टव्यम् ।। तर्हीति ।। अत्रापि भावान्तरस्य सत्यत्वेऽद्वैतहानिः । असत्यत्वे द्वैतसत्यत्वापातः ब्रह्मरूपत्वे साध्यत्वापत्तिरित्यपि द्रष्टव्यम् ।। केचित्त्विति ।। अयोग्यत्वम् । अयोग्यतावच्छेदकरूपवत्त्वमित्यर्थः । अत्र अविषयत्वम् अविषयतावच्छेदकरूपवत्वमित्यर्थः । तत्त्वं तादृशधर्मवत्त्वमित्यर्थः । अत्र पक्षत्रये असाधारणधर्म एव भेद इति पर्यवस्यति । अग्रिमपक्षद्वये असाधारणधर्माधिकरणं स्वरूपम् । सर्वत्र उपाधिभेदादौपाधिकभेदो द्रष्टव्यः । न च स्वरूपत्वे निरपेक्षत्वापातोऽतिरेकेऽनवस्थेति वाच्यम् । अभेदवत् स्वरूपत्वेऽपि निरपेक्षत्वोपपत्तेरुक्तत्वात् । नचानाध्यारत्वमाधारभिन्नत्वं तथा चान्योन्याश्रय इत्यत आह ।। अनाधारत्वं चेति ।। एषु पक्षेषु भेदस्यानेकोपाधिघटितत्वेन तेषाञ्चोपनायक प्रमाणनियमाभावेन स्वरूपप्रतीतावेव भेदप्रतीतिर्नस्यात् । भेदाप्रतीतौ च सर्वात्मकत्वसन्देहविपर्ययादिप्रसङ्ग इत्यस्वरसो द्रष्टव्यः ।

एतावता ग्रन्थेन भेदस्य स्वरूपत्वे सापेक्षत्वं न स्यादिति बाधकं परिहृतम् । इदानीं भेदप्रतियोगिनामनन्तत्वेन तद्घटितभेदस्य धर्मिस्वरूपत्वे धर्मिणः सर्वाद्वैतप्रसङ्ग इति बाधकं परिहरति ।। एतेनेति ।। अत्र यन्निरूप्यस्य यस्य यत्स्वरूपत्वं तन्निरूपकस्यापि तत्स्वरूपत्वमिति व्याप्तिः ? उत प्रतियोगिनिरूप्यस्य भेदस्य धर्मिस्वरूपत्वे प्रतियोगिनोऽपि धर्मिस्वरूपत्वापत्तिरिति वा? न द्वितीयः । तदभावात् । नाद्यो व्यभिचारादित्याह ।। व्याप्तेरिति ।। ननु नोक्तस्थले व्यभिचारः मया निरूपके विशेषणत्वं विवक्षितम् । दुःखादेश्च न विशेषणत्वम् । भेदे च प्रतियोगी विशेषणम् । अतो वैषम्यमित्यत आह ।। तत्रेति ।। ननु लोके सर्वत्र कार्यान्वय एव दृष्टोऽतः कार्यानन्वयित्वं कथमित्यत आह ।। लोक इति ।। ननु व्याप्तिग्रहे लौकिक एव न्यायोऽनुश्रियते । न व्यभिचार इत्यत आह ।। न चेति ।। विनिगमकाभावादिति भावः ।। अज्ञानादेरिति ।। यदि करणस्य कार्यान्वयदर्शनात् प्रतियोगिनोऽपि धर्मिस्वरूपत्वमापाद्यते तर्हीत्यर्थः ।। तर्हीति ।। यदि तत्रेष्टापत्तिस्तदा प्रकृतेऽपीति भावः । समं प्रकृतेऽपीति ।। ननु न वयं प्रतियोगितया निरूपकत्वमात्रेण वा घटस्य पटरूपतामापादयामः । किन्तु समानाधिकरणप्रतीतिस्वरूपविषयप्रतियोगितया निरूपकत्वेनाभेदनिरूपकप्रतियोगित्वात् । नचाज्ञाननिवृत्यादयः समानाधिकरणप्रतीति विषयाः । अन्यथा समानाधिकरण बुद्धिविषयत्वं भेदत्वं न स्यात् । अतिप्रसङ्गादिति चेन्न । अनृतादेर्ब्रह्मात्मकतापत्तेः । तस्यापि ब्रह्मानृतं नेति समानाधिकरणविषयप्रतियोगित्वात् । किञ्चैवं समानाधिकरणप्रतीतिविषयत्वमात्रेणैवोपपत्तौ निरूपकत्वस्य वैयर्थ्याच्च । अयमयञ्च परस्परसदृश इति सामानाधिकरण्यप्रतीति विषयनिरूपकत्वात् सादृश्यप्रतियोगिनोऽपि तदात्मकतापत्तेः । सुखस्यापि दुःखात्मकतापत्तेश्चेति यत्किञ्चिदेतत् । उपसंहरति ।।

(कण्टकोद्धारः)
तस्मादिति ।। उक्तमर्थं कारिकया सङ्गृह्णाति ।। एवञ्चेति ।। नन्वेवं कुम्भादेस्तटस्थत्वे तदप्रतीतौ भेदधीर्न स्यादित्यत आह ।। तटस्थत्वेऽपीति ।।

एवं वास्तवपक्षमुक्त्वाऽभ्युच्चयपक्षमाह ।। यद्वाकार्यान्वायि विशेषणं तदन्वयि उपलक्षणमिति पक्षमाश्रित्य भेदप्रतियोगिन उपलक्षणत्वमुक्तम् । इदानीन्तु यस्मिन् ज्ञात एव यज्ज्ञानं तद्विशेषणमिति पक्षमाश्रित्याह ।। केचित्विति ।।

एवं भेदस्य धर्मिस्वरूपत्वे सर्वाद्वैतलक्षणं बाधकं परिहृत्य भेदशब्दस्य विदारणार्थत्वमादाय शून्यतापत्तिरूपं बाधकं परिहर्तुमाशङ्कामुत्थाययति ।। नन्विति ।। परमुखेनोत्तरं वक्तुं प्रतिबन्द्या समाधत्ते ।। अविदारणात्मकस्येति ।। अत्र पारमार्थिकानृतादीनि विशेषणानि अभेदाङ्गीकारे बाधकसूचकानि । उक्तमर्थं कारिकया सङ्गृह्णाति ।। एवञ्चेति ।। विदारकत्वेऽपीत्यभ्युपगमवादः । अभ्युच्चयेनैवाह ।। किञ्चेति ।। सूक्ष्मत्वमेव निरवधिकमिति शेषः । ननु शून्यसंयोगात् कार्योत्पत्तेः शून्यता स्यादिति तत्राह ।। न हीति ।। ननु भेदस्य विदारकत्वे अविशेषणात् सर्वस्मात् विदारयेत् । विशेषनियामकाभावात् । न चाभेदप्रतिबन्द्युक्तेति वाच्यम् । प्रतिबन्द्या अनुत्तरत्वात् । शिष्यं प्रत्युत्तराभावप्रसङ्गाच्चेत्यतो नियामकं दर्शनमेवेत्याह ।। अपि चेति ।। विदारयतीति दृष्टमिति शेषः । धर्मभेदवादे - भेदो धर्मिधर्म इति वादे इत्यर्थः । तथासति धर्मिसम्बन्धित्वात् लवित्रादितुल्यतया विदारकत्वं स्यादिति । किञ्च भेदशब्दो विदारकपर इत्यङ्गीकृत्योक्तम् । न तावत् भेदशब्दस्य विदारके रूढिः । लवित्रादावप्रयोगात् । नापि योगशब्दः योगस्य योगरूढयोर्दुर्बलत्वात् विदारणे च तयोः सत्त्वादित्याह ।। वस्तुतस्त्विति ।। भावसाधनत्वात् । भेदनं भेद इति भावार्थे व्युत्पन्नत्वात् । एवं पूर्वोक्तापादनदोषं परिहरति ।। तथाचेति ।। इममर्थं कारिकया सङ्गृह्णाति ।। एवञ्चेति ।। अतिवास्तवपक्षमाह ।। अङ्गीकृत्येति ।। ननु भिद्‌लृविधारण इति पठितत्वात् कथं विदारणार्थो नेत्यत आह ।। किं क्रियेति ।। अनेकार्थत्वेऽपि विदारणार्थः किं न स्यादित्यत आह ।। अन्यथेति ।। इदं सर्वसिद्धान्तारूढमित्याह ।। उक्तं चेति ।। एवं धात्वर्थमादाय शून्यतापत्तिरूपं बाधकं परिहृत्य सङ्ख्याराहित्येन शून्यतापत्तिरूपं बाधकं परिहरति ।। एतेनेति ।। तद्विरुद्धमिति ।। अयमेकोनानेक इति बुध्या एकानेकत्वयोर्विरोधादित्यर्थः । ननु मास्त्वेकत्वं ततः को दोष इति तत्राह ।। एकत्वाभावे चेति ।। अनेकत्वसङ्ख्याया एकत्वसङ्ख्यापूर्वकत्वादिति भावः । परमुखेनैवैकत्वानेकत्वयोर्विरोधं परिहर्तुं प्रतिबन्दीमाह ।। एकत्वेति ।। भावाद्वैतमत इति ।। अन्यथा द्वितीयस्य कल्पितत्वात् तेन सहानेकत्वमपि कल्पितमिति ब्रूयादिति भावः । किं भेदस्यानेकार्थसमवायित्वमङ्गीकृत्य समाहितम् । वस्तु तस्तु भेदो धर्मिमात्र निष्ठ एव । अन्यमात्रनिष्ठत्वेऽप्युभयसापेक्षत्वं युज्यते दृष्टत्वादित्याह ।। किञ्चेति ।। तथाचापादकाभावादेकत्वाभावापादनमसङ्गतमिति भावः । आपादने अत्यकौशलतां व्युत्पादयितुमाह ।। अपि चेति ।। ।। कथञ्चेति ।। यथाह्यश्वसद्भावेन गोत्वाभावं प्रसाध्य पुनर्गोत्वाभावेनाश्वत्वाभावसाधने विरोधस्तथेत्यर्थः । नचानेकत्वसद्भावस्यैकत्वसद्भावसापेक्षत्वात् प्रकृते च तदभावायुक्तमापादनमिति वाच्यम् । अत्यन्त-

(कण्टकोद्धारः)

विरुद्धयोरन्योन्यसद्भावस्यान्योन्यसद्भावसापेक्षत्वायोगात् । सापेक्षत्वे चात्यन्तविरोधायोगादिति । ननु भवद्रीत्या भवतामापादनमतो न विरोध इत्यत आह ॥ नहीति ॥ तथाचैकत्वानेकत्वयोः स्वभिन्न-प्रतियोगिकयोरविरोधात् । भेदस्य घटादिस्वरूपत्वेऽपि एकत्वानेकत्व सम्भवात् सङ्कचारहितत्वेन न शून्यतापत्तिरिति भावः । एवमुभयथाशून्यतापत्तिरूपं बाधकं परिहृत्य भेदस्य स्वरूपत्वे संशयानुपपत्तिरूपं बाधकं परिहरति ॥ एतेनेति ॥ नन्वैक्यमपि प्रकाशत एवातो न प्रतिबन्दिग्रह इत्यत आह ॥ ऐक्यस्येति ॥ प्रत्यगर्थवदेवेति ॥ यदि भावेऽपि वृत्यभावापराधेन विप्रतिपत्यादि तर्हि प्रत्यगर्थेऽपि तत् स्यात् । अविशेषात्। विप्रतिपत्याद्यविरोधिनो भानत्वायोगस्योक्तत्वाच्च । ननु स्वरूप भूतस्याप्यैक्यस्याभाने बीजमावरणमस्ति । न तु भेदभानेऽतो वैषम्यमित्यत आह ॥ यदि चेति ॥ प्रकृतेऽपि सादृश्यादि दोष एव भेदाभानबीजमिति भावः । उक्तमर्थं कारिकारूढं करोति ॥ एवञ्चेति ॥ पूर्वं भेदो धर्मिस्वरूपभूतोऽपि त्वाद्यज्ञाने रूपमिव सर्वथा न प्रकाशते इत्युक्तम् । इदानीन्तु भेदो भासत एव । न तु भेदत्वेन । तावतापि संशयो युज्यते । यथाकथञ्चित् धर्मिज्ञानं न संशयविरोधि प्रमेयत्वेन धर्मिज्ञानेऽपि संशयदर्शनात् । किन्तु भेदत्वप्रकारकम् । तच्च न प्रवृत्तमिति संशयो युज्यत इत्याह ॥ किञ्चेति ॥ किञ्च भेदत्वप्रकारकमपि सर्वत्र ज्ञानमस्तीत्याह ॥ किञ्चेति ॥ अपि पदेनान्यत्र भेदत्वेनाप्रतीतिरसिद्धेति किमुवक्तव्यमिति भावः । अत्र प्रमाणमाह । प्राय इति ॥ अन्यथेति ॥ प्रायः सर्वतो वैलक्ष्यण्येन प्रतीत्यनङ्गीकारे इत्यर्थः । नन्वेवं सर्वतो वैलक्ष्यण्ये निश्चिते कथं संशयादीति पृच्छति ॥ किन्तु इति ॥ नन्वेवं निरूपकभेदात् भेदानन्त्यं स्यादित्यत आह ॥ न हीति ॥ एकेति ॥ अन्वयव्यतिरेकाभ्यां व्यभिचारात् न निरूपकभेदो निरूप्यभेदे प्रयोजक इति भावः । अनेकद्वैतेति ॥ न प्रतियोगितावच्छेदकभेदेनाभावभेदः स्वीक्रियते भेदप्रतियोगिता-वच्छेदकानामनन्तत्वात् भेदानन्त्यप्रसङ्गो दुर्वारः । ऐक्यातु ब्रह्मेतरद्वैतत्वमेकमेव प्रतियोगितावच्छेदक-स्यैकत्वात् । न चेदं प्रतियोगितावच्छेदकं ज्ञातुमशक्यमिति वाच्यम् । ब्रह्मस्वरूपे श्रुत्या प्रतिपन्ने तद्भिन्नस्य सुज्ञानत्वात् । किञ्च तवाभेदप्रतियोगितावच्छेदकज्ञानमभेद ज्ञानविरोधि भिन्नत्वेन ज्ञाते भेदज्ञानायोगात् सत्यत्वमिथ्यात्वाभ्यां विरोधपरिहारो मिथ्यात्वासिद्धेरयुक्त इति ॥ केचित्त्विति ॥ न च शाब्दभेदज्ञानात् शाब्दाभेदभ्रमनिवृत्तिर्न स्यादिति वाच्यम् । शब्देन भेदबोधने पदार्थतावच्छेदकपुरस्कारेण स्वतन्त्र-भेदबोधनासम्भवात् । तथा च तत्रापि विरुद्धधर्मज्ञानमविकलमिति क्व व्यभिचारः । केचित्त्वित्य-स्वरसोद्भावनम् । भेदज्ञानस्य भ्रमविरोधित्वमनुभवसिद्धम् । तदनङ्गीकारेऽनुभवविरोधः । किञ्च भेदकधर्माणां विरोधः भेदद्वारकः । भावाभावयोः साक्षाद्विरोधः अन्येषां तु तद्द्वारक इति स्थिते तदिह भेदज्ञान-स्याविरोधित्वे भेदकधर्मज्ञानं सुतरां विरोधि न स्यादित्यादि । केचित्त्वदोषेति ॥ अत्र दोषमूलताद्रूप्येणा-प्रतीयमानत्वाभावे सति प्रतीयमानत्वमित्यर्थः । तादृशभेदज्ञानं शुक्तेः रजतत्वेन प्रतीतिकाले नास्तीत्याह ॥ शुक्तेरिति ॥ अत्र स्वरूपभेदाज्ञाने दोषोऽमूलमिति भावः । न चैवं शुक्तेः रजतत्वेन प्रतीतिकाले भेदो न स्यात् । दोषमूलताद्रूप्येणाप्रतीयमानत्वाभावादिति वाच्यम् । ईश्वरप्रतीतिमादाय तदापि दोषसत्त्वात् । न चादोषमूलेति व्यर्थम् इति वाच्यम् । ईश्वरप्रतीतिमादाय ताद्रूप्येणाप्रतीयमानत्वस्यासम्भवशङ्कानिवर्तकत्वेन

(कण्टकोद्धारः)

सार्थकत्वात् । न च पूर्वप्रतीकमेव व्यर्थम् । प्रतीयमानत्वज्ञानस्य भ्रमकालेऽपि सत्त्वेन भेदज्ञानप्रसङ्ग-निवारणार्थत्वात् । उक्तविशेषणे हि तादृशविशिष्टस्वरूपज्ञानाभावेन भेदज्ञानाप्रसङ्गात् । न च विशेष्य-वैयर्थ्यम् । सर्वथा प्रतीतिदशायां भेदज्ञाननिवारणार्थत्वात् । न च प्रतीत्यादि घटितत्वेन भेदस्याचाक्षुषत्व-मिति वाच्यम् । उपनीतप्रतीत्यादेश्चाक्षुषत्वसम्भवात् । उपनायकस्य च साक्षिणो विद्यमानत्वात् संशयो न स्यादिति दूषणं प्रतिहरति ॥ एवञ्चेति ॥ भ्रमस्थल इत्युपलक्षणम् । संशयस्थल इत्यपि द्रष्टव्यम् । ताद्रूप्येण प्रतीत्यभावादिति ॥ विशिष्टभेदप्रतीत्यभावादित्यर्थः । अत्रास्वरसबीजमन्योन्याभावमादाय उक्तरूपेण सन्देहोपपादनसम्भवे प्रतीत्यादिघटित भेदवर्णनमयुक्तम् । किञ्च प्रतीयमानत्वं किं स्वरूपेणाथा-साधारणधर्मेण? नाद्यो व्यर्थविशेष्यत्वात् । द्वितीये विशेषणवैयर्थ्यम् । विशेष्यमात्रेणैव सामञ्जस्यात् । चाक्षुषत्वादेर्निरुपपादत्वाच्चेति । एवञ्च यानि भेददूषणानि तानि सर्वाण्यभेददूषणानीत्याह ॥ एवञ्चेति ॥ सावधेश्च तत्वे सप्रतियोगिकस्य भेदस्य धर्मिस्वरूपत्व इत्यर्थः ॥ नैकत्वाभावात् । अनेकत्वाभावादित्यर्थः । नसमासोऽयमित्यदोषः । तथाचास्वव्याघातकैरेव दूषणीयमिति भावः ।

बाधकान्तरं परिहर्तुमनुवदति ॥ एतेनेति ॥ प्रतिबन्द्या समाधत्ते ॥ ऐक्यस्येति ॥ प्रवृत्तिनिमित्तभेदेनेति ॥ न च भेदस्य निर्वक्तुमशक्यत्वात् प्रवृत्तिभेदानुपपत्तिरिति वाच्यम् । भेदत्वस्य जात्यादिसाधारणत्वेन जातित्वासम्भवेऽप्युपाधित्वसम्भवात् । नचोपाधेरतिरिक्तः भेद इत्युक्त व्यवहारविषयत्वस्य तादात्म्यारोप-पूर्वकनिषेध धीविषयत्वस्य वा भेदत्वस्य सम्भवात् । तादात्म्यञ्च तदैक्यं तदसाधारणधर्मो वेति न कश्चित् क्षुद्रोपद्रवः । तदैक्यं च न तेन सह भेदाभावो येनान्योन्याश्रयः । तेन सहैकत्वयुक्तमिति । संसर्गाभावस्य च प्रतियोग्यारोपपूर्वकत्वात् नातिव्याप्तिः । न च भेदत्वस्य स्वरूपत्वेऽनुगतव्यवहारानुपपत्तिः धर्मत्वेऽनवस्थेति वाच्यम् । स्वरूपत्वेप्यनुगतव्यवहारोपपादकत्वस्य सत्तादौ दर्शनादिति, किञ्च ज्ञानानन्दयोरपि विलक्षण-व्यवहारविषयत्वं न स्यात् । न च कल्पितभेदेन तदुपपत्तिः । अधिष्ठाने तत्त्वतो भासमाने भेदकल्पना-योगात् । कल्पितसद्व्यवहारापत्तौ न वस्तुतः शून्यतापत्तेश्च ॥ एकत्रैवेति ॥ न च तत्र शुक्लभास्वररूपोष्ण स्पर्शौ भिन्नावेव । तयोरेव सार्थक्रियेति नायं दृष्टान्त इति वाच्यम् । तद्भेदे मानाभावात् । गुणगुणिनोर-भेदस्य भट्टमतानुसारिणा त्वया वाच्यत्वाच्च । विशेषत्वे प्रकृतेऽपि समम् । अयमेव न्यायोऽग्रेऽपि द्रष्टव्यः । किं ज्ञानानन्दावितिवदिति ॥ कल्पितभेदेनोपपत्तिश्चेत् प्रागेव निराकृतेति भावः । एतेनेति परामृष्टं हेतुमाह ॥ ऐक्यब्रह्मशब्दयोरिति ॥

एवं पर्यायत्वरूपं बाधकं परिहृत्य सम्बन्धितया प्रतीतिरूपबाधकं परिहरति ॥ एतेनेति ॥ प्रत्युतेति ॥ घटो द्रव्यमिति प्रत्ययव्यवहारदर्शनादिति भावः । नन्वैक्यब्रह्मणोरैक्यव्यवहाराद्विषमो दृष्टान्त इत्याह ॥ न हीति ॥ आद्येपीति ॥ अर्थो निषिध्यत इत्यस्मिन् पक्षे इत्यर्थः । तृतीयेपीति ॥ ऐक्यस्य ब्रह्मसम्बन्धो निषिध्यते इति पक्षेऽपीत्यर्थः । न द्वितीय इति ॥ व्यवहारस्याबाधितत्वं निषिध्यत इति पक्षो नेत्यर्थः । उक्तमर्थं कारिकया सङ्गृह्णाति ॥ एवञ्चेति ॥ नन्वैक्यभेदयोर्महान् विशेषः । ऐक्यस्य स्वरूपत्वं प्रमाणेन

(कण्टकोद्धारः)

सिद्धम् । भेदस्य धर्मिस्वरूपत्वे न किमपि प्रमाणम् । तथाच कथमैक्यप्रतिबन्दिग्रह इति शङ्कते ।। तत्रेति ।। ऐक्यस्य स्वरूपत्वे न किमपि प्रमाणम् । भेदस्य स्वरूपत्वे बहूनि प्रमाणानि सन्ति इत्याह ।। इहापीति ।। ननु भेदस्य धर्मत्वमेव किं न स्यादित्याह ।। धर्मपक्षस्येति ।। ननु भेदस्य स्वरूपत्वं क्वापि न दृष्टमित्यत आह ।। पृथक्त्वेति ।। ननु भेदस्य स्वरूपत्वे बहूनि प्रमाणानि सन्तीत्युक्तम् । कानि तानीत्यत आह ।। तथेति ।। ननु भेदस्य धर्मतयेवासामानाधिकरण्येनापि भानात् कथं स्वरूपत्वमित्यत आह ।। भेदस्य घट इति ।। न च सामानाधिकरण्येप्यभेदाभानमस्त्विति वाच्यम् । तथात्वे सोऽयमित्यत्रापि अभेदभानाना-पत्तेस्तत्त्वमसीत्यत्रापि अभेदभानानापत्तेश्च । न च नीलोघट इत्यत्रापि अभेदज्ञानं स्यादिति वाच्यम् । इष्टापत्तेः। । गुणगुणिनोरभेदस्य प्रामाणिकत्वस्यान्यत्रोक्तत्वात् । तथा घटतद्भेदयोरिति ।। न चैतल्लिङ्ग-मसिद्धमिति वाच्यम् । प्रायः सर्वतो विलक्षणस्यैव पदार्थस्यानुभवात् अन्यथा विलक्षणे शब्दस्मारक-त्वानुपपत्तेः । न चात्र सामान्यव्याप्तिर्वा विशेषव्याप्तिर्वा? नाद्यः सामान्यसंवित्संवेद्य जातिव्यक्त्यादौ व्यभिचारात् । न द्वितीयः अभावसमानसंवेद्ये प्रतियोगिनि व्यभिचारादिति वाच्यम् । जातिव्यक्त्यादावभेदस्य मयाङ्गीकृतत्वेन व्यभिचाराभावात् । भट्टमतानुसारिणा त्वयापि समवायस्य दूषितत्वेन चाभेदस्यैव वक्तव्यत्वात् । प्रतियोगिनश्चाभावलौकिकप्रत्यक्षे नियमेन प्रतीयमानत्वे अभाव प्रतीतिमात्रे तदभावात् भेदस्य च तथाभावस्य सर्वसिद्धत्वात् न ह्यखण्डस्वरूपं कदाचित् भातीति ।। सत्यमिति ।। नचाधिष्ठानातिरिक्ता सत्ता नास्तीति एवं परं तद्वाक्यमिति वाच्यम् । तत्सत्यमित्यादेरपि तथात्वापत्तेः । बाधकानाञ्च प्रकृतेऽभावात् । वृथाऽमुख्यार्थत्वकल्पनायामतिप्रसङ्गाच्च । ननु पटात् भेदः किं पटस्वरूपमात्रं कुड्यादि-सर्वस्वरूपं वा? आद्ये कुड्यादेः पटभेदो न स्यात् । द्वितीये कुड्यादिस्वरूपाणामननुगतत्वेनानुगत व्यवहारो न स्यादित्याशङ्क्य निषेधति ।। न चेति ।। अत्राद्यमनङ्गीकृत्य द्वितीयमुपादातुं प्रतिबन्दिमुखेन समाधत्ते ।। अभेदस्येति ।। द्वितीयपक्षे दोषमनूद्य परिहरति ।। यद्यपीति ।। न च घटविषयत्वांशेऽनुगमेऽपि ज्ञानाद्यंशेऽननुगमवत् पटप्रतियोगिकत्वांशेऽनुगमेऽपि भेदांशेऽनुगमो न स्यादिति वाच्यम् । घटव्यक्ती नामननुगमेऽपि घटत्वेनानुगमवत् भेदस्याप्यनुगमसम्भवात् । पटैक्यव्यवहारविरोधित्वस्यैव भेदत्वादिति ।। भेदाङ्गीकारेऽन्योन्याश्रयरूपं बाधकं परिहरति ।। एतेनेति ।। तदेति ।। धर्मिप्रतियोगिज्ञानस्य भेदज्ञानं प्रति कारणत्वादिति भावः ।। अस्येति ।। तयोर्भेदाज्ञाने विलक्षणशब्दाभ्यामुल्लेखो न स्यादिति भावः । ननु धर्मिप्रतियोग्यपेक्षया प्रतीतौ अन्योन्याश्रयत्वेऽपि विशेषणविशेष्यतया प्रतीतौ अन्योन्याश्रयो नेत्यत आह ।। यदित्विति ।। अत्रायं विवेकः । भेदो यदा विशेष्यत्वेन प्रतीयते तदा घटपटयोर्विशेषणत्वेन सम्बन्धित्वेन च तज्ज्ञानं विशेषणज्ञानत्वेन सम्बन्धिज्ञानत्वेन च कारणम् । यदा तु भेदस्य न विशेषणतया भानं तदा तु तज्ज्ञानं सम्बन्धिज्ञानत्वेनेति । नन्वस्तु घटपटज्ञानं भेदज्ञाने कारणम् । तथापि प्रकृते किं दूषणं तत्राह ।। भेदप्रतीतौ चेति ।। न च द्वित्वं संसर्गमर्यादया भासते न प्रकारत्वेनातः कथं तज्ज्ञानार्थं भेदज्ञानापेक्षेति वाच्यम् । घटपटयोरिति प्रकारत्वेनानुभवात् । अन्यथा द्वित्ववाचिशब्दप्रयोगो न स्यादिति भावः । भेदज्ञानं सामान्यतो विशेषतश्च । तत्र सामान्यतो भेदज्ञानेनान्योन्याश्रय इत्याह ।। भेदस्येति ।। तथाच धर्मिज्ञानस्यैव

(कण्टकोद्धारः)

भेदज्ञानत्वेन धर्मिज्ञानसापेक्षत्वेनान्योन्याश्रय इति भावः । ननु धर्मिप्रतीतौ भेदाभानात् कथं धर्मिज्ञानमेव भेदज्ञानमित्यत आह ॥ भासमानं हीति ॥ अन्यथेति ॥ सर्वव्यावृत्तयाऽननुभवे इत्यर्थः । कदाचिदिति शेषः । आदिशब्दादिकं सर्वात्मकं न वेति संशयपरिग्रहः । ननु सर्वव्यावृत्ततया वस्तुभाने सर्वभानमावश्यकम् । तथा च सार्वज्ञापत्तिरित्याशङ्क्य निषेधति ॥ न चेति ॥ अन्यथेति ॥ सामान्यतः सर्वज्ञानाभावे इत्यर्थः ॥ तथापीति ॥ अत्र हि प्रतियोगितावच्छेदकं सर्वत्वं वा? स्वेतरसर्वत्वं वा? नाद्यः स्वस्यापि वैलक्ष्यण्ये स्वासिद्धिप्रसङ्गात् । न द्वितीयः इतरेतराश्रयप्रसङ्गादिति भावः ॥ विद्यमानभेदेति ॥ तथाच वस्तुतस्तद्भिन्नत्वे सति तदात्मकत्वेनाज्ञातसर्वत्वं प्रतियोगितावच्छेदकमिति भावः । न च तेन रूपेण प्रतियोगिज्ञानाभावात् कथमभाव ज्ञानमिति वाच्यम् । प्रतियोगितावच्छेदक- प्रकारज्ञानस्य कारणत्वानभ्युपगमात् । न च प्रतियोगिनिर्विकल्पकात् प्रमेयत्वादिना प्रतियोगिज्ञानादभावज्ञानापत्तिरिति वाच्यम् । फलीभूतज्ञाने येन रूपेण प्रतियोगी भासते तेन रूपेण प्रतियोगिज्ञानं कारणम् । तस्य च प्रकृते सत्त्वात् । इदं चैवमवश्यमभ्युपगन्तव्यम् । अन्यथा प्रागभावकाले इह घटो नास्तीति बुद्धेः प्रागभावविषयत्वं न स्यात् । प्रथमक्षणे घटे रूपं नास्तीति बुद्धेः प्रागभावादिविषयत्वं न स्यादिति । एतेनेदमपि परास्तम् । धर्म्यज्ञानदशायां धर्मिण्यपि प्रतियोगितावच्छेदकसद्भावात् तस्यापि स्वस्माद्भेदे शून्यतापत्तिरिति । उक्तावच्छेदकस्य धर्मिण्यभावात् । अन्यथा सर्वं खल्विदं ब्रह्मेत्यत्रापि सर्वशब्दार्थज्ञानाभावप्रसङ्गात् । न च तत्र सर्वशब्दः संकुचितवृत्तिरेवेति वाच्यम् । तथात्वे सर्वं खल्विदमित्यस्य सर्वस्य ब्रह्मण्यारोपितार्थत्वेन ब्रह्मणोऽपि ब्रह्मण्यारोपितत्वापत्तेः । एकेन शब्देनैकेन रूपेण प्रतीतस्यार्थभेदकल्पनानुपपत्तेः । ननु धर्मिभिन्नत्वेन प्रतियोग्यप्रतीतितो भेदो न प्रतीयत एवेत्यत आह ॥ न हीति ॥ प्रत्यक्ष विरुद्धत्वान्नियामकाभावाच्च त्वदुक्तनियमोऽयुक्त इति भावः । अन्यथा तवापि भेद प्रत्ययो न स्यात् । यथा चैतत्तथा सामान्यतो भेदखण्डनोद्धारे नहि मृद्वास्तवी इत्यादिना समाहितम् ।

किञ्चैवं प्रतियोगिज्ञानमभावज्ञाने कारणमित्यङ्गीकृत्य समाहितम् । वस्तुतः प्रतियोगिज्ञानमभावज्ञाने कारणमेव न भवति । प्रमाणाभावात् । क्वचित्तु प्रतियोग्युपस्थित्यपेक्षायाः सत्त्वेनोपयोगात् । अन्यथा विशिष्टज्ञानेऽपि विशेषणज्ञानकारणतापत्तिः । यदि चोभयसंनिकर्षादेव विशिष्टज्ञानोपपत्तौ न विशिष्टज्ञाने विशेषणज्ञानं कारणं तदा प्रकृतेऽपि धर्मिप्रतियोग्युभयसंनिकर्षादुभयज्ञानोपपत्तेः न प्रतियोगिज्ञानं कारणम् । प्रतियोग्यसंनिधाने च संनिकर्षत्वेनोपयुज्यते । न च प्रकृतेऽपि सर्वासंनिधानात् तज्ज्ञानमपेक्षितमिति वाच्यम् । सर्वविषयकस्य साक्षिज्ञानस्य सर्वदा सत्त्वात् । न च साक्षीबहिर्विषये उपनायकप्रमाणापेक्ष इति वाच्यम् । प्रातिस्विकरूपेण तथात्वेऽपि सर्वत्वेन तदनपेक्षणात् इति मनसि कृत्वाऽऽह ॥ किञ्चेति ॥ गङ्गेशवचनं त्वप्रामाणिकमेवेति भावः । नन्वयं पक्षः सिद्धान्तविरुद्ध इत्यत आह ॥ उक्तं हीति ॥ ननु सर्वस्मादित्ययुक्तम् । स्वव्यावृत्ततायाः अननुभवादित्यत आह ॥ सर्वस्मादित्यनेन चेति ॥ अत्र परप्रसिद्धं दृष्टान्तमाह ॥ यथेति ॥ न च सर्वशब्दो ममासङ्कुचित एवेति वाच्यम् । ब्रह्मांशे सिद्धार्थताप्रसङ्गात् ऐक्यस्यैकरूपस्याभावेन बोधासम्भवाच्च ।

(कण्टकोद्धारः)

एवं सामान्यतो भेदप्रतीतावन्योन्याश्रयतामुद्धृत्य विशिष्य प्रतीतावपि तामुद्धरति ॥ एतेनेति ॥ ननु धर्मिणः सकाशात् भेदप्रतीते रनावश्यकत्वात् कथमन्योन्याश्रय इत्यत आह ॥ धर्मिण इति ॥ अत्र हेतुमाह ॥ अप्रतीत भेदस्येति ॥ प्रतिबन्द्या समाधत्ते ॥ त्वन्मतेपीति ॥ न च काल्पनिकमेव भेदज्ञानं प्रतियोगिभावद्धित्वावच्छिन्ननिर्वाहकमिति वाच्यम् । भेदकाल्पनिकत्वस्याद्यप्यसिद्धेः बाधकाभावात् अन्यथा भेदकल्पनाया एवायोगात् वैपरीत्यस्यापि वक्तुं शक्यत्वात् च । नचाभेदस्य निष्प्रतियोगिब्रह्मस्वरूपत्वात् सत्प्रतियोगित्वमसिद्धम् । सप्रतियोगिव्यवहारस्तु भेदसप्रतियोगित्वेनातो नाभेदज्ञाने प्रतियोगिज्ञानं कारणमिति वाच्यम् । वैपरीत्यस्यापि वक्तुं शक्यत्वात् । तादात्म्याभावरूपत्वात् भेदस्य ऐक्यस्य भेदाभावरूपत्वेऽपि भेदरूपप्रतियोगिज्ञानसापेक्षत्वाच्च । विरोधादित्युपलक्षणम् । प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानमात्रेण भेदबुध्युपपत्तेरित्यपि द्रष्टव्यम् । असम्भवादित्यपि पूर्ववदुपलक्षणम् ।

एवं प्रतिबन्द्या परिहारमभिधाय वस्तुतः परिहारमाह ॥ अनयोरितीति ॥ नन्वविरोधित्वादिज्ञानं प्रति भेदज्ञानं पूर्वं दृश्यते तत्कथं तन्न कारणमित्यत आह ॥ नहीति ॥ क्वचित् पूर्वत्वं यादृच्छिकमिति भावः । यादृच्छिकत्वमेवोपपादयति ॥ भेदकेति ॥ ननु न प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानं भेदज्ञाने कारणम् । किन्तु धर्मिणः सकाशात् भेदवत्त्वेन ज्ञानमित्यत आह ॥ अन्यथेति ॥ तत्स्यादितीति ॥ अभेदप्रतियोगित्वं स्यादित्यर्थः । तथाच क्वाप्यभेदज्ञानं तव न स्यादिति भावः ॥ अभेदयोग्यत्वादिरूपेणेति ॥ तद्योग्यतावच्छेदकरूपेणेत्यर्थः । नन्वेवं भेदभ्रमकालेप्यभेदबुद्धिः स्यादित्यत आह ॥ भेदभ्रमेत्विति ॥ असति प्रतिबन्धक इत्युक्तत्वात् । प्रतिबन्धकता च फलबलकल्प्येति भावः ॥ योग्येति ॥ योग्यतावच्छेदकेत्यर्थः । ननु धर्मभेदपक्षे कथमन्योन्याश्रयोद्धार इत्यत आह ॥ धर्मभेदपक्षेऽपीति ॥ ननु तर्हि दूरस्थवनस्पत्यादौ भेदप्रतीतिः स्यादित्यत आह ॥ दूरस्थवनस्पत्यादौ त्विति ॥ ननूक्तसामग्र्यां सत्यामपि धर्मिणः सकाशात् भेदवत्त्वेन ज्ञानं विना भेदज्ञानाभावात् तज्ज्ञानमपि कारणमित्यत आह ॥ न हीति ॥ ननु मार्गान्तरे सत्यपि मया अयमेव मार्गः स्वीक्रियत इत्यत आह ॥ न चेति ॥ अन्यथा तवाप्यभेद ज्ञानं न स्यादित्युक्तमिति भावः । ननु विद्यमानभेदज्ञानस्य प्रतियोगित्वेन प्रयोजकत्वेनादर्शनात् प्रकृते कथं तस्य प्रयोजकत्वमित्यत आह ॥ गौर्गवयेति ॥ तथात्वे भेदज्ञानं कारणमत्राह ॥ न हीति ॥ प्रत्यक्षेभेदज्ञानपूर्वकत्वं सम्भावितं संनिकृष्टस्य योग्यस्य प्रत्यक्षेण विषयीकरणात् । शब्दस्थले तु पदार्थसंसर्गयोरन्यतरस्यैव भानात् गोगवयभेदस्य तत्त्वाभावानमिति ज्ञापयितुं सुतरामित्युक्तम् । ननु शब्दस्थलेऽपि सदृश शब्द एव भेदप्रत्यायकः । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वस्य सादृश्यपदार्थत्वादित्यत आह ॥ न चेति ॥ सादृश्यं पदार्थान्तरमिति न भेदघटितमिति भावः । नन्वन्यत्र यथातथा अस्तु भेदप्रतियोगिज्ञानं भेदज्ञानपूर्वकमेवाङ्गीक्रियते इत्यत आह ॥ अन्यथेति ॥ यदि भेदप्रतियोगिज्ञानं भेदज्ञानपूर्वकमेवाङ्गीक्रियते इत्यर्थः । न चेष्टापत्तिः । सप्रतियोगिकपदार्थमात्रस्य मयादूषणादिति वाच्यम् । एवमभेदस्यापि दूषणसम्भवेन स्वव्यावहतत्वात् अभेदो न सप्रतियोगिक इति तु पुरा एवापाकृतम् । अन्योन्याश्रयादिदुष्टस्य व्यावहारिकत्वमसंभवीति तदापादनं स्वव्याहतमिति । उक्तमर्थं कारिकया सङ्गृह्णाति ॥ एवञ्चेति ॥ उक्तान्योन्याश्रयनिराकरणेन प्रकारान्तरेणा-

(कण्टकोद्धारः)

न्योन्याश्रयं निराकरोति ॥ एतेनेति ॥ एतेनेति परामृष्टं हेतुं दर्शयति ॥ सप्रतियोगिके चेति ॥ तत्रापि न प्रतियोगिज्ञानमात्रं कारणम् । निर्विकल्पकादपि सादृश्यधीः स्यात् किन्तु प्रतियोगित्वेन । तत्रापि नान्यं प्रति । किन्तु सादृश्यादिकं प्रतीति वक्तुं शक्यत्वात् । इष्टापत्तेश्च पूर्ववदेव परिहारो द्रष्टव्यः । वैषम्यमात्र-माशङ्क्य साम्येन सिद्धान्तमाह ॥ यदि चेति ॥ इदन्तु अभ्युपेत्य समाहितम् । वस्तुतः प्रतियोगिज्ञान-मभावज्ञानकारणमेव न भवति । क्वचित्तु संस्काररूपप्रत्याधायकत्वेनोपयुज्यत इत्याह । यद्वेति । ननु युगपदनेकज्ञानस्यात्मनि विरुद्धत्वात् कथमनेकज्ञानमात्मनीत्यत आह ॥ युगपदिति ॥ ननु विशिष्टज्ञानादौ विशेषणबुद्धेः कारणत्वात् कथं तदभावे विशिष्टज्ञानादीत्यत आह ॥ नहीति ॥ ननु विशेषण ज्ञानादीनां विशिष्ट ज्ञानादिकं प्रत्यन्वयव्यतिरेकसिद्धकारणत्वात् कथं तदनङ्गीकारः इत्यत आह ॥ उक्तं चेति ॥ विशिष्टज्ञानादिकं विशेषणज्ञानादेरन्वयव्यतिरेकस्य व्यभिचारादेः अन्यत्रोपपादितत्वादिति भावः । नचैवम-भावज्ञानादौ प्रतियोगिज्ञानादेः क्वाप्यपेक्षा न स्यादित्यत आह ॥ अत्रत्विति ॥ फलितमाह ॥ तथाचेति ॥ नन्विदं समाधानं सिद्धान्तविरुद्धमित्यत आह ॥ तदुक्तमिति ॥ ननु तद्भावश्चैवेत्ययुक्तम् विशेषणस्या-योग्यत्वेन भानायोगादित्यत आह ॥ यद्यपीति ॥ अन्यत्वेति ॥ ननु न वयं भेदं निराकुर्मः किन्तु तस्य वास्तवत्वमिति चेन्न । अन्योन्याश्रयत्वादेरुत्पत्तिज्ञस्यन्यतरप्रतिबन्धकत्वेन वास्तवत्वा प्रयोजकत्वादि-त्युक्तत्वात् । एवं भेदप्रतीतावन्योन्याश्रयतामुद्धृत्यानवस्थामुद्धरति ॥ एतेनेति ॥ एतेनेति परामृष्टं हेतुमाह ॥ ब्रह्मजीवाभिन्नमिति ॥ न च ममानिर्वचनीय भेदेनोपपत्तिरिति वाच्यम् । भेदानिर्वचनीयतायाः अद्याप्य-सिद्धेः । विस्तृतं चैतत् पुरैवेति । अनवस्थाया ज्ञस्यादिमात्रप्रतिबन्धकत्वेन तवानिर्वचनीयभेदप्रतीतिश्च न स्यात् । अनवस्थायास्त्वत्पक्षेऽपि साम्याच्च । न च तत्पक्षे अनुपपत्तिरलङ्कार एव न दूषणमिति वाच्यम् । ब्रह्मणोविद्यात्वाभ्युपगमातिप्रसङ्गस्य मूल एवोक्तत्वात् । ननु सुहृद्भावेन पृच्छन्तं प्रति विशेषणत्वादौ नियामकं वाच्यमित्यत आह ॥ विद्यमानभेदयोरिति ॥ किञ्च भेदत्वेनैव ज्ञानं विशेषणत्वे प्रयोजकमिति त्वया न वाच्यं स्वव्याहतत्वादित्याह ॥ किञ्चेति ॥ उक्तमर्थं कारिकारूढं करोति ॥ एवञ्चेति ॥ भेदमेवेति ॥ एव कारेण धर्मिप्रतियोगि व्यावृत्तिः । वस्त्वपीति ॥ धर्मिप्रतियोगिनावपीत्यर्थः ॥ बुद्धेरिति ॥ त्रिक्षणा-वस्थायित्वादिति भावः ॥ अत एवेति ॥ विरम्य व्यापाराभावादेवेत्यर्थः ॥ वस्तुग्रहस्य ॥ धर्मिप्रतियोगि-ज्ञानस्येत्यर्थः । बिम्बप्रतियोगितावच्छेदकरूपेण धर्मिप्रतियोगिज्ञानानन्तरवस्तुभेदविषयकविशिष्ट ज्ञान-सम्भवात् वस्तु पूर्वभेदज्ञानाङ्गीकारे न कोपि दोष इति भावः ॥ अनयोरिति ॥ न च द्वित्वावच्छिन्नवस्तुज्ञानं भेदज्ञानं विना नेति अन्योन्याश्रय इति वाच्यम् । अपेक्षाबुद्ध्यादिसामग्रीसत्त्वे द्वित्वादिज्ञानसम्भवात् । एतेनानयोर्भेद इति सम्बन्धज्ञानं भेदपूर्वमित्यनवस्थेत्यपास्तम् । भेदज्ञानं विनापि सम्बन्धज्ञानसम्भवात् । तत्पूर्विकानेतीति । न च प्रतियोगिज्ञानमभावज्ञानेकारणमिति तदभावे तत् कथं स्यादिति वाच्यम् । तत्कारणत्वेसम्मतेः । यथा चैतत्तथोपपादितम् ॥ रूप्यस्येति ॥ अत्र द्वैतस्येति परमताभिप्रायेण । नचाभावादेर्ब्रह्मातिरेकपक्षे इष्टापत्तिः अनतिरेकपक्षे तु ब्रह्मणः प्रामाणिकत्वे तत्स्वरूपस्याभावादेः प्रामाणिकत्वमिति वाच्यम् । अन्योन्याभावादिरूपस्य भेदस्यापि तथाभावस्य वक्तुं शक्यत्वात् ।

(कण्टकोद्धारः)

अन्योन्याभावस्य स्वरूपत्वे शून्यत्वादिकं प्रागेव निराकृतम् । ननु क्वचित् प्रमितं क्वचिन्निषिध्यत इति नियमात् कथमप्रामाणिकप्रतिषेध इत्यत आह ॥ न हीति ॥ ज्ञानमात्रस्यैव प्रयोजकत्वसम्भवे प्रमापर्यन्तं गमने गौरवादिति भावः । ननु तार्किकमते तथानियमाभ्युपगमात् कथमप्रामाणिकनिषेध इत्यत आह ॥ एषामिति ॥ नन्वेवं तन्मते संसर्गान्योन्याभावयोरभेदः स्यादेकप्रतियोगिकत्वादित्यत आह ॥ तन्मत इति ॥ न चैवमपि प्रतियोगि तादात्म्यान्ताभावाभेदानिस्तार इति वाच्यम् । प्रतियोगिशब्दस्य सम्बन्धिशब्देन यत्र यत्प्रतियोगितावच्छेदकमारोप्य निषेधधीविषयस्स तदन्योन्याभाव इति अङ्गीकारे दोषाभावात् । न हि तादात्म्यात्यन्ताभावस्थले प्रतियोगितावच्छेदकमारोप्यत इति न चातीन्द्रिये भेदे संसर्गाभावे चाव्याप्तिरिति वाच्यम् । तादृशनिषेध विषयजातित्वस्य विवक्षितत्वात् । तत्तत्पदवाच्यत्वादेस्तज्जातीयत्वस्य सम्भवात् । योगिनं प्रति वा तादृशत्वाच्च ॥ इहापीति ॥ न च भेदे भिन्नत्वादि व्यवहारस्य स्वरूपेण निर्वाहे घटेऽपि तथात्व धर्मभेदपक्षानुपपत्तिरिति वाच्यम् । विशेषबलेन धर्म धर्मि भावोपपत्तेः । अन्यस्य सम्मतत्वात् ॥ अभावाभावस्येति ॥ अभावप्रतियोगिकाभावमात्रस्येत्यर्थः ॥ प्रकृतेऽपि सममिति ॥ उपलक्षणमेतत् । यत्राभावप्रतियोगिकमवान्तरं धर्मिभिन्नं तस्यैव भावत्वम् । अयं च न तथा । तस्य धर्म्यात्मकत्वात् तस्मान्न कश्चिद्दोष इत्यपि द्रष्टव्यम् । तथाचेति ॥ नचास्माकमभेदाभेदत्वादेः ब्रह्मात्मकतयाऽन्योन्यवृत्तिरित्येवानुपपन्नमिति वाच्यम् । अस्माकमपि भेदाभेदत्वादेः धर्मिस्वरूपतया तथा वक्तुं शक्यत्वात् । व्यवहारस्य च त्वयाप्युपपादयिष्यमाणत्वात् । ननु मन्मते नाभेदव्यक्तिनानात्वं येनाभेदत्वं जातिरूपमुपाधिरूपमवश्यं वाच्यम् । नैवं त्वया वक्तुं शक्यम् । भेदव्यक्तीनामनन्तत्वाङ्गीकारादित्यत आह ॥ न चेति ॥ वेदान्तेति ॥ घटे घटाभेदस्य जीवे जीवाभेदस्य प्रत्यक्षसिद्धत्वेन तदात्मकस्य ब्रह्माभेदस्य प्रत्यक्षसिद्धतया तत्प्रत्यायकानां वेदान्तानां वैयर्थ्यमित्यर्थः । नच भेदभ्रमनिवर्तकवृत्त्यर्थं वेदान्ता इति वाच्यम् । अभेदे भासमाने भेदभ्रमस्यैवायोगात् ॥ अथेति ॥ नचात्माश्रयादिदोषेणान्योन्यवृत्तित्वप्रमित्यसिद्धिरिति वाच्यम् । उत्पत्तिज्ञप्त्यप्रतिबन्धकत्वेनाध्ययनविधिवददोषत्वात् । बाधाभावेन प्रमात्वासिद्धेश्च ॥ तर्हीति ॥ भेदस्य स्वरूपत्वे बाधकानामुद्धृतत्वादिति भावः ॥ योग्यता चेति ॥ न च योग्यता भेदं विना वक्तुं शक्येति वाच्यम् । भेदकधर्मावच्छिन्नस्यैव योग्यत्वात् । न च तस्यापि भेदघटितत्वमाश्रयकोटावप्रवेशात् । न च कार्योन्नेयत्वायोग्यताया अयुक्तं भेदमज्ञात्वा कार्यभेदस्य ज्ञातुमशक्यत्वादिति वाच्यम् । कार्यस्वरूपज्ञानस्यैव तद्भेदज्ञानत्वात् । उक्तं न्यायं दूषणान्तरेऽतिदिशति ॥ एवमिति ॥ ननु प्रत्येकं कुतो न दूष्यत इत्यतः स्वव्याघातका इत्युक्तम् । तदुपपादयति ॥ नहीति ॥ स्वोक्तेऽर्थे सिद्धान्त सम्मतिमाह ॥ तदुक्तमिति ॥ तथा च सामान्यविशेषाभ्यां भेदखण्डनस्याभावात् भेदो युक्ततर इति । इति विशिष्य भेदखण्डनोद्धारः ।

## न्यायामृतप्रकाशः

॥ तत्रेति ॥ भेदस्य स्वरूपत्व इत्यर्थः ॥ व्याप्तेरिति ॥ यत्सापेक्षं तन्न निरपेक्षाभिन्नमिति व्याप्तेः स्वरीत्या परीत्याचासंमतेरित्यर्थः । तदेवोपपादयति ॥ त्वन्मत इति ॥ सापेक्षाया इति ॥ अविद्यारूपप्रतियोगिसापेक्षाया

(प्रकाशः)

इत्यर्थः । अविद्यानिवृत्तेर्निरपेक्षब्रह्मस्वरूपत्वादित्यन्वयः । अधिकरणातिरिक्ताभावानङ्गीकारेण आत्मैवाज्ञानहानिरित्यङ्गी- कारादिति भावः ॥ जीवेति ॥ धर्मिप्रतियोगिभावेन जीवब्रह्मसापेक्षस्याप्यैक्यस्य ब्रह्मस्वरूपत्वादित्यन्वयः ॥ मतद्वयेपीति ॥ आवयोर्मत इत्यर्थः ॥ स्थिताविति ॥ गोत्वादेःससम्बन्धिपदार्थत्वाभावेन स्थितावेव व्यक्त्यपेक्षा न प्रतीताविर्त्यर्थः । जातिमात्रस्य समस्तजातेरित्यर्थः । निरपेक्षव्यक्तिस्वरूपत्वादित्यर्थः ॥ नीलतरत्वादीति ॥ नीलरूपनिष्ठोत्कर्षरूपजातिविशेषस्य नीलादिदंनीलतरमित्येवं प्रतीतौ अवध्यादिसापेक्षस्याप्युत्कर्षरूपगुणगतजातिविशेषस्य व्यक्तिरूपत्वादित्यर्थः ॥ अर्थेति ॥ अर्थप्रकाशरूपज्ञानस्यार्थसापेक्षस्य निरपेक्षब्रह्मस्वरूपत्वात् । ब्रह्मणि विद्यमानस्य ब्रह्माभेदस्य ब्रह्मस्वरूपत्वात् अस्तित्वस्य च ब्रह्मस्वरूपत्वादित्यन्वयः । अस्त्वेवं व्यभिचारेण व्याप्त्यभावः ततः किमित्यत आह ॥ व्याप्तीति ॥ ननु जीवब्रह्मैक्ये न व्यभिचारः सापेक्षस्य तस्य ब्रह्मस्वरूपत्वानङ्गीकारादित्यत आह ॥ ऐक्यस्येति ॥ स्वरूपातिरिक्तमैक्यं सत्यं मिथ्या वा नाद्य इत्याह ॥ सत्व इति ॥ द्वितीयेत्वाह ॥ मिथ्यात्वे चेति ॥ दूषणान्तरमाह ॥ भेदस्येति ॥ नन्वैक्यस्य मिथ्यात्वे भेदस्य सत्यत्वं कुत इत्यतस्तत्र व्याप्तिमुपपादयति ॥ यत्रेत्यादिना ॥ यत्र शुक्तौ यद्रूप्यत्वमध्यस्तं तत्र शुक्तौ तद्विरोधि अरूप्यत्वं तज्ज्ञानाबाध्यं शुक्तिज्ञानाबाध्यं दृष्टं एवं ब्रह्मण्यप्यैक्यमध्यस्तं तत्र ब्रह्मणि तद्विरोधि भेदो ब्रह्मज्ञानाबाध्य इत्यर्थः । व्याप्त्यंतरमाह ॥ यत्रेति ॥ यदैक्यमिति ॥ येनैक्यमित्यर्थः । तद्भेदः तेनभेदः ॥ यथेति॥ यत्र चूते पनसैक्यमध्यस्तं तत्र चूते तेन पनसेन भेदश्चूतज्ञानाबाध्यो दृष्टः एवं ब्रह्मणि जीवेनैक्यमध्यस्तमिति तेन जीवेन भेदो ब्रह्मज्ञानाबाध्य इत्यर्थः । व्याप्त्यन्तरमाह ॥ यत्रेति ॥ एवञ्चैक्यमध्यस्तमिति तद्विरोधी भेदस्तात्विक इत्यर्थः । नन्वैक्ये सापेक्षत्वस्यैवाऽभावान्न व्यभिचार इति चेत्तत्राह ॥ ऐक्यस्येति ॥ एकवाक्यत्वेति ॥ ऐक्यापेक्षितजीवब्रह्मस्वरूपप्रतिपादकत्वेन तदेकवाक्यत्वं वाच्यम् ऐक्यस्य निरपेक्षत्वे तन्न स्यादित्यर्थः । ऐक्यं भेदनिषेधरूपम् ॥ सापेक्षवदिति ॥ वास्तवं सापेक्षत्वं नास्तीत्यर्थः । ऐक्यस्यैव सापेक्षत्वात्तन्निषेधरूपो भेदएव सापेक्ष इवोच्यत इति वैपरीत्यमेवास्त्वित्याह ॥ घट इति ॥ भेदस्य कथमैक्यनिषेधरूपत्वमिति चेदुच्यते ऐक्यं तादात्म्यं तन्निषेधो हि भेदः तत्र तादात्म्यं नाम तन्निष्ठासाधारणधर्मवत्त्वमेव वा अभेदो वा । आद्ये तन्निष्ठेत्यादितच्छब्दोक्तपदार्थसापेक्षं यत् तन्निष्ठासाधारणधर्मवत्त्वरूपं तादात्म्यं तन्निषेधरूपत्वाद्भेदः सापेक्ष इवेत्यर्थः । तादात्म्यस्याभेदरूपत्वे त्वाह ॥ ऐक्य इति ॥ तादात्म्यस्यैक्येऽभेदरूपत्वे । अभेदरूपैक्यमेव भेदसापेक्षमिति न तस्य निरपेक्षब्रह्मरूपत्वमिति भावः ॥ ननु जीवब्रह्मणोस्तदैक्ये च न निरपेक्षत्वसापेक्षत्वे येन व्यभिचारः किं तु तत्प्रतीत्योरेवेत्याशङ्कते ॥ अथेति ॥ तयोरेव प्रतीत्योरेव ॥ नत्विति ॥ तथा च सापेक्षनिरपेक्षयोरैक्यायोगाज्जीवब्रह्मणोरैक्यस्य भेदः स्यादिति वक्तुं न शक्यत इति भावः । ननु सापेक्षनिरपेक्षप्रतीतिविषयत्वादेव विषयस्यापि भेदोऽस्त्विति चेन्न । व्यभिचारादित्याह ॥ एकस्यामेवेति ॥ संस्कारसापेक्षस्मृतिविषयत्वस्य तन्निरपेक्षानुभवविषयत्वस्य चेत्यर्थः ॥ सममिति ॥ प्रकृतेपि घटादिरूपधर्मिभेदप्रतीत्योरेव सापेक्षत्वनिरपेक्षत्वे इति तयोरेव भेदो न तु तद्विषययोर्घटभेदयोरित्यर्थः ॥ अज्ञानेति ॥ प्रतीतौ प्रतियोगिसापेक्षाज्ञानहानिवत् ब्रह्मरूपधीवत् निरपेक्षब्रह्मस्वरूपधीवत् प्रतीतौ निरपेक्षब्रह्मस्वरूपधीवदिति यावत् ॥ अभेदवत् । प्रतीतौ सापेक्षाभेदस्वरूपवत् भेदस्य स्वरूपत्वेपीत्यन्वयः । ननु

(प्रकाशः)

जीवब्रह्मैक्ययोः सापेक्षत्वादेरवच्छेदभेदेनोपपत्तेरैक्यं युक्तमिति चेत् समं घटभेदयोरपीत्याह ॥ अथेति ॥ स्वरूपेण ब्रह्मत्वेन । स्वरूपेण घटत्वेन । युक्तं चैतत् केनचिद्रूपेण निरपेक्षस्यापि केनचिद्रूपेण सापेक्षत्वं दृष्टत्वादित्याह ॥ प्रमेयत्वादिनेति ॥ अभावादेः प्रमेयत्वेन प्रतीतौ प्रतियोग्यादिसापेक्षत्वाभावेपि अभावत्वादिना प्रतीतौ तत्सापेक्षत्वादित्यर्थः ॥ स्वरूपेणेति ॥ दण्डत्वादिनानिरपेक्षस्यापि दण्डादेः कारणत्वेन प्रतीतौ निरूपकसापेक्षत्वात् अस्येदं कारणमिति हि प्रतीतिः तथा ब्रह्मत्वेन विषयनिरपेक्षस्यापि ब्रह्मणो ज्ञानरूपत्वेन प्रतीतौ विषयसापेक्षत्वादित्यर्थः । नन्वेवं सर्वस्यापिपदार्थस्य केनचिद्रूपेण प्रतियोग्यादिसापेक्षत्वनिरपेक्षत्वादेः सम्भवेन इदं सप्रतियोगिकमिदं निष्प्रतियोगिकमिति व्यवस्था न स्यादित्यत आह ॥ सप्रतियोगिकेति ॥ यत् अभावादिकम् । असाधारण्येनेत्यस्य विवरणम् ॥ स्ववाचकेत्यादि ॥ अभाववाचकं यत्पदं तस्य यत्प्रवृत्तिनिमित्तमभावत्वं तदवच्छेदेन प्रतीतावित्यर्थः ॥ अन्यत्त्विति ॥ घटादिकं घटादिवाचकपदप्रवृत्तिनिमित्तभूतघटत्वाद्यवच्छेदेन प्रतीतौ प्रतियोग्यादिनिरपेक्षत्वान्निष्प्रतियोगिकमित्यर्थः । ननु तथापि ऐक्यब्रह्मणोरेकत्वेपि ब्रह्मशब्दोल्लेखे धर्म्यादिनिरपेक्षत्वेपि अभेदशब्दोल्लेखे सापेक्षत्वमिति व्यवस्थासम्भवेन न व्यभिचार इत्याशङ्कते ॥ यदि चेति ॥ शब्दोल्लेखभेदेन निरपेक्षत्वादिकं कुत्र दृष्टमित्यत आह ॥ लघुत्वेति ॥ लघुत्वम् अगुरुत्वम् । अगुरुत्वशब्देन प्रतीतौ प्रतियोगिभूतगुरुत्वादिसापेक्षत्वमस्तीत्यर्थः ॥ एकस्यैवेति ॥ गच्छति चलतीत्यत्र गमनक्रियैकैव प्रतीयते तत्रैकस्यैव गमनरूपार्थस्य सकर्मगच्छतिशब्दोल्लेखेन कर्मसापेक्षत्वम् अकर्मकचलतिशब्दोल्लेखेन कर्मनिरपेक्षत्वम् ॥ यथा वा करोतिप्रयतत्योरेकार्थत्वमेव प्रयत्नस्यैव समस्ताख्यातार्थत्वात् । एवं चैकस्यैव प्रयत्नस्य सकर्मकाकर्मककरोतिप्रयततिशब्दोल्लेखविषयत्वमस्ति । पुनःसापेक्षत्वादिव्यवस्थामाशङ्क्य प्रकृतेपि साम्यमाह ॥ यदि चेति ॥ तर्हीति ॥ भेदत्वस्यान्योन्याभावत्वरूपत्व इत्यर्थः ॥ अस्त्विति ॥ तथाचान्योन्याभावरूपभेदस्य न धर्मिस्वरूपत्वम् । भावाभावयोरैक्यायोगादिति भावः ॥ स्वरूपत्वोक्तेरिति ॥ अन्योन्याभावरूपभेदाख्यविशेषस्यैव धर्मिस्वरूपत्वोक्तेरित्यर्थः । भावाभावयोरैक्यायोग इति शंकापरिहारस्तु ''अस्मत्पक्षे विशेषस्य सर्वत्राङ्गीकृतत्वतः ॥ नास्ति दोषः क्वचिद्भावो ह्यभावश्च स एव हि ॥ सर्वे भावा अभावाश्च पदार्था एव सर्वदा ॥ तथापि प्रथमं बुद्धेर्यो निषेधस्य गोचरः ॥ सोऽभावो विधिबुद्धेस्तु गोचरः प्रथमं पर'' इत्यनुव्याख्यानोक्तरीत्या द्रष्टव्यः । स्वयं प्रतिबन्द्या समाधत्ते ॥ अविद्येति ॥ अविद्यानिवृत्त्यद्वैतयोः अभावरूपयोरित्यर्थः । ब्रह्मैक्यं भावरूपब्रह्मैक्यं स्वाभावेन स्वप्रतियोगिकात्यन्ताभावत्वेन ॥ अन्याभावेनेति ॥ अन्यप्रतियोगिकाभावेनेत्यर्थः । तथाचाविद्यानिवृत्त्यद्वैतप्रतियोगिकाभावत्वेन स्वभावत्वाभावान्न विरोधोतस्तयोर्ब्रह्मैक्यं युक्तमिति भावः ॥ सममिति ॥ अत्रापि घटः स्वाभावेनाविरुद्धो नत्वन्योन्याभावेन तादात्म्यरूपान्यप्रतियोगिकेनान्योन्याभावेनातस्तयोरैक्यं युक्तमित्यर्थः । ननु यथाकथंचिद्भावाभावरूपत्वे तयोरैक्यं विरुद्धमिति तत्राह ॥ अभावेति ॥ लोके भावस्यस्वाभावाभावरूपत्वेन भावाभावयोरैक्यं दृष्टं तदपि न स्यात् अतः भावः स्वाभावेनैव विरुद्धो नत्वन्याभावेनेत्येव वक्तव्यं तत्प्रकृतेपि सममित्यर्थः । ननु अविद्यानिवृत्तेः कथं ब्रह्मैक्यमित्युक्तमयुक्तम् । प्राभाकररीत्याऽधिकरणातिरिक्ताभावानङ्गीकारेणाऽधिकरणस्यैवाभावव्यवहारालम्बनत्वात् ब्रह्मरूपाधिकरणस्य व्यतिरिक्तोऽविद्यानिवृत्तिरूपः पदार्थ एव नास्तीति चेत् । तर्हि अधिकरणीभूतघटातिरिक्तोऽन्योन्याभाव एव नास्तीति सममित्याह ॥ यदि चेति ॥

(प्रकाशः)

नन्वविद्यानिवृत्तेः कथं ब्रह्मैक्यमयुक्तमित्युक्तम् अद्वैतस्य भावरूपत्वेनाभावरूपत्वाभावादित्याशङ्क्य तत्प्रकृतेपि सममित्याह ॥ यदि चेति ॥ तद्विरोधीति ॥ द्वैतविरोधीत्यर्थः । यथाहि अधर्मो धर्मविरोधी भावरूपः एव-मित्यर्थः । ननु द्वैतविरोधिभावरूपभेदत्वं नाम किमित्यतस्तन्निर्वचनप्रकारमन्यापदेशेन दर्शयति ॥ केचित्त्विति ॥ तदिति । घटे पटभेदत्वं नाम पटतादात्म्यायोग्यत्वमित्यर्थः । अस्याऽभावरूपत्वाद्भावरूपभेदत्वायोगादाह ॥ तदैक्येति ॥ अत्र तदैक्यधीव्यवहारविरोधित्वमित्येव स्वरसः पाठः न तु तदैक्यप्रमित्यविषयत्वमिति । तथात्वे-पुनरभावरूपत्वापत्तेरिति ध्येयम् । पटैक्यधीव्यवहारविरोधित्वमेव घटे पटभेदत्वमित्यर्थः ॥ यत्रेति ॥ यत्र घटे पटभेददर्शनं पटतादात्म्याध्यासविरोधि तत्र घटे तत्त्वं तत्तादात्म्याध्यास- विरोधित्वमेव पटभेदत्वमित्यर्थः ॥ पुनः स्वरूपभेदत्वमन्यापदेशेन स्वयमेवदर्शयति ॥ इतरेत्विति ॥ अनाधारत्वरूपं वा स्वरूपभेदत्वमित्यन्वयः । अत्र यत्किञ्चिच्छब्दद्वयं व्यतिरेकिपरं यत्किञ्चित्पदद्वयाभावे प्रमेयत्वादिकेवलान्वयिधर्मप्राप्त्या तदनाधाराप्रसिद्धरित्य-वगन्तव्यम् । अयमर्थः स्वशब्देन घटः तद्वृत्तिर्यत्किञ्चिद्धर्मो घटत्वं तदनाधारः पटः तन्निष्ठो यत्किञ्चिद्धर्मः पटत्वं तदनाधारस्वरूपत्वमेव घटे पटभेदत्वं तथा च पटत्वानाधारत्वं पटभेद इत्युक्तं भवति । तथा च स्वशब्देन घटस्तदवृत्तिधर्मः पटत्वं तदाधारः पटः तदनिष्ठो धर्मो घटत्वं तदाधाररूपत्वमेव घटे पटभेदत्वं तथा च घटत्वमेवस्वरूपभेदत्वमित्युक्तं भवति । अत्राद्यपक्षे भावरूपत्वालाभात्स्वावृत्तीति द्वितीयनिर्वचनम् । नन्वनाधारत्वं नाम आधारान्यत्वम् अन्यत्वं च भेद एवेति भेदज्ञाने तद्धटितलक्षणज्ञानं तज्ज्ञाने च भेदज्ञानमित्यन्योन्याश्रय इत्यत आह ॥ अनाधारत्वं चेति ॥ स्यादिति ॥ यन्निरूप्यस्य यद्भवति तन्निरूपकस्याऽपि तद्भवतीति व्याप्तेरित्याशयः । एतेनेत्युक्तमेव विशदयति ॥ व्याप्तेरिति ॥ दुःखनिवृत्तेः पुमर्थत्वेपि दुंःखे पुमर्थत्वस्यादर्शनात् । अनुमानादौ व्यभिचारादिदोषाभावस्य साध्यादिसाधकत्वप्रयोजकत्वेपि दोषेपि साधकत्वप्रयोजकत्वस्यादर्शनात् अनृतव्यावृत्तेर्ब्रह्मस्वरूपत्वेपि अनृते च ब्रह्मस्वरूपत्वस्यादर्शनात् आत्मैवाज्ञानहानिरित्युक्तत्वेनाज्ञाननिवृत्तेर्ब्रह्म-स्वरूपत्वेपि अज्ञाने ब्रह्मस्वरूपत्वस्याऽदर्शनात् । अज्ञानादिप्रकाशरूपज्ञानस्य ब्रह्मस्वरूपत्वेपि अज्ञानेब्रह्म-स्वरूपत्वस्यादर्शनात् अज्ञाननिवृत्तेर्मोक्षत्वेपि अज्ञाने मोक्षत्वस्य चादर्शनाद्व्यभिचार इति विवेको द्रष्टव्यः ॥ कार्यानन्वयित्वेनेति ॥ मोक्षत्वाद्यनन्वयित्वेनेत्यर्थः ॥ सममिति ॥ अत्रापि प्रतियोगिनो वस्तुस्वरूपत्वानन्वयित्वेन भेदं प्रत्युपलक्षणत्वेन निरूपकमात्रत्वमेन न तु कार्यान्वयित्वेन विशेषणत्वमिति सममित्यर्थः । ननु लम्बकर्ण-मानयेत्यादौ निरूपककर्णादेः कार्यान्वयो दृष्ट इति चेत् चित्रगुमानयेत्यादौ तदभावोपि किं न दृष्ट इत्याह ॥ लोक इति ॥ वैपरीत्येति ॥ लम्बकर्णमानयेत्यादौ कर्णस्य कार्यान्वयदर्शनेन चित्रगुमानयेत्यादावपि कार्यान्वया-पादनेन पक्षतुल्यत्वात्र व्यभिचार इत्युच्यते चेत्तर्हि चित्रगुमानयेत्यादौ गवादेः कार्यान्वयादर्शनेन लम्बकर्णमान-येत्यादावपि कर्णादेः कार्यान्वयो न स्यादित्यापादनसम्भवेन व्याप्तिग्रहणस्थलाभावाद्व्याप्तिग्रहो न स्यादित्यर्थः । कर्णादेः कार्यान्वयदर्शनेन गवादेरपि तदापादने कर्णदृष्टान्तेनैवाज्ञाननिवृत्तेर्ब्रह्मस्वरूपत्वेनाज्ञानस्यापि ब्रह्मस्वरूप-त्वापत्तिरित्याह ॥ अज्ञानादेरिति ॥ ननु प्रतियोगिनो घटदेर्भेदं प्रत्युपलक्षणत्वमयुक्तं यथा गृहं प्रत्युपलक्षणस्य काकस्याज्ञानेपि गृहज्ञानं भवति एवमुपलक्षणस्य प्रतियोगिभूतघटादेर्ज्ञानाभावेपि कदाचिद्भेदज्ञानप्रसङ्गादित्या-शङ्कते । ननु प्रतियोगिन इत्यादिना । तथात्वे उपलक्षणाज्ञानाद्यज्ञानेपि उपलक्ष्याज्ञाननिवृत्त्यादिज्ञान-

(प्रकाशः)

प्रसङ्गसाम्यमित्याह ॥ तर्ह्यज्ञानाद्यज्ञानेपीति ॥ अज्ञानादेरपि त्वयोपलक्षणत्वाङ्गीकारादिति भावः यदि चाज्ञानाद्युपलक्षणज्ञानम् उपलक्ष्याज्ञाननिवृत्त्यादिज्ञानं प्रति कारणं तदभावे काकज्ञानाभावे गृहस्येव उपलक्ष्याज्ञाननिवृत्त्यादेर्ज्ञानं न भवतीत्युच्यते । (ननु अज्ञानाद्यज्ञानेपि कदाचित्तन्निवृत्त्यादिज्ञानं न भवति । तथाहि । अभावं सादृश्यं च प्रति उपलक्षणं यत्प्रतियोग्यादि तस्य नियमेनोपलक्ष्याभावसादृश्यमानहेतुत्वं दृष्टम् । ननु गृहादिवत्तज्ज्ञानाभावेप्यभावादिज्ञानम् । तद्वदिदमुपलक्षणम् । अतोऽज्ञानाद्यज्ञाने तन्निवृत्तिज्ञानं न भविष्यतीति चेत् ।) तर्हिभेदप्रतियोग्यादिरपि अभावसादृश्यादिप्रतियोगिवन्नियमेनोपलक्ष्यज्ञापक इति न गृहादिवत्तज्ज्ञानाभावेपि भेदज्ञानं भविष्यतीत्याह ॥ अथेत्यादिना ॥ दुःखमिव दुःखं यथा नान्तर्गतम् अज्ञानवत् अज्ञानं यथा नान्तर्गतं मोहवत् मोहोऽज्ञानं यथानान्तर्गतम् एवं कुंभादिकं प्रतियोगिभूतं पटे तत्स्वरूपे नान्तर्गतमित्यर्थः । अथोपलक्षणस्यापीत्युक्तदूषणं सङ्गृह्णाति ॥ तटस्थत्वेपीति ॥ अभावसादृश्यादिवदुपलक्षणस्याप्यज्ञानादेरप्रतीतौ नियमेन तन्निवृत्त्याद्यप्रतीतिर्यथा एवं तटस्थत्वेनोपलक्षणत्वे समानेपि उपलक्षणभूतकुम्भादेरप्रतीतौ नियमेन भेदधीर्न भवत्येवेत्यर्थः । ननु कार्यान्वय्येव कर्णादिविशेषणं दृष्टं प्रतियोगिनस्तु धर्मिस्वरूपान्वयाभावात्कथं भेदं प्रति विशेषणत्वमिति चेन्न । शब्दोनित्य इत्यादौविधेयभूतानित्यत्वानन्वयेपि शब्दत्वादेर्विशेषणत्वं दर्शनादेवमिहाप्युपपत्तेरित्यन्यापदेशेनाह ॥ केचित्त्विति ॥ विदारणात्मनो विदारकत्वस्वभावतः विभागाख्यद्वैधीभावहेतुत्वादात्मन इति यावत् । विदारणं द्वैधीभावः ॥ परमाणुरपीति ॥ परमाणावपि भेदस्य सत्वेन तस्यापि तत्स्वरूपत्वात्तत्रापि द्वैधीभावरूपविभागापत्त्या सोप्येको न स्यादित्यर्थः । ऐक्येपीदं दूषणं समानामित्याह ॥ अविदारणेति ॥ अविभागात्मकस्येत्यर्थः । अविदारणेन अविभागेन व्यावहारिकघटाभेदः प्रातिभासिकरूप्याद्यभेदः शून्याभेदश्च घटे रूप्ये शून्ये च तावदस्ति सोपि ब्रह्मस्वरूपमेव अभेदमात्रस्य तत्स्वरूपत्वात् एवं च भेदस्य विदारणात्मकत्वेऽभेदस्याविदारणात्मकत्वापत्त्या घटाद्यविभागात्मकाभेदस्य तत्स्व (ब्रह्मस्व) रूपत्वाद्धटादेरपि ब्रह्मस्वरूपत्वं स्यादित्यर्थः । ''प्रतियोगिनो हिभेदोयं न तु स्वस्मात्कथंचने'' त्यनुव्याख्यानं हृदि निधायाह ॥ तर्हीति ॥ नत्विति ॥ तथा च घटस्यापि विदारणं स्यादित्यापादनायोग इत्याशयः ॥ यथाहीति ॥ यथा हि जीवैक्यमेव ब्रह्मात्मकं तथा च स्वस्यैव जीवाविभागरूपाविदारणसम्पादकं न परेण घटादिना तदभेदस्य ब्रह्मात्मकत्वाभावादित्यर्थः । स्वस्मिन्निति पाठः । स्वाभिन्ने घट इत्यर्थः । स्वस्मादिति पाठे स्वस्मिन्नित्येव विभक्तिव्यत्ययेनार्थो द्रष्टव्यः ॥ कार्याणां विभागेनेति ॥ कार्याणां विभागे स्वकारणपरिशेषेण भाव्यम् । एवं च कार्याणां विभागेन शून्यत्वं न प्राप्नोति । कुत इत्यत आह ॥ न हीति ॥ धर्मभेदवाद इति ॥ यदि भेदो घटादिधर्मः स्यात् तर्हि विदारकस्वभावभूतो भेदः लवित्रवद्घटादिसम्बद्धः सन् तत्र द्वैधीभावरूपं विभागं कुर्यादिति वक्तुं शक्यं नह्येवमस्ति स्वरूपत्वाङ्गीकारेण घटादिसम्बन्धित्वानङ्गीकारादित्यर्थः ॥ भावेति ॥ भिदिर् विदारण इति धातुः । कुत इत्यत आह ॥ न हीति ॥ विदारणस्येति ॥ घटस्यैव विदारणत्वादित्यर्थः ॥ स्ववृत्तीति ॥ स्वस्य स्वस्मिन्वृत्तीत्यर्थः । न घटे विदारणत्वादित्यर्थः ॥ स्ववृत्तीति ॥ स्वस्य स्वस्मिन्वृत्तीत्यर्थः । न घटे विदारणमित्यर्थः । कुत इत्यत आह ॥ स्वस्येति ॥ तर्हि (भिदिर् विदारण)इतिधातुविरोध इति चेत्तत्राह ॥ क्रियेति ॥ ''भूवादयो धातव'' इतिस्मरणादित्यर्थः ॥ अन्यथेति ॥ विभागरूपविदारणस्यैव भिदिधात्वर्थत्व

(प्रकाशः)
इत्यर्थः । ऐक्यपक्षेपि साम्यादित्याह ।। एकत्वेति ।। पटेन सहानेकत्वं न स्यादित्यन्वयः । तस्यैकत्वेन विरुद्धत्वादित्यर्थः । वास्तवं पटेन सहानेकत्वं नास्त्येव तस्यापि मिथ्यात्वादित्यत उक्तम् ।। धर्मीति ।। घटेत्यर्थः । तथा च व्यावहारिकमप्यनेकत्वं न स्यादिति भावः ।। ब्रह्मणाचेति ।। एकत्वैकार्थसमवायिन इति वर्तते । तथाचैकत्वैकार्थसमवायिनो ब्रह्मणा सह ब्रह्माभेदस्य ब्रह्मस्वरूपत्वे ब्रह्मणोऽभावेन सहाप्यनेकत्वं न स्यात् तस्यैकत्वेन सह विरोधादित्यर्थः । ननु द्वितीयाभावस्यापि मिथ्यात्वात्तेन सहानेकत्वं नास्त्येवेत्यत उक्तम् ।। भावाद्वैतमत इति ।। द्वितीयो भाव एव नास्ति अभावरूप द्वितीयमस्तीति मत इत्यर्थः ।। एकमात्रेति ।। भेदस्य द्विष्ठत्वपक्ष एवानेकत्वैकार्थसमवायित्वं नत्वन्यनिरूप्यमेकमात्रवृत्तीति पक्ष इत्यर्थः । यथोक्तं "सम्योगश्चविभागश्च भेदश्चैव पृथक् पृथक् । अन्योन्यप्रतियोगेन ह्युभयोरपि दृश्यत" इति ।। अपि चेति ।। अनेकत्वेन सह भेदस्य एकार्थरूपघटसमवायोपि नास्ति अस्मन्मते घटस्यैव भेदात्मकत्वेनानेकत्वेन सह एकार्थे मृदादावधिकरणे भेदात्मको घटः समवेतस्तस्यैशोपत्तेरिति ।। तथा च संशयविरोधिनो भेदस्याप्रतितत्वात्संशयः संभवतीति भावः । ननु प्रत्यच्चैतन्ये स्वयं भातेपि तदभिन्नैक्यस्याप्रकाशो नास्तीतिचेत्तत्राह ।। ऐक्यस्य चेति ।। विप्रतिपत्तिः संशयः ।। उपदेशेति ।। तत्त्वमस्यादीत्यर्थः ।। (अत्रग्रन्थपातः)

## १६. विशेषसमर्थनम्

**वस्तुतस्त्वस्मन्मते भेदो वस्तुना सविशेषाभिन्नः । ततश्चाभिन्नत्वान्नानवस्थादि । भेदप्रतिनिधेश्च विशेषस्य सत्त्वान्न पर्यायत्वादिकम् । विशेषश्च भेदहीनेऽप्येकतरपरिशेषाभावादिनिर्वाहकः । तदुक्तम्–**

**भेदहीने त्वपर्यायशब्दान्तरनियामकः ।**
**विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ।। इति ।**

**प्रमाणं तत्रार्थापत्तिः । तथा हि– विज्ञानमानन्दं ब्रह्मेत्यादि वाक्यबोध्यविज्ञानानन्दादीनां परमतेऽपि न तावद्भेदो भेदाभेदौ वा, अखण्डार्थत्वात् । एकधैवानुद्रष्टव्यमित्याद्यैकरस्य श्रुतिविरोधाच्च । तत्र भेदप्रतिनिधिर्विशेषोऽपि न चेत्कथं तच्छब्दानामपर्यायत्वम्? पदान्तरावैयर्थ्यम्? विज्ञानानन्दयोरेकतरापरिशेषः? भ्रमाधिष्ठानत्वेन चैतन्यभानेऽपि मोक्ष इवेदानीमानन्दाप्रकाश इत्यादिभेदकार्यं स्यात्? लक्ष्यार्थभेदाभावेऽपि वाच्यार्थभेदादपर्यायत्वं व्यावर्त्यभेदादवैयर्थ्यं चेति चाखण्डवादे निरस्तम् । न च सखण्डवादेऽपि प्रवृत्तिनिमित्तयोर्ज्ञानत्वा-**

नन्दत्वयोर्भेदादपर्यायत्वम्, 'एवं धर्मानि'ति श्रुत्या तयोरपि भेदनिषेधात् । अर्थप्रकाशत्वनिरुपाधिकेष्टत्वरूपयोस्तयोरर्थप्रकाशनिरुपाधिकेष्टरूपाश्रयविशेषसापेक्षत्वाच्च । आकाशशब्दशब्दाश्रयशब्दयोर्निमित्तभेदाभावेन पर्यायत्वापाताच्च । न ह्याकाशशब्दस्य शब्दाश्रयत्वादन्यन्निमित्तमस्ति । ज्ञानानन्दयोरेकतरपरिशेषे च मोक्षे आनन्दप्रकाशो न स्यात् । तस्माद्विज्ञानानन्दादैरैक्यश्रुतिबलादभेद इत्येकतरापरिशेषाद्यर्थं विशेषोऽप्यङ्गीकार्यः । एवं तत्त्वमसीत्यत्र शोधितात्तत्पदार्थाद् वाक्यार्थस्यैक्यस्य न तावत्परमते भेदो भेदाभेदो वा, ऐक्यस्य मिथ्यात्वाद्यापत्तेः । तत्र विशेषोऽपि न चेत् कथं स्वप्रकाशचैतन्य प्रकाशेऽप्यैक्यस्याप्रकाशः? तत्प्रकाशस्य भेदभ्रमाविरोधित्वेऽप्यैक्यप्रकाशस्य तद्विरोधः? तस्य निरपेक्षत्वेऽप्यैक्यस्य सापेक्षत्वमित्यादि? न चाविद्यावरणादैक्यस्याप्रकाशः, विशेषाभावे अनावृतचिदभिन्नस्यैक्यस्यावरणायोगात् । न हि शुक्त्यज्ञानेन शुक्त्यंश एवावृतोऽनावृतश्च भवति । किं चैवं धर्माननिति श्रुतिबलादपि विशेषसिद्धिः । अत्र हि ब्रह्मणो धर्माननुक्त्वा तद्भेदो निषिध्यते । न च भेदप्रतिनिधेरभावे धर्मधर्मिभावो धर्माणामनेकत्वं च युक्तम् । न च धर्मानित्यनुवादः, श्रुतितोऽन्येन ब्रह्मधर्माप्राप्तेः । न चेयं श्रुतिरत्यन्तभेदनिषेधिका, भेदमात्रनिषेधात्तादृशभेदाभावस्य लोकत एव प्राप्यत्वाच्च । भेदाभेदौ च यः पश्येत्स याति तम एव चेत्यादि स्मृतेश्च । तदुक्तम्–

उक्त्वा धर्मान्पृथक्त्वस्य निषेधादेवमेव हि ।
विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः ॥ इति

किं च गुणगुण्याद्यभेदपक्षे पटोपलम्भेऽपि शौक्ल्याद्यनुपलम्भार्थं भेदाभेदपक्षेऽपि तयोरविरोधार्थमत्यन्तभेदपक्षेऽपि समवायः सम्बन्धः, सत्ता सती भेदो भिन्नः, अन्त्यविशेषो व्यावृत्तः, कालः सदास्ति, देशः सर्वत्रेत्यबाधितव्यवहारार्थं विशेषोऽङ्गीकार्यः । किं चाभावादावस्तित्वादिर्नाभावादितो भिन्नः, गुणादिष्वनन्तर्भावेन षट्पदार्थनियमभङ्गात् । अनियमपक्षेऽप्यस्तित्वेऽप्यस्तित्वान्तरमित्यनवस्थानात् । तत्र विशेषोऽपि न चेत्कथं विशेषणविशेष्यभावादि? न च सत्ता

सतीत्यादिधीर्भ्रान्तिः सन्घट इत्यादिवद् अबाधात् । नाप्युपचारः, देवदत्तः सिंहो नेतिवत् सत्ता सती नेति कदाप्यव्यवहारात् । ननु सत्तादेः सत्ताद्यन्तराभावेऽपि स्वभावविशेषादेव सद्व्यवहार इति चेन्न, तस्यैव स्वभावविशेषस्यास्माभिर्विशेषशब्देनोक्तेः । समवायादिः स्वनिर्वाहक इति चेन्न, स्वस्य स्वयमेव निर्वाहकं स्वनिर्वाहकम् । विशेषाभावे च कथमेकस्यैव निर्वहणक्रियायां कर्तृत्वं कर्मत्वं च? अयमेव विशेषः वस्त्वभिन्नः स्वनिर्वाहकश्चेति नानवस्था तस्य तथात्वं च धर्मिग्राहकमानसिद्धम् । यत्र भेदाभावो भेदकार्यं च प्रमितं तत्रैव विशेषः कल्प्यत इति न प्रमितभेदे घटपटादौ विशेषमादाय भेदत्यागः । न हि सोमाभावे पूतीक इति तल्लाभेऽपि सः । एतेनोक्तस्थले भेद एवास्तु भेदकार्यार्थं न तु भेदप्रतिनिधिरस्त्विति निरस्तम्, तत्र भेदस्य बाधितत्वात् ।

एवं च (१) ब्रह्मस्वरूपभूतयोर्विज्ञानानन्दयोर्ब्रह्मभेदयोश्च एकतरपरिशेषाभावः, प्रमेयत्वादेः स्वाश्रितत्वादिकं वा भेदान्यनियम्यम्, भेदानियम्यत्वे सति नियम्यत्वाद्, यद्यदनियम्यत्वे सति नियम्यं तत्तदन्यनियम्यं यथा सम्मतम् । (२) ब्रह्मस्वरूपभूतं विज्ञानानन्दादिकं वा भेदान्यैकतरापरिशेषनिर्वाहकवद् भेदहीनत्वे सत्येकेतरापरिशेषरूपनिर्वाह्यवत्त्वात् । यद्यद्धीनत्वे सति यन्निर्वाह्यवत् तत्तदन्यनिर्वाहकवद्, यथा सम्मतम् । (३) स्वाश्रितं प्रमेयत्वादिकं वा भेदान्याश्रयाश्रयिभावनिर्वाहकवद्, भेदहीनत्वे सत्याश्रयाश्रयिभावरूपनिर्वाह्यवत्त्वात्, यद्यद्धीनत्वे सति यन्निर्वाह्यवत् तत्तदन्यनिर्वाहकवद्, यथा सम्मतमित्यादिप्रयोगो द्रष्टव्यः ।

किं चायं विशेषः प्रत्यक्षसिद्धः । तथा हि– तन्तुपटादिबुद्धीनां भिन्नघटपटादिबुद्धितो वैलक्षण्यं तावदनुभूयते । तच्च न तावत्सम्बन्धविषयत्वेन कुण्डबदरादिबुद्धितोऽपि वैलक्षण्यानुभवात् । नापि संयोगान्यसम्बन्धविषयत्वेन, घटतद्ज्ञानतदभाव बुद्धितोऽपि वैलक्षण्यानुभवात् । नापि स्वरूपप्रत्यासत्तिसंयोगान्यसम्बन्धविषयत्वेन, घटतद्धर्मिकान्योन्याभावादिबुद्धेः घटपटादिबुद्धितो वैलक्षण्याभावापातात् । नाप्ययुतसिद्धिविषयत्वेन, आश्रयाश्रयिभावनियमो ह्ययुतसिद्धिः, तत्र

तदानीं तेनाश्रयाश्रयिभावः कुण्डबदरादिबुद्धावपि भाति नियमस्तु न तन्तुपटादिबुद्धावपि, न हि प्रत्यक्षा तन्तुपटादिधीः तन्तुपटसम्बन्धनाशो वा तन्तुपटविभागो वा न भविष्यतीत्याकारा। नापि कुण्डबदरादिधीस्तयोः संबंधनाशो वा कुण्डबदर विभागो वा भविष्यतीत्याकारा। नापि समवायविषयत्वेन, उक्तरीत्या सम्बन्धनित्यत्वस्य वा सम्बन्ध्ययुतसिद्धत्वस्य वा तत्राऽस्फुरणात्। तस्मादभेदविषयत्वेनैव वैलक्षण्यं वाच्यम्। अयं घटः गजाश्वादिरेव सेना पत्रमेव ताटङ्कमित्यादौ पुरोवर्त्यादिना घटादेरिव आतानवितानात्मकाः तन्तवः पटः शुक्लः पट इत्यादावपि तन्त्वादिना पटस्याभेदप्रतीतेः। न चात्र पटत्वशुक्लत्वयोरेकस्थत्वमेव भातीति वाच्यम्। पटशुक्लयोरैक्यस्यापि तत्रान्तर्गतेः। अन्यथा क्वाप्यभेदो न सिद्ध्येत् घटः पटो नेति धीश्च भेदविषया न स्यात्। दण्डी चैत्र इत्यत्रापि दण्डिना चैत्रस्याऽभेदो भात्येव। न च शुक्लः पट इत्यत्र शुक्लवानेव शुक्लपदार्थ इति वाच्यम्। शुक्लरूपमित्यत्र यच्छुक्लन्तस्यैवेह प्रतीतेः। अन्यथेहापि शुक्लीपट इतिधीः स्यात्। मतुब्लोपादिकल्पनं तु व्यवहारे न तु प्रतीतौ। पटस्य शौक्ल्यं रूपी पट इत्यादिधीस्तु सम्बन्धविषया, न तु भेदविषया, सत्ता सतीत्यादिवत् भेदाभावेऽप्युपपन्ना। पटस्य तन्त्वन्यत्वे च गुरुत्वद्वयं स्यात् तन्तुयुक्ते भूतले पटवृत्तिश्च न स्यात्। मूर्तानां सामानाधिकरण्यायोगात्। व्यवहारार्थक्रियाभेदादि तु पत्रताटंकादिवदित्युक्तम्। तस्मात्तन्तुपटादिबुद्धिरभेदविषयैव। यदि चेयं केवलाभेदविषया, तर्हि समानाधिकरणं व्यवहारं न जनयेद्, घटः कलश इत्यव्यवहारात्। तेन ज्ञायते अधिकोऽप्यस्या विषयोऽस्तीति। न चायं भेदः पटो न शुक्ल इत्युल्लेखापातात्। भेदाभेदाविरोधाय विशेषस्यावश्यकत्वाच्च। तस्माद्योऽधिको विषयः, स एव विशेष इति सिद्धं विशेषस्य प्रत्यक्षत्वम्। तदुक्तम्– 'येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेदि'ति। 'अभेदेऽपि विशेषोऽस्ति व्यवहारस्ततो भवेदि'ति स्मृतिसिद्धश्च विशेषः। तस्माद्भेदस्य वस्तुना सविशेषाभिन्नत्वान्न कोऽपि दोष इति। विशेषसमर्थनम्॥ १६॥

## अद्वैतसिद्धिः

ननु– अस्माकं भेदो न स्वरूपमात्रम्, किं त्वन्योन्याभावः, स च वस्तुना सविशेषाभिन्नः, ततश्चाभिन्नत्वान्नानवस्थादिः । भेदप्रतिनिधेर्विशेषस्य विद्यमानत्वान्न पर्यायत्वादिकम्, विशेषश्च भेदहीनेऽपि एकतरपरिशेषाभावादिनिर्वाहक इति– चेन्न, पर्यायत्वादिप्रमाजनकस्य स्वरूपातिरिक्तस्य विशेषस्याङ्गीकारे तस्यैव भेदत्वेन भेदस्य धर्मभेदोक्त्ययोगाद्, विशेषस्यापि भेदः सविशेषाभिन्न एव वाच्यः । तथा चानवस्था-तादवस्थ्यम् । न च वैशेषिकाभिमतविशेषवत्तस्य स्वपरनिर्वाहकत्वम्, एतादृशविशेषे मानाभावात् । ननु– 'विज्ञानमानन्दं ब्रह्मे'त्यादिवाक्यबोध्यविज्ञानानन्दादीनां त्वन्मतेऽपि भेदस्य भेदाभेदयोर्वाऽखण्डार्थकत्वेन 'एकधैवानुद्रष्टव्य'मित्यादि श्रुतिविरोधेन चाङ्गीकर्तु-मशक्यतया भेदप्रतिनिधेर्विशेषस्यापर्यायत्वाद्यर्थमवश्यं स्वीकार इति अर्थापत्तिरेव मानमिति– चेन्न, भेदे ऐकरस्यश्रुतिविरोधवद् अत्रापि तत्तादवस्थ्यात् । लक्ष्यार्थभेदेऽपि वाच्यार्थभेदेना-पर्यायत्वस्य व्यावर्त्यभेदाद्वैयर्थ्यस्य चान्यथैवोपपत्तेः । किञ्च तवापि ज्ञानानन्दत्वादिनिमित्त-भेदादेवापर्यायत्वमस्तु, किं विशेषेण? न च– 'एवं धर्मा'निति श्रुत्या तयोरपि भेदनिषेधात् नैवमिति– वाच्यम्, तर्हि विशेषस्याप्याश्रितत्वेन धर्मतयाऽस्यापि भेदनिषेधात्तेनाप्यनुपपत्तिः । न च– ज्ञानत्वानन्दत्वयोरर्थप्रकाशत्वनिरुपाधिकेष्टत्वरूपयोरर्थप्रकाशनिरुपाधिकेष्टरूपाश्रय-विशेष आवश्यक इति– वाच्यम्, ज्ञानत्वानन्दत्वयोर्जातिरूपत्वेन उक्तरूपत्वाभावात् । न च– आकाशशब्दाश्रयशब्दयोः प्रवृत्तिनिमित्ताभेदेन पर्यायत्वापत्तिः, तत्परिहाराय विशेषो वाच्य इति– वाच्यम्, पर्यायत्वेऽपि सहप्रयोगस्य व्याख्यानव्याख्येयभावादिनाप्युपपत्तेः । न च– एवं ज्ञानानन्दयोरेकतरपरिशेषेण मोक्षे आनन्दप्रकाशो न स्यादिति– वाच्यम्, तयोर्भेदा-भावेन एकतरत्वस्यैवाभावात्, द्वयोर्वचने तरब्विधानात् । एतेन– शोधिततत्पदार्थैक्यस्य न भेदः, नापि भेदाभेदौ, किंत्वत्यन्ताभेदः, एवं च विशेषानङ्गीकारे स्वप्रकाशचैतन्यभाने ऐक्याभानापत्तिः, तत्प्रकाशस्य भेदभ्रमाविरोधित्वेऽप्यैक्यप्रकाशस्य तद्विरोधः, तस्य निरपेक्षत्वेऽपि ऐक्यस्य सापेक्षत्वं च नोपपद्यत इति– निरस्तम्, आवरकाज्ञानकल्पितांश-मादाय सर्वस्योपपत्तेः । न च– एकस्या एव शुक्तेरावृतानावृतत्वे शुक्त्यंशभेद एव स्यादिति– वाच्यम्, तदंशकल्पकस्य फलस्याभावात् ।

(अद्वैतसिद्धिः)

ननु– 'एवं धर्मा'निति श्रुतिरस्तु मानम्, अत्र हि ब्रह्मधर्मानुक्त्वा भेदो निषिध्यते। न च भेदप्रतिनिधेरभावे धर्मधर्मिभावो धर्माणामनेकत्वं च युक्तमिति– चेन्न, धर्मानित्यस्य निषेधानुवादत्वेन धर्मत्वानेकत्वादौ तात्पर्याभावात्। न च श्रुतितोऽन्यतो ब्रह्मधर्माः प्राप्ताः, आविद्यकमात्रस्य साक्षिसिद्धतया प्राप्तेः।

ननु– गुणगुणिनोरभेदपक्षे घटोपलम्भे शुक्लाद्यनुपलम्भार्थं भेदाभेदपक्षे तयोरविरोधार्थम् अत्यन्तभेदपक्षेऽपि समवायः सम्बन्धः, सत्ता सती, अन्त्यविशेषो व्यावृत्तः, कालः सदास्ति, देशः सर्वत्रास्तीत्यबाधितव्यवहारार्थं विशेषोऽङ्गीकार्यः अभावादावप्यस्तित्वादिर्नाभावादितो भिन्नः, गुणादिष्वनन्तर्भावेन षडेव पदार्था इति नियमभङ्गापत्तेः अनियमपक्षेऽप्यस्तित्वेऽप्यस्तित्वान्तरमित्यनवस्थापत्तेः, तत्रापि सोऽङ्गीकार्य इति– चेन्न, स्वभावविशेषादेव सर्वस्योपपत्तेः। न च– तर्हि विशेषस्याङ्गीकारेण मन्मतप्रवेश इति– वाच्यम्, तत्तदसाधारणस्वरूपस्यैव स्वभावविशेषशब्दार्थत्वेन त्वदुक्तविशेषानुक्तेः, तत्तदसाधारणरूपेण समवायादेः स्वनिर्वाहकत्वात्। अत एव– स्वनिर्वाहकत्वं हि स्वकर्मकनिर्वहणकर्तृत्वम्, तच्चैकस्मिन्विरुद्धमिति तदुपपादनायापि विशेषाङ्गीकार इति– निरस्तम्, स्वनिर्वाहकशब्दस्य स्वेतरानपेक्ष व्यवहारविषयत्वमात्रार्थकत्वाद्, अन्यथा विशेषोऽप्यनवस्थाभिया वस्त्वभिन्न इति तवाङ्गीकारेण तद्दूषणापातात्, स्वरूपभेदपक्षोक्तैकतरपरिशेषादिदूषणतादवस्थ्यापत्तेश्च। न च– अन्त्यविशेषवदस्य धर्मिग्राहकमानेन तादृक्स्वभावतया सिद्धेः पर्यनुयोगायोग इति– वाच्यम्, दृष्टान्त इव दार्ष्टान्तिके स्वरूपातिरेकस्य त्वयैवानङ्गीकारेण वैषम्यात्। यत्तु यत्रैव भेदाभावो भेदकार्यं च प्रमितं, तत्रैव विशेषः कल्प्यते, न तु प्रमितभेदे घटपटादौ विशेषमादाय भेदत्यागः, न हि सोमाभावे पूतीक इति तल्लाभेऽपि स इति, तन्न, मुख्यत्वनियामकस्य तत्रेवात्राभावाद् विशेषभेदयोरुभयोरपि स्वरूपपर्यवसन्नत्वेन त्वद्वाग्भङ्गेरनवकाशात्। किंच भेदः स्वयमेव स्वकार्यं करोतु, अभेदकार्यार्थं तत्प्रतिनिधिरस्त्वित्याद्यापत्तेश्च। न चानन्दादावभेदवद् भेदस्य बोधाभावः, अलौकिकस्थले द्वयोः साम्यात्।

ननु– अनुमानमत्र मानम्, तथा हि– (१) ब्रह्मस्वरूपभूतयोर्विज्ञानानन्दयोर्ब्रह्माभेदयोश्च एकतरपरिशेषाभावः, प्रमेयत्वादेः स्वाश्रितत्वादिकं वा भेदान्यनियम्यम्, भेदानियम्यत्वे सति नियम्यत्वाद्, यद् यदनियम्यत्वे सति नियम्यम्, तत् तदन्यनियम्यम्, यथा संमतम्।

(अद्वैतसिद्धिः)

(२) ब्रह्मस्वरूपभूतं विज्ञानानन्दादिकं वा, भेदान्यैकतरापरिशेषनिर्वाहकवद्, भेदहीनत्वे सति एकतरापरिशेषरूपनिर्वाह्यवत्त्वात्, यद्येन हीनत्वे सति यन्निर्वाह्यवद्, तत्तदन्यनिर्वाहकवद्, यथा संमतम् । (३) स्वाश्रितं प्रमेयत्वादिकं वा, भेदान्याश्रयाश्रयिभावनिर्वाहकवद्, भेदहीनत्वे सत्याश्रयाश्रयिभावरूपनिर्वाह्यवत्त्वाद्, यथा संमतमित्यादिकमिति चेन्न, त्वदभिमतविशेषादन्यस्यैवाविद्यादेः सर्वत्र नियामकत्वसंभवेनार्थान्तराद्, आविद्यकभेदनियम्यत्वेन बाधादसिद्धेश्च ।

ननु– तथापि प्रत्यक्षमत्र मानम्, तथा हि– तन्तुपटादिबुद्धीनां भिन्नघटादि बुद्धितो वैलक्षण्यं तावदनुभूयते, तच्च न तावत्संबन्धविषयत्वेन, कुण्डवदरादिबुद्धितो वैलक्षण्यानुभवात् । नापि संयोगान्यसंबन्धविषयत्वेन, घटतज्ज्ञानतदभावबुद्धितोऽपि वैलक्षण्यानुभवात् । नापि स्वरूपप्रत्यासत्तिसंयोगान्यसंबन्धविषयत्वेन, घटतद्धर्मिकान्योन्याभावबुद्धेर्घटपटादिबुद्धितो वैलक्षण्याभावापातात् । नाप्ययुतसिद्धिविषयत्वेन, आश्रयाश्रयिभावनियमो ह्ययुतसिद्धिः, तत्र च तदानींतन आश्रयाश्रयिभावः कुण्डबदरादावपि भाति, नियमस्तु न तन्तुपटादिबुद्धावपि, न हि तन्तुपटादिधीः प्रत्यक्षा, अनयोः सम्बन्धनाशो वा, विभागो वा, न भविष्यतीत्याकारा, न वा कुण्डवदरादिधीस्तयोः सम्बन्धनाशो वा, विभागो वा, भविष्यतीत्याकारिका । नापि समवायविषयत्वेन, उक्तन्यायेन सम्बन्धनित्यत्वस्य सम्बन्ध्ययुतसिद्धत्वस्य वा तत्र तत्रास्फुरणात् । तस्मादभेदविषयत्वेनैव वैलक्षण्यं वाच्यम्, अयं घटः, गजादिकं सेना, पत्रमेव ताटङ्क इत्यादौ पुरोवर्तिना घटादेरिवातानवितानात्मकास्तन्तव एव पटः, शुक्लः पट इत्यादावपि तन्त्वादिना पटस्याभेदप्रतीतेः । न च– अत्र पटत्वशुक्लत्वयोरेकस्थत्वमेव भातीति– वाच्यम्, पटशुक्लयोरैक्यस्यापि तत्रान्तर्गतेः, अन्यथा क्वाप्यभेदो न स्यात् । 'घटः पटो'नेति धीश्च भेदविषया न स्यात् । 'दण्डी चैत्र' इत्यादावपि दण्डिना चैत्रस्याभेदो भात्येव । न च– शुक्लः पट इत्यत्र शुक्लवानेव इति प्रतीयत इति– वाच्यम्, शुक्लं रूपमित्यत्र यत् शुक्लं तस्येवेह प्रतीतेः । अन्यथेहापि दण्डीतिवत् शुक्लीति स्यात् । मतुब्लोपादिकल्पनं शब्दविषयकव्यवहारे, न तु प्रतीतौ । पटस्य शौक्ल्यमित्यादिधीर्न भेदविषया, किन्तु संबन्धविषया सती सत्तेत्यादिवद् भेदाभावेऽपि उपपन्ना च । पटस्य तन्त्वन्यत्वे च गुरुत्वद्वयापत्तिः । तन्तुमति पटवृत्तिश्च न स्यात्, मूर्तानां समानदेशताविरोधात् । व्यवहारार्थक्रिया-

(अद्वैतसिद्धिः)

भेदादिकं तु पत्रताटङ्कादिवद्युक्तम् । तस्मात्तन्तुपटादिबुद्धिरभेदविषयैव । यदि चैवं केवलाभेदविषया, तर्हि सामानाधिकरण्यव्यवहारं न जनयेत्, घटः कलश इत्याद्यव्यवहारात् तेन ज्ञायते अधिकोऽप्यस्य विषयोऽस्ति । न चायं भेदः, घटः न शुक्ल इत्युल्लेखापातात्, भेदाभेदाविरोधाय विशेषस्यावश्यकत्वाच्च । तस्माद्योऽधिको विषयः, स विशेष इति– चेन्न, सत्यप्यभेदे काल्पनिकभेदमादाय तथा व्यवहारोपपत्त्या विशेषस्यासिद्धेः । न च पटो न शुक्लः इति प्रतीत्यापत्तिः, फलबलेन काल्पनिकभेदस्य सामानाधिकरण्यादि व्यवहारमात्रनिर्वाहकत्व-कल्पनेन विपरीतोल्लेखनं प्रत्यहेतुत्वात् ।

तस्मादेवं विशेषोऽयं न मानविषयः सखे ।
विषादं जहि मत्सिद्धाविद्यया सर्वसङ्गतिः ॥

इत्यद्वैतसिद्धौ विशेषखण्डनम् ॥

## न्यायामृततरङ्गिणी

**॥ भेदहीनेत्विति ॥ क्वचिद्भेदहीनेप्यपर्यायेतिपाठः । स न युक्तः । सुधायां तुशब्दोऽवधारण इति व्याख्यानात् । अपर्यायशब्दान्तरनियामक इत्यशेषभेदकार्यनिर्वाहकत्वोपलक्षणम् । अनेनैव विशेषलक्षणं चोक्तं भवति । भेदहीनेप्यनुपचरितभेदव्यवहारनिमित्तं विशेष इति ॥ विशेषे नामेति ॥ अभिन्नेपि विशेषकत्वाद्विशेषसंज्ञः । न केवलं भेदभेदिनोरेव विशेषोङ्गीक्रियतेऽपि तु सर्वत्रापीत्याह ॥ सोस्तीति ॥ नन्वखण्डवादे ज्ञानानन्दपदयोः पर्यायत्वेपि सखण्डवादेज्ञानत्वा-नन्दत्वयोःप्रवृत्तिनिमित्तयोःसत्वान्न ज्ञानानन्दपदयोः पर्यायत्वप्रसङ्गोतः सखण्डमते विशेषाङ्गी-कारोऽप्रयोजन इत्यत आह ॥ सखण्डेति ॥ शब्दाश्रयत्वादन्यदिति ॥ आकाशत्वस्याजातित्वेन शब्दाश्रयत्वरूपस्याकाशत्वस्याकाशपदेन प्रतिपादनात् । आकाशशब्दाश्रयशब्दयोः पर्यायत्वा-पातात्सह प्रयोगायोगः । न च व्याख्यानव्याख्येयभावादिना तदुपपत्तिः । आकाशत्वशब्दाश्रय-त्वयोरविशेषेतद्वारकाकाशादिशब्दानां व्याख्येयत्वाद्यनुपपत्तेः । अज्ञातज्ञातयोर्व्याख्येयव्याख्यान-रूपत्वात् ॥ एकतरेति ॥ एकपरिशेष इत्यर्थः । तेन ज्ञानानन्दयोर्भेदाभावे एकतरत्वमेवासिद्ध द्वयोर्विधाने तरविधानादितिनिरस्तम् ॥ धर्माणामनेकत्वञ्चेति ॥ चैतन्यमेकं सत्यत्वादी-न्यनेकानीति सङ्ख्यावैलक्षण्यमनेकत्वम् । अनुवादइति । तथा च न धर्मादौश्रुतेस्तात्पर्यम् । अत्यन्तभेदेति ॥ तथा च भेदाभेदयोरनुज्ञानाद्धर्मधर्मिभावादि युज्यत इत्यर्थः ॥ लोकतएवेति ।**

(तरङ्गिणी)

गुणगुणिनोरत्यन्तभेदाभावस्य नीलो घट इत्यादिना लोकत एव च सिद्धेर्न तत्र श्रुतितात्पर्यम् । भेदाभेदौचेति ॥ तथा च एवंधर्मानिति श्रुतिर्न भेदाभेदावनुजानातीत्यर्थः ॥ तस्यैवस्वभाव-विशेषस्येति ॥ तथा च मम मतप्रवेशः । ननु तत्तदसाधारणस्वरूपमेव स्वभावविशेषशब्देन मयोक्तं न तु त्वदुक्तोविशेष इति न तव मतप्रवेशः । मैवम् । विशेषं विना स्वरूपा-साधारण्यानुक्तेः ॥ विशेषाभावइति ॥ एतेन स्वनिर्वाहकशब्दस्य स्वेतरानपेक्षव्यवहार-विषयत्वमर्थ इति निरस्तम् । अविरोधाय स्वेतरापेक्षाया आवश्यकत्वात् ॥ स्वनिर्वाहक-श्चेतीति ॥ न विशेषे स्वस्य निर्वाहकत्वं विशेषान्तरं विनानुपपन्नमिति कथं नानवस्थेत्यत आह ॥ तस्य तथात्वं चेति ॥ वैशेषिकाभिमतान्त्यविशेषवदयंधर्मिग्राहकमानेन तादृक्स्वभावतया सिद्धः । न हि स्वयमनुपपन्नमनुपपत्त्यन्तरशान्त्यैप्रभवतीत्यर्थः ॥ प्रमितभेद इति ॥ मुख्य-सम्भवे प्रतिनिधेरनादरणीयत्वादित्यर्थः । ननूभयोरपि भेदकार्यकारित्वान्न मुख्यो भेद इत्यत्र मानमस्ति । मैवम् । सर्वाविवादस्यैव मानत्वात् । न हि विशेषे सर्वाविवादोस्ति । सर्वसङ्करवादिनाभेदवन्मिथ्याभूतस्यापि विशेषस्यानङ्गीकारात् ॥ एतेनेति ॥ भेदासम्भवे विशेषस्य ग्राह्यत्वकथनेन ॥ अभेदकार्यं त्विति ॥ एतावतापि विशेषसिद्धिः अभेदस्य भेदस्य वा प्रतिनिधिरिति वादान्तरमवशिष्यत इत्यपि बोध्यम् ॥ एवञ्चेति ॥ ननु त्रिष्वप्यनु-मानेष्वर्थान्तरम् । अविद्यादेः सर्वत्र नियामकत्वसम्भवात् । मैवम् । त्वदभिमताविद्याया अद्याप्यजीवनान्मोक्ष आनन्दप्रकाशस्याभावापाताचेत्युक्तत्वात् ॥ घटतद्धर्मिकेति ॥ घट-तद्धर्मिकान्योन्याभावबुद्धौ समवायादिरूपः स्वरूपप्रत्यासत्तिसंयोगाभ्यामन्यः सम्बन्धो न विषय इति तन्तुपटादिबुद्धितोस्यांवैलक्षण्यं न स्यादित्यर्थः ॥ तन्तुपटादिबुद्धावपीति ॥ तथा च तन्तुपटादिबुद्धेः कुण्डबदरादिबुद्धितो वैलक्षण्यं न स्यात् ॥ पुरोवर्तिनेति ॥ यथेदंपदार्थेन घटस्याभेदो भासते गजाश्वादिना च सेनायास्तथा तन्तुभिः पटस्य शुक्लादिभिश्चाभेदो भासते ॥ पटशुक्लयोरिति ॥ पटशुक्लयोरैक्यंविना पटत्वशुक्लयोरेकस्थत्वासम्भवात् ॥ अन्यथेति ॥ धर्म्यभेदं विनापि धर्मयोरैकाधिकरण्ये ॥ क्वापीति ॥ अयं घट इत्यादावपि घटत्वेदन्त्वादेरैकाधि-करण्यमात्रं नत्विदङ्घटयोरभेद इति स्यात् ॥ घटः पटो नेतीति ॥ अत्रापि घटत्वपटत्व-योरेकस्थत्वनिषेध एव न तु घटपटयोर्भेदो विषयः स्यात् । ननु दण्डी चैत्र इत्यत्र दण्डित्वचैत्रत्वयोरेकस्थत्वेपि न दण्डिचैत्रयोरैक्यमत आह ॥ दण्डीति ॥ शुक्लवानेवेति ॥ एवं च शुक्लः पट इत्यादिना न पटस्य शुक्लरूपाभेदः सिध्यतीति भावः ॥ शुक्लं रूपमित्यत्रेति ॥ न चैवं शुक्लः पट इतिवच्छुक्लं रूपं पट इत्यपि स्यादिति वाच्यम् । प्रतीत्यापादन इष्टापत्तेः

(तरङ्गिणी)
शुक्लत्वरूपत्वाभ्यां युक्तस्य पटाभेदप्रतीत्यङ्गीकारात् । व्यवहारे रूपशब्दप्रयोगस्त्वव्यावर्तकत्वात् । उपरञ्जकत्वेप्यसाधुत्वात् ॥ अन्यथेहापीति ॥ शुक्लः पट इत्यस्य पटे शुक्लरूपाभेदो न विषयः किं तु शुक्लवदभेद इत्यङ्गीकारे नायं दण्डः किन्तु दण्डीतिवत् नायं शुक्लः किन्तु शुक्लीतिधीः स्यात् । न हि यावद्द्रव्यभाविशुक्ले कदाप्येवं प्रतीतिरस्ति । ननु शुक्लः पट इति प्रतीतौ मतुब्लोपसत्त्वेन शुक्लवदभेदप्रतीतिमङ्गीकुर्वाणं प्रति शुक्ली पट इति प्रतीत्यापादनमनुकूलमेव । न हि शुक्लवान् शुक्लीतिप्रतीत्योर्विषयभेदोस्तीत्यत आह ॥ मतुब्लोपादिकल्पनं त्विति ॥ तथा च प्रतीतौ मतुब्लोपादेरभावाच्छुक्लरूपाभेद एव शुक्लः पट इत्यत्र भासते ॥ पटस्य शौक्ल्यमिति ॥ यद्यपि पटस्य शौक्ल्यमित्यत्र न पटशुक्लयोर्भेदशङ्का । षष्ठ्याः शौक्ल्यव्यतिरेकाविषयत्वात् । तथापि शुक्लं रूपमेव पटे शुक्लपदप्रवृत्तिनिमित्तम् । तदेव च शौक्ल्यमिति भेदशङ्का । ननु पटशुक्लादीनां सत्यप्यभेदे काल्पनिकभेदमादाय तथा व्यवहारोपपत्त्या विशेषासिद्धिरित्यत आह ॥ न चायं भेद इति ॥ ननु फलबलेन काल्पनिकभेदस्य सामानाधिकरण्यादिव्यवहारमात्रनिर्वाहकस्य कल्पनेन विपरीतोल्लेखनं प्रत्यहेतुत्वमत आह ॥ भेदाभेदाविरोधायेति ॥ तदुक्तमिति ॥ भवेदित्यतः परम् । भावाभावविभागेन यं विना न कथञ्चन । एतादृशे विशेषेऽस्मिन्को द्वेषो वादिनां भवेदित्युक्तम् । ननु वस्तुभिरभिन्नविशेषस्य सर्ववस्तुष्वेकत्वे वस्तूनामैक्यापत्तिः । मैवम् । प्रतिवस्तु नानाविशेषाङ्गीकारात् । एकत्रापि वस्तुनि यावन्तो व्यवहारास्तत्र तावतां विशेषाणामङ्गीकाराच्च । विशेषविशेषिणोर्विशेषाणां च न मिथो विशेषान्तरमङ्गीक्रियतेऽतो नानवस्था । तदुक्तमनुव्याख्याने । विशेषास्तेनन्ताश्च परस्परविशेषिणः । स्वनिर्वाहकतायुक्ताः सन्ति वस्तुष्वशेषत इति ॥ ॥ विशेषसमर्थनम् ॥

## न्यायामृतकण्टकोद्धारः

किञ्च भेदस्य स्वरूपत्वे पर्यायत्वादयो दोषाः ऐक्यादिप्रतिबन्द्यादिना समाहितास्ते भेदस्य स्वरूपमात्रत्वमभ्युपगम्य । अस्माभिर्भेदस्य वस्तुमात्रत्वानभ्युपगमान्नैते दोषा भवन्ति । अत एव प्रतिबन्दिमात्रमनुत्तरमिति निरस्तमित्याह ॥ वस्तुतस्त्विति ॥ तत्र भेदस्य वस्त्वभेदाङ्गीकार फलमाह ॥ ततश्चेति ॥ भेदस्य सविषयत्वाङ्गीकारफलमाह ॥ भेदे चेति ॥ ननु चापर्यायत्वादिनिर्वाहार्थमङ्गीकृतस्य विशेषस्य च भिन्नत्वादिना दुष्टत्वम् । न च सोपि वस्तुना सविशेषाभिन्न इति वाच्यम् । तथापि विशेषपरम्परया अनवस्थानात् । न च स स्वनिर्वाहक इति वाच्यम् । तत्र प्रमाणाभावादिति चेन्न । धर्मिग्राहकेण प्रमाणेन तस्य तथैव सिद्धत्वात् । यथा चैतत्तथा वक्ष्यते । ननु लक्षणाभावे कथं विशेषस्य स्वेतरव्यावृत्तत्वेन ज्ञानम् । न च वैशेषिकैस्तल्लक्षणमुक्तम्– अन्त्यव्यावृत्तिहेतवो विशेषा इतीति वाच्यम् । तदङ्गीकारेऽपसिद्धान्तादित्यत

(कण्टकोद्धारः)
आह ॥ विशेषश्चेति ॥ स्वभाव इति शेषः । अपर्यायत्वादिनिर्वाहकत्वं भेदेऽपीति तद्व्यावृत्यर्थं भेदहीन इत्युक्तम् । नचैवमपसिद्धान्तः । एतादृशस्य विशेषस्य वैशेषिकैः सर्ववस्तुष्वनभ्युपगमात् । नित्यद्रव्येष्वेव विलक्षणस्याभ्युपगमात् । अत्र सिद्धान्तसम्मतिमाह ॥ तदुक्तमिति ॥ ननूक्तलक्षणविशिष्टो विशेषः प्रमाणाभावादयुक्त इत्यत आह ॥ प्रमाणं त्विति ॥ यद्यपि ज्यैष्ठयात् प्रत्यक्षमादावुपन्यसनीयम् । तथापि तस्य परं प्रत्युपन्यासानर्हत्वात् पश्चात्तदुपन्यासः । यद्यपि बहुवादिसम्मतत्वात् अनुमानं प्रथममुपन्यासार्हं तथापि अर्थापत्युपन्यासेन प्रमाणद्वयोपन्यासः फलतीति तदुपन्यास इति द्रष्टव्यम् । नन्वनुपपद्यमानार्थादर्शनात् कथमर्थापत्तिरित्यतस्तद्दर्शयितुमुपोद्घातमाह ॥ तथाहीति ॥ अखण्डार्थत्वादिति ॥ निर्भेदार्थनिष्ठत्वादित्यर्थः ॥ तत्र चेति ॥ न च विशेषाङ्गीकारेऽपि ऐक्यस्य श्रुतिविरोधः सम एव । ऐक्यस्य निर्विशेषार्थत्वादिति वाच्यम् । ऐक्यं हि निर्भिन्नार्थत्वम् । तथाच विशेषस्य भेदप्रतिनिधित्वेन स्वीक्रियमाणस्य स्वरूत्वेन निर्भिन्नार्थत्वविरोधित्वाभावात् न तद्विरोधः ननु लक्ष्यार्थभेदाभावेपि मुख्यार्थभेदात् व्यावर्त्यभेदाच्च न पर्यायत्वादिकमित्यत आह ॥ लक्ष्यार्थेति ॥ यथा चैतत्तथोपपादितम् ॥ एवमिति ॥ न च विशेषस्याप्याश्रितत्वेन धर्मत्वात् तद्भेदनिषेधात् तेनाप्यनुपपत्तिरिति वाच्यम् । तस्य तद्भेदनिषेधेऽपि अपर्यायत्वादिनिर्वाहकत्वेन सिद्धत्वात् । तेनोपपत्तेरावश्यकत्वात् ॥ अन्यथा प्रमित-व्यवहारविलोपापत्तेरिति ॥ अर्थेति ॥ न च ज्ञानत्वानन्दत्वयोर्जातिरूपत्वेन नोक्तरूपत्वमिति वाच्यम् । तयोर्ब्रह्मसाधारण धर्मत्वेन ब्रह्मणि च जातेरभावेनोक्तरूपस्यावश्यकत्वात् । ब्रह्मलक्षणप्रश्नोत्तरवाक्ये लक्षणत्वेन श्रुतयोस्तयोर्जातिरूपत्वाभावाच्च । अन्यथासम्भवातिव्याप्त्यापत्तेरिति । ब्रह्मण एकत्वेन तत्र जातेरसम्भवात् शुद्धाद्वितीयस्यैव लक्ष्यत्वेन कल्पितभेदमादायापि ब्रह्मबहुत्वस्य वक्तुमशक्यत्वात् । ननु ज्ञानत्वानन्दत्वयोर्जातिरूपत्वाभावे उक्तोपाधिरूपयोस्तयोः स्वरूपानतिरेकेणाभेदात् ज्ञानानन्दशब्दयोः प्रवृत्तिनिमित्तभेदाभावेन पर्यायत्वं स्यात्तथाच पर्यायत्वापत्या सहप्रयोगो न स्यादित्यत आह ॥ आकाशस्येति ॥ आकाशस्यैकव्यक्तित्वेन तत्राकाशत्वजातेरभावात् । यदि स्वरूपविशेषमादाय प्रवृत्तिनिमि-त्तभेदस्तत्रापि तुल्यमिति भावः । नन्वाकाशशब्देऽष्टद्रव्यातिरिक्तद्रव्याश्रयत्वं प्रवृत्तिनिमित्तमतः कथं तदभेद इत्यत आह ॥ नहीति ॥ लाघवेन शब्दाश्रयत्वस्यैव प्रवृत्तिनिमित्तत्वादिति भावः । नचाकाश-शब्दाश्रयशब्दयोः पर्यायत्वेऽपि व्याख्यान व्याख्येयभावादिना सहप्रयोगोपपत्तिरिति वाच्यम् । सार्वत्रिकसह-प्रयोगानुपपत्तेरुक्तत्वात् । तस्याश्च पर्यायत्वेऽयोगात् । नन्वस्तु ज्ञानानन्दयोरेकतरपरिशेषः । तत्र को दोष इत्यत आह ॥ ज्ञानेति ॥ न च ज्ञानानन्दयोरभेदात् तरप्प्रयोगोयुक्तः द्वयोर्वचने तरब्विधानादिति वाच्यम् । लोकेज्ञानानन्दयोर्भेदेन द्वित्ववचनसम्भवात् । ब्रह्मण्यपि ज्ञानानन्दयोः निर्विशेषाभेदस्याद्याप्यसिद्धत्वाच्च । अभेदेऽपि ऋतं पिबन्तावित्यादौ द्विवचनस्य प्रयोगाच्च । यथा चैतत्तथोपपादितं गुहां प्रविष्टावित्यादौ भाष्यटीकादिना ।

स्थलान्तरेपि विशेषमङ्गीकारयितुमाह ॥ एवमिति ॥ ऐक्यस्येति ॥ आदिपदेनाद्वैतहान्यादिपरिग्रहः । एवञ्च चैतन्य भिन्नत्वे ऐक्यस्य सत्यत्वेऽद्वैतहानिः । मिथ्यात्वे च भेदसत्यत्वादिकमिति । नन्वज्ञानकृतां-

(कण्टकोद्धारः)

शभेदमादाय सर्वस्योपपत्तिरित्याशङ्क्य निषेधति ॥ विशेषाभाव इति ॥ तथाचावरकाज्ञानोपपत्तौ तत्कृतांशभेदकल्पना । तदेव न सम्भवतीति भावः । नन्वेकस्यैवावरणमनावरणं च किं न स्यादित्यत आह ॥ नहीति ॥ तथासति शुक्त्यंशस्य भेदापत्तेः । न च तत्रांशभेदकल्पकं फलं नेति वाच्यम् । प्रकृते फलभेदस्याप्यन्यथोपपत्तौ असम्भावितांशभेदकल्पनायाम् अतिप्रसङ्गस्य दुष्परिहरत्वात् । स्थलान्तरेपि विशेषं साधयति ॥ किञ्चेति ॥ ननु धर्मविधिभेदनिषेधान्यथानुपपत्या विशेषः साधनीयः । नच प्रकृते धर्मविधिः । धर्मनित्यस्यानुवादत्वादित्याशङ्क्य निषेधति ॥ नचेति ॥ श्रुतित इति ॥ तथाच श्रुत्यैव धर्मा विधातव्याः । नचाविद्यकधर्माणां साक्षिणैव प्राप्तिरिति वाच्यम् । सार्वज्ञादिधर्माणां तदभावात् । न ह्यहं सर्वज्ञ इति साक्ष्यनुभवोस्ति । प्रत्युत नाहं सर्वज्ञ इत्येव । तथाच न साक्षिप्राप्तिः । किञ्च सार्वज्ञादि धर्माणां श्रुति तात्पर्यविषयत्वेन ब्रह्मवदाविद्यकत्वासिद्धिः । किञ्चानुवादो व्यर्थः । न च निषेधार्थमिति वाच्यम् । पृथगित्यनेन विशेषणेन तस्यैव निषेधप्रतीतेः । अन्यथा तद्वैयर्थ्यप्रसङ्गात् ॥ तादृशेति ॥ अत्यन्तेत्यर्थः । किञ्चात्यन्तभेदनिषेधे हि भेदाभेदावभिमतौ वक्तव्यौ । न च तद्युक्तं स्मृति विरोधादित्याह ॥ भेदाभेदौ चेति ॥ स्वोक्तेऽर्थे सिद्धान्तसम्मतिमाह ॥ तदुक्तमिति ॥ धर्मानुक्त्वा विधाय पृथक्त्वस्य भेदस्य निषेधादत एवोक्तिपृथक्त्वनिषेधान्यथा उपपत्तित एव भेदादन्यो विशेषो ज्ञायत इत्यर्थः । साक्षितश्च ज्ञायत इति हेत्वन्तरम् ।

एवं वैदिकेष्वर्थेषु विशेषं साधयित्वा लौकिकेष्वपि तं साधयति ॥ किञ्चेति ॥ तत्परम्परेति ॥ भेदपरम्परेत्यर्थः । नन्वियं भेदाभेदपरम्परा प्रामाणिकीत्यत उक्तम् ॥ अप्रामाणिकीति ॥ न च भेदाभेदपरम्परायां कार्यमेव प्रमाणमिति वाच्यम् । तस्य प्रामाणिकविशेषेणैवोपपत्तेरिति भावः । ननु व्यवहारान्यथानुपपत्या विशेषाङ्गीकारे इदं रजतमिति व्यवहारादपि प्रथमविशेषाङ्गीकारः स्यादित्यत आह ॥ अबाधितेति ॥ तस्य बाधितत्वादिति भावः । ननु मया षट्पदार्थनियमो नाङ्गीक्रियत इत्यत आह ॥ अनियमपक्षेऽपीति ॥ न चानवस्था प्रामाणिकीति वाच्यम् । एकेन विशेषेणोपपत्तौ परम्पराकल्पनस्याप्रामाणिकत्वात् ॥ तस्यैवेति ॥ न च तत्तदसाधारणस्वरूपस्यैव स्वभावविशेषशब्दार्थत्वेन भवदुक्तविशेषैक्यमिति वाच्यम् । उक्तव्यवहार समर्थतादृशस्वरूपस्यैव मया विशेषत्वेनाङ्गीकारात् ॥ स्वस्येति ॥ न च स्वेतरानपेक्षव्यवहारविषयत्वमेव स्वनिर्वाहकत्वमिति वाच्यम् । इतरानपेक्षस्य व्यवहारस्य स्वानपेक्षत्वेन तस्याकस्मिकत्वं स्यात् । विशेष निषेधस्य शेषविधिनान्तरीयकत्वाच्च । स्वापेक्षा च कर्मत्वादिनेति कथं न विशेषसिद्धिः । ननु विशेषस्यापि वस्तुना भेदाङ्गीकारात् भेदपरम्परया विशेषपरम्परया वाऽनवस्था स्यादित्यत आह ॥ अयञ्चेति ॥ नच विशेषस्यापि कथं स्वनिर्वाहकत्वं तस्यापि वस्त्वभेदाङ्गीकारादित्यत आह ॥ तस्येति ॥ तस्य वस्तुनीव स्वस्मिन्नपि विशेषरूपत्वेन तदुपपत्तेः । तथात्वं च धर्मिग्राहकमानसिद्धमिति भावः । ननु भेदकार्यस्य विशेषनिर्वाहे घटपटादावपि विशेषेणैव भेदकार्यनिर्वाहात् भेदाङ्गीकारो व्यर्थः । एकेनैवोपपत्तौ पदार्थद्वयाङ्गीकारे गौरवमित्यत आह ॥ यत्रेति ॥ भेदकार्यमुपजीव्य कल्पितो विशेषो न भेदं व्याहन्ति उपजीव्यविरोधात् । अन्यथा पूतिकानामपि सोमबाधकत्वं स्यात् ।

(कण्टकोद्धारः)
सोमस्य प्रत्यक्षसिद्धत्वान्न बाधकत्वमिति यदि तर्हि भेदस्यापि प्रत्यक्षादि सिद्धत्वात् न तद्बाधकत्वम् । प्रतिनिधेर्मुख्यबाधकत्वादर्शनादित्याह ॥ न हीति ॥ एतेनालौकिकस्थले द्वयोः साम्यमिति निरस्तम् । भेदस्य एवं धर्मानिति बाधितत्वात् ॥ एतेनेति परामृष्टं हेतुं दर्शयति ॥ तत्रेति ॥ न च तत्रेवात्र मुख्यत्वनियामकं नेति वाच्यम् । सोमस्य श्रौतत्वात् कार्यनिर्वाहकत्वेन भेदस्य प्रत्यक्षसिद्धत्वस्यैव मुख्यत्वनियामकत्वात् ।

एवमर्थापत्या विशेषं प्रसाध्यानुमानेनापि तं साधयति ॥ एवमिति ॥ उक्तसाधनस्यानुमानेऽनुकूल-तर्कोपदर्शकत्वेनोपयोगीति दर्शितमेवश्चेति शब्देन । अत एवार्थापत्तिप्रदर्शनानन्तरमनुमान-प्रदर्शनमन्यथाऽनुमानमेवादावुपदर्शयेत । न केवलं तर्कोपदर्शकत्वेनोपयोगोऽपितु पक्षहेतुसाधकत्वेनापीति द्रष्टव्यम् । नचोक्तानुमानेविद्यारूपनिर्वाहकत्वेनार्थान्तरतेति वाच्यम् । तस्याः भेदकार्यनिर्वाहकत्वस्य काप्यदर्शनात् । स्वभावविशेषरूपस्य विशेषस्य घटाभावे घटाभाव इत्यादौ तन्निर्वाहकत्वदर्शनात् । अविद्याया निराकृतत्वाच्च । अत एवाविद्यकभेदस्याविद्यमानत्वात् बाधोऽसिद्धिश्चेति परास्तम् । तथात्वे तत्कार्यबाधितत्वप्रसङ्गात् । न चेष्टापत्तिः । बाधकानां मिथ्यात्वानुमानबाधप्रस्तावे निराकृतत्वात् घटपटादावाविद्यकभेदस्यैव वास्तवाभेदविरोधस्य त्वया वक्तव्यत्वेन प्रकृते वास्तवाभेदाभावप्राप्तेश्च ।

किञ्च प्रत्यक्षानुकूलानि प्रकृतानुमानानि प्रबलानीति वक्तुं विशेषे प्रत्यक्षमाह ॥ किञ्चेति ॥ नन्वेवं घट इत्यादिवदयं विशेष इत्यननुभवात् कथं प्रत्यक्षेण विशेषसिद्धिरित्यत आह ॥ तथाहीति ॥ अत्यन्तभिन्नेषु घटपटादिषु घटः पट इति बुद्धिर्नास्तीति शुक्लादिषु त्वस्ति । शुक्लः पट इत्यनुभवात् । तत्र किञ्चिद्विषयवैलक्ष्यण्यं वाच्यम् । तत्र किं सम्बन्धविषयत्वं वा संयोगान्यसम्बन्धविषयत्वं वा? स्वरूप-प्रत्यासत्ति संयोगान्यसम्बन्ध विषयत्वं वा समवायविषयत्वं वा अभेदविषयत्वं वा इति विकल्प्य परिशेषात् चरमपक्ष एवाश्रयणीय इति भावेनाद्यं दूषयति ॥ तच्चेति ॥ कुण्डेति ॥ कुण्डेबदरमितिवत् मृदि घट इत्यादि बुध्यापातातादित्यर्थः । द्वितीयं दूषयति ॥ नापीति ॥ घटेति ॥ तत्र संयोगान्यस्वरूपप्रत्यासत्तेः विषयत्वादित्यर्थः । तत्र घटोज्ञानमित्याद्यनुभवाभावात् । तृतीयं दूषयति ॥ नापीति ॥ अयुतसिद्धिर्हि युतसिध्यभावः । युतसिद्धिर्हि संयुक्तसिद्धिर्वा असम्बन्धसिद्धिर्वा । युमिश्रणानिश्रणयोरिति स्मरणात् । तत्राद्ये संयोगाविषयत्वमुक्तं स्यात् । तच्च न घटतद्ज्ञानादि बुद्धि तदित्यादिना दूषितत्वात् । द्वितीये सम्बन्धविषयत्वमुक्तं स्यात् । तदपि न कुण्डेत्यादिना दूषितत्वात् । अथायुतसिद्धत्वं रूढ्या आश्रयाश्रयिभाव नियम इति तत्राह ॥ आश्रयेति ॥ तत्रापि नियमो न भासते अथ भासते । आद्य आह ॥ तत्र वेति ॥ द्वितीय आह ॥ नियमस्त्विति ॥ शुक्लः पट इत्यादिज्ञाने नियमस्फुरणे नियमकाभावात् । नन्वाकारवैलक्ष्यण्यमेव नियामकं भविष्यतीत्यत आह ॥ नहीति ॥ पञ्चमं दूषयति ॥ नापीति ॥ उक्तेति ॥ नित्यसम्बन्धस्यैव समवायत्वादिति भावः । न च स्वरूपेण समवायविषयत्वं वैलक्ष्यण्यप्रयोजकमिति वाच्यम् । घटतद्धर्मकान्योन्याभाव बुद्धेः वैलक्ष्यण्यं न स्यात् । स्वरूपेण समवायविषयत्वात् । परिशेषसिद्धमर्थमुपसंहरति ॥ तस्मादिति ॥ नन्वभेदविषयत्वस्यानुभवानारूढत्वात् कथं तद्विषयत्वेन

(कण्टकोद्धारः)

वैलक्ष्यण्यमित्यत आह ॥ अयमिति ॥ पटेति ॥ पटशुक्लयोरैक्याभावे तद्धर्मयोरेकस्थत्वासम्भवादिति भावः ॥ अन्यथेति ॥ धर्मिणोरैक्याभान इत्यर्थः । धर्मद्वयस्यैकस्थत्वाभावविषयत्वं स्यादित्यर्थः । नन्वेवं दण्डी चैत्र इत्यादावपि अभेदभानं स्यादित्यत आह ॥ दण्डीति ॥ विशिष्टशुद्धयोरभेदाङ्गीकारादिति भावः । न चैवं दण्डेनाप्यभेदापत्तिः । मन्मते विशिष्टस्य पदार्थान्तरत्वात् ॥ अन्यथेति ॥ यदि शुक्लशब्दः शुक्लवत्परः स्यादित्यर्थः । ननु मतु लोपात् तथा न प्रयोग इत्यत आह ॥ मतुबिति ॥ ननु शुक्लपटयोरभेदे पटस्य शौक्ल्यमित्यादि भेदविषयबुद्धिर्न स्यादित्यत आह ॥ पटस्येति ॥ न च भेदे सम्बन्धविषयः प्रत्ययो न दृष्ट इत्यत आह ॥ सत्तेति ॥ सत्तादौ च सत्ताद्यङ्गीकारेऽनवस्था स्यादित्यर्थः । ननु पटतंत्वादीनां भेदे प्रबलबाधकाभावात् भेदमङ्गीकृत्य वैलक्ष्यण्य बुद्धिः स्वभावविशेषादुपपादनीयेत्यत आह ॥ पटस्येति ॥ तन्त्विति ॥ न च पटस्तन्तावेव न भूतल इति वाच्यं भूतले पट इत्यबाधितप्रतीतेः । न चेयं परम्परासम्बन्धविषयेति वाच्यम् । साक्षात्सम्बन्धावगाहिप्रतीतितो वैलक्ष्यण्याभावात् ननु पटशुक्लयोरभेदे व्यवहारार्थक्रियाभेदो न स्यात् इत्यत आह ॥ व्यवहारेति ॥ न च दृष्टान्ते विवदितव्यम् । पत्रमेव ताटङ्कमित्यबाधित- प्रतीत्या भेदसिद्धेः । परिशेषसिद्धं पक्षमुपसंहरति तस्मादिति ॥ नन्वेतावता विशेषस्य कथं प्रत्यक्षत्वमित्यत आह ॥ यदि चेति ॥ तस्मादिति ॥ ननु कथितभेदेनान्यथासिद्धत्वात् न विशेषसिद्धिरिति चेन्न । भेदकल्पनादशायामभेदव्यवहारादिकार्यायोगात् । नहि रजत एव नेदं रजतमिति कल्पनादशायाम् अभेदव्यवहाराद्यस्ति । त्वन्मते भेदस्यापि कल्पितत्वेन परस्परप्रतिबन्धादेकमपि कार्यं न सिध्यति । किञ्च कल्पितभेदेन व्यवहारे इदं रजतमित्यादिवत् बाध्येत । नच बाधो दृश्यते । तस्मात् पारमार्थिकमेवोपपादकं कल्प्यमितिविशेषसिद्धिः । प्रकारान्तरेण परिशेषस्वरूपं दर्शयति ॥ यद्वेति ॥ विशेषस्य प्रत्यक्षसिद्धत्वे सिद्धान्तसम्मतिमाह ॥ तदुक्तमिति ॥ विशेषस्मृतिमप्याह ॥ अभेदेऽपि इति । परमप्रकृतमुपसंहरति ॥ तस्मादिति ॥ इति विशेषसमर्थनम् ।

## १७. भेदपञ्चके प्रत्यक्षम्

ननु तथापि न तावज्जीवेश्वरभेदे प्रत्यक्षं मानम्, ईश्वरस्याप्रत्यक्षत्वेन तद्धर्मिकस्य तत्प्रतियोगिकस्य वा भेदस्याप्रत्यक्षत्वादिति चेद्,

उच्यते– प्रत्यक्षं तावत् जीवस्य ब्रह्मतोभेदे प्रमाणम्, घटः पटो नेतिवन्नाहं सर्वज्ञः नाहं निर्दुःख इत्यनुभवात् । न च ब्रह्मणोऽप्रत्यक्षत्वात्ततो भेदोऽप्यप्रत्यक्षः । यत्र हि यत्सत्त्वमनुपलब्धिविरोधि तत्र तदभावः प्रत्यक्षः । न तु प्रतियोगिप्रत्यक्षत्व-मभावप्रत्यक्षत्वे तन्त्रम्, जलपरमाणौ पृथिवीत्वाभावस्य प्रत्यक्षत्वापातात् । स्तम्भः पिशाचो न भवति, घटः परमाणुर्न भवतीति प्रत्यक्षप्रतीतेश्च । प्रतीत्यनुसारेण च

प्रयोजकं कल्प्यम्, अन्यथा जीवेश्वराभेदश्रुतेरप्रसक्तप्रतिषेधत्वं स्यात् । तद्भेदश्रुतेश्च त्वदुक्तं प्रत्यक्षप्राप्तानुवादित्वं न स्यात् । ईश्वरस्य जीवाद्भेदे तु 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप, उत्तमः पुरुषस्त्वन्य' इत्यादि तद्वचनानुमितमीश्वरप्रत्यक्षं प्रमाणम् । नन्वत्र यो भाति अन्तःकरणाविद्याविशिष्टस्याहमर्थस्य निर्दुःखाद्भेदः, स ममापीष्टः, यस्तु नेष्टः शुद्धचैतन्यस्य निर्दुःखाद्भेदः, सोऽत्र न भातीति चेन्न, योऽहमस्वाप्सं तस्य ममाज्ञानं संसारश्च सोऽहं निर्दुःखो नेति सुषुप्तिकालीनान्तःकरणानवच्छिन्नाभेदेन च प्रत्यभिज्ञायमाने शुद्धे प्रतीतेः संसाराधारस्य तदनाधाराद्भेद एव ह्यावयोर्विवादः, न तु चैतन्यस्य चैतन्यात् । साधितं चाहमर्थस्य शुद्धात्मत्वम् । यद्यपि घटाद्यपि निर्दुःखं तथापि निर्दुःखमात्राद्भेदधीरियं ब्रह्मणोऽपि भेदविषयैव । न चाद्वैतमते जीवदुःखेन ब्रह्मापि दुःखीति न निर्दुःखं ब्रह्मेति वाच्यम्, बहुजीववादे ब्रह्मभावरूपमुक्तेरपुमर्थत्वापातात् । एकजीववादेऽप्यौपाधिकश्यामत्वादेर्बिम्बमहाकशयोरिव दुःखित्वादेर्ब्रह्मण्यसत्त्वात् । विस्तृतं चैतदविद्याश्रयभंगे, साधितं च प्रत्यक्षप्रामाण्यावसरे बाह्यप्रत्यक्षस्य बलवत्प्रत्यक्षेतरेण न बाधः, साक्षिप्रत्यक्षस्य तु न केनापि बाध इति । तस्माज्जीवेशभेदः प्रत्यक्षः । एवं शब्दादनुमानादिना वा चैत्रात्मादिकं ज्ञातवता मैत्रेण (१) नाहं चैत्रः, (२) घटो न ब्रह्म, (३) घटो न पटः, (४) नाहं घट, (५) नाहं ब्रह्म– इत्यनुभवात् पञ्चापि भेदाः प्रत्यक्षाः ।भेदपञ्चके प्रत्यक्षम् ॥

## अद्वैतसिद्धिः

एवं प्रत्यक्षतः प्राप्तभेदस्यैव निवारणात् ।
असाक्षात्कृतजीवेशभेदादौ का कथा तव ॥

तथा हि– ईश्वरस्याप्रत्यक्षत्वेन तद्धर्मिकस्य तत्प्रतियोगिकस्य वा भेदस्य ग्रहीतुमशक्यत्वात् । ननु– ईशधर्मिकभेदस्य जीवाप्रत्यक्षत्वेऽपि स्वधर्मिकभेदः तथापि तत्प्रत्यक्षः, 'नाहं सर्वज्ञो नाहं निर्दुःख' इत्याद्यनुभवात् । न च– योग्यप्रतियोगिकत्वमभावयोग्यत्वे प्रयोजकमिति– वाच्यम्, स्तम्भः पिशाचो नेत्यादिप्रत्यक्षरूपफलबलेन संसर्गाभावे तथात्वेऽपि

(अद्वैतसिद्धिः)
अन्योन्याभावे अधिकरणयोग्यताया एव तन्त्रत्वात् । वस्तुतस्तु– संसर्गाभावेऽपि न तन्मात्रं योग्यता, जलपरमाणौ योग्यपृथिवीत्वाभावग्रहप्रसङ्गात्, किंतु यत्र यत्सत्त्वमनुपलब्धिविरोधि, तत्र तस्याभावो योग्य इति अधिकरणनियतैव सर्वाभावसाधारणी योग्यता । सा च प्रकृतेऽप्यस्त्येव, अन्यथा अभेदश्रुतेरप्रसक्तप्रतिषेधकतापत्तेः । भेदश्रुतेश्च त्वदुक्तप्रत्यक्षसिद्धभेदानुवादित्वं न स्यात् । ईशधर्मिकजीवभेदेऽपि 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप । उत्तमः पुरुषस्त्वन्य' इत्यादितद्वचनानुमितप्रत्यक्षसिद्धत्वमेवेति– चेन्न, उक्तानुभवस्यान्तःकरणाद्यवच्छिन्नचैतन्यस्य तदनवच्छिन्नचैतन्यप्रतियोगिकभेदावगाहितया शुद्धचैतन्यधर्मिकनिर्दुःखादिप्रतियोगिकभेदानवगाहित्वात् । श्रुतिरप्यवच्छिन्नभेदानुवादिनी । भेदनिषेधश्रुतिस्तु अनुमानादिप्रसक्तभेदनिषेधपरा । न च 'योऽहमस्वाप्सं तस्य ममाज्ञानसंसारादि, सोऽहं निर्दुःखो ने'ति सुषुप्तिकालीनान्तःकरणावच्छिन्नाभेदेनाज्ञानाद्याश्रयाभेदेन च प्रत्यभिज्ञायमाने शुद्धे भेदप्रतीतिः, संसाराधारस्य तदनाधारात् भेद एव ह्यावयोर्विवादः, न तु चैतन्यस्य चैतन्यादिति– वाच्यम्, एतावता अज्ञानावच्छिन्न एव भेदग्रहो न तु शुद्धे । न हि सुषुप्तिकाले अन्तःकरणानवच्छिन्नत्ववदज्ञानानवच्छिन्नत्वमप्यस्ति ।

यत्तु चैतन्यस्य चैतन्याद् भेदो नास्तीति, तदस्माकमनुकूलम्, चैतन्ये स्वाभाविकस्याभेदस्यैवास्मद्ग्रहस्यत्वात् भवत्प्रतिकूलं च । न हि भवतां चैत्रमैत्रादि चैतन्यानामैक्यमिति मतम् । अहमर्थस्य यथा न शुद्धात्मत्वं तथोक्तं प्राक् । साक्षिप्रत्यक्षस्याध्यस्तादिसाधारणतया तत्सिद्धत्वमात्रेण भेदे अबाधितत्वमसंभावितमेव । एतेन– जीवानां परस्परं भेदे प्रत्यक्षं प्रमाणमिति– निरस्तम्, नाहं चैत्र इत्यादेरवच्छिन्नभेदविषयत्वात् । 'घटो न ब्रह्म, घटो न पटः, नाहं घट' इत्यादिप्रत्यक्षस्य कल्पितभेदविषयत्वेन तात्त्विकभेदासिद्धेः । तस्मात् भेदपञ्चके न प्रत्यक्षं प्रमाणम् ॥ इत्यद्वैतसिद्धौ भेदपञ्चके प्रत्यक्षभङ्गः ॥

## न्यायामृततरङ्गिणी

**॥ असाधारण्यादिति ॥ धर्मिसमसत्त्वभेदस्य घटादौ सत्त्वेपि तत्र सार्वज्ञरूपहेतोरभावात् ॥ आभाससाम्यादिति ॥ शरीरात्मसंयोगाधारत्वेन हेतुनाऽऽत्मन्यनित्यत्वादेरपि सुसाधत्वात् ॥ यत्र हीति ॥ एतद्व्याख्या ख्यातिबाधान्यथानुपपत्तिभङ्गे ॥ यस्य ममाज्ञानमिति ॥ नन्वेतावताप्यज्ञानावच्छिन्न एव भेदग्रहो न तु शुद्धे । न हि सुप्तिकाले अन्तःकरणान-**

(तरङ्गिणी)

वच्छिन्नत्ववदज्ञानानवच्छिन्नत्वमप्यस्तीत्यत आह ।। अज्ञानाद्याश्रयाभेदेन चेति ।। यादृशं चैतन्यमज्ञानाश्रयस्त्वयोच्यते तस्य निर्दुःखात् भेदप्रतीतेः । न ह्यज्ञानावच्छिन्नमज्ञानाश्रयः । नन्वज्ञानाश्रयशुद्धान्निर्दुःखस्य शुद्धस्य कथञ्चिद्भेदः सिध्यति न तु जीवादत आह ।। संसाराधारस्येति ।। मम मते जीवस्यैव संसराधारत्वाज्जीव एव निर्दुःखेश्वरभेदः पर्यवस्यति । तव तु जीवगतशुद्धांशस्य शोधितत्वंपदार्थरूपनिर्दुःखेन भेदः इति जीवब्रह्मभेदसिद्धिः । शोधिततत्वंपदार्थयोर्भेदपर्यवसानात् ।। चैतन्यान्तरादिति ।। चैतन्यसामान्यादित्यर्थः । चैतन्ये चैतन्यविशेषभेदसत्त्वेपि तत्र तत्सामान्यभेदस्य मयाप्यनङ्गीकारात् । एतेन चैतन्यस्य चैतन्याद्भेदो नास्तीत्येतदस्मदनुकूलं भवत्प्रतिकूलं च । न हि भवतां चैत्रमैत्रादिचैतन्यानामैक्यमिति मतमिति निरस्तम् ।। भेदपञ्चके प्रत्यक्षम् ।।

## न्यायामृतकण्टकोद्धारः

नन्वेवं बाधक परिहारेऽपि जीवेश्वर भेदासिद्धिः । साधक प्रमाणाभावात् । न हि बाधकाभावमात्रेण वस्तुसिद्धिः । तथा च नृशृङ्गादिसिद्धिरपि स्यात् । न च जीवेशंभेदे प्रत्यक्षादिसद्भाव इति शङ्कते नन्विति । ईश्वरस्येति । भेदस्योभयधर्मत्वे धर्मिप्रत्यक्षरूपकारणाभावात्, भेदप्रतियोगित्वस्य परमात्मनिष्ठत्वे प्रतियोगिप्रत्यक्षरूपकारणाभावात् भेदस्याप्रत्यक्षत्वमिति भावः । जीवेश्वराविति । अत्र जीवेश्वरशब्दाभ्यां संसाराधिकरणचैतन्ये विवक्षिते । अतो नार्थान्तरतेति द्रष्टव्यम् । विरुद्धेति । सर्वथेति द्रष्टव्यम् । अतात्विक इति । नन्वेवमनुमानदूषणेऽनुमानमात्रोच्छेदः । पर्वतो वह्निमानित्यत्रापि तात्विकादिविकल्पैर्दूषण सम्भवात् । स्वकृतमिथ्यात्वाद्यनुमानेऽपि अस्य सम्भवेन स्वव्याघाताच्चेति चेन्न । अस्य दूषणस्य सिद्धान्ते वक्तव्यत्वात् । पूर्वपक्षिणा च वितण्डारीत्योक्तत्वात् । दुःखादेरिति । यद्यपि दुःखादिस्वामित्वादिरूप विरुद्धधर्म विवक्षायां नासिद्धिः । दुःखादेरन्तःकरण धर्मत्वेपि तत्स्वामित्वस्यात्मनिष्ठत्वात् । तथापि निर्धर्मके चैतन्ये विरुद्धधर्मानङ्गीकारेणेदमुक्तमिति द्रष्टव्यम् । अप्रसिद्धेति । उपलक्षणमेतत् । वेदान्तवेद्यस्याखण्डस्य सर्वज्ञत्वानङ्गीकारेणासिद्धिरपीति द्रष्टव्यम् । यद्यप्यसिद्ध विशेषणत्वं न दोषः । तत्वेऽपि व्यतिरेकव्याप्ति ग्रहसम्भवस्य सिद्धान्त उपपादितत्वात् तथापीदमापातत इति द्रष्टव्यम् । अप्रसिद्धविशेषणतापरिहारार्थमाह ब्रह्मेति । असाधारण्यादिति । साध्यवतिघटादौ सर्वज्ञत्वाभावादसाधारण्यमित्यर्थः । यद्यप्यसाधारण्यं दशाविशेषे दोषः । तथापि अनुकूलतर्काभावे तद्दोषत्वमभिप्रेत्योक्तम् । ऐक्येति । ऐक्यवादिनात्मत्वस्य जातित्वानङ्गीकारात् । कल्पितभेदेन जातित्वोपपत्तेरन्यथासिद्धिश्चेत्यपि द्रष्टव्यम् । दुःखमिति । गुणत्वावान्तरजातित्वानङ्गीकारात् कल्पितभेदेन जातित्वोपपत्तेरन्यथासिद्धिश्चेत्यपि द्रष्टव्यम् । स्वदुःखमिति । गुणत्वावान्तरजातिर्गुणत्वविभाजकोपाधिः दुःखत्वादिः । तेन सजातीयं दुःखान्तरम् । तद्भिन्नाश्रितमित्यर्थः । तेन दुःखिभेदसिद्धिः । शब्द इति । नचाश्रावणेति हेतुविशेषणमिति

(कण्टकोद्धारः)

वाच्यम् । अप्रयोजकत्वात् । यदि चौपाधिकभेदमादाय व्यभिचारपरिहारस्तदा नैव सिद्धसाधनतेति द्रष्टव्यम् । योगीति । नचायोगीति शरीरविशेषणमतो न व्यभिचार इति वाच्यम् । अप्रयोजकत्वापरिहारात् । अश्रावणेति । गुणाधिकरणत्वादित्युक्ते कालेव्यभिचारः । अत उक्तं विशेषेति । तावत्युक्त आकाशे व्यभिचारः । अत उक्तमश्रावणेति । असिद्धेरिति । गुणाश्रयत्वं द्रव्यत्वं, जातिर्वा? उभयथाप्यसिद्धिरित्यर्थः । आभासेति । आकाशं द्रव्यत्वापरजात्यानाना । शरीराकाश संयोगाधारत्वात् । शरीरवत् । इत्य- भाससाम्यमित्यर्थः । अनुवादकत्वात् । तथाच न तस्यास्तत्र तात्पर्यमिति भावः । यद्यपि जीवेश्वरभेदे प्रत्यक्षादीनां दूषितत्वात् न श्रुतेरनुवादकत्वम् । तथाप्याभाससिद्धि मङ्गीकृत्येदमुक्तम् । अत एवाह व्यावहारिकेति । उक्तं न्यायमन्यत्रातिदिशति एवमिति । भेदान्तरे जडजीव भेदादावित्यर्थः । जीवेश्वरभेदे प्रत्यक्षं प्रमाणं नेति वदन् प्रष्टव्यः किं जीवधर्मिको भेदो न प्रत्यक्ष उतेश्वर धर्मिक इति । आद्ये न दोष इत्याह घट इति । अनुभवात् । साक्षिणेति शेषः । न च भेदस्योभयधर्मत्वात् ईश्वरप्रत्यक्षत्वे कथं भेदस्य प्रत्यक्षत्वमिति वाच्यम् । भेदस्योभयधर्मत्वानङ्गीकारात् । उभयधर्मत्वे द्वित्ववदुभय सत्व एव प्रतीयेतेति भावः । ननु तथापि प्रतियोगि प्रत्यक्षत्वस्याभावप्रत्यक्षत्वे तन्त्रत्वात् तदभावेकथं भेदस्य प्रत्यक्षत्व- मित्याशङ्क्य निषेधति नचेति । यत्र हीति । तथाच योग्यानुपलब्धिमत्त्वेनैवाभावस्य योग्यत्वम् । प्रकृते च यदि निर्दुःखतादात्म्यमात्मनि स्याद्, उपलभ्येतेति योग्यानुपलब्धिसत्वादिति भावः । प्रतियोगि प्रत्यक्षत्वमात्रं किं संसर्गाभाव प्रत्यक्षे तन्त्रमुतान्योन्याभावप्रत्यक्षे इति विकल्प्याद्यं प्रत्याह जलेति । योग्यानुपलब्धिस्तु तत्र नास्ति । जलत्ववदनुपलम्भसम्भवात् । द्वितीयं प्रत्याह स्तम्भ इति । स्तम्भवृत्ति स्तम्भत्वादेरिवानुपलब्धिविरोधित्वात् पिशाचत्वादेरिति भावः । ननु तथापि प्रयोजकाभावे कथं प्रत्यक्षत्वमित्यत आह प्रतीतीति । अन्यथेति । जीवेश्वरभेदस्य प्रत्यक्षत्वाभावे । नचानुमानादिप्रसक्तिमादाय नोक्तदोष इति वाच्यम् । प्रत्यक्षेण विरुद्धधर्माद्यग्रहे लिङ्गाभावेनानुमानाद्यसम्भवात् । अनुमानाद्यङ्गीकारे च निर्निमित्तं प्रत्यक्षनिरासानुपपत्तेश्च । अनुमानादि गम्यत्वेनैव भेदप्रामाणिकत्व सम्भवाच्च । ईश्वरधर्मिक भेदस्य न प्रयक्षत्वमिति द्वितीयं निराकरोति ईश्वरस्येति । तान्यहमिति स्मृतिर्विरुद्धधर्मप्रत्यक्ष एव मानम् । न भेदप्रत्यक्ष इति उत्तम इति स्मृत्यन्तरोदाहरणम् । नचास्य कृष्ण वाक्यत्वात् कृष्णस्य चाब्रह्मत्वात् कथं ब्रह्मधर्मिक भेदस्य प्रत्यक्षत्व इयं स्मृतिः प्रमाणमिति वाच्यम् । कृष्णस्तु भगवान् स्वयमित्यादि स्मृत्यनुरोधेन विश्वरूप प्रदर्शनादिना तस्य परब्रह्मत्वनिर्णयायाहमिति । नचात्रापि अज्ञानाद्यवच्छिन्न एव भेदप्रतीतिर्न शुद्धचैतन्य इति वाच्यम् । दण्डत्वादेरवच्छेदकत्वेन कारणत्वस्य दण्डमात्रनिष्ठत्ववदज्ञाना- देरवच्छेदकत्वेन शुद्ध एव तस्य प्रतीतेः । ननु संसाराधारे भेदप्रत्यक्षसाधनमर्थान्तर ग्रस्तमित्यत आह संसाराधारस्येति । ननु तथाप्यहमर्थस्य चिदचित्संवलनरूपत्वेन तत्र भेदप्रतीतावपि न शुद्धस्य भेद प्रतीतिरित्यत आह साधितं चेति । तथाचाहं शब्देन जीवचैतन्यमेवाभिधीयते । ततस्तस्यैव भेदः प्रत्यक्ष इति भावः । नचेति । तथाच न ब्रह्मभेद सिद्धिरिति भावः । इदं बहुजीववादिना चोद्यते उतैकजीववादिना? आद्य आह बह्विति । द्वितीय आह एकेति । ननु बिम्बे विशिष्टे दुःखित्वादेरभावेऽपि ब्रह्मणि तदस्तीत्यत

(कण्टकोद्धारः)

**आह विस्तृतं चेति । अस्तु भेद प्रत्यक्षम् । तथापि तस्य प्रत्यक्षानुमानाभ्यां बाधान्न तेन भेदसिद्धिरित्यत आह साधितं चेति । उपसंहरति तस्मादिति । नचैतावता जीवेश्वरभेदस्य प्रत्यक्षत्वं, न तु जीवादिपरस्य भेदचतुष्टयस्य प्रत्यक्षत्वम् । अत उक्तन्यायातिदेशेन तत्रापि प्रत्यक्षत्वं साधयति एवमिति । अनुपपत्तिपरिहारः पूर्ववदेव द्रष्टव्यः । भेदपञ्चके प्रत्यक्षम् ।**

## न्यायामृतप्रकाशः

(एतावत् पर्यन्तं ग्रन्थपातः) ईश्वरस्येति ॥ भेदस्याभावरूपत्वेन तत्प्रत्यक्षत्वे धर्मिप्रतियोग्युभयप्रत्यक्षत्वं तन्त्रमिति तस्याभिप्रायः ॥ अप्रत्यक्षत्वादिति ॥ प्रत्यक्षाप्रत्यक्षसम्योगोऽप्रत्यक्षः वायुवनस्पतिसम्योगवदित्यर्थः ॥ अप्रसिद्धेति ॥ तात्विकभेदस्याप्रसिद्धेरित्यर्थः ॥ धर्मीति ॥ घटादौ तत्समसत्ताकव्यावहारिकभेदवत्त्वं प्रसिद्धमित्यर्थः ॥ असाधारण्यादिति ॥ घटादौ साध्यवति सर्वज्ञत्वहेतोरभावादित्यर्थः । नाप्रसिद्धविशेषणमिति भावः ॥ आत्मभेदमात्रसिद्धरिति ॥ मात्रशब्दः कात्स्नर्ये बुद्ध्या विवेकेन आत्मशब्देन सम्बध्यते । एवं च सर्वात्मनां भेदसिद्धिरित्यर्थ इत्याहुः । वस्तुतस्तु अनेनानुमानेन आत्मभेदमात्रं सिद्ध्यति न तु तस्य तात्विकत्वं । तात्विकत्वसिद्धिस्तुप्रकारान्तरेण आत्मत्वस्य जातित्वे तदाश्रयव्यक्तिभेदस्यौपाधिकत्वायोगात्स्वाभाविकत्वसिद्धिरिति द्रष्टव्यम् । कुतो नेत्यत आह ॥ आत्मैक्येति ॥ आत्मत्वे जातित्वाभावादित्यर्थः । दुःखं देवदत्तदुःखम् ॥ स्वजातीयेति ॥ स्वसजातीयेत्यर्थः । स्वशब्देन पक्षीभूतंदुःखं तत्सजातीयं दुःखं यज्ञदत्तीयादिदुःखं तदाश्रयो यज्ञदत्तादिस्तद्भिन्नो यो देवदत्तस्तदाश्रितमित्यनेनानुमानेन देवदत्ताद्यात्मनांभेदः सिद्ध्यति । ननु नानेनानुमानेन जीवानां भेदः सिध्यति स्वशब्दोक्तं यत्पक्षीभूतं दुःखं पदार्थत्वादिना तत्सजातीयं घटादिस्तदाश्रयो मृत्पिण्डस्तद्भिन्नो यो देवदत्तस्तदाश्रिततत्वसिद्ध्या जडजीवभेदसिद्धेरर्थान्तरमित्यत उक्तम् ॥ गुणत्वावान्तरजात्येति ॥ गुणत्वावां तरजातिर्दुःखत्वं तया यत्सजातीयं तद्दुःखान्तरमेवायास्यति ततश्च जीवानां भेदसिद्धिरिति ध्येयम् ॥ रूपवदिति ॥ तत्र गुणत्वावांतरजातीयरूपत्वं तेन यत्स्वजातीयं रूपान्तरं तदाश्रयो घटः तद्भिन्नो य आश्रयः पटः तदाश्रितमित्यर्थः ॥ शब्द इति ॥ गुणत्ववतिशब्दे गुणत्वावान्तरजात्या शब्दत्वेन सजातीयं शब्दान्तरं तदाश्रय आकाशस्तद्भिन्नाश्रितत्वाभावेन साध्याभावादिति भावः ॥ दुःखादीनामिति ॥ गुणत्वावान्तरजात्या दुःखत्वेन स्वसजातीयदुःखान्तराश्रयभूतयज्ञदत्तीयान्तःकरणभिन्नदेवदत्तीयान्तःकरणाश्रितत्वसद्भावेनान्तःकरणभेदसिद्ध्यान्तःकरणभेदस्य चास्माकं सम्मतत्वेन जीवानां भेदासिद्ध्या सिद्धसाधनतेत्यर्थः ॥ स्वसङ्ख्येति ॥ तथा च शरीराणामनेकत्वात्तत्रत्यात्मनामप्यनेकत्वसिद्धिरिति ज्ञेयम् ॥ सम्मतवदिति ॥ व्यतिरेकेण घटवदित्यर्थः ॥ योगिशरीर इति ॥ योगसामर्थ्येन गृहीतेषु सौभर्यादिशरीरेषु विद्यमानस्यात्मन एकत्वेन साध्याभावादिति भावः । आत्मा चैत्रात्मा ॥ आत्मेति ॥ मैत्रात्मेत्यर्थः । व्यावहारिकभेदेनार्थान्तरवारणाय धर्मीत्यादिविशेषणम् । धर्मिभूतचैतन्येत्यर्थः । अन्यथा चैत्रस्य व्यावहारिकत्वेन पुनर्व्यावहारिकभेदमादायार्थान्तरतापत्तेरिति ध्येयम् ॥ आत्मेति ॥ आत्मा नानेति साध्ये अन्तःकरणोपाधिकं नानात्वमादायाऽर्थान्तरतापत्तेरुक्तम् ॥ द्रव्यत्वव्याप्येति ॥ आत्मत्वजात्येत्यर्थः । तथाचात्मत्वजात्याश्रयतया नानेति यावत् । स्वभावत

(प्रकाशः)

एव नाना न तूपाधित इत्याशयः । सङ्ख्यादिगुणाधिकरणे द्रव्यत्वव्याप्यजातेरभावेन तदाश्रयतया नानात्वशून्ये कालादौ व्यभिचारवारणाय विशेषपदम् । शब्दाख्यविशेषगुणाधिकरणे स्वाभाविकनानात्वशून्ये आकाशे व्यभिचारवारणाय अश्रावणेति गुणविशेषणम् ॥ घटवदिति ॥ द्रव्यत्वव्याप्यजातिः घटत्वं तदाश्रयतया नानात्वमस्तीत्यर्थः ॥ निर्गुणत्वेनेति ॥ निर्धर्मकत्वेनेत्यर्थः । तेन हेतुद्वयस्याप्यसिद्धिरिति भावः ॥ साध्यएवेति ॥ द्रव्यत्वसाक्षाद्व्याप्यजात्या नानात्वरूपे साध्य एवेत्यर्थः ॥ शरीरवदिति ॥ तत्रद्रव्यत्वव्याप्यजातिः शरीरत्वं तदाश्रयतयैव नानात्वमस्तीत्यर्थः ॥ आभाससाम्यादिति ॥ शरीरात्मसम्योगाधारत्वेनैव हेतुना आत्मनि अनित्यत्वादेरपि सुसाधत्वादित्यर्थः ॥ भेदान्तरेपीति ॥ जडजीवभेदादावपीत्यर्थः ॥ यत्र हीति ॥ एतच्चानिर्वाच्यभङ्गे स्पष्टं व्याख्यातं प्रतियोगिप्रत्यक्षत्वमभावप्रत्यक्षत्वे न प्रयोजकं अन्वयतो व्यतिरेकतश्च व्यभिचारादित्याह ॥ जलपरमाणाविति ॥ ननु तर्ह्यभावप्रत्यक्षत्वे किं प्रयोजकमिति तत्राह ॥ प्रतीतीति ॥ स्तम्भः पिशाचो न भवतीत्यन्योन्याभावस्य प्रत्यक्षत्वदर्शनात्तदनुसारेणान्योन्याभावप्रत्यक्षत्वेऽधि- करणप्रत्यक्षत्व-मेव प्रयोजकमिति कल्पनीयमित्यर्थः ॥ अन्यथेति ॥ जीवेश्वरभेदस्योक्तरीत्या प्रत्यक्षत्वाप्राप्तत्व इत्यर्थः । श्रुत्या प्राप्तस्य श्रुत्या निषेधे तु श्रुतेरुन्मत्तवाक्यत्वापत्तेरित्याशयः ॥ तद्भेदश्रुतेरिति ॥ जीवेश्वरभेदस्य प्रत्यक्षसिद्धत्वाभावे तत्प्रतिपादक(द्वासुपर्णे)त्यादिश्रुतेस्त्वयोच्यमानं प्रत्यक्षप्राप्तभेदानुवादित्वं न स्यादित्यर्थः ॥ एवं च जीवस्ये-श्वराद्भेदसिद्धिः । तथा ईश्वरस्य जीवाद्भेदोपि प्रत्यक्षसिद्ध एव । नन्वस्मदादिप्रत्यक्षेण कथं तत्सिद्धिरिति चेन्न । ईश्वरप्रत्यक्षेणैव तत्सिद्धेरुच्यमानत्वात् । नन्वस्माकं कथं तत्प्रत्यक्षावगम इति चेत् तद्वाक्यादेवेत्याह ॥ तान्यह-मिति ॥ यदुक्तं नाहंनिर्दुःख इत्यादिप्रत्यक्षमेव जीवेश्वरभेदे प्रमाणमिति तदयुक्तमित्याशङ्कते ॥ नन्वत्रेति ॥ प्रत्यक्ष इत्यर्थः । निर्दुःखात् ब्रह्मचैतन्यात् नेष्टः मम ॥ शुद्धेति ॥ जीवचैतन्यस्येत्यर्थः । निर्दुःखात् ब्रह्मचैतन्यात् अत्र नाहं निर्दुःख इति प्रत्यक्षे ॥ अन्तःकरणानवच्छिन्नेति ॥ चैतन्येत्यर्थः । भेदेति ॥ अहं निर्दुःखो नेति भेदप्रतीतेरित्यर्थः । नन्वेतावताऽज्ञानाश्रयाच्छुद्धान्निर्दुःखस्य शुद्धस्य भेदः सिध्यति न तु जीवादित्यत आह ॥ संसारेति ॥ अज्ञानमेव संसारः । भेद एव भेदविषय एव । तथा च मम मते जीवस्यैव संसाराधारत्वाज्जीव एव निर्दुःखेश्वरभेदो विवादापन्नः सिद्ध एवेत्यर्थः ॥ तथापीति ॥ तथाचाहमर्थे निर्दुःखत्वावच्छिन्नप्रतियोगिताको भेदोह्यत्र प्रतीयते तथाचेश्वरोपि निर्दुःखत्वरूपप्रतियोगितावच्छेदकावच्छिन्न इति तत्प्रतियोगिको भेदोपि प्रतीयत एवेत्यर्थः ॥ न निर्दुःखमिति ॥ तथा च ब्रह्म न निर्दुःखत्वरूपप्रतियोगितावच्छेदकावच्छिन्नमित्यर्थः ॥ बहुजीवेति ॥ एकस्य मुक्तावप्यपरस्य संसारिणः सत्वेन तद्दुःखेन ब्रह्मणोपि दुःखितया तद्भावरूपमुक्तेर-पुरुषार्थत्वादिति भावः । यद्यप्येकजीववादे ब्रह्मभावरूपमुक्तेः पुरुषार्थत्वं युक्तं तथापि जीवदुःखेन न ब्रह्मणो दुःखित्वं युक्तं तथाहि दर्पणाद्युपाधिकृतमपि श्यामत्वं प्रतिबिम्ब एव न बिम्बे यथा वा घटाद्युपाधिकृतं परिच्छिन्नत्वं घटाकाश एव न महाकाशे एवमन्तःकरणाद्युपाधिकृतमपि दुःखादिकं जीव एव न ब्रह्मणि अतो ब्रह्मणोपि प्रतियोगितावच्छेदकावच्छिन्नत्वाद्युक्तस्तस्माज्जीवस्य भेद इत्याशयेनाह ॥ एकजीवेति ॥ ननु निर्दुःख-त्वादिग्राहिप्रत्यक्षं वाधितं किं न स्यादिति चेत्तत्राह ॥ साधितं चेति ॥ न बाध इति ॥ साधितमित्यन्वयः । एवं च बाह्यप्रत्यक्षस्यापि यदा बलवत्प्रत्यक्षं विनान्येन बाधो नास्ति । तदा किमु वक्तव्यं साक्षिप्रत्यक्षस्य बाधो नास्तीति प्रकृते च निर्दुःखत्वादिग्राहिप्रत्यक्षं साक्षिरूपमेवेति भावः । एवं जीवेशभेदस्य प्रत्यक्षत्वमुपपाद्य

(प्रकाशः)
भेदचतुष्टयस्यापि प्रत्यक्षत्वमुपपादयति ॥ एवमिति ॥ ननु नाहं चैत्र इत्यत्र चैत्रस्य प्रतियोगित्वात्परात्मनश्चाप्रत्यक्षत्वात्कथं तत्प्रतियोगिताकभेदस्यप्रत्यक्षत्वमित्यत आह ॥ शब्दादित्यादि चेष्टालिङ्गकानुमानेन नाऽहं चैत्र इति परस्परं जीवभेदानुभवः घटो न ब्रह्मेति जडेश्वरभेदानुभवः घटो न पट इति परस्परजडभेदानुभवः नाहं घट इति जडजीवभेदानुभव इति द्रष्टव्यम् ॥ ॥ भेदपञ्चके प्रत्यक्षविवरणम् ॥

## १८. जीवब्रह्मभेदे अनुमानानि

ननु भवेन्नाम प्रत्यक्षमनुमानं तु न सम्भवति । तथा हि–

नाप्युमानम्– (१) जीवेश्वरौ भिन्नौ विरुद्धधर्माधिकरणत्वाद्, दहनतुहिनवदित्यत्र तात्त्विके भेदे साध्ये दृष्टान्तस्य साध्यवैकल्यात् । अतात्त्विके साध्ये सिद्धसाधनात् । दुःखादेरन्तःकरणधर्मत्वेनासिद्धेश्च । (२) ब्रह्म तत्त्वतो जीवाद्भिन्नम्, सर्वज्ञत्वाद्, व्यतिरेकेण जीववदित्यत्राप्रसिद्धविशेषणत्वात् । ब्रह्म धर्मिसत्तासमानसत्ताकभेदवदिति साध्यनिर्देशोऽप्यसाधारण्यात् । (३) नाप्यात्मत्वम्, नानाव्यक्तिनिष्ठम्, जातित्वात्पृथिवीत्ववदित्यादिभिरात्मभेदमात्रसिद्धिः, आत्मैक्यवादिनं प्रत्यसिद्धेः । (४) दुःखं गुणत्वावान्तरजात्या स्वजातीयाश्रयभिन्नाश्रितं गुणत्वाद्रूपवदित्यत्र शब्दे व्यभिचारात् । दुःखादीनामन्तःकरणधर्मत्वेन सिद्धसाधनाच्च । (५) विमतानि शरीराणि स्वसङ्ख्यासंख्येयात्मवन्ति, शरीरत्वात्, सम्मतवदित्यत्र योगिशरीरे व्यभिचारात् । (६) आत्मा धर्मिसत्तासमानसत्ताकात्मप्रतियोगिकभेदवान्, द्रव्यत्वाद्, घटवत् । (७) आत्मा द्रव्यत्वव्याप्यजात्या नाना अश्रावणविशेषगुणाधिकरणत्वाद्, घटवदित्यत्र चात्मनो निर्गुणत्वेनासिद्धेः । उक्तसाध्य एव शरीरात्मसंयोगाधारत्वात् शरीरवदित्यत्राभाससाम्यात् । नापि द्वा सुपर्णे'त्यादिश्रुतिः, अनुवादकत्वात् । व्यावहारिकभेदपरत्वाद्वा । एवं भेदान्तरेऽपि प्रमाणं निरसनीयमिति चेत्,

अत्राभिदध्महे–

सन्त्यनुमानानि (१) ईश्वरः जीवप्रतियोगिकतात्त्विकभेदवान्, सर्वशक्तित्वात् सर्वज्ञत्वात् सर्वकार्यकर्तृत्वात् स्वतन्त्रत्वाच्च व्यतिरेकेण जीववत् । (२) जीवो वा

ब्रह्मप्रतियोगिकतात्त्विकभेदवान् अल्पशक्तित्वाद् अल्पज्ञत्वाद् अल्पकर्तृत्वात् संसारित्वाच्च, व्यतिरेकेण ब्रह्मवत् । परमतेऽपि जीवब्रह्मणोर्व्यावहारिकभेदस्य सत्त्वात् पक्षदृष्टान्तभावः । अन्यथा परस्यापि जीवात्मानस्तत्त्वतः परमात्मनो न भिन्नाः आत्मत्वात्परमात्मवद् इत्यादि न स्यात् । एतेन सर्वाद्वैतवादिनं प्रति साध्यावैशिष्ट्यादिदोषान्न भेदेऽनुमोक्तिर्युक्तेति निरस्तम्, परेणापि स्वव्याहति-निरासाय व्यावहारिकभेदमात्रेण हेतुसाध्यादि व्यवस्थायाः स्वीकृतत्वात् । भेदस्य वस्तुस्वरूपत्वेऽपि विशेषबलाद् वस्तुविशेषणत्वं चास्तीत्युक्तत्वात् भेदवत्त्वं न बाधितम् । न चाप्रसिद्धविशेषणता, जीवब्रह्माभेदेऽनिष्टप्राप्तेर्वक्ष्यमाणत्वेन तद्विपर्ययस्याष्टद्रव्यातिरिक्तद्रव्यादेरिवानुमानयोग्यत्वात् । यद्वा (३) जीवः किंचिद्धर्मिकप्रतियोगिज्ञानाबाध्यभेदप्रतियोगी, (४) ब्रह्म वा किंचिद्धर्मिकप्रतियोगिज्ञानाबाध्य-भेदप्रतियोगि, अधिष्ठानत्वाच्छुक्तिवदितिसामान्यतस्तत्सिद्धेर्नाप्रसिद्धिः ।

केचित्तु जीवाद् भिन्न इत्येव साध्यम्, तथा च नाप्रसिद्धिः । मिथ्याभेदेन सिद्धसाधनं तु निरसिष्यते । यद्वा ब्रह्म जीवप्रतियोगिकधर्मिसत्तासमान-सत्ताकभेदवदिति साधनान्नाप्रसिद्धिर्नापि सिद्धसाधनम् । न चोभयत्राप्यसाधारण्यम्, तस्यागृह्यमाणविशेषावस्थायामेव दोषत्वादित्याहुः । इतरे तु ब्रह्म जीवप्रतियोगिक-तात्त्विकभेदवन्नेति साधनान्नाप्रसिद्धिः । परपक्षेऽपि घटादेर्जीवेन तात्त्विकाभेदा-भावादित्याहुः ।

अपरे त्विह साध्यस्य जीवप्रतियोगिकतात्त्विकभेदस्यान्योन्याभावरूपत्वान्ना प्रसिद्धिर्दोषः । सा हि व्याप्तिग्रहविघटकत्वेन दोषः । पक्षता तु सिषाधयिषाविरह-सहकृतसाधकप्रमाणाभाववत्त्वादिरूपा सन्देहानपेक्षा । सापेक्षत्वेऽपि शब्दोऽभिधेय इत्यादाविव जीवब्रह्मणोर्भेदेतात्त्विकत्वमस्ति न वेति सन्देहेनैव सा युक्ता । न तु ब्रह्म जीवात्तत्वतो भिन्नं न वेतिसन्देहसापेक्षा व्यतिरेकिणि च साध्याभावस्य व्याप्तिः । अत्र च साध्याभावो जीवाभेदो जीवे प्रसिद्धः । यत्र तु व्यतिरेकिणि भावः साध्यः, तत्राभावस्य भावज्ञानाधीनत्वात् सा दोष इत्याहुः ।

यद्वा ब्रह्म जीवाद् भिन्नम्, दुःखाननुभवितृत्वाद्, घटवदितिप्रयोगान्नाप्रसिद्ध-विशेषणत्वासाधारण्ये । न च मिथ्याभेदेन सिद्धसाधनम्, भेदरूपार्थे साध्येऽर्थ-शून्यभ्रान्त्या सिद्धसाधनोक्त्ययोगात् । एतदनुमितिविषयतया प्रामाणिकत्वेन सिद्ध्यतो भेदस्य मिथ्यात्वायोगाच्च । अन्यथा त्वदीयेषु मिथ्यात्वानुमानेषु कल्पित-मिथ्यात्वादिना सिद्धसाधनं स्यात् । तात्त्विकत्वविशेषणेऽपि तात्त्विकत्वेन कल्पित-भेदेन सिद्धसाधनमिति च स्यात् ।

(१) यद्वा ब्रह्म जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवद्, दुःखाननु-भवितृत्वात्, अभ्रान्तत्वाद्, असंसारित्वाच्च, घटवत् । (२) जीवो वा ब्रह्मप्रति-योगिकधर्मिसत्तासमानसत्ताकभेदवान्, असर्वशक्तित्वाद्, असर्वज्ञत्वाद्, अस्वतन्त्र-त्वाच्च, घटवदितिप्रयोगान्न दोषः । अत्र च जीवब्रह्मशब्देन त्वन्मतेऽपि तत्त्वमसी' त्यत्र तत्त्वंपदाभ्यां जीवाः परमात्मनस्तत्त्वतो न भिद्यन्ते, आत्मत्वात्, परमात्मव'दित्यत्र च जीवपरमात्मशब्दाभ्यां ये विवक्षिते, ते संसाराधारानाधा-रचैतन्ये विवक्षिते । ते च सत्ये इति न सिद्धसाधनम् । न च ब्रह्मणो धर्मित्वाभावाद्बाधः, धर्मित्वाभावं प्रति धर्मित्वाधर्मित्वाभ्यां व्याघातात् । इह धर्मिशब्देनाश्रयमात्रस्य विक्षितत्वाच्च । धर्मिशब्दस्य च पित्रादिशब्दवत्सम्बन्धि-शब्दत्वान्न मिथ्यात्वं प्रति धर्मिभूतशुक्तिरूप्यसमानसत्ताकप्रातिभासिकभेदेन सिद्ध-साधनम् । न हि माता पूज्येत्युक्ते स्वसुतमाता भार्या पूज्यते । धर्मिपदस्थाने स्वपदं वास्तु । सत्तात्रैविध्यं वदतस्तव मतेऽपि ब्रह्मणि बाधाभाव रूपाया वा तदुपलक्षितस्वरूपरूपाया वा सत्तायाः सत्त्वान्न बाधः ।

यद्वा धर्मिसत्तासमानसत्ताकेतिपदस्थाने पारमार्थिकेति यावत्स्वरूपरूपमनुवर्त-मानेति वा स्वाज्ञानाकार्येति वा स्वज्ञानाबाध्येति वा विशेषणं देयम् । स्वशब्दस्य च समभिव्याहृततत्तदर्थपरत्वस्य व्युत्पन्नत्वान्न कश्चिद्दोषः । अन्यथा तवापि स्वप्रागभावव्यतिरिक्तेत्याद्ययुक्तं स्यात् । न चात्राद्ये साध्ये दृष्टान्तस्य साध्यवै-कल्यम् । घटो जीवप्रतियोगिक (स्वज्ञानाबाध्यभेदवानिति) टिप्पणसंमतः पाठः ।

प्रतियोगिज्ञानाबाध्याभेदाप्रतियोगित्वाद्, यथा दूरस्थवनस्पत्योरेक इत्याद्यनुमानेन तत्सिद्धेः ।

यद्वा ब्रह्म, तत्त्वतो जीवाभिन्नं नेति, साध्यम् । एवं च न साध्यवैकल्यशंकापि । त्वन्मतेऽपि कल्पिते घट अकल्पिताज्जीवात्तात्त्विकभेदवत् तात्त्विकाभेदस्याप्यभावात् । न चान्तःकरणस्यैव दुःखानुभवितृत्वात् तदननुभववितृत्वं जीवेऽनैकान्तम्, त्वन्मतेऽपि दुःखादेरन्तःकरणधर्मत्वेऽपि व्यावहारिकस्य स्वतोऽनर्थरूपदुःखानुभावात्मकबन्धस्य मोक्षसामानाधिकरण्याय जीवस्थत्वाश्यम्भावात् । त्वन्मतेऽपि यदनर्थरूपमहं दुःखीत्यनुभवितृत्वं जीवस्य तदभावो हेतुरिति न कश्चित्क्षुद्रोपद्रवः । न चासंसारित्वादेर्ब्रह्मण्यसिद्धिः जीवेनकान्त्यं वा, त्वन्मतेऽप्यौपाधिकश्यामत्वादिवत्तस्य व्यवस्थितत्वात् । एवं च जीवेश्वरौ धर्मिज्ञानाबाध्यपरस्परप्रतियोगिकभेदवन्तौ, विरुद्धधर्माधिकरणत्वात्, दहनतुहिनवदित्याद्यपि सुस्थम् ।

विरोधश्च यद्यपि न सहानवस्थानम्, अद्वैतिनं प्रत्यसिद्धेः । नापि वध्यधातुकभावः, नाजात एकोऽन्यं हन्ति, नाप्यन्याधार इति न्यायेन तस्य भेदासाधकत्वात् । नापि परस्पराभावव्याप्यत्वं परस्पराभावरूपत्वं वा, कालभेदेन नीलरूपं रक्तरूपं नीलरूपप्रागभावं च प्रत्याश्रये घटे व्यभिचारात् । तथापि परस्परात्यन्ताभावव्याप्यत्वं वा परस्परात्यन्ताभावरूपत्वं वा कालभेदेनापि सामानाधिकरण्यायोग्यत्वं वा विरोधः । संयोगतदत्यन्ताभावयोश्च सामानाधिकरण्यं नेत्यावयोर्मतमिति न तदाश्रये व्यभिचारः । तादृशविरुद्धधर्माश्च स्वतंत्रत्वादयः । न चासिद्धिः

अल्पशक्तिरसार्वज्ञ्यं पारतंत्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ॥
'स्वाभाविकं तयोरेतन्नान्यथा तु कथंचने'

त्यादि श्रुतेः । न च कल्पितायाः सार्वज्ञ्यासार्वज्ञ्यादिव्यवस्थाया वर्णे दीर्घत्वह्रस्वत्वव्यवस्थावत्कल्पितभेदेनैवोपपत्त्या तात्त्विकं भेदं प्रत्यप्रयोजकत्वं सगुण-

वादोक्तन्यायैः श्रुतसार्वज्ञ्यादेः ब्रह्मणि प्रत्यक्षप्रमाण्यवादोक्तन्यायैर्नित्यनिर्दोषानुभवरूपसाक्षिसिद्धासार्वज्ञ्यादेश्च जीवे सत्यत्वात् । एवं ब्रह्मस्वज्ञानाबाध्यजीवप्रतियोगिकभेदवत्, पदार्थत्वाद् घटवत् । जीवस्यापि जीवान्तराद्भिन्नत्वात् न व्यभिचारः । चेतनत्वं जीवत्वावच्छिन्नप्रतियोगिताकधर्मिज्ञानाबाध्यभेदवद्वृत्ति, सर्वचेनवृत्तित्वाच्चेतनावृतित्वरहितत्वाद्वा, शब्दार्थत्ववदित्यादीनि चानुमानानि जीवेश्वरभेदे प्रमाणानि । विपक्षे ब्रह्मणोऽपि जीववत्संसाराद्यापत्तिः एतेन

अप्रमेयेऽनुमानस्य प्रवृत्तिर्न कथञ्चन ।
प्रमेयस्य त्वनात्मत्वात्तत्र भेदानुमेष्यते ॥

इति निरस्तम्, त्वन्मतेऽप्यात्मनः शब्दलिङ्गादिजन्यवृत्तिव्याप्यत्वात् । अन्यथा

अप्रमेयेऽनुमानस्य प्रवृत्तिर्न कथञ्चन ।
प्रमेयस्य त्वनात्मत्वात्तदैक्यानुमितिः कथम् ॥

इति सुवचत्वेन त्वदीया आत्माभेदे अनुमाद्युक्तिरयुक्ता स्यात् । जीवब्रह्मभेदानुमानानि ॥

## अद्वैतसिद्धिः

नाप्यनुमानम् । (१) जीवेश्वरौ, भिन्नौ, विरुद्धधर्माधिकरणत्वाद्, दहनतुहिनवदित्यत्र दुःखादेरन्तःकरणादिधर्मत्वेन स्वरूपासिद्धेः, एकत्रैव निर्दुःखत्वदुःखवत्त्वयोरवच्छेदकभेदेन दृष्टतया धर्मिभेदासाधकत्वाद्, भेदमात्रे सिद्धसाधनात्, तात्त्विकभेदे साध्यवैकल्यात् (२) ब्रह्म, तत्त्वतो जीवाद् भिन्नम्, सर्वज्ञत्वात्, व्यतिरेकेण जीववदित्यत्राप्रसिद्धविशेषणत्वात् ब्रह्म, धर्मिसत्तासमानसत्ताकभेदवदिति साध्यकरणे असाधारण्यात्, (३) आत्मत्वं, नानाव्यक्तिनिष्ठम्, जातित्वात्, पृथिवीत्ववदित्यत्रात्मैक्यवादिनं प्रत्यसिद्धेः, कल्पितव्यक्तिनिष्ठत्वेन सिद्धसाधनाच्च (४) दुःखं, गुणत्वावान्तरजात्या सजातीयश्रयात् भिन्नाश्रितम्, गुणत्वाद्रूपवदित्यत्र शब्दे व्यभिचारात्, दुःखादीनामन्तःकरणधर्मत्वेन सिद्धसाधनाच्च (५) विमतानि शरीराणि, स्वसङ्ख्या सङ्ख्येयात्मवन्ति, शरीररत्वात्, संमतवदित्यत्र योगिशरीरे

(अद्वैतसिद्धिः)

व्यभिचारात् । (६) आत्मा, धर्मिसत्तासमानसत्ताकात्मप्रतियोगिकभेदवान्, द्रव्यत्वाद्, घटवत्, (७) आत्मा, द्रव्यत्वव्याप्यजात्या नाना, अश्रावणविशेषगुणाधिकरणत्वाद्, घटवदित्यत्र चात्मनो निर्गुणत्वेनासिद्धेः, चैत्रश्चैत्रप्रतियोगिकोक्तभेदवान्, उक्तहेतोरुक्तदृष्टान्तवदित्याभाससाम्याच्च ।

एतेन– नवीनानुमानान्यपि– निरस्तानि, (१) ईश्वरः, जीवप्रतियोगिकतात्त्विकभेदवान्, सर्वशक्तित्वात्, सर्वज्ञत्वात्, सर्वकार्यकर्तृत्वात्, स्वतन्त्रत्वाद्वा, व्यतिरेकेण जीववत् । (२) जीवो वा, ब्रह्मप्रतियोगिकतात्त्विकभेदवान्, अल्पशक्तित्वाद्, अल्पज्ञत्वाद्, अल्पकर्तृत्वात्, संसारित्वाद्वा, व्यतिरेकेण ब्रह्मवद्, इत्यादिषु भेदस्य स्वरूपत्वेन तद्वत्त्वसाधने बाधात् । न च विशेषमादाय तदुपपादानम्, तस्य स्वरूपानतिरेकेण तद्वत्त्वसम्पादकत्वात्, अप्रसिद्धविशेषणतापत्तेश्च । न च– जीवब्रह्माभेदेऽनिष्टप्रसक्त्या अष्टद्रव्यातिरिक्तद्रव्यत्वादेरिव त्वत्सिद्धस्वप्रकाशत्वादरिव च साध्यस्य मानयोग्यत्वसम्भव इति– वाच्यम्, तात्त्विकभेदव्यतिरेकेऽपि उपाधिकल्पितभेदेन सर्वानिष्टपरिहारसम्भवात् । न च– जीवो ब्रह्म वा, किञ्चिद्धर्मिकप्रतियोगिज्ञानाबाध्यभेदप्रतियोगी, अधिष्ठानत्वात्, शुक्तिवदिति सामान्यतः साध्यप्रसिद्धिरिति– वाच्यम्, यत्किञ्चिदभावप्रतियोगिघटादिज्ञानाबाध्यभेदप्रतियोगित्वेनात्मज्ञानाबाध्यभेदासिद्धेः, स्वप्रतियोगिज्ञानाबाध्यभेदप्रतियोगित्वे साध्ये दृष्टान्ते स्वपदेन शुक्तेर्दार्ष्टान्तिके स्वपदेनात्मन उक्तेर्व्याप्तिग्रहानुपपत्तेः । यत्तु जीवाद् भिन्न इत्येव साध्यम्, मिथ्याभेदेन सिद्धसाधनं पश्चान्निरसनीयमिति, तन्न, निरसनोपायस्य निरसिष्यमाणत्वात् । न च ब्रह्म जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवदित्येव साध्यम्, धर्मिपदेन ब्रह्मण उक्तावप्रसिद्धविशेषणत्वतादवस्थ्यात्, यत्किञ्चिद्धर्म्युक्तौ घटादिधर्मिसमानसत्त्वेन सिद्धसाधनात्, विपक्षबाधकरूपविशेषाभावे पूर्वोक्तासाधारण्यापत्तेश्च ।

यत्तु ब्रह्म जीवप्रतियोगिकतात्त्विकाभेदवन्नेति, तन्न, एवमपि तात्त्विकाभेदस्यातात्त्विकाभावेन सिद्धसाधनात्, अभावेऽपि तात्त्विकत्वविशेषणे अप्रसिद्धितादवस्थ्यात् । ननु– अत्र जीवप्रतियोगिकतात्त्विकभेदस्यान्योन्याभावरूपत्वान्नाप्रसिद्धिर्दोषः, यत्र ह्यभावव्यापकतया हेत्वभावो गृह्यते, तत्रैव साध्यप्रसिद्धिरङ्गम्, इह तु जीवतादात्म्यव्यापकता हेत्वभावस्य ग्राह्या, तदभावो हेतुना साध्यत इति किं साध्यप्रसिद्ध्या? तां विनापि व्याप्तिग्रहोपपत्तेः,

(अद्वैतसिद्धिः)

सन्देहरूपपक्षतासम्पत्तयेऽपि न तदपेक्षा, तस्यास्सिषाधयिषाविरहसहकृतसाधकमानाभावरूपत्वेन सन्देहाघटितत्वाद्, 'ब्रह्म तत्त्वतो जीवभिन्नं न वे'ति सन्देहाभावेऽपि 'जीवब्रह्मणोर्भेदे तात्त्विकत्वमस्ति न वे'ति सन्देहसम्भवाच्च, प्रमेयत्वमेतन्निष्ठात्यन्ताभावप्रतियोगि न वेति सन्देहवदिति– चेत्, न, एवं हि प्रसिद्धेतरभेदः पृथिव्यामिव प्रसिद्धजीवभेदो ब्रह्मणि सिद्ध्यतु, न तद्गततात्त्वकत्वमपि, व्यापकव्यतिरेकस्य व्याप्यव्यतिरेकमात्रसाधनसमर्थत्वाद्, अन्यथातिप्रसङ्गात् । यदपि भेदतात्त्विकत्वं धर्मिनिष्ठत्वेन उदशङ्कि, तदपि साध्यचाप्रसिद्ध्या दुष्टम् । नापि ब्रह्म, जीवाद्, भिन्नम्, दुःखाननुभवितृत्वाद्, घटवदित्यन्वयि, सर्वानुभवितरि हेतोरसिद्धेः । स्वनिष्ठेति विशेषणे जीवे व्यभिचारः, दुःखस्यान्तःकरणनिष्ठत्वात्, मिथ्याभेदेन सिद्धसाधनाच्च । न च– भेदे साध्ये अर्थशून्यभ्रान्त्या सिद्धसाधनोक्त्ययोग इति– वाच्यम्, भ्रान्तेर्वस्तुशून्यत्वस्यैवाभावात् । उक्तमिदमनिर्वाच्यवादे । न चैतदनुमितिविषयतया प्रामाणिकत्वेन सिद्ध्यतः कथं मिथ्यात्वम्? अनुमितिविषयतायाः प्रामाणिकत्वे अतन्त्रत्वात् । न चैवं मिथ्यात्वाद्यनुमानेऽपि कल्पितमिथ्यात्वादिना सिद्धसाधनापत्तिः, कल्पितत्वं व्यावहारिकत्वमभिप्रेतम्? प्रातिभासिकत्वं वा? आद्य इष्टापत्तेः, अन्त्ये हेतोस्स्वसमानसत्ताकसाध्यसाधकतया प्रातिभासिकत्वाप्रसक्तेः ।

एतेन– ब्रह्म, जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवद्, दुःखाननुभवितृत्वाद्, अभ्रान्तत्वाद्, असंसारित्वाद्, घटवंत् । जीवो वा, ब्रह्मप्रतियोगिकतादृग्भेदवान्, असर्वशक्त्यादिभ्य इति– निरस्तम्, उपहितस्य पक्षत्वे धर्मिसमसत्ताकत्वे सिद्धेऽपि तात्त्विकत्वासिद्धेः सिद्धसाधनात् । शोधिततत्त्वंपदार्थयोः पक्षत्वे तयोर्धर्मित्वाभावेन बाधापत्तेः । न च– धर्मित्वाधर्मित्वाभ्यां व्याघातः, ब्रह्मणः सर्वनिषेधस्वरूपत्वेन व्याघाताभावात् । न च धर्मिशब्देनाश्रयमात्रविवक्षा, धर्मित्ववदाश्रयत्वस्यापि तत्रासत्त्वात् ।

यत्तु धर्मिशब्दस्य पित्रादिशब्दवत् सम्बन्धिशब्दत्वेन यत्किञ्चिद्धर्मिसमसत्ताकतया न सिद्धसाधनमिति, तन्न, शब्दस्वभावोपन्यासस्यानुमानं प्रत्यनुपयोगात् । एतेन– धर्मिपदस्थाने स्वपदमिति– अपास्तम्, धर्मिपदतुल्ययोगक्षेमत्वात् । अत एव– धर्मिसत्तासमानसत्ताकपदस्थाने पारमार्थिकेति वा, यावत्स्वरूपमनुवर्तमानेति वा स्वाज्ञानाकार्येति वा, स्वज्ञानाबाध्येति वा विशेषणं देयम्, स्वपदस्य समभिव्याहृततत्तदर्थपरत्वस्य व्युत्पत्तिसिद्धत्वादिति–

(अद्वैतसिद्धिः)

निरस्तम्, आद्ये साध्यवैकल्याच्च । न च– घटो जीवप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवान्, जीवधर्मिकधर्मिज्ञानाबाध्याभेदाप्रतियोगित्वाद्, यद्यज्ज्ञानाबाध्ययद्धर्मिकाभेदाप्रतियोगि, तत् तज्ज्ञानाबाध्यतत्प्रतियोगिकभेदवद्, यथा दूरस्थवनस्पत्योरेक इत्याद्यनुमानेन साध्यसिद्धेर्नाप्रसिद्धिरिति– वाच्यम्, यच्छब्दाननुगतेन पक्षधर्महेतौ व्याप्त्यग्रहाद्, धर्मित्वप्रतियोगित्वादिसामान्याकारेण व्याप्तिग्रहे विशिष्य साधनायोगात् । न च– एवं स्वप्रागभावव्यतिरिक्तेत्यादौ का गतिरिति– वाच्यम्, तत्राप्येतद्दूषणसञ्चारेण व्यतिरेकिणि वानुमानान्तरे वा तात्पर्यात् ।

नापि– ब्रह्म तत्त्वतो जीवाभिन्नं नेति साध्यम्, एवं च न साध्यवैकल्यशङ्कापि, त्वन्मतेऽपि कल्पितघटे कल्पितजीवात् तात्त्विकभेदवत्तात्त्विकाभेदस्याप्यभावादिति– वाच्यम्, तात्त्विकाभेदस्यातात्त्विकेनाभावेन सिद्धसाधनस्योक्तत्वात् । नापि– जीवेश्वरौ, धर्मिज्ञानाबाध्यपरस्परप्रतियोगिकभेदवन्तौ, विरुद्धधर्माधिकरणत्वात्, दहनतुहिनवत् । विरोधश्च परस्परात्यन्ताभावरूपत्वम्, तद्व्याप्यत्वं वा, कालभेदेनापि सामानाधिकरण्यायोग्यत्वं वा, संयोगतदत्यन्ताभावयोश्च सामानाधिकरण्यं मतद्वयेऽपि नेति न तदाश्रये व्यभिचार इति– वाच्यम्, धर्मिपदमादाय दोषस्य प्रागेवोक्तत्वाद्, अव्याप्यवृत्तिदुःखशब्दाद्यधिकरणे व्यभिचाराच्च, जीवब्रह्माभेदसिद्धौ स्वतन्त्रत्वास्वतन्त्रत्वादीनां सामानाधिकरण्यायोग्यत्वरूपविरोधस्यैवासिद्ध्या स्वरूपासिद्धेः, कल्पितसार्वज्ञ्यासार्वज्ञ्यादिव्यवस्थाया वर्णे ह्रस्वत्वदीर्घत्वादिव्यवस्थावत् कल्पितभेदेनैवोपपत्त्या स्वाभाविकभेदं प्रत्यप्रयोजकत्वाच्च ।

न च– ''अल्पशक्तिरसार्वज्ञ्यं पारतन्त्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ॥
स्वाभाविकं तयोरेतन्नान्यथा तु कथञ्चन ॥''

इत्यादिश्रुत्या सार्वज्ञ्यादेः स्वाभाविकत्वोक्त्या कल्पितत्वासिद्धिः, अनाद्यविद्यासिद्धत्वेनेदानीन्तनत्वाभावेन च स्वाभाविकत्वोक्तेः, तच्छब्देनोपहितयोरेव परामर्शात् । न तत्र स्वाभाविकत्वोक्तिविरोधः, न ह्युपहितेऽपि सर्वज्ञत्वादिकमागन्तुकम् । नापि ब्रह्म, स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवत्, पदार्थत्वाद्, घटवत् । चेतनत्वम्, जीवत्वावच्छिन्नप्रतियोगिताकधर्मिज्ञानाबाध्यभेदवद्वृत्ति, सर्वचेतनवृत्तित्वात् चेतनावृत्तित्वरहितत्वाद्वा, शब्दार्थत्ववदिति– वाच्यम्, स्वपदधर्मिपदाननुगमतादवस्थ्याद्, अन्त्यहेतोर्जीवत्वे व्यभिचाराच्च,

(अद्वैतसिद्धिः)

जडवृत्तित्वाद्युपाधिसत्त्वेन विपक्षबाधकाभावेन चाप्रयोजकत्वात् । ब्रह्मणो जीववत्संसारित्वापत्ताविष्टापत्तिः । कल्पितभेदेन वा परिहारो विधेयः । तदुक्तम्–

'अप्रमेयेऽनुमानस्य प्रवृत्तिर्न कथञ्चन ।
प्रमेयस्य त्वनात्मत्वात् तत्र भेदानुमेष्यते ॥'

शुद्धचैतन्ये धर्मानधिकरणतयानुमानाप्रसरः । यत्र प्रसरः, तत्रेष्टापत्तिरित्यर्थः । न च एवमैक्यानुमानमपि कथम्? भवत्पद्यस्य तदैक्यानुमितिः कथमिति पठितुं शक्यत्वादिति–वाच्यम्, शुद्धचैतन्यैक्यस्य शब्दैकगम्यत्वेन तत्राननुमेयत्वस्येष्टत्वात् । न च तर्ह्यैक्यानुमानोपन्यासानर्थक्यम्, तस्य भेदे तात्त्विकत्वभ्रममात्रनिरासफलकत्वात् । तस्मात् ।

अप्रसिद्धविशेषत्वादन्यथैवोपपत्तितः ।
सर्वशक्त्यल्पशक्त्यादेर्न भेदे तन्त्रता ततः ॥

इत्यद्वैतसिद्धौ जीवब्रह्मभेदानुमानभङ्गः ॥

## न्यायामृततरङ्गिणी

**तात्त्विकत्वगर्भसाध्यस्याप्रसिद्धिं परिहरति ॥ न चाप्रसिद्धेति ॥ जीवब्रह्माभेद इति ॥ एतच्चोपलक्षणम् । जीवब्रह्मणोरतात्त्विकभेदेपीति द्रष्टव्यम् ॥ तद्विपर्ययस्येति ॥ अतात्त्विकभेदविपर्ययस्य ॥ अष्टद्रव्येति ॥ यथा हीच्छाया अष्टद्रव्याश्रितत्वे बाधकादष्टद्रव्यातिरिक्तं द्रव्यमप्रसिद्धमपि सिध्यति तथाऽभेदेऽतात्त्विकभेदे च बाधकात्तात्त्विकभेदोऽप्रसिद्ध एव सिद्धति ॥ प्रतीयोगिज्ञानाबाध्येति ॥ प्रतियोगिज्ञानबाध्यत्वसामान्यरहितेत्यर्थः । तेन यत्किञ्चिदभेदासिद्धिरिति परास्तम् । निरसिष्यत इति ॥ निर्दुष्टानुमितिविषयत्वेन प्रामाणिकतया सिध्यतो भेदस्यमिथ्यात्वायोगादिति वक्ष्यते ॥ नापीति ॥ ब्रह्मसमसत्त्वभेदस्यैतदनुमानात्पूर्वमसिद्धेः ॥ उभयत्रेति ॥ जीवभेदस्य घटसमसत्त्वभेदस्य च घटे सत्त्वेन तत्र हेत्ववृत्तेरसाधारण्यम् ॥ अपरेत्वित्यादि ॥ ननु सार्वज्ञाभावरूपव्यापकव्यतिरेकेण सार्वज्ञेन व्याप्यस्यैक्यस्य व्यतिरेको भेदः पक्षे सिध्यतु तस्य तात्त्विकत्वं तु कुतः । मैवम् । व्यापकव्यतिरेकेण व्याप्यव्यतिरेकस्य साध्यमानत्वात् । मिथ्याभेदस्यैक्यव्यतिरेकित्वाभावात् । शुक्तौ शुक्त्यैक्ये सत्यपि मिथ्याशुक्तिभेदस्य सत्त्वात् ॥ दुःखाननुभवितृत्वादिति ॥ ननु सर्वानुभवितरि हेतोरसिद्धिः ।**

(तरङ्गिणी)

स्वनिष्ठेतिविशेषणे जीवे व्यभिचारः । दुःखस्यान्तःकरणधर्मत्वात् । दुःखकृतविक्रियाया दुःखानुभवितृत्वार्थत्वात् । निरसिष्यमाणत्वाच्च ॥ कल्पितमिथ्यात्वादिनेति ॥ ननु मिथ्यात्वं प्रति हेतोर्दृश्यत्वादेः स्वसमसत्ताकसाध्यसाधकतया प्रातिभासिकत्वरूपकल्पितमिथ्यात्वासिद्धिः । किं तु व्यावहारिकं मिथ्यात्वं सिध्यति । मैवम् । जीवब्रह्मभेदस्य व्यावहारिकत्वेन तदैक्यस्य तात्विकत्ववन्मिथ्यात्वस्य जगति व्यावहारिकत्वेन तत्सत्यत्वस्य तात्विकत्वापातात् । ननु जीवब्रह्मशब्दाभ्यामुपहितचैतन्यस्य पक्षत्वे तत्र धर्मिसत्त्वभेदसाधनेपि न भेदस्य तात्विकत्वसिद्धिरित्यत आह ॥ अत्र चेति ॥ शोधिततत्त्वं पदार्थयोर्ब्रह्मजीवपदाभ्यामभिधानात्तात्विकभेदसिद्धिः । ननु शोधिते तत्र धर्मित्वाभावाद्बाध इत्याशङ्क्य निराकरोति ॥ न चेति ॥ व्याघातादिति ॥ न च सर्वनिषधस्य ब्रह्मस्वरूपत्वेन न व्याघातः सर्वनिषेधश्रुतेर्ब्रह्मस्वरूपमात्र परत्वपर्यवसानेन तया भेदविरोधिसर्वनिषेधासिद्धेः ॥ सम्बन्धिशब्दत्वादिति ॥ नन्वनुमाने शब्दस्वभावोपन्यासो न युक्तः । मैवम् । परार्थानुमाने शब्दस्वभावप्रयोजकताया उक्तत्वात् ॥ नाजात एकोन्यं हन्तीति ॥ वृश्चिकादीनां जन्मनास्वमात्रादिहन्तृत्वं भटानां त्वैकस्यां समरभूमौ घटितानां हन्तृत्वमिति लोके दृष्टत्वात् । परस्परहन्तृधर्माश्रयत्वं जीवब्रह्मणोर्भेदासाधकमित्यर्थः । अयं न्यायस्तु जयतीर्थाचार्यकृतवादावल्यां तत्वप्रदीपिकायां चतुर्थपरिच्छेदे च लिखितः ॥ ॥ जीवब्रह्मणोर्भेदेऽनुमानानि ॥

## न्यायामृतकण्टकोद्धारः

नन्वस्तु जीवेशभेदे प्रत्यक्षम् । तथापि तस्य वादिनं प्रत्युपन्यासानर्हत्वात् विप्रतिपत्तौ परं प्रत्युपन्यासनीय प्रमाणाभावस्तदवस्थ एवेत्यत आह अनुमानानि चेति । बहुवचनं च बहुत्वेन प्राबल्यसूचनार्थम् । यद्यपि पूर्वोक्तानुमानान्यपि उक्तन्यायेनादुष्टानि । तथापि तददुष्टत्वं शिष्यैरेव ज्ञेयमिति मत्वानुमानान्तराण्याह इश्वर इति । ईश्वरशब्देन वेदान्ततात्पर्यविषयी भूतं ब्रह्म विवक्षितम् । जीवशब्देन संसाराधिकरणं चैतन्यम् । अतो नार्थान्तरमिति द्रष्टव्यम् । साध्ये च तत्वत इति विशेषणं मिथ्याभेदमादाय सिद्धसाधनतापरिहाराय । यद्यपि तदभावेपि न सिद्धसाधनता । प्रमाणविषयतयोपक्षिप्ते मिथ्यात्वेन सिद्धसाधनताभिधानेऽनुमानमात्रोच्छेदप्रसङ्गात् । तथाप्यनेनापि रूपेण सिद्धावुद्धेश्यायामिदमुक्तमिति द्रष्टव्यम् । हेतुसिद्धिश्चाल्पशक्तिरिति वक्ष्यमाणश्रुत्येति द्रष्टव्यम् । न च सर्वशक्तित्वादिकं काल्पनिकमिति वाच्यम् । तस्यामेव स्वाभाविकत्वाभिधानात् । परिहरिष्यमाणत्वाच्च । ननु परमते भेदस्यैवाभावात् कथं पक्षदृष्टान्ततेत्यत आह परमतेऽपीति । अन्यथा । पक्षदृष्टान्तभावानङ्गीकारे । तेनेति परामृष्टं हेतुं दर्शयति परेणापीति । ननु तथापि बाधः । भेदस्य धर्मिस्वरूपत्वेन तद्विशेषणत्वायोगात् । न हि घटो घटवानिति

(कण्टकोद्धारः)

युज्यत इत्यत आह भेदस्येति । विशेषस्तु विशेषणत्वादिनिर्वाहक इति पूर्वमेवोक्तम् । जीव ब्रह्माभेद इति । यदभावे बाधकं तदनुमानयोग्यमिति व्याप्तेरिति भावः । न च कल्पितभेदेन सर्वानिष्टपरिहार इति वाच्यं तस्य तत्रातन्त्रत्वात् । अन्यथैकस्मिन्नपि कल्पितभेदसम्भवेन सुखादिभोक्तृत्वादिव्यवस्था स्यात् । किञ्चा-प्रसिद्धविशेषणता न साक्षाद् दूषणम् । किन्तु व्याप्त्यादिज्ञानविघटकत्वेन । प्रकृते च व्यतिरेकव्याप्तिज्ञानं सम्भवति । न च साध्याप्रसिद्धौ प्रतियोगिज्ञानाभावेन साध्याभावज्ञानाभावे कथं तत्र व्याप्तिग्रह इति वाच्यम्। वादिवाक्यादिना प्रतियोगिज्ञानसम्भवात् । न हि कचित् प्रमितमेव कचिन्निषिध्यत इत्यावयो-र्मतम्। तथाच नाप्रसिद्धत्वं दोषः । पक्षतातु सन्देहाघटितैव निर्वाच्या । अस्मिन् पक्षेऽप्रसिद्धत्वादि-परिहारक्लेशात् पक्षान्तरमाह यद्वेति । न च जीवप्रतियोगिकघटादिधर्मिकभेदमादायार्थान्तरमिति वाच्यम् । तस्यात्मज्ञानबाध्यत्वाङ्गीकारेण तमादायार्थान्तरासम्भवात् । न च प्रतियोगिज्ञानाबाध्येत्यनेनाबाध्यत्वं कथं लभ्यमिति वाच्यम् । तस्य ससंबन्धिकत्वात् । यद्वा तत्पदस्थाने स्वपदं निक्षेप्यम् । न च दृष्टान्ते स्वशब्देन शुक्तेर्ग्रहणम्, पक्षे च ब्रह्मण इत्यननुगमेन कथं व्याप्ति ग्रह इति वाच्यम् । तयोः समभिव्याहृत बुद्धिस्थत्वेनानुगमसम्भवात् । अन्यथा स्वप्रागभाव व्यतिरिक्तेत्याद्यसङ्गतमेव स्यात् । नन्वस्मिन् पक्षे सामान्यतोऽबाध्यभेदासिध्या विप्रतिपत्त्यनानुगुण्यमिति । अस्मिन् पक्षे सिद्धसाधनतापरिहारक्लेशभयादाह यद्वेति । न च धर्मिशब्देन ब्रह्मण उक्तौ सैवाप्रसिद्धविशेषणता । यत्किञ्चिदुक्तौ च घटादि समानसत्वेन सिद्धसाधनत्वमिति वाच्यम् । धर्मिपदस्य ससम्बन्धिकत्वेन येन समभिव्याहारस्तत्परत्वेऽपि ब्रह्मत्वेनाप्रवेशेनाप्रसिद्धविशेषणत्वाभावात् । अन्यथा स्वप्रागभावव्यतिरिक्तेत्यादौ स्वपदस्य प्रमाणज्ञान-परत्वेऽप्रसिद्धविशेषणतेत्यादेर्वक्तुं शक्यत्वात् । अज्ञानसिद्धिरपि न स्यात् । तस्येति । न चानुकूलतर्काभावात् सर्वदा गृह्यमाणविशेषतेति वाच्यम् । अनुकूलतर्कोपपादनस्य करिष्यमाणत्वादिति भावः । दुःखाननु-भवितृत्वादिरूपं हेतुमभिप्रेत्याप्रसिद्धविशेषणत्वादिशङ्का यथा नास्ति तथा प्रकारमाह इतरेत्विति । नचैवं भेदासिध्याऽर्थान्तरमिति वाच्यम् । तादृशाभेदाभावस्यैव भेदत्वेनाङ्गीकारात् । न चात्र तात्त्विकाभेदाभावमात्रं साध्यते, उताभावे तात्त्विकत्वविशेषणं दीयते? आद्ये कल्पितमभावमादाय सिद्धसाधनम् । अन्त्येऽप्रसिद्ध-विशेषणत्वं तदवस्थमिति वाच्यम् । मिथ्याभूतेन सिद्धसाधने सर्वत्र सिद्धसाधनप्रसङ्गेनानुमान-मात्रोच्छेदस्योक्तत्वात् । तथा च नाप्रसिद्धिः । ननु ब्रह्म जीवप्रतियोगिकतात्विक भेदवन्नवेति विप्रतिपत्तौ जीवप्रतियोगिकतात्विकभेदवन्नेति साध्यकरणेऽर्थान्तरत्वमित्यत आह अपरेत्विति । जीवप्रतियोगिक तात्विक भेद एव साध्यते । तथा च नार्थान्तरमिति भावः । तर्ह्यप्रसिद्धविशेषणतेत्यत आह नेति । तथाप्य-प्रसिद्धविशेषणतापरिहारः कथमित्यत आह साहीति । ननु पक्षताविघटकत्वेन दोषः किं नस्यादित्यत आह पक्षतात्विति । ननु सन्देह घटितपक्षतैवानुमानाङ्गमिति मया स्वीक्रियते । साध्याप्रसिद्धौ तत्सन्देहाभावे तद्घटितापक्षता न सम्भवतीत्यत आह तत्सापेक्षत्व इति । ननु भिन्नपक्षकत्वान्नायमनुमानाङ्गमिति वाच्यम् । विरोधिविषयत्वेनैव प्रयोजकत्वे पक्षैक्यस्याप्रयोजकत्वात् । अस्तु तर्हि व्याप्तिविघटकत्वेन सादोष इत्यत आह व्यतिरेकिणि चेति । क तर्हि सा दूषणमित्यत आह यत्रत्विति । ननु व्यापकाभावेन हेतुना व्याप्य

(कण्टकोद्धारः)

जीवतादात्म्याभाव एव सिध्येत् । न तु तस्य तात्त्विकत्वम् । यथा व्यापकाभावेन पृथिवीत्वेन हेतुना व्याप्य प्रसिद्धेतरभेदः सिध्यति । तात्त्विकत्वभाने तु नैषा सामग्रीति चैन्मैवम् । प्रमाणविषयत्वेन सिध्यन् तात्त्विक एव सिध्यतीत्याशयात् । यद्वेश्वरानुमाने एकत्वमुपनीतं यथा भासते तथेदं तात्त्विकत्वमुपनीतं भासत इत्यङ्गीकारात् । अपि वा यादृशव्याप्य व्यापको ह्यभावः तदभावेन सिध्यन् (जीवतादात्म्यभेदः तात्त्विक एव सिध्यतीति) व्याप्तिबलादेव तात्त्विकत्वसिद्धिरिति । नन्वनुमितेर्व्यापकतावच्छेदक प्रकारकत्वनियमात् तात्त्विकत्वस्य चातथात्वात् कथं तद्भानमिति चेन्न । तस्यापि व्यापकतावच्छेदकत्वात् भासकसामग्र्याश्च नियमस्य प्रदर्शितत्वात् इति । इदानीमप्रसिद्धत्वादिशङ्कैव यथा नोदेति तथा प्रकारान्तरमाह यद्वेति । दुःखेति । न च ब्रह्मणः सर्वज्ञत्वात् दुःखाननुभवितृत्वमसिद्धम् । स्वनिष्ठेति विशेषणे जीवे व्यभिचारः । दुःखादीनामन्तःकरणनिष्ठत्वादिति वाच्यम् । अनेन दुःखेनाहं दुःखीत्यननुसन्धातृत्वं दुःखाननुभवितृत्वम् । तच्च ब्रह्मण्यस्त्येवेति नासिद्धिः । नापि जीवे व्यभिचारः । तस्यान्तः करणदुःखादिनाहं दुःखीत्यनुसन्धातृत्वात् । भेदेति । न च भ्रान्तेरर्थशून्यत्वमसिद्धमिति वाच्यम् । अर्थशून्यत्वाभावे भ्रान्तित्वस्यैवायोगात् । यथा चैतत् तथानिर्वचनीयत्व भङ्ग एवोक्तम् । एतदिति । नचानुमिति विषयता प्रामाणिकत्वे न तन्त्रमिति वाच्यम् । तथात्वे मननेन साध्यस्य युक्तत्वनिश्चयस्या प्रामाणिकत्वापत्तेः । तथा च मीमांसायां सिद्धान्तोक्तिरयुक्ता स्यात् । आगमविषयताया अपि प्रामाणिकत्वेऽतन्त्रत्वापाताच्च । न ह्यागमविषयोऽबाधितः, अनुमानविषयो बाधित इति सिद्धम् । अन्यथेति । न च मिथ्यात्वं व्यावहारिकत्वं वा, प्रातिभासिकत्वं वा? नाद्यः । इष्टापत्तेः । न द्वितीयः । हेतोः स्वसमानसत्ताकसाध्यसाधकतया प्रातिभासिकत्वासम्भवादिति वाच्यम् । व्यावहारिकत्वेऽपि बाध्यत्वेन बाध्यमिथ्यात्वस्य परेणाप्यङ्गीकारेण सिद्धसाधनत्वापरिहारात् । व्यावहारिकैर्वेदान्तैस्तात्त्विकब्रह्मसिध्यङ्गीकारेण साधनस्य स्वसमानसत्ताकार्थसाधकत्वस्यासंमतेश्च । नचानुमान एव तथा नियमः । अप्रयोजकत्वात् । प्रतिबिम्बादिनातात्त्विक बिम्बसिध्यङ्गीकाराच्च । ननु तात्त्विकत्वेन मिथ्यात्वादीनां विशेषणान्न मिथ्याभूतमिथ्यात्वादिना सिद्धसाधनमित्यत आह तात्त्विकत्वेति इदानीं मिथ्याभूत साध्यादिना यथा न सिद्धसाधनत्वादि तथा प्रकारान्तरमाह यद्वेति । दुःखाननुभवितृत्वं च पूर्ववदेव ज्ञातव्यम् । अभ्रान्तत्वं च भ्रान्तत्वात्यन्ताभावाधिकरणत्वम् । तेन जीवस्यापि कदाचिदभ्रान्तत्वात् व्यभिचारशङ्का नेति ज्ञातव्यम् । असंसारित्वमप्येव मेवेति न मुक्ते व्यभिचारः । नन्वत्रोपहितयोः पक्षत्वम्, उत शोधितयोः? नाद्यः । उपहिते धर्मिसामान सत्ताके भेदे सिद्धेऽपि न तात्त्विकभेदसिद्धिः । उपहितस्य मिथ्यात्वात् । न द्वितीयः । तयोर्निर्धर्मकत्वेन बाधादित्यत आह नचेति । ननु धर्मित्वं नाम कर्तृत्वादिमत्त्वं, तच्च शुद्धे बाधितमित्यत आह इहेति । ननु तथापि यत्किञ्चिद्धर्मिसमानसत्ताकभेदेन सिद्धसाधनमित्यत आह धर्मिशब्दस्य चेति । धर्मिपदेति । न च धर्मिपदतुल्यं स्वपदमिति वाच्यम् । स्वशब्दस्य समभिव्याहृत परत्वस्य तवापि सिद्धत्वात् । अन्यथा स्वप्रागभाव व्यतिरिक्तेत्यत्रार्थान्तरतादि स्यात् । ननु तथापि ब्रह्मणि सत्ताभावाद् बाध इत्यत आह सत्तेति । ननु सत्ताया धर्मिरूपत्वात् धर्मिसत्ता समानसत्ताकेति बहुव्रीह्यनुपपत्तिः । न च धर्मिरूपा या सत्तेति

(कण्टकोद्धारः)

विवक्षितमिति वाच्यम् । घटादौ सत्तायाधर्मिस्वरूपत्वाभावात् इत्यत आह यद्वेति । ननु स्वज्ञानाबाध्येति साध्यकरणे स्वशब्देन शुक्त्यादिकमादाय सिद्धसाधनमित्यत आह स्वशब्दस्य चेति । आद्य इति । पारमार्थिकत्वविशेषणयुक्त साध्यस्य मन्मते घटादावभावात् साध्यवैकल्यमित्यर्थः । घट इति । जीव चैतन्यस्य प्रतियोगित्वात् तज्ज्ञानाबाध्यभेदसिद्धिरेव पारमार्थिकत्वसिद्धिरित्यर्थः । नन्वत्र यत्तद् घटितत्त्वेऽनुगतव्यापकतावच्छेदकाभावात् व्याप्त्यग्रहदोष इति वाच्यम् । सर्वनाम्नां बुद्धिस्थवाचकत्वेन बुद्धिस्थत्वेनानुगम सम्भवात् । अत एव यत्तच्छब्दघटिताः प्रयोगाः सर्ववादिनां दृश्यन्ते । यद्वा व्यतिरेकेण जीव वदिति द्रष्टव्यम् । यद्वा पारमार्थिकत्वं जीवप्रतियोगिकभेदवृत्तिः । सकलपारमार्थिकवृत्तित्वात् प्रमेयत्ववदित्यत्र तात्पर्यम् । साध्यवैकल्यशङ्काक्लेश परिहारार्थं पक्षान्तरमाह यद्वेति । तात्त्विकाभेदाभावस्यातात्त्विकत्वेन सिद्धसाधनता तु पुरैव निरस्तेति भावः । त्वन्मतेऽपीति । दुःखादेरन्तःकरणोपादानकत्वेऽपि तदनुभवितृत्वमात्मन्येव वक्तव्यम् । अन्यथा बन्धमोक्षयोः सामानाधिकरण्यं न स्यादिति भावः । नन्वनुभवितृत्वमप्यन्तःकरणनिष्ठम् । जीवे संसारस्तु तदारोपेणोपपद्यत इत्यत आह त्वन्मतेऽपीति । न चेति । ब्रह्मैव स्वाविद्यया संसरतीत्यङ्गीकारादिति भावः । त्वन्मतेऽपीति । अन्यथा जीवब्रह्म व्यवस्था बद्धमुक्तव्यवस्था च न स्यादिति भावः । एवं चेति । न च धर्मिपदमादाय दोष उक्त इति वाच्यम् । धर्मित्वाभावं प्रतीत्यादिना तस्य निराकृतत्वात् । ननु संयोग तदत्यन्ताभावरूप विरुद्धधर्माधिकरणे व्यभिचार इत्यत आह संयोगेति । नचाव्याप्यवृत्तिदुःखादौ शब्दे च स्वात्यन्ताभावाधिकरणवृत्तित्वात् तदधिकरणे व्यभिचार इति वाच्यम् । दुःखादीनामन्तःकरणपरिणामित्वेन शब्दस्य भूताकाशोपादानत्वेनाव्याप्यवृत्तित्वाभावेन तत्र व्यभिचाराभावात् । ननु दुःखादीनामन्तःकरणधर्मत्वे जीवब्रह्मणोस्तदतिरिक्त विरुद्ध धर्माधिकरणत्वाभावात् हेतोरसिद्धिरित्यत आह तादृशेति । न च जीवब्रह्म भेदासिद्धौ स्वतन्त्रत्वास्वतन्त्रत्वयोः सामानाधिकरण्यायोग्यत्वरूपविरोधस्यासिद्धिरिति वाच्यम् । तयोः परस्परात्यन्ताभावरूपत्वेन जीवब्रह्मभेदासिद्धावपि तादृश विरोध सिद्धेः । अन्यथा घटपटादावपि विरुद्ध धर्माधिकरणत्वेन भेदो न स्यात् । व्यावहारिकभेद सिध्यर्थं त्वयापि प्रथमं धर्मविरोध सिद्धेर्वाच्यत्वात् । ननु तथापि प्रमाणाभावेन तादृशधर्माधिकरणत्वमसिद्धमित्याशङ्क्य निषेधति न चेति । ननु सार्वज्ञादिकं कल्पितमस्तु । न च श्रुतौ स्वाभाविकत्वविशेषणात् अकल्पितत्वमिति वाच्यम् । बहुकालीन भ्रान्त्या अनाद्यविद्या सिद्धत्वेनेदानीन्तनत्वाभावेन तादृशविशेषणोपपत्तेरित्याशङ्क्य निषेधति न चेति । किं सार्वज्ञादेर्मिथ्यात्वमुतासार्वज्ञादेरुतोभयोरिति विकल्प्य पक्षत्रयमप्यनुपपन्नमित्याह सगुणेति । तथाच पक्षत्रयं श्रुतिन्याय प्रत्यक्षविरुद्धमिति भावः । सार्वज्ञादीनां सत्यत्वे सिद्धे विपक्षबाधकसम्भवादनुमानान्तरमपि सिद्धमित्याह एवं चेति । स्वपदाननुगमादिकं पूर्वमेव परिहृतम् । ननु जीवे जीवत्वावच्छिन्नप्रतियोगिक भेदाभावाद् व्यभिचार इत्यत आह जीवस्येति । तथाच साध्ये जीवपदं यत्किञ्चिज्जीवपरम् । तावतैवेष्टसिद्धेः । किञ्चिज्जीव भेद सिद्धौ जीवान्तराभेदस्यापि प्रतिपत्तौ एतादृश साध्यकरणेऽर्थान्तरमित्यत आह चेतनत्वमिति । न च द्वितीयहेतौ जीवत्वे व्यभिचार इति वाच्यम् । चेतन वृत्त्यत्यन्ताभावा प्रतियोगित्वादिति विवक्षितत्वात् । न चैवं पूर्वाभेदः । उपाधिभेदात् । न च

(कण्टकोद्धारः)

**जडवृत्तित्वमुपाधिः । प्रकृतानुमानेऽनुकूलतर्कस्य वक्ष्यमाणत्वेन प्रकृतसाध्यव्याप्यहेत्वव्यापकत्वेनोपाधेः साध्याव्यापकत्वात् । ननु विपक्षे बाधकाभावादप्रयोजकान्यनुमानानीत्यत आह विपक्ष इति । न चेष्टापत्तिः । ब्रह्मणो दुःखादिभोगस्य सर्वप्रमाणविरुद्धत्वात् । एतेन खण्डनोक्तं निरस्तमित्याह एतेनेति । अप्रमेये । निर्धर्मक इत्यर्थः । प्रमेयस्य सधर्मकस्य । तथाच शुद्धे हेतुसाध्ययोरभावात् अनुमानाप्रवृत्तिरित्यर्थः । अन्यथेति । वृत्तिव्याप्यत्वानङ्गीकार इत्यर्थः । न च न मयाऽभेदज्ञापनार्थमनुमानमुच्यते । किन्तु भेदभ्रमनिरासार्थमिति वाच्यम् । अभेदबोधनं विना भेद भ्रमनिरासासम्भवात् । विरोधिज्ञानस्यैव भ्रमनिवर्तकत्वात् । अन्यथातिप्रसङ्गात् ।जीवब्रह्मणोर्भेदानुमानानि ।**

## न्यायामृतप्रकाशः

ननूक्तानुमानद्वये जीवेश्वरयोर्मध्ये एकस्य पक्षत्वमपरस्य दृष्टान्तत्वमुक्तं तदयुक्तं तयोरेकत्वेन सन्दिग्धसाध्यवत्त्वनिश्चितसाध्यवत्त्वरूपपक्षत्वदृष्टान्तत्वयोरसम्भवादित्यतोनुमानंशोधयति ॥ परमतेपीत्यादिना ॥ अन्यथेति ॥ तयोरैक्येन पक्षष्टान्तभावायोगशङ्कायाम् । ननूक्तानुमानद्वये साध्यावैशिष्ट्यं हेतुसाध्ययोरैक्यात् कथमिति चेत् मम सर्वपदार्थभेदवादित्वेन तदन्तर्गतहेतुसाध्ययोरप्येकत्वादित्यत आह ॥ एतेनेति ॥ तदेव दर्शयति ॥ परेणापीति ॥ स्वव्याहतीति ॥ जीवात्मनः परमात्मनस्तत्वतो न भिद्यन्त इत्यनुमानेपि सर्वाद्वैतिनः साध्यावैशिष्ट्यापत्त्या स्वव्याहतिः स्यादित्यर्थः । ननु भेदस्य धर्मिस्वरूपताया भवद्भिरङ्गीकाराद्भेदवानिति भेदवत्त्वोक्तिर्बाधितेत्यत आह ॥ भेदस्येति ॥ अप्रसिद्धेति ॥ तात्विकभेदस्याप्रसिद्धेरिति भावः । व्यतिरेकिणि अप्रसिद्धमेव साध्यं सिध्यतीति मतमाश्रित्याह ॥ जीवेति ॥ इदमुपलक्षणं जीवब्रह्मणोरतात्विकभेदेपीति द्रष्टव्यम् । तद्विपर्ययस्य अतात्विकभेदविपर्ययस्य ॥ अष्टद्रव्येति ॥ तथाहि इच्छाया अष्टद्रव्याश्रितत्वे बाधकसद्भावादिच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रितेत्यनुमानेन अष्टद्रव्यातिरिक्तं द्रव्यमप्रसिद्धमपि सिध्यतीत्यङ्गीकृतं तार्किकैः तथा अभेदे अतात्विकभेदे च बाधकसद्भावात्तात्विकभेदो- ऽप्रसिद्ध एवानुमानेन सिध्यतीत्यर्थः । ईश्वरपक्षकानुमानेऽप्रसिद्धिं परिहर्तुं- सामान्यतः प्रसिद्धिमाह ॥ जीव इति ॥ व्यावहारिकभेदमादायार्थान्तरवारणाय प्रतियोगिज्ञानाबाध्येत्युक्तम् । प्रतियोगिभूतजीवेत्यर्थः । जीवस्यैव ब्रह्मत्वेन तज्ज्ञानाबाध्यभेदसिद्धौ तस्य तात्विकत्वमेव सिध्यति तथाचानेनानुमानेन जीवप्रतियोगिकतात्विकभेदः कस्मिंश्चिद्धर्मिणि सामान्यतः सिद्धः स च व्यतिरेकिणा धर्मिविशेषनिष्ठतया साध्यत इति द्रष्टव्यम् । जीवपक्षके द्वितीयानुमानेऽप्रसिद्धिवारणाय सामान्यप्रसिद्धिमाह ॥ ब्रह्म वेति ॥ प्रतियोगीति ॥ ब्रह्मेत्यर्थः । तथाचानेन ब्रह्मप्रतियोगिकतात्विकभेदः कस्मिंश्चिद्धर्मिणि सामान्यतः सिद्धः स च व्यतिरेकिणा धर्मिविशेषनिष्ठत्वेन साध्यत इति भावः ॥ अधिष्ठानत्वादिति ॥ अविद्यानावृतं जीवचैतन्यमेवाधिष्ठानमिति मतसद्भावाज्जीवेप्यधिष्ठानत्वमस्तीति नाद्यानुमाने स्वरूपासिद्धिः ॥ शुक्तिवदिति ॥ शुक्तिप्रतियोगिको भेदो रूप्येऽस्ति तथा च किञ्चिद्धर्मिकोरूप्यधर्मिकः प्रतियोगिभूतशुक्तिज्ञानाबाध्यो यो भेदः शुक्तिभेदस्तत्प्रतियोगित्वं शुक्तावस्तीति ध्येयम् । केचित्त्वित्यनन्तरम् ईश्वर इति शेषः । हेतुस्तु सर्वज्ञत्वादिरेव द्रष्टव्यः ॥ तथाचेति ॥ जीवाद्भेदस्य व्यावहारिकस्य घटादौ मायिमते प्रसिद्धत्वादित्यर्थः । नन्वप्रसिध्यभावेपि

(प्रकाशः)

मिथ्याभूतेन तेनैव भेदेन सिद्धसाधनता तु स्यादित्यत आह ॥ मिथ्येति ॥ व्याप्तिपक्षधर्मतोपेतसल्लिङ्गपरामर्शेन जायमानानुमितिः प्रमारूपैवेति तात्विकभेद एवानुमानविषय इति नारोपित भेदमादाय सिद्धसाधनता परीक्षकेण दातुं शक्या अन्यथा विमतं मिथ्येत्यत्रापि कल्पितमिथ्यात्वमादायास्माकं सिद्धसाधनत्वेन त्वदभिमतं तात्विक-मिथ्यात्वं न सिध्येत् तथा पर्वतोऽग्निमानित्यादौ सर्वत्रारोपितवह्न्यादिकमादाय सिद्धसाधनताया दातुं शक्यत्वे-नानुमानमात्रोच्छेदः स्यात् अतस्तत्र त्वयाऽस्मदुक्त एव समाधिर्वाच्यः तथा च न सिद्धसाधनमित्यर्थः ॥ साधनादिति ॥ सर्वज्ञत्वादिहेतुनेति शेषः ॥ नाप्रसिद्धिरिति ॥ घटादौ साध्यसिद्धेरिति भावः ॥ नापीति ॥ जीवप्रतियोगिकप्रह्मरूपधर्मिसत्तासमानसत्ताकभेदस्य मायिनोऽसिद्धत्वादित्यर्थः । अप्रसिद्धिपरिहारे व्यतिरेकिणि असाधारण्यमापद्यत इत्याशङ्क्य निराकरोति ॥ न चोभयत्रापीति ॥ केचिदित्युक्तानुमानद्वयेपि साध्यवति घटादौ सर्वज्ञत्वादिहेतोरभावादिति भावः ॥ तस्येति ॥ अनुकूलतर्कादिविशेषादर्शनदशायामेव संशयाधायकत्वेन तस्य दोषत्वात्प्रकृते चानुकूलतर्काणां वक्ष्यमाणत्वेनागृह्यमाणविशेषत्वाभावान्न तस्य दोषत्वमित्यर्थः । जीवप्रतियोगिक-व्यावहारिकाभेदाभावमादाय सिद्धसाधनवारणाय तात्विकेत्युक्तम् । जीवप्रतियोगिकतात्विकाभेदाभावरूपसाध्यस्य घटादौ प्रसिद्धत्वान्नाप्रसिद्धिरित्याह ॥ परपक्षेपीति ॥ नेदं निरात्मकमित्यादिरूपेणाभावः एवं केवलव्यतिरेकिणा साध्यते अभावाभावश्च भाव एवेति सुशको व्याप्तिग्रह इति कश्चिदिति टीकाकारैरुक्तत्वादिहापि भेदो नामान्यो-न्याभावः तथाचेश्वरो जीवप्रतियोगिकान्योन्याभाववान् सर्वज्ञत्वादिति साध्यते तथा च जीवप्रतियोगिकान्योन्या-भावप्रतियोगितावच्छेदकीभूतं जीवतादात्म्यमेव जीवत्वमिति यावत् तच्च जीव एव प्रसिद्धमिति नाप्रसिद्धि-रित्याह ॥ अपरे त्विति ॥ साहीति ॥ विशेषणभूतसाध्यस्याप्रसिद्धत्वात्तन्निरूपितव्याप्तेर्ग्रहीतुमशक्यत्वाद्व्याप्ति-विघटकत्वेनैव दोषः प्रकृते चाभावाभावस्य भावत्वात्तस्य जीव एव प्रसिद्धत्वेन सुशको व्याप्तिग्रह इति भावः । नन्वप्रसिद्धेर्व्याप्तिविघटकत्वेनैव दोषता कुतः विशेषणाप्रसिद्धौ तत्कोटिकसंशयायोगेन सन्देहघटितपक्षताया अयोगाद्धेतोः पक्षधर्मताया असम्भवेन पक्षधर्मताविघटकत्वेन दोषत्वं कुतो न स्यात् । विशेषणस्याप्रसिद्धत्वेपि पक्षतोपपादनोपायस्तु नास्तीत्यत आह ॥ पक्षतात्विति ॥ अस्तु वा सन्देहघटिता पक्षता सापि प्रकृतेविशेषण-स्याप्रसिद्धत्वेपि सम्भवत्येव । कथमिति चेत् उच्यते यथा शब्दोभिधेय इत्यत्राभिधेयभेदस्याप्रसिद्धत्वेन शब्दोऽभिधेयो न वेति सन्देहासम्भवेपि अभिधेयत्वं शब्दवृत्ति न वेति सन्देहोपपादनेन पक्षतामुपपाद्य सन्देह-घटिता पक्षधर्मतोपपाद्यते एवमिहापि ब्रह्म जीवात्तत्वतो भिन्नं न वेति सन्देहायोगेपि जीवब्रह्मणोर्भेदे तात्विकत्वमस्ति न वेत्येवं रूपेण सन्देहः सम्भवत्येवेति व्याप्तिग्रहाभावघटकत्वेनैवदोषत्वं तस्या वाच्यमित्याह ॥ सापेक्षत्वेपीति ॥ प्रकृते च व्याप्तिग्रहः सम्भवति अभावाभावस्य भावत्वादित्याह ॥ व्यतिरेकिणि चेति ॥ जीवप्रतियोगिकान्योन्याभावाभावरूपसाध्याभावस्य व्याप्तिः । व्याप्तिस्तन्निष्ठेत्यर्थः । जीवाभेदो जीवतादात्म्यं जीवत्वमिति यावत् । नन्वेवं व्यतिरेकिण्यभावस्यैव साध्यस्य सुखेन कर्तुं शक्यत्वेनाभावाभावो भाव एवेति सुखेन व्याप्तिग्रहसम्भवाद्व्यतिरेकिण्यप्रसिद्धिर्दोष एव न स्यात्ततश्च तत्प्रवादविरोध इत्यत आह ॥ यत्र त्विति ॥ भावः सात्मकत्वादिरूपः ब्रह्म जीवाद्भिन्नमित्यत्र भेदविषयानुमितेर्भ्रमत्वोपपत्त्या सिद्धसाधनमिति विवक्षितमुतै-तदनुमितिविषयस्वार्थस्य भेदस्य मिथ्यात्वादिति नाद्य इत्याह ॥ भेदरूपार्थ इति ॥ अर्थपदोपरि सल्लिङ्गपरामर्श-

(प्रकाश:)

जन्याया भेदरूपार्थावगाह्यनुमितेः प्रमात्वादित्यर्थः । न द्वितीय इत्याह ॥ एतदिति ॥ सल्लिङ्गपरामर्शजन्यै-तदनुमितिविषयतयेत्यर्थः ॥ एषा शङ्कापिशाचिका अस्माभिः जीवाद्भिन्नमित्यत्र तात्विकत्वविशेषणे दत्तेपि न परिहरणीयेत्याह ॥ तात्विकत्वेति ॥ तात्विकत्वेन रूपेण कल्पितभेदमादायापि सिद्धसाधनं स्यादेवेत्यर्थः । इदमपि ममेष्टमिति न सन्तोष्टव्यम् । जीवाः परमात्मनस्तत्वतो न भिद्यन्त इत्यत्रापि तात्विकत्वेन कल्पिता-भेदमादायापि सिद्धसाधनं स्यादित्यत्र तात्पर्यम् । कल्पिताभेदेनेति पाठे तु न कोपि दोषः । तत्र तात्विकत्व-विशेषणेपीत्यस्य तात्विकत्वविशेषणयुक्तत्वदीयानुमानेपीत्यर्थो द्रष्टव्यः । नन्वत्रानुमानद्वयेपि जीवेश्वरयोः पक्षत्वेन तयोश्च विशिष्टत्वेन मिथ्यात्वात्स्वसमानसत्ताकपरस्परप्रतियोगिकमिथ्याभूतभेदवत्त्वं तयोरस्त्येवेति सिद्धसाधनमिति चेत्तत्राह ॥ अत्र चेति ॥ त्वन्मते इत्यत्र तत्त्वंपदाभ्याम् इत्यत्र च जीवपरमात्मशब्दाभ्यां ये विवक्षिते संसाराधारानाधारचैतन्ये ते अत्र उक्तानुमानद्वये जीवब्रह्मशब्देन विवक्षिते ते च चैतन्ये सत्ये इति योज्यम् । ननु ब्रह्मणो निर्धर्मकत्वेन धर्मवत्त्वरूपधर्मित्वाभावात् यद्वेत्युक्तब्रह्मपक्षकानुमाने बाध इत्याशङ्क्य निराकरोति ॥ न चेति ॥ व्याघातादिति ॥ धर्मित्वाभावं प्रति धर्मित्वे धर्मित्वाभावरूपधर्मस्यैव प्राप्त्या धर्मित्वाभावोक्तिव्याघातः । धर्मित्वाभावं प्रति धर्मित्वानङ्गीकारे धर्मित्वाभावो नास्तीत्युक्तं स्यात् ततश्च धर्मित्वस्यैव प्राप्त्या धर्मित्वा-भावोक्तिव्याघात इत्यर्थः । इह अनुमाने ॥ आश्रयमात्रस्येति ॥ न तु धर्मवत्त्वरूपं धर्मित्वमित्यर्थः । ननु पुनः सिद्धसाधनता । तथाहि जीवप्रतियोगिकः धर्मिभूतं यच्छुक्तिरूप्यं तस्यापि मिथ्यात्वं प्रति धर्मित्वात् तत्समानसत्ताकः प्रातिभासिको भेदस्तद्वत्त्वमादायापि साध्यपर्यवसानसंभवादित्यत आह ॥ धर्मिशब्दस्येति ॥ ब्रह्म । धर्मिसमसत्ताकेत्युक्ते धर्मिशब्देन समभिव्याहृतं ब्रह्मैवायास्यतिन तु यत्किञ्चिच्छुक्तिरूप्यादीत्यर्थः । तत्र दृष्टान्तमाह ॥ न हीति ॥ स्वसुतमातेत्यस्यार्थो भार्येति किन्तु स्वमातैव पूज्येत्यायाति मातृशब्दस्य सम्बन्धिशब्दत्वादित्यर्थः ॥ स्वपदं वेति ॥ तस्य स्पष्टं समभिव्याहृतपरत्वादित्यर्थः । नन्वथापि ब्रह्मसत्तेत्ययुक्तं ब्रह्मणि सत्ताजातेरभावादित्यतो ब्रह्मणि सत्वं नाम सत्ताजातिरूपं ममापि न विवक्षितं किं नाम तव यद्विवक्षितं बाधाभावादिरूपं तदेवेहममापि विवक्षितमित्याह ॥ सत्तेति ॥ ननु पुनः स्वशब्दोक्तशुक्तिज्ञानाबाध्य-भेदवत्त्वादेर्ब्रह्मणि सत्वात्सिद्धसाधनता स्यादित्यत आह ॥ स्वशब्दस्येति ॥ अन्यथेति ॥ स्वशब्दस्य समभि-व्याहृतपरत्वानङ्गीकारे ॥ स्वेति ॥ तत्रापि स्वशब्देन पक्षीभूतप्रमाणज्ञानेतरघटादिपदार्थसम्भवेन विवक्षितार्था-सिद्धिः स्यादित्यर्थः ॥ आद्य इति ॥ ब्रह्म जीवप्रतियोगिकपारमार्थिकभेदवदित्येवं धर्मिसत्तासमानसत्ताकेति-पदस्थाने पारमार्थिकपदस्य प्रक्षेपेण साध्यकरणे दृष्टान्ते घटे जीवप्रतियोगिकपारमार्थिकभेदाभावात्साध्य-वैकल्यमित्यर्थः । घटेपि जीवप्रतियोगिकपारमार्थिकभेदं सामान्यतः साधयति ॥ घट इति ॥ स्वज्ञानेति ॥ प्रतियोगिभूतजीवज्ञानाबाध्येत्यर्थः । भेदस्य जीवज्ञानाबाध्यत्वे जीवस्यैव ब्रह्मत्वेन तज्ज्ञानाबाध्यत्वरूप-पारमार्थिकत्वसिद्धिरिति द्रष्टव्यं ॥ जीवधर्मिकेति ॥ घटो जीवप्रतियोगिकभेदवान् जीवस्य घटाभेदरहितत्वादि-त्यनुमानं विवक्षितं तत्र वैयधिकरण्यपरिहाराय जीवधर्मिकेत्यादि । अभेदरहितत्वादित्येवोक्ते वस्तुतः पटाभिन्नेपि पटे प्रातिभासिकाभेदरहिते भेदवत्त्वरूपसाध्यशून्ये व्यभिचारवारणायाबाध्येत्युक्तम् । तत्र चाबाध्याभेदस्यैव सत्वेन तद्राहित्याभावान्न व्यभिचारः । स्तम्भज्ञानाबाध्यो यः पटपाषाणाभेदस्तद्राहित्यंपुनः पटेस्तीति व्यभिचारवारणाय

(प्रकाशः)

जीवधर्मिकेत्यादि ॥ धर्मिज्ञानेत्यत्र धर्मिशब्दः समभिव्याहृतजीवपरः ॥ यथेति ॥ दूरस्थवनस्पत्योर्मध्ये एको वनस्पतिर्दृष्टान्त इत्यर्थः । चूतः पनसज्ञानाबाध्यपनसधर्मिकाभेदरहितत्वात् पनसज्ञानाबाध्यपनसप्रतियोगिकभेदवानित्यवधेयम् । पनसस्य चूतभिन्नत्वाच्चूतोपि पनसभिन्न इत्येतावतोर्थस्य विवक्षितत्वादस्य च वनस्पतिद्वयमगृहीत्वा तन्मध्ये एकस्य ग्रहणेऽसम्भवाद्वनस्पत्योरेक इत्युक्तम् । दूरस्थेति स्वरूपकथनमित्याहुः । ननु घटे जीवाभेदाभावरूपसाध्यस्य भवन्मते सत्वेपि मन्मतेऽभावात्साध्यवैकल्यशङ्कास्यादेवेत्यत आह ॥ त्वन्मतेपीति ॥ बन्धस्वरूपनिर्वचनाय स्वत इत्याद्युक्तम् । एतादृशबन्धस्यान्तःकरणगतत्वे बन्धमोक्षयोर्वैयधिकरण्यं स्यादिति भावः ॥ अवश्यमिति ॥ तथा च न व्यभिचार इति भावः । बन्धमोक्षयोः सामानाधिकरण्यायानर्थो जीवेङ्गीकार्यस्तथा च यादृशदुःखानुभवितृत्वं तव जीवेऽभिमतं तदभाव एव मया हेतूक्रियत इति न दोष इत्याह ॥ त्वन्मतेपीति ॥ अनुभवितृत्वम् अनुभवकृतोच्चनीचत्वादिरूपम् । क्षुद्रोपद्रवो जीवेऽनैकान्त्यरूपः ॥ असिद्धिरिति ॥ जीवगतसंसारेण तदभिन्नब्रह्मणोपि संसारित्वादित्यर्थः ॥ जीव इति ॥ असिद्धिपरिहाराय ब्रह्मणोऽसंसारित्वाङ्गीकारे जीवे व्यभिचारः स्यात् ब्रह्माभिन्नत्वेन जीवस्याप्यसंसारित्वात् तत्र च जीवप्रतियोगिकभेदाभावादित्यर्थः ॥ औपाधिकेति ॥ यथा दर्पणाद्युपाधिकृतं श्यामत्वं मालिन्यमिति यावत् प्रतिबिम्ब एवास्ति नत्ववदाते बिम्ब इत्यङ्गीकृतम् एवमिहाप्यन्तःकरणाद्युपाधिकृतं संसारित्वं प्रतिबिम्बे जीव एव न तु बिम्बभूत ईश्वर इत्यङ्गीकृतत्वेनासंसारित्वस्य ब्रह्मणि नासिद्धिर्न वा जीवेऽनैकान्त्यमित्यर्थः ॥ इत्याद्यपिसुस्थमिति ॥ जीवेश्वरौभिन्नौ विरुद्धधर्माधिकरणत्वाद्दहनतुहिनवदित्यत्र तात्त्विकभेदे साध्ये दृष्टान्ते साध्यवैकल्यात् अतात्विके साध्ये सिद्धसाधनादिति पूर्वपक्षावसरे उक्तदूषणस्य धर्मिज्ञानाबाध्यपरस्परप्रतियोगिकभेदवन्ताविति साध्यकरणेनानवकाशात्तदप्यनुमानं सुस्थमित्यर्थः । विरुद्धधर्माधिकरणत्वहेतुं समर्थयते ॥ विरोधश्चेत्यादिना ॥ सर्वज्ञत्वाल्पज्ञत्वादेर्विरोधः कीदृशोभिप्रेतः किं तेजस्तिमिरवत्सहानवस्थानरूपो वा मूषकमार्जारादिवद्वध्यघातुकभावरूपो वा गोत्वाश्वत्ववत्परस्पराभावव्याप्यत्वरूपो वा अभावाभावो भाव एवेति वचनाद्धटतदत्यन्ताभाववत्परस्पराभावत्वरूपो वा । नाद्य इत्याह ॥ न सहानवस्थानमिति ॥ असिद्धेरिति ॥ जीवब्रह्मणोरद्वैतवादिना मया सर्वज्ञत्वाल्पज्ञत्वयोरेकस्मिन्नेव चैतन्ये सहावस्थानाङ्गीकारेण विरोधानङ्गीकारात् मां प्रति हेतुः स्वरूपासिद्ध इत्यर्थः । न द्वितीय इत्याह ॥ नापीति ॥ नाजात इति ॥ इदं न्यायद्वयम् । लोके एकः स्वयमजातः अनुत्पन्नः सन् अन्यं न हन्ति कुलीरापत्यादेः स्वजन्मनैव स्वमात्रादिहन्तृत्वदर्शनादित्यर्थः ॥ नापीति ॥ योन्याधारः अन्यप्रदेशस्थः वध्यसमानाधिकरणो न भवति वध्यापेक्षया भिन्नाधिकरणस्थित इति यावत् सोप्यन्यं न हन्ति ॥ एकस्यां समरभूमौ सङ्घटितानामेव भटानां मूषकमार्जारादीनां च वध्यघातुकभावदर्शनादित्यर्थः ॥ तस्येति ॥ एवं च सर्वज्ञत्वाल्पज्ञत्वयोर्बध्यघातुकभावरूपविरोधमङ्गीकुर्वद्भिरवश्यं तयोरैकाधिकरण्यं वक्तव्यम् । एवं च सर्वज्ञत्वाल्पज्ञत्वयोर्वध्यघातुकरूपयोराश्रयैक्यसापेक्षत्वेन स्वाधिकरणजीवब्रह्मभेदसाधकत्वाभावादिति सम्प्रदायः । नापि तृतीयचतुर्थावित्याह ॥ नापीति ॥ न परस्पराभावव्याप्यत्वं कालभेदेन नीलरूपं रक्तरूपं च प्रत्याश्रये घटे व्यभिचारात् । नापि परस्पराभावरूपत्वं कालभेदेन नीलरूपं तत्प्रागभावं च प्रत्याश्रये घटे व्यभिचारादिति यथाक्रमं सम्बन्धः । अयमर्थः परस्परविरहव्याप्यत्वरूपविरोधवद्धर्माश्रयत्वेन न धर्मिभेदसाधनं युक्तं तथात्वे यदा

(प्रकाशः)

नीलरूपं तदा रक्तरूपाभावः यदा च रक्तरूपं तदा नीलरूपाभाव इति परस्परविरहव्याप्यत्वरूपविरोधवन्नीलरूपरक्तरूपाख्यधर्मयोः कालभेदेनाधिकरणे घटे भेदाभावेन व्यभिचारात् परस्पराभावत्वरूपविरोधवद्धर्माश्रयत्वेन धर्मिभेदसाधने तु यद्यपि न पूर्वोक्तो व्यभिचारः संभवति नीलरूपरक्तरूपयोः परस्पराभावरूपत्वाभावात् तथापि पुनर्घटे व्यभिचार एव नीलरूपतत्प्रागभावयोस्तावत्परस्परविरहरूपत्वमस्ति प्रतियोगिन एव प्रागभावविरहरूपत्वेन नीलरूपस्य स्वप्रागभावविरहरूपत्वात् नीलरूपप्रागभावोपि नीलरूपविरह एव नीलरूपोत्पत्तेः पूर्वं विद्यमानस्य नीलरूपाभावस्य तत्प्रागभावरूपत्वात् । एवं च नीलरूपोत्पत्तेः पूर्वं प्रथमक्षणावच्छिन्ने घटे नीलरूपप्रागभावाश्रयत्वमस्ति द्वितीयादिक्षणेषु नीलरूपाश्रयत्वमस्ति एवं च परस्परविरहरूपत्वरूपविरोधवन्नीलरूपतत्प्रागभावरूपधर्मं प्रति कालभेदेनाधिकरणे भेदाभावेन व्यभिचारः स्यादिति सम्प्रदायः । नीलरूपं रक्तरूपप्रागभावं च प्रत्याश्रये इति पाठे तु कालभेदेनेत्येतन्न सम्योज्यं एकदैव घटे नीलरूपरक्तरूपप्रागभावयोः सत्वादिति ध्येयम् ॥ परस्परेति ॥ नीलरूपरक्तरूपयोर्नीलरूपतत्प्रागभावयोर्वा परस्परात्यन्ताभावरूपत्वाभावान्न व्यभिचार इति भावः ॥ परस्परेति ॥ नीलरूपरक्तरूपयोर्न परस्परात्यन्ताभावव्याप्यत्वं यत्र यदानीलरूपं तत्र तदा रक्तरूपात्यन्ताभाव इति नास्ति उत्तरत्र घटे रक्तरूपस्य जायमानत्वेनात्यन्ताभावविरोधिनः प्रागभावस्य सत्वात् तथा यत्र यदा रक्तरूपं तत्र तदा नीलरूपात्यन्ताभाव इति नास्ति पूर्वं घटे जातस्य नीलरूपस्य ध्वस्तत्वेनात्यन्ताभावविरोधिनो ध्वंसस्य सत्वान्नव्यभिचारः । तथा नीलरूपतत्प्रागभावयोरपि न परस्परात्यन्ताभावत्वरूपविरोधः । यत्र यदा नीलरूपप्रागभावः तत्र तदा नीलरूपात्यन्ताभाव इति नास्ति । प्रथमक्षणावच्छिन्न एव घटे नीलरूपात्यन्ताभावविरोधिनः प्रागभावस्यैव सत्वात् । तथा यत्र यदा नीलरूपं तत्र तदा नीलरूपप्रागभावात्यन्ताभावो नास्ति नीलरूपप्रागभावप्रतियोगिकात्यन्ताभावविरोधिनो नीलरूपप्रागभावध्वंसस्यैव सत्वादतो न व्यभिचार इत्यालोचनीयम् ॥ कालभेदेनापीति ॥ तथा च कालभेदेन समानाधिकरणयोर्नीलरूपरक्तरूपयोर्नीलरूपतत्प्रागभावयोर्वा न व्यभिचार इति भावः । ननु तथापि परस्परात्यन्ताभावरूपत्वेन परस्परात्यन्ताभावव्याप्यत्वेन वा विरुद्धयोः संयोगतदत्यन्ताभावरूपधर्मयोरधिकरणे वृक्षे भेदाभावेन व्यभिचार इत्याशङ्क्य हेतोरेवाभावान्न व्यभिचार इत्याह ॥ संयोगेति ॥ आवाभ्यामवयवावयविनोर्भेदाभेदाङ्गीकारेण भेदस्यापि सत्वादग्ररूपवृक्षावयव एवास्ति संयोगः मूलरूपवृक्षावयव एवास्ति तदत्यन्ताभावः न तु तदवच्छिन्ने वृक्षे वृत्तित्वमङ्गीकृतं येन व्यभिचारः स्यात् । तथा च सम्योगतदत्यन्ताभावाधिकरणयोर्भिन्नत्वेन एकस्मिन्नेव वृक्षे तदधिकरणत्वाभावान्न व्यभिचार इति भावः ॥ असिद्धिरिति ॥ एतादृशविरुद्धधर्माधिकरणत्वस्याप्रामाणिकत्वादिति भावः । नन्वथापि विरुद्धधर्माधिकरणत्वहेतोर्जीवेश्वरयोर्न तात्विकभेदप्रयोजकत्वं सिध्यति सार्वज्ञादिविरुद्धधर्मव्यवस्थायाः कल्पितत्वेन कल्पितायास्तस्याः कल्पितभेदेनैवोपपत्तेः । यथाहि एकस्मिन्ककारे वास्तवभेदाभावेपि कल्पितभेदमादाय दीर्घत्वादिकाल्पनिकी व्यवस्थाङ्गीक्रियते नैतद्व्यवस्थानुसारेणैकस्मिन्वर्णे तात्विको भेदः सिध्यति एवं प्रकृतेपीत्यप्रयोजकतेत्याशङ्क्य निराकरोति ॥ न चेति ॥ नेयं व्यवस्था कल्पितेत्याह ॥ सगुणवादोक्तेति ॥

(प्रकाशः)

''उपक्रमादिन्यायेन श्रुतिलिङ्गनयात्तथा ॥
विशेषसामान्यनयान्न्यायान्निरवकाशतः ॥ १ ॥
बह्वल्पन्यायतश्चोपजीव्यत्वन्यायतस्तथा ॥
पशुच्छागनयाच्चैव सविशेषनयात्तथा ॥ २ ॥
उपांशुयाजन्यायेन युक्तायुक्तनयात्तथा ।
आदृतत्वात्सूत्रकृता प्रबला सगुणश्रुतिः ॥ ३ ॥''

इत्युक्तन्यायेन ''यः सर्वज्ञ'' इत्यादिश्रुत्युक्तसार्वज्ञ्यादेर्ब्रह्मणि सत्यत्वादित्यन्वयः ॥ प्रत्यक्षेति ॥ ''स्वतः प्रमात्वं प्रत्यक्षे लिङ्गाद्यैश्चोपजीविभिः ॥ स्वविरोधान्मृत्यवस्थामापन्नैर्नैव बाध्यत'' इत्युक्तन्यायैरित्यर्थः । व्यावहारिकभेदेन सिद्धसाधनत्वपरिहाराय स्वज्ञानाबाध्येति विशेषणम् । एवमुक्तरत्राप्येतादृशविशेषणकृत्यं द्रष्टव्यम् । ननु जीवे जीवप्रतियोगिकभेदाभावाद्व्यभिचार इत्यत आह ॥ जीवस्यापीति ॥ चेतनत्वमिति ॥ अनेनानुमानेन जीवत्वावच्छिन्नसर्वजीवप्रतियोगिकभेदवान् कश्चिच्चेतनः सिध्यति । तथाचेश्वरेजीवभेदसिद्धिरिति ध्येयम् । अत्र चेतनत्वं जीवप्रतियोगिकभेदवद्वृत्तीत्युक्ते सिद्धसाधनता चैत्रप्रतियोगिकभेदवन्मैत्रवृत्तित्वादतो जीवत्वावच्छिन्नप्रतियोगिताकेत्युक्तं यस्मिन्भेदे जीवत्वं प्रतियोगितावच्छेदकमित्यर्थः । चैत्रप्रतियोगिकभेदे तु न जीवत्वं प्रतियोगितावच्छेदकं प्रतियोगितानधिकरणे मैत्रेपि सत्वेनाधिकवृत्तित्वात् किन्तु चैत्रत्वमेवेति नोक्तदोष इति भावः ॥ शब्दार्थत्ववदिति ॥ शब्दप्रतिपाद्यत्वरूपकेवलान्वयिधर्मवदित्यर्थः । ब्रह्मणि मायिना वाच्यत्वापरपर्यायाभिधेयत्वानङ्गीकारेण तत्र साधनवैकल्यपरिहाराय मायिमतेपि लक्ष्यभूतब्रह्मसाधारण्यायाभिधेयत्ववदित्यनुक्त्वा शब्दार्थत्ववदित्युक्तमिति द्रष्टव्यम् । तत्र जीवत्वावच्छिन्नप्रतियोगिताकभेदवज्जडवृत्तित्वेन दृष्टान्ते साध्यपर्यवसानम् । पक्षेप्येवं साध्यपर्यवसाने जडजीवभेदस्यैव सिद्ध्या नेश्वरजीवभेदसिद्धिरित्यर्थान्तरं तु बाधादिना नेति ध्येयम् । अप्रयोजकतां परिहरति ॥ विपक्ष इति ॥ जीवेश्वरभेदानङ्गीकार इत्यर्थः ॥ अप्रमेय इति ॥ भेदानुमानं भवद्भिरप्रमेयेऽप्रमेयवस्तुविषये कथ्यते प्रमेये वा । नाद्यः अप्रमेयं मन्मते ब्रह्मैव । तत्र च प्रमाणमात्रप्रवृत्तेरभावेन तत्र भेदानुमानप्रवृत्त्ययोगात् । न द्वितीयः । प्रमेयस्य दृश्यस्य मयानात्मत्वाङ्गीकाराज्जडत्वाङ्गीकारात्तद्विषये भेदानुमानं मयेष्यत एव जडेषु व्यावहारिकभेदाङ्गीकारेण सिद्धसाधनतापत्तेरित्यर्थः । एतेनेत्युक्तं विशदयति ॥ त्वन्मत इति ॥ ब्रह्मण्येवानुमानप्रवृत्तिरङ्गीक्रियते न च तस्याप्रमेयत्वान्न तत्रानुमानप्रवृत्तिरिति वाच्यम् । त्वन्मतेप्यात्मनः शब्दलिङ्गादिजन्यवृत्तिव्याप्यत्वाङ्गीकारेणाप्रमेयत्वाभावादित्यर्थः । अनुमानस्य जीवाः परमात्मनस्तत्वतो न भिद्यन्त इत्यभेदानुमानस्य । प्रमेयस्य दृश्यस्य अनात्मत्वात् जडत्वात् प्रमेयेऽभेदानुमानप्रवृत्तिश्चेत् त्वन्मते जडस्यैव प्रमेयत्वात् । तदैक्यानुमितिः जडैक्यानुमितिः कथं बाधादित्यर्थः ॥

॥ जीवब्रह्मणोर्भेदेऽनुमानानां विवरणम् ॥

## १९. जीवानामन्योन्यभेदेऽनुमानानि

जीवानामन्योन्यं भेदे तु (१) चैत्रो मैत्रप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्, मैत्रानुसंहितदुःखाननुसंधातृत्वात्, घटवद् इह च दहनतुहिनादौ क्लृप्ततयानुसन्धानाननुसन्धानरूपविरुद्धधर्मयोरेव प्रयोजकत्वात् । (२) विमतं सुरभिधूमरहितं चन्दन प्रभववह्निरहितत्वादित्यादाविवासिद्धिवारकविशेषणत्वं न दोषः । (३) एवं चैत्रोमैत्रप्रतियोगिकतात्त्विकाभेदवान्न, मैत्रस्मृतसर्वास्मर्तृत्वात्, मैत्रानुभूतसर्वाननुभवितृत्वाच्च, घटवत् । (४) विमतो बन्धध्वंसः स्वप्रतियोगितावच्छेदकावच्छिन्नाधारप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवन्निष्ठः, बन्धध्वंसत्वात्, सम्मतवत् । (३) जीवः संसारी वा संसारध्वंसाधारो वा स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवान् स्वज्ञानाबाध्यसंसारिप्रतियोगिकभेदवान्वा स्वज्ञानाबाध्यसंसारध्वंसाधिकरणप्रतियोगिकभेदवान्वा पदार्थत्वाद्, घटवत् । विपक्षे बाधकस्य वक्ष्माणत्वात् नाभाससाम्यम् । आत्मभेदमात्रे तु आत्मा, आत्मप्रतियोगिकस्वज्ञानाबाध्यभेदवान्, पदार्थत्वाद्, घटवत् । विमत आनन्दः स्वनिष्ठदुःखविरोधित्वव्याप्यधर्मेण सजातीयप्रतियोगिकस्वज्ञानाबाध्यभेदवान्, दुःखविरोधित्वाद्, दुःखाभाववत् । आत्मवैभवपक्षे आकाशः आत्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदाधारविशेषगुणवद्विभुव्यतिरिक्तः, द्रव्यत्वात्, पृथिवीवदित्याद्यपि द्रष्टव्यम् । केचित्तु पृथिवीत्वं जलत्वतेजस्त्ववायुत्वमनस्त्वेतरद्रव्यत्वसक्षाद्व्याप्यजातिभिन्नं मेयत्वात्, जलत्ववत् । गगनत्वजातिवादिनं प्रति गगनत्वेतरेत्यपि विशेषणीयम् । न चोक्तजातिमत्पदार्थान्तरसिद्ध्यार्थन्तरम्, लाघवेन क्लृप्ते धर्मिणि धर्ममात्रेणानुमानपर्यवसानात् । सत्ता द्रव्यत्वान्यात्मनिष्ठजात्यन्या द्रव्यत्वं वा सत्तान्यात्मनिष्ठजात्यन्यत्, मेयत्वात्, घटत्ववत् । आत्माणुत्वमते आत्मा द्रव्यत्व व्याप्यजातिमान्, अविभुद्रव्यत्वात्, पृथिवीवदित्यादिभिरात्मत्वजातिसिद्धौ तात्त्विकात्मभेदसिद्धिः । जातेर्धर्मिज्ञानाबाध्यभेदं विनाऽयोगात् । अन्यथा व्यक्त्यभेदः क्वापि दोषो न स्यात् । विपक्षे आत्मत्वस्य जातित्वे लाघवम् । औपाधिकत्वे तस्योपाधिज्ञानाधीनत्वेन गौरवं

**बाधकम् । आकाशादिकं तु धर्मिग्राहकमानेनैकतया सिद्धमिति नाकाशत्वं जातिरित्याहुः । जीवानामन्योन्यभेदेनुमानानि ॥**

## अद्वैतसिद्धिः

एवं जीवानामपि न परस्परभेदानुमानम् । (१) चैत्रो मैत्रप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्, मैत्रप्रतियोगिकतात्त्विकाभेदवान्नेति वा, मैत्रानुसंहितदुःखाननुसन्धातृत्वात्, मैत्रस्मृतसर्वास्मर्तृत्वात्, मैत्रानुभूतसर्वाननुभवितृत्वाच्च, घटवदित्यत्र प्रथमसाध्ये धर्मिपदविकल्पेन द्वितीयसाध्ये तात्त्विकाभेदस्यातात्त्विकभेदेन सिद्धसाधनाद्, उपहितस्य पक्षत्वे अर्थान्तरात्, चैतन्यमात्रपक्षत्वे हेत्वसिद्धिः, साधनैकदेशस्याननुसन्धानादेरुपाधित्वसंभवाच्च । (२) विमतो बन्धध्वंसः, स्वप्रतियोगितावच्छेदकावच्छिन्नाधारप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवन्निष्ठः, बन्धध्वंसत्वात् सम्मतवत् । (३) जीवः, संसारी, संसारध्वंसाधारो वा, स्वज्ञानाबाध्यजीवप्रतिदयोगिकभेदवान्, संसारिप्रतियोगिकस्वज्ञानाबाध्यभेदवान् वा, स्वज्ञानाबाध्यसंसारध्वंसाधिकरणप्रतियोगिकभेदवान्वा, पदार्थत्वाद्, घटवत् । विमत आनन्दः, स्वनिष्ठदुःखविरोधित्वव्याप्यधर्मेण सजातीयप्रतियोगिकस्वज्ञानाबाध्यभेदवान्, दुःखविरोधित्वाद्, दुःखाभाववद्, इत्यादिषु बन्धप्रतियोगिकभेदवति कालादौ ध्वंसस्य विद्यमानत्वेनार्थान्तराद्, दुःखनिगडसाधारणबन्धत्वासंभवाच्च, स्वपदाननुगमाच्च । चैत्रबन्धध्वंसः, चैत्रबन्धाधारप्रतियोगिकभेदवन्निष्ठः, बन्धध्वंसत्वात्, संमतवदित्याभाससाम्याच्च, विपक्षबाधकाभावाच्च । ध्वंसप्रतियोगितावच्छेदकं न नानाबन्धानुगतबन्धत्वम्, तस्य सामान्याभावत्वाभावात् ।

एतेन– (१) आत्ममात्रभेदे आत्मा, आत्मप्रतियोगिकस्वज्ञानाबाध्यभेदवान्, पदार्थत्वाद्, घटवत् । आत्मवैभवपक्षे (२) आकाशः, आत्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदाधारविशेषगुणवद्विभुव्यतिरिक्तः, द्रव्यत्वात्, पृथिवीवत् । (३) पृथिवीत्वं जलत्वतेजस्त्ववायुत्वमनस्त्वेतरद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नम्, प्रमेयत्वाज्जलत्ववत् । गगनत्वजातिपक्षे तदितरत्वमपि विशेषणम् । (४) सत्ता, द्रव्यत्वान्यात्मनिष्ठजात्यन्या, द्रव्यत्वं वा सत्तान्यात्मनिष्ठजात्यन्यत्, मेयत्वाद् । घटवत्, आत्माणुत्वमते (५) आत्मा, द्रव्यत्व व्याप्यजातिमान्, अविभुद्रव्यत्वाद्, घटवदित्यादिभिरात्मत्वजातिसिद्धौ तात्त्विकात्मभेदसिद्धिरिति– निरस्तम्; आद्ये

(अद्वैतसिद्धिः)

जडत्वमुपाधिः, आत्मपदयोः स्थाने चैत्रपदं प्रक्षिप्याभाससाम्यं च । द्वितीये शब्दानाश्रयत्वमुपाधिः, विभावात्मान्यत्वं विशेषणं दत्वा आत्माकाशभिन्नस्य विभोर्विशेषगुणवतः साधनप्रसङ्गाच्च । जातिपक्षकानुमानेषु कल्पितव्यक्तिभेदेनापि तस्याः जातेरुपपत्त्या तात्त्विकव्यक्तिभेदपर्यवसायित्वेनार्थान्तरात् । न च– जातेः धर्मिज्ञानाबाध्यभेदं विनाऽयोगः अन्यथा व्यक्त्यभेदः क्वापि जातिबाधको न स्यादिति– वाच्यम्, जातेर्व्यक्तिभेदसमानसत्ताकत्वनियमेन प्रातिभासिकभेदस्य व्यावहारिकजातिं प्रति न साधकत्वमिति व्यक्त्यभेदस्य जातिबाधकत्वसम्भवात् ॥ इत्यद्वैतसिद्धौ जीवभेदानुमानभङ्गः ॥

## न्यायामृततरङ्गिणी

॥ चन्दनप्रभवेति ॥ दुःखाननुसन्धातृत्वमात्रस्य पक्षेऽसिध्या तद्वारणाय मैत्राननुसंहितेति विशेषणस्योपादानेपि न दोषः । तस्य विशिष्टाभावसम्पादकत्वेन हेत्वंतरत्वात् । न चाननुसन्धातृत्वमुपाधिः । जीवानामन्योन्यं भेदाभावमते व्यतिरेकहीनत्वात् ॥ स्वप्रतियोगितावच्छेदकेति ॥ अत्र आधारान्तेन बद्धत्वमुक्तम् । भेदवन्निष्ठत्वं च भेदसमानदेशत्वम् । तेन ध्वम्सस्य प्रतियोगितावच्छेदकं न नानाबन्धानुगतबन्धत्वम् । तस्य सामान्याभावत्वाभावादिति परास्तम् । न वा बन्धप्रतियोगिकभेदवति कालादौ ध्वंसस्य विद्यमानत्वेनार्थान्तरम् । न च दुःखनिगडसाधारणबन्धत्वासम्भवः । बन्धत्वप्रकारव्यवहारविषयत्वादेः सम्भवात् ॥ आत्मप्रतियोगिकेति ॥ न च जडत्वमुपाधिः । व्यतिरेकहीनत्वात् ॥ आकाश इति ॥ कालभेदं परमाणुभेदं चादाय सिद्धसाधनवारणाय विशेषगुणविभुपदे । न च शब्दानाश्रयत्वमुपाधिः । अव्यतिरेकत्वात् । ननु केचिन्मतीयानुमानत्रयेपि कल्पितव्यक्तिभेदेनापि जातेरुपपत्त्या तात्विकव्यक्तिभेदापर्यवसायित्वेनार्थान्तरमत आह ॥ जातेरिति ॥ अन्यथेति ननु जातेर्व्यक्तिभेदसमानसत्ताकत्वनियमेन प्रातिभासिकभेदस्य व्यावहारिकजातिं प्रति बाधकत्वं भविष्यति । मैवम् । व्यधिकरणत्वात् । अभेदस्य जात्यदूषणत्वे मयाऽपादिते त्वया भेदस्य दूषणत्वोपपादनात् । ननूक्तरीत्याऽकाशत्वमपि जातिः स्यादिति तात्विकानेकाकाशसिद्धिः स्यादत आह ॥ आकाशत्वादिकं त्विति ॥ ॥ जीवानामन्योन्यं भेदेऽनुमानानि ॥

## न्यायामृतकण्टकोद्धारः

नन्वस्तु जीवब्रह्मणोर्भेदः । जीवानां तु कथम्? स्वातन्त्र्य पारतन्त्र्यादिरूपविरुद्धधर्माधिकरणत्वाभावादित्यत आह जीवानामिति । अस्वातन्त्र्यादितौल्येऽपि परस्परदुःखानुसन्धानाननु सन्धानरूप

(कण्टकोद्धारः)

विरुद्धधर्माधिकरणत्वात् युक्तो जीवानामपि भेद इति भावः । न च धर्मिपदविकल्पदोषः । तस्य पुरैव परिहृतत्वात् । न चोपहितपक्षत्वे सिद्धसाधनम्, अनुपहितपक्षत्वे हेत्वसिद्धिः इति वाच्यम् । मैत्रत्वस्यावच्छेदकत्वेन धर्मिकोटावप्रवेशात् । ननु भेदे विरुद्धधर्माधिकरणत्वमप्रयोजकमित्यत आह इह चेति। विरुद्धधर्माणामेव भेदप्रयोजकत्वेन क्लृप्तत्वात् तत्परित्यागे कारणाभावादिति भावः । ननु मैत्रानुसंहितेति विशेषणं व्यर्थम्, असिद्धिवारकत्वादित्यत आह विमतमिति । न च तत्र विशिष्टाभावस्य हेतुत्वान्न व्यर्थविशेषणत्वमिति वाच्यम् । प्रकृतेऽपि मैत्रानुसंहितदुःखाननुसंधातृत्वरूपविशिष्टाभावस्य हेतुत्वसम्भवात् । वस्तु तस्तु असिद्धिवारकत्वेपि यथा न वैयर्थ्यं तथान्यत्रोपपादितम् । एवं चेति । न च तात्विकत्वस्याभेदविशेषणत्वे तदभावस्यातात्विकत्वेन सिद्धसाधनम्, अभावविशेषणत्वे च दृष्टान्तस्य साध्यवैकल्यमिति वाच्यम् । प्रमाणविषयत्वेन सिध्यतोऽर्थस्यातात्विकत्वेन सिद्धसाधनायोगादित्युक्तत्वात् । अन्यथानुमानमात्रोच्छेदापत्तेः । न चानुमानेष्वननुसन्धातृत्वमुपाधिरिति वाच्यम् । तस्य विशिष्टसाध्यं प्रत्यप्रयोजकत्वात् । जीवब्रह्म भेदस्य साधितत्वेन ब्रह्मणि साध्याव्यापकत्वाच्च । प्रकृतेऽनुकूलतर्कस्य वक्ष्यमाणत्वेन साध्यव्यापकत्वस्थितौ साध्यव्याप्यहत्वव्यापकत्वेन साध्याव्यापकत्वानुमान सम्भवाच्च । इदं च विशेषविप्रतिपत्तौ । सामान्यविप्रतिपत्तौ त्वाह विमत इति । अत्र निगडबन्धध्वंसस्यापि पक्षत्वेंऽशे-सिद्धसाधनतावारणार्थं विमत इति । अत्र स्वशब्देन बन्धध्वंसः । तत्प्रतियोगी बन्धः । तत्र बन्धत्वस्य प्रतियोगितावच्छेदकत्वं नाम प्रतियोगित्वोल्लेख्य मात्रवृत्तित्वम् । तदवच्छिन्नं नाम तद्धर्मावच्छिन्न-प्रतियोगित्वेन व्यवह्रियमाणत्वम् । तेन ध्वंसस्य सामान्याभावत्वाभावात् बन्धत्वं कथं तदवच्छेदकमिति परास्तम् । न च निगडबन्धादिसाधारणं बन्धत्वं दुर्निरूपमिति वाच्यम् । बन्ध इति व्यवहारविषयत्वस्य तस्य सम्भवात् । न च स्वपदाननुगमः । बुद्धिस्थविषयत्वेनानुगमस्योक्तत्वात् । न च कालस्य बन्धध्वं-साधारत्वादर्थान्तरमिति वाच्यम् । मुक्त इति व्यवहारप्रयोजकस्य बन्धध्वंसाधारत्वस्य विवक्षितत्वात् । तादृशस्य च कालेऽभावात् । ननु जीवत्वादिना विप्रतिपत्तौ कथमत्राह जीव इत्यादि । अत्रापि कालमादाय नार्थान्तरता तृतीये साध्ये । अत्र सर्वत्र व्यावहारिक भेदमादायार्थान्तरतावारणाय प्रतियोगिज्ञानाबाध्ये-त्यादि। ननु चैत्रोऽयं चैत्रप्रतियोगिक प्रतियोगिज्ञानाबाध्य भेदवान् पदार्थत्वात् घटवदित्याभाससाम्यमित्यत आह विपक्ष इति । अनुकूलतर्काणां च यथा नाभासत्वं तथानुपदमेव वक्ष्यामः । ननु जीवेश्वर-साधारणात्मत्वेन विप्रतिपत्तौ कथमनुमानम्? आत्मप्रतियोगिकभेदस्यात्मन्यसिद्धत्वेन दृष्टान्ताभावेनात्मत्वेन साधयितुमशक्यत्वादित्यत आह आत्मभेदमात्रेत्विति । कल्पितभेदेनार्थान्तरतावारणाय स्वज्ञानेति । घटादि प्रतियोगिना तेन सिद्धसाधनतावारणायात्मेति । अत्रात्मत्वं न प्रतियोगितावच्छेदकम् । तथाच न बाध इति द्रष्टव्यम् । नचात्र जडत्वमुपाधिः । अनुकूल तर्केण प्रकृत हेतोः प्रकृत साध्य व्याप्यत्वेन साध्य व्याप्यहेत्व-व्यापकत्वेनोपाधेः साध्याव्यापकत्वात् । न चात्मपदस्थाने चैत्रपदप्रक्षेपेणाभास साम्यमिति वाच्यम् । अनुकूलतर्काभावेन तदभावात् । विमत आनन्द इति । अत्र दुःखविरोधित्व व्याप्यं दृष्टान्ते दुःखाभावत्वम् । पक्षे चानन्दत्वं द्रष्टव्यम् । न चानन्दभेदसाधनमात्मभेदसाधनानुपयोगीति वाच्यम् । आनन्दस्यात्म-

(कण्टकोद्धारः)

स्वरूपत्वेन तद्भेदसिद्धौ आत्मभेदस्यैव सिद्धेः । आत्मवैभवादिपक्षेपि परोक्तो दोषो नेति दर्शयितुं तदीय भेदानुमानमनुवदति आत्मेति । आत्मप्रतियोगिकः स्वज्ञानाबाध्यो यो भेदस्तदाधारो यो विशेषगुणवान् विभुः तद्व्यतिरिक्त इति साध्यार्थः । तेनात्मनां परस्परं भेदः सिध्यति । अत्र पृथिव्यादिना सिद्धसाधनता वारणाय विभ्विति । कालादिना तद्वारणाय विशेषेति । मिथ्याभेदेनार्थान्तरतावारणाय स्वेति । घटादिभेदेन तद्वारणायात्मेति । न च गगनभेदमादाय साध्यपर्यवसानं बाधात् इत्यात्मभेदसिद्धिः । न च शब्दानाश्रयत्व-मुपाधिरिति वाच्यम् । अनुकूलतर्कसद्भावेनानुपाधित्वात् । न च विभावात्मान्यत्वविशेषणं दत्वा विभुविशेषगुणवद् द्रव्यान्तर साधनमपि कर्तव्यं स्यादिति वाच्यम् । तद्व्यवस्थापक गुणान्तराभावात् । आत्मव्यवस्थापकस्य ज्ञानादेश्च प्रमाणसिद्धत्वात् । आदिशब्देन कालः आत्मप्रतियोगिक धर्मिज्ञानाबाध्य भेदाधाराश्रावण विशेषगुणवद् विभुव्यतिरिक्तः द्रव्यत्वात् पृथिवीवदिति सङ्गृहीतम् । केचित्त्विति । अत्र जातिभिन्नमिति कृते द्रव्यत्वभेदमादाय सिद्धसाधनता । अतो द्रव्यत्वव्याप्येति । तथापि घटत्वादिना सिद्धसाधनवारणाय साक्षादिति । जलत्वादिना तद्वारणाय जलत्वादीति । जातिपदमौपाधिकधर्मस्यैक-व्यक्तिकेऽपि सम्भवादर्थान्तरवारणाय । जातेश्च धर्मिज्ञानाबाध्य व्यक्तिभेदमन्तरेणानुपपत्तेरिति भावः । तथापि गगनत्वेनार्थान्तरमेवेत्यत आह गगनत्वेति । लाघवेनेति । धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वादिति भावः । सत्तेति । न चात्मकालादिसाधारण जातिसिध्यार्थान्तरम् । न चात्म मात्र निष्ठेति कर्तव्यमिति वाच्यम् । साध्याप्रसिद्धेरिति वाच्यम् । क्लृप्त आत्मत्व एव जातित्व पर्यवसाने लाघवात् । अक्लृप्त जात्यन्तर कल्पने गौरवात् । न च कालनिष्ठेति करणेन कालत्व जातिसिद्धिरिति वाच्यम् । आत्मभेदव्यवस्थापक सुखादिभेदवत् कालभेदव्यवस्थापकाभावात् । आत्मेति । यद्यप्यस्य पक्षस्य स्वमतेऽपि सम्भवः । स्वेनात्माणुत्वस्वीकारात् । तथाचान्यपक्षत्ववर्णनमयुक्तम् । तथापि स्वेन जातेरनङ्गीकारात् तथोक्तम् । अत्रापि पूर्ववदर्थान्तर परिहारो द्रष्टव्यः । हेतौ काले व्यभिचार वारणाय विभ्विति । आत्मा आत्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान् विशेषगुणवत्त्वात् पृथिवीवदिति आदिशब्दसङ्गृहीतम् । अन्यथेति । औपाधिकभेदेनापि जात्युपपत्तावित्यर्थः । न च व्यावहारिकव्यक्त्यभेदो जातेर्बाधक इति वाच्यम् । देहात्माभेदस्यापि जातिबाधकत्वप्रसङ्गात् । न च स व्यावहारिको नेति वाच्यम् । आत्मज्ञानबाध्यत्वेन व्यावहारिकत्वात् । अप्रयोजकत्वं परिहरति विपक्ष इति । नन्वेवमाकाशत्वादेरपि जातित्वसिद्धिरित्यत आह आकाशादिकमिति । आत्मप्रतियोगिक भेदवान्नवेति विप्रतिपत्त्यनानुगुण्यादन्येत्वित्युक्तम् । जीवानामन्योन्य भेदेऽनुमानानि ।

## न्यायामृतप्रकाशः

ननु चैत्रे स्वीयदुःखानुसन्धातृत्वस्यैव सत्वेन स्वरूपासिद्धिवारणाय मैत्रानुसंहितपदमतोऽसिद्धि-वारकत्वाद्वैयर्थ्यमित्यत आह ॥ इह चेति ॥ अयमर्थः धूमवह्निभ्यां युक्ते पर्वते विमतं सुरभिधूमरहितं वह्निरहितत्वादित्यत्र चन्दनप्रभवविशेषणस्यासिद्धिवारकत्वेपि वह्निराहित्यमात्रस्य सुरभिराहित्ये प्रयोजकत्वाभावेन

(प्रकाशः)

व्याप्तिग्रहासम्भवादप्रयोजकत्वनिरासाय व्याप्तिग्रहोपयुक्तत्वेन चन्दनप्रभवेति विशेषणं प्रयुज्यते एवमत्र मैत्रानुसम्हितविशेषणस्यासिद्धिवारकत्वेपि दुःखाननुसन्धातृत्वमात्रं न भेदप्रयोजकं कदाचित्स्वस्मिन्नप्यतीत-दुःखाननुसन्धातृत्वसद्भावेन स्वतोपि भेदापत्तेः । अतो दुःखाननुसन्धातृत्वमात्रस्य भेदेऽप्रयोजकत्वेन व्याप्ति-ग्रहायोगात् तदर्थं मैत्रानुसंहितेति विशेषणम् । एवं च दहनतुहिनादौ दाहकत्वादिरूपधर्मयोरेव प्रयोजकत्वस्य क्लृप्तत्वादिहापि तयोरेव प्रयोजकत्वं वाच्यम् । तच्च मैत्रानुसंहितपदे सति लभ्यत इति । रूपादिषु पञ्चसु मध्य इत्यस्य विशेषणस्यासिद्धिवारकत्वेनव्याप्तिग्रहौपयिकत्वम् । इह तु अप्रयोजकत्वनिरासद्वारा तदुपयुक्तत्वमिति रीत्यन्तरमिति द्रष्टव्यम् ॥ विमतो बन्धध्वंस इति ॥ सर्वमुक्तिपक्षे विमतानां सर्वेषां जायमानः सामान्यतो बन्धध्वंसः स्वप्रतियोग्याधारप्रतियोगिकभेदवन्निष्ठः । स्वशब्देन बन्धध्वंसः तत्प्रतियोगी बन्धस्तदाधारा विमत-शब्दोक्ता आत्मानस्तत्प्रतियोगिको यो भेदस्तद्वन्तो ये विमता आत्मानस्तन्निष्ठः । नन्वेवं सर्वेषामपि जीवानाम् अन्योन्यभेदो न प्राप्तः । तथाहि । स्वशब्दोक्तध्वंसप्रतियोगिबन्धाधार एकश्चैत्रात्मा । तत्प्रतियोगिक-भेदवान्मैत्रात्मा तन्निष्ठत्वमस्तीति सिद्धसाधनतावारणाय स्वप्रतियोगितावच्छेदकावच्छिन्नाधारेत्युक्तं स्वशब्दोक्त-ध्वम्सप्रतियोगी बन्धः तदवच्छेदकं बन्धत्वम् । तदवच्छिन्ना ये बन्धास्तदाधारा ये आत्मानः अनेन बद्धा इति यावदित्युक्तं भवति । तत्प्रतियोगिको बद्धप्रतियोगिको भेदः अन्तर्गणिकभेदः तद्वन्तो ये विमतशब्दोक्ता आत्मानस्तन्निष्ठ इत्यर्थः । तेन नात्मद्वयमादायसिद्धसाधनम् एकस्य चैत्रात्मनः स्वकीयैकबन्धाश्रयत्वेपि बन्धत्वा-वच्छिन्नप्रतियोगिताकसर्वबन्धाश्रयत्वाभावादिति ज्ञेयम् । व्यावहारिकभेदमादाय सिद्धसाधनतावारणाय प्रतियोगि-ज्ञानाबाध्येत्युक्तम् । बन्धाधारप्रतियोगिकेत्युक्तत्वादत्र प्रतियोगिनो बन्धाधारा आत्मानो विवक्षितास्तज्ज्ञाना-बाध्येत्यर्थः तेषां च परमते ब्रह्मस्वरूपत्वाद्भेदस्य तज्ज्ञानाबाध्यत्वे तात्विकत्वमेव सिध्यति । अत्र स्वप्रति-योगितावच्छेदकावच्छिन्नाधारप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवज्जडनिष्ठत्वमादाय साध्यपर्यवसाने तन्निष्ठत्वस्य बन्धध्वंसे बाधान्नार्थान्तरतेति द्रष्टव्यम् ॥ संमतवदिति ॥ निगडबन्धवन्तो ये पुरुषा बहवस्तेषां जायमानो यो बन्धध्वंसस्तद्वत् तत्र स्वशब्दोक्तध्वंसप्रतियोगितावच्छेदकीभूतनिगडबन्धत्वावच्छिन्ना ये निगडबन्धास्तदाधारा निगडबद्धा इति यावत् तत्प्रतियोगिकः प्रतियोगिभूतबन्धाधारज्ञानाबाध्यो यो भेदः अन्तर्गणिकस्तद्वन्तो ये पुरुषास्तन्निष्ठो भवति निगडबन्धध्वंस इत्यर्थः । ननु तर्हि चैत्रः स्वज्ञानाबाध्यस्वभेदवान् पदार्थत्वादित्या-भासमाम्यमिति चेत्तत्राह ॥ विपक्ष इति ॥ स्वनिष्ठेति ॥ आनन्दनिष्ठेत्यर्थः ॥ दुःखविरोधित्वव्याप्यधर्मेणेति ॥ आनन्दत्वेनेत्यर्थः । पदार्थत्वादिनास्वशब्दोक्तानन्दजातीयघटादिप्रतियोगिकभेदस्यानन्दे स्यादतः स्वनिष्ठेत्यादि । तथाचानन्दानां परस्पर भेदे सिद्धे जीवजडयोश्च भेदसिद्धिः । दृष्टान्ते पक्षीभूताकाशरूपविभुव्यतिरिक्तत्वेन साध्यपर्यवसानं पक्षे बाधान्नैवं साध्यपर्यवसानमिति द्रष्टव्यम् । कालदिशावादायार्थान्तरतावारणाय विशेषगुण-वदित्युक्तम् । आत्मनामात्मत्वजात्या स्वभावत एव नानात्वं साधयितुम् आत्मत्वस्य जातित्वं साधयति ॥ पृथिवीत्वमिति ॥ पक्षे आत्मत्वरूपद्रव्यत्वसाक्षाद्व्याप्यजातिमादाय साध्यपर्यवसानं दृष्टान्ते तु जलत्वादीतरपक्षी-भूतपृथिवीत्वमादायेति द्रष्टव्यम् । पक्षे तु बाधान्नैवं साध्यपर्यवसानं । गगनत्वं जातिरिति मते तदादाय पक्षे साध्यपर्यवसानसंभवेन आत्मत्वस्य जातित्वासिद्धेराह ॥ गगनत्वेति ॥ ननु जलत्वादीतरद्रव्यत्वसाक्षाद्व्याप्यजाति-

(प्रकाशः)
रन्धकारत्वं तद्भिन्नत्वेन साध्यपर्यवसानं संभवतीत्याशङ्क्य निराकरोति ॥ न चेति ॥ क्लृप्ते धर्मिणि आत्मरूप-धर्मिणि धर्ममात्रेण आत्मत्वरूपजातिमात्रेणेत्यर्थः । तथा च धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायेनाभावत्वेन सिद्धान्धकाररूपधर्मिणो द्रव्यत्वं कल्पयित्वा तन्निष्ठधर्ममादाय साध्यपर्यवसानमयुक्तमिति भावः ॥ द्रव्यत्वेति ॥ तथाचानेनानुमानेनापि आत्मत्वस्य जातित्वसिद्धिरिति द्रष्टव्यम् ॥ तात्विकेति ॥ स्वाभाविकेत्यर्थः । तदेवोपपादयति ॥ जातेरिति ॥ भेदं स्वाश्रयव्यक्तिभेदम् ॥ व्यक्तिभेदाभावेप्यात्मत्वस्य जातित्वाङ्गीकारे ॥ न स्यादिति ॥ तथाचाकाशत्वादिकमपि जातिः स्यादिति भावः । औपाधिकत्वे पाचकत्वादिवदौपाधिकधर्मत्वे । ननु व्यक्त्यभेदः क्वापि दोषो न स्यादित्यापादनमयुक्तम् इष्टापत्तेः आकाशत्वस्यापि जात्विदित्यत आह ॥ आकाशादिकंत्विति ॥ ॥ जीवनामन्योन्यभेदनुमानानां विवरणम् ॥

## २०. आत्मभेदे अनुकूलतर्काः

**आत्माभेदे तु अन्योन्यं सुखदुःखाद्यनुसन्धानं स्यात् । न चोपाधिभेदोऽननुसन्धाने तन्त्रम्, हस्तपादाद्युपाधिभेदेऽप्यनुसन्धानदृष्टेः । नापि विश्लिष्टोपाधिभेदस्तत्र तन्त्रम् । मातृसुखादेर्गर्भस्थेनानुसन्धनापातात् ।**

**उद्यतायुधदोर्दण्डाः पतितस्वशिरोक्षिभिः ।**
**पश्यन्तः पातयन्ति स्म कबन्धा अप्यरीन् युधि ॥**

**इति भारतोक्त्या विश्लेषेऽप्यनुसन्धानदृष्टेश्च । नाप्यतीतादिशरीरेष्विव शरीरभेदस्तत्र तन्त्रम्, तद्भेदेऽपि बाल्येऽहं दुःखीत्यनुसन्धानस्य जातिस्मरस्य च जन्मान्तरेऽहं दुःखीत्यनुसन्धानस्य योगिनश्च नानादेहगभोगानुसन्धानस्य च दर्शनात् । न च वयं सदा वर्तमानतया अनुभवं स्मरणं वा अनुसन्धानं ब्रूमः, किं नाम कदाचित् स्वीयतयानुभवमात्रम् । न च तन्नास्त्यतीते सुखादौ । न चान्तःकरणरूपोपाधिभेदस्तत्र तन्त्रम् । योगिनोऽन्तःकरणमेकमेवेति वाच्यम्, चैतन्यैक्येऽप्यन्तःकरणभेदादननुसन्धानस्य मां प्रत्यद्याप्यसिद्धत्वेन शरीरभेदवच्चक्षुरादिकरणभेदवच्च तद्भेदस्याप्यप्रयोजकत्वात् । त्वन्मते प्रत्यहं सुषुप्तावन्तःकरणलयेऽपि पूर्वेद्युरहं दुःखीत्यनुसन्धानाच्च सुषुप्तप्रलीनमुक्तानामन्तःकरणभेदाभावेन संसारिदुःखाद्यनुभावापाताच्च । न चान्तःकरणैकत्वानैकत्वे अनुसन्धानाननुसन्धानयोस्तन्त्रे, मुक्तादेः स्वरूपसुखाननुभवापातात् । अन्तःकरणा**

नानात्वेऽप्यनुसन्धानस्योक्तत्वाच्च । न चाविद्यारूपोपाधिभेदस्तत्र तन्त्रम्, सुषुप्तौ चाविद्यास्तीति वाच्यम्, उक्तरीत्या ज्ञानप्रागभावभेदस्याप्यप्रयोजकत्वात् । यावन्ति-ज्ञानानि तावन्त्यज्ञानानीतिमते एकस्मिन्नपि जीवे ब्रह्मविषयकाज्ञानानां भिन्नत्वाच्च । मुक्तस्य संसारिदुःखाद्यनुसन्धानापाताच्च । न चाविद्यैकत्वानेकत्वे अनुसन्धानाननु-सन्धानयोस्तन्त्रे, मुक्तस्य स्वरूपसुखाननुभवापातात् ।

किं चानेकाविद्यासम्बन्धस्य दुःखानुसन्धानरूपानर्थस्य च विशिष्टगतत्वे बन्धमोक्षयोर्वैयधिकरण्यापातेन शुद्धगतत्वे वाच्ये यच्छुद्धं चैत्रीयदुःखाननु सन्धातृ तदेव मैत्रीयदुःखानुसन्धात्रिति कथमनुसन्धानाननुसंधानव्यवस्था । एतेन बिम्ब-प्रतिबिम्बयोरवदातत्वश्यामत्ववद् घटाकाशमहाकाशयोः परिच्छिन्नत्वापरिच्छिन्न-त्ववद् एकस्यैव नभसस्तत्तत्कर्णपुटावच्छेदेन तत्र तत्र श्रोत्रभाववच्चौपाधिकभेदेन जीवब्रह्मणोरनुसन्धानाननुसन्धाने इति निरस्तम्, दुःखानुसन्धानरूपस्यानर्थस्यो-पहितनिष्ठत्वेन तस्य कल्पितत्वेन बद्धस्य निवृत्तिरेव, न तु मोक्ष इत्यापातात् । दुःखाद्यनुसन्धानस्य साक्षिरूपतयोपाधिधर्मत्वाभावेन श्यामत्वादिवैषम्याच्च । प्रति-बिम्बस्य छायावद्वस्त्वन्तरत्वेनाकाशस्य तु त्वन्मतेऽपि कार्यद्रव्यतया सावयवत्वेन तैजसाहंकारकार्याणां श्रोत्राणां स्वत एव भिन्नत्वेन दृष्टान्तासम्मतेश्च ।

एतेनात्मेन्द्रियमनोयुक्तं भोक्तेत्याहुरिति श्रुतेर्विशिष्टस्यैव भोक्तृत्वात्तस्य च भिन्नत्वाद् व्यवस्थेति कौमुद्यक्तं निरस्तम्, शुद्धचिन्मात्रनिष्ठत्वे तु तत्र भेदाप्रतीत्या-कल्पितभेदस्याप्याभावाद् भावे वा भेदस्यैव व्यवस्थारूपस्वकार्यकारिणो वह्न्य-ुष्णत्ववद्धर्मिज्ञानाबाध्यत्वम् अभेदस्य त्वव्यवस्थारूपस्वकार्याकारिणोऽनुष्णत्व वन्मिथ्यात्वमित्यापाताच्च । कल्पितभेदहीनस्य मुक्तस्य संसारिदुःखानुभवापाताच्च । एतेन नोपहितेऽनुसन्धानं किं तु तार्किकमते आत्मनि दुःखाद्याश्रयतादेहादिनेवेहापि चिन्मात्रेऽनुसन्धातृता अविद्यारूपोपाधिनावच्छिद्यत इति निरस्तम्, तन्मते आत्मन इवात्र चित एवानर्थान्वयेन ब्रह्मःदुखित्वापादकस्य संसारिदुःखस्य सत्त्वेन तद्भाव-रूपमुक्तेरपुमर्थत्वापातात् । नित्यमुक्तत्वश्रुतेर्निर्विषयत्वापाताच्च । विस्तृतं चैतद-विद्याश्रयभङ्गे ।

ननु किमत्रांशानां जीवानामनुसन्धानमापाद्यम्? अंशिनो ब्रह्मणो वा? नाद्यः, हस्तावच्छिन्नेन पादावच्छिन्नदुःखाद्यननुसन्धानात् । नान्त्यः, तस्याभोक्तृत्वेन भोगाप्रसंगात् । दुःखादिज्ञानमात्रस्य च सर्वज्ञे तस्मिन्निष्टत्वादिति चेन्न तावदाद्ये दोषः । न हि भोगायतनानां सांकर्यमापाद्यते, येन पादे मे वेदना शिरसि मे सुखमिति न स्यात् । किं त्वनुसन्धानमात्रम् । तच्चांशानामस्त्येव, अन्यथा चैत्रदेहलग्नकंटकोद्धाराय मैत्रस्येव पादे लग्नकण्टकोद्धरणाय हस्तव्यापारो न स्यात् । न च पुत्रादाविवोपपत्तिः, दुःखाद्यनुमानपूर्वककृपादेरनुपलम्भात् । एतेन नेत्राद्यवच्छिन्नस्यात्मनः शब्दाद्यनुपलम्भवदेकशरीरविशिष्टस्य शरीरान्तरेऽननुसन्धानमिति निरस्तम्, योऽहं रूपमद्राक्षं सोऽहं शृणोमीत्यनुभवात् । नाप्यन्ते दोषः । भोक्तृजीवाभिन्नत्वेन ब्रह्मणोऽपि भोक्तृत्वस्यापादनात् । आपादने च प्रमाणविरोधस्यालंकारत्वात् । न चान्तःकरणस्य तदवच्छिन्नस्य वानुसन्धातृत्वान्न ब्रह्मणस्तदिति वाच्यम्, दुःखभोगस्य शुद्धब्रह्मगतत्वोक्तेः ।

एतेनानवच्छिन्ने अभ्रान्ते च ब्रह्मण्यनुसन्धाने तन्त्रस्यान्तःकरणावच्छेदस्याभावात् न तस्याहं दुःखीति भ्रान्तिरूपमनुसन्धानमिति निरस्तम् । कल्पितस्याकल्पितस्य दुःखभोगस्य शुद्धचिद्गतत्वावश्यंभावात् भ्रान्त जीवाभिन्नेश्वरस्याभ्रान्तत्वायोगाच्च । एतेनान्तःकरणावच्छिन्नान् अनुसन्धातॄन् प्रत्यविद्यावच्छिन्नस्यांशित्वात्तस्यैव दुःखानुसन्धानम्, न तु शुद्धस्येति निरस्तम्, चिन्मात्रमेवानुसन्धात्रित्युक्तत्वात् । अवच्छिन्नस्यानुसन्धातृत्वेऽप्यवस्थात्रयानुस्यूताविद्यावच्छिन्नस्य वानुसन्धातृत्वेन तद्द्वारा शुद्धस्यानुसन्धानापरिहाराच्च । अन्तःकरणावच्छिन्नस्यैवानुसंधातृत्वेऽपि तद्गतस्यानुसन्धानस्य तदवच्छेद्याविद्यावच्छिन्ननिष्ठत्ववद्, अविद्यावच्छिन्ननिष्ठस्य तदवच्छेद्यशुद्धनिष्ठत्वापत्तेश्च । एतेन यथा स्वकर्ण पुटपरिच्छिन्न नादोपलंभेपिभागान्तरवर्तिनादानुपलम्भः, तथा सुखदुःखाद्युपलम्भानुपलम्भाविति निरस्तम्, आत्मभेदे कर्णपुटानां तत्तदीयत्वनियमवद् ऐकात्म्यवादे सर्वदेहानां स्वीयत्वेन तत्तदीयत्वनियमाभावेन स्वीयकर्णपुटद्वयपरिच्छिन्ननादोप-

लम्भवत् सर्वदेहस्थदुःखाद्यनुसन्धानस्य दुर्वारत्वात् । न च कर्मणां तत्तदीयत्वेन शरीराणां तत्तदीयत्वम् । आत्मैक्ये कर्मणामपि तत्तदीयत्वनियमायोगात् । शरीरनियमेन कर्मनियमे त्वन्योन्याश्रयात् । तदुक्तम्–

सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता ।
तत्सिद्धौ चैव तत्सिद्धिरित्यन्योन्यव्यपाश्रयः ॥ इति ॥

एतेन यत्केनचिदुक्तम्– न सुखदुःखव्यवस्थया भेदसिद्धिः । व्यवस्थाशब्देन धर्मभेदोक्तौ एकस्मिन्नेकदैव सुखदुःखदर्शनेन व्यभिचारात् । भिन्नाश्रयधर्मोक्तौ अन्योन्याश्रयाद् विरुद्धधर्मोक्तौ विरोधस्य सहानवस्थानरूपत्वे असिद्धेः । वध्यघातुकभावरूपत्वे "नाजात" इति न्यायेन भेदासाधकत्वादिति निरस्तम्, व्यवस्थाशब्देनानुसन्धानाननुसन्धानयोरुक्तेः । तस्मादात्मैक्ये सुखदुःखादिव्यवस्था न स्यादेव । तदुक्तं–

सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः ।
दृश्यो ह्युपाधिभेदेऽपि हस्तपादादिगो यथा ॥
नानादेहगभोगानुसन्धानं योगिनो यथा ।
न चेद्भोगानुसन्धानं तदिच्छायोगिनः कुतः ॥ इति ॥

उक्तं च– अनुसन्धानरहितमैक्यं चेदेकता न तत् ।
चैतन्यैक्येऽनुसन्धानं प्रमाणं नैव चापरम् ॥ इति ॥

एवं बद्धमुक्तव्यवस्था, पण्डितमूर्खव्यवस्था, चैत्रप्रमया मैत्रस्य भ्रान्त्यनिवृत्तिः, चैत्रानुभूते मैत्रस्यास्मृतिरित्यादिव्यवस्था च न स्यात् । न च तत्तदुपाध्यपगमे तस्य तस्य मुक्तिः, उपाधिसम्बन्धस्योपहितनिष्ठत्वे आत्मान्योन्याश्रयचक्रकानवस्थान्यतरापातात् । शुद्धनिष्ठत्वेऽपि किमेकैकोपाध्यपगमो मुक्तिः? उत सर्वोपाध्यपगमः? नाद्यः सदा मुक्तिरेव, न तु बन्ध इत्यापातात् । नान्त्यः, अधुना बन्ध एव, न कस्यापि मुक्तिरित्यापातात् । त्वन्मते इदानीं कल्पितबन्धवतः तत्त्वतो मुक्तत्वेऽपि

**यादृशः कल्पितोऽप्यनर्थरूपः ज्ञानेनोच्छेत्तव्यः बन्धः, तद्रहितस्य मुक्तशब्दार्थस्याभावात् । तदेवं नौपाधिकभेदमात्रेण बद्धमुक्तादिव्यवस्था युक्ता ।**

**किं चोपाधेर्भेदकत्वमेवायुक्तम् । तथा हि– उपाधिः किमेकदेशेन सम्बध्यते? कृत्स्नेन वा? आद्ये त्वन्मते स्वाभाविकांशाभावेन औपाधिकत्वे वाच्येऽनवस्था । अन्त्ये न भेदकता, कृत्स्नस्यैकोपाधिग्रस्तत्वात् । एवं गगनादावपि स्वाभाविकांशानंगीकारे घटाद्युपाधिसम्बन्धो न स्यादेव । तदुक्तम्–**

**न चेदुपाधिसम्बन्ध एकदेशोऽथ सर्वगः ।**
**एकदेशेऽनवस्था स्यात्सर्वगश्चेन्न भेदकः ॥ इति ।**

**आत्मभेदे अनुकूलतर्काः ॥**

अद्वैतसिद्धिः

ननु– यद्यात्मैक्यं स्यात्, चैत्रेण सर्वदुःखाद्यनुसन्धानं स्याद् इति– चेन्न, औपाधिकभेदेनाननुसन्धानोपपत्तेः । ननु– हस्तपादाद्युपाधिभेदेऽप्यनुसन्धानदर्शनाद् उपाधिभेदोऽप्रयोजकः, न च विश्लिष्टोपाधिभेदस्तत्र तन्त्रम्, मातृसुखादेर्गर्भस्थेनानुसन्धानापातात् । भारते–

'उद्यतायुधदोर्दण्डाः पतितस्वशिरोक्षिभिः ।
पश्यन्तः पातयन्ति स्म कबन्धा अप्यरीन्युधि ॥'

इत्यादिना विश्लेषेऽप्यनुसन्धानोक्तेश्चेति चेन्न, न हि वयं यत्किंचिदुपाधिमात्रमननुसन्धानप्रयोजकं ब्रूमः, किंत्वन्तःकरणरूपोपाधिभेदमविद्याभेदं वा । स च भेदः कबन्धे योगिनि च नास्त्येव । तेन तत्रानुसन्धानं चैत्रमैत्रयोश्चास्तीति अननुसन्धानम् । एतेन-शरीररूपोपाधिभेदस्याननुसन्धानप्रयोजकत्वे बाल्यानुभूतस्य यौवने जातिस्मरेण पूर्वजन्मानुभूतस्य योगिना नानाशरीरानुभूतस्य च स्मरणं न स्यादिति– निरस्तम्, शरीरभेदस्य तत्रातन्त्रत्वाद्, योगिजातिस्मर्तॄणामन्तःकरणैक्यात् । न च– चैतन्यैक्ये अन्तःकरणभेदस्य

(अद्वैतसिद्धिः)

नाननुसन्धानप्रयोजकत्वम्, चक्षुरादिकरणभेदेऽप्यनुसन्धानदर्शनादिति– वाच्यम्, अन्यकरण-भेदेन तथा दर्शनेऽप्यन्तःकरणभेदस्य तदैक्याध्यासापन्ने अननुसन्धानप्रयोजकत्वं कल्प्यते, अन्यथा ब्रह्मैक्यस्य जीवे श्रुतिसिद्धतया सर्वानुसन्धानापत्तेः । न च– अन्तःकरणस्य प्रत्यहं सुषुप्तौ विलयेन पूर्वदिनानुभूतस्याननुसन्धानापत्तिरिति– वाच्यम्, संस्कारात्मनावस्थितस्यैव पुनरुद्बोधेन तत्रान्तःकरणभेदाभावात् । न च– एवं सुषुप्तप्रलीनमुक्तानामननुसन्धानप्रयोज-कान्तःकरणभेदाभावात् संसारिदुःखानुसन्धानापत्तिरिति– वाच्यम्, तेषामनुसन्धानप्रयोज-कान्तःकरणैक्याध्यासरूपसामग्रीविरहात् । न हि प्रतिबन्धकमात्रेण कार्यविरहः, किन्तु सामग्रीविरहेणापि । न च– एवं मुक्तस्य स्वरूपसुखानुभवोऽपि न स्यादिति– वाच्यम्, तस्याजन्यत्वेनान्तःकरणानपेक्षत्वात्, जीवविभाजकोपाध्यज्ञानभेदाभेदाभ्यामनुसन्धानाननु-सन्धानोपपत्तेश्च । न च– ज्ञानप्रागभाववदज्ञानस्यापि भेदाभेदयोस्तत्राप्रयोजकत्वम्, यावन्ति ज्ञानानि तावन्त्यज्ञानानीति मते एकस्मिन्नपि जीवे ब्रह्मविषयकाज्ञानानां भिन्नत्वेनानु-सन्धानविरहप्रसङ्ग इति– वाच्यम्, ज्ञानप्रागभावानां ज्ञानसमसङ्ख्याज्ञानानां च जीव-विभाजकत्वाभावेनानुसन्धानादावप्रयोजकत्वात् ।

यत्तु– मुक्तस्यैव संसारदुःखानुसन्धानापत्तिः, अविद्यारूपोपाधिभेदाननुसन्धाने स्वरूप-सुखस्याप्यननुभवापातः– इति, तन्न, वैषयिकसुखाद्यनुसन्धाने तस्य तन्त्रत्वेन स्वप्रकाशस्व-रूपस्फुरणे तदनपेक्षत्वात् । ननु– एवमनेकाविद्यासंबन्धस्य दुःखानुसन्धानस्वरूपस्यानर्थस्य च विशिष्टगतत्वे बन्धमोक्षयोर्वैयधिकरण्यापातेन शुद्धगतत्वे वाच्ये यच्छुद्धं चैत्रीयदुःखानुसन्धातृ, तदेव मैत्रीयदुःखानुसन्धात्रिति कथमनुसन्धानाननुसन्धानव्यवस्थेति– चेन्न, अविद्यात्मकबन्ध-निवृत्त्यात्मकमोक्षस्य शुद्धगतत्वेऽपि दुःखाद्यनुसन्धातृत्वस्य उपहितवृत्तितया शुद्धभेदा-पादनायोगात् । न च संसारस्य शुद्धगतत्वे ब्रह्मणोऽपि संसारित्वापत्तिः, बिम्बप्रतिबिम्ब-योरवदातत्वश्यामत्ववद् घटाकाशमहाकाशयोः परिच्छिन्नत्वापरिच्छिन्नत्ववद् एकस्यैव नभसस्तत्तत्कर्णपुटावच्छेदेन तत्र तत्र श्रोत्रतावच्च औपाधिकभेदेन संसारित्वासंसारित्व-व्यवस्थोपपत्तेः ।

अत एव– दुःखानुसन्धानरूपस्यानर्थस्य उपहितनिष्ठत्वेन तस्य कल्पितत्वेन बद्धस्य निवृत्तिरेव, न तु मोक्ष इत्यापात इति– निरस्तम्, उपाधेः कल्पितत्वेन निवृत्ता-

(अद्वैतसिद्धिः)

वप्युपधेयस्याकल्पिततया तन्निवृत्त्ययोगान्मोक्षान्वयोपपत्तेः । न च प्रतिबिम्बस्य छायावद्व-स्त्वन्तरत्वेनाकाशस्यापि त्वन्मतेऽपि कार्यद्रव्यतया सावयवत्वेन तैजसाहङ्कारकार्याणां श्रोत्राणां स्वत एव भिन्नत्वेन दृष्टान्तासंमतिरिति– वाच्यम्, प्रतिबिम्बे वस्त्वन्तरत्वस्य निरसिष्यमाण-त्वाद्, आकाशश्रोत्रभावस्य पररीत्या दृष्टान्तत्वाद्, 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण' इति श्रुतेर्विशिष्टस्यैव भोक्तृत्वात्तस्य भिन्नत्वाद् व्यवस्थेति कौमुद्युक्तप्रकारेणापि अनुसन्धाना-ननुसन्धानोपपत्तेश्च ।

अत एव– शुद्धचिन्मात्रगतत्वे तत्र भेदाप्रतीत्या भेदस्य कल्पितस्याप्यभावः, भावे वा भेदस्यैव व्यवस्थारूपस्वकार्यकारिणो वह्नावुष्णत्ववद्धर्मिज्ञानाबाध्यत्वम्, अभेदस्य त्वव्यवस्था-रूपस्वकार्याकारिणोऽनुष्णत्ववन्मिथ्यात्वमित्यापातः, आविद्यकभेदहीनस्य मुक्तस्य संसारि-दुःखानुभवापातश्च इति– निरस्तम्, व्यवस्थायाः स्वसमानसत्ताकभेदकार्यत्वेन स्वाधिक-सत्ताकभेदाऽनाक्षेपकत्वाद्, अव्यवस्थायाः शुद्धचैतन्याभेदाकार्यत्वेन तदकारित्वप्रयुक्त-मिथ्यात्वस्यापादयितुमशक्यत्वात्, उपाध्यभेदस्यैव तत्र तन्त्रत्वात् । किंचोपाधि-कल्पितांशजीवानां वानुसन्धानमापाद्यते? अंशिनो ब्रह्मणो वा? नाद्यः, हस्तावच्छिन्नेन पादावच्छिन्नदुःखाद्यननुसन्धानात् । न च– न वयं भोगायतनानां साङ्कर्यमापादयामः, येन पादे मे वेदना शिरसि मे सुखमिति न स्यात्, किंत्वनुसन्धानमात्रम्, तच्चांशानामस्त्येव, अन्यथा चैत्रदेहलग्नकण्टकोद्धरणाय मैत्रस्येव पादलग्नकण्टकोद्धरणाय हस्तस्य व्यापारो न स्यादिति– वाच्यम्, पादावच्छिन्नदुःखस्य हस्तावच्छिन्ने अनुत्पादनवत् चैत्रीयदुःखाद्यनु-संधानस्य मैत्रेऽनुत्पादः । हस्ते दुःखप्रयोजकसामगीविरहवत् मैत्रे अनुसन्धानप्रयोजको-पाध्यैक्याभावात् । तथा च हस्तावच्छेदेनानुसन्धानमस्त्येवेति न तत्र व्यापाराभावापत्तिः । नान्त्यः तस्याभोक्तृत्वेन भोगाप्रसङ्गात्, दुःखादिज्ञानमात्रस्य च सर्वज्ञे तस्मिन्निष्टत्वात् । न च भोक्तृजीवाभिन्नत्वेन ब्रह्मणोऽपि भोक्तृत्वापत्तिः, बिम्बप्रतिबिम्बवद्व्यवस्थोपपत्तेः, अनु-सन्धानस्यावच्छिन्नगततया शुद्धब्रह्मण्यापादनायोगाच्च । न चैतावता बन्धमोक्षयोर्वैयधिकरण्यम्, अविद्यात्मकबंधस्य शुद्धगतत्वेन सामानाधिकरण्योपपत्तेः, अवच्छिन्नस्यानुसन्धातृत्वेऽप्य-वस्थात्रयानुस्यूताविद्यावच्छिन्नद्वारा शुद्धे अनुसन्धातृत्वस्येष्टत्वाद्, 'अनेन जीवेने'त्यादि-श्रुतेः । किंच यथा स्वकर्णपुटपरिच्छिन्ननादोपलम्भे भागान्तरवर्त्तिनादानुपलम्भः, तथा

(अद्वैतसिद्धिः)

सुखदुःखाद्युपलम्भानुपलम्भौ। न च– आत्मभेदे कर्णपुटानां तत्तदीयत्वनियामकवदेकात्मवादे सर्वदेहानां स्वीयत्वेन तत्तदीयत्वनियमाभावेन व्यवस्थानुपपत्तिरिति– वाच्यम्, तवात्मभेदेनेवावच्छेदकज्ञानादिभेदेन मम व्यवस्थोपपत्तेः। किंच व्यवस्थया भेदं वदन् प्रष्टव्यः केयं व्यवस्था? न तावद्धर्मभेदः, एकस्मिन्नेव सुखदुःखदर्शनेन व्यभिचाराद्, भिन्नाश्रयधर्मोक्तौ अन्योन्याश्रयाद्, विरुद्धधर्मोक्तौ तु विरुद्धत्वस्य सहानवस्थानरूपत्वे असिद्धेः, बाध्यबाधकभावरूपत्वे तस्यैकाश्रयत्वेनोपपत्त्या भेदासाधकत्वात्। नाप्यनुसन्धानाननुसन्धाने, तयोरुक्तेन प्रकारेण उपाधिभेदेनोपपत्तेरात्मभेदासाधकत्वस्योक्तत्वात्। अत एव बन्धमुक्त्यादिव्यवस्थापिन स्वाभाविकभेदसाधनाय, तत्तदुपाध्युपगमापगमाभ्यामेव व्यवस्थोपपत्तेः। न चोपाधेरप्युपहितनिष्ठत्वेनात्माश्रयादिर्दोषः, उपाधेरविशेषणत्वेन व्यक्त्यन्तरानपेक्षत्वेन चात्माश्रयादिचतुर्णामनवकाशात्। एतेन शुद्धनिष्ठत्वे किमेकैकोपाध्यपगमो मुक्तिः? उत सर्वोपाध्यपगमः? नाद्यः, सदा मुक्तिरेव, न तु बन्ध इत्यापातात्। नान्त्यः, अधुना बन्धः, एव न कस्यापि मुक्तिरित्यापातादिति निरस्तम्, येनोपाधिना यस्य चैतन्यस्य परिच्छिन्नत्वं तस्मिन् चैतन्ये तदुपाध्यपगमस्यैव मुक्तित्वे नानाजीववादे पूर्वोक्तदोषानवकाशात्। एकजीववादे सर्वोपाध्यपगमस्यैव मुक्तितया इदानीं मुक्त्यभावस्येष्टत्वात्। ननु– उपाधेः कथं भेदकत्वम्, तथा हि– उपाधिः किमेकदेशेन संबध्यते? कृत्स्नेन वा? आद्ये त्वन्मते स्वाभाविकांशाभावेनौपाधिकत्वं वाच्यम्, तथा चानवस्था। अन्त्ये न भेदकता, कृत्स्नस्यैकोपाधिग्रस्तत्वात्। गगनादावपि स्वाभाविकांशाभावे घटाद्युपाधिसम्बन्धो न स्यादेव। तदुक्तम्–

न चेदुपाधिसम्बन्ध एकदेशेऽथ सर्वगः।
एकदेशेऽनवस्था स्यात् सर्वगश्चेन्न भेदकः॥

इति– चेन्न, सर्वविकल्पासहत्वेन मिथ्याभूतस्यैवोपाधेर्मिथ्याभेदप्रयोजकत्वस्य प्रागेवोपपादनात्। यथा चात्मनां सर्वगतानां भेदे व्यवस्थानुपपत्तिः, तथा प्रपञ्चितं भाष्यकृद्भिः॥
इत्यद्वैतसिद्धौ जीवभेदानुकूलतर्कभङ्गः।

## न्यायामृततरङ्गिणी

**चक्षुरादिकरणभेदवदिति॥ नन्वन्यकरणभेदेन तथाऽदर्शनेप्यन्तःकरणभेदस्य तदैक्याध्यासापन्नेऽननुसन्धानप्रयोजकत्वं कल्प्यते अन्यथा ब्रह्मैक्यस्य जीवे श्रुतिसिद्धतया सर्वानु-**

(तरङ्गिणी)

सन्धानापत्तेः । मैवम् । जीवब्रह्मभेदस्यैवश्रुतिसिद्धतया तद्भेदेप्यननुसन्धानोपपत्तेः ॥ प्रत्यहमिति ॥ ननु संस्कारात्मनास्थितस्यैव पुनरुद्बोधेन तत्रान्तःकरणभेदाभावः । मैवम् । संस्कारस्यानन्तःकरणत्वेऽननुसन्धानप्रसङ्गात् । तत्त्वे सुप्तौ लयानुपपत्तेः ॥ सुप्तप्रलीनेति ॥ ननु तेषामनुसन्धानप्रयोजकान्तःकरणैक्याध्यासरूपसामग्रीविरहान्न संसारिदुःखानुभवः । न हि प्रतिबन्धकमात्रेण कार्यविरहः । किं तु सामग्रीविरहेणापि । मैवम् । मुक्तौ स्वरूपसुखाननुसन्धानस्य वक्ष्यमाणत्वात् ॥ मुक्ताविति ॥ न च तस्याजन्यत्वेनान्तःकरणानपेक्षा । सुखादिसाक्षिणोपि तत्वात् ॥ उक्तरीत्येति ॥ चक्षुरादिभेदवदित्यर्थः ॥ मुक्तस्येति ॥ ननु वैषयिकसुखाद्यनुसन्धानेऽविद्यैकत्वस्य तन्त्रत्वेन स्वप्रकाशस्वरूपस्फुरणे तदनपेक्षेति न स्वरूपसुखाननुभवप्रसङ्गः । मैवम् । मोक्षकालीनसुखस्फुरणस्येदानीमपि सत्त्वापातात् । नन्वविद्यातन्निवृत्त्योर्बन्धमोक्षयोः शुद्धगतत्वेपि दुःखाद्यनुसन्धातृत्वमुपहित एवेति न शुद्धभेदापादकमित्यत आह ॥ दुःखानुसन्धानरूपस्येति ॥ निवृत्तिरेवेति ॥ ननूपाधेः कल्पितत्वेन निवृत्तावप्युपधेयस्याकल्पिततया तदनिवृत्तेस्तस्य मोक्षान्वयितोपपद्यते । मैवम् । घटे निवृत्ते घटाकाशस्येवोपाधिनिवृत्तानुपहितस्वरूपस्यापि निवृत्त्यवश्यंभावात् ॥ प्रतिबिम्बस्येति ॥ तद्वस्त्वन्तरत्वस्योपपादयिष्यमाणत्वात् ॥ एतेनेति ॥ तत्वज्ञानेन भोक्तुर्निवृत्तिरेव न तु मुक्तिरित्यापातेन । ननु दुःखाद्यनुसन्धातृत्वरूपः संसारः शुद्धगत एव । न च तस्य सर्वजीवदुःखानुसन्धानापत्तिः । कल्पितभेदादननुसन्धानोपपत्तेरत आह ॥ शुद्धचिन्मात्रेति ॥ धर्मिज्ञानाबाध्यत्वमिति ॥ ननु व्यवस्थायाः स्वसमानसत्ताकभेदकार्यत्वेन न तया भेदस्य धर्मिज्ञानाबाध्यत्वाक्षेपः । मैवम् । सस्मिन्धर्मिणि यत् स्वकार्यकारि तत् तद्धर्मिज्ञानाबाध्यमिति व्याप्तिबलेन तदाक्षेपसम्भवात् ॥ अभेदस्य त्विति ॥ पूर्ववद्व्याप्तिबलेनाभेदस्य मिथ्यात्वं ॥ एतेन नेत्राद्यवच्छिन्नस्येति ॥ हस्ताद्यवच्छिन्नस्याप्यनुसन्धानस्यानुभवसिद्धत्वेन नेत्राद्यवच्छिन्नस्य शब्दाद्युपलम्भजन्यसुखाद्यनुसन्धानस्य च सत्त्वेन तदननुसन्धानमसिद्धमित्यर्थः । सोहमिति द्रष्टुः शब्दानुसन्धानवच्चेतनैक्ये सति शरीरभेदेप्यनुसन्धानानु भवाच्छरीरान्तरेऽननुसन्धानमसिद्धमित्यर्थः ॥ अन्तःकरणस्येति ॥ अन्तःकरणतदवच्छिन्नानांभिन्नत्वान्नानुसन्धानम् ॥ शुद्धब्रह्मगतत्वोक्तेरिति ॥ बन्धमोक्षयोः सामानाधिकरण्यानुरोधेन त्वया शुद्ध एवानुसन्धानात्मकभोगस्य वाच्यत्वात् । ननु शुद्धेऽविद्या भोगस्त्वन्तःकरणावच्छिन्ने । मैवम् । चोरापराधेन माण्डव्यनिग्रहवद्व्यधिकरणत्वेन निरस्तत्वात् ॥ तद्द्वारेति ॥ अविद्यावच्छिन्नद्वारेत्यर्थः ॥ शुद्धनिग्रत्वापत्तेश्चेति ॥ यत्त्वविद्यावच्छिन्नद्वारा शुद्धेऽनुसन्धातृत्वमिष्टमेव । अनेन जीवेनेत्यादिश्रुतेरिति । तन्न । नित्य-

मुक्तत्वादिश्रुतेर्निर्विषयत्वस्य मुक्तोपसृप्याभावस्य च प्रसङ्गस्योक्तत्वात् ॥ आत्मभेद इति ॥ ननु तवात्मभेद इवावच्छेदकाज्ञानादिभेदेन मम व्यवस्थोपपत्तिः । मैवम् । चेतनैक्ये सत्यज्ञानादि-भेदस्य हस्तादिभेदवदननुसन्धानप्रयोजकत्वस्य बहुकृत्व उक्तत्वात् ॥ केनचिदिति ॥ तत्व-प्रदीपिकाकृता ॥ नाजात इतीति ॥ नाजात एकोन्यं हन्ति नाप्यन्याधार इति न्यायस्तु व्याख्यातः ॥ तदुक्तमिति ॥ उपाधिखण्डन इति शेषः ॥ सुखदुःखादीति ॥ चैतन्यैक्ये सत्यन्तःकरणाद्युपाधिभेदमात्रात्सुखदुःखादिभोगो भेदेन न दृश्येत । हस्तपादादिगतभोगवत् । यद्यपि सत्योपाधिकृतसत्यभेदे दूषणतयेदं टीकायां व्याख्यातं तथापि स्वाभाविकेचैतन्यैक्ये सति सत्येभेदेपि नाननुसन्धानं युज्यते किं पुनः कल्पिते भेद इत्यत्र तात्पर्यम् ॥ नानादेहगेति ॥ स्वरूपैक्ये सति नानादेहगतसुखाद्यनुसन्धानं सौभर्यादेर्योगिनो दृष्टमतस्तदेवानुसन्धाने प्रयोजकम् । ननु नानादेहगभोगानुसन्धानं योगिनोस्तीत्यत्र न मानं परबुद्धेरप्रत्यक्षत्वादत आह ॥ न चेदिति ॥ भोगंविना नानादेहधारणे प्रयोजनाभावात्प्रेक्षावतो योगिनो नानादेहेच्छा न स्यात् । अतोस्त्येव योगिनो नानादेहगभोगानुसन्धानमित्यनुमीयत इत्यर्थः । स्वाधिकरणे स्वकार्याकारिण ऐक्यस्य मिथ्यात्वं स्यादित्यत्र संमतिमाह ॥ अनुसन्धानरहितमिति ॥ ननु निरंशेप्याकाशे यथोपाधिसम्बन्धस्तथा चैतन्येपि स्यादत आह ॥ एवमिति ॥ गगनादावपि स्वाभाविकांशभेदे सत्येवोपाधिः सम्बध्यते ॥ नचेदिति ॥ स्वाभाविकांशो गगनादौ नाङ्गी-क्रियत इति चेत्तर्ह्युपाधिसम्बन्धस्तत्रैकदेशे वा भवति सर्वस्मिन् वा । आद्ये त्वन्मते गगने स्वाभाविकांशाभावेनानवस्था । अन्त्ये न भेदकः ॥ ॥ आत्मभेदेऽनुकूलतर्काः ॥

## न्यायामृतकण्टकोद्धारः

नन्वुक्तानुमानानां विपक्षे बाधकाभावेनाप्रयोजकत्वात् न तैर्भेदसिद्धिरित्यत आह आत्माभेदेत्विति । न चेति । उपाधिकृतो भेद उपाधिभेदः । तथाचोपाधिकृतभेदाभावस्यानुसन्धाने तन्त्रत्वात् तस्य च प्रकृतेऽ-भावान्नानुसन्धानमिति भावः । मातृसुखादेरिति । न च स्वरूपैक्यमपि प्रवेश्यते, अतो नाति प्रसङ्ग इति वाच्यम् । तथा च तस्यावश्यकतया तदेवास्त्वनुसन्धाने प्रयोजकं, न विश्लिष्टोपाधि भेदाभावोऽपि । गौरवात् । अतिप्रसङ्गाभावाच्च । उद्यतेति । उद्यतायुधदोर्दण्डाः कबन्धाः पतितानि यानि स्वशिरांसि तद्गताक्षिभिः पश्यन्तः अरीन् युधि पातयन्ति स्मेत्यन्वयः । अत्र विश्लिष्टोपाधिभेदेऽपि अनुसन्धान-मङ्गीकर्तव्यम् । अन्यथा पतित स्वशिरोऽक्षिभिर्दर्शनस्यायुक्तत्वापत्तेः । न च पूर्वसंश्लेषमात्रेणानुसन्धानम् । भिन्नकालीन संश्लेषस्य भिन्नकालीनानुसन्धानाप्रयोजकत्वात् । तत्राननुसन्धाने । तद्भेदेऽपीति । शरीर-भेदेऽपीत्यर्थः । तथाच शरीरभेदोऽननुसन्धानेऽप्रयोजक इति भावः । नन्वतीत सुखादौ शरीरभेदस्यानु-

(कण्टकोद्धारः)

सन्धानप्रतिबन्धकत्वदर्शनात् शरीरभेदोऽननुसन्धानप्रयोजक इत्यत आह न च वयमिति । चैतन्यैक्येऽपीति । न च शरीरादिभेदस्याप्रयोजकत्वेपि अन्तःकरणभेदस्याननुसन्धान प्रयोजकतावश्यकी अन्तःकरणे चिदैक्याध्यासेन शरीराद्यपेक्षया तस्य विशेषवत्त्वादिति वाच्यम् । अन्तःकरणे चिदैक्याध्यासस्य ममासंप्रतिपत्तेः । अहं गौर इत्यादि प्रतीत्या शरीरादावपि चिदैक्याध्यासस्य त्वया स्वीकृतत्वाच्च । न च मम शरीरमिति भेदप्रतीत्या तद्व्यपदेशस्य गौणत्वमिति वाच्यम् । मम मन इति प्रतीत्या तत्रापि तत्वापत्तेः । न चान्तःकरणे चिदैक्याध्यासोऽवश्यं स्वीकर्तव्यः । अन्यथा जीव ब्रह्मैक्यस्य श्रुतिसिद्धतया सर्वानुसन्धानापत्तेरिति वाच्यम् । जीवब्रह्मभेदेनैवानुसन्धानाभावोपपत्तेः । न चैक्यप्रतिपादक श्रुतिविरोध इति वाच्यम् । अनुपदमेव श्रुतीनामन्यथा व्याख्यानात् । त्वन्मत इति । न च तत्र संस्कारात्मनावस्थितस्यैव पुनरुद्बोधेन न तत्रान्तःकरण भेद इति वाच्यम् । संस्कारात्मकस्य कार्याप्रयोजकत्वेनोपचितस्यैव तथात्वेन तद्भेदस्यावश्यकत्वात् । अन्यथा स्मृति साधनसंस्कारे उद्बोधानुद्बोधमात्रेणोत्पत्तिविनाश व्यवहाराभावेन सुप्तावन्तः करणस्य लय इत्यङ्गीकारानुपपत्तेः । उद्बोधस्य सहकारिसमवधान मात्रत्वेन सर्वदा सूक्ष्मत्वापत्त्या सावयवत्वाङ्गीकारेण प्रतिकर्मव्यवस्थोपपादनानुपपत्तेश्च । सुप्तप्रलीनेति । सुप्ताश्च प्रलीनाश्च मुक्ताश्चेति द्वन्द्वः । तेषामनुसन्धान प्रयोजकान्तःकरण भेदाभावस्य सत्वादिति भावः । नचान्तःकरणैक्याध्यास एवानुसन्धान प्रयोजको, नान्तःकरण भेदाभाव इति वाच्यम् । अननुसन्धानप्रयोजकाभावस्यैवानुसन्धानप्रयोजकत्वस्यौचित्यात् । न चानुसन्धानेऽन्तःकरणैक्याध्यासः प्रयोजकोऽननुसन्धाने तदभावः प्रयोजक इति वाच्यम् ममान्तःकरणमित्यन्तःकरणैक्याध्यास रहितानामप्यनुसन्धान दर्शनात् । एतदभिप्रायेणैवाशङ्क्य निराकरोति न चेति । मुक्तादेरिति । न च मुक्तस्वरूपसुखानुभवस्य नित्यत्वात् न तत्र नियामकापेक्षेति वाच्यम् । जीवब्रह्मविभागादेरनादेरपि अविद्यापेक्षावत् जातेर्व्यक्तिसापेक्षतावद् अनादेरपि स्वरूपसुखानुभवस्य तदपेक्षाया आवश्यकत्वात् । अन्तःकरणेति । नानादेहगभोगानुसन्धानेत्यादिनेति भावः । नचात्रान्तःकरणभेद एव नेति वाच्यम् । तथात्वे चक्षुरादि भेदोऽपि न स्यात् । एक समयावच्छेदेन विलक्षणभोगेऽन्तःकरण भेदस्यावश्यकत्वात् । अन्यथानेक जीवानामपि तन्न स्यात् । एकस्यानेकशरीरावच्छेदेन भोगवत् अनेकेषामपि भोगोपपत्तेरिति । न चेति । तथाचानेकजीवानामविद्याभेदस्यसत्वान्नानुसन्धानम् । योग्यादीनां तदभावादनुसन्धानमित्यर्थः । ननु सुप्तावविद्याभेदाभावात् अनुसन्धानं स्यादित्यत आह । सुप्ताविति । उक्तरीत्येति । चक्षुरादिभेदवदित्याद्युक्तरीत्येत्यर्थः । न चाविद्याभेदस्य जीवभेदप्रयोजकत्वात् तद्भेदस्याननुसन्धान प्रयोजकत्वं स्यादिति वाच्यम् । स्वाभाविक जीवभेदवादिनां तदसिद्धेः । अन्यथा ज्ञानप्रागभावादीनामपि जीवभेदप्रयोजकत्वं स्यात् । नचाभावत्वे गौरवमिति वाच्यम् । क्लृप्तत्वेन लघुत्वात् । न चैकस्मिन् ज्ञानप्रागभावानामनेकत्वात् एकस्यापि भेदप्रसङ्ग इति वाच्यम् । अविद्याया अपि समत्वात् । अत एवाह यावन्तीति । न च तन्मतमप्रामाणिकमिति वाच्यम् । ज्ञानस्याज्ञानविरोधितयानुभवस्यैव तत्र मानत्वात् । मुक्तस्येति । तत्राविद्याभेदस्याननुसन्धानप्रयोजकस्याभावादिति भावः । मुक्तस्येति । न च वैषयिकसुखस्य जन्यत्वेन तदपेक्षत्वेऽपि स्वरूपसुखस्फुरणस्य नित्यत्वेन न तदपेक्षेति वाच्यम् । नित्यत्वेऽपि

(कण्टकोद्धारः)
आवरणविगमापेक्षावत् तदपेक्षाया आवश्यकत्वात् अन्यथा जीवब्रह्मविभागादेरपि अविद्यापेक्षा न स्यात् । स्वाभाविकाभेदेनैवोपपत्तेर्नाविद्यादेर्जीवादिभेदकत्वम् । तदङ्गीकारे बाधकमप्यस्तीत्याह किंचेति । तथाच चैतन्यस्यापि भेदप्रसङ्गोऽन्यथानवस्थेति भावः । न चाविद्यादेरुपहितवृत्तित्वाङ्गीकारान्नोक्तदोष इति वाच्यम् । वैयधिकरण्यापरिहारात् । उपहितस्याज्ञानादिविशिष्टत्वेन अज्ञानाद्यधिष्ठानत्वायोगात् । उपहितस्य मिथ्यात्वेन निवृत्तेरावश्यकत्वे बद्धस्य मुक्तिरित्यस्याभावापाताच्च । नचोपहितशब्देनोपाध्युपलक्षितमुच्यतेऽतो नोक्तदोष इति वाच्यम् । उपलक्षितस्य चिन्मात्रत्वे चिन्मात्रवृत्तीत्यनुक्त्वा उपहितवृत्तीत्युक्तेर्व्यर्थत्वात् । उपलक्ष्येऽप्युपलक्ष्यतावच्छेदकादेरावश्यकतया विशिष्टत्वापरिहाराच्च । शुद्धगतत्वेच शुद्धस्य संसारित्वे तद्भावस्यामुक्तित्वापाताच्च । नन्वभेदे बिम्बप्रतिबिम्बादेरवदातत्वादिवत् व्यवस्था भविष्यतीत्यत आह एतेनेति । अनेन हि श्यामत्वादिकं यथोपहितनिष्ठं तथाज्ञानादिसंसार उपहितनिष्ठ इत्युक्तं भवति । तन्नोपपद्यत इत्याह दुःखानुसन्धानरूपस्येति । न च विशेषणस्योपाधेर्निवृत्तावपि न विशेष्यस्य निवृत्तिरिति वाच्यम् । विशेष्यस्य बन्धानाधारत्वेनाबद्धत्वात् अन्यथाव्यवस्थाद्यापातात् । प्रतिबिम्बस्येति । न च बिम्बप्रतिबिम्बयोरैक्यं साधयिष्यत इति वाच्यम् । तस्याग्रे विस्पष्टमाकर एव निराकरिष्यमाणत्वात् । न च परमताभिप्रायेणाकाशदृष्टान्त इति वाच्यम् । नैयायिकैस्तथाङ्गीकृतत्वेऽपि मया कार्यद्रव्यत्वाङ्गीकारात् । अव्याकृताकाशे च स्वाभाविकप्रदेश भेदाङ्गीकारात् । एतेनेति । बद्धस्य निवृत्त्यापातेनेत्यर्थः । श्रुतौ युक्तशब्दप्रयोगात् सङ्गो भोक्तेत्यादिवत् आत्मनिष्ठमेव भोक्तृत्वं, मन आदिकं तु सहकारीति श्रुतेरर्थः । न तु विशिष्टं भोक्तृ इत्यर्थः । बन्धस्य शुद्धचिन्मात्रनिष्ठत्वे दूषणान्तरमाह शुद्धेति । तत्र शुद्धचितीत्यर्थः । भेदस्य प्रतीतावेव तस्य कल्पितत्वम् । भ्रान्तिप्रतीतत्वस्यैव कल्पितत्वत्वात् । तथाच प्रतीतत्वं कल्पितत्व व्यापकम् । अतस्तन्निवृत्त्या तन्निवृत्त्यापादनं युक्तमित्यर्थः । भावे चेति । कथञ्चन । उपाध्यादिनेत्यर्थः । मिथ्यात्वं प्रातिभासिकत्वम् । न च व्यवस्थायाः स्वसमान सत्ताक भेद सापेक्षत्वेन व्यावहारिक भेदाक्षेपकत्वेऽपि न पारमार्थिक भेदाक्षेपकत्वमिति वाच्यम् । बाधकाभावेन व्यवस्थासत्यत्वात् । बाधकत्वेनाभिमतानां परिहृतत्वात् । परिहरिष्यमाणत्वाच्च । अन्यथारोपस्य स्वसमानसत्ताकाधिष्ठान सापेक्षत्वेन ब्रह्मणोऽपि सत्यत्वं न स्यात् । न चाव्यवस्था नाभेदकार्यमिति वाच्यम् । अन्वयव्यतिरेकाभ्यां तस्यास्तत्कार्यत्वावधारणात् । अन्यथा व्यवस्थाया भेदकार्यत्वं न स्यात् । ततश्च कल्पितभेदाङ्गीकारो व्यर्थः स्यात् । कल्पितेति । त्वया कल्पित भेदस्याविद्याकार्यत्वेनाविद्याहीने मुक्ते तदनङ्गीकारादिति भावः । ननु बन्धस्य नोपाधिविशिष्टनिष्ठत्वम् । किन्तु चिन्मात्रनिष्ठत्वम् । उपाधिस्तु तदवच्छेदकः । नैतावतोपाधेराधारकोटौ निवेशः । दण्डत्वस्य कारणतावच्छेदकत्वेऽपि कारणकोटौ निवेशाभावात् । अतो न बद्धस्य निवृत्तिरित्यत आह एतेनेति । नित्यमुक्तत्व श्रुतेरिति । चिन्मात्रस्य सदाबद्धत्वादिति भावः । ननु नित्यमुक्तत्व श्रुतेर्न निर्विषयत्वम् । उपाध्यनवच्छिन्नविषयत्वसम्भवादित्यत आह विस्तृतं चेति । यथा चैतत्तथा तत्रैवास्माभिर्निरूपितम् । तस्मात् । स्वरूपैक्यस्यैव प्रयोजकत्वात् । अत्र व्यभिचारं बाधं वा शङ्कते नन्विति । हस्तावच्छिन्नस्य पादावच्छिन्न दुःखानुसन्धाने पादावच्छिन्न दुःखादि साक्षात्कारकृत-

(कण्टकोद्धारः)

नीचोच्चत्वादि विक्रियारूपत्वे पूर्वोक्तं किं दूषणम्? ज्ञानमात्ररूपत्वे त्विष्टापादनमेवेति द्रष्टव्यम् । न तावदित्येकं वाक्यम् । नन्वनुसन्धाने हस्त इत्यादि न स्यादित्युक्तमित्यत आह नहीति । सांकर्यमैक्यम् । तच्चेति । नन्वननुसन्धान प्रयोजकोपाधि भेदस्य सत्वात् कथमनुसन्धानमिति वाच्यम् । तस्याप्रयोजकत्वस्य तवापि संमतत्वात् । त्वदभिप्रेतस्यान्तःकरणभेदस्याविद्या भेदस्य वा तत्राभावात् । अन्यथांशिनोऽपि नस्यात्। उपाधिभेदस्य तत्र विद्यमानत्वात् । नचानुसन्धानप्रयोजकमुपाध्यैक्यं हस्तावच्छिन्नपादावच्छिन्नयोर्नेति वाच्यम् । तथात्वे हस्तावच्छिन्न दुःखानुसन्धानं शरीरावच्छिन्नेंऽशिनो न स्यात् । न चेष्टापत्तिरपसिद्धान्तात् । अंशिनोऽसंसारित्वापत्तेश्च । अन्यथेति । हस्तावच्छिन्नस्य पादावच्छिन्नदुःखाननुसंधान इत्यर्थः । नन्वंशि प्रेरणया तदुपपत्तिः । अंशिव्यापारकल्पने गौरवात् । व्यवस्थानानुपलब्धेश्च । अनेनैवाभिप्रायेणाशङ्क्य निषेधति न चेति । नन्वेकोपाधिविशिष्टस्य यद्यपरोपाध्यवच्छिन्नधर्मोपलम्भस्तर्हि नेत्रावच्छिन्नात्मनः कर्णावच्छिन्नशब्दोपलम्भः स्यात् । तत्रैकोपाधिविशिष्टतैव प्रतिबन्धिकेति वाच्यम् तद्वत् प्रकृतेऽपि भविष्यतीति कस्यचिन्मतं दूषयति एतेनेति । अत्र शब्दानुपलम्भो नेत्रस्यास्तीत्युच्यते उत नेत्रावच्छेदेन विद्यमानस्य? नाद्यः । इष्टत्वात् । न द्वितीय इत्याह योऽहमिति । न चेदमंशिनोऽनुसन्धानं, नांशस्येति वाच्यम् । एवं वदतस्तव कोऽभिप्रायः? किमंशानामनुसन्धानं नास्त्येव? अथवा नेदमनुसन्धानं, किन्त्वतिरिक्तमेवेति? नाद्यः । जीवानामपि तदभावापत्तेः । ब्रह्मण एव तदापत्तेः । न द्वितीयः । एतदतिरिक्तस्यानुसन्धानस्यानानुभविकत्वात् । तस्मादिदमेवांशानुसन्धानमिति वक्तव्यम् । भोक्तृत्वस्येति । न च सुखादि साक्षात्काररूपमनुसन्धानं सर्वज्ञ ब्रह्मण इष्टमेवेति कथमापादनमिति वाच्यम् । सुखादिसाक्षात्कारकृतोच्चतादिरूपस्यापादनात् । त्वया शुद्धब्रह्मणः सार्वज्ञानङ्गीकाराच्च । न च बिम्बप्रतिबिम्बयोरेव तत्वादिवत् व्यवस्थोपपत्तिरिति वाच्यम् । प्रतिबिम्बादेर्वस्त्वन्तरत्वस्याग्रे साधनात् । नन्वनश्नन्न्य इति श्रुत्या बाधितत्वात् न ब्रह्मणो दुःखानुसन्धानापादनमित्यत आह आपादने चेति । अन्यथा निर्धूमत्वाद्यापादनमपि न स्यात्, प्रत्यक्षबाधादिति भावः । ननु तथापि नेदमापादनं सम्भवति । अनुसन्धातृत्वस्यान्तःकरणत्वतदवच्छिन्नत्वान्यतरव्याप्यत्वात् । ब्रह्मणि च व्यापकनिवृत्त्या व्याप्यनिवृत्तेरावश्यकत्वात् । अतः प्रशिथिलमूलमिदमापादनमित्याशङ्क्य निषेधति न चेति । दुःखभोगस्येति । अन्यथा बन्धमोक्षयोर्वैयधिकरण्यापातादिति भावः । तथा च तदुभयमनुसन्धातृत्वव्यापकं न भवति । काप्यदृष्टत्वात् अप्रयोजकत्वाच्च । ननु तथापि नेदमापादनं सङ्गच्छते कारणाभावादिनाऽन्यथासिद्धत्वादित्याह एतेनेति । नन्वभ्रान्तत्वस्य कथमनुसन्धानाभावे हेतुत्वमत आह भ्रान्तिरूपमिति । अहं दुःखीत्यादेर्भ्रान्तिरूपत्वं च दुःखादेर्मिथ्यात्वादिति पराभिमानः । कल्पितस्येति । पूर्वोक्त युक्तेरिति भावः । तथाचान्तःकरणादेरपि कारणस्य तत्रापादनात् न कारणाभावादिनान्यथासिद्धिरिति भावः । भ्रान्तेति । इदं च परमताभिप्रायेण । दुःखादेः सत्यत्वस्योपपादितत्वात् । ननु ब्रह्मण्यनुसन्धानापादनमयुक्तम् । तस्यानंशित्वात् । अविद्यावच्छिन्न जीवस्यान्तःकरणावच्छिन्नाननुसन्धातॄन् प्रत्यंशित्वाङ्गीकारात् । तत्र चान्तःकरणावच्छिन्नद्वारेष्टत्वात् । तथाचेष्टापादनरूपत्वात् तर्काभासोऽयमित्येतदतिदेशेन दूषयति एतेनेति । चिन्मात्र एवेति । उपलक्षणमेतत् ।

(कण्टकोद्धारः)

नांशित्वमुखेनापादनम् । किन्त्वभेदमुखेन । तथाच ब्रह्मणोंऽशित्वाभावेऽपि जीवाभेदस्य सत्वादापादनमक्षतमेवेति द्रष्टव्यम् । किञ्च ब्रह्मणोऽनंशित्वाङ्गीकरणं व्यर्थम् । अनुसन्धानस्यापरिहार्यत्वादित्याह अवच्छिन्नस्येति । ननु विशिष्टनिष्ठमनुसन्धातृत्वं कथं शुद्धचित्यापाद्यते? विशिष्टशुद्धचितोर्भेदात् । अन्यथातिप्रसङ्गादित्यत आह अन्तःकरणावच्छिन्नस्यैवेति । तथाच ब्रह्मणो दुःखाद्यनुसन्धानापादनमक्षतम् । ननु तथापि जीवानामन्योन्य दुःखाद्यनुसन्धानापादनमयुक्तम् । यथाकाशस्यैकत्वेऽपि स्वकर्णपुटावच्छेदेन नाद उपलभ्यते, न कर्णान्तरावच्छेदेन, तथा चैतन्यैक्येपि स्वशरीरावच्छेदेनोत्पन्नमनुसन्धीयते, न परशरीरावच्छेदेन अतो व्यवस्थोपपद्यत इत्येतदप्यतिदेशेन दूषयति एतेनेति । स्वीयपरविभागो न भवन्मते सम्भवति, तन्नियामकाभावात् । भेदवादे तु भेदस्यैव नियामकत्वात् । अतो दृष्टान्तो दार्ष्टान्तिकं वा न युज्यत इति दूषयति आत्मभेद इति । न च तव भेदस्येव ममाप्यज्ञानभेदस्य नियामकत्वं भविष्यतीति वाच्यम् । यावन्ति ज्ञानानि तावन्त्यज्ञानानीति मते तद्भेदेऽप्यनुसन्धानदर्शनात् । तद्भेदेन नियमस्य क्वाप्यदृष्टत्वात् । उपाधिभेदस्य त्वप्रयोजकत्वात् । इदमन्योन्याश्रयत्वं सिद्धान्त उक्तमित्याह तदिति । कर्म भेदस्य कर्मनियमस्य इदं कर्म तदीयं नान्यदीयमिति नियमस्य सिद्धौ तत्कर्मनिर्मितत्वेनोपाधिविभिन्नता, अयमुपाधिरेतदीयो नान्यदीय इति नियमः सिध्यति । तत्सिद्धौ उपाधिनियमसिद्धौ तत्सिद्धिः कर्मनियमसिद्धिरित्यन्योन्याश्रय इत्यर्थः । उत उभयथाप्यापादने न कोऽपि दोषः । तस्मात् व्यवस्थानुपपत्त्या जीवानां जीवब्रह्मणोश्च भेदोऽङ्गीकार्यः ।

अत्र मकरन्दोक्तदूषणमनूद्यातिदेशेन दूषयति एतेनेति । अत्र व्यवस्था किं धर्मभेदो वा, विरुद्धधर्मभेदो वा? अत्रापि विरोधः भावाभावरूपो वा, परस्पराभावव्याप्यत्वरूपसहानवस्थानरूपोवा, वध्यघातुकभावरूपोवेति विकल्पं हृदि निधाय दूषयति व्यवस्थाशब्देनेति । अन्योन्याश्रयादिति । आत्मनां भेदसिद्धौ सुखादिना भिन्नाश्रय धर्मभेदसिद्धिः । तत्सिद्धौ च तद्रूपव्यवस्थया आत्मनां धर्मिणां भेदसिद्धिरित्यन्योन्याश्रय इत्यर्थः । सुखादीनामन्तःकरणधर्मत्वेन तद्भेदात् कथंचिदन्तःकरण भेदसिद्धावपि नात्मभेदसिद्धिरित्यपि द्रष्टव्यम् । सहेति । उपलक्षणमेतत् । भावाभाव पक्षस्याप्यसिद्धिर्द्रष्टव्या । नाजात इति न्यायेनेति । नाजात एकोऽन्यं हन्ति, नाप्यन्याश्रितमन्यकालीनं च । मूषकमार्जारयोरजातयोरन्यदेशयोर्भिन्नकालीनयोर्वध्यघातुकभावादर्शनात् वध्यघातुकविरोधं वदतावश्यं तयोः सामानाधिकरण्यं वाच्यम् । तथा च न तादृशधर्मभेदेन धर्मिभेदसिद्धिरित्यर्थः । एतेनेति परामृष्टं हेतुं दर्शयति व्यवस्थेति । नचोपाधिभेदादिनानुसन्धानादि व्यवस्थोपपत्तिरिति वाच्यम् । तदप्रयोजकत्वादेः पूर्वमुक्तत्वात् । तर्कव्युत्पादन मुपसंहरति तस्मादिति । सुखादीति । तदनुसन्धानादीत्यर्थः । उक्तं तर्कस्वरूपं सिद्धान्तारूढं करोति तदिति । स्वरूपैक्ये चेतनानां स्वरूपैक्ये, सुखदुःखादिभोगः सुखाद्यनुसन्धानरूपः, भेदतः अयं सुखी अयं नेति व्यवस्थया, न दृश्यः न दृश्येत । व्याप्तेः प्रसिद्धत्व द्योतनाय हिशब्दः । ननूपाधिभेदादननुसन्धानोपपत्तिरित्यत आह उपाधिभेदोऽपीति । उदाहरति यथेति । ननु विश्लिष्टोपाधिभेदोऽननुसन्धाने प्रयोजक इत्यत आह नानेति । तथाच स्वरूपैक्यमेव प्रयोजकमिति भावः । नन्वनुसन्धानाभावेऽपि स्वरूपैक्यं किं नस्यादित्यत आह उक्तं चेति । सुखादि व्यवस्थान्तराण्यप्यनु-

(कण्टकोद्धारः)

**पपन्नानीत्याह एवमिति । ननु कथं मुक्तव्यवस्थानुपपत्तिः? तत्तदुपाध्यवच्छिन्नस्य तत्तदुपाध्यपगमेन मुक्तत्वसम्भवादित्याशङ्क्य निषेधति न चेति । उपाधीति । तथाचोपाधिसम्बन्ध एवानुपपन्न इति भावः । नचोपाधीनामविशेषणत्वान्नान्योन्याश्रयादिकमिति वाच्यम् । उपलक्षणत्वेऽपि कदाचित् सम्बन्धस्यावश्यकत्वात् अन्यथोपलक्षणत्वासम्भवात् । ननूपाधिसम्बन्धो नोपहितनिष्ठः, येनान्योन्याश्रयादिकम् । किन्तु शुद्ध एवेत्यत आह शुद्धनिष्ठत्वेऽपीति । उपलक्षणमेतत् । शुद्धस्या सङ्गतयोपाधिसम्बन्धायोगात् । उपाधीनां चैतन्यमात्रवच्छेदकतया साङ्कर्यापादकत्वानुपपत्तेश्चेत्यपि द्रष्टव्यम् । ननु बन्धस्य कल्पिततया सदा मुक्तत्वेन नोक्तदोष इत्यत आह त्वन्मत इति । न च कल्पितसम्बन्ध निवृत्तिर्नापेक्षितेति तदभावो नानिष्ट इति वाच्यम् । तथात्वे तदभावार्थं श्रवणादिप्रयत्नो न स्यात् । तरतिशोकमात्मविदित्यादि श्रुतीनां निर्विषयत्वं च स्यात् । तथा च बद्धमुक्तव्यवस्थादौ औपाधिकभेदोऽप्रयोजक इत्युपसंहरति तदेवमिति । उपाधेर्भेदकत्वमङ्गीकृत्य दूषणमुक्तम् । इदानीमुपाधेर्भेदकत्वमेव न सम्भवतीत्याह किञ्चेति । ननु गगनादावुपाधेर्भेदकत्वमवश्यमङ्गीकर्तव्यम् । तत्र स्वाभाविक भेदाभावात् । औपाधिकभेदाभावे चेह पक्षी नेहपक्षीति पक्षितदभावौ न स्याताम् । विरोधादित्यत आह एवमिति । तथाच तत्रापि स्वाभाविका अंशा अङ्गीकर्तव्याः । अन्यथोक्तदोषस्तत्रापि स्यादिति भावः । गगनादावौपाधिक भेदाभावं सिद्धान्तारूढं करोति तदुक्तमिति । न चेत् स्वाभाविक भेद इत्यर्थः । आत्मभेदेऽनुकूलतर्काः ।**

## न्यायामृतप्रकाशः

॥ अतीतादीति ॥ भवन्मतेऽतीतादिशरीरभेदसद्भावान्न तत्र सुखाद्यनुसन्धानमिति शरीरभेदस्याननुसन्धानप्रयोजकतायाः क्लृप्तत्वात्तद्वन्मयाप्यननुसन्धाने शरीरभेदस्तन्त्रत्वेनोच्यत इत्यर्थः । ननु यौवनावस्थापन्नदेहस्य बाल्यशरीरेणात्यन्तभेदाभावाद्युक्तमनुसन्धानमित्यस्वरसादाह ॥ जातीति ॥ नन्वनुसन्धानं नाम वर्तमानत्वेनानुभवस्तथास्मरणं वा तथा च यौवनावस्थायामहं बाल्ये सुखीत्यादिकमनुसन्धानमेव न भवतीत्यतो नोक्तदोष इत्यत आह ॥ न चेति ॥ अननुसन्धास्येति ॥ तथा च तत्रान्तःकरणभेदे सत्यप्यनुसन्धानसद्भावाद्व्यभिचार इति भावः ॥ सुषुप्ताविति ॥ तत्रान्तःकरणस्यैवाभावेन तदेकत्वादेर्दुरापास्तत्वादिति भावः ॥ उक्तत्वादिति ॥ त्वन्मत इत्यव्यवहितपूर्वग्रन्थेनेत्यर्थः ॥ ज्ञानप्रागभावेति ॥ उक्तरीत्या चक्षुरादिभेदवज्ज्ञानप्रागभावभेदस्यानुसन्धानभेदप्रयोजकत्वं नास्ति एकस्मिन्नेव पुरुषेऽनेकेषां ज्ञानप्रागभावानां सत्वेपि अनुसन्धानदर्शनात्तद्वदित्यर्थः ॥ मुक्तस्येति ॥ अननुसन्धानप्रयोजकाविद्यारूपोपाध्यभावादित्यर्थः ॥ वैयधिकरण्येति ॥ मुक्तेः शुद्धचिन्मात्रनिष्ठत्वाङ्गीकारादिति भावः । श्यामत्ववदित्यादौ सर्वत्र औपाधिकभेदेनेति शेषः ॥ औपाधिकभेदेनेति ॥ उपाधिकृतभेदस्य भास्करमते चैतन्य एव सत्वेनेत्यर्थः ॥ बद्धस्येति ॥ बन्धरूपानर्थवतो विशिष्टस्योपाधिनिवृत्तौ निवृत्तिर्नाश एव स्यात् न तु मोक्षः तथा च बन्धमोक्षयोर्वैयधिकरण्यमेवेतिभावः । पूर्वोपन्यस्ते एतेनेति मते श्यामत्वादिदृष्टान्तवैषम्यरूपदोषान्तरमाह ॥ दुःखादीति ॥ उपाधिधर्मत्वाभावेन उपाधिप्रयुक्तधर्मवत्त्वाभावेन । एवमेव क्वचित्पाठोपि । श्यामत्वादेरुपाधिप्रयुक्तत्वादिति भावः ॥ वस्त्वन्तरत्वेनेति ॥ बिम्बादत्यन्तभिन्नपदार्थ-

(प्रकाशः)
त्वेनेत्यर्थः ।। सावयवत्वेनेति ।। तथाचात्मन आकाशः सम्भूत इति श्रुतेः कार्यद्रव्यतया आकाशस्य सावयवत्वेन तत्र परस्परं भेदः स्वाभाविक एवेति त्वयाङ्गीकारादित्याशयः । यच्चोक्तम् एकस्यैव नभस इत्यादि तत्र परस्परं भेदस्यौपाधिकत्वाभावमुक्त्वांशिनो नभसः सकाशादपि भेदः स्वाभाविक एवेत्याह ।। तैजसेति ।। भिन्नत्वेनेति ।। परस्परमिति शेषः । तथाचोपाधिप्रयुक्तश्चैतन्ययोः परस्परं भेद इत्ययुक्तमित्यर्थः ।। एतेनेति ।। विशिष्टस्यैवानार्थान्वयेन कल्पितस्य तस्य निवृत्तिरेव न तु मोक्ष इति बन्धमोक्षयोर्वैयधिकरण्यापातेनेत्यर्थः ।। विशिष्टस्यैवेति ।। आत्मशब्दोक्तदेहेन्द्रियमनोयुक्तस्य विशिष्टत्वादित्यर्थः । व्यवस्था अनुसन्धानतदभावरूपा ।। तद्द्वारेति ।। विशिष्टे विशेष्यस्यानुस्यूतत्वादविद्यावच्छिन्नस्यानुसन्धाने तद्द्वारा शुद्धस्याप्यनुसन्धानापरिहारादित्यर्थः ।। तद्गतस्येत्यादि ।। अन्तःकरणावच्छिन्नगतस्येत्यर्थः । शुद्धस्याविद्या अवच्छेदिका अविद्यावच्छिन्नस्यान्तःकरणमवच्छेदकमित्यङ्गीकारेणान्तःकरणावच्छिन्नगतस्याशुद्धनिष्ठत्वं स्यादेवेत्यर्थः ।। तथेति ।। स्वशरीरावच्छिन्नसुखाद्युपलम्भ एव भवति न परशरीराच्छिन्नेत्यर्थः । आत्मभेदे आत्मभेदपक्षे ।। सर्वदेहस्थेति ।। सर्वदेहानामपि स्वीयकर्णपुटस्थानीयत्वादिति भावः । तत्र बद्धमुक्तव्यवस्थोपपत्तिमाशङ्क्य निराकरोति ।। न चेति ।। मुक्तिरिति ।। यस्यान्तःकरणरूपोपाध्यपगमः न स बद्ध इति शेषः । कुतो न चेत्यतः उपाधिसम्बन्धस्यैवायोगादित्याह ।। उपाधीति ।। अधुनेति ।। सर्वोपाध्यपगमाभावादित्यर्थः ।। अभावादिति ।। तथा च तद्भावरूपमुक्तेरपुरुषार्थत्वं स्यात् नित्यमुक्तत्वश्रुतिविरोधश्चेत्यर्थः ।। ।। आत्मभेदे अनुकूलतर्कविवरणं समाप्तम् ।।

## २१. भेदपञ्चकेऽनुमानानि

**जडेशभेदे जडजीवभेदे च (१) ब्रह्म जीवो वा अनात्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्, पदार्थत्वाद्, घटवत् (२) ब्रह्म जीवो वा घटप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्, घटासम्बद्धकालसम्बन्धित्वात्, तदसम्बद्धदेशसम्बन्धित्वात्, तज्जनकाजन्यत्वाद् वा पटवत् । (३) ब्रह्म जीवो वा जडप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्, जडानात्मकत्वाद्, यदेवं तदेवं यथा दूरस्थवनस्वत्योरेकः । विपक्षे तु घटसिद्धयैव ब्रह्मसिद्धया वेदान्तवैयर्थ्यम् । ब्रह्मणो जडत्वानित्यत्वाद्यापत्तिः । मुक्तिसमानाधिकरणसंसाराधारस्य जीवस्य जडवन्निवृत्यापत्तिः गौरोऽहमित्यादिज्ञानं च प्रमा स्यादित्यादिबाधकम् ।**

**(१) जडानामन्योन्यं भेदे तु घटस्तत्त्वतश्शुक्त्यभिन्नो न शुक्तिसम्बद्धकालासम्बंधित्वात्, तज्जनकाजन्यत्वात्, शुक्त्यारोपितरूप्यवत् । परमतेऽपि व्यावहारिकभेदस्य सत्त्वान्नासिद्ध्यादि शंक्यम् । अन्यथा, भेदसिद्ध्यसिद्ध्योर्दोषतदभावयोश्चाभेदेन स्वक्रियादिविरोधः स्यात् ।**

(२) अनात्मा स्ववृत्तिधर्मानाधारज्ञानाबाध्यान्तर्गणिकभेदवान्, पदार्थत्वाद्, आत्मवत् । विपक्षे दूरस्थवनस्पत्योश्शुक्तिरूप्ययोश्चाभेदग्राहि प्रत्यक्षं तत्त्वावेदकं स्यात् मुक्तिसंसारादिसांकर्यं च स्यादित्यादिबाधकम् । आत्मनां परस्परमात्मानात्मनोश्च तात्त्विकभेदे– अनात्मा, स्वावृत्तिधर्माधिकरणप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदाधिकरणं यत् स्वावृत्तिधर्माधिकरणम्, तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदाधिकरणम्, पदार्थत्वाद्, आत्मवत्, पक्षे स्वावृत्तिधर्माधिकरणमात्मा ततो भिन्नादात्मान्तराद्भिन्नत्वेन साध्यसिद्धिः । दृष्टान्ते तु स्वावृत्तिधर्माधिकरणं जडं, ततो भिन्नाज्जडान्तराद्भिन्नत्वेन । भेदस्य तात्त्विकत्वार्थं प्रतियोगिज्ञानाबाध्येतिविशेषणम् । जीवस्य ब्रह्मतो जीवाच्च जडस्य सत्यभेदेपृथिवी, ब्रह्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदाधिकरणं यदस्वाद्यनधिकरणं तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवती, वस्तुत्वाद्, अंबुवत् । अस्वादीत्यादिशब्देन तत्तद्वादिनः प्रति तत्तद्वादिसिद्धाः पृथिवीत्वादन्ये जडनिष्ठा धर्मा विवक्षिताः । पक्षे ब्रह्मभिन्नाज्जीवाद्भिन्नत्वेन साध्यसिद्धिः । दृष्टान्ते तु ब्रह्मभिन्नात्पार्थिवाद्भिन्नत्वेनेति ज्ञेयम् । जीवस्य ब्रह्मजीवान्तराभ्यां जीवाच्च जडस्य भेदे– पृथिवी, ब्रह्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदाधिकरणम् यदस्वाद्यनधिकरणम् आन्तर्गणिकभेदवच्च तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवती, वस्तुत्वाद्, अंबुवत् । अत्र जीवस्य जीवान्तरादपि भेदार्थं पूर्वस्मादधिकमान्तर्गणिकभेदवादितिविशेषणम् । अत्र पक्षे ब्रह्मतः परस्परं च भिन्नाज्जीवाद्भिन्नत्वेन साध्यसिद्धिः । दृष्टान्ते तु ब्रह्मतः परस्परं च भिन्नात्पार्थिवाद् भिन्नत्वेनेति ज्ञेयम् । जीवस्य ब्रह्मजीवान्तराभ्यां जडस्य च जीवाद् ब्रह्मणो जडाच्च भेदे– पृथिवी, ब्रह्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदाधिकरणं यदस्वाद्यनधिकरणं आन्तर्गणिकभेदवच्च तत्प्रतियोगिक प्रतियोगिज्ञानाबाध्यभेदवत्त्वे सति अस्वाद्यनधिकरणासंसारिधर्मिकधर्मिज्ञानाबाध्यभेदप्रतियोगिनी, वस्तुत्वाद् अंबुवत् । अत्र च ब्रह्मणो जडादपि भेदार्थं पूर्वस्मादधिकमस्वाद्यनधिकरणासंसारीत्यादिविशेषणम् । अत्र पक्षे अस्वाद्यनधिकरणासंसारि ब्रह्म, तद्धर्मिकभेदप्रतियोगित्वेन साध्यसिद्धिः दृष्टान्ते तु अस्वाद्यनधिकरणासंसारि पार्थिवं, तद्धर्मिकभेदप्रतियोगित्वेनेति ज्ञेयम् ।

**भेदमात्रे तु (१) ब्रह्म, भेदहीनं नावतिष्ठते स्वज्ञानाबाध्यभेदवद्वा, पदार्थत्वाद् घटवत् । (२) अनात्मा स्वान्यज्ञानाबाध्यभेदाधिकरणम्, पदार्थत्वाद्, आत्मवत् । (३) ब्रह्मभेदो न सर्वनिष्ठात्यंताभावप्रतियोगी, ब्रह्मनिरूप्यत्वाद्, ब्रह्माभेदवत् । (४) ब्रह्मज्ञानं, स्वाबाध्यभेदवद्विषयम्, ज्ञानत्वात्, शुक्तिज्ञानवत् । (५) घटो घटसंसर्गानवच्छिन्नप्रतियोगिकताकपटादिधर्मिकत्रैकालिकाभावप्रतियोगी, द्रव्यत्वात्, पटवत् । अत्र विपक्षे बाधकानामुक्तत्वात् नाभाससाम्यादि । (६) एवं समानाधिकरणकर्मप्रागभावसमानकालीनज्ञानबाधायोग्यो (ध्यो) भेदः परमार्थसन्, प्रातिभासिकत्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वात्, स्वासत्त्वागोचरप्रमां प्रति साक्षाद्विषयत्वाद्, आरोपितमिथ्यात्वकत्वात्, कल्पकरहितत्वात्, स्वविषयकसाक्षात्कारात्पूर्वभावित्वाच्चात्मवत् । (७) जीवब्रह्मभेदः परमार्थसन् अनादित्वादात्मवत् । (८) साक्षिवेद्यः सुखदुःखादिभेदः परमार्थसन्, अनिषेध्यत्वेन दोषाजन्यज्ञानं प्रति साक्षादिषयत्वाद्, आत्मवत् । (९) धर्माधर्मयागदानादिभेदः परमार्थसन्, श्रुतितात्पर्यविषयत्वाद्, ब्रह्मवदित्यत्याद्यूह्यम् । अत्र कण्टकोद्धारः जगत्सत्यत्वमानप्रस्तावे कृत इति । भेदपंचकेऽनुमानानि ॥**

अद्वैतसिद्धिः

एवं जडेशभेदे जडेजीवभेदे च तात्त्विके प्रमाणं नास्ति । (१) ब्रह्म, जीवो वा, अनात्मप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्, पदार्थत्वाद्, घटवत्, (२) ब्रह्म जीवो वा, घटप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्, घटासंबन्धिकालसंबंधित्वात्, तदसंबन्धिदेशसंबन्धित्वात्, तज्जनकाजन्यत्वाद् वा पटवत्, (३) ब्रह्म जीवो वा, जडप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान्, जडानात्मकत्वाद्, यदेवं तदेवम्, यथा दूरस्थवनस्पत्योरेक इत्यादिषु पूर्वोक्तदोषानतिवृत्तेः, परिच्छिन्नत्वस्य जडत्वस्य जन्यत्वस्य चोपाधित्वाद्, अप्रयोजकत्वाच्च । जीवो ब्रह्म वा, आत्मप्रतियोगिकताद्दग्भेदाधिकरणम्, पदार्थत्वादित्याद्याभाससाम्याच्च । न च–घटाभेदे घटसिद्ध्यैव तत्सिद्ध्या वेदान्तवैयर्थ्यम्, ब्रह्मणो जडत्वानित्यत्वाद्यापत्तिः, मुक्तिसमानाधिकरणबन्धाधारस्य जीवस्य जडवन्निवृत्त्यापत्तिः, गोरोऽहमित्यादिप्रतीतिश्च प्रमा

(अद्वैतसिद्धिः)

स्यादित्यादिविपक्षबाधकान्नाभाससाम्यादिकमिति– वाच्यम्, स्वप्रकाशत्वेन सर्वप्रत्ययवेद्यत्वेन च ब्रह्मसिद्धावपि सविलासाज्ञाननिवर्तकज्ञानाय वेदान्तसाफल्यस्य बहुधाभिधानात् । घटादौ कल्पितव्यक्त्यन्तरेणाकल्पितभेदस्याभावेऽपि न यथा कल्पितव्यक्त्यात्मकत्वं तद्वत् प्रातिभासिकत्वंतद्वद्विशेषदर्शनेन निवृत्तिर्वा कल्पितव्यक्त्यन्तरेणैक्यज्ञानप्रमात्वं वा, तथा प्रकृतेऽपि कल्पितजडेन तदभावेऽपि न तदात्मकत्वादीति न विपक्षबाधकस्याप्यप्रसरः । एवं जडानामन्योन्यभेदेऽपि नानुमानम् ।

(१) घटः, तत्त्वतः शुक्त्यभिन्नो न शुक्तिसंबद्धकालासंबन्धित्वात्, तज्जनकाजन्यत्वात्तत्रारोपितरूप्यवद्, व्यावहारिकभेदस्य त्वयाप्यङ्गीकारेण न पक्षदृष्टान्ताद्यनुपपत्तिः, अन्यथा भेदसिद्ध्यसिद्ध्योर्दोषतदभावयोश्चाभेदेन स्वक्रियाविरोधः स्यादिति । अत्र तात्त्विकशुक्त्यभिन्नत्वरूपप्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धेः, तत्त्वत इत्यस्य नेत्यत्र विशेषणत्वे सुतरामप्रसिद्धेः, घटादिसमसत्ताकभेदमात्रेण हेतोरुपपत्त्या अप्रयोजकत्वाच्च, भेदस्य तात्त्विकत्वे बाधस्योक्तत्वेन बाधाच्च । (२) अनात्मा, स्ववृत्तिधर्मानाधारज्ञानबाध्यान्तर्गणिकभेदवान्, पदार्थत्वादात्मवद् । विपक्षे च दूरस्थवनस्पत्योः शुक्तिरूप्ययोश्चाभेदग्राहि प्रत्यक्षं तत्त्वावेदकं स्यात् मुक्तिसंसारादिसांकर्यं च स्यादित्यादि बाधकमिति यत्, तन्न, एकत्र घटे कल्पिता ये अनेके घटाः, तेषु स्ववृत्तिधर्मानधिकरणघटज्ञानाबाध्यभेदवत्सु व्यभिचारात् । यत्किंचित्स्ववृत्तिधर्मानाधारोक्तौ घटत्वानधिकरणपटज्ञानाबाध्यभेदेनात्मज्ञानबाध्येनार्थान्तरम् । स्ववृत्त्यशेषधर्मानाधारोक्तौ तव मते ब्रह्मणोऽपि वाच्यत्वादिकेवलान्वयिधर्माधारत्वेन साध्याप्रसिद्धेः, कल्पितेन सह तात्त्विकभेदाभाववत् तात्त्विकाभेदस्याप्यभावेन उदाहृतस्थले तत्त्वावेदकत्वसाङ्कर्यादीनामप्रसङ्गात् ।

यत्तु आत्मनामात्मानात्मनोश्च परस्परं तात्त्विकभेदे– अनात्मा, स्वावृत्तिधर्माधिकरणप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदाधिकरणं यत्स्वावृत्तिधर्माधिकरणं तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदाधिकरणम्, पदार्थत्वादात्मवत्, पक्षे स्वावृत्तिधर्माधिकरणमात्मा, ततो भिन्नादात्मान्तराद्भिन्नत्वेन साध्यसिद्धिः । दृष्टान्ते च स्वावृत्तिधर्माधिकरणं जडम्, ततो भिन्नात् जडान्तरात् भिन्नत्वेन साध्यसत्त्वमिति, तन्न, पक्षदृष्टान्तयोः स्वपदार्थप्रतियोगिपदार्थयोरननुगमेन व्याप्यत्वासिद्धेः, अजडत्वस्योपाधित्वाच्च, जडत्वेन व्यतिरेकिणा सत्प्रतिपक्षाच्च । यदपि

(अद्वैतसिद्धिः)

जीवस्य ब्रह्मतो जीवाच्च जडस्य सत्यभेदे– पृथिवी, ब्रह्मप्रतियोगिकधर्मिज्ञानबाध्यभेदाधिकरणं यदस्वाद्यनधिकरणम्, तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवती, वस्तुत्वात्तोयवत्, अस्वादी-त्यादिशब्देन तत्तद्वादिनः प्रति तत्तद्वादिसिद्धाः पृथिवीत्वभिन्नाः जडनिष्ठा धर्मा विवक्षिताः । पक्षे ब्रह्मभिन्नाज्जीवात् भिन्नत्वेन साध्यसिद्धिः । दृष्टान्ते तु ब्रह्मभिन्नपार्थिवभिन्नत्वेनेति । तन्न। अस्वाद्यनधिकरणत्ववज्जीवत्वानधिकणेत्यपि विशेषणं दत्वा जीवब्रह्मभिन्नात्मनोऽपि साधनप्रसङ्गाद्, गन्धाधारत्वादिव्यतिरेकिणा सत्प्रतिपक्षसंभवाच्च, धर्मिपदविकल्पनिबन्धनदोष-तादवस्थ्याच्च ।

एतेन- जीवस्य ब्रह्मजीवान्तराभ्यां जीवाच्च जडस्य भेदे– पूर्वप्रयोग एव जीवस्य जीवान्तराद्भेदसिध्यर्थमन्तर्गणिकभेदवदित्यस्वानधिकरणेत्यत्र विशेषणं दत्वानुमानम् । अत्र च पक्षे ब्रह्मणः परस्परं च भिन्नाज्जीवाद् भिन्नत्वेन साध्यसिद्धिः, दृष्टान्ते तु ब्रह्मणः परस्परञ्च भिन्नात् पार्थिवाद् भिन्नत्वेनेति – निरस्तम् । जीवस्य ब्रह्मजीवान्तराभ्यां जडस्य च जीवात् ब्रह्मणो जडाच्च भेदे– पृथिवी, ब्रह्मप्रतियोगिकधर्मिज्ञानाबांध्यभेदाधिकरणम् अस्वाद्यनधि-करणमान्तर्गणिकभेदवच्च यत्तत्प्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवत्त्वे सति अस्वाद्यनधि-करणासंसारिधर्मिकधर्मिज्ञानाबाध्यभेदप्रतियोगिनी, वस्तुत्वादम्बुवदित्यत्र ब्रह्मणो जडादपि भेदार्थं पूर्वस्मादधिकमस्वानधिकरणासंसारीत्यादि विशेषणम् । अत्र पक्षे अस्वाद्यनधि-करणमसंसारि ब्रह्म, तद्धर्मिकभेदप्रतियोगित्वेन साध्यसिद्धिः, दृष्टान्ते त्वस्वाद्यनधि-करणासंसारि पार्थिवम्, तद्धर्मिकभेदप्रतियोगित्वेन ज्ञेयम् । अत्र जीवत्वानधिकरणत्वस्य अस्वानधिकरणेत्यत्र विशेषणत्वेन पूर्ववदाभाससाम्यात्, पाकजरूपाधिकरणत्वादिना सत्प्रति-पक्षाच्च, धर्मादिपदविकल्पग्रासाच्च ।

एवं भेदमात्रेऽपि नानुमानम् । (१) ब्रह्म, भेदहीनं नावतिष्ठते स्वज्ञानाबाध्यभेदवद्वा, पदार्थत्वाद्, घटवद् इति; तन्न मुक्त्यसहवृत्तित्वस्य जडत्वस्य चोपाधित्वात्, स्वपदविकल्प-ग्रासाच्च । एतेन (२) अनात्मा स्वान्यज्ञानाबाध्य भेदाधिकरणम् । पदार्थत्वाद्, आत्मव-दिति– निरस्तम् । (३) ब्रह्मभेदो न सर्वनिष्ठात्यन्तभावप्रतियोगी, ब्रह्मनिरूप्यत्वाद्, ब्रह्मा-भेदवदित्यत्र ब्रह्माभिन्नावृत्तित्वमुपाधिः, ब्रह्माभेदस्याब्रह्मनिरूप्यत्वेन तदनिरूप्यतया साधन-वैकल्यं च । (४) ब्रह्मज्ञानं, स्वाबाध्यभेदवद्विषयकम्, ज्ञानत्वाच्छुक्तिज्ञानवदित्यत्रा-

(अद्वैतसिद्धिः)

ज्ञानात्मविषयत्वमुपाधिः । स्वपदेन ब्रह्मज्ञानोक्तौ तदबाध्यभेदाप्रसिद्ध्या साध्याप्रसिद्धिः, शुक्तिज्ञानोक्तौ सिद्धसाधनम् । (५) घटो घटसंसर्गानवच्छिन्नप्रतियोगिताकपटादिधर्मिक-त्रैकालिकाभावप्रतियोगी, द्रव्यत्वात्, पटवदित्यत्र काल्पनिकाभावस्यापि कालत्रयवृत्तित्व-संभवेन सिद्धसाधनम्, घटसंसर्गानवच्छिन्नेतिवत्तादात्म्यानवच्छिन्नेत्यपि विशेषणं दत्वा पञ्च-माभावसाधनस्यापि प्रसङ्गश्च, विपक्षबाधकाभावस्य उभयत्र सत्त्वात् । (६) समानाधिकरण-कर्मप्रागभावसमानकालीनज्ञानबाधायोग्यो भेदः, परमार्थसन्, प्रातिभासिकत्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वात्, स्वासत्त्वागोचरप्रमां प्रति साक्षाद्विषयत्वाद्, आरोपितमिथ्या-त्वकत्वात्, कल्पकरहितत्वात्, स्वविषयकसाक्षात्कारात् पूर्वभावित्वाद्, आत्मवत् । (७) ब्रह्मजीवप्रतियोगिको भेदः, परमार्थसन्, अनादित्वादात्मवत् । (८) साक्षिवेद्यसुख-दुःखादिभेदः, परमार्थसन्, अनिषेध्यत्वेन दोषाजन्यज्ञानं प्रति साक्षाद्विषयत्वात् (९) धर्मा-धर्मयागदानादिभेदः, परमार्थसन्, श्रुतितात्पर्यविषयत्वादित्यादिष्वात्मसाधारणधर्माणां चेतन-त्वादीनामुपाधित्वं जडत्वादिना सत्प्रतिपक्षश्च, मिथ्यात्वसाधकानां प्राबल्यस्योक्तत्वेन तैर्बा-धश्च। आद्ये च प्रातिभासिकत्वस्य दोषप्रयुक्तभानत्वात्मकत्वे असिद्धिः, ब्रह्मज्ञानेतर-बाध्यत्वोक्तौ चरमवृत्त्यव्यवहितप्रातिभासिके व्यभिचारश्च । द्वितीयहेतौ तादृक्प्रमाविषयत्वस्य भेदपारमार्थिकत्वसिद्ध्यधीनत्वेन साध्याविशेषपर्यवसानम् । तृतीये चरमवृत्त्यन्यबाध्यमिथ्यात्व-कत्वस्योपाधित्वम् । चतुर्थे अविद्यारूपकल्पकसत्त्वेनासिद्धिः । पञ्चमे दृष्टिसृष्टिपक्षे असिद्धिः, इतरत्राप्रयोजकता । अनादित्वं च अज्ञानादौ व्यभिचारि । दोषाजन्यज्ञानं प्रतीत्यत्र श्रुति-तात्पर्यविषयत्वादित्यत्र चासिद्धिः, साक्ष्यवच्छेदकवृत्तेर्दोषजन्यत्वात्, मुख्यतस्तात्पर्यस्य तत्राभावात् । तस्माद् भेदपञ्चकं नानुमानविषयः ॥ इत्यद्वैतसिद्धौ भेदपञ्चके अनुमानभङ्गः ॥

## न्यायामृततरङ्गिणी

**॥ ब्रह्म जीवोवेति ॥ न च परिच्छिन्नत्वं जडत्वं वोपाधिः । ब्रह्मणि साध्याभावनिश्चयेन व्यतिरेकहीनत्वात् ॥ तत्वतः शुक्त्यभिन्नो नेति ॥ न च तत्वतः शुक्त्यभिन्नत्व-रूपप्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिः अद्वैतमते ब्रह्मणि द्वैतमते च शुक्तौ तत्प्रसिद्धेः ॥ अनात्मेति ॥ ईशभेदेनार्थान्तरवारणायान्तर्गणिकेति । नन्वेकत्र घटे कल्पिता येऽनेके घटास्तेषु स्ववृत्तिधर्मानधिकरणघटज्ञानबाध्य भेदवत्सुव्यभिचारः । मैवम् । आरोपितघटावृत्तिधर्मवत्त्व-**

(तरङ्गिणी)

स्याधिष्ठानभूतेघटेऽसिद्धेः । ननुयत्किञ्चित्स्ववृत्तिधर्मानाधारोक्तौ घटत्वानधिकरणपटज्ञानाबाध्य-भेदेनात्म ज्ञानबाध्येनार्थान्तरम् । स्ववृत्त्यशेषधर्मानाधारोक्तौ तव मते ब्रह्मणोपि वाच्यत्वादि-केवलान्वयिधर्माधारत्वेन साध्यासिद्धिः । मैवम् । तादृशज्ञानबाध्यत्वानांसामान्याभावस्य साध्यत्वान्नार्थान्तरम् ॥ स्वावृत्तीत्यादि ॥ स्वशब्देन घटादिः तदवृत्तिधर्माधिकरणं चैत्रः तत्प्रतियोगिकश्चैत्रज्ञानाबाध्यो यश्चैत्रभेदः तदधिकरणं यो मैत्रःघटाद्यवृत्तिधर्माधिकरणं च तत्प्रतियोगिको मैत्रज्ञानाबाध्यश्च यो मैत्रभेदः तदधिकरणम् । एतेन घटादीनामात्मनः सकाशादात्मनां च मिथो भेदः सिध्यति । न चाजडत्वमुपाधिः । उपाधिव्यतिरेकवति जडे साध्यव्यतिरेकानिश्चयात् । जीवस्य ब्रह्मत इति ॥ नचात्र जीवत्वानधिकरणेत्यपि साध्ये विशेषणं दत्वा जीवब्रह्मभिन्नात्मनोपि साधनप्रसङ्ग इति वाच्यम् । बाधात्तदसिद्धेः । जीवब्रह्मजडानां तद्भेदानां चोभयसिद्धानां तात्विकत्वमात्रस्य साधनान्नातिप्रसङ्गः । जीवाज्जडस्य भेदसिध्यर्थमस्वादीति विशेषणम् । एवमग्रेपि बोध्यम् ॥ ब्रह्मप्रतियोगिकेत्यादि ॥ आद्य-मधिकरणान्तं जीवस्य ब्रह्मणः सकाशाद्भेदसिध्यर्थं अस्वाद्यनधिकरणमिति जडात् आन्त-र्गणिकभेदवदिति जीवान्तरात् । एवं च ब्रह्मजडजीवान्तरेभ्यो भिन्नाज्जीवात्पृथिव्यां भेदः सत्यन्तेन सिध्यति । द्वितीयेनास्वादीत्यनेनेश्वरस्य जडभेदः । तादृशादीश्वराद्भेदः पृथिव्यां सिध्यतीति पञ्चापि भेदायुगपत्सिध्यन्तीत्यर्थः ॥ भेदहीनमिति ॥ न च मुक्त्यसहवृत्तित्वं जडत्वं चोपाधिः । व्यतिरेकहीनत्वात् । मुक्तिकाले साध्याव्याप्तेश्च ॥ स्वाबाध्येति ॥ नचानात्म-विषयत्वमुपाधिः । व्यतिरेकहीनत्वात् ॥ घटसंसर्गेति ॥ न च काल्पनिकाभावस्य कालत्रय-वृत्तित्वसम्भवेन सिद्धसाधनम् । काल्पनिकस्य स्वरूपेणात्यन्ताभावप्रतियोगितया एककाल-सम्बन्धस्यापि तत्राभावात् । ननु घटसंसर्गानवच्छिन्नेतिवत्तादात्म्यानवच्छिन्नेत्यपि विशेषणं दत्वा पञ्चमाभावसाधनस्यापि प्रसङ्ग इत्यत आह ॥ अत्रचेति ॥ समानाधिकरणेति ॥ मिथ्यात्वेनोभयसिद्धभेदव्यावृत्तयेऽबाध्यान्तं भेदविशेषणम् ॥ ॥ भेदपञ्चकेऽनुमानानि ॥

## न्यायामृतकण्टकोद्धारः

ननु तथापि न भेदपञ्चकमनुमानगम्यम् । जडजीवभेदे जडानामन्योन्यभेदे चानुमानानुक्तेः । जीवो ब्रह्म वा जडभिन्नं, तदनात्मकत्वादित्यादीनां कल्पितभेदेन सिद्धिसाधनत्वादिना दुष्टत्वादित्यत आह जडेशभेद इत्यादिना । अत्र ब्रह्म जीवो वा अनात्मभिन्नं नवेति विप्रतिपत्तौ प्रथमं, घटभिन्नं न वेति विप्रतिपत्तौ द्वितीयम् । अतो नार्थान्तरमिति द्रष्टव्यम् । अत्र जीव ब्रह्म शब्देन संसाराधार तदनाधारचैतन्ये विवक्षिते । अतो विशिष्ट पक्षत्वे विशिष्ट ज्ञानस्य कल्पिताबाधकत्वेन सिद्धसाधनतेति परिहृतम् । साध्ये कल्पितभेदेन

(कण्टकोद्धारः)

सिद्धसाधनवारणाय धर्मीति । न च जडत्वं परिच्छिन्नत्वं जन्यत्वं वा उपाधिरिति वाच्यम् । ब्रह्मपक्षे जीवे, जीवपक्षे ब्रह्मणि साध्याव्यापकत्वात् । न च मन्मते साध्यमसम्प्रतिपन्नमिति वाच्यम् । तथापि सन्दिग्ध-साध्यव्यापकत्वेन प्रतिपक्षोन्नायकत्वासम्भवात् । अनुमानप्रयोगवेलायां च व्यभिचारानुन्नायकत्वात् । जडस्यापि मया नित्यस्याङ्गीकृतत्वेन त्वयाप्यज्ञानस्यानादित्वाङ्गीकारेण तत्र जन्यत्वोपाधेः, तथाविद्यायाः परिच्छिन्नत्व हेतुभङ्गे परिच्छिन्नत्वाभावस्य समर्थित्वेन परिच्छिन्नत्वस्यापि तत्र साध्या व्यापकत्वात् । जडत्व हेतुभङ्गोक्तन्यायेनाज्ञानत्वादिरूपस्य जडत्वस्य पक्षे सत्वेन साधनाव्यापकत्वाभावनिश्चयाच्च । न च ब्रह्म जीवो वा स्वात्मप्रतियोगिकधर्मिज्ञानाबाध्य भेदवान् पदार्थत्वात् घटवदित्याभाससाम्यमिति वाच्यम् । बाधित्वेन साम्याभावात् । प्रकृते च बाधाभावात् अन्यथा विप्रतिपत्त्यभावापत्तेः । अनुकूल तर्काभावात् । प्रकृते त्वनुकूलतर्कस्य वक्ष्यमाणत्वात् । द्वितीय हेतौ पटे व्यभिचार वारणाय घटासम्बद्धेति । नन्वत्र सर्वघटासम्बद्धत्वं विवक्षितम् अथवा यत्किञ्चिदघटासम्बद्धत्वम्? आद्ये घटे व्यभिचारः । न हि घटकाले सर्वघटसम्बन्धः । न वा यत्किञ्चित् घटासम्बन्धाभावः । तथाच व्यर्थविशेषणत्वमिति चेन्न यद्घट-प्रतियोगिकभेदवत्त्वं साध्यते तद्घटासम्बद्धत्वं विवक्षितम् । एवं च तद्घट एव व्यभिचारवारकत्वेन विशेषणसार्थक्यात् । घटान्तरे तु साध्यसत्वादेव न व्यभिचारः । यद्वा साध्ये हेतौ च घट शब्देन घटत्वावच्छिन्न एव विवक्षितः । एवं च घटे व्यभिचारवारणाय घटासम्बद्धेति विशेषणम् । न च पटदृष्टान्तानुपपत्तिः । न हि पटकालो घटत्वावच्छिन्नासम्बद्धः । पटकाले कस्यचिद् घटस्य सद्भावादिति वाच्यम् । पट शब्देन प्रकृत्यादेरुपलक्षणात् । न च हेतुविशेषणाप्रसिद्धिरिति वाच्यम् । घटत्वा-वच्छिन्नासम्बद्धस्य प्रलयकालस्य प्रसिद्धत्वात् । ब्रह्मजीवो वा जडभिन्नं न वेति विप्रतिपत्तावाह ब्रह्मेति । न च पूर्वभेदः । तत्रानात्मत्वमात्मभिन्नत्वमात्रम् । इहतु जडमात्मभिन्नं वस्त्विति भेदात् हेत्वन्तराच्च । न चात्र जडानात्मकत्वं जडभेदः । तथा च कथं न साध्याविशेषः? न च हेतौ धर्मीति पदाभावात् न साध्याविशेष इति वाच्यम् । घट प्रतियोगिक प्रातिभासिकभेदवति घटे व्यभिचारेण तस्य हेतावा-वश्यकत्वादिति चेन्न । जडानात्मकत्वं जडैक्याभावः । ऐक्यं च न भेदाभावः । तस्य भावरूपत्वात् विधिप्रत्ययगम्यत्वात् । यद्वा जडानात्मकत्वं जडतादात्म्यरहितत्वम् । जडतादात्म्यं च जडवृत्ति जडत्वादिरूपम् । न हि ब्रह्म जीव योर्जडत्वादिकं परो मन्यते । अन्यथा मिथ्यात्वादौ हेतुत्वं न स्यात् । अत्र यद्यदनात्मकं तत्तदुक्तभेदवदिति सामान्यव्याप्तिः । अत एवाह यथेति । विशेषव्याप्तौ तदसङ्गतत्वापत्तेः । ननूक्तान्यनुमानानि अप्रयोजकानि । विपक्षे बाधकाभावादित्यत आह विपक्षेत्विति । वेदान्त वैयर्थ्यमिति । ननु न वेदान्तवैयर्थ्यम् । ब्रह्मसाधकत्वेऽपि सविलासाविद्यानिवर्तकत्वात् । अत एवोक्तं सिद्धं तु निवर्तक-त्वादितीति चेन्न । ब्रह्मज्ञानेनैव तन्निवृत्तिसम्भवात् । वेदान्तज्ञानमपि न वेदान्त ज्ञानत्वेन निवर्तकम् । अन्यविषयक वेदान्तज्ञानादपि निवृत्तिप्रसङ्गात् । नापि तज्जनित ब्रह्मज्ञानत्वेन । तज्जनितेत्यस्य व्यर्थत्वात् । नापि वेदान्त जनित निर्विषयक ज्ञानत्वेन । निर्विषयस्य घटादिवद् ज्ञानत्वायोगादित्युक्तत्वात् । विस्तृतं चैतद् दृश्यत्वभङ्गे । तस्मादज्ञानानिवर्तकस्य ज्ञानत्वायोगात् ब्रह्मज्ञानत्वमिच्छता तस्यैवाज्ञाननिवर्तकत्व-

(कण्टकोद्धारः)

मेष्टव्यम् । तथाच वेदान्त वैयर्थ्यम् । ब्रह्मण इत्यादि । न च घटादौ कल्पित व्यक्त्यन्तरेणाकल्पित भेदाभावेऽपि यथा कल्पितव्यक्ति तादात्म्याद्यनापत्तिः तथा ब्रह्मणि कल्पितेन जडेन कल्पितभेदाभावेऽपि तदात्मकत्वाद्यनापत्तिरिति वाच्यम् । मया घटादेः कल्पिते व्यक्त्यन्तरेणाकल्पितभेदाङ्गीकारेण दृष्टान्ता-सम्प्रतिपत्तेः । न च त्वदङ्गीकारो निष्प्रमाणक इति वाच्यम् । कल्पिताधिष्ठानभेदस्य बाधबोध्यत्वेन सप्रमाणकत्वात् । नेदं रजतमिति हि बाधः । न चैतस्य बाधकमस्ति । न च ब्रह्मज्ञानं बाधकम् । तद्बाधकत्वस्यासिद्धेः । न च प्रतियोगिनः कल्पितत्वे तद्भेदस्य कथमकल्पितत्वमिति वाच्यम् । ब्रह्मण्यनृतव्यावृत्त्यादेरकल्पितत्ववदुपपत्तेः । विस्तृतं चैतत् मिथ्यात्व सामान्यभङ्गे । घटः शुक्ति-तस्तत्वतोभिन्नो नवेति विप्रतिपत्तावाह जडानामिति । नन्वत्र नञ् द्वय पुरस्कारेण भेदसाधनं कुतः? भेदवानित्यन्वयमुखेनैव साध्यतामिति चेन्न । तथा साधने तत्वत इति विशेषणेऽप्रसिद्ध विशेषणत्वात् । तददाने सिद्धसाधनत्वात् । विप्रतिपत्तिरप्येवमेवेति नार्थान्तरतेति द्रष्टव्यम् । नन्वत्रापि तत्वत इति अभेदविशेषणं वा, अभाव विशेषणं वा? नाद्यः । अप्रसिद्धविशेषणत्वात् । न द्वितीयः । अभेदाभावस्यापि तात्विकस्य मां प्रत्यसिद्धेः तद्दोष तादवस्थ्यादिति चेन्न । तत्वत इत्यस्याभावविशेषणत्वात् । न चाप्रसिद्धविशेषणता । अनृतव्यावृत्त्यादेस्त्वया तात्विकस्याङ्गीकर्तव्यत्वात् । अन्यथा तस्य वेदान्त-प्रयोजनत्वानुपपत्तेः । यद्वास्त्वभेद विशेषणम् । न चाप्रसिद्धिः । साह्यप्रमा वा? अज्ञानं वा? नाद्योऽ-नुपयोगात् । न द्वितीयः । प्रतिवादिवाक्यतस्तज्ज्ञानसम्भवात् । न च प्रमाणप्रसिद्धिस्तत्रापेक्षिता । गौरवात् । यद्वा विशेष्ये विशेषणमिति न्यायेन अभावेऽभेदः । तत्र च पारमार्थिकत्वं शुक्तिप्रतियोगिकत्वं चेति साध्यप्रसिद्धिसम्भवात् । यद्वा पारमार्थिकत्वमभेदनिष्ठं धर्मत्वादित्यादिना सामान्यप्रसिद्धिसम्भवात् । एवं च यद्यपि तात्विक भेदवानित्यपि सम्भवति । तथाप्येवं विप्रतिपत्तावयमपि प्रकार इत्यदोषः । न चाप्रयोजकत्वम् । घटादौ कल्पित तत्प्रतियोगिकभेदमात्रेण तदर्थक्रियाकारित्वादेरभावेन तात्विकभेदस्यैव तत्र प्रयोजकत्वात् । न च प्रतियोगिसमानसत्ताक भेदमात्रेण तदुपपत्तिरिति वाच्यम् । प्रातिभासिके व्यावहारिक प्रतियोगिसमानसत्ताकभेदस्य त्वन्मतेऽभावेनोक्तहेत्वभावापत्तेः । जडे आत्मप्रतियोगिक प्रतियोगिसमान-सत्ताक भेदाभावेन तदर्थक्रियाकारित्वादेरापत्तेश्च । तस्मात् तात्विकभेदस्यैव प्रयोजकत्वमिति कथमप्रयोजक-त्वम्? नच बाधः । तात्विकत्वे बाधस्योक्तत्वादिति वाच्यम् । बाधकानां परिहृतत्वात् । नन्वनुमानात् प्राक् भेदाभावेन कथं पक्षदृष्टान्तहेतुभाव इत्यत आह परमतेऽपीति । अन्यथा व्यावहारिक भेदानङ्गीकारे । अनात्मा स्वान्तर्गणिक भेदवान्नवेति विप्रतिपत्तावाह अनात्मेति । अत्रानात्ममात्रस्यात्मत्वावच्छिन्न प्रतियोगिक भेदवतः पक्षत्वम् । तेन विशेषाभावमादायात्मनः पक्षत्वात् सिद्धसाधनमिति न मन्तव्यम् । स्ववृत्तिधर्मानधिकरण प्रतियोगिको ज्ञानबाध्यत्वात्यन्ताभाववान् यः स्वान्तर्गणिको भेदस्तद्वानिति साध्यार्थः । अत्र भेदवानित्युक्तेरात्मभेदमादाय सिद्धसाधनता परिहारायान्तर्गणिकेति । बाध्यभेदेन तद्वारणाय ज्ञानेति । स्वभेदसिद्धिवारणाय स्वेति । न च स्वभेदस्य बाधादेवासिद्धेर्व्यर्थं विशेषणमिति वाच्यम् । बाधानवतारदशायां तत्सिद्धिसम्भवात् । उद्देशसिध्यर्थत्वाच्च । ननु स्ववृत्तीत्यत्र यावत्स्वधर्मानाधारत्वं

(कण्टकोद्धारः)
विवक्षितं, यत्किञ्चित्स्वधर्मानाधारत्वं वा? नाद्यः । ब्रह्मणि स्ववृत्तिकेवलान्वयिधर्मसद्भावेन साध्याप्रसिद्धेः । न द्वितीयः । यत्किञ्चित्स्वधर्मानाधार पटप्रतियोगिकपटज्ञानाबाध्यात्मज्ञानबाध्य भेदेन सिद्धसाधनमिति चेन्न। अस्तु तावदाद्यः । न चाप्रसिद्धिः । मया केवलान्वयि धर्मानङ्गीकारात् । द्वितीयेऽप्यदोषः । ज्ञानाबाध्येत्यत्र सामान्याभावस्य विवक्षितत्वेनोक्तदोषाभावात् । नचैकस्मिन् घटे कल्पितानेकघटेषु व्यभिचारः । तद्भेदस्य बाध्यत्वादिति वाच्यम् । कल्पितानामपि भेदस्य बाधाभावेनाबाध्यत्वात् । न हि धर्मिमिथ्यात्वं प्रतियोगिमिथ्यात्वं वा भेदमिथ्यात्वे प्रयोजकम् । किन्तु बाधाभाव एव । प्रकृते च शुक्तिरूप्यं शुक्तिवङ्गादिभिन्नं नेति बाधाभावात् । तथा च तद्भेदस्य बाध्यत्वाभावान्न तत्र व्यभिचारः । न च दृष्टान्तस्य साध्यवैकल्यम् । आत्मनो निर्धर्मकत्वेन स्वेतीत्युक्तसाध्याभावादिति वाच्यम् । सगुणत्ववादे आत्मधर्माणां साधितत्वात् । साङ्कर्यं चेति । न च तात्विक भेदवत् तात्विकाभेदस्याप्यभावेनासाङ्कर्यमिति वाच्यम् । एवं वदता तात्विकाभेदः साङ्कर्ये प्रयोजक इत्युक्तं स्यात् तच्च न शोभनम् । एतद्घटस्यैतद्घटेन तात्विकाभेदस्य त्वन्मतेऽभावेनासाङ्कर्यापत्तेः । तस्मात् तात्विक भेद एवासाङ्कर्ये प्रयोजक इति तदभावे साङ्कर्यं स्यादेवेति भावः । आत्मनामात्मानात्मनोश्च युगपत् तात्विकभेदः साधनीय इति समयबन्धेऽनुमानप्रकारमाह आत्मनामिति । अत्र स्वशब्देनानात्मत्वावच्छिन्नं विवक्षितम् । तदवृत्तिर्धर्म आत्मत्वादिरूपः । तदधिकरणमात्मा । तत्प्रतियोगिक प्रतियोगिज्ञानाबाध्य भेदाधिकरणं स्ववृत्तिधर्मानधिकरणमात्मान्तरम् । तत्प्रतियोगिकभेदसिद्धिरनात्मनीत्यर्थः । न च पक्षदृष्टान्तयोः स्वत्वस्यैकस्याभावादनुगतव्याप्यतावच्छेदकाभावेन व्याप्त्यग्रह इति वाच्यम् । तथात्वे प्रमाणज्ञानं स्वप्रागभावेत्यविद्यानुमानेऽपि व्याप्त्यग्रहादाभासत्वापत्तेः । एतादृश प्रयोगाणामभियुक्तसिद्धत्वेनानुमानाङ्गत्वेन बुद्धिविशेषणस्थत्वस्य सम्भवात् । अन्यथा शब्दसङ्केत ग्रहोऽपि न स्यात् । नचाजडत्वमुपाधिः । तस्य ज्ञातृत्वादिरूपस्य जडत्वभङ्गोक्तन्यायेनात्मन्यभावेन साध्याव्यापकत्वादप्रयोजकत्वाच्च । न च जडत्वेन व्यतिरेकिणा सत्प्रतिपक्षत्वमिति वाच्यम् । अज्ञातृत्वादिरूपस्य जडत्वस्यात्मनि सत्वेन व्यभिचारात् तुल्यबलत्वाभावात् । अप्रयोजकत्वेन व्यतिरेकव्याप्त्यसम्भवाच्च । ननु शब्देनात्मत्वावच्छिन्नग्रहे दृष्टान्ते साध्यवृत्तिर्न सम्भवतीत्यत आह दृष्टान्तेत्विति । तदा तु स्वशब्देनात्मत्वावच्छिन्नं ग्राह्यमिति भावः ।

जीवब्रह्मभेदो जीवजडभेदश्चैकदैव साधनीय इति समयबन्धेऽनुमानप्रकारमाह जीवस्येति । अत्र यदस्वाद्यनधिकरणमित्यन्तेन जीवस्य ब्रह्मतो भेदः, उत्तरेण च जडे जीवभेदः सिध्यतीति द्रष्टव्यम् । नचास्वाद्यनधिकरणत्ववत् जीवत्वानधिकरणेति विशेषणं प्रक्षिप्य जीवाद्यतिरिक्तमपि वस्तु सिध्येतेत्याभाससमत्वमिति वाच्यम् । उक्तविशेषणोपेतवस्तुनोऽभावेन साध्याप्रसिद्धेः । विपक्षबाधकाभावेनाप्रयोजकत्वाच्च । प्रकृतानुमाने च विपक्षबाधकानामुक्तत्वात् । न च धर्मिपदं विकल्प्य दूषणापत्तिः । तस्याः प्रागेव परिहृतत्वात् । न च गन्धाधारत्वादिना सत्प्रतिपक्षत्वाज्जीवजडयोर्जीवब्रह्मणोश्च भेदानङ्गीकारे बाधकानामुक्तत्वेन स्थापनाय बलवत्त्वात् । जीवजडभेदे प्रत्यक्षस्योक्तत्वेन बाधाच्च । नन्वस्वादीत्यादिपदेन पृथिवीत्वजीवत्वादिग्रहणे कथमुक्तसिद्धिः? अस्वादीत्यनेन जीवाप्राप्ते जीव भेदासिद्धेः । तेनैव पृथिव्या

(कण्टकोद्धारः)

अप्यप्राप्तेः तद्द्वारा दृष्टान्ते साध्यासम्भवाच्चेत्यत आह अम्वादीत्यादिशब्देनेति । आदिशब्देन जीवत्व पृथिवीत्वयोरग्रहणात् उक्तरीत्योभयसिद्धिरिति द्रष्टव्यम् । दृष्टान्ते त्विति । न चाम्बुनि जीवभेदस्य सत्वेन दृष्टान्ते साध्य सम्भवे पृथिवीद्वारा दृष्टान्ते साध्यसत्वं किमर्थमुच्यत इति वाच्यम् । जीवजडमात्र भेदविप्रतिपत्तावस्य प्रवृत्तत्वेन अम्बुनि जीवभेदस्यासिद्ध्या पृथिवीद्वारैव साध्यसिद्धेर्वक्तव्यत्वात् । न च जडभेदस्याप्यसिध्या पुनर्दृष्टान्तानुपपत्तिरिति वाच्यम् । जडभेदाङ्गीकारिणं प्रत्येवास्योक्तत्वात् । जीवस्य ब्रह्म जीवान्तरभेदः जीवाज्जडस्य च भेद एकदैव साधनीय इति समयबन्धेऽनुमानप्रकारमाह जीवस्येति । अत्र दूषणपरिहारः पूर्ववद् द्रष्टव्यः । अन्तर्गणिकेत्यनेन जीवानां परस्परं भेदसिद्धिरिति द्रष्टव्यम् । पूर्वोक्तौ भेदौ ब्रह्मजडभेदश्चैकदैव साधनीया इति समय बन्धेऽनुमानप्रकारमाह जीवस्येति । अत्रापि दूषणपरिहारः पूर्ववद् द्रष्टव्यः । न च पाकजरूपानधिकरणत्वादिना सत्प्रतिपक्ष इति वाच्यम् । दत्तोत्तरत्वात् । ब्रह्मादिषु भेदमात्रविप्रतिपत्तावनुमान प्रकारमाह भेदमात्रेत्विति । अत्र भेदवदिति साधने व्यावहारिक भेदेनार्थान्तर-मित्यतो भेदहीनमित्याद्युक्तम् । स्वसमसत्ताकभेदवदित्यर्थः । तेन नार्थान्तरमिति भावः । स्वपदाननुगमश्चा-ज्ञानसाधकानुमानवत् परिहरणीयः । न च मुक्त्यसहवृत्तित्वं जडत्वं वोपाधिरिति वाच्यम् । भेदमात्राभावेऽ-सत्वाद्यापत्त्या विपक्षबाधकाभावेन हेतोः साध्य व्याप्यत्वेन उपाधेः साध्याव्यापकत्वात् । श्रुत्यादिना मुक्ता-वपि जडस्य प्रमितत्वेन तत्र साध्याव्यापकत्वाच्च । अज्ञानत्वादिरूपस्य जडत्वस्य पक्षवृत्तित्वस्योक्तत्वाच्च । अनुकूलतर्काभावेनोपाधेः साध्याव्यापकत्व निर्णयाच्च । ब्रह्मभेद इति । ननु ब्रह्मण्येव ब्रह्मप्रतियोगिको यः कल्पितो भेदः तस्यापि पक्षत्वेंऽशतो बाध इति चेन्न । कल्पितत्वेनोभयासम्मतस्य पक्षत्वात् । नन्वत्र ब्रह्म-निष्ठो भेदः पक्षो, ब्रह्मप्रतियोगिको वा? नाद्यः । तस्यान्यनिरूप्यत्वेन ब्रह्मनिरूप्यत्वाभावेन हेतोरसिद्धेः । न द्वितीयः । ब्रह्मान्यवृत्तित्वस्योपाधित्वात् । भेदस्याद्विष्ठत्वेनाद्येऽप्यस्योपाधित्वाच्चेति चेत् न तावदाद्ये दोषः । तन्निरूप्यत्वं न तत्प्रतियोगिकत्वम् । किन्तु तज्ज्ञानाधीन ज्ञानत्वम् । अभावज्ञाने च प्रतियोगि-ज्ञानवदधिकरणज्ञानस्यापि कारणत्वेन तत्सम्भवात् । अत एवोक्तं, सद्भ्यामधिकरण प्रतियोगिभ्यामभावो निरूप्यत इति । यद्वा ब्रह्मनिरूप्यत्वं ब्रह्मसम्बन्धित्वम् । तथा च नासिद्धिः । प्रतियोगिवदधिकरणस्यापि सम्बन्धित्वात् । न च ब्रह्मवृत्तित्वमुपाधिः । तन्मते भेदस्य धर्मिमात्र निष्ठत्वेन पक्षनिष्ठत्वेन साधन व्यापकत्वात् । केवलान्वयिधर्मे साध्याव्यापकत्वाच्च । तदनङ्गीकारे स एवाधस्तादित्यादिना उक्तसाध्यवति ब्रह्मणि साध्याव्यापकत्वाच्च । अन्तर्यामिब्राह्मणेन तस्य सर्ववृत्तित्वात् । अस्तु वा द्वितीयः । उपाधि-निराकरणं च पूर्ववत् । न चार्थान्तरम् । ब्रह्मप्रतियोगिकेभेदे सिद्धे ब्रह्मण्यपि तत्प्रतियोगिक भेदसिद्धेः । ब्रह्मज्ञानमिति । नन्वत्र सप्रकारकं ब्रह्ममानं विवक्षितं, निष्प्रकारकं वा? नाद्यः । सिद्धसाधनात् । न द्वितीयः । वादिनोऽसिद्धेः । वादिना निष्प्रकारकब्रह्मज्ञानानङ्गीकारादिति चेन्न । मोक्ष हेतुब्रह्मज्ञानत्वेन पक्षत्वात् । तत्तु निष्प्रकारकं सप्रकारकं वेत्यन्यदेतत् । ननु साध्ये स्वपदेन ब्रह्मज्ञानविवक्षायां तदबाध्य-भेदाप्रसिध्याऽप्रसिद्ध विशेषणत्वम् । शुक्तिज्ञानविवक्षायां सिद्धसाधनतेति चेन्न । स्वशब्दस्य समभिव्याहृत परत्वेनोक्तदोषाभावात् । अत एव स्वोपादानगोचरेत्याद्यभियुक्तानुमानानि । अन्यथा तवापि प्रमाणज्ञानं

(कण्टकोद्धारः)

स्वप्रागभावव्यतिरिक्तेत्यादौ बाधसिद्धसाधनते स्याताम् । स्वपदानुगमस्य पूर्वमेवोक्तत्वाच्च । नचानात्मविषयत्वमुपाधिरिति वाच्यम् । अनुकूलतर्कसद्भावेन प्रकृत हेतोः साध्यव्याप्यत्वात् । किञ्च किमिदमनात्मविषयत्वम्? आत्मविषयताभिन्नत्वं वा, आत्मविषयत्वाभावो वा, आत्मभिन्न विषयत्वं वा? नाद्य द्वितीयौ । सप्रकारकब्रह्मज्ञाने साध्याव्यापकत्वात् । न तृतीयः । आत्मभेदः कल्पितोऽकल्पितो वा? न द्वितीयः । त्वन्मतेऽप्रसिद्धेः । नाद्यः । आत्मनि आत्मप्रतियोगिक भेदकल्पनसम्भवेन पक्षनिष्ठत्वेन साधन व्यापकत्वात्। अनुकूलतर्काभावेन साध्यव्यापकत्वानिर्णयाच्च । ननु घटादौ कथं भेदसाधनम्? घटे पटादि प्रतियोगिक भेदसाधने कल्पितभेदेन सिद्धसाधनम् । तात्त्विकेति विशेषणेऽप्रसिद्धिरित्यत आह घट इति । अत्र घट संसर्गानवच्छिन्नप्रतियोगिता यस्यैवं विधः पटादिधर्मिको यस्त्रैकालिकोऽभावस्तत्प्रतियोगीत्यर्थः । अत्र घटसंसर्गेति संसर्गाभाव वारणाय । स्वधर्मिकभेद सिद्धिवारणाय पटादीति । त्रैकालिकेत्यनेन सार्वकालिकपरेण भेदस्य कल्पितत्वेन सिद्धसाधनतापरिहृता । कल्पितस्य सार्वकालिकत्वाभावात् । बाधकालेऽभावात् । अत एव कल्पितस्य त्रैकालिकत्वसम्भवेन सिद्धसाधनत्व दानं केषाञ्चिदपास्तम् । न च दृष्टान्ते तादृशोऽभावोऽत्यन्ताभाव एव वक्तव्यः । अन्योन्याभावस्य विप्रतिपत्तेः । तथा च तस्य कल्पितत्वेन सार्वकालिकत्वाभावेन साध्यवैकल्यमिति वाच्यम् । कृतकत्वादिवत् प्रसाध्याङ्गकत्वात् । यद्वा पटात्यन्ताभावस्य ब्रह्मात्मकत्वाङ्गीकारेण सत्यत्वाभ्युपगमात् साध्यावैकल्यात् । ननु भेदस्य धर्म्यात्मकत्वं समर्थितम् । तथाच पटादेस्त्रैकालिकत्वाभावात् तदात्मकस्य भेदस्य न त्रैकालिक त्वमिति बाध इति चेन्न । पटादीत्यतद्गुण संविज्ञान बहुव्रीहिणानादिनित्यं जडं विवक्षितमिति नोक्तदोषः । यद्वान्योन्याभावस्य धर्म्यात्मकत्वं नेति कृत्वाचिन्तयैतज्ज्ञातव्यम् । न च तादात्म्यानवच्छिन्न प्रतियोगिताकेति विशेषणदानेन पञ्चमाभाव साधन समानयोगक्षेममिदमिति वाच्यम् । प्रकृते विपक्ष बाधकसत्वेनान्यत्र तदभावेन साम्याभावात् । अत एव विपक्षबाधकान्युक्तानि । आदिशब्देनोपाधिपरिग्रहः । एवमिति । अत्र भेदमात्रस्य पक्षत्वे कल्पित भेदेंऽशतो बाधः स्यात् । तदर्थं बाधायोग्य इति । न च कल्पितव्यावृत्त्यर्थं न विशेषणं देयम् । तस्यासत्वेन तमादाय बाधाद्यसम्भवात् । अन्यथा पर्वतादिपक्षके तद्व्यावृत्त्यर्थं विशेषणदान प्रसङ्गात् । न चेष्टापत्तिः । तादृशाभियुक्तप्रयोगाभावादिति वाच्यम् । अभ्युपगमवादेनास्योक्तत्वात् । अत एव हेतावपि प्रातिभासिकेति विशेषणम्। तावत्युक्ते परमते आश्रयासिद्धिः स्यात् । परमते सर्वस्यापि बाधयोग्यत्वात् । अतः कर्मेत्यादि । तथापि बहुजीववादे व्यधिकरण धर्मप्रागभाव मादाय दोष तादवस्थ्यम् । अत उक्तं समानाधिकरणेति । अत्र हेतु विशेषणकृत्यानि प्रपञ्च परमार्थसत्यत्व साधकवद् द्रष्टव्यानि । एतेषामेव तत्र हेतुत्वात् । न चात्र सर्वत्र ब्रह्मसाधारणधर्माणां चेतनत्वादीनामुपाधित्वमिति वाच्यम् । ब्रह्मणो निर्धर्मकत्वेन तत्र साध्यव्यापकत्वाग्रहेण साध्याव्यापकत्वात् । तादृशधर्मकल्पनाया अचेतनेऽपि सम्भवेन साधन व्यापकत्वात् । अत एव केचित् सर्वचैतन्यवादिनः । न च ब्रह्मण्यभिन्ना धर्माः सन्तीति वाच्यम् । अभेदे धर्मधर्मिभावानुपपत्तेः । ब्रह्मणो निर्विशेषत्वात् । न च जडत्वेन सत्प्रतिपक्षत्वमिति वाच्यम् । स्थापनाया अनुकूलतर्क सद्भावेन प्रबलत्वात् । जडत्वस्य जडत्वभङ्गोक्तन्यायेन ब्रह्मण्यपि सत्वेनानैकान्त्याच्च । न च

(कण्टकोद्धारः)

**मिथ्यात्वसाधक प्रमाणं बाधकमिति वाच्यम् । तेषां पूर्वमेव निराकृतत्वात् । नन्वत्र प्रातिभासिकत्वं दोष प्रयुक्तभानत्वं वा, ब्रह्मेतरज्ञानबाध्यत्वं वा? नाद्यः । पक्षेऽसिद्धेः । न द्वितीयः । चरमवृत्त्यव्यवहिते प्रातिभासिके व्यभिचारादिति चेन्न । ब्रह्मेतरज्ञान बाध्यत्वयोग्यत्वस्य वा, प्रतिभासमात्र शरीरत्वस्य वा, अर्थक्रियानर्हत्वे सति सत्वेन प्रतीयमानत्वस्य वा, प्रातिभासिकपदेन विवक्षितत्वात् । चरमवृत्त्यव्यवहित प्रातिभासिके चोक्तविध प्रातिभासिकत्वस्य सद्भावेन हेत्ववृत्तेर्न व्यभिचारः । न च द्वितीय हेतोः साध्यसिध्यधीनत्वेन साध्याविशेषपर्यवसानमिति वाच्यम् । मिथ्यात्वसाधक प्रमाणाभावेनासत्वगोचर प्रमाणाभावेन तद्विषयत्वाभावसिद्धेः । प्रमाणाभावश्च प्रागेव व्युत्पादितः । न च तृतीये चरमवृत्त्यन्य-बाध्यमिथ्यात्वकत्वमुपाधिरिति वाच्यम् । अनुकूलतर्कसद्भावेन प्रकृतहेतोः साध्यव्यापकत्वात् । साधना-विशेषत्वाच्च । बाध्यत्वस्यैवारोपितत्वात्मकत्वात् । अप्रयोजकत्वेन साध्यव्यापकत्वानिर्णयाच्च । बाध्य-मिथ्यात्वकत्वस्यैवोपाधित्वे शेषवैयर्थ्याच्च । पक्ष व्यावृत्त्यर्थत्वे पक्षेतरत्वात् । न च चतुर्थेऽसिद्धिः । अविद्या रूपकल्पकसत्वादिति वाच्यम् । अविद्याया जडत्वेन कल्पकत्वासम्भवात् । तस्य चेतनधर्मत्वात् । न हि घटादौ कल्पकत्वव्यवहारः । न च पञ्चमे दृष्टिसृष्टिपक्षेऽसिद्धिरिति वाच्यम् । दृष्टिसृष्टिपक्षस्य प्रमाणशून्यत्वेन प्रत्यभिज्ञादि प्रमाणबाधितत्वेन प्रतिकर्मव्यवस्थाद्यनुपयुक्ततयाऽसम्भवात् । यद्वा प्रतिकर्मव्यवस्थावादिमत एव तस्य हेतुत्वं द्रष्टव्यम् । अनिषेध्यत्वेनेति । न च वृत्तिप्रतिबिम्बित चैतन्यस्य साक्षित्वेन दोषजन्यत्वाद-सिद्धिरिति वाच्यम् । तथात्वेऽविद्यावृत्तित्वेत्यादेर्ग्रहणं न स्यादित्युक्तत्वात् । श्रुतीति । न च मुख्यं श्रुति-तात्पर्यं धर्मादौ नेति वाच्यम् । तात्पर्यभावस्यैव प्रयोजकत्वे मुख्यत्वविशेषणस्य व्यर्थत्वात् । उक्तविरोधो भेदः परमार्थसन् । उभयसिद्धसाधकशून्यत्वात् आत्मवत् । चेतननिष्ठो जडभेदः परमार्थसन् । चेतनधर्मिक-त्वात् चेतनाभेदवदित्याद्यादिशब्देन ग्राह्यम् । ननूक्तानुमानेषु असिध्यादिकण्टकोद्धारः कुतो न कृत इत्यत आह अत्रेति । भेदपञ्चकेऽनुमानानि ।**

न्यायामृतप्रकाशः

॥ जडानात्मकत्वादिति ॥ जडनिष्ठासाधारणधर्मशून्यत्वादित्यर्थः । अतो न साध्यावैशिष्ट्यशङ्केयम् ॥ विपक्षेत्विति ॥ जडभेदानङ्गीकार इत्यर्थः । घटादिजडभेदानङ्गीकार इति यावत् ॥ प्रमेति ॥ गौरजडदेहा-भेदस्यात्मनि सत्यत्वादित्यर्थः । व्यावहारिकशुक्तिभेदाङ्गीकारेण सिद्धसाधनतावारणायाह ॥ तत्वत इति ॥ ननु सर्वपदार्थाभेदवादिमते घटजनकस्यापि शुक्तिजनकाभिन्नत्वाद्वितीयहेतोरसिद्धिः साध्यहेत्वोरप्यैक्यात्साध्यावैशिष्ट्य-श्चेत्यत आह ॥ परमत इति ॥ स्वक्रियेति ॥ सर्वाभेदवादिना त्वया भेददूषणैर्भेदो न सिध्यतीत्युच्यते तदयुक्तं भेदासिद्धेस्तद्दूषणस्य च भेदसिद्धिदूषणाभावाभ्याम् अभिन्नत्वेन तदसिध्युक्त्यैव तत्सिद्धिप्रसङ्गात् दूषणोक्तिरेव तदभावोक्तिः स्यादिति स्वक्रियाविरोध इत्यर्थः ॥ स्ववृत्तीति ॥ स्वशब्देन पक्षीभूतोऽनात्मा तद्वृत्तिधर्मानाधार ईश्वरः तज्ज्ञानाबाध्यो यः आन्तर्गणिक अन्तर्गणसम्बन्धी जडसमुदायान्तर्गतो भेदः तद्वानित्यर्थः ॥ स्ववृत्ति-धर्मानाधारप्रतियोगिकभेद- वानित्युक्ते ईश्वरभेदेनार्थान्तरं स्यान्न तु परस्परजडभेदसिद्धिरत उक्तमन्तर्गणिकेति ।

(प्रकाशः)

व्यावहारिकभेदेनार्थान्तरवारणायानाधारज्ञानाबाध्येति ॥ आत्मवत् जीववत् दृष्टान्तीभूते जीवे स्वशब्दोक्तजीववृत्तिधर्मानाधारः पक्षीभूतोऽनात्मा तज्ज्ञानाबाध्यो योऽन्तर्गणिको भेदः परस्परजीवभेदः तद्वत्त्वमस्तीति ध्येयम् ॥ विपक्ष इति ॥ जडेष्वान्तर्गणिकभेदाभावे परस्पराभेदस्य वास्तवत्वापत्त्येत्यर्थः ॥ स्वावृत्तीत्यादि ॥ तथा च स्वशब्देन घटादिस्तदवृत्तिधर्माधिकरणं चैत्रः तत्र तत्प्रतियोगिकः प्रतियोगिभूतचैत्रज्ञानाबाध्यो यश्चैत्रभेदस्तदधिकरणं यत् स्वशब्दोक्तपक्षीभूतघटाद्यनात्माऽवृत्तिधर्माधिकरणं च मैत्रः । एतावता आत्मनां परस्परं भेदसिद्धिः । तत्प्रतियोगिको मैत्रप्रतियोगिकः प्रतियोगिभूतमैत्रज्ञानाबाध्यश्च यो भेदो मैत्रभेदस्तदधिकरणम् । अनेनात्मनः सकाशाद्घटाद्यनात्मनां भेदसिद्धिरिति ज्ञातव्यम् । पक्षे साध्यमुपपादयति ॥ पक्ष इति ॥ आत्मा चैत्रः । आत्मान्तरात् मैत्रात् । दृष्टान्ते साध्यमुपपादयति ॥ दृष्टान्ते त्विति ॥ स्वशब्देनाऽऽत्मा तदवृत्तिधर्माधिकरणं घटः तत्प्रतियोगिकः प्रतियोगिभूतघटज्ञानाबाध्यो यो भेदस्तदधिकरणं यत् स्वशब्दोक्तात्मावृत्तिधर्माधिकरणं पटः तत्प्रतियोगिकः प्रतियोगिभूतपटज्ञानाबाध्यः यो भेदस्तदधिकरणत्वमात्मन्यस्तीति दृष्टान्ते साध्यं द्रष्टव्यम् । पक्षे तु नैवं साध्यपर्यवसानं बाधादिति द्रष्टव्यम् ॥ भेदस्येति ॥ आत्मनां परस्परं भेदस्य व्यावहारिकत्वनिरासाय आत्मनः सकाशादनात्मनो भेदस्य व्यावहारिकत्वनिरासाय तात्विकत्वार्थं प्रतियोगिज्ञानाबाध्येति विशेषणद्वयमित्यर्थः । भेदस्य जीवज्ञानाबाध्यत्वे तस्यैव ब्रह्मत्वेन ब्रह्मज्ञानाबाध्यत्वरूपतात्विकत्वसिद्धिरिति ध्येयम् ॥ एवमुत्तरत्रापि ॥ जीवस्येति ॥ जीवेश्वरभेदे जीवजडभेदे चेत्यर्थः । जीवाज्जडस्य भेदसिद्ध्यर्थम् अस्वादीति विशेषणम् ॥ धर्मीति ॥ जीवेत्यर्थः । परमते जीवज्ञानाबाध्यत्वे तस्यैव ब्रह्मत्वेन ब्रह्मज्ञानाबाध्यत्वसिद्ध्या तात्विकत्वसिद्धिः । ब्रह्मप्रतियोकजीवनिष्ठभेदस्य तात्विकत्वार्थं धर्मिज्ञानाबाध्येति विशेषणम् । जीवप्रतियोगिकपृथिवीनिष्ठभेदस्य तात्विकत्वार्थं प्रतियोगिज्ञानाबाध्येति विशेषणम् । ननु यैर्वादिभिरबादीनां नामान्तराणि स्थापितानि सन्ति तान्प्रति यदस्वाद्यनधिकरणमिति विशेषणायोगादाह ॥ अस्वादिशब्देनेति ॥ पक्ष इत्यादि ॥ ब्रह्मप्रतियोगिकः धर्मिभूतजीवज्ञानाबाध्यो यो भेदस्तदधिकरणं यत् अस्वाद्यनधिकरणं जीवस्तत्प्रतियोगिकः प्रतियोगिभूतजीवज्ञानाबाध्यो यो भेदस्तद्वत्त्वं पृथिव्यामस्ति । दृष्टान्तीभूते अंबुनि तु ब्रह्मप्रतियोगिकः धर्मिभूतांबुज्ञानाबाध्यो यो भेदस्तदधिकरणं यत् अस्वाद्यनधिकरणं पक्षीभूता पृथीवी तत्प्रतियोगिकः प्रतियोगिभूतपृथिवीज्ञानाबाध्यो यो भेदस्तद्वत्त्वमस्तीति ध्येयम् ॥ जीवस्येति ॥ जीवेश्वरभेदे परस्परजीवभेदे जीवजडभेदे चेत्यर्थः । पृथिवीत्वानुमानं पूर्वोक्तमेव जीवेश्वरजीवजडभेदसाधकं तत्राऽऽन्तर्गणिकभेदवदिति विशेषणमधिकं तत्प्रयोजनमाह ॥ अत्रेति ॥ ब्रह्मप्रतियोगिकेत्यादि ॥ आद्यमधिकरणान्तं जीवस्य ब्रह्मणः सकाशाद्भेदसिध्यर्थम् । अस्वाद्यनधिकरणमिति जडात् आन्तर्गणिकभेदवदि जीवान्तरात् । एवं च ब्रह्मजडजीवान्तरेभ्यो भिन्नाज्जीवात् पृथिव्यां भेदः सत्यन्तेन सिद्ध्यति । द्वितीयेनास्वादीत्यनेनेश्वरस्य जडभेदः तत्रासंसारिपदं ब्रह्मपरं तादृशादीश्वराद्भेदः पृथिव्यां सिध्यतीति पञ्चापि भेदा युगपत्सिध्यन्तीत्यर्थः ॥ स्वान्येति ॥ ब्रह्मेत्यर्थः । दृष्टान्ते आत्मनि स्वज्ञानबाध्यभेदाधिकरणत्वस्यैव सत्वेन स्वान्यज्ञानाबाध्यभेदाधिकरणत्वरूपसाध्यमस्तीति ज्ञातव्यम् ॥ न सर्वेति ॥ सर्वत्र नास्तीति नेत्यर्थः ॥ ब्रह्मेति ॥ ब्रह्माभेदस्य ब्रह्मण्येव सत्वेन सर्वनिष्ठात्यन्ताभावप्रतियोगित्वाभावरूपसाध्यमस्तीति भावः ॥ शुक्तीति ॥ शुक्तिज्ञानाबाध्यरजतभेदवच्छुक्तिविषयकं शुक्तिज्ञान-

(प्रकाशः)

मित्यर्थः ॥ घट इत्यादि ॥ पटादिधर्मिको यत्त्रैकालिकाभावोऽन्योन्याभावस्तत्प्रतियोगित्वं घटे साध्यते । एवं च पटनिष्ठभेदप्रतियोगित्वस्य घटे सिध्या जडभेदः सिध्यतीति ध्येयम् । अत्यन्ताभावस्यापि त्रैकालिकाभावत्वे-नार्थान्तरतावारणाय घटसंसर्गानवच्छिन्नप्रतियोगिताकेति त्रैकालिकाभावविशेषणम् । सम्सर्गाभावत्वं तादात्म्या-भावत्वं चेत्यभावविभाजकोपाधिद्वयपक्षेऽत्यन्ताभावे सम्सर्गस्यैव प्रतियोगितावच्छेदकत्वादिति ध्येयम् । एवं च घटतादात्म्यावच्छिन्नप्रतियोगिताकपटादिधर्मिकत्रैकालिकाभावरूपान्योन्याभावप्रतियोगित्वमादाय पक्षे साध्यं द्रष्टव्यम् ॥ पटवदिति ॥ पटे पटो नास्तीति प्रतीत्या पटात्यन्ताभावस्य पटे सत्वेन पटधर्मिकस्य पटात्यन्ता-भावरूपत्रैकालिकाभावस्य पटसम्सर्गावच्छिन्नप्रतियोगिताकत्वेन घटसम्सर्गावच्छिन्नप्रतियोगिताकत्वसद्भावादुक्त-साध्यमस्तीति सम्प्रदायः ॥ एवं समानाधिकरणेत्यादि ॥ भेद इत्येव पक्षनिर्देशेमिथ्यात्वेनोभयसिद्धचन्द्रभेदमादाय बाधवारणायोक्तमबाध्येति । मायिमते आश्रयासिद्धिपरिहारायोक्तं कर्मेत्यादि ॥ कर्मप्रागभावसमानकालीनं यज्ज्ञानम् इदानीन्तनं ब्रह्मज्ञानेतरत् अयं घट इत्यादिज्ञानं तदबाध्यत्वं मायिनः सम्मतम् अस्माकं तु सर्वथाऽ-बाध्यत्वेन विशेषणं सम्मतमिति ध्येयम् । तथा च व्यावहारिको भेद इति तात्पर्यार्थः । तथैव पक्षनिर्देशेऽस्माक-माश्रयासिद्धिरित्यवधेयम् । मुक्तानां कर्मप्रागभावाभावेन भेदाबाधकेऽयं घट इत्यादिज्ञाने मुक्तात्मकर्मप्राग-भावसमानकालीनत्वाभावादाश्रयासिद्धिरित्यत उक्तंसमानाधिकरणेति । मुच्यमानात्मनिष्ठेत्यर्थः । प्रातिभासिका-सतोर्व्यभिचारवारणाय विशेषणविशेष्ये दोषाजन्यं बाधकज्ञानं प्रति निषेध्यत्वेन साक्षाद्विषये रूप्ये व्यभिचार-वारणायोक्तमनिषेध्यत्वेनेति । नन्वत्र भेदस्य सत्वमात्रं साध्यतां पारमार्थिकत्वविशेषणं व्यर्थं वादिनो मम मते व्यावर्त्याप्रसिद्धेरित्याशङ्क्य परिहरति ॥ अत्रेति ॥ विमतं सद्वा पारमार्थिकसद्वेत्यत्र वादिनः परमार्थत्वविशेषणं व्यर्थं व्यावर्त्याप्रसिद्धेरित्याशङ्क्य परप्रसिद्धत्वमात्रेण व्यावर्त्यत्वोपपत्तेः परार्थानुमाने परं प्रति सिद्धसाधनोद्धारा-स्यापि तत्प्रयोजनत्वादित्यादिना कृत इत्यर्थः ॥ ॥ भेदपञ्चकेऽनुमानानां विवरणम् ॥

## २२. भेदश्रुतेरनुवादकत्वभङ्गः

**किं च "द्वा सुपर्णा" "य आत्मनि तिष्ठन्" "नित्यो नित्यानां चेतन-श्चेतनानाम्", "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य"-इत्यादि श्रुतिभिः**

**नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।**
**अन्यश्च परमो राजंस्तथान्यः पंचविंशकः ॥**

**यथेश्वरश्च जीवश्च सत्यभेदौ परस्परमित्यादि स्मृतिभिः "भेदव्यपदेशाद्, भेदव्यपदेशाच्चान्यः, शारीरश्चोभयेऽपि हि भेदेनैनमधीयते पृथगुपदेशाद्" इत्यादि-**

**भिर्निर्णायकसूत्रैश्च सिद्धो भेदः । न च श्रुतिरनुवादः, जगत्सत्यत्वश्रुतेरनुवादकत्वप्रस्तावोक्तन्यायैर्जीवत्वावच्छिन्नजीवभेदस्याप्राप्त्या न हिंस्यादित्यादिवदननुवादकत्वोपपत्तेः । शाखान्तरस्थ विधिवाक्यस्येव पुंविशेषं प्रत्यर्थवत्त्वाच्च । ''द्वयोः प्रणयन्ती''त्यादिवद्वर्तमानमात्रग्राहिप्रत्यक्षाप्राप्तकालत्रयाबाध्यभेदप्रापकत्वोपपत्तेश्च । ऐक्ये षड्विधतात्पर्यलिंगवद्दार्ढ्यार्थत्वाच्च । षड्विंशतिरित्येव ब्रूयादितिवत् प्रतिप्रसवार्थत्वाच्च । प्रत्यक्षस्याप्रामाण्ये श्रुतेरनुवादकत्वायोगाच्च । श्रुतेः प्रत्यक्षनिरपेक्षानुवादत्वेन धारावाहिकद्वितीयादिज्ञानवत् प्रमात्वोपपत्तेश्च । विद्वद्वाक्यवत्सप्रयोजनानुवादत्वेन स्वार्थपरत्वाच्च । यत्तन्नेत्यादिनिषेधार्थानुवादलिंगाभावेन विधेयान्तरश्रवणेन च निषेधार्थानुवादायोगात् । विधानार्थानुवादे चानुवाद्यस्य तात्त्विकत्वनियमाच्च । अनुवादकत्वेऽपि यथार्थ्यरूपप्रामाण्या हानेश्च ।**

**किं चौपनिषदस्य ब्रह्मणोऽशास्त्रेणाप्राप्तेः तद्धर्मिकस्य तत्प्रतियोगिकस्य वा भेदस्य कथं शास्त्रनिरपेक्षप्रत्यक्षादिना प्राप्तिः? न च शास्त्रसापेक्षप्राप्त्या शास्त्रस्यानुवादकता, भेदमात्रस्य प्राप्त्यनुवादत्वे तु घटेन घटैक्यश्रुतिरिप्यनुवादः स्यात् । भेदश्रुतेरनुवादकत्वभङ्गः ॥**

## अद्वैतसिद्धिः

ननु– भेदतात्त्विकत्वे 'द्वा सुपर्णा', 'य आत्मनि तिष्ठन्', 'नित्यो नित्यानां चेतनश्चेतनानाम्', 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य' इति श्रुतयो मानमिति– चेन्न, द्वा सुपर्णेत्यत्र पूर्वार्धे न भेदः प्रमेयः, अपदार्थत्वादवाक्यार्थत्वाच्च । द्वित्वस्य स्वाश्रयप्रतियोगिकभेदसमानाधिकरणत्वनियमात् । श्रुतद्वित्वार्थापत्तिसमधिगम्यस्यापि भेदस्य श्रौतत्वमिति चेत् न । द्वौ चन्द्रमसावित्यत्रेव कल्पितभेदेनाप्युपपत्तेः तात्त्विक भेदानाक्षेपकत्वात् । अत एव नोत्तरार्धस्यापि तात्त्विकभेदपरत्वम्, वस्तुतस्त्वस्याः श्रुतेः पैङ्गिरहस्यब्राह्मणे बुद्धिजीवपरतया व्याकृतत्वेन जीवेशभेदपरत्वस्य वक्तुमशक्यत्वात् । 'य आत्मनि तिष्ठन्' इत्यादावाधाराधेयभावस्य 'चेतनश्चेतनाना'मिति निर्धारणस्य 'अजोऽन्य' इत्यत्र भेदव्यपदेशस्य काल्पनिकभेदमादायाप्युपपत्तेः भेदतात्त्विकत्वापर्यवसायित्वात्, श्रुत्यन्तर-

(अद्वैतसिद्धिः)

विरोधाच्च । न चैतत् श्रुतिविरोधात् सैव श्रुतिरन्यपरा, भेदश्रुतेः प्रत्यक्षसिद्धभेदानुवादत्वेन हीनबलत्वात् । न च जीवत्वावच्छिन्नजीवभेदस्याप्राप्त्या 'न हिंस्या'दित्यादिवदननुवादत्वम्, जीवेश्वरभेदस्य प्रत्यक्षसिद्धतया तदन्यथानुपपत्तिसिद्धेशधर्मिकजीवत्वावच्छिन्नभेदस्यापि प्रत्यक्षसिद्धतुल्यकक्ष्यतया तद्बोधकश्रुतेरनुवादत्वोपपत्तेः । न हिंस्यादित्यत्र नानुवादत्वशङ्कापि, ब्राह्मणो न हन्तव्य इत्यादेः पुरोवादकत्वनिर्णायकाभावात् । न च - पुंविशेषं प्रत्यस्यार्थवत्त्वं शाखान्तरस्थविधिवाक्यवदिति– वाच्यम्, एकस्यानेकशाखाध्ययनासंभवात्, प्रत्यक्षस्य सर्वपुरुषसाधारण्येन प्राथमिकप्रसरत्वेन च पुरुषविशेषं प्रत्यपि सार्थकत्वस्य वक्तुमशक्यत्वात् । न च– द्वयोः प्रणयन्ती'त्यादिवद् वर्तमानमात्रग्राहिप्रत्यक्षाप्राप्तकालत्रयाबाध्यभेदप्रापकत्वमिति– वाच्यम्, अजो ह्यन्य इत्यादौ त्रिकालाबाध्यत्वबोधकपदाभावात् ।

न च– अभेदे षड्विधतात्पर्यलिङ्गवद्दार्ढ्यार्थत्वं भेदश्रुतेरिति– वाच्यम्, तत्र प्रयोजनवत्त्वेऽप्यनुवादत्वापरिहाराद् अग्निर्हिमस्य भेषजमितिवत् । न च 'षड्विंशतिरित्येव ब्रूयादि' तिवत् प्रतिप्रसवार्थत्वम्, तदपेक्षया हीनबलत्वेन प्रतिप्रसवायोगात्, भेदनिषेधकश्रुतेः भेदतात्त्विकत्वनिषेधपरत्वेन भेदस्वरूपप्रतिपादकवाक्यस्य तत्प्रतिप्रसवायोगात् । न च प्रत्यक्षस्याप्रामाण्ये श्रुतेस्तत्सिद्धानुवादकत्वायोगः, तस्या ज्ञातज्ञापकत्वमात्रेणानुवादकत्वोपपत्तेः । न च– एवमपि निरपेक्षानुवादत्वेन धारावाहिकद्वितीयादिज्ञानवत् प्रमात्वोपपत्तिरिति– वाच्यम्, निरपेक्षसापेक्षसाधारणानुवादत्वमात्रस्याप्रामाण्यप्रयोजकत्वाद्, दृष्टान्तस्यातिरिक्तकालकलाविषयत्वेनानधिगतार्थ विषयतया विषमत्वात् । न च विद्वद्वाक्यवत् सप्रयोजनानुवादत्वेन स्वार्थपरता, तस्य स्वार्थबोधकत्वेऽपि द्वित्वसंपादकतया स्वार्थपरत्वाभावात् । न च यत्तन्नेत्यादिनिषेधार्थानुवादलिङ्गाभावेन विधेयान्तरश्रवणेन च निषेधार्थानुवादत्वायोगः, यत्तदित्यादेरनुवादलिङ्गत्वेऽपि अनुवादव्यापकत्वाभावाद्, अन्येनापि ह्युन्नयनसंभवाद्, 'ब्रह्मणो न हन्तव्य' इत्यादौ यत्तत्पदाभावेऽपि निषेधानुवाददर्शनाद्, विधेयान्तरसत्त्वे तु निषेधार्थानुवादकत्वाभावेऽपि तदर्थानुवादत्वापरिहारात् । न चैवं विधानार्थानुवादे तात्त्विकत्वनियमः, यद्रजतं तदानयेत्यादौ अन्यविधानार्थं भ्रान्तिसिद्धानुवादे तात्त्विकत्वादर्शनात् । न च– अनुवादत्वेऽपि यथार्थत्वरूपप्रामाण्याहानिरिति– वाच्यम्, तस्य बाधकाभावनिबन्धनत्वेन प्रकृते असंभवात् ।

(अद्वैतसिद्धिः)

ननु– औपनिषदस्य ब्रह्मणः शास्त्रातिरिक्तेनाप्राप्तेः तद्धर्मिकस्य तत्प्रतियोगिकस्य वा भेदस्य कथं शास्त्रनिरपेक्षप्रत्यक्षादिना प्राप्तिरिति– चेन्न, प्रतियोगिग्रहार्थं तदपेक्षत्वेऽपि स्वसमानविषयप्रमाणपूर्वकत्वानियमेन प्रत्यक्षस्य भेदप्रापकत्वोपपत्तेः। यद्यपीशधर्मिकस्य भेदस्य प्रत्यक्षेणाप्राप्तिः, तथापि प्रत्यक्षसिद्धजीवधर्मिकेशभेदान्यथानुपपत्तिसिद्धस्यापि तस्य श्रुतार्थापत्तिसिद्धस्य श्रौतत्ववत् प्रत्यक्षसिद्धत्वोपपत्तेः। इत्यद्वैतसिद्धौ भेदश्रुतेरनुवादकत्वम् ॥

## न्यायामृततरङ्गिणी

॥ सिद्धो भेदइति ॥ न च श्रुत्यादिषुकाल्पनिकभेद एवोच्यते। स्वतःप्रमाणश्रुत्यादिसिद्धस्य भेदस्य काल्पनिकत्वायोगात्। सत्यत्वे बाधकाभावाच्च। अनुपदमेव निरसिष्यमाणत्वाच्च ॥ जीवत्वावच्छिन्नेति ॥ स्वप्रत्यक्षेण स्वस्मादीशस्य भेदसिद्धावपि परजीवात्तदसिध्या नानुवादः श्रुतिरित्यर्थः ॥ न हिंस्यादित्यादीति ॥ एतच्च सर्वं व्याख्यातं मिथ्यात्वानुमानस्यागमबाधप्रस्तावे ॥ ॥ भेदश्रुतेरनुवादकत्वभङ्गः ॥

### न्यायामृतकण्टकोद्धारः

ननु सन्तु भेदेऽनुमानानि। तथापि न तेषां प्रामाण्यम्। मूलप्रमाणाभावेन प्रामाण्यसन्देहास्कन्दनात्। न च प्रत्यक्षं मूलप्रमाणमुक्तमिति वाच्यम्। तस्य दोषशङ्काकलङ्कितत्वेन प्रामाण्यासंमतेः। न च श्रुतिरेव प्रमाणम्। तदभावादित्यत आह किञ्चेति। ननु द्वासुपर्णेत्यत्र द्विशब्देन द्वित्वसङ्ख्यैवोच्यते, न भेदः। तथाच कथमस्य भेदे प्रमाणत्वेनोदाहरणमिति चेन्न। द्विशब्दस्य कुत्रापि भेदवाचित्वं नाङ्गीक्रियते, अत्रैव वा? नाद्यः। द्वौ गुणौ, द्वे कर्मणी, द्वे जाती इत्यादिषु सङ्ख्यारहिते प्रयोगात्। द्विशब्दस्य भेदवाचित्वानङ्गीकारे द्वौ घटौ भिन्नावित्यत्र भवदीयन्योन्याश्रयोक्तिः, द्वौ चन्द्राविति भेदमिथ्यात्व दृष्टान्तोक्तिः, मायामात्रमिदं द्वैतमिति भेदमिथ्यात्व प्रमाणोक्तिरित्यादिकं न स्यात्। न द्वितीयः। नियामकाभावात्। द्विशब्दवैयर्थ्याच्च। न च सङ्ख्या प्रतीत्यर्थं द्विशब्द इति वाच्यम्। द्विवचनेनैव तत्प्रतीतेः। न च द्विशब्दोपक्रमं वाक्यम्। सामान्यविशेषपरतया न वैयर्थ्यम्। अत एव द्वावपूपावानयेत्यादीनि वाक्यानीति वाच्यम्। सामान्यविशेषभावेन परिहारस्यानन्यगतिकत्वात्। अर्थान्तराभावेन परिहारस्यानन्यगतिकत्वात्। अर्थान्तराभावेऽपि तदाश्रयणात्। न चाभिधानाद्यभावात् द्विशब्दस्य कथं भेद वाचित्वमिति वाच्यम्। अभियुक्तबहुलप्रयोगस्योक्तत्वात्। न च लक्षणया प्रयोगः। मुख्यार्थानुपपत्त्यनुसन्धानपूर्वकत्वाभावात्। न चेयं श्रुतिः पैङ्गिरहस्य ब्रह्मणेन बुद्धिक्षेत्रज्ञपरतया व्याख्यातेति नानया जीवपरमात्मभेदसिद्धिरिति वाच्यम्। तस्य बुध्यत इति व्युत्पत्त्या जीवपरत्वसम्भवात्। सुपर्णावेतावित्यनेनैतत्श्रुतेस्तथा व्याख्यानात्। न च ब्राह्मणमपि व्याख्यानरूपमिति वाच्यम्। तस्य

(कण्टकोद्धारः)

व्याख्यानरूपत्वेऽपि जडस्य कर्मफलभोक्तृत्वासम्भवेनोपपत्ति हीनत्वात् । न च जड एव कर्तृत्वं मुख्यमिति वाच्यम् । तस्य स्वातन्त्र्यरूपत्वेन जडे च तदभावेन चैतन्यसमानाधिकरणतया प्रतीयमानत्वेन जडाप्रतीत्या च तत्र मुख्यत्वायोगात् । तथाचोपपत्ति युक्तया स्मृत्या ब्राह्मणस्यापि जीवपरमात्म परत्वेनैव व्याख्यानं कर्तव्यम् । तत्रोक्त सत्वशब्दस्य सत्वगुणयुक्तत्वेन वा ज्ञानबलसमाहाररूपत्वेन वा जीवे सम्भवात् । अतो द्वासुपर्णेत्यस्य भेदप्रमाणत्वेनोदाहरणं युक्तम् । ननु रामकृष्णावित्यादाविव विशेषबलाद् द्विशब्दोपपत्तेर्नानेन जीवपरमात्मभेदसिद्धिरिति चेन्न । भेदाभावे विशेषस्योपपादत्वाङ्गीकारात् । रामकृष्णयोर्भेदाभावस्य न स्थानतोऽपीत्यत्र सूत्रकारेणोक्तत्वात् । जीवस्य तु सूत्रकारेण वक्ष्यमाणसूत्रैर्भेदस्योक्तत्वात् । य इति । अत्राधाराधेयभावसम्बन्धोक्त्या भेदाभिधानम् । आधाराधेयभावस्योत्सर्गतो भेदनियतत्वात् । नित्य इति । अत्र निर्धारणषष्ठ्या निर्धार्यमाणस्य निर्धारणावधेर्भेद उक्तः । निर्धारणस्य भेदाधीनत्वात् । अन्य इति । अत्रान्यशब्देनैव साक्षाद् भेदाभिधानम् । आदिशब्देन सत्यं भिदेत्यादयः । ननु श्रुतिव्याख्यानरूपस्मृत्या भेदस्यानुक्तत्वात् न श्रुतेस्तत्र तात्पर्यमित्यतः स्मृतिभिरपि भेदसिद्धिरित्याशयेन ता उदाहरति नैतदित्यादिना। ननु व्यावहारिक भेदपराः श्रुतिस्मृतयः किं न स्युरित्यत आह यथेति । अत्र सत्यत्वविशेषणान्न मिथ्यात्वं भेदस्य । अन्यथा ब्रह्मणोऽपि सत्यत्वं व्यावहारिकं स्यात् । आदिशब्देन द्वाविमौ पुरुषावित्यादिस्मृतयो ग्राह्याः । ननु श्रुत्यर्थनिर्णायक सूत्रैर्भेदस्याप्रतिपादनात् न स श्रुत्यर्थ इत्यत आह । भेदेति । जगत्सत्यत्व श्रुतेरिति । न्यायास्तु तत्रैव विवृताः । न्यायैरिति सामान्येनोक्तमेव स्मरणार्थं किञ्चिद्विशदयति जीवत्वेति । यथा घटे सत्यत्वस्य प्रत्यक्षेण प्राप्तावपि विश्वत्वावच्छेदेन न प्राप्तिस्तथा जीवविशेषे तत्प्राप्तावपि न जीवत्वावच्छिन्ने तत्प्राप्तिरित्यर्थः । ईश्वरधर्मिकस्य सर्वथाऽप्राप्तेश्च । न चेशप्रतियोगिक भेदान्यथानुपपत्त्या तत्प्राप्तिरिति वाच्यम् । ईश प्रतियोगिकस्येशधर्मिकस्य वेशसिद्धिं विनाऽसिद्धेः । तत्सिद्धिश्च न प्रत्यक्षेण । नाप्यनुमानेन । नेन्द्रियाणीति श्रुतेः । आगमेन तत्सिद्धौ तेनभिन्नत्वेनैव सिद्धेर्नानुवादकत्वं श्रुतेः । श्रुतिसिद्धत्वेन श्रुतेरनुवादकत्वे तत्सत्यमित्यादेरप्यनुवादकत्वं स्यात् । सत्यं ज्ञानमित्यादिना सिद्धत्वात् । न हिम्स्यादित्यादिवदिति । ननु विषमोऽयं दृष्टान्तः । न हिंस्यादित्यादेर्ब्राह्मणो न हन्तव्य इति पुरोवादपूर्वताभावात् । प्रत्यक्षं तु सर्वेषामस्त्येवेति चेन्न । सर्वेषां प्रत्यक्षसत्वेऽपि भेदश्रुतेस्तत्पूर्वकत्वनियमाभावात् । न हि प्रत्यक्ष प्रवृत्त एवागमप्रवृत्तिः । अतीन्द्रियोच्छेदापत्तेः । न च धर्मिभूत जीवज्ञानार्थं प्रत्यक्ष प्रवृत्तिरावश्यकीति वाच्यम् । तावतापि भेदप्रत्यक्षपूर्वकत्वानुपपादनात् । नहि जीवप्रत्यक्षमेव भेदप्रत्यक्षम् । प्रतियोगिज्ञानविलम्बेन विलम्बोपपत्तेः । प्रमाणान्तरेणापि धर्मिज्ञानसम्भवेन वाक्यप्रवृत्तिसम्भवाच्च । स्वमात्रे भेदग्रहेऽपि जीवत्वावच्छिन्ने तदग्रहाच्च । अन्यूनानतिरिक्त समान विषयत्वेन ह्यनुवादकत्वम् । अन्यथा सर्वत्राप्यनुवादकत्वप्रसङ्गात् । कचित् तत्पूर्वकतातु न हिंस्यादित्यत्रापि तुल्येत्यलम् । शाखान्तरेति । न्यायाः सर्वेऽपि पूर्वमेव विवृताः । न च सर्वेषां सर्वशाखाध्ययननियमाभावात् युक्ता पुरुषविशेषं प्रत्यर्थवत्ता । प्रत्यक्षं तु सर्वसाधारणं प्राथमिकप्रसरं चेति वाच्यम् । प्रत्यक्षस्य सर्वसाधारणत्वेऽपि प्रथमप्रसरेऽपि भेदविषये तदभावादित्युक्तत्वात् । प्रतियोगिज्ञानादिविलम्बस्याप्युक्तत्वात् । द्वयोरिति ।

(कण्टकोद्धारः)

न च भेदप्रमाणेषु त्रिकालाबाध्यत्ववाचकाभावात् नापूर्वसत्वप्रापकत्वमिति वाच्यम् । तर्हि ब्रह्मणोऽपि तन्न स्यात् । न च तत्र सत्यपदमेव तद्वाचकमिति वाच्यम् । सत्यत्वस्यापि त्रिकालाबाध्यत्वे प्रमाणाभावात् । न च तत्रापि सत्यपदान्तरमस्ति । श्रुतिविषयत्वेन तत्वे तुल्यं प्रकृतेऽपि । अस्ति च सत्यं भिदेत्यादौ सत्यपदम् । स्मृतौ च सत्यभेदाविति । ऐक्य इति । न च सप्रयोजनत्वेऽपि नानुवादकत्वं परिहृतमिति वाच्यम् । अनुवादकत्वस्य बाधवत् स्वरूपेणादोषत्वात् । षड्विंशतिरित्येवेति । न च भेदश्रुतेर्हीनबलवत्त्वेन न प्रतिप्रसव इति वाच्यम् । हीनबलत्वमनुवादकत्वेन प्रकारान्तरेण वा? न द्वितीयः । अनभिधानात् । नाद्यः । प्रतिप्रसवेन तस्यैवाभावादित्युक्तत्वात् । न चाभेदश्रुतेर्भेदतात्विकत्वनिषेधपरत्वेन स्वरूपपरेणानेन न प्रतिप्रसव इति वाच्यम् । नेहनानेत्यादौ तात्विकत्वबोधकपदाभावात् । स्वरूपनिषेधस्यैव प्रतीतेः । न हि भेदस्तात्विको नेति श्रुतिरस्ति । मिथ्यात्वबोधकं तु प्रागेव निरस्तम् । किञ्च प्रत्यक्षं प्रमाणमप्रमाणं वा? नाद्यः । अभेदश्रुतेस्तद्बाधप्रसङ्गात् । न द्वितीय इत्याह प्रत्यक्षस्येति । न च ज्ञातज्ञापकत्वेनानुवादकत्वमिति वाच्यम् । यत्किञ्चिज्ज्ञात ज्ञापकत्वस्याद्वैतप्रमाणेऽपि सम्भवात् । पूर्वप्रवृत्तानवच्छिन्नार्थविषयत्वस्य प्रकृतेऽप्यभावात् । प्रमाणयोरन्योन्यानतिरिक्त विषयत्वायोगात् । न च श्रुतेर्न प्रामाण्यमिति वाच्यम् । अपौरुषेयत्वेन तदयोगात् । अन्यथाऽद्वैतश्रुतेरपि तन्न स्यात् । श्रुतेरिति । न च निरपेक्षसापेक्ष साधारण-मनुवादकत्वमात्रमप्रामाण्यकारणमिति वाच्यम् । तथात्वे प्रमाणसंप्लवस्थलमात्रमुच्छिद्येत । अद्वैतश्रुतीनामपि यथाकथञ्चिदनुवादकत्वस्य वक्तुं शक्यत्वेनाप्रामाण्य प्रसङ्गात् । न च धारावाहिक द्वितीयादिज्ञानेषु तत्तत्क्षणविषयत्वेन नानुवादकत्वमिति वाच्यम् । क्षणस्य नीरूपद्रव्यत्वेन चाक्षुषादिज्ञानविषयत्वायोगात् । उपनीतभानाङ्गीकारे चोपनायक प्रमाणनियमाभावेनानुवादकत्वापरिहारात् । उपनीतस्योत्तरक्षणस्य पूर्व-ज्ञानेऽपि भानसम्भवेन तद्दोष तादवस्थ्यात् । विद्वदिति । न च विद्वद्वाक्यस्य स्वार्थबोधकत्वेऽपि न तत्परत्वमिति वाच्यम् । स्वार्थपरत्वे बाधकाभावात् । अन्यथार्थवादाविशेषात् । तत्र पदैकवाक्यतात्र तु वाक्यैकवाक्यतेत्येवं विशेषो न स्यात् । अर्थवाद वाक्यस्यापि स्वार्थबोधकत्वात् । शाब्दभावनेति कर्तव्यतारूप प्ररोचनार्थत्वेन सप्रयोजनत्वाच्च । यत्तन्नेति । न च यत्तदित्यादेरनुवादलिङ्गत्वे न तद्व्यापकत्वं ब्रह्मण इत्यादौ व्यभिचारादिति वाच्यम् । व्यापकत्वस्यानुक्तत्वेनानुक्तोपालम्भात् । लिङ्गाभावेनानुवादत्वस्य ज्ञातुमशक्यत्वाभिधानात् । न च ब्रह्मण इत्यादाविवानुवादत्वं ज्ञातुं शक्यमिति वाच्यम् । तत्रेवात्र प्रत्यक्ष सिद्धत्वाभावात् अत एवाह जीवावच्छिन्न इति । किञ्च निषेधायानुवादो विधानाय वा? नाद्य इत्याह विधेयान्तरेति । नचैतावता कथमनुवादत्वपरिहार इति चेन्न तावत् येन भेदः सिद्धस्तस्यानुवादत्वम् । तेनापूर्वस्य भेदस्य बोधनात् । नापि विधेयान्तरवतः । तस्य विधेयान्तरसंसर्गे तात्पर्येणानुवादकत्वाभावात् । अन्यथा पर्वतो वह्निमानित्यनुमितेः पर्वते सिद्धसाधनत्वं स्यात् । विधानार्थानुवादे चेति । न च यद् रजतं तदानयेत्यादावन्यविधानार्थं भ्रान्तिसिद्धानुवादेऽनुवाद्ये तात्विकत्वं न दृश्यत इति वाच्यम् । यत्रानुवाद्य-तावच्छेदकावच्छिन्ने विधेयसंसर्गे तात्पर्यं तत्रानुवाद्ये तात्विकत्वाभिधानात् । प्रकृते च तथाभावात् । यद् रजतमित्यादौ च न तथा तात्पर्यम् । अन्यथा वाक्यस्याप्रामाण्यापत्तेः । किन्तु रजतारोपाधिष्ठाने । अतो न

(कण्टकोद्धारः)
व्यभिचारः । अनुवादकत्वेऽपीति । न च बाधाभावनिबन्धनं प्रामाण्यं कथमनुवाद्य इति वाच्यं प्रकृते बाधकानां परिहृतत्वात् । परिहरिष्यमाणत्वाच्च । किञ्चेति । न च प्रतियोगिग्रहार्थं शास्त्रापेक्षायामपि स्वसमानविषयप्रमाणानपेक्षणेन भेदप्रापकत्वोपपत्तिरिति वाच्यम् । प्रतियोगिग्रहस्य प्रतियोगितावच्छेदक विषयत्व नियमेन समानविषयत्व सम्भवात् । शास्त्र सापेक्षप्राप्तिमात्रस्य शास्त्रानुवादकत्वानापादकत्वात् । अन्यथा ऐक्यस्यापि शास्त्र सापेक्ष प्रत्यक्ष प्राप्तिसम्भवेन तत्वमसीत्यादेरप्यनुवादकत्वापत्तेः । अत एव समानविषयेति विशेषणं दत्तमिति वाच्यम् । प्रत्यक्षस्य कालादिविषयत्वेन प्रत्यक्षागमयोः समान-विषयत्वसम्भवात् । अत एवानुपपत्त्या ईशधर्मिकभेदस्य प्रत्यक्ष प्रापकत्वमपि परिहृतम् । एवं हि भवतोभिमतं यथा श्रुत्यर्थापत्तिसिद्धस्य श्रौतत्वं तथा जीवधर्मिकप्रत्यक्षभेदसिध्यन्यथानुपपत्तिसिद्धस्येशधर्मिक भेदस्यापि प्रत्यक्षत्वमिति तदयुक्तम् । प्रत्यक्षस्य दोषशङ्का कलङ्कितस्य स्वसमानविषयक शास्त्रं विना भेदप्रापकत्वायोगात् । तदन्यथानुपपत्तेश्च सुतरां तत्वायोगात् । अन्यथा सन्दिग्धप्रामाण्येन जीव ब्रह्मैक्य प्राप्तिसम्भवेन तत्वमसीत्यस्याप्यनुवादकत्वापत्तेरित्यलम् । भेदश्रुतेरनुवादकत्वभङ्गः ।

न्यायामृतप्रकाशः

उक्तन्यायैर्जीवत्वावच्छिन्नेति ॥ यथा पृथिवी इतरभिन्ना न हिंस्यादित्यत्र एकदेशघटादौ विधेयभूतेतर-भेदादिसिद्धावपि पृथिवीत्वाद्यवच्छेदेनासिद्धिवद्विश्वत्वावच्छेदेन तदसिद्ध्यानानुवादकत्वादित्युक्तन्यायेन प्रत्यक्षेण देवदत्तयज्ञदत्तभेदसिद्धावपि जीवत्वावच्छेदेनासिद्ध्यानानुवादकत्वमित्यर्थः । शाखान्तरेत्यादिकं विश्वमिथ्यात्व-स्यागमबाधप्रस्तावे सम्यग्व्याख्यातं तद्रीत्यैव द्रष्टव्यम् । ननु शास्त्रप्राप्तमेव शास्त्रेणानूद्यत इति तु न शङ्कनीयं तथात्वे श्रुतेरुन्मत्तवाक्यत्वप्रसङ्गादित्याशयेनाह ॥ न चेति ॥ न हीत्यर्थः । ननु जीवेश्वरभेदस्य प्राप्त्यानुवादकत्वं भेदश्रुतेर्नोच्यते येनोक्तदोषः किं नाम भेदमात्रं तावत्प्राप्तं घटपटयोर्भेदस्य प्रत्यक्षसिद्धत्वात् तथा च भेदश्रुति-रनुवाद इत्यत आह ॥ भेदमात्रस्येति ॥ ॥ भेदश्रुतेरनुवादकत्वभङ्गविवरणम् ॥

## २३. भेदश्रुतेर्व्यावहारिकभेदपरत्वभङ्गः

न चाननुवादकत्वेऽपि बाध्यव्यावहारिकभेदपरा श्रुतिः, अप्रामाण्यापातात् । न चाभेदश्रुतिविरोधात्तदिष्टम्, तस्या लक्षणया अखण्डचिन्मात्रपरत्वेन भेदाविरोधि-त्वाद्, वैपरीत्यस्यापि सुवचत्वाच्च । यदि तु भेदश्रुतिः प्रत्यक्षप्राप्तार्थत्वाद् दुर्बला, तर्ह्यैक्यश्रुतिरपि तद्विरुद्धत्वात्तथा स्यात्, मानान्तरप्राप्तिवत् तद्विरोधस्यापि दौर्बल्य-हेतुत्वात् । यदि चैक्यश्रुतिः प्रत्यक्षाविरुद्धैक्यपरा, तर्हि भेदश्रुतिरपि तदसिद्ध-त्रिकालाबाध्यभेदपराऽस्तु । न च षड्विधतात्पर्यलिंगवत्त्वादैक्यश्रुतिः प्रबला,

लिंगानां तात्पर्यमात्रज्ञापकत्वेनार्थतथात्वाज्ञापकत्वात् । स्वीकृतं च भेदश्रुतेरनुवादकत्वं त्यजता त्वयापि भेदपरत्वम् । अस्ति चात्रापि अत्ति, अनश्नन्, पूर्णः परो जीवसंघो ह्यपूर्ण इत्याद्युपपत्तिरूपं, सत्यं भिदा सत्यं भिदेत्यादावभ्यासरूपं च तात्पर्यलिंगम् । तद्बहुत्वं च त्वत्पक्षे प्रमाणसंप्लववद् व्यर्थमित्युक्तम् । वक्ष्यते च भेदश्रुतेरपि षड्विधलिंगवत्ता । निषेधवाक्यत्वाद् ऐक्यश्रुतिः प्रबलेति तु निरस्तम् । किं च भेद एवैक्यनिषेधरूपः ।

किं च भेदश्रुतिरेव प्रबला, अनुपसंजातविरोधित्वात्, प्रत्यक्षादिसंवादात्, निरवकाशत्वाच्च । उक्तं हि–

स्वातंत्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।
सादृश्ये चैक्यवाक्सम्यक्सावकाशा यथेष्टत ॥ इति ।

किं चायं भेदो न व्यावहारिकः, मुक्तावपि भेदस्य स्मृतेः श्रुतेश्च । न च सा मुक्तिरवान्तरा,

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥

इत्यादि स्मृतौ सर्गाद्यभावोक्तेः ।

न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ।

श्यामावदाताः शतपत्रलोचनाः किंशगव स्राभरणाः सुपेशसः । इति स्मृतौ मायानिषेधाच्च ।

यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता ॥

इत्यत्र शुद्धब्रह्मज्ञानफलत्वोक्तेश्च । त्वयापि शुद्धब्रह्मविषयत्वेन स्वीकृताया भूमविद्यायाः फलोक्त्यवसरे "तस्य सर्वेषु लोकेषु कामचारो भवति, स एकधा

**भवति त्रिधा भवति पंचधा भवति सप्तधे''ति भेदोक्तेश्च । ''परं ज्योतिरुपसंपद्य स्वेन रुपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाण'' इत्यादौ स्वरूपाभिव्यक्त्युक्तेश्च । ''तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्य-मुपैती''त्यत्र कर्मक्षयोक्तेश्च ।**

**''जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ।**
**पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति''**

**इत्यादौ भेदज्ञानान्मोक्षोक्तेश्च । त्वन्मतेऽपि भेदभोगादिपरेषु फलाध्यायान्त्यपाद-स्थेषु ''जगद्व्यापारवर्जं, संकल्पादेव च तत् श्रुतेः, भोगमात्रसाम्यलिंगाच्चे'' त्यादिसूत्रेषु प्रकान्तशुद्धब्रह्मविद्याफलस्यैव वक्तव्यत्वाच्च । भेदश्रुतेर्व्यावहारिकभेद-परत्वभङ्गः ॥**

## अद्वैतसिद्धिः

अथवानुवादकत्वाभावेऽपि व्यावहारिकभेदपरत्वेनैव श्रुत्युपपत्तिः । न चाप्रामाण्यापातः, अर्थवादवाक्यवदुपपत्तेः, प्रतीयमानार्थे चाभेदश्रुतिविरोधेनाप्रामाण्यस्येष्टत्वाच्च । न चाभेद-श्रुतेरखण्डचिन्मात्रपरत्वेन भेदाविरोधित्वम्, तद्द्वारीभूतार्थमादाय तद्विरोधात् । नापि वैपरीत्यम्, प्राप्ताप्राप्तार्थत्वाभ्यां विशेषात् । न च– ऐक्यश्रुतेरपि प्रत्यक्षविरुद्धत्वादप्रामाण्यम्, मानान्तरप्राप्तिवत् तद्विरोधस्यापि दौर्बल्यहेतुत्वादिति वाच्यम्, विरोधे विरोधिनो मानत्ववद् अनुवादकत्वोपपादकस्य मानताया अनपेक्षितत्वात् । किंच षड्विधतात्पर्यलिङ्गवत्त्वाद् ऐक्य-श्रुतेः प्राबल्यम् । न च– तात्पर्यमात्रज्ञापकत्वेन तेषामर्थतथात्वाज्ञापकत्वमिति वाच्यम्, श्रुते-स्तत्परत्वज्ञापनेन परम्परयोपयोगात्, एतद्विरुद्धश्रुतेः श्रूयमाणेऽर्थे तात्पर्याभावसंपादनेनाधिक-बलसंपादकत्वाच्च । न च अत्रापि स्वाद्वत्ति अनश्नन् पूर्णः परः जीवसंघो ह्यपूर्ण इत्याद्युपपत्तिरूपं 'सत्यं भिदा सत्यं भिदा सत्यं भिदेत्यभ्यासादिरूपं तात्पर्यलिङ्गमस्तीति भेदश्रुतिरपि तत्परेति वाच्यम्, अत्तीति अपूर्ण इति च जीवानुवादेन तस्य पूर्णब्रह्मरूपता-विधानार्थत्वेन भेदोपपत्तित्वाभावात् । सत्यं भिदेति न भेदाभ्यासः, एतद्वाक्यस्याप्रामाणिक-त्वात्, प्रामाणिकत्वे वा बाधायां सामानाधिकरण्येनाभेदे पर्यवसानात् ।

(अद्वैतसिद्धिः)

ननु– भेदश्रुतिरेव प्रबला, 'असञ्जातविरोधित्वात् प्रत्यक्षादिसंवादान्निरवकाशत्वाच्चेति चेन्न, अभेदश्रुतिरूपविरोधिनो जातत्वात्, प्रत्यक्षादेरप्रमाणत्वेन तत्संवादस्य प्राबल्याप्रयोजकत्वात्, शतमप्यन्धानामिति न्यायाद्, व्यावहारिकभेदविषयत्वेन सावकाशत्वाच्च । ननु– नायं भेदो व्यावहारिकः, मुक्तावपि भेदस्य श्रुतिस्मृतिभ्यां सिद्धेरिति चेन्न, तस्या मुक्तेरवान्तरत्वात् । ननु

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥

इत्यादिस्मृतौ सर्गाद्यभावोक्तेः ।

न यत्र माया किमुतापरे हरे-
रनुव्रता यत्र सुरासुरार्चिताः ।
श्यामावदाताः शतपत्रलोचनाः ।
पिशङ्गवस्त्राः सुरुचः सुपेशसः ॥

इति स्मृतौ मायानिषेधाच्च । 'यो वेद निहितं गुहायां सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'त्यत्र शुद्धब्रह्मज्ञानफलतत्वोक्तेश्च । त्वयापि शुद्धब्रह्मविषयत्वेन स्वीकृतायाः भूमविद्यायाः फलोक्त्यवसरे 'तस्य सर्वेषु लोकेषु कामचारो भवति पञ्चधा सप्तधे'त्यादिभेदोक्तेः 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' 'स तत्र पर्येति जक्षन् क्रीडन् रममाण' इत्यादौ स्वरूपाभिव्यक्त्युक्तेश्च तथा 'विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीत्यत्र कर्मक्षयोक्तेश्च । 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती'त्यादौ भेदज्ञानान्मोक्षोक्तेश्च । त्वन्मतेऽपि भेदभोगादिफलेषु फलाध्यायान्त्यपादस्थेषु 'जगद्व्यापारवर्जम्' 'सङ्कल्पादेव तु तत् श्रुतेः' 'भोगमात्रसाम्यलिङ्गाच्चे'ति सूत्रेषु प्रक्रान्तशुद्धब्रह्मविद्याफलस्यैव वक्तव्यत्वाच्च परममुक्तित्वमेवेति चेन्न, सगुणोपासनया ब्रह्मलोकं गतस्यापि 'न स पुनरावर्तत' इत्यादिश्रुत्या दैनन्दिनसर्गाद्यसंबन्धस्य प्रतिपादनेनावान्तरमुक्तावप्युपपत्तेः । 'न तत्र माये'त्यादिस्मृतौ च मायाशब्दस्य मात्सर्यादिपरत्वेन मूलमायाविरहाप्रतीतेः, अन्यथा श्यामावदातत्वादिति विरोधापत्तेः, 'यो वेद निहित' मित्यत्र शुद्धब्रह्मज्ञानफलभूता या सर्वकामावाप्तिः, सा न वैषयिकभोगरूपा, किंतु सर्व-

(अद्वैतसिद्धिः)

वैषयिकसुखानाम् एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'तिश्रुत्या ब्रह्मानन्दे अन्तर्भावोक्तेस्तदभिप्रायेति न तद्बलान्नानाकामावाप्तेः शुद्धज्ञानफलत्वम्, भूमविद्याफलोक्त्यवसरे सर्वलोककामचारानेकधाभावादेः फलस्य भूमविद्यावाक्योपक्रमे प्राणविद्याफलत्वेनोक्तस्य ज्योतिष्टोमप्रकरणे श्रूयमाणाहीनद्वादशोपसत्तावत् निर्गुणविद्यास्तावकत्वेनाप्युपपत्तेः, स्वयंज्योतिरित्यादौ जक्षणप्रभृतीनां भेदगर्भत्वेन जक्षन्निव क्रीडन्निवेत्यादिबाधितत्वविवक्षया परममुक्तेस्तत्रोक्त्या त्वदभिमतभेदगर्भक्रीडादीनां परममुक्तित्वाभावात्, पुण्यपापे विधूयेत्यत्र परमसाम्यस्यैक्यरूपतया कर्मक्षयस्य ऐक्यरूपमुक्तिफलतया भेदगर्भमुक्तिफलत्वाभावात्, जुष्टमित्यत्रान्यपदस्य देहेन्द्रियादिविलक्षणात्मपरत्वेन जीवेशपरत्वाभावात् । तथा च भेदज्ञानस्य मोक्षहेतुत्वम् अतोऽवगम्यते मन्मते भेदभोगादिपरेषु 'सङ्कल्पादेव तच्छ्रुतेरित्यारभ्याध्यायपरिसमाप्तिपर्यन्ताधिकरणेषु सगुणविद्याफलस्य उक्ततया शुद्धब्रह्मविद्याफलाप्रतिपादकत्वात् । तस्मात् परममुक्तौ भेदस्याप्रसक्तेः व्यावहारिकत्वोपपत्त्या भेदश्रुतेर्व्यावहारिकपरत्वं स्थितम् । इत्यद्वैतसिद्धौ भेदश्रुतेर्व्यावहारिकभेदपरत्वोपपत्तिः ।

## न्यायामृततरङ्गिणी

**॥ सर्गाद्यभावोक्तेरिति ॥ न चात्र दैनन्दिनसर्गाद्यसम्बन्ध प्रतिपादनेनावान्तामुक्तावप्युपपत्तिः । सामान्यतः सर्गप्रलयमात्रनिषेधश्रवणात् ॥ मायानिषेधाच्चेति ॥ न च मायाशब्दो मात्सर्यादिपरः न मूलमायापरः । मुख्यार्थहानेः । किमुतापर इति कैमुत्येन सत्त्वादिराहित्योक्तेश्च ॥ शुद्धब्रह्मज्ञानफलत्वोक्तेश्चेति ॥ न चात्र सर्ववैषयिकसुखानां ब्रह्मानन्देऽन्तर्भावकथनपरत्वान्नैतद्बलेन नानाकामावाप्तिः शुद्धज्ञानफलम् । तस्यापदार्थत्वादवाक्यार्थत्वाच्च ॥ त्वयापीति ॥ न च भूमविद्यावाक्योपक्रमोक्तप्राणविद्याफलमिदं न तु भूमविद्याया इति वाच्यम् । भूमविद्याफलोक्त्यवसरे उक्तत्वात् । न चेदं भूमविद्यास्तुतिमात्रं न तु फलोक्तिरिति वाच्यम् ।**

**न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां ।<br>सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः**

**इति स एकधा भवतीत्याद्युक्त्वा सर्वग्रन्थीनां विप्रमोक्ष इत्यादिनोक्तानां मृत्युराहित्यादीनामप्यफलत्वापत्तेः ॥ परं ज्योतिरिति ॥ न चात्र जक्षणप्रभृतीनामिव गर्भत्वेन त्वदभिमतभेदगर्भक्रीडादीनां परममुक्तिफलत्वाभाव इति वाच्यम् । इव शब्दाश्रवणात् । स उत्तमपुरुष**

(तरङ्गिणी)

इत्युक्तमत्वस्यापि तत्रोक्तस्यासिध्यापाताच्च ।। तदा विद्वानिति ।। साम्यपदोदितभेदस्य कर्मक्षय-रूपपरममुक्तिसमानकालीनत्वमुच्यते । न च परमसाम्यमैक्यमेव । अशब्दार्थत्वात् ।। जुष्ट-मिति ।। न च देहान्यत्वमेवान्यशब्दार्थः । सङ्कोचे मानाभावात् । अन्यशब्दस्यान्यत्रैव प्रसिद्धेश्च । तथा च भेदज्ञानस्य शोकापायरूपमोक्षहेतुत्वमवगम्यते ।। ।। भेदश्रुतेर्व्यावहारिक-भेदपरत्वभङ्गः ।।

## न्यायामृतकण्टकोद्धारः

ननूक्त श्रुतीनामननुवादकत्वेऽपि नाभीष्टसिद्धिः । श्रुतिप्रतिपाद्यस्य भेदस्य तात्विकत्वे प्रमाणाभावात्, तात्विकत्वे चैक्यश्रुतिविरोधस्य सद्भावादित्याशङ्क्य निषेधति न चेति । अत्र व्यावहारिकशब्देन व्यवहारनिर्वाहकत्वं विवक्षितं, ब्रह्मज्ञानबाध्यत्वं वा? नाद्यः इष्टापत्तेः । न द्वितीय इत्याह अप्रामाण्येति । न च यथा अर्थवादानां प्रतीतार्थे प्रामाण्याभावेऽपि विध्यर्थे तात्पर्यान्नाप्रामाण्यं, तथा भेदश्रुतीनामपि भेदेऽप्रामाण्येऽपि अद्वैते तात्पर्यात् प्रामाण्यमिति वाच्यम् । अर्थवादानां स्वार्थेऽपि तात्पर्यप्रामाण्य-योरावश्यकत्वात् । अन्यथा ततो देवतादिसिद्धिर्न स्यात् । बाधकाभावेन प्रतीतार्थत्यागायोगात् । अन्यथाऽ-द्वैतमर्थो न स्यात् । नन्वैक्य श्रुतिरेव बाधिकेत्यत आह न चेति । तस्या इति । न च लाक्षणिकार्थ-विरोधाभावेऽपि द्वारीभूतार्थविरोधादप्रामाण्यं भेदश्रुतेरिति वाच्यम् । ऐक्यश्रुतेर्द्वारीभूतेऽर्थे तात्पर्याभावेन द्वैतश्रुतिविरुद्धत्वेनाप्रामाणिकत्वेन तद्विरोधेन भेदश्रुतेरप्रामाण्यायोगात् । तत्रापि तात्पर्येऽखण्डार्थत्व-विरोधात् । ननु कथं वैपरीत्यम्? भेदश्रुतेः प्राप्तार्थत्वेन दुर्बलत्वात् इत्यत आह यदित्विति । तद्विरोध-स्यापीति । न च विरोधे विरोधिनो मानत्ववदनुवादेऽनु वादकस्य मानत्वं नापेक्षितमिति वाच्यम् । प्रमाण-स्यानुवादकत्वेऽनु वादकस्य मानत्वस्यावश्यकत्वात् । प्रमाणाप्रमाणयोरेकविषयकत्वायोगादित्युक्तत्वात् । लिङ्गानामिति । ननु श्रुतितात्पर्यविषयत्वेनार्थतथात्वं, लिङ्गानि च तात्पर्यज्ञापकानीति परम्परया लिङ्गानामपि अर्थतथात्वज्ञापकत्वमिति चेन्न । कर्मकाण्डेऽपि उपक्रमादेरर्थतथात्वज्ञापकतापत्तेः । न च तत्र तात्पर्य-ज्ञापकलिङ्गानि न सन्तीति वाच्यम् । तथात्वे पूर्वमीमांसानुपपत्तेः । अन्यथात्राप्यर्थतथात्वज्ञापकतानुपपत्तेः । किञ्च श्रुतितात्पर्यविषयत्वेनार्थतथात्वे भेदस्यापि तथात्वं स्यादित्याह स्वीकृतं चेति । अनुवादकत्वं त्यजता । ऐक्यश्रुतेः प्रत्यक्षविरोध परिहारायेति शेषः । ननु नानुवदकत्वाभावस्तात्पर्यज्ञापकः किन्तूपक्रमादय एवेत्यत आह अस्ति चेति । ननु पूर्णब्रह्मरूपताविधानार्थमत्तीत्यादि जीवानुवादः क्रियते । अतो नास्य लिङ्गपरत्वमिति चेन्न । सामानाधिकरण्यव्यपदेशाभावेन पूर्णब्रह्मरूपताकथनपरत्वस्यायुक्तत्वात् । विरुद्ध-धर्मकथनेन लिङ्गपरत्वस्यैवोचितत्वाच्च । अन्यथा एकेन मृत्पिण्डेनेत्यादिकमपि मृत्पिण्डादेः सर्वस्य ब्रह्मरूपता विधानार्थमनुवादः स्यात् । ननु प्रकृते न लिङ्गबाहुल्यमित्यत आह तद्बहुत्वं चेति । ननु प्रमाणसंप्लवस्यानुवादकत्वापादकत्वेन वैयर्थ्यं, तात्पर्यलिङ्गानामनेकत्वेऽपि श्रुतेरनुवादकत्वाभावान्न वैयर्थ्य-मित्यत आह वक्ष्यते चेति । निरस्तमिति । न हिंस्यादित्यादेरग्नीषोमीयं पशुमालभेतेत्यादितः प्राबल्या-

(कण्टकोद्धारः)

पत्तेरित्यादिनेति भावः । किञ्चेति । नन्वनुपसंजात विरोधित्वेन प्राबल्ये इदं रजतमिति ज्ञानस्य नेदं रजतमिति ज्ञानात् प्राबल्यं स्यात्, तस्यानुपसंजातविरोधित्वात् इति चेन्न । परीक्षितत्वविशिष्टस्य तत्त्वात् । भेदश्रुतिश्चापौरुषेयत्वात् परीक्षितैवेति । प्रत्यक्षादीति । न च संवादोऽनुपयुक्त इति वाच्यम् । तस्य दार्ढ्य हेतुत्वात् अन्यथा लोकेऽपि तस्यानपेक्षा स्यात् । ननु भेद श्रुतिवदभेद श्रुतिरपि निरवकाशा, अतः कथं निरवकाशत्वेन प्राबल्यम्? अत आह उक्तं हीति । स्वातन्त्र्यादिकमादायैक्य प्रयोगाणां बहुलमुपलम्भादिति भावः । नन्वेवं भेदश्रुतिरपि व्यावहारिक भेदविषयत्वेन सावकाशा । तथाच कथं तस्या निरवकाशत्वेन प्राबल्यमुच्यत इत्यत आह किञ्चेति । सर्गादीति । न च सगुणोपासनया ब्रह्मलोकं गतस्य दैनन्दिन सर्गाद्य-भाव उच्यत इति नानेन परममुक्तत्वाध्यवसाय इति वाच्यम् । इदं ज्ञानमिति ज्ञानफलत्वेनोक्तस्य सर्गाद्यभावस्य दैनन्दिनत्वायोगात् । न च तत् सगुणज्ञानम् अतस्तत्फलस्य दैनन्दिनसम्बन्धो युक्त एवेति वाच्यम् । एतदतिरिक्तस्य निर्गुणज्ञानस्याभावात् । नचाखण्डार्थ वाक्यजन्यज्ञानं, निःप्रकारक ज्ञानं वा निर्गुणज्ञानमिति वाच्यम् । वाक्यस्याखण्डार्थताया निरासात् । शब्दस्य निःप्रकारक ज्ञानजनकत्वस्यात्य-प्रमाणकत्वात् । न यत्रेति । न च मायाशब्दो मात्सर्यवाचीति वाच्यम् । मात्सर्यार्थ ग्रहणे मानाभावात् । न यत्र सत्वमिति सत्वादि निषेधेन तत्साहचर्येण मायाशब्दस्यापि तत्तुल्यार्थकत्वस्यैव न्याय्यत्वात् । अवान्तरमुक्तावपि मात्सर्याभावासम्भवाच्च । न च श्यामावततात्वाद्यनुपपत्त्या न मायानिषेध इति वाच्यम् । तस्य चिन्मात्रत्वादित्वेन मायानपेक्षणात् । यथा चैतत् तथा फलपरिच्छेदे वक्ष्यते । योवेदेति । न चेयं श्रुतिर्ब्रह्मज्ञानफले सुखे सर्वसुखानामन्तर्भावपरेति वाच्यम् । अपदार्थत्वात् अवाक्यार्थत्वाच्च ज्ञानफले सुखे सर्वसुखान्तर्भावस्या प्रामाणिकत्वाच्च । न चैतस्यैवानन्दस्येति श्रुतिः प्रमाणमिति वाच्यम् । तस्या ब्रह्मादि जीवानन्दानां ब्रह्मानन्दाधीनत्व परत्वेनोक्तार्थ परत्वाभावात् । सह शब्द प्रयोगेण स्पष्टप्रतीत जीवब्रह्म भेदपरत्वत्यागे कारणाभावाच्च । भूमेति । ननु सर्वलोककामचारत्वादिकं भूमविद्यायाः प्रथमायाः प्राण-विद्यायाः फलमेव । भूमविद्यायां तु तत्कथनं भूमविद्यास्तावकत्वेन, यथा ज्योतिष्टोमप्रकरणे द्वादशोप-सत्ताकथनमिति चेन्न । तत्रोपसदस्त्रित्ववदत्र भूमविद्यायाः फलान्तरस्यानिर्णयेनोक्त फलत्वस्यैव न्याय्यत्वात् । न हि भूमविद्यानन्तरमेव एवं विदित्यादिनोक्तस्य न फलत्वमपि तु अन्यत् फलमिति युक्तिमत् । प्राण-विद्याया अपि अत एव प्राण इत्युक्तन्यायेन ब्रह्म विद्यात्व सम्भवेनाब्रह्मविद्यात्वासम्भवात् । तत्फलत्वे च तद्विद्योक्तित्यागे कारणाभावाच्च । परं ज्योरिति । सर्वत्र परममुक्तित्वं ज्ञायत इति शेषः । स्वरूपाभि-व्यक्तेरन्यत्राभावादिति भावः । यद्यप्यवान्तरमुक्तावपि स्वरूपाभिव्यक्तिरस्ति । तथापि सम्पूर्णाभिव्यक्तेरेव मुख्यत्वेन मुख्यग्रहणस्य न्याय्यत्वात् । न च जक्षणादीनामिव गर्भतेति वाच्यम् । बाधकान्तराभावात् । अन्यथा त्वदभिप्रेत महावाक्येऽपि तदापत्तेः । तदेति । नन्वत्र परममुक्ति फलकर्मक्षयोक्तावपि नात्र भेदोक्तिः । परमसाम्यशब्देनैक्यस्यैवोक्तत्वादिति चेन्न । परमसाम्यशब्दस्य वैलक्षण्यविशिष्ट बहुसादृश्य एव प्रयोगेण सर्वथैक्ये कदाप्यप्रयोगेण तेनैक्याप्राप्तेर्भेदगर्भसादृश्यस्यैव प्राप्तेश्च । त्वया सगुणज्ञानस्य परममुक्ति-साधनत्वानङ्गीकारेण यदेति पूर्वार्धे कर्तृत्वादि विशिष्ट सगुणस्यैवोक्त्या तत्फलस्य परमसाम्यस्य

भेदगर्भसाम्यस्यैव वक्तव्यत्वाच्च । अन्यथा स एव भवतीत्युक्तिमपहाय गुरूक्तिर्न स्यात् । जुष्टमिति । अत्रायं प्रयोगः जीवब्रह्मभेदो न व्यावहारिकः, मोक्षसाधनज्ञानविषयत्वात् ब्रह्मवदिति । हेतुसिद्धिश्चोक्तश्रुतेरिति भावः । नन्वत्रान्यपृथक् शब्दाभ्यां न जीवप्रतियोगिको भेदोऽभिधीयते किन्तु जडप्रतियोगिक इति वाच्यम् । तथापि भेदसत्यत्वापरिहारात् । पश्यतीति कर्तृत्वेनोपस्थितस्य जीवस्यैवान्यमित्यत्र प्रतियोगित्वे पदि न्यायेन सम्भवति अनुपस्थितजडप्रतियोगित्वाकल्पनाच्च । एवं पृथगित्यत्रापि मत्वेति मननकर्तृत्वेनोपस्थितस्य जीवस्यैव प्रतियोगित्वं द्रष्टव्यम् । त्वन्मतेऽपीति । न चेदं सगुणब्रह्मविद्याफलमेवेति वाच्यम् । प्रकृतपरित्यागाप्रकृतकल्पना प्रसङ्गात् । अत एवाह प्रक्रान्तेति । भेदश्रुतेर्व्यावहारिक भेद परत्वभङ्गः ।

न्यायामृतप्रकाशः

प्रत्यक्षाविरुद्धेति ।। चिन्मात्रैक्यपरेत्यर्थः । विरुद्धधर्मावुदाहरति ।। अत्ति अनश्नन्निति ।। ।। भेदश्रुतेर्व्यावहारिकभेदपरत्वभङ्गविवरणम् ।।

## २४. जीवेशभेदे शब्दान्तरादिभङ्गः

**किं च पूर्वतन्त्रे द्वितीयाध्याये यैः शब्दान्तरादिभिः कर्मभेद उक्तः, तैरेव जीवेश्वरभेदसिद्धिः । "एष एव जीवं प्रबोधयति एतस्माज्जीव उत्तिष्ठती"ति विरुद्धार्थधातुनिष्पन्नाख्यातरूपशब्दान्तरस्य, "नित्यः परो नित्यो जीव" इति प्रत्यभिज्ञायमानपुनःश्रुतिरूपाभ्यासस्य, "द्वा सुपर्णे"त्यादि सङ्ख्याया, "अशब्दमननश्नन्नि"त्यादेर्भेदकस्य गुणान्तरस्य, "यतो वाचो निवर्तन्त" इत्यादिप्रकरणान्तरस्य, जीवेशाविति नामधेयभेदस्य च सत्त्वात् । जीवेशभेदेशब्दान्तरादि ।।**

अद्वैतसिद्धिः

ननु– पूर्वतन्त्रे द्वितीयाध्याये यैरेव शब्दान्तरादिभिः कर्मभेद उक्तः, तैरेव जीवेशभेदोऽपि सिध्यति । तथा हि– एष एव जीवं प्रबोधयति 'एतस्माज्जीव उत्तिष्ठती'ति विरुद्धार्थधातुनिष्पन्नाख्यातरूपशब्दान्तरस्य 'नित्यः परो नित्यः जीव' इति प्रत्यभिज्ञायमानपुनः श्रुतिरूपाभ्यासस्य 'द्वा सुपर्णे'त्यादिसङ्ख्याया अशब्दमनश्नन्नित्यादेर्भेदकस्य गुणान्तरस्य 'यतो वाचो निवर्त्तन्त' इत्यादिप्रकरणान्तरस्य जीवेशाविति नामधेयद्वयस्यापि सत्त्वाच्चेति चेन्न, प्रत्यक्षादिसमकक्ष्यतया शब्दान्तरादीनां भेदकत्वेऽपि तात्त्विकाभेदाविरोधित्वात् । किंचादृष्ट-

(अद्वैतसिद्धिः)
चरस्त्वं मीमांसकः यः कर्मभेदे शास्त्रभेदे वा प्रमाणत्वेन क्लृप्तानां शब्दान्तरादीनां चेतनभेदे प्रमाणत्वं कल्पयसि । न ह्यन्यभेदप्रयोजकस्यान्यभेदप्रयोजकता । विशिष्टभेदे प्रयोजकस्यापि विशेषणभेदस्य विशेष्यभेदकत्वापत्तेः । 'देवदत्त उत्तिष्ठति शिष्यं बोधयति यजति ददाति जुहोती'त्यादावपि भेदापत्तेः । न शब्दान्तरस्य कर्तृभेदकता ॥ इत्यद्वैतसिद्धौ शब्दान्तरादेरात्मभेदकत्वाभावः ॥

## न्यायामृततरङ्गिणी

॥ शब्दान्तरादिभिरिति ॥ शब्दान्तराभ्याससङ्ख्यागुणप्रकरणान्तरसंज्ञाभिः ॥ एष एवेति ॥ प्रबोधयत्युत्तिष्ठति पदाभ्यां प्रबोधयिता उत्थाता च भिन्नः प्रतीयते ॥ विरुद्धार्थेति ॥ विरुद्धार्था ये धातवः तेभ्यो निष्पन्नं यदाख्यातं तद्विशिष्टं यच्छब्दान्तरं यजति ददातीत्यादि तेभ्यो यथा यागदाने भिन्ने तथेत्यर्थः ॥ द्वितीयस्य द्वितीयपादे चिन्तितम् । यजति ददाति जुहोतीति श्रूयते तत्र यागदानहोमानां भावनाः किमभिन्ना विधीयन्ते उत भिन्ना वा । यद्यपि धातुभेदादाख्यातपदानि मिथः शब्दान्तरं तथापि प्रत्ययांशः सर्वत्रैकरूपः । तदर्थभावना तदभेदादभिन्ना । यदि हि धात्वर्थान्प्रति गुणभूता भावना स्यात्ततस्तेषां धातुभेदेन भिन्नत्वाद्भावनापि तान्प्रत्युपादीयमाना प्रति धात्वर्थं भिद्येत । भावनाप्रधानत्वादाख्यातस्य । तां प्रत्युपादीयमाना धात्वर्थाः संहत्यैव तां विशिंषन्ति । यथा अरुणया क्रीणातीत्यादावरुणिमादयः क्रयम् । तदुक्तम् ।

भावना प्रत्ययार्थत्वात्तदेकत्वान्न भिद्यते ।
गुणभूता हि धात्वर्था न तां भिद्युः कथञ्चनेति ।

तस्माद्यागदानादिधात्वर्थैरेकैव भावनाऽवच्छिद्यत इति न यागदानादिभावनाभेद इति प्राप्ते सिद्धान्तः । यदिधातुसमुदायात्प्रत्ययः श्रूयते द्वन्द्वादिव सुप्, यदि वा क्रीणातिरिव गुणादिभ्यो विविक्तः श्रूयते तदा सर्वैर्धात्वर्थैर्भावना विशिष्येत प्रातिपदिकार्थैरिव सुबर्थः । क्रय इवारुणादिभिः प्रत्येकं तु धातुभ्यः प्रत्ययः श्रूयत इति नैकभावनासम्भवः । तदुक्तम् ।

प्रत्ययांशः समानोपि प्रतिधातुप्रयोगतः ।
तत्तदर्थानुसारेण भावनाभेदमावहेत् ।
निष्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि ।

(तरङ्गिणी)

ततः सर्वविशिष्टा स्यात् द्वन्द्वोत्पन्नसुबर्थवत् ।
यदि च प्रत्ययः शुद्धः सर्वधातुपृथक्कृतः ।
श्रूयेत क्रयवत्सर्वैर्विशेष्येत स धातुभिरिति ॥

नित्यः परो नित्यो जीव इति ॥ नित्यशब्दाभ्यासः परजीवौ भिनत्ति । एकेन नित्यशब्देन परेशे नित्यत्वे बोधिते पुनस्तत्रैव नित्यत्वस्यैव बोधितस्य बोधनायोगात् । गुणान्तरं विधातुं प्रत्यभिज्ञारूपपुनःश्रुतेरभेदकत्वादप्रत्यभिज्ञायमानेत्युक्तम् ।

अधिकरणं तु । समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजतीति पञ्चकृत्वः श्रुतयजतिनैको याग उच्यते पञ्च वा । तत्राख्यातभेदाभावाद्धातुभेदाभावाच्चैक एव यागः । तदुक्तम् । प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वं प्रतिष्ठितम् । तदेकत्वात्तदर्थोपि न भेदं प्रतिपद्यत इति पूर्वः पक्षः । सिद्धान्तस्तु । यद्येकमेव कर्म स्यात्तर्हि तस्य पूर्ववाक्येन विहितत्वात्पुनर्विधानमनुपपन्नम् । अतः पुनर्विधिवशात्कर्मभेदः ॥ द्वा सुपर्णेत्यादीति ॥ अत्र हि जीवेशगतया सङ्ख्ययैव तयोर्भेदः साधनीयः । विचारितं चैतत् ।

सप्तदश प्राजापत्यान् पशूनालभते अत्र किं सप्तदशपशुद्रव्यक एको यागः किं वा एकैकपशुद्रव्यकाः सप्तदश यागा इति । तदर्थं विचार्यते । प्राजापत्यानिति प्रकृत्या प्रजापतिदेवताभिधीयते तद्धितेन पशुर्द्रव्यं बहुवचनेन बहुत्वम् । तत्र तद्धितार्थः पशुर्बहुत्वेन प्रथममन्वितः पश्चात्प्रजापतिना देवतया सम्बध्यते पशुश्च पशुश्च पशुश्च तेषां प्रजापतिर्देवतेति तदा बहुभिः पशुभिर्व्यासज्यैका देवता सम्बध्यत इति द्रव्यदेवतासम्बन्धैक्यादेको यागो भवति किं वा प्रथमं प्रजापतिनान्वितः पश्चाद्बहुत्वेन सम्बध्यते प्रजापतिर्देवताऽस्येति प्राजापत्यश्च प्राजापत्यश्च प्राजापत्यश्च प्राजापत्या बहव इति तदा भिन्नै र्द्रव्यदेवतासम्बन्धैर्भिन्ना एव यागाः कल्प्यन्ते । तत्र प्राजापत्यशब्देन देवतासम्बन्धोपसर्जनद्रव्यमेव प्राधान्येनोच्यते । यश्च प्रधानं तस्यैवार्थान्तरेण बहुत्वेन सम्बन्धोनोपसर्जनस्य देवतासम्बन्धस्य । ननु देवताविशिष्टं द्रव्यमभिहितं विशिष्टेनैव रूपेण सङ्ख्यान्वयि स्यान्न स्वरूपेण । न । द्वौ त्रय इत्यत्रानैकान्त्यात् । न हि द्वावित्यत्र द्वित्वविशिष्टेन रूपेण द्विवचनाभिहितसङ्ख्यान्वयः । तथा सति द्वावित्यत्र चत्वारः प्रतीयेरन् । एवं त्रय इत्यत्र नव । तस्माद्यथा तत्र द्वित्वविशिष्टमपि द्रव्यं द्विशब्देनोक्तं स्वरूपेण द्विवचनाभिहितसङ्ख्यायोगं प्रतिपद्यते तथात्रापि तद्धिताभिहितं द्रव्यं स्वरूपेणैव बहुत्वं प्रतिपद्यते न सोपसर्जनम् । तस्मादेकं कर्म सप्तदशपशुद्रव्यकमिति पूर्वपक्षयित्वा सिद्धान्तितम् ।

(तरङ्गिणी)

स्वरूपेणैव सङ्ख्यान्वयादेकयागत्वे तत्र प्रकृतिभूतादग्नीषोमीयपशोर्हृदयं जिह्वा वक्षो यकृत् वृक्कौ सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमिति दैवतानीति विहितस्यैकस्यैव एकपशुनिष्पन्नावदानगणस्यातिदेशतः प्राप्तस्यानुष्ठाने सप्तदशपशूनां प्राजापत्यत्वं न संपादितं स्यात् । न चोपदेशेनातिदेशबाधः देवतासम्बन्धविशिष्टे पशुद्रव्ये सप्तदशसङ्ख्यान्वयाङ्गीकारेऽतिदेशोपदेशयोरबाधेनैवोपपत्तावति देशबाधकल्पनायोगात् । तस्मात्सप्तदशयागा इति ।। अनश्नन्नित्यादेर्भेदकस्य गुणान्तरस्येति ।। यथा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यत्र पूर्वविहितस्य कर्मणः प्रबलगुणावरुद्धत्वात्तत्र स्वनिवेशमलभमानः स्वात्मसङ्गतये वाजिभ्यो वाजिनमित्येतस्य विधेः कर्मान्तरोत्पत्तिपरतां कल्पयन् वाजिनाख्यो गुणो भेदको भवति तथाऽत्तीत्यदनाख्यगुणावरुद्धे जीवेऽनश्नन्नित्यस्य गुणस्यानिवेशादशनाख्यो गुणः स्वनिवेशाय जीवपरमात्मनोर्भेदमाचष्टे ।। यतोवाचो निवर्तन्त इत्यादीति ।।

यथा कुण्डपायिनामयने श्रूयते उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वतीति । अत्र नित्याग्निहोत्रानुवादेन मासाख्यगुणो न विधातुं शक्यते । नित्याग्निहोत्रे उपसदामभावेन तद्विपरिवृत्तेरभावात् । तस्मादग्निहोत्रसंज्ञं कर्मान्तरमभिधीयते तथा यतो वाचो निवर्तन्त इत्यत्र जीवस्यासन्निहितत्वात्तत्र वाङ्मनसवृत्त्यविषयत्व विधानासम्भवाद्यस्मिंस्तद्विधीयते स जीवाद्भिन्न इति सिध्यति ।। जीवेशादीति ।। यथा अथैष ज्योतिरथैष विश्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेत्यत्र ज्योतिरादिसंज्ञाभ्यः कर्मभेदसिद्धिः । तदुक्तम् ।

नामान्तरश्रुतावर्थभेदस्तावत्प्रतीयते ।
बलवद्बाधकाच्चासावन्यथात्वं प्रपद्यते ।।

नचात्र बलवद्बाधकमस्ति येन संज्ञानिमित्तो भेदोपोद्येतेति । तथाजीवेशसंज्ञाभ्यां तयोर्भेदः सिध्यति । ननु शब्दान्तरादीनां प्रत्यक्षादिसमकक्ष्यतया भेदकत्वेपि न तेषां तात्त्विकाभेदविरोधित्वम् । मैवम् । वेदतात्पर्यविषयस्य तात्त्विकत्वनियमेन भेदविरोध्यभेदस्य पारमार्थिकत्वानुपपत्तेः । ननु कर्मभेदेप्रमाणत्वेन क्लृप्तानां शब्दान्तरादीनांनचेतनभेदे प्रमाणत्वम् । नह्यन्यभेदे प्रयोजकस्यान्यभेदप्रयोजकता । मैवम् । विरुद्धधातुनिष्पन्नाख्यातरूपशब्दान्तरयोगादिना यथानेकं कर्मेति गम्यते तथानेकश्चेतन इति तत एवावगम्यते । नहि बोधयत्युत्तिष्ठतीत्यत्र बोधयितोत्थाता च भिन्न इति न प्रतीतिः । ननु विशेषणभेदाद्विशिष्टस्य भेदः प्रतीयते न विशेष्यस्य । मैवम् । प्रतीतस्यापि विशेष्यभेदस्य प्रत्यभिज्ञानादिनाऽभेदप्रमाणेन

(तरङ्गिणी)

त्याज्यत्वात्। न चात्र भेदत्यागकारणं प्रत्यभिज्ञादिकमस्ति । प्रत्युतैष एव जीवमेतस्माज्जीव इत्यप्रभिज्ञैव । एतेन शब्दान्तरस्य न कर्तृभेदकतेति निरस्तम् ॥ ॥ जीवेशभेदे शब्दान्तरादि ॥

## न्यायामृतकण्टकोद्धारः

किञ्चेति । न च शब्दान्तरादीनामपि प्रत्यक्षतुल्यतया व्यावहारिकभेदविषयत्वमिति वाच्यम् । बाधकाभावेन पारमार्थिकत्वस्यैव युक्तत्वात् । बाधकश्रुतेर्निरासान्निरसिष्यमाणत्वाच्च । ननु कर्मभेदप्रमाणैर्जीवभेदं साधयन्नदृष्टचरमीमांसको भवान् । अन्यप्रमाणैरन्यस्यासिद्धेः । अन्यथा विशेषण भेदेन विशिष्टभेद इव विशेष्यभेदस्याप्यापत्तेः । देवदत्तो बोधयति देवदत्त उत्तिष्ठति यजति ददातीत्यादिना देवदत्तभेदस्यापि प्रसक्तेरिति चेन्न । शब्दान्तरादीनां भेदप्रमाणत्वात् । यथाश्रुत्यर्थादीनि क्रममात्रप्रमाणानि, श्रुतिलिङ्गादीनि शेषशेषिमात्रप्रमाणानि । कर्मग्रहणं तु प्रकृताभिप्रायम् । अत एव तृतीया श्रुत्यादिना श्रौतकर्मातिरिक्तस्थलेऽङ्गाङ्गिभावः । नचोक्तोऽतिप्रसङ्गः । न हि धूमेन महाह्रदे वह्निर्न सिध्यतीति पर्वते तत्र न मानम् । तद्वत् विशेष्यभेदस्य च बाधितत्वादेव न विशेषणभेदेन सिद्धिः । अन्यथा अविशेषपुनः श्रुतिलक्षणाभ्यासेन समिधो यजतीत्यादाविव य एवं विद्वानित्यत्रापि कर्मभेदोपपत्तौ अपवादादधिकरणानारम्भप्रसङ्गात् । प्रकृते च जीवब्रह्मभेदे बाधकाभावस्य वक्ष्यमाणत्वात् उक्तत्वाच्चेति मीमांसावार्तानभिज्ञस्य शङ्केयमित्यलं प्रपञ्चेन ।

शब्दान्तरादिभिरिति । द्वितीयाध्याये द्वितीयपादे प्रथमाधिकरणे चिन्तितम्– शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् । दर्शपूर्णमासाभ्यां यजेत । अग्निहोत्रं जुहोति । हिरण्यमात्रेयाय ददाति इति श्रूयते । तत्र सन्देहः । यजत्यादिभिरेकमेव कर्म प्रतिपाद्यते भिन्नमेव वेति सन्देहे पूर्वपक्षस्तु धातुभेदेऽपि भावनावाचक लिङ्गादेः सर्वत्र प्रत्यभिज्ञानेनाभेदावगमात् एकमेव कर्म । न च धात्वर्थभेदाद्भेद इति वाच्यम् । तस्य प्रत्ययार्थभावनां प्रति गुणत्वात् । गुणभेदेन प्रधानभेदस्यान्याय्यत्वात् । तथाचैकमेव कर्मेति । सिद्धान्तस्तु कर्म भिन्नमिति । प्रत्ययाभेदेऽपि धातुभेदात् । न च गुणभेदात् कथं प्रधानभेद इति वाच्यम् । केवलाया भावनाया अप्रतीतेः सर्वत्र धात्वर्थावच्छिन्नाया एव प्रतीतेः, अन्यावच्छिन्नस्यान्येनावच्छेदायोगात् गुणत्वेऽपि तद्भेदेन भावनाभेद आवश्यकः । न चानेक धातुभ्य एकः प्रत्ययो विधीयत इति वाच्यम् । धातोरित्येकवचनस्य विवक्षितत्वात् । अत एव यत्रानेकधातुभ्य एकः प्रत्ययः तत्र प्रयत्नविशेषः क्रियते अदिभूभ्यां डुतजिति । अन्यथा स व्यर्थः स्यात् । सूत्रार्थस्तु शब्दान्तरे धात्वन्तरे सति कर्मभेदो भावनाभेदो भवितुमर्हति । कुतः? कृतानुबन्धित्वात् तेनैव कृतावच्छेदत्वाद् भावनाया इति तत्रैव द्वितीयाधिकरणे चिन्तितम् । एकस्यैव पुनः श्रुतिरविशेषादनर्थकं हि स्यात् । समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजतीति श्रूयते । तत्र सन्देहः । पञ्चसु वाक्येषु किमेका भावना, उत प्रत्यभ्यासं भावनाभेद इति पूर्वपक्षस्तु एकैव भावनेति । पूर्वाधिकरणोक्तस्य भावनाभेदकस्य धातुभेदरूपशब्दान्तरस्याभावात् । न च कस्य विधायकत्वमित्यनिर्णय इति वाच्यम् । प्रथमस्यैव विधायकत्वोपपत्तेः प्रथमातिक्रमणे

(कण्टकोद्धारः)
कारणाभावात् । नचैवं द्वितीयादिवाक्यवैयर्थ्यमिति वाच्यम् । प्रथमवाक्यविहिते यागे वैकल्पिकतनूनपादादि देवताविधायकत्वेन वा आदरार्थत्वेन वा सार्थक्यसम्भवादिति । सिद्धान्तस्तु भावनाभेद इति । अविशेषपुनः श्रुतिलक्षणाभ्यासात् । अन्यथा तस्य वैयर्थ्यात् । न चैकस्य विधायकत्वमन्येषामनुवादकत्वमिति न वैयर्थ्यमिति वाच्यम् । विनिगमना विरहेणैकस्य विधायकत्वानुपपत्तेः । न च प्राथम्यं कारणम् । सर्वेषाम-पौरुषेयतया प्राथम्यानुपपत्तेः । अनुवादस्य च व्यर्थत्वात् । न च दध्ना जुहोतीत्यादाविव गुणपरत्वे न वैयर्थ्यमिति वाच्यम् । तद्वदत्र गुणाश्रवणात् । न च देवतैव गुण इति वाच्यम् । देवताया मन्त्रवर्णादेव प्राप्तेः । तस्मात् वैयर्थ्य परिहाराय सर्वेषां विधायकत्वात् भावनाभेद इति । सूत्रस्य चायमर्थः । एकस्य विधेः पुनः श्रवणमपि एवं कर्मभेदकम् । कुतः? अविशेषात् विध्यनुवादविशेषाभावात् । अन्यथा हि यस्मात्, पुनः श्रवणमनर्थकं स्यादिति ।

द्वितीयाध्याये द्वितीयपादे सप्तमाधिकरणे चिन्तितम् । पृथक्त्व निवेशात् सङ्ख्यया कर्मभेदः स्यात् । तिस्र आहुती र्जुहोति, द्वादश द्वादशानि जुहोति इति श्रूयते । तत्र सन्देहः किमेको होमो विधीयते, उत बहव इति । पूर्वपक्षस्तु एको होम इति । आख्यातस्यैकत्वात् । न चैकाख्यातवत्त्वेऽप्यभ्यासाधिकरणवत् भेदो भविष्यतीति वाच्यम् । तद्वदत्राख्याताभ्यासाभावात् । नचैकत्वे त्रित्वाभावात् तिस्र इति विरोध इति वाच्यम्। आवृत्त्या त्रित्वोपपत्तेः । यथा पञ्चसु प्रयाजेष्वावृत्त्या एकादशत्वम् । तस्मादेको होम इति । सिद्धान्तस्तु अनेके होमा इति । कुतः? कर्मैकत्वे प्रमाणाभावात् । न चाख्यातमेव प्रमाणमिति वाच्यम् । किमाख्यातं पदान्तरनिरपेक्षं प्रमाणम्, उत तत्सापेक्षम्? नाद्यः । पदमात्रस्याप्रमाणत्वात् । न द्वितीयः । पदान्तरसमभिव्याहृतेन त्रित्वविशिष्टस्यैव बोधनात् । न चैवं प्रयाजेष्वप्येकादशत्वापत्तिरिति वाच्यम् । प्रयाजेषु पञ्चत्वसङ्ख्यायाः पूर्वं निर्ज्ञातत्वात् । प्रकृते चैकत्वविशिष्टस्यानिर्ज्ञातत्वेन वैषम्यात् । अत्र च कर्मण्येकत्वसङ्ख्याश्रवणात् पूर्वपक्षो नोदेतीति मत्वा भाष्यकारेण वाक्यान्तरमुदाहृतम्– सप्तदश प्राजापत्यान् पशूनालभत इति । अत्र द्रव्यगतया सङ्ख्यया स्पष्टं भेदो नावगम्यत इति पूर्वपक्षोदयः । अत्र सन्देहः किं सप्तदशपशुद्रव्यक एको यागो विधीयत, उतैकैक पशुद्रव्यकाः सप्तदश याग विधीयन्ते? तदर्थमिदं विचार्यते । अत्र हि प्राजापत्यानिति प्रकृत्या देवताभिधीयते । तद्धितेन च द्रव्यं, बहुवचनेन च बहुत्वम् । तत्र तद्धितार्थो बहुत्वेन प्रथममन्वितः । पश्चात् प्रजापतिना देवतया सम्बध्यते– पशुश्च पशुश्च पशुश्च तेषां प्रजापतिर्देवतेति । तदा बहुभिः पशुभिः व्यासज्यैका देवता सम्बध्यत इति द्रव्यदेवतासम्बन्धैक्यात् एको यागो भवति? किं वा, प्रथमं प्रजापतिनान्वितः पश्चात् बहुत्वेन सम्बध्यते – प्रजापतिर्देवतास्येति, प्राजापत्यश्च प्राजापत्यश्च प्राजापत्यश्च प्राजापत्या बहव इति । तदा भिन्नैर्द्रव्यदेवता सम्बन्धैर्भिन्ना यागाः कल्प्यन्ते? इति । पूर्वपक्षस्तु एको याग इति । तद्धितार्थस्य पशोर्बहुत्वेनान्वयात्, प्राजापत्यशब्देन पशोः प्राधान्येनाभिधानात्, प्रधानस्यैवार्थान्तरेणान्वयात् । न च प्राजापत्यशब्देन देवताविशिष्टं पशु द्रव्यमभिहितं, विशिष्टरूपेण क्रियान्वयिस्यात्, न स्वरूपेणेति वाच्यम् । द्वावित्यादावनैकान्त्यात् । न हि तत्र द्वित्वविशिष्टेन रूपेण द्विवचनाभिहितसङ्ख्यान्वयः । तथा सति द्वावित्यत्र चत्वारः प्रतीयेरन् । त्रय इत्यत्र

(कण्टकोद्धारः)

नव । तथा च यथा तत्र विशिष्टरूपेणाभिधानेऽपि स्वरूपेणैव द्विवचनाभिहितसङ्ख्यायोगस्तथा प्रकृतेऽपि स्वरूपेणैव बहुत्वान्वयः । तथा च सप्तदशपशुद्रव्यको यागो विधीयते । न चैवं चोदकप्राप्तमेकपशुनिष्पन्नैकादशावदान द्रव्यत्वं नानुगृहीतं स्यादिति वाच्यम् । उपदेशानुसारेण चोदकप्राप्तिः न तु चोदकानुसारेणोपदेशनिर्णयः । तस्मादेको याग इति । सिद्धान्तस्तु अनेके यागा इति । अन्यथा हि सप्तदशानां प्राजापत्यत्वं न स्यात् । तथाहि । सवनीयविकारा हि एकादशिनः । तद्विकाराश्च प्राजापत्याः । तत्र चैकपशु निष्पन्नैकादशावदानद्रव्यत्वं यागस्य स्यात् इति अत्राप्येकत्वे यागस्य चोदकोऽप्येकमेवावदानगणमतिदिशेत् । तथा च सप्तदशानां प्राजापत्यत्वं न सम्पादितं स्यात् । न चोपदेशेन चोदकस्य बाध इति वाच्यम् । उपदेशस्योभयथाप्युपपत्त्या विरोधाभावात् । सावकाशस्य निरवकाशेन बाधात् । तथाचार्थद्वयसाधारणमुपदेशवाक्यं प्रकृतिवच्छब्देन वाक्यशेषभूतेनानेक कर्मपरमवधार्यते । कर्मभेदे हि प्रतिकर्म भिन्नैश्चोदकैः तावतां गुणानां प्राप्तेः । सिध्यति सर्वेषां प्राजापत्यत्वम् । किञ्च प्रातिपदिकार्थस्य कर्मत्वबहुत्वविवक्षायां द्वितीयाबहुवचने । प्रातिपदिकार्थनिष्पत्तिश्च प्रजापति प्रकृतेः तद्धितार्थान्वये सति । तथाच प्रथमभावितद्धितार्थान्वय वेलायां द्वितीयाविभक्तेरेवानन्वयात्, पश्चाच्च विशिष्टस्यैवोपस्थिततत्वात् बाधकाभावाच्च विशिष्टस्यैव बहुत्वमित्यनेके यागा विधीयन्त इति सङ्ख्यया कर्मभेदः । सूत्रस्य चायमर्थः । सङ्ख्ययापि हेतुना कर्म भेदः स्यात् । कुतः? पृथक्त्वनिवेशात् कर्मपृथक्त्वेनैव तस्या निवेशात् । एकातिरिक्तसङ्ख्यायाः पृथक्त्वसामानाधिकरण्यादिव्यर्थः ।

द्वितीयाध्याये द्वितीयपादेऽष्टमाधिकरणे चिन्तितम् । संज्ञाचोत्पत्तिसंयोगात् । ज्योतिष्टोमं प्रकृत्य श्रूयते– अथैषज्योतिः । अथैषविश्वज्योतिः । अथैष सर्वज्योतिः । एतेन सहस्रदक्षिणेन यजेतेति । अत्रैतच्छब्दपरामृष्टानां ज्योतिरादीनां यजिसामानाधिकरण्येन नामत्वं तावत् सिद्धम् । अत्र सन्देहः किं प्रकृतमेव ज्योतिष्टोमं ज्योतिरादिशब्दैरनूद्यसहस्तदक्षिणाख्यो गुणो विधीयते, उत कर्मान्तराण्येवं नामान्येवं दक्षिणानि विधीयन्त इति । पूर्वपक्षस्तु प्रकृतस्यैव गुणविधिरिति । प्रकरणात्, एतच्छब्दस्य प्रकृतवाचित्वात् तत्सामानाधिकरण्या ज्योतिरादीनाम् । अन्यथा प्रकृतहानाप्रकृतकल्पना प्रसङ्गात् । तस्मात् गुणविधिरिति । सिद्धान्तस्तु कर्मविधिरिति । अपूर्वसंज्ञयाऽर्थान्तरस्यैव प्रत्यायनात् । अन्यथा तद्वैयर्थ्यापत्तेः । एकदेशलक्षणाया अन्याय्यत्वाच्च । न च प्रकरणविरोधः । अथशब्देन तद्विच्छेदात् । न चैतच्छब्दायोगः । तस्य सन्निहितवाचित्वादिति वाच्यम् । पूर्वसन्निधानाभावेपि उत्तरसन्निधानसम्भवात् । तथाचापूर्वसंज्ञया कर्मान्तरमेव प्रतीयत इति संज्ञया कर्मभेदः । सूत्रस्य चायमर्थः । संज्ञा च पूर्वविलक्षणा कर्म भेदिका । कुतः? उत्पत्तिसंयोगात् कर्मोत्पत्तिसमय एव तस्य नाम्नः संयोगादिति ।

द्वितीयाध्याये द्वितीयपादे नवमाधिकरणे चिन्तितम् । गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् । चातुर्मास्येषु श्रूयते तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति । तत्र संशयः किं सा वैश्वदेव्यामिक्षेत्यनेन विहिते यागे वाजिभ्यो वाजिनमित्यनेन गुणो विधीयत उत कर्मान्तरमिति । पूवपक्षस्तु

(कण्टकोद्धारः)

गुणविधिरिति । वाजिनो हि वाजमन्नं येषामिति व्युत्पत्त्या पूर्वयागविहितामिक्षारूपान्नवत्त्वेन प्रकृताः प्रत्यभिज्ञायन्ते । तथाच तैः सह सम्बध्यमानं वाजिनं तत्रैव विहितं भवति इति स्वीकर्तव्यम् । अन्यथा प्रकृतहानाप्रकृतकल्पने स्याताम् । अपूर्वान्तरकल्पना च स्यात् । विशिष्ट विधिगौरवं च स्यात् । ननु पूर्वकर्मण आमिक्षायुक्तस्यैवोत्पन्नत्वान्न द्रव्यान्तरापेक्षा, योग्यता वा नास्तीति चेन्न । पूर्वं विशिष्टस्य श्रुतत्वेऽपि इह निष्कृष्य स्वरूपमात्रेणाभिधानात् । अभिधानकृता ह्याकांक्षा । न स्वरूपकृता । अन्यथाग्निहोत्रस्यानेकद्रव्यसम्बन्धो न स्यात् । न चामिक्षया देवतासम्बन्धस्य श्रौतत्वाद् वाक्यगम्याद् वाजिनसम्बन्धाद् बलीयस्त्वमिति वाच्यम् । उभयसम्बन्धस्य वाक्यगम्यत्वेन समत्वात् । न हि वैश्वदेवीपदेनामिक्षासम्बन्धोऽवगम्यते । किन्त्वामिक्षापदैकवाक्यतया । तथाचोभयोः समत्वात् विकल्पः समुच्चयो वेति न कर्मान्तरमिति । सिद्धान्तस्तु कर्मान्तरविधिरिति । उत्पत्तिशिष्टगुणावरुद्धे उत्पन्नशिष्टगुणनिवेशासम्भवात् । न च स्वरूपमात्रमभिधीयत इति वाच्यम् । स्वरूपमात्रस्यानुवादासम्भवेन पूर्ववाक्यावगमानुसरणे पूर्ववाक्ये विशिष्टस्यैवावगमेन तत्र वाजिननिवेशासम्भवात् । न चोभयोर्वाक्यायत्तत्वेन तुल्यत्वमिति वाच्यम् । वैश्वदेवीति तद्धितेनैव देवतासम्बन्धस्योक्तत्वात् । आमिक्षापदस्य विशेषसमर्पकत्वेनोपयोगात् । तथाचामिक्षासम्बन्धस्य श्रौतत्वात् बलवत्त्वम् । चतुर्थ्याश्च सम्प्रदानमात्रपरत्वेन वाजिन सम्बन्धस्य वाजिनपदसमभिव्याहारापेक्षत्वेन दुर्बलत्वम् । तस्मात् वाजिनगुणः पूर्वकर्मणि निवेशमलभमानः स्वनिवेशक्षमकर्मान्तरं कल्पयतीति गुणाद् भेद इति । सूत्रस्य चायमर्थः । गुणश्च कर्मभेदकः, अपूर्वसंयोगे पूर्वकर्मसम्बन्धाभावे सति । कुतः? वाक्ययोः समत्वात् । समे हि तदा वाक्ये भवतः । तत एवेत्यर्थः ।

द्वितीयाध्याये तृतीयपादे एकादशाधिकरणे चिन्तितम् । प्रकरणान्तरे प्रयोजनान्यत्वम् इति कुण्डपायिनामयने श्रूयते मासमग्निहोत्रं जुहोति । मासं दर्शपूर्णमासाभ्यां यजते इति तत्र सन्देहः नैमित्तिकेऽग्निहोत्रे मासलक्षणो गुणो विधीयत उत कर्मान्तरमिति । पूर्वपक्षस्तु गुणो विधीयत इति । प्राप्तं कर्माग्निहोत्रशब्देनानूद्य मासलक्षणो गुणो विधीयते । न च तस्यानुपादेयत्वान्न विधेयतेति तमुद्दिश्य कर्मैव विधीयत इति वाच्यम् । प्राप्त्यप्राप्ती ह्यनुवादविधानयोः प्रयोजिके । नानुपादेयत्वोपादेयत्वे । तस्माद् गुणविधिरिति । सिद्धान्तस्तु । कर्मविधानमेष्टव्यम् । गुणविधानासम्भवात् । तथा हि । किं मास एव विधीयते उतोपसद्भिश्चरित्वेत्युक्ताः उपसदोऽपि? नाद्यः । उपसदामपि विधातव्यत्वात् । तासां नित्याग्निहोत्रे प्राप्त्यभावात् । न द्वितीयः । प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्य भेदापत्तेः । न च गुणविधानासम्भवेऽपि न कर्मान्तरविधानम् । प्रमाणाभावादिति वाच्यम् । प्रकरणान्तरस्यैव तत्वात् । न चैतदग्निहोत्र प्रकरणम् । अयनमारभ्याधीतत्वात् । नचैवमग्निहोत्रे गुणविधिशङ्कैव न स्यादिति वाच्यम् । प्रकरणेन तदसमर्पणेऽप्यग्निहोत्रशब्देन तत्समर्पणात् भवति शङ्का । सा च वाक्यभेदेन निराकृतेति प्रकरणान्तरात् कर्मभेदः सिद्धो भवतीति । न चैवमग्निहोत्रशब्दो व्यर्थ इति वाच्यम् । तस्येति कर्तव्यतातिदेशकत्वेन सार्थकत्वात् । न चैवं वाजिनमासरूपगुणविशिष्टं कर्म विधीयत इति वाजिनमासगुणादेव कर्मभेदो, न प्रकरणान्तरादिति चेन्न । वैषम्यात् ।

(कण्टकोद्धारः)

तत्र विधेयतया उपादेयगुणो वाजिनम् । मासस्त्वनुपादेय इत्येकं वैषम्यम् । द्रव्यत्वेन रूपान्तरं वाजिनं, मासस्तु न तथेत्यपरम् । वस्तुतस्तु प्रकरणान्तरं प्रथमप्रतीतमिति तदेवात्र प्रमाणम्, न चरमप्रतीतो गुण इति प्रकरणान्तरात् कर्मभेद इति । सूत्रस्य चायमर्थः । प्रकरणान्तरे सति प्रयोजनान्यत्वं विधेयभावनान्यत्वं, न पूर्वकर्मानुवादेन गुणविधानमिति । तत्र–

शब्दान्तरं धातुभेदाभ्यासो विधिपुनःश्रुतिः ।
उत्पत्तिस्था द्यादिसङ्ख्या संज्ञाचागमपूर्वकम् ।
अनुपादेयसम्बन्धोऽसन्निधिः प्रक्रियान्तरम्– इति ।

विरुद्धार्थेति । भिन्नार्थेत्यर्थः । तावतैव यजति ददातिवत् भेदसम्भवात् । विरोधग्रहणं तु एकविषयत्वस्यात्यन्तमसम्भाव्यमानत्वप्रदर्शनार्थम् । अप्रत्यभिज्ञायमानेति । परो जीव इति विलक्षणशब्द प्रयोगादित्यर्थः । द्वा सुपर्णेति । सप्तदशप्राजापत्यानित्यत्र द्रव्यगतया कर्मभेद उक्तः । इह तु तिस्र आहुतीरित्यादौ कर्मगतया कर्मभेदवत् द्रव्यगतया द्रव्यभेदः स्फुट एवेति भावः । अश्नन्निति । नचाशनं कल्पितमिति वाच्यम् । तस्य भेदमिथ्यात्वाधीनत्वेनान्योन्याश्रयात् । यत इति । तस्य 'अधीहि भगवो ब्रह्मे'त्यादि वाक्यपर्यालोचनया ब्रह्मप्रकरणत्वादिति भावः । इति जीवेश भेदे शब्दान्तरादि ।

न्यायामृतप्रकाशः

नित्यः पर इति ॥ एकेन नित्यशब्देन परेशे नित्यत्वेऽभिहिते पुनस्तत्रैव नित्यत्वबोधनायोगान्नित्यशब्दाभ्यासः परजीवौ भिनत्तीत्यर्थः । गुणान्तरं विधातुं प्रत्यभिज्ञायमाने पुनःश्रुतेरभेदकत्वादुक्तमप्रत्यभिज्ञायमानेति । प्रत्यभिज्ञाज्ञापकं सोयमित्यादिपदमत्र नास्तीत्यर्थः । अधिकरणानि तरङ्गिण्यां द्रष्टव्यानि ॥ ॥ जीवेशभेदे शब्दान्तरादिविवरणम् ॥

## २५. भेदश्रुतेः षड्विधतात्पर्यलिङ्गानि

सन्ति च भेदश्रुतेरपि षड्विधतात्पर्यलिङ्गानि । तथा हि– आथर्वणे ''द्वा सुपर्णे'' त्युपक्रमः, परमं साम्यमुपैतीत्युसंहारः, तयोरन्यः अनश्नन्नन्यः अन्यमीशमित्यभ्यासः, शास्त्रैकगम्येश्वरप्रतियोगिकस्य तद्धर्मिकस्य वा कालत्रयाबाध्यभेदस्य शास्त्रं विना अप्राप्तेरपूर्वता, पुण्यपापे विधूयेति फलम्, अस्य महिमानमिति स्तुतिरूपोऽर्थवादः, अत्ति अनश्नन्नित्युपपत्तिः । अत्र ''मायामात्रमिदं द्वैत'' मित्यादाविव द्विशब्द एव भेदवाचकः, तदाक्षेपको वा द्वित्वसङ्ख्यैवैक्यविरोधिनीत्युपक्रमो भेदविषयः । तद्भिन्नत्वविशेषितमेव तन्निष्ठबहुधर्मयोगित्वं

तत्सादृश्यं न तु विशेष्यमात्रम् । नायं सः किं तु तत्सदृशः, नायं तत्सदृशः, किं तु स एवेति सादृश्यैक्ययोरेकतरविधानायान्यतरनिषेधाद् । ''गगनं गगनाकार'' मित्यादि तु तत्सदृशवस्त्वन्तरनिषेधपरम् । गगनाद्येकदेशस्य तदेकदेशसादृश्यपरं वेत्युपसंहारोऽपि भेदपरः । अभ्यासत्वे चार्थत एव प्रकारत्वं तन्त्रं न तु शब्दतः, अतिप्रसङ्गात् । ''पश्यत्यन्यमीश''मित्यत्रेशगतान्यत्वं प्रति पश्यतीति प्रकृतो जीवः पदिन्यायेन प्रतियोगितया सम्बध्यत इति सिद्धोऽभ्यासः ।

एवं ''वेत्थ नु त्वं काप्य तमन्तर्यामिण''मित्युपक्रमः, ''एष त आत्मान्तर्यामी''त्युपसंहारः । ''एष त आत्मान्तर्याम्यमृत'' इत्येकविंशतिकृत्वोऽभ्यासः, अन्तर्यामित्वस्याप्राप्तत्वादपूर्वता, ''स ब्रह्मवि''दित्यादिफलं, तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यती''ति निन्दारूपोऽर्थवादः । ''यस्य पृथिवी शरीरं यं पृथिवी न वेदे''त्याद्युपपत्तिः । इयं च श्रुतिर्भेदपरैवेति सूत्रकृतैवोक्तं- शारीरश्चोभयेऽपि हि भेदेनैनमधीयत'' इति सूत्रं भेदपरमिति त्वयापि भाषितत्वात् । भेदश्रुतेः षड्विधतात्पर्यलिङ्गानि ॥

## अद्वैतसिद्धिः

ननु– षड्विधतात्पर्यलिङ्गोपेतश्रुतिगम्यभेदस्य कथमतात्त्विकत्वम्? तथा हि– आथर्वणे द्वा सुपर्णेत्युपक्रमः, परमं साम्यमुपैतीत्युपसंहारः, 'तयोरन्यः अनश्नन्नन्यः अन्यमीश'मित्यभ्यासः, शास्त्रैकगम्येश्वरप्रतियोगिकस्य कालत्रयाबाध्यभेदस्य शास्त्रं विना अप्राप्तेरपूर्वता, 'पुण्यपापे विधूये'ति फलम्, 'अस्य महिमान'मिति स्तुतिरूपोऽर्थवादः, अत्ति अनश्नन्नित्युपपत्तिः । अत्र च 'मायामात्रमिदं द्वैत'मित्यादाविव द्विशब्द एव भेदवाचकः, तदाक्षेपको वा द्वित्वसङ्ख्यैवैक्यविरोधिनीति वा भवत्युपक्रमो भेदविषयः । तद्भिन्नत्वविशेषितमेव च तद्गतबहुधर्मयोगित्वं तत्सादृश्यम्, न तु विशेष्यमात्रम्, नायं सः किन्तु तत्सदृशः, नायं तत्सदृशः, किन्तु स एवेति सादृश्यैक्ययोरेकतरविधानायान्यतरनिषेधाद् । 'गगनं गगनाकार'मित्यादि तु तत्सदृशवस्त्वन्तरनिषेधपरम्, गगनाद्येकदेशस्य तदेकदेशसादृश्यपरं वा इत्युपसंहारोऽपि भेदविषय एव । अभ्यासत्वेऽपि अर्थत एवैकप्रकारत्वं तन्त्रम्,

(अद्वैतसिद्धिः)

न तु शब्दतः, अतिप्रसङ्गात् । अन्यमीशमित्यत्र ईशगतान्यत्वं प्रति पश्यतीति प्रकृतो जीव एव पदिन्यायेन प्रतियोगितया संबध्यत इत्यभ्यासोऽपि संभवतीति चेत् । मैवम्, आथर्वणे प्रथममुण्डके 'कस्मिन्नुभगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति शौनकप्रश्नानन्तरं 'द्वे विद्ये वेदितव्ये' इति विद्याद्वयमवतार्य ऋग्वेदादिलक्षणामपरामुक्त्वा 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्ण'मित्यादिना परविद्याविषयमक्षरं प्रश्नानुसारेण प्रतिपादयता अभेदस्यैवोपक्रान्तत्वाद्, अन्यथा तदुत्तरत्वानुपपत्तेः । द्वितीयमुण्डके 'पुरुष एवेदं विश्वं ब्रह्मैवेदं वरिष्ठ'मिति मध्ये परामर्शात् । तृतीयमुण्डकान्ते च 'परेऽव्यये सर्व एकीभवन्ति, स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवती'त्यैक्यलक्षणफलेनोपसंहाराच्च मुण्डकत्रयात्मिकाया उपनिषद ऐक्यपरत्वे स्थिते 'असंयुक्तं प्रकरणा'दिति न्यायेनाभिक्रमणादिवन्मध्यस्थितवाक्यस्यापि द्वासुपर्णेत्यादेस्तदनुकूलत्वे सम्भवति महाप्रकरणविरोधेन विपरीततात्पर्यकल्पनया भेदोपक्रमत्वाभावात् । 'परमं साम्यमुपैती'त्यस्य पूर्वोक्तन्यायेन ऐक्यपरतया भेदोपसंहारत्वाभावात् । अतः अनश्नन्नित्यादिना न तात्त्विकभेदाभ्यासः, नापीशस्य शास्त्रगम्यतया तत्प्रतियोगिकस्तद्धर्मिको वा भेदोऽपूर्वः, ईशज्ञानमात्रे तदपेक्षायामपि प्रत्यक्षेण तत्समकक्ष्यमानेन च तयोः प्राप्तत्वात् । त्वदुक्तफलार्थवादयोरैक्यपक्षेऽपि संभवेन न भेदासाधारणलिङ्गता, अनश्नन्नित्यादेः काल्पनिकभेदेनोपपत्त्या तात्त्विकभेदोपपत्तित्वाभावात् ।

ननु– अन्तर्यामिब्राह्मणं षड्विधतात्पर्यलिङ्गोपेतं वाक्यं भेदे प्रमाणम् । तथा हि– 'वेत्थ नु त्वं काप्य तमन्तर्यामिण'मित्युपक्रमः, 'एष त आत्मान्तर्यामी'त्युपसंहारः, 'एष त आत्मेत्याद्येकविंशतिकृत्वोऽभ्यासः अन्तर्यामित्वस्याप्राप्ततयाऽपूर्वता, 'स व ब्रह्मवि'दित्यादि फलम्, 'तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यती'ति निन्दारूपोऽर्थवादः, 'यस्य पृथिवी शरीरं यं पृथिवी न वेद' इत्याद्युपपत्तिरिति चेत्, मैवम् । 'आत्मेत्येवोपासीते'ति सूत्रितब्रह्मविद्याविवरणरूपायां चतुरध्याय्याम् अनेन ह्येतत्सर्वं वेदेति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञापूर्वकं 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मस्मीति तस्मात्तत्सर्वमभव'दित्यभेदेनोपक्रम्य षष्ठाध्यायान्ते मैत्रेयीब्राह्मणे निगमनरूपे 'यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्ये'दित्यादिनाऽभेदेनैवोपसंहाराद् अध्यायचतुष्टयस्याप्यभेदपरत्वे स्थिते तदन्तर्गतस्य ब्रह्मलोकान्तरसूत्रात्मप्रतिपादनपरस्य उत्तरब्राह्मणप्रतिपाद्यनिरूपाधिक-

(अद्वैतसिद्धिः)

सर्वान्तरब्रह्मप्रतिपत्त्यनुकूलस्य महाप्रकरणानुरोधेन तद्विरोधिभेदपरत्वाभावात्, त्वदुपन्यस्त-लिङ्गानां भेदपरतानिर्णायकत्वेऽपि कल्पितभेदपरतया तात्त्विकाभेदाविरोधित्वात्। अत एव न 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयत' इति सूत्रविरोधः, नवा तद्भाष्यव्याहतिः ॥ इत्यद्वैतसिद्धौ भेदश्रुतेः षड्विधतात्पर्यलिङ्गभङ्गः ॥

## न्यायामृततरङ्गिणी

॥ अस्ति अनश्नन्नित्युपपत्तिरिति ॥ ननु द्वितीयमुण्डके पुरुष एवेदं विश्वं ब्रह्मैवेदं विश्वमिदं वरिष्ठमित्यभेदोक्तिसत्वात्तद्विरोधः । मैवम् । एतस्य इदं सर्वं यदयमात्मेतिश्रुत्यर्थे व्याख्या-तत्वात्। नच तृतीयमुण्डकगतेन परेऽव्यये सर्व एकीभवन्ति स यो हवैतत्परमं ब्रह्म वेद ब्रह्मैव भवतीत्यनेन विरोध इति वाच्यम्। एतास्याहंब्रह्मास्मीतिश्रुत्यर्थे व्याख्यास्यमानत्वात्। वस्तु-तस्तु प्रथममुण्डके कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति शौनकेनाङ्गिरसं प्रति पृष्टे परापररूपेण द्वे विद्ये अङ्गिराः प्रतिजज्ञे । तत्र इन्द्राद्यवान्तरार्थपरत्वे ऋगाद्या एवापरविद्याः उत्तमाक्षरपत्वे तु ता एव परविद्या इत्युक्तस्य ऋगाद्युत्तमत्वस्य सिद्धये तदर्थभूतस्योत्तमाक्षरस्य सर्वोत्तमत्वं प्रतिपादयितुं सर्वकारणत्वमक्षरस्योक्तम् । द्वितीयमुण्डकेपि प्राणादिकारणत्वमुक्तं तृतीयमुण्डके तु द्वा सुपर्णेत्याद्युक्तमिति सर्वस्याः मुण्डकत्रयत्मिकाया उपनिषद उत्तमाक्षर-परत्वेन भेदपरतया तन्मध्यस्थितस्य पुरुष एवेदमित्यस्याभिक्रमणादिवत्तदनुकलत्वेनैव नेयत्वान्न तद्विरोधः ।

तृतीयस्य प्रथमपादे विचारितम्। दर्शपूर्णमासयोः प्रयाजसमीपे श्रूयते अभिक्रामं जुहोतीति। अभिक्रम्य जुहोतीत्यर्थः । णमुलूप्रत्ययान्तमभिक्रमणं न क्रियातोऽन्येन सम्बद्धुमर्हतीति तस्य जुहोतिक्रियान्वये स्थिते होमानुवादेन विधीयमानमभिक्रमणं किं प्राकरणिकसर्वहोमाङ्गमुत प्रयाजहोमस्यैवेति संशयः । तदर्थं किमवान्तरप्रकरणमस्ति नवेति । तत्राङ्गभावनानामन्यो-न्याकांक्षारूपावान्तरप्रकरण सत्त्वेङ्गानामन्योन्याङ्गाङ्गितापत्त्या व्यवस्थापत्तेर्नावान्तरप्रकरणं नामास्ति । तदभावे च सन्निधिमात्रेणाभिक्रमणं प्रयाजाङ्गं स्यात् । सच दुर्बलः प्रकरणादतो दर्शपूर्णमासभावनया सम्बन्धात्तदीयसकलहोमाङ्गमभिक्रमणम् । नन्ववान्तरप्रकरणाभावेप्यभि-क्रामं जुहोतीति वाक्येनैव प्रयाजाङ्गमभिक्रमणं स्यात् । मैवम् । जुहोतेः साधारणत्वेन प्रयाजमात्रपरत्वाभावात् । नन्वनुवादोऽयं सन्निहितगामी प्रयाजाश्च सन्निहिताः । मैवम् ।

(तरङ्गिणी)

बुद्धिविपरिवृत्तिरनुवादस्यापेक्षिता न पाठप्रत्यासत्तिः । तथासत्यत्यं तसन्निधानादुत्तमप्रयाजस्यै-वाभिक्रमणमङ्गं स्यान्न समिदादीनाम् । तस्माज्जुहोतिशब्दे सङ्कोचाभावात्सर्वहोमाङ्गमभिक्रमण-मिति प्राप्ते सिद्धान्तः । भवेदेवं यद्यवान्तरप्रकरणं न स्यात् । अस्ति तु तत् । प्रयाजान्वि-धायत्रीन्प्रयाजानिष्ट्वा समानयत उपभृत इत्यनेनोपभृतः सकाशादर्धमाज्यं जुह्वां कर्तव्य-मित्येवंरूपं समानयनरूपं गुणं विधाय अभिक्रामंजुहोतीत्यभिक्रमणं विधाय यो वै प्रयाजानां मिथुनं वेद समिधो बह्वीरिव यजति तनूनपादेक इवेत्यादिप्रयाजानिष्ट्वा हवींष्यभिघारयतीत्यन्तं प्रयाजपरामर्शदर्शनात् । नूनमेतावता प्रदेशे प्रयाजाः समाप्यन्त इत्यवगमात्तन्मध्यपतित-मभिक्रमणं तदतिक्रमेणान्यत्र न गच्छति । विद्यते चाङ्गभावनानामप्यविज्ञातप्रकार-त्वात्कथमित्याकाङ्क्षा । ननु तर्हि परस्पराङ्गाङ्गितापत्तिः । मैवम् । सन्दंशाभावात् । तदुक्तम् ।

न विद्यते तु सन्दम्शो यत्र वाचनिकैर्गुणैः ।
तत्राङ्गानां कथंभावः सन्नप्यविनियोजकः ।
निष्फलत्वे च सर्वेषां न विशेषोवगम्यते ।
कः शषः कस्य शेषित्वमतः सर्वं प्रधानगमिति ।

तस्मात्सन्दम्शाभावान्नाव्यवस्था ॥ पदिन्यायेनेति ॥ व्याख्यातमेतन्न तुद्धितीयमस्तीति श्रुत्यर्थे ॥ ॥ भेदश्रुतेः षड्विधतात्पर्ये लिङ्गानि ॥

## न्यायामृतकण्टकोद्धारः

ननु श्रुत्या भेदः प्रतिपाद्यताम् । तथापि न ततस्तत्सिद्धिः । तत्र तात्पर्याभावात् । तात्पर्य-ज्ञापकान्युपक्रमादीनि । न च भेदे तानि सन्तीत्यतो भेदे तात्पर्याभावान्न ततस्तत्सिद्धिरित्यत आह सन्ति चेति । आथर्वण इति । नन्वाथर्वणे मुण्डकत्रयमस्ति । तत्र प्रथमे 'कस्मिन् भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति शौनकप्रश्नानन्तरं 'द्वे विद्ये वेदितव्ये' इति विद्याद्वयमवतार्य ऋग्वेदादिलक्षणामपरामुक्त्वा 'अथ परा यया तदक्षरमधिगम्यत' इत्यादिना परविद्याविषयमक्षरं प्रतिपादयता अभेदस्यैवोपक्रान्तत्वात्, अन्यथा तदुत्तरत्वानुपपत्तेः, द्वितीये मुण्डके 'पुरुष एवेदम्' 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' इति मध्ये परामर्शात्, तथा तृतीये 'परेऽव्यये सर्व एकीभवन्ति' 'स यो ह वैतत् परमं ब्रह्म वेद ब्रह्मैव भवती'त्यैक्येनोपसंहाराच्च मुण्डकत्रयात्मिकाया उपनिषद ऐक्यपरत्वे स्थिते तन्मध्यस्थितस्य 'द्वासुपर्णे'त्यादे'रसंयुक्तं प्रकरणादि'ति न्यायेनाभिक्रमणादिवत् महाप्रकरणविरोधेन न भेदोपक्रमत्वं सम्भवतीति चेन्न । प्रथमे एकविज्ञानेन सर्वविज्ञानस्य प्राधान्यसादृश्याभ्यामुपपन्नत्वेन प्रश्नस्य भेदपरत्वात् । अत एव प्राधान्यमुपपादयितुम्

(कण्टकोद्धारः)

अक्षरस्यादृश्यत्वादिगुणोक्तिः । एतच्च मिथ्यात्वश्रुतिभङ्गप्रकरण एव सम्यगुपपादितम् । द्वितीयेऽपि पुरुष एवेदमित्यादेस्तदधीनत्वेनैवोपपत्त्या भेदस्यैव परामर्शात् । भेदं विना तदधीनत्वानुपपत्तेः । तत्त्वमसीति वाक्यन्यायेनास्यैक्यपरत्वानुपपत्तेः । तृतीयेऽपि परेऽव्यय इत्यादेः पर इति सप्तमीनिर्देशादेकीभवन्तीति अभूततद्भावार्थकच्चिप्रयोगात् भेदोपसंहाररूपत्वात् । तथा ब्रह्मवेदेत्यादेः तत्त्वमसीति वाक्यन्यायेनाभेदपरत्वानुपपत्तेर्भेदपरत्वस्यैव न्याय्यत्वात् । भेदपरत्वस्यैव वक्ष्यमाणत्वाच्च । सर्वस्य मुण्डकस्य भेदपरत्वेन तन्मध्यपतितस्य सुतरां भेदपरत्वमिति भेदोपक्रमस्यैव युक्तत्वात् । तथा चासंयुक्तं प्रकरणादिति न्यायो भवन्मतविरोध्येवेति भावः । ननु च द्वासुपर्णेत्यत्र द्वित्वसङ्ख्यैव श्रूयते । न भेदः । तत्कथं भेदस्योपक्रम इत्यत आह अत्रेति । यथा चैतत्तथा द्वासुपर्णेति श्रुत्युदाहरण एव व्याख्यातम् । ननु परमं साम्यमुपैतीति उपसंहारो न भेद विषयः । तत्र सादृश्यस्यैव श्रुतत्वात् । न च सादृश्यं भेदं विना न सम्भवतीति वाच्यम् । तथाचार्थिकत्वेऽप्यशाब्दत्वादित्यत आह तद्भिन्नत्वेति । तथाच सादृश्यान्तर्गतत्वात् भेदशब्दत्वमिति भावः । अन्यथा स्वस्यापि स्वसदृशत्वापत्तिः । नन्वस्तु स्वस्यापि स्वसादृश्यमित्यत आह नायमिति । अभेदेऽपि सादृश्याङ्गीकारे सादृश्यविधानायैक्यनिषेधायोगादिति भावः । ननु सादृश्यस्य भेदघटितत्वे गगनं गगनाकारमित्यादौ सादृश्यवाचकशब्दप्रयोगो न स्यादित्यत आह । गगनमिति । पूर्वोक्तादेव हेतोरिति भावः । नचोपसंहारे परमशब्दप्रयोगात् साम्यशब्देनैक्यमेव विवृतमिति वाच्यम् । परमशब्दस्य पूर्वापेक्षयोत्कर्षमादायोपपत्त्या ऐक्यपरत्वज्ञापकत्वायोगात् । ननु द्वासुपर्णेत्यादिघटितो नाभ्यासः, शब्दत एकप्रकारत्वभावादित्यत आह अभ्यासत्व इति अतिप्रसङ्गादिति । भिन्नार्थस्थले शब्दत एकप्रकारत्वे सत्यप्यभ्यासाभावात् । न च शब्दतोऽर्थतश्चैकप्रकारत्वं विवक्षितमिति वाच्यम् गौरवात् । एकमेवाद्वितीयमित्यादेरभ्यासत्वं न स्यात् । ननु च पश्यत्यन्यमिति नायमभ्यासः । ईशगतान्यत्वं प्रति घटादेरेव प्रतियोगित्वादित्यत आह पश्यतीति । अनुषङ्गापेक्षयाऽध्याहारस्य जघन्यत्वादिति भावः । पदिन्यायस्तु श्रुतिव्याख्यानसमय एव दर्शितः । क्वचित् यदीति पाठः । तत्र सोऽपि प्रदर्शितः । नन्वर्थतोऽप्यत्रैकप्रकारत्वं नास्ति । द्वासुपर्णेत्यस्य जीवब्रह्मसम्बन्धिभेद प्रतिपादकत्वात् । तयोरन्य इत्यादीनां त्वेकैकभेदप्रतिपादकत्वात् इति चेन्न । किं प्रकरणादिवाक्यप्रतिपाद्य सकलार्थप्रतिपादकत्वमेकप्रकारत्वमुत तत्प्रतिपादितार्थ प्रतिपादकत्वम्? नाद्यः । तत्वमसीत्यादेरभ्यासत्वं न स्यात् । तस्यापि एकमेवाद्वितीयेत्युपक्रम वाक्यप्रतिपाद्य सजातीय विजातीय भेदवैधुर्याप्रतिपादकत्वात् । न द्वितीयः । प्रकृतेऽपि सत्वात् । ननु नोपक्रमवाक्यैकप्रकारत्वमभ्यासत्वे तन्त्रम् । किन्तु प्रकरणमध्यस्य वाक्यान्तरेण । तच्च तत्वमसीत्यत्रेव नास्ति । अनश्नन्नन्यः, अन्यमीशमित्यत्रेशगत भेदाभिधानात् । तयोरन्यः परमं साम्यमुपैतीत्यत्र जीवगत भेदाभिधानादिति चेन्न । प्रकरणमध्यस्य वाक्यैकप्रकारत्वाभावेऽपि अनुपसञ्जातविरोधि प्रबलोपक्रमवाक्यानुसारेण तदुपपत्तेः । अनेनोपक्रमोपसंहारैक्यं दर्शितम् । यद्वा द्वासुपर्णेत्येकोक्तिः, तयोरन्यः अनश्नन्नन्यः इति च परा, अन्यमीशं परमं साम्यमुपैतीति च मिळितापरोक्तिः । एकवाक्ये एकप्रकारकत्वमकिंचित्करम् । यद्वा द्वासुपर्णेत्युपक्रमवाक्ये जीवेश्वरसम्बन्धी भेदः प्रतिपाद्यः । प्रतियोग्यनुयोगिभावस्तु न विवक्षणीयः । एवं चेशजीवयोरुभयोरपि

(कण्टकोद्धारः)

धर्मित्वे प्रतियोगित्वे, एकस्य प्रतियोगित्वेऽपरस्य धर्मित्वे वा जीवेश्वरसम्बन्धस्य सर्वत्राविरोधात् । उपक्रमवाक्येनान्योन्यैकप्रकारत्वान्न दोषः । ननूपक्रमोपसंहारयोः कथमभ्यासत्वमिति चेन्न लक्षणायोगादिति गृहाण । अथवोपक्रमोपसंहारातिरिक्तवाक्यानामेवाभ्यासत्वमस्तु । द्विरुक्त्याप्यसकृदुक्तिलाभात् । ननु तथाप्यन्यः स्वाद्वत्ति, अन्यः अभिचाकशीतीति सर्वत्रान्योद्देशेनानत्तृत्वादीनां विधानात् नान्यत्वविधायकत्वं तेषाम् । ततः कथं भेदे तात्पर्यशून्यानां भेदेऽभ्यासत्वमिति चेन्न । अभ्यासलक्षणे विधायक पदाश्रवणात् । आनन्दमयोऽभ्यासादिति सूत्रकारोक्तेः असद्ब्रह्मेति वेदचेद्, अस्ति ब्रह्मेति चेद्वेदेति ब्रह्मशब्दाभ्यासेऽपि ब्रह्मत्वविधानाभावात् तात्पर्यलिङ्गानामप्यवधृतस्वतात्पर्याणां तात्पर्यानुमापकत्वे स्वतात्पर्यावधारणाय लिङ्गान्तरापेक्षायामनवस्थाप्रसङ्गाच्चेत्युक्तम् । तस्मात् सिद्धोऽभ्यासः । ननु तथापि नापूर्वता । जीवेश्वरभेदस्य प्रत्यक्षप्राप्तत्वादिति चेन्न । अत्र हि ईश्वर प्रतियोगिक जीवधर्मिक जीवप्रतियोगिकेश्वरधर्मिक भेदसमुदायः प्रतिपाद्यः । स च न प्रत्यक्षः । जीवधर्मिकस्य प्रत्यक्षत्वेऽपि ईश्वरधर्मिकस्याप्रत्यक्षत्वात् । न हि वनैकदेशे ज्ञाते वनं ज्ञातं भवति । तथापि जीवधर्मिकभेदांशे प्राप्तिरस्तीति चेन्न । प्रमाणान्तराप्राप्तप्रतिपादन मात्रस्यापूर्वताशब्दार्थत्वात् । सर्वथा प्रमाणान्तराप्राप्त्यपेक्षायां कुत्राप्यपूर्वता न स्यात् । सर्वत्र पदार्थानां प्राप्तत्वात् । अंशे प्राप्तिमङ्गीकृत्येदमुदितम् । वस्तुतो जीवधर्मिकभेदेऽप्यपूर्वतास्त्येव । शास्त्रनिरपेक्ष प्रमाणान्तरप्राप्तेरभावात् । शास्त्रनिरपेक्ष प्रमाणान्तराप्राप्तेरेवापूर्वत्वात् । अन्यथा ऐक्यस्यापि शास्त्र सापेक्षानुमानग्राह्यत्वेनापूर्वत्वाभावापत्तेः । तस्मात् सर्वांशेऽप्यपूर्वता सिद्धा । यद्वा श्रुति प्रतिपाद्यो भेदः कालत्रयाबाध्यः । न हि प्रत्यक्षेण तादृशो भेदः सिद्धः । प्रत्यक्षस्य वर्तमानमात्रग्राहित्वस्य त्वयाभ्युपगमात् । तथाचापूर्वता त्वन्मतानुसारेणैव सिद्धा । अत एवाह शास्त्रेति । त्रिकालेति । न चानभ्भित्यादेः काल्पनिक भेदेनोपपत्त्या तात्त्विक भेदाप्रमापकत्वमिति वाच्यम् । उपपत्तेस्तात्पर्य ज्ञापकत्वेन चरितार्थत्वात् श्रुतितात्पर्यविषयत्वेन तात्त्विकत्वसिद्धेः । अन्यथा ऐक्यस्याप्यतात्त्विकत्वापातात् । तत्राप्युपपत्तेरतात्त्विकैक्येनोपपत्तेरिति सिद्धोपपत्तिः । तस्मात् द्वासुपर्णेत्यादेः सिद्धं षड्विधतात्पर्य लिङ्गोपेतत्वम् । असन्दिग्धोपक्रमाद्युपेत भेदवाक्यान्तरमुदाहरति एवं वेत्थेति । नन्वत्राप्यनेनैतत् सर्वं विदितमिति एकविज्ञानेन सर्वविज्ञानपूर्वकं तदात्मानमेवावेदहं ब्रह्मास्मि तस्मात् तत् सर्वमभवदित्यभेदेनैवोपक्रम्य यत्रत्वस्येत्यभेदेनैवोपसंहारात् मध्ये पतितमिदमसंयुक्तं प्रकरणादिति न्यायेनाभेद परमेवेति चेन्न । एकविज्ञानेन सर्वविज्ञानस्य प्राधान्येनैवोपपत्त्या अहं ब्रह्मास्मीत्यस्य ब्रह्मवाक्यत्वेन जीवभेदानुगुणत्वेन च, यत्र त्वस्येत्यस्य भेदपरत्वेन पूर्वमेव व्याख्यातत्वेनोपक्रमोपसंहारयोर्भेदपरत्वेन असंयुक्त मित्यस्य विपरीतत्वेन भेदपरत्वस्यैवोचितत्वादित्यलं पिष्टपेषणेन । अत एव सूत्र विरोधोऽपि सुस्थः । अस्मिन् वाक्ये अन्तरशब्दो भेदवाचीति स्पष्टमेव । इति भेदश्रुतेः षड्विध तात्पर्यलिङ्गानि ।

## न्यायामृतप्रकाशः

साम्यप्रतिपादकोपसंहारस्य भेदपरत्वमुपपादयति ॥ तद्भिन्नत्वेति ॥ नत्विति ॥ तद्भिन्नत्वं विहाय तन्निष्ठबहुधर्मयोगित्वमात्रं न भवतीत्यर्थः । कुतो नेत्यतस्तन्निष्ठबहुधर्मयोगित्वरूपसादृश्यस्यैक्यरूपत्वे बाधकमाह ॥

(प्रकाशः)

नायमित्यादि ॥ नायं स इति सादृश्यविधानायैक्यं निषिध्यते नायं तत्सदृश इति ऐक्यविधानाय सादृश्यं निषिध्यते तन्न युक्तम् । यदि सादृश्यमैक्यं स्यादित्यर्थः अतो भेदगर्भत्वं वाच्यमिति भावः । ननु सादृश्यस्य भिन्नत्वगर्भत्वे "गगनं गगनाकारं सागरः सागरोपम" इत्यादिप्रयोगानुपपत्तिरित्यत आह ॥ गगनमिति ॥ ननु "तयोरन्य" इत्यादीनां शब्दत एकप्रकारत्वाभावात्कथमभ्यासत्वमित्यत आह ॥ अभ्यासत्वे चेति ॥ अतिप्रसङ्गादिति ॥ सास्नादिमद्व्यक्त्यभिप्रायेण पृथिवीवागाद्यभिप्रायेण च प्रयुक्तस्य गौर्गौर्गौरित्यस्याप्यभ्यासत्वापत्तिः शब्दत एकप्रकारत्वसद्भावादित्यर्थः । नन्वन्यमीशमिति कथमभ्यासः । "तयोरन्यः अनश्नन्न्य" इत्यत्र जीवेशयोरन्योन्यमन्यत्वमुच्यते अन्यमीशमित्यत्र तु ईशस्य घटादिना केनचिदन्यत्वमेवोच्यते न तु जीवादतः कथमर्थतोप्येकप्रकारत्वमित्यत आह ॥ पश्यतीति ॥ प्रकृत इति ॥ दर्शनकर्तृत्वेन प्रकृत इत्यर्थः ॥ पदिन्यायेनेति ॥ यथा पदे जुहोतीत्यत्र प्रकृतैकहायिन्येव पदेन्वेति न तु यत्किञ्चित्तद्वदित्यर्थः ॥ ॥ भेदश्रुतेः षड्विधतात्पर्यलिङ्गविवरणम् ॥

## २६. ऐक्यस्वरूपभङ्गः

किं च तिष्ठतु भेदः । ऐक्यम् (१) किमात्मस्वरूपम्? (२) उतान्यत्? नाद्यः, पर्यायत्वैकतरपरिशेषाद्यापत्तेः । सापेक्षस्यैक्यस्य निरपेक्षात्मत्वायोगाच्च । स्वप्रकाशस्यात्मनो विद्यादिसाक्षित्वेन सदा प्रकाशमानत्वेन शास्त्रवैयर्थ्याच्च । न च त्वन्मते अपर्यायत्वादिनिर्वाहको विशेषोऽस्ति । न च भेदभ्रमनिरासार्थं शास्त्रम्, अधिष्ठानाप्रकाशं विना भेदभ्रमस्यैवायोगात् । स्वरूपप्रकाशेन प्रकाशमानेऽप्यात्मन्यज्ञानविरोधिवृत्त्यभावाद्भ्रम इति त्वविद्याविषयभङ्गे निरस्तम् । अन्त्ये ऐक्यं सत्यम्? मिथ्या वा? आद्ये अद्वैतहानिः । अभावद्वैतमभावस्याधिकरणमात्रत्वं च प्रागेव निरस्तम् । भेदाभावोपलक्षित आत्मैक्यमित्यपि न युक्तम् । उपलक्षणीभूतभेदाभावस्य सत्त्वे अद्वैत हानिः, मिथ्यात्वे द्वितीयेऽन्तर्भावात् । न द्वितीयः, तत्त्वमसीत्यादेरतत्त्वापातात् । भेदस्य सत्यत्वापत्तेश्च ।

किं चान्यत्वपक्षे ऐक्यं (१) किमेकत्वसङ्ख्या? (२) तन्निष्ठसकलधर्माश्रयत्वं वा? (३) तन्निष्ठासाधारणधर्माश्रयत्वं वा? (४) भेदाभावो वा? (५) तदनिष्ठधर्मानधिकरणत्वं वा? नाद्याः, निर्धर्मके ब्रह्मणि तत्त्वतः सङ्ख्याद्यभावात् । न चतुर्थः, भेदस्यैक्याभावरूपत्वेनान्योन्याश्रयात् । न पञ्चमः, शून्यस्यापि ब्रह्मैक्यापातात् । विशेषनिषेधशेषाभ्यनुज्ञानेन सधर्मकत्वापाताच्च ।

**किं चाभेदे अभेदत्वपारमार्थिकत्वासद्वैलक्षण्यादीनि तत्त्वतः सन्ति चेत्तैरेव सद्वितीयत्वम्, न चेदभेदत्वादिहानिरिति दिक् ।**

**न चैक्यस्य दुर्वचत्वेऽप्यात्मस्वरूपमात्रमबाधितमिति वाच्यम्, तन्मात्रस्य सम्मतत्वेन त्वच्छास्त्राविषयत्वात् । भेद एवं खण्ड्योऽस्माकं न त्वभेदः साध्य इति तु निरस्तम् । ऐक्यस्वरूपभङ्गः ॥**

अद्वैतसिद्धिः

ननु– ऐक्यं (१) आत्मस्वरूपम्? (२) उतान्यत्? नाद्यः, एकतरपरिशेषाद्यापत्तेः, सापेक्षस्यैक्यस्य निरपेक्षात्मत्वायोगाच्च । नान्त्यः, सत्यत्वे अद्वैतहानेः, मिथ्यात्वे तत्त्वमसीत्यादेरतत्त्वावेदकतापत्तेरिति चेन्न, आद्यमेवानवद्यम् । ज्ञानानन्दयोरात्मैक्येऽपि यथा नैकतरपरिशेषापत्त्यादिकं कल्पितानन्दत्वादिधर्मात् तथा प्रकृतेऽपि संभवाद्, ऐक्ये अभिज्ञेयत्वस्य प्रागुक्तेः तस्यापि निरपेक्षतया निरपेक्षात्मस्वरूपत्वाविरोधाद्, अज्ञानाद्यधिष्ठानतया भासमानात्मस्वरूपत्वेऽपि ऐक्यस्य तद्गोचरवृत्तिविशेषस्याज्ञाननिवर्तकस्य इदानीमसत्त्वात्संसारोपपत्तेः । अन्त्ये पक्षे दोषास्त्वनुक्तोपालम्भा एव ।

अत एव अतिरिक्तमैक्यं । नैकत्वसङ्ख्या, न वा तन्निष्ठाशेषधर्मवत्त्वम्, न वा तन्निष्ठासाधारणधर्मवत्त्वम्, निर्धर्मके ब्रह्मणि तेषामभावात् । नापि भेदविरहः, भेदस्यैक्यविरहरूपत्वेनान्योन्याश्रयात् । नापि तदवृत्तिधर्मानधिकरणत्वम्, शून्यस्यापि ब्रह्मैक्यापातादिति निरस्तम्, तदवृत्तिधर्मानाधारत्वोपलक्षितस्वरूपस्याभेदत्वात् । शून्यस्य निःस्वरूपत्वात् न शून्यस्यैक्यरूपता । न च– तदवृत्तिधर्मनिषेधेन तद्वृत्तिधर्मविधानप्रसङ्गः, विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वादिति वाच्यम्, शेषविधायकत्वस्य सर्वत्रासंप्रतिपत्तेः । अन्यथा वायौ न नीलरूपमित्यस्यापि गौरं प्रति विधायकत्वापातात् ।

ननु– अभेदे अभेदत्वपारमार्थिकत्वासद्वैलक्षण्यादीनि तत्त्वतः सन्ति वा? न वा? आद्ये सद्वितीयत्वापत्तिः 'द्वितीये अभेदत्वादिहानिरिति चेन्न, तत्त्वतः स्वरूपभूतैरेव तैरभेदरूपताया अद्वैतस्य चाहान्युपपत्तेः । न च– एवमभेदस्याबाधितात्मस्वरूपपर्यवसाने तस्य चात्मस्वरूपस्य

(अद्वैतसिद्धिः)

परैरपि संमतत्वेन त्वच्छास्त्राविषयत्वमिति वाच्यम्, जीवावृत्तिधर्मानधिकरणत्वोपलक्षितात्मस्वरूपस्य परैरनङ्गीकारात् । तदेवमुक्ते जीवब्रह्माभेदे 'तत्त्वमसि' स वा अयमात्मा ब्रह्म' इत्यादिश्रुतिर्मानम् । इत्यद्वैतसिद्धौ ऐक्यरूपोपपत्तिः ॥

## न्यायामृततरङ्गिणी

॥ पर्यायस्येति ॥ ननु ज्ञानानन्दयोरात्मैक्येपि यथापर्यायत्वादिकं न कल्पितानन्दत्वादिधर्मात् तथात्मैक्ययोरपीति चेन्मैवम् । कल्पितेनैकतरपरिशेषाभावसम्पादकेन वास्तवैकतरपरिशेषानिवृत्तेः ॥ स्वरूप इति ॥ प्रकाशमानेऽज्ञानायोगादित्यादिना निरस्तमित्यर्थः । शून्यस्येति । ननु तदवृत्तिधर्मानधिकरणत्वस्वरूपमैक्यं शून्यं तु निःस्वरूपमतो न तस्यैक्यत्वम् । मैवम् । स्वरूपत्वादिधर्महीनस्यैक्यस्य सस्वरूपत्ववच्छून्यस्यापि सस्वरूपत्वसौलभ्यात् ॥ विशेषेति ॥ ननु विशेषनिषेधेपि न शेषाभ्यनुज्ञा । वायौ न नीलं रूपमित्यस्य गौरं प्रत्यननुज्ञातत्वात् । मैवम् । विशेषनिषेधशेषाभ्यनुज्ञान्यप्रकारासम्भवे तस्य तथात्वनियमात् । वाय्वादौ तु नीरूपत्वरूपतृतीयप्रकारस्यापि सम्भवात् । आकाशादिवत् । प्रकृते तु तदवृत्तिधर्मानधिकरणत्वतद्वृत्तिर्माधिकरणत्वाभ्यामन्यस्य प्रकारस्यादर्शनेन तदसम्भवात् । ब्रह्मैव तथेत्युक्ते त्वन्योन्याश्रयात् ॥ तन्मात्रस्येति ॥ आत्मस्वरूपमात्रस्येत्यर्थः ॥ ननु जीवावृत्तिधर्मानधिकरणत्वोपलक्षितात्मस्वरूपं परैर्नाङ्गीकृतमतस्तदेव मच्छास्त्रविषयः । मैवम् । उक्तोपलक्षितत्वस्यात्मनि विशेषणत्वे उपलक्षणत्वे च तस्य सखण्डत्वापातात् । ताभ्यां रहितस्यात्मस्वरूपमात्रस्य त्वच्छास्त्राविषयत्वात् ॥ भेद एवेति ॥ अभेदः खण्डयोऽस्मकं न तु भेदः साध्य इत्यस्यापि सुवचत्वात् ॥ ॥ ऐक्यस्वरूपभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

ननु सुनिरूपैक्यपरित्यागेन दुर्निरूप भेदाङ्गीकरणमयुक्तमित्यत ऐक्यस्यात्यन्तदुर्निरूपत्वादैक्याङ्गीकरण मयुक्तमित्याह किञ्चेति । सापेक्षस्येति । न चैक्यं निरपेक्षमेवेति वाच्यम् । ससम्बन्धिकतया प्रतीयमानस्य तत्त्वे भेदस्यापि तत्त्वापत्तेः । ननु यथा गुणगुणिनोरैक्येऽपि न पर्यायत्वादि तथा मन्मतेऽपि स्यादित्यत आह न चेति । मम विशेषेण सर्वस्योपपत्तिः । न च त्वया विशेषोऽङ्गीकर्तुं शक्यते । निर्विशेषत्वाङ्गीकारात् । न च ज्ञानानन्दयोः कल्पितधर्मभेदमादायान्यतरपरिशेषाभाववत् प्रकृतेऽपिकल्पित भेदमादाय परिशेषत्वादि परिहारो भविष्यतीति वाच्यम् । तत्र विशेषेणैव सत्येनापर्यायत्वाद्यङ्गीकारेण दृष्टान्तासम्मतेः । अन्यथा घट करीरादावपि कल्पितभेदमादाय परिहारापत्तौ पर्यायत्वादि क्वापि न स्यात् । ननु स्वरूप-

(कण्टकोद्धारः)

प्रकाशस्य भ्रमाविरोधित्वात् विरोधिभूतायाश्च वृत्तेरभावात् भ्रमोपपत्तिरित्यत आह स्वरूपेति । प्रकाशस्य भ्रमाद्यविरोधित्वे प्रकाशत्वमेव न स्यादित्यादिनेत्यर्थः । स्वरूपप्रकाशः अप्रकाशस्याविरोधीति च व्याहतम् । यथा चैवं सविस्तरमुपपादितम् । तथाच संसारो न स्यात् । अन्त्य इति । न चैते अनुक्तोपालम्भा इति वाच्यम् । विकल्प पूर्वं दूषणे अस्यानवकाशात् । अन्यथा सर्वत्राप्येवं वक्तुं शक्यत्वेन तव विकल्पपूर्वं दूषणं न स्यादिति स्वव्याहतिः । प्रागेवेति । मिथ्यात्वसामान्यभङ्ग इति भावः । भेदाभावेति । तथाच भेदाभावस्यासिद्धतया तदुपलक्ष्यैक्यस्याप्यसिद्धतया न विषयत्वोपपत्तिरिति भावः । तथापि प्राप्ताप्राप्तविवेकेन भेदाभावस्यैव विषयतया तत्रैव विकल्प्य दूषणमाह उपलक्षणीभूतेति । उपलक्षणमेतत् । उपलक्ष्यतावच्छेदकाभावाच्चोपलक्ष्यत्वम् । न चैक्यत्वं जीवब्रह्मैक्यत्वं वोपलक्ष्यतावच्छेदकमिति वाच्यम् । आद्यस्यातिप्रसङ्गित्वात् द्वितीयस्यात्ममात्रस्वरूपस्य पूर्वमेव ज्ञातत्वेनोपलक्ष्यतावच्छेदकत्वानुपपत्तेरित्यादि द्रष्टव्यम् । भेदस्येति । न च विरुद्धयोरन्यतरनिषेधेऽन्यतरविधिरित्यसिद्धम्, वायौ नीलरूपनिषेधेऽपि गौररूपविधेरभावादिति वाच्यम् । परस्परात्यन्ताभावरूपयोर्द्वयोर्मध्ये एकतरनिषेधस्यापरविधिनान्तरीयकत्वनियमात् । नीलगौररूपयोः परस्परात्यन्ताभावरूपत्वाभावात् । भेदाभेदयोस्तथात्वात् । धर्मिसत्व एवायं नियम इत्यादिकं मिथ्यात्व सामान्य भङ्ग एव वर्णितमित्यलम् । शून्यस्यापीति । न च शून्यस्य निःस्वरूपत्वान्न तदैक्यस्वरूपतेति वाच्यम् । सकलधर्मशून्यत्वे स्वरूपत्वधर्माभावेन ब्रह्मणोऽपि सस्वरूपत्वानुपपत्तेः । तैरेवेति । न चाभेदत्वादीनामैक्यस्वरूपत्वेन ऐक्यस्य चात्मस्वरूपत्वेन न सद्वितीयतापादकतेति वाच्यम् । अभेदत्वादीनामभेदरूपत्वे तच्छब्दानां पर्यायत्वाद्यापत्तेः । विशेषानङ्गीकारात् । सोपाधिकनिरुपाधिकयोरैक्यानुपपत्तेश्च । निरस्तमिति । भेदसामान्यखण्डनोद्धार इति शेषः । इति एक्यस्वरूप भङ्गः ।

न्यायामृतप्रकाशः

विशेषनिषेध इति ॥ तदनिष्ठधर्मानधिकरणत्वोक्तौ तन्निष्ठधर्माधिकरणत्वस्यैव प्राप्तिः । विशेषनिषेधः शेषविध्यनुमापक इति न्यायात् । अतः सधर्मकत्वमेव प्राप्तमित्यर्थः । अभेदत्वादीति ॥ अभेदेऽभेदत्वाभावेऽभेदत्वहानिः सोऽभेद एव न स्यादित्यर्थः । तथा तत्र पारमार्थिकत्वाद्यभावेऽपारमार्थिकोऽसंश्च स्यादित्यर्थः ॥ तन्मात्रस्येति ॥ आत्मस्वरूपमात्रस्य भ्रमाधिष्ठानत्वाविद्यासाक्षित्वादिना सिद्धेस्त्वत्सम्मतत्वेन त्वदीयशास्त्रविषयत्वादप्राप्ते शास्त्रमर्थवदिति स्वन्यायादिति भावः ॥ निरस्तमिति ॥ अभेद एव खण्ड्योऽस्माकं न तु भेदः साध्य इत्यपि वक्तुं शक्यत्वादिति निरस्तमित्यर्थः ॥ ॥ ऐक्यस्वरूपभङ्गविवरणम् ॥

## २७. ऐक्यश्रुतेरुपजीव्यबाधः

यच्चेदमुच्यते जीवब्रह्माभेदे ''तत्त्वमसी''त्यादिश्रुतिर्मानम् । यद्यप्यत्र सार्वज्ञ्यासार्वज्ञ्यादिविशिष्टयोस्तत्त्वंपदवाच्ययोरैक्यं जरद्गवादिवाक्यवद्योग्यताविरहान्न युक्तम् । तथापि सोऽयं देवदत्त इत्यादिवद् विरुद्धांशत्यागेन लक्षितयोरैक्यं युक्तम् । उक्तं हि–

युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ।
अनभिज्ञेऽनर्थकं स्याद्बधिरेष्विव गायनम् ॥ इति ।

इयं च नवप्रकरणी षड्विधतात्पर्यलिङ्गवत्त्वात्प्रबला । तथा हि– ''एकमेवाद्वितीय''मित्युपक्रमः, ''तत्त्वमसी''त्युपसंहारः, तत्त्वमसि तत्त्वमसीति नवकृत्वाऽभ्यासः, जीवब्रह्मैक्यस्यान्यतोऽप्राप्तत्वादपूर्वता, ''अथ सम्पत्स्यत'' इति फलम्, ''येनाश्रुतं श्रुतं भवती''त्यादिरर्थवादः, मृत्पिण्डादिदृष्टान्तैरुपपादनादुपपत्तिरपि । एवं विमता आत्मानः परमात्मनः परमार्थतो न भिद्यन्ते आत्मत्वात्, परमात्मवदित्याद्यनुमानानि चेति ।

अत्र ब्रूमः– विरुद्धाकारत्यागः किं अविवक्षामात्रेण? अनित्यत्वेन वा? मिथ्यात्वेन वा? नाद्यः, विरुद्धाकारस्याविवक्षायामप्यनपायात् । न हि ''असद्वा इदमग्र आसीत् सर्वं खल्विदं ब्रह्मे''त्यादि श्रुत्या असत्त्वशून्यत्वयोश्चित्वजडत्वयोर्वा अविवक्षामात्रेण ब्रह्मणः शून्येन जडेन वैक्यं सुवचम् । न द्वितीयः, तथात्वे तत्त्वं भविष्यसीति निर्देशापत्त्याऽसीतिवर्तमाननिर्देशायोगात् । दशाभेदेन भेदाभेदयोः सत्त्वापत्त्या त्वयाप्यनङ्गीकाराच्च, जीवेशयोः स्वातन्त्र्यपारतन्त्र्यादेर्नित्यत्वे श्रुत्यादेरुक्तत्वाच्च । न तृतीयः, निर्दोषश्रुतिसाक्षिसिद्धयोर्विरुद्धधर्मयोर्मिथ्यात्वायोगादित्युक्तत्वात् । सोऽयमित्यादौ तु तत्तादेर्न त्यागः क्रमेणैकत्र तत्तेदन्तयोरविरोधादित्युक्तम् ।

किं चैक्यश्रुत्या प्रत्यक्षसिद्धं जीवमनूद्य तस्य ब्रह्मत्वं वा, श्रुतिसिद्धं ब्रह्मानूद्य जीवत्वं वा, उभयानुवादेनाभेदो वा विधेयः, सर्वथाप्युपजीव्यविरोधान्नैक्ये प्रामाण्यम्, प्रत्यक्षेण जीवस्य ब्रह्मतो भिन्नत्वेन श्रुत्या च सर्वज्ञत्वादिना ब्रह्मग्राहिण्या ब्रह्मणस्तद्धीनत्वेनानुभूयमानाज्जीवाद्भिन्नत्वेन ग्रहणात् । उपजीवकयोर्हि विरोधे न तावद्द्वयोः प्रामाण्यं वस्तुनो द्वैरूप्यापातात् । नापि द्वयोरप्रामाण्यं वस्तुनो निःस्वभावत्वापातात् । नाप्युजीव्यस्यैवाप्रमाण्यम्, दुर्बलेन प्रबलबाधायोगात् । तस्मात्परिशेषादुवजीवकस्यैवाप्रमाण्यम् । तदुक्तम्–

शास्त्रगम्यपरेशानाद्भेदः स्वात्मन ईयते ।
अनुभूतिविरोधेन कथमेकत्वमुच्यते ॥
सार्वज्ञ्यादिगुणं जीवाद् भिन्नं ज्ञापयति श्रुतिः ।
ईशं तामुपजीव्यैव वर्तते ह्यैक्यवादिनी ॥ इति ।

ईश्वरस्यानुमेयत्वेऽप्युपजीव्यविरोध एव, अनुमित्यापि तस्य सर्वज्ञत्वादिनैव सिद्धेः । न चैवं निषेध्यार्पिका इदंरूप्यमितिधीरपि नेदं रूप्यमित्यस्योपजीव्या स्यादिति वाच्यम्, यद्धि यदपेक्षं यस्य बाधे स्वस्यापि बाधापत्तिश्च, तत्तस्योपजीव्यमिह तच्च यद्धर्म्यादिग्राहकं स्वप्रामाण्यादिग्राहकं च तदेव, न तु निषेध्यार्पकम् । न हि ब्रह्मरूपधर्मिज्ञानाप्रामाण्ये च ब्रह्मात्मैक्यज्ञानाप्रामाण्यवत् प्रतिषेध्यज्ञानाप्रामाण्ये प्रतिषेधज्ञानाप्रामाण्यं प्रतिषेधशास्त्रविपरिलोपापातात् । न चेदं रूप्यमितिधीरपि धर्मिग्राहित्वेनैवोपजीव्या, धर्मिण इदमंशस्यापि नेदं रूप्यमिति प्रत्यक्षेणैव सिद्धेः । न च जीवोऽपि तत्त्वमस्यादिवाक्यसिद्धः, अप्राप्ते शास्त्रस्यार्थवत्त्वात् । अस्तु वेदं रूप्यमिति धीरपि धर्मिग्राहकत्वेनोपजीव्या तथापि नेदमित्यत्रेदमंशमात्रं धर्मि, न तु रजतत्वविशिष्टम्, इदमंशमात्रे रूप्यत्वनिषेधेनैवेष्टसिद्धेः । एवं च यदुपजीव्यं तन्न बाध्यम्, इदमंशस्याबाधात् । यच्च बाध्यं रजतत्ववैशिष्ट्यम्, न तदुपजीव्यम्, रजतत्वविशिष्टस्याधर्मित्वात् । नन्वेवमैक्येऽपि ब्रह्मस्वरूपमात्रं धर्मि, न तु सार्वज्ञ्यादिविशिष्टम् । एवं च यदुपजीव्यं न तद्बाध्यं यच्च बाध्यं न तदुपजीव्यमिति चेत्, किं सार्वज्ञ्यादिना भावरूपेणासंसारित्वादिनाऽभावरूपेण वाऽसाधारणधर्मेण ब्रह्मोद्देश्यम्? चित्त्वादिना साधारणधर्मेण वा? स्वरूपेणैव वा? आद्ये सुस्थ उपजीव्यविरोधः । द्वितीये चित एव जीवैक्यं सिद्ध्येत्, न तु ब्रह्मणः । तच्च तवापि सम्मतम् । न तृतीयः, शब्देनासाधारणब्रह्मस्वरूपोद्देशस्यासाधारणधर्मेण विनाऽसिद्ध्योपजीव्यविरोधतादवस्थ्यात् । साधारणस्वरूपोद्देशे च ब्रह्मैक्यासिद्धेः ।

एतेन न सार्वज्ञ्यादिवाक्यसिद्धं ब्रह्म धर्मि, किं तु निर्गुणादिवाक्यसिद्धमिति निरस्तम् । तत्सिद्धस्याप्युक्तपक्षाबहिर्भावात् । निर्गुणादिवाक्येनापि धर्मिग्राहक-

विरोधेन गुणनिषेधासम्भवाच्च । एतेन सार्वज्ञ्याद्युपलक्षितो धर्मीति निरस्तम्, जीवव्यावृत्तब्रह्मत्वस्योपलक्ष्यतावच्छेदकत्वे धर्मिग्राहकविरोधात् । चित्त्वस्य तत्त्वे सिद्धसाधनात् । सोऽयं देवदत्त इत्यादौ तु तत्ताविशिष्ट एवोद्देश्यः । यद्वत्तया ज्ञात एव यदन्वयधीः तत्त्वरूपस्य विशेषणत्वस्य तत्तादौ सम्भवादित्युक्तम् । न च प्रकृतेऽपि संसारित्वेन ज्ञाते ब्रह्मैक्यधीः, तज्ज्ञानस्य प्रमात्वे ब्रह्मैक्यायोगात् । भ्रमत्वे चोपजीव्यस्योपजीवकेन बाधापातात् । पुरोडाशकपालेन तुषानुपवपती त्यत्राधिष्ठानलक्षणायामपि न दोषः । तत्र तुषोपवापस्यान्यतोऽप्राप्त्या तत्र तुषोप-वापविधानेनैवेष्टसिद्धिः । इह तु चितो जीवैक्येन नेष्टसिद्धिः ।

एवं च– चिताचिदैक्यं सिद्धं नः सार्वज्ञ्यादिविशिष्टयोः ।
ऐक्यं तु धर्मिग्राहिभ्यां श्रुत्याक्षाभ्यां विरुध्यते ॥

अन्यथा परमाणुः सावयवः, ईश्वरोऽसर्वज्ञः आदित्यो यूप इत्यादावप्यु-जीव्यविरोधो न स्यात् । उत्पत्तिशिष्टगुणविरुद्धगुणविधेरुत्पत्तिवाक्यविरोधश्च न स्यात् । तत्रापि परमाणुत्वादिविशिष्टो न धर्मी, किन्तु स्वरूपमात्रमिति सुवच-त्वात् । निरवयवत्वादिना विना परमाण्वादेर्धर्मिकरणमेव न सिद्ध्यतीति चेत्, समं प्रकृतेऽपि । सर्वज्ञत्वादिना विनेश्वरस्यापि धर्मिकरणासिद्धेः । आरोपितेन सार्वज्ञ्या-दिना व्यावृत्तं धर्मीति चेत्, तत्राप्यारोपितेन निरवयवत्वादिना व्यावृत्तो धर्म्यस्तु । निरवयवत्वादिग्राहिणः प्रमाणत्वान्न तथेति चेत्समं प्रकृतेऽपि । एतेनैक्यश्रुते-र्जीवान्यद् ब्रह्म नास्तीत्यत्र तात्पर्यमिति निरस्तम् । निरीश्वरवादान्तर्भावेन बहु-श्रुतिविरोधात् । यदि तु सार्वज्ञ्यासार्वज्ञ्यादिके विरुद्धधर्मे सत्यपि चित्त्वादिनैक्यं विवक्षितम्, तन्ममापि सम्मतम् । एतेनैक्यश्रुतेर्लक्षणया चिन्मात्रपरत्वेनैक्य-परत्वाभावान्न तस्या धर्मिग्राहकत्वेन श्रुत्यादिकमुपजीव्यं न वा तद्विरोध इति निरस्तम् । इष्टापत्तेः । यद्वा येन विना यस्यानुत्थानम्, तत्तस्योपजीव्यम्, इदं रूप्यमितिधीश्च प्रतिषेध्यार्पकतयोपजीव्यैव, तथापि न दोषः, न ह्युपजीव्यत्वमेव प्राबल्ये तन्त्रम्, किं तु परीक्षितत्वविशिष्टम् । न चाविशिष्टस्य व्यभिचाराद्विशिष्ट-

मप्रयोजकं भवति । परीक्षा च न तावत्प्रतिषेध्यार्पकशुक्तिरूप्याभेदज्ञानांशेऽस्ति, त्वन्मतेऽपि तस्य व्यावहारिकप्रामाण्यापातात् । इह तु निषेध्यार्पिकापि भेदश्रुतिः साक्षिप्रत्यक्षं च निर्दोषत्वात्परीक्षितम् । इत्थमेव च दोषाभावादिज्ञानरूप-परीक्षायामनाश्वासे प्रमाणतदाभासव्यवस्था न स्यादित्युक्तं प्रत्यक्षप्राबल्यप्रस्तावे । यद्यपि धर्म्यर्पके इदंज्ञानांशे परीक्षितत्वविशिष्टमुपजीव्यत्वमस्ति, तथापि न तद्बाध्यमित्यनुपदमेवोक्तम् । तदुक्तम्–

भ्रमेऽप्यभ्रमभागोऽस्ति तन्मात्रमुपजीव्यतु ।
बाधकज्ञानवृत्तिः स्यान्न चैवं सुपरीक्षितः ॥ इति ।

तस्मादुपजीव्यविरोधाद्–

उत्पत्तिवाक्यविज्ञातं कर्म सर्वमनूद्यते ।
न चाश्रितगुणे शक्यं तद्विरोधि गुणान्तरम् ॥

इति वार्तिकोक्तरीत्या आमिक्षावाक्योपजीवकस्य वाजिनवाक्यस्य तद्विरोधिगुण-विधायकत्ववत् प्रत्यक्षोपजीवकस्य ''यजमानः प्रस्तर'' इत्यादेस्तद्विरुद्धयजमान-त्वबोधकत्ववच्च ''तत्त्वमस्या''दि वाक्यस्य नैक्यबोधकता युक्ता । तदुक्तम्–

यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत् ।
ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषतः ॥ इति ।

यजमानप्रस्तारादिवाक्यादैक्यश्रुतेर्वैषम्यशंका तु प्रत्यक्षस्य शब्दाबाध्यत्वप्रस्तावे निरस्ता । नैवं भेदश्रुतेरैक्यश्रुतिरुपजीव्या, धर्मिणो जीवस्य प्रत्यक्षेण ईश्वरस्य च सर्वज्ञादिवाक्ये शब्दधीप्रामाण्यादेश्च प्रत्यक्षेणैव सिद्धेः । तस्य च सर्वस्य भेदानु-गुणत्वात्प्रतिषेध्यार्पकविरोधस्य च प्रतिषेधशास्त्रप्रामाण्यानापादकत्वादित्युक्तत्वात् । श्रुतिं विनैवैक्यप्राप्तेर्वक्ष्यमाणत्वाच्च । ऐक्यश्रुतेस्तु निषेध्यप्रसक्तिर्भेदश्रुतिप्रत्यक्षा-भ्यामेव । त्वत्पक्षे हि भेदश्रुतिरपि निषेध्यार्पिकैव, न तु सत्यचिन्मात्रपरा, तत्त्वा-वेदकत्वापत्तेः । निषेध्यार्पकमपरीक्षितं चेन्न, बाध्यमित्युक्तम् । एतेन–

**अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा ।**
**तथा चाऽऽद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्ष्यवैशसात् ॥**

**इति निरस्तम् । तदुक्तं नोपजीव्यो ह्यभेदोऽत्र क्वचिद्भेदश्रुतेर्बलादिति । ऐक्यश्रुतेरुपजीव्यबाधः ॥**

## अद्वैतसिद्धिः

ननु– सार्वज्ञ्यासार्वज्ञ्यादिविशिष्टयोरैक्यमयोग्यत्वपराहतं कथमुदाहृतश्रुत्या बोध्यमिति चेन्न, सोऽयमित्यादाविव विरुद्धाकारत्यागेन शुद्धाकारैक्यबोधनात् । ननु विरुद्धाकारत्यागः किमविवक्षामात्रेण? उतानित्यत्वेन? उतमिथ्यात्वेन? नाद्यः, विरुद्धाकारस्याविवक्षायामप्यनपायात् । न हि 'असद्वा इदमग्र आसीत्सर्वं खल्विदं ब्रह्मेत्यादिश्रुत्या सत्त्वशून्यत्वयोश्चित्त्वजडत्वयोर्वेहाविवक्षामात्रेण ब्रह्मणः शून्येन जडेन च ऐक्यं सुवचम् । न द्वितीयः, तत्त्वं भविष्यसीति निर्देशापत्त्या असीति वर्तमाननिर्देशायोगाद्, दशाभेदेन भेदाभेदयोः सत्त्वापत्त्या त्वयाप्यनङ्गीकाराच्च, जीवेशयोः स्वातन्त्र्यपारतन्त्र्यादेर्नित्यत्वाच्च । न तृतीयः, निर्दोषश्रुतिसाक्षिसिद्धयोर्विरुद्धधर्मयोर्मिथ्यात्वायोगादिति चेन्न, विरुद्धाकारस्याविवक्षयैव त्यागात् । त्यागश्च ब्रह्मानुभवाविषयत्वम्, न त्वपायः, तस्य चरमसाक्षात्कारसाध्यत्वात् । तथा च तत्तेदन्ते इवानपेते अपि सार्वज्ञ्यासार्वज्ञ्ये नाश्रयाभेदविरोधाय । अविवक्षा च प्रधानप्रमेयनिर्वाहाय । न च– सोऽयमित्यत्र तत्तेदन्तयोर्न त्यागः । क्रमेणैकत्र तयोरविरोधादिति वाच्यम्, अभेदपरे अस्मिन्विशेषणयोरैक्यापत्त्या क्रमेणैकत्र सत्त्वेऽपि तत्त्यागस्यावश्यकत्वात्, 'असद्वे'त्यादौ 'सर्वं खल्विदं ब्रह्मे'त्यादौ च न शून्यजडैक्यापत्तिः शून्यसतोः चिज्जडयोर्वा विरुद्धाकारपरित्यागेन जीवब्रह्मणोरिवानुस्यूतस्याकारस्याभावाद् । असतो निःस्वरूपत्वाज्जडस्य बाध्यस्वरूपत्वात् । इत्यद्वैतसिद्धौ जीवब्रह्माभेदे प्रमाणम् ।

ननु– ऐक्यश्रुत्या प्रत्यक्षसिद्धं जीवमनूद्य ब्रह्मत्वं वा बोधनीयं, श्रुतिसिद्धं ब्रह्मानूद्य तस्य जीवत्वं वा, उभयानुवादेनाभेदो वा विधेयः, सर्वथाप्युपजीव्यविरोधात् नैक्ये प्रामाण्यम्, प्रत्यक्षेण जीवस्य ब्रह्मभिन्नत्वेन श्रुत्या च सर्वज्ञत्वादिमद्ब्रह्मग्राहिण्या तद्धीनत्वेनानुभूयमानाज्जीवाद् भिन्नत्वेन ब्रह्मणोऽज्ञायमानत्वात् । न चानुमानेन ब्रह्मोपस्थितिः, तेनापि

(अद्वैतसिद्धिः)
सर्वज्ञत्वादिना ब्रह्मणो विषयीकरणेन उपजीव्यविरोधतादवस्थ्यादिति चेन्न । शक्तिग्रहादौ तयोरुपजीव्यत्वेऽपि स्वप्रमेयेऽनुपजीव्यत्वात् । तदुक्तं वाचस्पत्ये– 'यत् उपजीव्यं, तन्न बाध्यते, यद्बाध्यते तन्नोपजीव्यमिति । यथाकथंचिदपेक्षामात्रेणोपजीव्यत्वे नेदं रजतमित्यत्रापि इदं रजतमित्यस्योपजीव्यतापत्तेः ।

ननु– यद्धि यदपेक्षं यस्य बाधे स्वस्य बाधापत्तिश्च तत्तस्योपजीव्यम्, प्रकृते च धर्म्यादिग्राहकस्यैव स्वप्रामाण्यग्राहकतया तद्बाधे स्वबाधापत्तिः, निषेध्यार्पणस्थले तु न तथा । न हि ब्रह्मस्वरूपधर्मिज्ञानाप्रमाण्ये ऐक्यज्ञानाप्रामाण्यवत् प्रतिषेध्यज्ञानाप्रामाण्ये प्रतिषेध-ज्ञानाप्रामाण्यम्, प्रतिषेधशास्त्रविलोपप्रसङ्गादिति चेत्, सत्यम्, सार्वज्ञ्यादिविशिष्टं न तावद्धर्मि, किन्तु ब्रह्मस्वरूपमात्रम् । विशिष्टधर्मिज्ञानप्रामाण्यं ऐक्यज्ञानप्रामाण्ये नापेक्ष्यते, किन्तु स्वरूपज्ञानप्रामाण्यमात्रम् । अन्यथा 'इदं रजत'मित्यस्यापि धर्मिज्ञानत्वेन उपजीव्यतया निषेधज्ञानप्रामाण्ये रजतत्वविशिष्टेदं ज्ञानप्रामाण्यं स्यात् । रजतत्ववैशिष्ट्यस्य धर्मित्वा-प्रयोजकत्ववत् सार्वज्ञ्यादिवैशिष्ट्यस्यापि तदप्रयोजकत्वस्य प्रकृतेऽपि समानत्वात् ।

ननु– एवमसाधारणसार्वज्ञ्यादिधर्मावच्छेदेन ब्रह्मणोऽनुद्देश्यत्वे साधारणधर्मेण स्वरूपेण वा उद्देश्यता वाच्या । तत्राद्ये इष्टापत्तिः, चित्त्वादिसाधारणधर्मैक्यस्यास्माभिरप्यङ्गीकाराद् । द्वितीये ब्रह्मैक्यासिद्धिः, साधारणस्वरूपमात्रोद्देशादिति चेन्न । ब्रह्मैक्यासिद्धिरित्यत्र ब्रह्म-शब्देन सार्वज्ञ्यादिविशिष्टं चेदभिमतम्, तदेष्टापत्तिः, तदा त्वमा च लक्षितयोरेव पदार्थ-योरैक्यबोधस्य प्राक् प्रतिपादितत्वात् । अत एव शब्देन असाधारणब्रह्मस्वरूपोद्देशस्या-साधारणधर्मेण विनाऽसिद्धेरुपजीव्यविरोधतादवस्थ्यमिति निरस्तम्, असाधारणधर्मस्य उद्देश्य-समर्पणे उपलक्षकत्वात् । न च– उपलक्ष्यतावच्छेदकाभावे उपलक्ष्यत्वासिद्धिः, चित्त्वस्य तत्त्वे सिद्धसाधनादिति वाच्यम् । स्वरूपोपलक्षण उपलक्ष्यतावच्छेदकस्यानपेक्षणात् । यत्तु चित्त्वे-नैक्ये सिद्धसाधनम्, तन्न । चित्त्वैक्यस्येष्टत्वेऽपि तदाश्रयैक्यस्य तवानिष्टत्वाद्, इष्टौ चावि-वादात् । अत एव– 'पुरोडाशकपालेन तुषानुपवपतीत्यत्राधिष्ठानलक्षणायाम् अन्यतोऽप्राप्त-तुषोपवापविधानरूपेष्टसिद्धिवदत्र न लक्षणयाभीष्टसिद्धिः, येन लक्षणा स्यादिति निरस्तम् । चित्त्वैक्यस्य प्राप्तत्वेऽपि आश्रयैक्यस्याप्राप्तस्य लक्षणाप्रापणीयस्य सत्त्वात्, सोऽयमित्यत्रापि उक्तप्रकारस्यावश्यवाच्यत्वात् । न च तत्ताविशिष्टस्य तत्रोद्देश्यता यद्वत्तया ज्ञात एव यदन्वयधीः, तत्त्वस्य विशेषणत्वस्य तत्तादौ संभवादिति वाच्यम्, दत्तोत्तरत्वात् ।

(अद्वैतसिद्धिः)

ननु– एवं परमाणुः सावयवः, ईश्वरो न सर्वज्ञः, आदित्यो यूप इत्यादावुपजीव्यविरोधो न स्याद्, उत्पन्नशिष्टगुणविधौ सगुणोत्पत्तिवाक्यविरोधश्च न स्यात्, तत्रापि परमाणुत्वादि-विशिष्टं न धर्मी, किन्तु स्वरूपमात्रमिति सुवचत्वादिति– चेन्न, परमाण्वादेः स्वरूपेणापि सावयत्वादिकं प्रति धर्मित्वे परमाणुत्वादिकं धर्मिसमानसत्ताकं परमाण्वादौ न स्यात्, तदीय-समसत्ताकत्वस्य तत्सावयवत्वबोधकप्राबल्याधीनत्वात्, तत्प्राबल्येऽनुमानाभावात्, प्रत्युत भ्रान्तवाक्यत्वेन दुर्बलत्वात् । आदित्यो यूप इत्यत्राभेदो न प्रमेयः । स्तुतिद्वारान्यशेषत्वात्, स्तुतेश्च प्रत्यक्षाविरुद्धैर्गुणैरपि संभवे प्रत्यक्षविरुद्धार्थकल्पनायोगाद्, उत्पन्नशिष्टगुणविधौ तूत्पत्तिवाक्यस्थितामिक्षादिपदस्य द्रव्यसामान्यपरत्वे तत्पदवैयर्थ्यापत्तिः, 'तद्धितार्थान्तर्गता-स्येति सर्वनाम्ना यजतिचोदनाद्रव्यदेवताक्रियमिति न्यायेन यागचोदनमात्रेण च द्रव्यसामान्य-लाभात् । प्रकृते अनन्यशेषतया प्रबलत्वात् प्रमाणवाक्यत्वाच्च तद्विरोध्यैक्यप्रतिपादकतया स्वरूपलक्षणाया युक्ततमत्वाच्च ।

ननु– रूप्यरूपनिषेध्यार्पकस्यापेक्षितस्यापि परीक्षितत्वाभावाद्, यद्यपि दुर्बलत्वम्, उप-जीव्यत्वमात्रस्य प्राबल्याप्रयोजकत्वात्, तथापीह निषेध्यार्पकभेदश्रुतिः, साक्षिप्रत्यक्षं च निर्दोषत्वात् परीक्षितमपि प्रबलं तद्विरोधात् कथमैक्यपरत्वमिति– चेन्न, निर्दोषाया अपि श्रुतेः भेदपरत्वस्यैवाभावेन तद्विरोधस्यैक्यश्रुतावसंभवावितत्वात् । न हि श्रुतेरुपक्रमादिषड्विध-तात्पर्यलिङ्गशून्यार्थपरत्वम्, तन्नियामकाभावात्, अन्यथाऽतिप्रसङ्गात्, साक्षिणोऽपि निर्दोषत्व-मात्रेण परीक्षितत्वाभावाद्, दुःखाभावादावारोपितसुखादेरपि प्रामाणिकत्वापत्तेः, मन्मते प्रातिभासिकमात्रस्य साक्षिसिद्धस्य मिथ्यात्वात्, साक्षिणोऽपि निर्दोषजवृत्त्युपरक्तत्वेना-बाध्यत्वासिद्धेरुक्तत्वाच्च । प्रमाणतदभावव्यवस्थापि प्रातिभासिकव्यावहारिकयोः करणसंसर्गि-दोषप्रयुक्तत्वाप्रयुक्तत्वाभ्याम्, व्यावहारिकस्य चैतन्यमात्रस्याज्ञानदोषप्रयुक्तत्वात् । तस्मादुप-जीव्यविरोधाभावात्, प्रत्युताभेदश्रुतेरेव सर्वशेषितया भेदश्रुतिं प्रत्युपजीव्यत्वाद्, भेदश्रुतेरेव तद्विरोधेन तदनुकूलतया नेयत्वात् सर्वविरोधशून्यं तत्त्वमस्यादिवाक्यम् । तथा चैक्यपरमिति सिद्धम् ॥ इत्यैक्यश्रुतेरुपजीव्यविरोधाभावः ॥

## न्यायामृततरङ्गिणी

**॥ विरुद्धाकारस्याविवक्षायामपीति ॥ अविवक्षामात्रेण वस्तुनोऽन्यथात्वाभावात् । ननु त्यागो नाम नाप्ययः । अप्ययस्य चरमसाक्षात्कारसाध्यत्वात् । किन्तु ब्रह्मानुभवा-**

(तरङ्गिणी)

विषयत्वमित्यत आह ।। न हीति ।। सुवचं हि सत्वशून्यत्वयोश्चित्त्व जडत्वयोश्चाविवक्षया सच्छून्याभेदानुभवं प्रति चिज्जडाभेदानुभवं च प्रत्यविषयत्वमात्रेण सच्छून्ययोश्चिज्जड-योश्चाभेदसिद्धिरिति । ननु सच्छून्ययोश्चिज्जडयोर्विरुद्धाकारपरित्यागे आकारान्तराभावः । असतो निःस्वरूपत्वात् । जडस्य चाध्यस्तरूपत्वात् । मैवम् । सर्वज्ञत्वनिर्दुःखत्वादिधर्मिग्राहक-मानसिद्धाकारपरित्यागे ब्रह्मण्यप्याकाराभावाच्चित्तादिप्रकारत्यागे चिदाकारस्याप्यसम्भवाज्जीवे प्रत्यक्षबाधितस्य ब्रह्मगतपूर्णानन्दाकारस्यापि त्यक्तव्यत्वेन पूर्णानन्दैक्यासिद्धेश्च । किञ्च । विरुद्धाकारसंत्यागो यद्यैक्यस्योपपत्तये तद्यैक्यं त्यज मुख्यस्य विरुद्धस्योपपत्तये । तच्च ममापि सम्मतमिति । ननु चित्त्वैक्ये तव सम्मतावपि न तदाश्रयैक्येपि सम्मतिः । मैवम् । चितोपि चित्त्वाश्रयस्वाभेदेन चित्त्वाश्रयैक्येपि मम सम्मतेः । न हि घटो घटत्वाश्रयाभिन्न इत्युक्ते घटान्तरेणाभेदश्चायाति । येनेदं वाक्यं ममासम्मतार्थं स्यात् ।। पुरोडाशकपालेनेति ।। दर्शपूर्णमासयोः श्रूयते पुरोडाशकपालेन तुषानुपवपतीति । अत्र पुरोडाशकपालशब्देन पुरोडा-शरूपविशेष्यान्विततयोपस्थितस्य तुषोपवापलक्षणशेषान्तरेणाकाङ्क्षाविरहात् अन्वयासम्भव-लक्षणस्य विनियुक्तविनियोगदोषस्य परिहाराय पुरोडाशकपालशब्दस्य वस्तुतः पुरोडाशश्रपण-शेषत्वाधिष्ठानैककपालस्वरूपे लक्षणेति वर्णितं चतुर्थाध्याये ।। इहत्विति ।। जीवस्यापि चित्त्वेन चिदभेदस्य मयाप्यङ्गीकारादित्यर्थः ।। अन्यथेति ।। धर्मिग्राहकविरोधस्योपजीव्यविरोधाभावे ।। उत्पत्तिशिष्टेति ।। वैश्वदेव्यामिक्षावाजिभ्यो वाजिनमित्यत्रोत्पत्तिशिष्टामिक्षारूपगुणावरुद्धे यागे उत्पन्नशिष्टवाजिरूपगुणस्यानन्वयः । उत्पत्तिवाक्यविरोधादिति यदुच्यते मीमांसकैः तदपि तव मते न स्यादित्यर्थः ।। एतेनैक्यश्रुतेरिति ।। तत्त्वमस्यादिश्रुतेर्धर्मिग्राहकरूपत्वान्न तस्याः धर्मिग्राहकश्रुत्यन्तरापेक्षेत्यर्थः ।। एतेनाभेदंनोल्लिखन्तीधीरिति ।। भेदग्राहकं प्रत्यभेदग्राहक-स्यानुपजीव्यत्वेन । अभेदं गृह्णन् ज्ञानभेदं गृह्णाति । भेदस्याभेदपूर्वकत्वात् । एवं चाभदांशे सा भेदप्रतीतिः प्रमा स्यात् । न तु भेदांशे । स्वापेक्ष्यवैशसात् । स्वोपजीव्यस्य नाशनादित्यर्थः ।। बलादिति ।। भेदश्रुतेर्बलवत्त्वात् ।। ।। ऐक्यश्रुतेरुपजीव्यबाधः ।।

## न्यायामृतकण्टकोद्धारः

ननु जीवब्रह्मैक्यं नोक्तविकल्पपांसुभिर्निराकर्तुं शक्यम् । तत्वमसीत्यादि सतात्पर्यक श्रुतिसिद्धत्वात् । श्रुतिसिद्धेऽर्थे तर्काणामाभासत्वात् । अन्यथाऽलौकिकवस्तुसिद्धिः क्वापि न स्यात् । तत्रापि कुतर्क-सम्भवादित्यतस्तत्वमसीति वाक्यं न जीवब्रह्मैक्यपरं, किन्तु भेदपरमिति प्रतिपादयितुं परमतमनुवदति यच्चेदमिति । यद्यप्यभ्यर्हितं पूर्वमिति ब्रह्मशब्दस्य पूर्वनिपातेन भवितव्यम् । तथापि अत्र वाक्ये

(कण्टकोद्धारः)

जीवस्योद्देश्यतेति द्योतयितुं जीवस्य पूर्वनिपातः । आदिशब्देनैतदात्मप्रकरणस्थानि ऐतदात्म्यमित्यादीनि ग्राह्याणि । नन्वनेन जीवब्रह्म भेदो बोधयितुं न शक्यते, विशिष्टाभेदयोग्यताविरहात्, प्रकारान्तरस्य चाभावात् इत्याशङ्क्य परिहरति यद्यपीति । सोयमिति मायिमतानुसारेण दृष्टान्त इति ज्ञातव्यम् । उक्तं हीति । युष्मदस्मच्छब्दयोर्विरुद्धाविरुद्ध वाच्यलक्ष्यरूपार्थद्वयविभागज्ञ इत्यर्थः । यद्यप्यत्रास्मच्छब्दो नास्ति । तथाप्यहं ब्रह्मास्मीत्यत्रास्मच्छब्दस्य विद्यमानत्वात् तदभिप्रायेणेदमुक्तम् । ननु भेदवाक्यविरोधान्नेदम-भेदपरमित्यत आह इयं चेति । तथाच प्रबलत्वादनेन भेदवाक्यबाध इति भावः । अन्यथा इति । श्रुत्यननु गृहीत प्रत्यक्षादिनेत्यर्थः । प्रत्युत ब्रह्मभेदस्यैव प्रत्यक्षादिना ज्ञानादित्यर्थः । एवमिति । यद्यप्यनुमानगम्यत्वे नेन्द्रियाणि नानुमानमित्यादि श्रुतिविरोधः । तथापि तत्र केवलानुमानगम्यत्वनिषेधात् । प्रकृते च श्रुत्यनुग्रहस्योक्तत्वाददोषः । आदिपदेन जीवः परमात्मनो न भिद्यते तदंशत्वात् मत्स्यादिवदित्यादिकं च द्रष्टव्यम् । च शब्देन मानमित्यस्यानुकर्षः । विरुद्धेति । न च प्रधानप्रमेयनिर्वाहाय विरुद्धांशत्याग इति वाच्यम् । अन्योन्याश्रयात् । ऐक्यस्य प्रधान प्रमेयत्वसिद्धौ तन्निर्वाहाय विरुद्धांशत्यागः । विरुद्धांशत्यागे च ऐक्यस्य प्रधानप्रमेयतेति । न हीति । नचेष्टापत्तिरिति वाच्यम् । शून्यब्रह्मैक्याङ्गीकारेऽपसिद्धान्तापातात् । यथाकथंचिदैक्यस्य जीवब्रह्मणोरप्यङ्गीकृतत्वेनेष्टापत्तेः । तथात्व इति । न च वर्तमानसामीप्य इति सूत्रात् वर्तमानवत् प्रत्यय इति वाच्यम् । वर्तमान सामीप्यस्यानिर्णयात्, तन्निर्णयवति सूत्रप्रवृत्तेः । अन्यथा सर्वत्र वर्तमानसामीप्यसम्भवात् वर्तमानप्रयोगापत्तेः । दशेति । भेदसत्वानङ्गीकारेऽभेदस्यापि तत्र स्यादविशेषादिति भावः । जीवेशयोरिति । सगुणवाद इति भावः । तथा च नानित्यत्वेनैक्योपपत्तिरिति भावः । निर्दोषेति । न च श्रुतेस्तत्र न तात्पर्यमिति वाच्यम् । अतात्पर्ये ज्ञापकाभावात् । तात्पर्यज्ञापिकाया अपूर्वतायाः सत्वात् । ननु सोऽयमित्यादेर्विरुद्धाकारात्यागे कथमैक्यावगतिरित्यत आह सोयमिति । न चाभेदपरेऽस्मिन् वाक्ये विशेषणात्यागे तयोरैक्यापत्तिरिति वाच्यम् । यथा विशषणयोर्नैक्यापत्तिः तथोक्तमखण्डार्थ वादे । क्रमेणेति । एतदपि तत्रैवोपपादितं द्रष्टव्यम् । श्रुत्याचेति । न च प्रत्यक्षेण जीवग्राहिणा भवतु भेदग्रहः । प्रतियोगितावच्छेदकप्रकारक प्रतियोग्युपस्थितौ तत्प्रतियोगिक भेदस्य धर्मिस्वरूपग्राहिणा ग्रहसम्भवात् । श्रुत्यातु धर्मिस्वरूपग्राहिण्या कथं भेदग्रहः? न तावत् पदार्थत्वेन । यः सर्वज्ञ इत्यादौ भेदस्यापदार्थत्वात् । नापि संसर्गत्वेन । सार्वज्ञ्य धर्मिसंसर्गस्यैव तत्त्वात् । भेदस्यातथात्वात् । अतथाभूतस्य च शाब्दबोध-विषयत्वेऽपि प्रसङ्गात् । न च भेदस्य धर्मिस्वरूपत्वात् तद्ग्रह एव भेदग्रह इति वाच्यम् । तादृश-भेदज्ञानस्याभेदज्ञानाविरोधित्वात् । अन्यथा रजतभ्रमानुपपत्तेः । न च प्रत्यक्षेण प्रतियोग्युपस्थितौ तत्प्रतियोगिक भेदग्रहवत् श्रुत्यापि ग्रहः किं न स्यादिति वाच्यम् । प्रत्यक्ष उपनीत भानाभ्युपगमेन, श्रुतौ तथात्वाभावादिति चेन्मैवम् । वह्नितात्पर्यक धूमवद्वाक्यस्य वह्न्यर्थकत्ववद् भेदतात्पर्यक सार्वज्ञ्य वाक्यस्यापि भेदार्थत्वोपपत्तेः । तथा च भेदतात्पर्यात् भेदस्य तदर्थत्वम् । अन्यथा सार्वज्ञ्यस्य तद्धेतोः प्रतिपादनानुपपत्तेः । तात्पर्यनिर्वाहश्च शक्त्या लक्षणया वेत्यन्यदेतत् । यद्वा श्रुत्यर्थ सार्वज्ञ्यानुपपत्ति-सिद्धत्वात् भेदस्य श्रुत्यर्थत्वम् । यथा यागसाधनत्वान्यथानुपपत्तिसिद्धमपूर्वं श्रुत्यर्थः । यथा वा सूत्रार्थानु-

(कण्टकोद्धारः)

पपत्तिसिद्धं प्रपञ्चमिथ्यात्वं परेषां सूत्रार्थस्तद्वत् । यश्चार्थादर्थो न स चोदनार्थ इति तु वाक्यार्थत्वनिषेधपरम् । अथवा प्रतियोग्युपस्थितौ तत्प्रतियोगिकभेदः प्रत्यक्षेण यथा गृह्यते तथा श्रुत्यापि भेदो गृह्यताम् । न च प्रत्यक्ष उपनीत भानमङ्गीकृतं, न शब्द इति वाच्यम् । नियामकाभावेन श्रुतावपि तद्भानसम्भवात् । न चैवमपि प्रसङ्गः । प्रत्यक्षेऽपि साम्यात् । अदृष्टादिकं तत्र नियामकमिति चेत् समं प्रकृतेऽपि । यद्वा प्राभाकरमते घटेन जलमाहरेत्यत्र योग्यतावच्छेदकत्वेन छिद्रेतरत्वभानवत् प्रकृतेऽपि असर्वज्ञत्वेनानुभूयमानजीवभिन्नत्वेन विना सार्वज्ञ्यस्य बाधयितुमशक्यत्वात् योग्यतया जीवभेदो भासते ।

अथवा भेदकधर्मज्ञानमेव भेदज्ञानम् । भेदशब्दस्य च भिद्यतेऽनेनेति व्युत्पत्त्या सम्भवात् । न च भेदज्ञानमेव विरोधीति वाच्यम् । भेदवत् भेदकधर्मज्ञानस्यापि विरोधित्वात् । अन्यथा शुक्तित्वेन ज्ञानेऽपि रजताभेदारोपापत्तेः । यद्वा प्रतियोगितावच्छेदक प्रकारक प्रतियोग्युपस्थिति समानकालिकं भेदक धर्मविशिष्ट धर्मिज्ञानं भेदज्ञानमिह विवक्षितम् । धर्मिणो भेदस्वरूपत्वात् । न च धर्मिज्ञानं न विरोधीति वाच्यम् । प्रतियोग्युपस्थिति समान कालीन भेदकधर्मविशिष्ट धर्मिज्ञानस्य विरोधित्वात् । ननूपजीव्योपजीवकयोर्विरोधे द्वयोरपि प्रामाण्यं वा, द्वयोरप्यप्रामाण्यं वा किं न स्यात्? उपजीवकविरोधेनोपजीव्यस्यैव वाऽप्रामाण्यं किं न स्यादित्यत आह उपजीव्योपजीवकयोर्हीति । उपजीव्यविरोधेनोपजीवकस्याप्रामाण्यं सिद्धान्तसिद्धमित्याह तदिति । ननु प्रतियोगिप्रत्यक्षाभावे कथं तत्प्रतियोगिको भेदः प्रत्यक्ष इति चेन्न । धर्मिप्रत्यक्षस्यैवान्योन्याभाव प्रत्यक्ष प्रयोजकत्वात् । प्रतियोगिज्ञानस्यैव कारणत्वात् । तस्य च प्रकृते सत्वात् । नन्वनुमानेनैवेश्वरसिद्धिसम्भवात् कथं श्रुतेरुपजीव्यत्वमित्यत आह ईश्वरस्येति । अनुमानस्यापि उपजीव्यत्वेन प्राबल्यसम्भवात् । नन्वनुमानस्य स्वरूपमात्रविषयत्वेन विरोधाभावात् कथं तद्विरोधेनाप्रामाण्यमित्यत आह अनुमित्यापीति । श्रुतिसमानयोगक्षेममनुमानमिति भावः । अङ्गीकार वादोऽयम् । केवलानुमानस्य सर्वत्र प्रतिपक्षग्रस्तत्वेन वस्तुसाधकत्वाभावात् । श्रुतिसाहाय्ये च श्रुतिविरोधस्यावश्यकत्वात् । न चैवमिति । तथाच तद्विरोधेन नेदं रजतमित्यस्याप्यप्रामाण्यं स्यात् । येन विना यस्यानुत्थानं तत् तस्योपजीव्यमित्यस्योपजीव्यत्वे भवेदिदं दूषणम् । अस्योपजीव्यत्वस्य प्राबल्याप्रयोजकत्वात् । अन्यथा प्रतिषेधशास्त्र विलोपापत्तेः । किं तर्हि इत्यत आह यद्धीति । न च शक्तिग्रहे तदपेक्षायामपि ऐक्यवाक्ये न तदपेक्षेति वाच्यम् । ऐक्यस्य ससम्बन्धिकत्वेन धर्मिप्रतियोगि ज्ञानापेक्षावश्यं भावात् । अन्यथा भेदज्ञानादावपि तदपेक्षा न स्यात् । ननु नेदं रजतमित्यत्र रजतत्ववैशिष्ट्यांशे प्रामाण्यानपेक्षावत् सार्वज्ञ्यवैशिष्ट्यांशेऽपि प्रामाण्यानपेक्षा किं न स्यात्? अविशेषादिति चेन्न । प्रकृते सार्वज्ञ्यस्य धर्मितावच्छेदकत्वेन रजतत्वस्यातथात्वेन वैषम्यात् । यथाचैत्तथा आकर एवाग्रे स्फुटम् । इहेति । तथाच तदेव प्राबल्य प्रयोजकम्, न प्रतिषेध्यार्पक साधारणं येनविनेत्यादिकमिति भावः । ननु यथा इदमंशस्य नेदं रूप्यमित्यनेन सिद्धिः तथा जीवस्यापि तत्वमस्यादि वाक्यादेव सिद्धिरस्तु । तथा च नोपजीव्यविरोध इत्यत आह नचेति । अप्राप्त इति । शास्त्रस्य परार्थत्वादिति भावः । ननु यथा तत्वमस्यादि वाक्ये धर्मिसिद्धिः पृथगपेक्षिता तथा नेदं रजतमित्यत्रापि । अन्यथा प्रकृतेऽपि श्रुत्यादेरुपजीव्यता न स्यात् । पृथक् सिद्धिश्चेदं रजतमित्यस्मात्

(कण्टकोद्धारः)

पृथङ्नास्तीति तस्योपजीव्यत्वमावश्यकमित्यस्वरसादाह अस्तु वेति । ननु रजतत्वस्य धर्मितावच्छेदकत्वे इष्टसिद्धिर्न स्यादित्यत आह इदमंशमात्र इति । रजतत्वस्य धर्मितावच्छेदकत्वे निषेध एव न सिध्येत् । रजतं रजतं नेति व्याघातादिति भावः । समानन्यायाभिमानेन शङ्कते नन्विति । ब्रह्मैक्यासिद्धेरिति । ननु सार्वज्ञ्यादि विशिष्टेनैक्यसिद्धिरुच्यते उत तदुपलक्षितेन? नाद्यः अनङ्गीकारात् । न हि विशिष्टैक्यमस्माभिरुच्यते । उपलक्षितैक्याङ्गीकारात् । न द्वितीयः । उपलक्षणे बाधकाभावादिति चेन्न । उपलक्षणं न सम्भवति । उपलक्ष्यतावच्छेदकाभावात् । न च स्वरूपोपलक्षणेऽवच्छेदकं नापेक्षितमिति वाच्यम् । उपलक्ष्यतावच्छेदकानपेक्षणे यत् किञ्चित्स्वरूपैक्यापत्त्या सिद्धसाधनतापत्त्या जीवव्यावृत्तोपलक्ष्यतावच्छेदकस्यावश्यकत्वात् । तत्सिद्धस्येति । निर्गुणवाक्यसिद्धमपि सर्वथा गुणसम्बन्धशून्यत्वादिरूपासाधारण धर्मोपेतं स्यात् । साधारणचित्त्वाद्युपेतं वा । स्वरूपं वेत्युक्तपक्षान्तर्भाव इत्यर्थः । ननु निर्गुणादिवाक्येन धर्ममात्रनिषेधान्नोक्तरूपं सिध्यतीत्यत आह निर्गुणादिवाक्येनापीति । एतेनेति परामृष्टं हेतुं दर्शयति जीवव्यावृत्तेति । चित्त्वस्येति । न च चित्त्वैक्येऽपि न तदाश्रयैक्यमिष्टम्, इष्टौ वा विवादाभाव इति वाच्यम् । चित्त्वाश्रययावदैक्याभावे चित्त्वाश्रयैक्यस्येष्टत्वात् । तावतैव वाक्यस्योपपत्तेः । ननु सोऽयं देवदत्त इत्यादौ यथा स्वरूपमात्रमुद्देश्यं तथा प्रकृतेऽपि किं नस्यादित्यत आह सोऽयमिति । न च विशिष्टैक्ये विशेषणैक्यापत्तिरिति वाच्यम् । धूमवान् पर्वतोऽग्निमानित्यादौ व्यभिचारेणापादनासम्भवात् । ननु विद्यमानस्यैव विशेषणत्वात्, तत्ताया अतीतत्वात् कथं विशेषणत्वमित्यत आह यद्वत्तयेति । नन्वेतादृशं विशेषणं संसारित्वादिकमस्त्वित्याशङ्क्य निषेधति न चेति । भ्रमत्वे चेति । ऐक्यवाक्यविरोधादिति शेषः । ननूपलक्ष्यतावच्छेदकाभावेनोपलक्षणाभावे पुरोडाशकपालेन तुषानुपवपति इत्यत्राधिष्ठानलक्षणा न स्यात् । तथाच तद्वाक्यं विधायकं न स्यात् । तथाच तस्याप्रामाण्यं स्यात् इत्यत आह पुरोडाशकपालेनेति ।

दर्शपूर्णमासयोः श्रूयते । पुरोडाशकपालेन तुषानुपवपतीति । तत्र सन्देहः । कपालस्य तुषोपवापं प्रति साधनत्वं न युक्तमुत युक्तं वेति । पूर्वपक्षस्तु - न युक्तम् । पुरोडाशशेषतयोपस्थितस्य तुषोपवापशेष्यन्तरान्वयासम्भवात् । अन्यान्वितस्यान्येनाकाङ्क्षाविरहात् । विनियुक्तविनियोगविरोधाच्चेति । सिद्धान्तस्तु– पुरोडाशरूप शेष्यन्वितस्य कपालस्वरूपस्यान्वयासम्भवेऽपि अधिष्ठानलक्षणया लक्षितस्य कपालस्वरूपमात्रस्य तुषोपवापशेष्यन्तरं प्रति शेषतया तृतीयया विधानोपपत्तेः । तत्र तुषोपवापस्यान्यतोऽप्राप्ततया तद्विधान मात्रेणैव कृतार्थत्वादिति मीमांसका वदन्ति । न चानेन प्रकृते साम्यम् । स्वरूपैक्यस्य सिद्धत्वात् । उक्तमर्थं कारिकया सङ्गृह्णाति एवंचेति । अन्यथेति । यद्युपजीव्य धर्मिग्राहक विरोधेनोपजीवकस्याप्रामाण्यं नाङ्गीक्रियेतेत्यर्थः । इदमधिकरणं प्रागेव विवृतम् । गुणविधेरिति । वाजिभ्यो वाजिन इत्यर्थः । सममित्युक्तमेवोपपादयति सर्वज्ञत्वादिनेति । आरोपितेनेति । आरोपितस्यापि यः पुरुषः स स्थाणुरित्यत्र धर्मितावच्छेदकत्वदर्शनादित्यर्थः । समं प्रकृतेपीति । ननु प्रबलैक्यवाक्यविरोधात् सार्वज्ञ्यादिबोधकमप्रमाणमिति चेत् सावयवत्वादि प्रमाणविरोधात् निरवयवत्वादिबोधकमप्यप्रमाणं स्यात् । सावयवत्वादिबोधकस्य धर्मिग्राहकविरोधात् प्रमाणत्वमेव सन्दिग्धमिति चेत् तुल्यमैक्यवाक्यस्यापि । निरवयवत्त्वादिकं धर्म्यतिरिक्तं नास्तीति

(कण्टकोद्धारः)

चेत् सार्वज्ञ्यादेरपि धर्म्यतिरिक्तत्वाभावात् तुल्यमेवेति । एतेनेति । परामृष्टं हेतुं दर्शयति निरीश्वरेति । उपलक्षणमेतत् । अपदार्थत्वादवाक्यार्थत्वाच्चेत्यपि द्रष्टव्यम् । तदिति । चित्त्वस्यैकत्वं, चित्त्वाधिकरणेन चैक्यं ममापि संमतं, न तु यावत् चित्त्वाधिकरणैक्यम् । तस्याप्रतीतेरित्यर्थः । इष्टेति । इदमापाततः । निर्निमित्तं मुख्यार्थत्यागे क्वापि मुख्यार्थता न स्यादिति द्रष्टव्यम् । ननु यद्धीत्यादि नोपजीव्यत्वं, तस्य प्रतिषेधार्पके भावात् । न च तदुपजीव्यमेव नेति वाच्यम् । सकल तान्त्रिकाणां तत्रोपजीव्यत्व व्यवहारात् । नचान्यदेव तत्रोपजीव्यत्वं, तेनैव सर्वत्र व्यवहार सम्भवे नानार्थत्वायोगादित्यस्वरसादाह यद्वेति । नन्वेवं तर्ह्युप-जीव्यत्वेन प्राबल्यमुक्तं भज्येतेत्यत आह न हीति । ननु परीक्षायामनाश्वासात् न श्रुतौ परीक्षितत्व-विशिष्टमुपजीव्यत्वमित्यत आह इत्थमेवचेति । नन्विदं रजतमिति ज्ञाने इदमंशे परीक्षितत्वविशिष्टोप-जीव्यत्वस्य सत्वात् तद् बाध्यं न स्यादित्यत आह यद्यपीति । ननु प्राप्ताप्राप्तविवेकेन परीक्षितत्वमेव प्राबल्ये तन्त्रमस्तु । नोपजीव्यत्वम् । निषेध्यार्पके तस्य सत्वेऽपि प्राबल्याप्रयोजकत्वात् । न चेष्टापत्तिः । उपजीव्य-त्वात् प्राबल्यमित्युपसंहारायोगात् इति चेन्मैवम् । तस्याप्युत्सर्गतः प्राबल्यप्रयोजकत्वात् । अत एवाह सन्निपात लक्षणो विधिरनिमित्तं तद्विधातस्येति । क्वचित्तु प्राबल्याप्रयोजकत्वमपरीक्षितत्वनिश्चयरूप प्रबलबाधकात् । न हि दोषवशात् साक्षिणा प्रामाण्यं न गृहीतमिति तस्याग्राहकत्वम् । न वा प्रतिबद्धो दहनो दाहं न जनयतीति न दाहहेतुः । प्रतिबन्धकत्वादिकं च फलबलकल्प्यम् । तथाच प्रतिबन्धाभावे तदपि प्राबल्य हेतुः । परीक्षितत्वमुपोद्बलकमुक्तम् । निषेध्यार्पकेचापरीक्षितत्वनिश्चय एव प्रतिबन्धक इत्युक्तम् । अत एवापेक्षितं पूरयन् केवलस्यैवोपजीव्यत्वस्य प्राबल्यहेतुत्वमुपसंहरति तस्मादिति । आमिक्षा-धिकरणं तु प्रागेव विवृतम् । तत्सिद्धिपेटिकया च यजमानः प्रस्तर इति विवृतम् । ननु यजमानः प्रस्तर इत्यादिकमन्यशेषः । तत्वमस्यादिवाक्यं तु प्रधानम् । तत् कथं तत्तुल्यत्वमस्येत्यत आह यजमान-प्रस्तरेत्यादीति । ननु यथा भेदश्रुतिरुपजीव्या ऐक्यश्रुतिं प्रति, तथा ऐक्यश्रुतिरपि भेदश्रुतिं प्रत्युपजीव्येति उपजीव्यविरोधात् भेदश्रुतिरपि प्रमाणं न स्यादित्यत आह नैवमिति । ननु भेदो ह्यभेदाभावः । तत्र प्रतिषेधार्थकत्वेन ऐक्यश्रुतिरुपजीव्यैव । अपौरुषेयत्वेन परीक्षिता च । तत् कथं नोपजीव्यविरोध इत्यत आह श्रुतिं विनेति । नन्वैक्य श्रुतेरपि भेदश्रुतिर्नोपजीव्या । भेदस्य प्रकारान्तरेण प्राप्तत्वादित्यत आह ऐक्य-श्रुतेस्त्विति । ननु निषेध्यार्पकत्वे इदं रजतमितिवत् बाध्यमेव स्यादित्यत आह निषेध्यार्पकमपीति । व्याख्यातमेतत् । एतेन अभेदस्य श्रुतिं विनाऽप्राप्तिवचनेनेत्यर्थः । किं भेदः स्वरूपं तद्धर्मोवेति विकल्प्य स्वरूपभेदप्रतीति पक्षे किं भेद इत्येव प्रतीतिः, किंवा घटाद्भिन्नः पट इतीति विकल्प्य आद्य आह अभेदमिति । तथाचाद्ये सा न स्यादेवेत्यन्वयः । तत्र युक्तिः अभेदमिति । तादृशप्रतीतेरभावादेवेत्यर्थः । अन्त्य आह– सा अप्रमा स्यात् । तत्र हेतुः स्वापेक्ष्येति । प्रतियोगिघटितस्य भेदस्य पटस्वरूपत्वे पटस्यापि घटस्वरूपत्वेन घटस्यापि पटस्वरूपत्वापत्तेः स्वविषयीकृतभेदविरोधात् भेदांशेऽप्रमात्वमित्यर्थः । यद्वा जीव-ब्रह्मणोर्भेदप्रतीतिरभेदप्रसक्तिमपेक्षते । भेदस्याभेदनिषेधरूपत्वात् । तत्राभेदप्रसक्तिः श्रुतिं विना न सम्भव-तीति श्रुत्या प्रसक्तिर्नास्त्युतास्ति? आद्य आह अभेदमिति । पूर्ववदेव योजना । द्वितीय आह– साऽप्रमा

(कण्टकोद्धारः)

**स्यात् । तत्र हेतुः स्वेति । उपजीव्या भेद श्रुतिविरोधादित्यर्थः । तत्राद्य पक्षस्योत्तरम्– भेदं प्रति प्रतियोगिनो निरूपकत्वेन तटस्थत्वात् भेदस्य पटस्वरूपत्वेऽपि घटस्य न तत् स्वरूपत्वम् । अन्यथा ब्रह्मज्ञानस्य ज्ञाननिवर्त्यत्वे ब्रह्मणोऽपि तदापत्तेः । तथाच न स्वापेक्ष्यवैशसमिति । द्वितीयपक्षे श्रुतिं विनापि अभेदप्रसक्तेर्वक्ष्यमाणत्वादिति । अस्तुवाऽभेदश्रुत्याऽभेदप्रसक्तिः । तथापि तस्यापरीक्षितत्वेन तत्रत्यस्योपजीव्यत्वस्याकिञ्चित्करत्वात् । भेदश्रुतेः परीक्षितत्वेन बलवत्त्वादिति । परीक्षितत्वं च प्रमाणान्तराविरोधः स्वाविरोधश्चेति । अत एवाचार्य संमतिश्लोके बलादित्युक्तम् । इति ऐक्यश्रुतेरुपजीव्यबाधः ।**

न्यायामृतप्रकाशः

असद्वा इदमग्रआसीदिति ॥ श्रुत्याऽसत्वशून्यत्वयोरविवक्षामात्रेण ब्रह्मणः शून्येनैक्यं न हि सुवचं "सर्वं खल्विदं ब्रह्मे"त्यादिश्रुत्या चित्त्वजडत्वयोरविवक्षामात्रेण ब्रह्मणो जडेन वैक्यं न हि सुवचमित्यन्वयो द्रष्टव्यः ॥ भविष्यसीति ॥ विरुद्धाकारस्यानित्यत्वेन तन्नाशानन्तरमित्यर्थः ॥ प्रतिषेधशास्त्रेति ॥ तथा च नेदं रजतमित्यादेरप्यप्रामाण्यापातात् प्रतिषेध्यरजतज्ञानस्य प्रामाण्यादिति भावः ॥ धर्मिण इति ॥ नेदं रजतमित्यत्र धर्मिभूतेदमंशसमर्पकत्वेन इदं रजतमिति ज्ञानं नापेक्षितं नेदं रजतमिति ज्ञानेन इदमंशरूपधर्मिसिद्धेः । यदि च इदं रजतमिति ज्ञानमेव धर्मिसमर्पकमित्युच्यते । तर्हि तत्रापि धर्मिभूतेदमंशसमर्पकं ज्ञानान्तरं वाच्यं स्यात् । उच्यत एवेति चेत् । तर्हि इदं रजतमित्यत्र यद्धर्मिसमर्पकं ज्ञानान्तरमुच्यते तदेव नेदं रजतमित्यत्रापि धर्मिसमर्पकमस्तु । किं मध्ये इदं रजतमिति ज्ञानस्य धर्मिसमर्पकत्ववचनेन । अथ नेदं रजतमिति ज्ञानमेवास्मिन् धर्मिसमर्पकमिति ब्रूयास्तर्हि नेदं रूप्यमिति प्रत्यक्षेपि तुल्यमिति प्रौढिवादेन दूषणोक्तिरिति सम्प्रदायः । ननु यथा पुरोडाशकपालेन तुषानुपवपतीत्यत्र कांस्यपात्र्या भुङ्क्त इत्यत्रेव करणस्याधिकरणत्वं विवक्षितम् एवं च तुषोपवापे पुरोडाशविशिष्टकपालस्याधिकरणत्वाभावात्पुरोडाशत्यागेन कपालरूपाधिष्ठानलक्षणामङ्गीकृत्य वाक्यार्थोपपत्तिर्मीमांसकैः स्वीकृता एवं मयापि लक्षणाङ्गीक्रियत इत्यत आह ॥ पुरोडाशेति ॥ तदेवोपपादयति ॥ तत्रेति ॥ तत्रेत्यनन्तरम् अधिष्ठानमात्रलक्षणयेति शेषः । इहत्वित्यनन्तरं लक्षणयेति शेषः । चितो जीवैक्येन उक्तेन ॥ नेष्टसिद्धिरिति । सिद्धत्वेन शास्त्राबोध्यत्वेन शास्त्रवैयर्थ्यं स्यादिति भावः ॥ ॥ ऐक्यश्रुतेरुपजीव्यबाधविवरणम् ॥

## २८. तत्त्वमस्यादिवाक्यार्थः

**किं च त्वन्मते पदद्वये लक्षणा, ततो वरं मद्रीत्यैकस्मिंस्तत्पदे त्वंपदे वा अमुख्यवृत्तिः । तथा हि– तत्साहचर्यात्तदितिव्यपदेशः । "वसन्तादिभ्यष्ठक्" इत्यत्र "साहचर्यात्ताच्छब्द्यं भविष्यति वसन्तसहचरितमध्ययनं वसन्त" इति महाभाष्योक्तेः । प्रसिद्धं च जीवस्य ब्रह्मसहचरितत्वं द्वा सुपर्णेत्यादौ । यद्वा तदाश्रितत्वात्तदितिव्यपदेशः । समर्थः पदविधि रित्यत्र समर्थपदाश्रितत्वात्पद-**

विधिरुपचारेण समर्थ इति पदेनोच्यत इति महाभाष्योक्तेः, ''सर्वाः प्रजाः सदायतना'' इति वाक्यशेषाच्च । अथवा ''ब्राह्मणोऽस्य मुखमासीदि''त्यादिवत् ततो जातत्वात्तदितिव्यपदेशः । ''इग्यणः सम्प्रसारणम्''– इत्यत्र यथा काकाज्जातः काकः श्येनाज्जातः श्येनः, एवं संप्रासारणाज्जातो वर्णः सम्प्रसारणमिति महाभाष्योक्तेः । ''सन्मूलाः सोम्येमाः सर्वाः प्रजा'' इति वाक्यशेषाच्च ।

ब्राह्मणो मुखमित्येव मुखाज्जातत्वहेतुतः ।
यथाऽवदत् श्रुतिस्तद्वज्जीवो ब्रह्मेतिवाग्भवेत् ।। इति स्मृतेश्च ।

अथवा ''धान्यमसि धिनुही''त्यत्र तण्डुले धान्यशब्दवत् तदधीनत्वात्तदिति व्यपदेशः, ''प्राणबन्धनं हि सोम्य मन'' इति वाक्येशेषे जीवस्येशाधीनत्वोक्तेः । ''यदधीना यस्य सत्ता तत्तदित्येव भण्यत'' इति भारतोक्तेश्च ।

अथवा अतिदेशोऽयं तद्वत्त्वमसीत्यर्थः । ''बहुगणे''त्यादि सूत्रे बहुगणवतुडतयः सङ्ख्यावद्भवन्ति अन्तरेणापि वतिमतिदेशो गम्यते अब्रह्मदत्तं ब्रह्मदत्त इत्याह तेन वयं मन्यामहे ब्रह्मदत्तवदयं भवतीति महाभाष्योक्तेः । ''सारूप्यादि''ति जैमिनिसूत्रे ''आदित्यो यूप'' इत्यादिकं सादृश्यादित्युक्तत्वाच्च । ''तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदि''ति ब्रह्मसूत्रे ब्रह्मगुणयोगाज्जीवे तदिति व्यपदेश इत्युक्तत्वाच्च ।

भिन्नाज्जीवात् परो भिन्नस्तथापि ज्ञानरूपतः ।
प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः ।।

इति स्मृतेश्च । अन्यथा तत्त्वमसीति वाक्यमबोधकं स्यात् । यथोक्तं महाभाष्ये ''यो गामश्व इति ब्रूयात् न जातुचित्संप्रत्ययः स्यादि''ति ।

यद्वा शाखासदेशे चन्द्रे शाखाशब्दवत् जीवान्तर्यामितया जीवसदेशे ब्रह्मणि त्वमितिव्यपदेशः, ''य आत्मनि तिष्ठन्नि''त्यादि श्रुतेः ।

यद्वा ''ब्राह्मणो वै सर्वा देवता'' इत्यादिवत् जीवाश्रयत्वाद् ब्रह्मणि त्वमितिव्यपदेशः । यद्वा ब्रह्मणः सर्वकर्तृत्वाद् ''यजमानः प्रस्तर'' इत्यादिवत्तत्सिद्ध्या त्वमितिव्यपदेशः । एवं च–

तदधीनत्वताद्देश्यतातस्थ्यताद्धर्म्यपूर्वकैः ।
निमत्तैस्तत्त्वमस्यादिसामानाधिकरण्यगीः ॥

न चैवं मुख्यार्थत्यागदोषः, अन्तर्यामिणि त्वमित्यादेर्मुख्यताया वक्ष्यमाणत्वात् । त्वद्रीत्या पदद्वयलक्षणातः मद्रीत्या एकपदलक्षणाया ज्यायस्त्वाच्च । किं च जहदजहल्लक्षणायां वाच्यान्तर्गतत्वेन प्राग्धीस्थस्याप्यनन्तरमनुपपत्तिदर्शनेन त्यक्तस्य पुनः स्वीकारः । जहल्लक्षणायां तु अधीस्थस्याप्यत्यक्तस्यैव स्वीकारः । त्यक्तस्वीकारादपि वरम् अधीस्थस्वीकारः । एवं च–

एकस्यामुख्यवृत्त्यैव तत्त्वमित्यस्य सम्भवे ।
भेदेनैवैक्यपरताऽनेकलक्षणया कुतः ॥

न च सदेवेत्यादिवाक्ये लक्षणया प्रकृते शुद्धे प्रकृतवाचिनस्तत्पदस्याऽभिधैवेति वाच्यम्, शुद्धस्यावाच्यत्वात् । तदित्येकपदलक्षणानिरासाय ''तदैक्षत तत्तेजोऽसृजते''त्याद्यनेकपदलक्षणायोगाच्च ।

यद्वा सुपां सुलुगित्यादि सूत्रात् तृतीयाविभक्त्यादेर्लुक् प्रथमैकवचनादेशो वा । ततश्च तेन त्वं तिष्ठसीति वा ततस्त्व जात इति वा, तस्य त्वमिति वा, तस्मिंस्त्वमिति वार्थः । ''अनेन जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति, सन्मूलाः सोम्येमाः सर्वाः प्रजा, ऐतदात्म्यमिदं सर्व''मित्यादि वाक्यशेषात् । मीमांसकैः ''उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहु''रित्यत्र यत्र सुन्वन्ति तत्र हविर्धाने स्थित्वा सामिधेनीरनुब्रूयादितिसप्तम्यर्थे प्रथमास्वीकाराच्च । न्याय्यं च निरवकाशप्रधानभूतानेकप्रातिपदिकस्वारस्याय सङ्ख्यार्थत्वेन सावकाशाप्रधानैकविभक्त्यस्वारस्यम् । प्रोद्गातॄणामित्यत्र तु विभक्त्यन्तरे प्रथमैकवचनस्येव षष्ठी बहुवचनस्यान्यत्राविधानात् बहुवचनानुसारेण प्रातिपदिकस्य प्रस्तोत्रादिच्छन्दोगेषु लक्षणाश्रिता । दृष्टं च ''प्रयाजशेषेण हवींष्यभिधारयती''त्यत्र प्रयाजशेषप्रातिपदिकस्वारस्याय प्रयाजाशेषं हविःषु प्रक्षिपतीति विभक्त्यस्वारस्यम् । एवं च–

आवकाशोज्झितानेकमुख्यनामानुसारतः ।
युक्तोऽतादृग्विभक्तेर्हि बाधः प्रयाजशेषवत् ॥

यद्वा तस्य त्वमित्यर्थे तत्त्वमिति समस्तं पदम् । यद्वा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसीत्यत्र तदित्यनेन नात्मा परामृश्यते, किंत्वैतदात्म्यं नपुंसकलिङ्गत्वात् । ऐतदात्म्यमित्यस्य चैष चासावात्मा च एतदात्मा तस्येदं ऐतदात्म्यम् । एतदीयं वस्तु त्वमसीत्यर्थः । परमते हि एतत् सद् आत्मा यस्य तदैतदात्म्यमितिव्याख्यातत्वाद् भावप्रत्ययो व्यर्थः । ततो वरमर्थान्तराश्रयणम्, विचित्रा हि तद्धितगतिरिति वचनात् ।

स स्रष्टा चैव संहर्ता नियन्ता रक्षिता हरिः ।
तेन व्याप्तमिदं सर्वमेतदात्म्यमतो विदुः ॥ इति स्मृतेश्च ।

केचित्तु शरीरवाचिनां देवमनुष्यादिशब्दानां शरीरिपर्यन्तत्वदर्शनात् । जीवस्य च तस्यात्मा शरीरमित्यादिश्रुत्येश्वरशरीरत्वात् तत्त्वमिति व्यपदेशः शरीरशरीरिभावनिबन्धन इत्याहुः । इतरे तु आदित्यो ब्रह्मेत्यादिवत् जीवे ब्रह्मत्वोपासनार्थस्तत्वमसीतिनिर्देशः, न तु वस्तुतत्त्वनिष्ठ इत्याहुः । यद्वा स आत्मा तत्त्वमसीत्यत्र यद्यपि द्वेधा पदच्छेदः सम्भवति, तथापि शब्दो नित्य इत्यत्रानित्यघटदृष्टान्तेनानित्य इतिच्छेदवद् अत्रापि भिन्नशकुनिसूत्रादिदृष्टान्तैरतदितिच्छेदः । न हि आद्ये खण्डे स यथा शकुनिः सूत्रेण प्रबद्ध इत्युक्तयोः शकुनिसूत्रयोः, षष्ठे लवणमेतदुदकमित्यादिनोक्तयोः, लवणोदकयोः, सप्तमे पुरुषं सोम्य गन्धारेभ्य इत्यादिनोक्तयोः पुरुषगन्धारदेशयोः नवमेऽपहार्षीत्स्तेयमकार्षीदित्यादिनोक्तयोः स्तेनापहार्ययोश्चैक्यं स्तेनापहार्यदृष्टान्ते हि स्पष्ट ऐक्यज्ञानिनोऽनर्थः । परकीयब्रह्मत्वाभिमानी हि स्तेनः, न तु विद्यमानब्रह्मत्वाज्ञानी । न च सत्यानृताभिसन्धिमात्रमिह विवक्षितम्, तथात्वे सत्यानृतवाग्दृष्टान्तेन पूर्तेरपहार्षीत्स्तेयमकार्षीदित्यपहारदृष्टान्तायोगात् । आद्यखण्डे सुषुप्तविषये स्वमपीतो भवतीत्यत्र ब्रह्मणि स्वशब्दो न जीवाभेदाभिप्रायः ।

स्वातन्त्र्यात्स्व इति प्रोक्त आत्मायं चाततत्त्वतः ।
ब्रह्मायं गुणपूर्णत्वात् भगवान् विष्णुरव्ययः ॥

इति श्रुतेः आत्मीयार्थत्वसम्भवाच्च । अपीतो भवतीत्यस्यापि तिरोहितः सन् प्राप्तो भवतीत्येवार्थः, न त्वभिन्न इति । अपेरपिधाने, इणश्च गतौ, निष्ठायाश्च कर्तरि शक्तेः क्लृप्तत्वादैक्ये योगरूढयोरभावाच्च । ऐक्यार्थत्वे अपीत इत्यस्य भवतेश्चाकर्मकत्वेन श्रुतद्वितीयायोगाच्च, अश्रुततृतीयाकल्पनाप्रसङ्गाच्च ।

''स्वं कुलायं यथाऽपीतः पक्षी स्यादेवमीश्वरम् ।
अप्येति जीवः प्रस्वापे'' इति स्मृतेश्च ॥

यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संल्लयायैव ध्रियते एवमेवायं पुरुष ''इति सुषुप्तिविषयश्रुत्यन्तरे भिन्नश्येननीडदृष्टान्तोक्तेश्च । प्राज्ञेनात्मना संपरिष्वक्त'' इति सुषुप्तौ भेदश्रुतेश्च । त्वन्मतेऽपि भेदपरेण ''सुषुप्त्युत्क्रान्त्योर्भेदेने''ति सूत्रेण विरोधाच्च । त्वत्पक्षेऽपि जागरण इव सुषुप्तावप्याविद्यकजीवब्रह्मभेदस्य सत्त्वाच्च । न च नवमखण्डे ''नानात्ययानां वृक्षाणां रसानाम्'' इत्यादिनोक्तानां नानावृक्षरसानाम् । दशमे ''इमाः सोम्य नद्य'' इत्यादिनोक्तयोर्नदीसमुद्रयोश्चैक्यं शङ्क्यम् । न हि नानावृक्षरसा अन्योन्य भेदत्यागेन प्राक्सिद्धेन मधुनैक्यमापद्यन्ते न वा प्राग्भेदभ्रान्तिविषयाः पश्चात्तदविषयाः, किं तु तन्तव इव घटमन्योन्यं भिन्ना एव प्रागसिद्धं मधूत्पादयन्ति । न चेदं दार्ष्टान्तिकानुगुणम् । नदीसमुद्रदृष्टान्तेऽपि किं नदीसमुद्रावयविनोरैक्यम्? किं वा तदवयवजलाणूनाम्? उत द्रव्यान्तरारम्भः? नाद्यद्वितीयौ, माषराशौ प्रक्षिप्तमाषतदवयवानामिव क्षीरे प्रक्षिप्तनीरतदवयवानामिव चान्योन्यं मिश्रीभावेऽपि प्राग्भिन्नानां पश्चादप्यैक्यायोगात् । ''ता एवापो ददौ तस्य स मुनिः संशितव्रत'' इति कौर्मेया इन्द्रकमण्डलुस्था आपः स्वकमण्डलौ निक्षिप्तास्ता एव वसिष्ठो दत्तवानित्युक्तेश्च । सप्तनदीनां मिश्रीभूतानामपि पुनर्विभज्य समुद्रगमनदर्शनाच्च । ''यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवती''ति सावधारणश्रुतिविरोधाच्च ।

उदकं तूदके सिक्तं मिश्रमेव यथा भवेत् ।
न चैतदेव भवति यतो वृद्धिः प्रदृश्यते ॥

इति सयुक्तिकस्मृतिविरोधाच्च । समुद्रे तु महत्त्वाद् वृद्ध्यदर्शनम् । पूतापूतयोः शीतोष्णयोर्मधुरलवणयोर्जलयोर्मेलने उभयगुणदर्शनाच्च । ''ताः समुद्रात्समुद्रमेवापियन्ती''ति अवधित्वादिनिर्देशायोगाच्च । वाचस्पतिनापि ''अवस्थितेरिति काशकृत्स्न''इति सूत्रे नदीसमुद्राभेदस्य निरस्तत्वाच्च । भेदाज्ञानं तु क्षीरनीरयोरिव व्यामिश्रीभूतस्वर्णताम्रादेरिव च मिश्रीभावाद्युक्तम् । अन्त्ये न कस्यापि केनाप्यैक्यं दार्ष्टान्तिकानानुगुण्यं च । ''ताः समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवती''त्यत्रापि प्रकृतनदीरूद्दिश्य समुद्रभवनविधाने ते तण्डुला ओदनं भवन्तीतिवत् ताः समुद्र एव भवन्तीति स्यात् । अतो नद्योऽनियतजलराशिरूपात्खातरूपाद्वा देवतारूपाद्वा समुद्राद् गच्छन्ति तं प्रविशन्ति च समुद्रस्तु स एव नैतासां समुद्रत्वमिति वा स समुद्र एव तु नदीत्वं प्राप्नोतीति वार्थः । तस्मात्सतोऽप्यन्योन्यं भेदस्याज्ञान एवं इमौ दृष्टान्तौ । अत एव नानारसवाक्ये दार्ष्टान्तिके ''एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपत्स्यामहे इति त इह व्याघ्रो वे''ति नदीसमुद्रवाक्ये च दार्ष्टान्तिके ''सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वे''ति सतो भेदस्याज्ञानेनेवानर्थ उक्तः । न हि गृहे प्रविष्टस्य गृहादागतस्य वा तदैक्यम् । तस्माद् दृष्टान्तानुसारेणातत्त्वमसीतिच्छेदो युक्तः । तथा च श्रुत्यन्तरम् -

यथा पक्षी च सूत्रं च नानावृक्षरसा यथा ।
यथा नद्यः समुद्रश्च शुद्धोदलवणे यथा ॥
यथा स्तेनापहार्यौ च यथा पुंविषयावपि ।
तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ॥ इति ॥

किं चाष्टमे खण्डे ''स्वप्रान्तं मे सोम्य विजानीहि''ति स्वातंत्र्यशंकानास्पदसुषुप्तिनिदर्शनेन एकादशे च अस्य यदेकां शाखां जीवो जहाती''त्यादिना अन्वय-

व्यतिरेकोक्त्या पञ्चदशे च पुरुषं सोम्योतोपतापिन''मित्यादिना स्वातंत्र्यशंका-नास्पदमरणनिदर्शनेनेश्वराधीनत्वस्योक्तत्वादतदित्येव च्छेदो युक्तः । एवं च -

वाक्यशेषानुसारेण मुख्यार्थस्यैव सम्भवे ।
तद्विरुद्धानेकपदलक्षणा नैव युज्यते ॥

एकादश खण्डे ''अनेन जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठती'' त्यत्र च जीवशब्द ईश्वरपरः, मोदमान इति संसारिणः पृथगुक्तेः । ''एतस्यैव सोम्यैषोऽणिम्न एवं महान् न्यग्रोधस्तिष्ठती''त्यत्राणिमशब्दः परमसूक्ष्मेश्वरपरः । ''स एषोऽणिमा ऐतदात्म्यमिदं सर्व''मिति इहैव श्रुतावीश्वरे तस्य प्रयोगात्, न तु पररीत्या धानापरः । तासां किमत्र पश्यसीति अण्व्य इवेमा धाना भगव इति भावप्रत्ययरहितेन स्त्रीलिंगेन बहुवचनान्तेनेवशब्दशिरस्केन चाणुशब्देन निर्दिष्टतया तद्विपरीताणिमशब्दानर्हत्वात्, 'न निभालयस' इत्युक्तादृश्यत्वायोगाच्च । यदि च पञ्चदशे विदुषो ब्रह्मप्राप्तिमात्रं विवक्षितम्, तदा तस्य 'वाङ् मनसि संपद्यत' इत्यादि 'तेजः परस्यां देवतायाम्' - इत्यन्तमेव वाक्यं स्यात् । ''तस्य यावन्न वाङ् मनसि संपद्यत'' इत्यादिव्यर्थं स्मृतिशच-

यदा प्राणान् ददातीशस्तदा चेतनकोऽलम् ।
जानाति ग्रस्तकरणस्तेन वेत्ति न किंचन ॥ इति

स आत्मेत्यत्र च सोऽणिमशब्दोक्त ईश्वर आत्मा आतत इत्येवार्थः, न तु जीवात्मेति ।

यदाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तेनात्मेति हि भण्यते ॥

इति भारतोक्तेः । ''नानुमानमतच्छब्दात् प्राणभृच्चे''ति सूत्रे ''तमेवैकं जान-थात्मान''मिति वाक्योक्तो न जीवः तद्वाचिशब्दाभावादिति त्वयापि सिद्धान्ति-

तत्वेनात्मशब्दस्य जीवेष्वमुख्यत्वाच्च । ''स इमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोदि''त्यत्रापि जीवशब्देनेश्वर उच्यते, न तु संसारी जीव इति भगवतोऽनिरुद्धस्याख्येति श्रुतेः, ''विष्णुर्जीव इतिप्रोक्तः सततं प्राणधारणादि''ति स्मृतेश्च । जीवेऽपि योगसम्भवेन रूढिकल्पकाभावाच्च । ''अहं हि जीवसंज्ञो वै मयि जीवः समाहित'' इति मोक्षधर्मे भगवद्वचनाच्च । प्राणधारकत्वरूपनिमित्तस्येश्वर एव मुख्यत्वाच्च संसारिणास्त्रिवृत्करणपूर्वकं नामरूपात्मकप्रपञ्चकर्तृत्वायोगाच्च । तेजोऽबन्नानां तत्तेज ऐक्षत ता आप ऐक्षन्त इमास्त्रिस्रो देवता इति पूर्वमेव चेतनत्वसिद्ध्या पुनर्जीवप्रवेशोक्त्ययोगाच्च ।

एकमेवाऽद्वितीयमित्युपक्रमः । एकविज्ञानेन सर्वविज्ञानं च प्रागेव व्याख्यातम् । न चैक्याप्रसक्तेरतत्त्वमसीतिनिषेधायोगः । ''इष्टापूर्तं मन्यमाना वरिष्ठ''मित्यादाविव श्रुतितात्पर्यापरिज्ञानेन वा ''तद्धैक आहुरसदेवेदमग्र आसी''दित्यादाविवानादिकुसमयेन वा देहेन्द्रियादीन्प्रति स्वातन्त्र्यरूपस्येश्वरलक्षणस्य सर्वैरपि आत्मन्यभिमन्यमानत्वेन प्रत्यक्षेण वा प्रसक्तस्यैक्यस्य निषेधोपपत्तेः । एवं च ''एकमेवाद्वितीय''मिति समाभ्यधिकराहित्यस्योपक्रमात् । ऐतदात्म्यमिति तस्यैवौपसंहाराद् अतत्त्वमसीति नवकृत्वोऽभ्यासात् शास्त्रं विना शास्त्रैकगम्येश्वरभेदस्याप्रसक्त्या अपूर्वत्वाद्, अथ संपत्स्यत इति फलश्रवणाद्, येनाश्रुतं श्रुतं भवतीत्याद्यर्थवादात् शकुनि सूत्रादिदृष्टान्तैरुपपादनात् षड्विधतात्पर्यलिंगानि भेदपराण्येवेति । तत्त्वमसिवाक्यार्थः ॥

## अद्वैतसिद्धिः

ननु– एवं पदद्वयेऽपि लक्षणा स्यात्, तथा च मन्मतमाश्रित्य एकपदलक्षणैवाश्रयणीया । तथा हि– 'द्वा सुपर्णा सयुजे'त्यादौ जीवस्य ब्रह्मसाहचर्योक्तेस्तत्साहचर्यात्तदिति व्यपदेशः, 'वसन्तादिभ्यष्ठगि'त्यत्र वसन्तसहचरिते अध्ययने वसन्तपदप्रयोगस्य महाभाष्ये उक्तत्वात्, 'सन्मूलाः प्रजाः सदायतना'इत्यादिवाक्यशेषात् । प्रसिद्धतदाश्रितत्वाद्वा तदिति व्यपदेशः, 'समर्थः पदविधि'रिति सूत्रे समर्थपदाश्रितत्वेन पदविधिः समर्थपदप्रयोगस्य महाभाष्योक्तेः,

(अद्वैतसिद्धिः)

'सन्मूलाः सोम्येमाः प्रजाः सर्वा'इति वाक्यशेषात् । प्रसिद्धतज्जत्वाद्वा तत्पदप्रयोगः, 'ब्रह्मणोऽस्य मुखमासी'दित्यादिवत्, 'इग्यणः संप्रसारण'मित्यत्र संप्रसारणाज्जातो वर्णः संप्रसारणमिति भाष्योक्तेः । 'प्राणबन्धनं हि सोम्य मन'इति वाक्यशेषेण जीवस्येशाधीनत्वोक्त्या तदधीनत्वाद्वा तच्छब्दप्रयोगः, 'धान्यमसि धिनुहि' इत्यत्र मन्त्रे तण्डुले धान्यपदप्रयोगवत् । तत्सादृश्याद्वा तत्पदप्रयोगः, सारूप्यादिति जैमिनिसूत्रे 'आदित्यो यूप' इत्यादिकं सादृश्यादित्युक्तत्वात् 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञव'दित्यत्र ब्रह्मसूत्रे ब्रह्मगुणयोगज्जीवे तद्व्यपदेश इत्युक्तेः, महाभाष्ये च बहुगणेत्यादिसूत्रे वतिं विनैव सङ्ख्यावदिति वत्यर्थो गम्यते । अब्रह्मदत्तं ब्रह्मदत्तेत्याह तेन वयं मन्यामहे ब्रह्मदत्तवदयं भवतीत्युक्तेश्चेति– चेन्न । अभेदे तात्पर्येऽवधृते तन्निर्वाहकलक्षणाबाहुल्यस्यादोषत्वात् । न हि लक्षणैक्यानुरोधेन तात्पर्यपरित्यागः । तदुक्तं न्यायचिन्तामणौ– 'तात्पर्यात्तु वृत्तिः, न तु वृत्तेस्तात्पर्य'मिति । जहदजहल्लक्षणया मुख्यपरत्वे संभवति तत्सहचरिताद्यर्थपरत्वकल्पनस्यानुचितत्वाच्च । यथा अभेदपरत्वे न बोधकत्वानुपपत्तिः, तथोक्तं प्राक् । 'द्वा सुपर्णा सयुजा' इत्यादिना न जीवस्य ब्रह्मणा सहचरितत्वोक्तिः, किंत्वन्तःकरणेनेति न तेन सहचरितत्वप्रसिद्धिरपि । न वा सन्मूलाः प्रजा इत्यादिना जीवस्य तदाश्रितत्वप्रसिद्धिः, प्रजाशब्दस्य प्रजायमानवाचकत्वेन जीवस्य नित्यस्याप्रतिपादनात् । अत एव न तज्जन्यत्वेनापि तच्छब्दप्रयोगः ।

ब्राह्मणो मुखमित्येव मुखाज्जातत्वहेतुतः ।
यथावदुच्यते तद्वज्जीवो ब्रह्मेति वाग्भवेत् ।।

इति स्मृतिरप्यस्मृतिरेव, श्रुतिविरोधात् । यत्तु तद्गुणसारत्वादित्यादिना जीवे ब्रह्मगुणयोग उक्त इत्युक्तम्, तन्न, बुद्धिगुणसूक्ष्मत्वयोगात् जीवे ब्रह्मणीव सूक्ष्मत्वमित्येवं परत्वात्सूत्रस्य । एतेन– शाखासदेशे चन्द्रे शाखेतिवत् जीवान्तर्यामितया जीवसदेशे ब्रह्मणि त्वमिति प्रयोगः, आत्मनि तिष्ठन्निति श्रुतेः, ब्राह्मणो वै सर्वा देवता इत्यादिवत् । जीवाश्रयत्वाद्वा ब्रह्मणः सर्वकर्तृत्वेन यजमानः प्रस्तर इत्यादिवत् तत्सिद्ध्या वा ब्रह्मणि त्वमिति व्यपदेश इति निरस्तम् ।

ननु– जहदजहल्लक्षणायां वाच्यान्तर्गतत्वेन प्रागधीस्थस्य बाधकात् त्यक्तस्य पुनः स्वीकारः, जहल्लक्षणायाम् अधीस्थस्यात्यक्तस्यैव स्वीकारः त्यक्तस्वीकाराद्वरमधीस्थस्य

(अद्वैतसिद्धिः)

स्वीकार इति– चेन्न, अनुपपत्त्या विशेषणत्यागेऽपि विशेष्यांशात्यागात् । एतेन– तच्छब्दात् परतृतीयादिविभक्तेः सुपां सुलुगित्यादिना प्रथमैकवचनादेशो वा लुग्वा, तथा च तेन त्वं तिष्ठसीति वा, ततः सञ्जात इति वा, तस्य त्वमिति वा, तस्मिन् त्वमिति वार्थः, 'अनेन जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति सन्मूलाः सोम्येमाः सर्वाः प्रजा ऐतदात्म्य-मिदं सर्वमित्यादिवाक्यशेषात् । तथा च मीमांसका 'उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहु'-रित्यत्र यत्तच्छब्दयोः सप्तम्यर्थे प्रथमां स्वीकृत्य यत्र सुन्वन्ति तत्र हविर्धाने स्थित्वा सामिधेनीरनुब्रूयादिति व्याख्याञ्चक्रुः । न्याय्यं च निरवकाशप्रधानभूतानेकप्रातिपदिक-स्वारस्याय सङ्ख्यर्थत्वेन सावकाशप्रधानैकविभक्त्यस्वारस्यमिति निरस्तम्, प्रोद्गातॄणामित्यत्र विभक्तिस्वारस्याय प्रातिपदिकस्यान्यथानयनवदत्रापि प्रातिपदिकस्यैवान्यथानयनाच्च । न च– षष्ठीबहुवचनस्य प्रथमैकवचनवदन्यत्राविधानेन तस्यान्यथानयनमसंभवीति बहुवचनानुसारेण प्रातिपदिकस्य प्रस्तोत्रादिछन्दोगेषु लक्षणाऽऽश्रितेति वाच्यम्, 'सक्तून् जुहोती'त्यत्रेवान्यत्र नयनस्य संभावितत्वात् । किं च न तावत् प्रतिपादकस्य निरवकाशत्वम्, विभक्तेः सङ्ख्यामिव विशेष्यांशे सावकाशत्वात् । नापि प्राधान्यं, प्रधानार्थवाचकप्रत्ययस्यैव प्राधान्यात् । तदुक्तं– 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययः प्राधान्येने'ति । नापि प्रातिपदिकानेकत्वं स्वारस्ये तन्त्रम्, 'गभीरायां नद्या'मित्यादौ अनेकत्वेऽप्यस्वारस्यदर्शनात् । तात्पर्यबलात्तत्र तथेति चेत्, समं प्रकृतेऽपि । यत्तु 'प्रयाजशेषेण हवींष्यभिघारय'तीत्यत्र प्रयाजशेषं हविःषु प्रक्षिपतीति तृतीयाविभक्त्यस्वारस्यं, सक्तून् जुहोतीत्यादावपि द्वितीयाविभक्त्यस्वारस्यं, तदगत्या, 'प्रयाजशेषेण'त्यादौ उपयुक्तसंस्कारव्यतिरेकेण प्रकारान्तरस्यासंभवात्, सक्तूनित्यादौ भूत-भाव्युपयोगाभावेन संस्कार्यत्वाभावात् । एतेन– तस्य त्वं तत्त्वमिति समस्तं पदमिति निरस्तम्, असमासेनैव षष्ठ्यर्थलक्षणादिरहितेन उपपत्तौ षष्ठीसमासस्यान्याय्यत्वाद्, अन्यथा स्थपत्यधिकरणविरोधापत्तेः । ननु– ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसीत्यत्र तत्पदेन नात्मा परामृश्यते, किन्तु ऐतदात्म्यम्, नपुंसकत्वाद्, ऐतदात्म्यमित्यस्य एष चासावात्मा च एतदात्मा तस्येदमैतदात्म्यम् । एवं च एतदीयं वस्तु त्वमसीत्यर्थः, न त्वभेदः, एतदात्मा यस्य तदैतदात्म्यमित्यर्थे भावप्रत्ययवैयर्थ्यापत्तेः । ततो वरमर्थान्तराश्रयणम्; विचित्रा हि तद्धितगतिरिति वचनात् ।

(अद्वैतसिद्धिः)

स स्रष्टा चैव संहर्ता नियन्ता रक्षिता हरिः ।
तेन व्याप्तमिदं सर्वमैतदात्म्यमतो विदुः ॥

इति स्मृतेश्चेति- चेन्न, तस्येदमित्यर्थे ष्यञोऽविधानात् प्रयोगादर्शनाच्च । स्वार्थे च सौख्यमित्यादिप्रयोगदर्शनात् । तथा च एतत् सद् आत्मा यस्य सर्वस्य तदेतदात्मा तस्य भाव ऐतदात्म्यं सामानाधिकरण्यं च स्वार्थिकत्वाद्वा, भावभवित्रोरभेदोपचाराद्वा, 'यो वै भूमा तत्सुख'मितिवत् । यत्तु स्मृतावेतद्व्यापकत्वेन ऐतदात्म्योक्तिः, सा न युक्ता, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधात् ।

ननु- शरीरवाचिनां देवमनुष्यशब्दानां शरीरिपर्यन्तत्वदर्शनाद् ब्रह्मशरीरभूतजीववाचित्वं पदस्य ब्रह्मपर्यन्तत्वेन तत्त्वमिति व्यपदेशः शरीरशरीरिभावनिबन्धनः, 'यस्यात्मा शरीर' मित्यादिश्रुतेरिति मुख्यमेवास्मन्मते पदद्वयमिति- चेन्न, शरीरिपर्यन्तत्वमिति तल्लक्षकत्वं वा? तत्रापि शक्तत्वं वा? शरीरविषयवृत्त्यैव तत्प्रतिपादकत्वं वा? नाद्यः, मुख्यत्वानुपपादनात् । न द्वितीयः, शरीरवाचिनामित्यसाधारण्येन निर्देशानुपपत्तेः प्रवृत्तिनिमित्तमनुष्यत्वादिजातेः शरीरिण्यवृत्तेरुक्तत्वाच्च । न तृतीयः, अन्यविषयवृत्तेरन्यानुपयोगेन शरीरशरीरिणोरनादिभ्रम-सिद्धाभेदनिबन्धनोऽयं प्रयोगो वाच्यः । तथा चात्राप्यभेदनिबन्धन एवायं प्रयोगः, अभेदस्तु बाधकाभावादत्र तात्त्विक इत्येव विशेषः । यत्तु 'आदित्यो ब्रह्मेति'वत् जीवे ब्रह्मत्वोपा-सनार्थस्तत्त्वमसीति निर्देश इति, तन्न, अनुपासनाप्रकरणस्थत्वेन दृष्टान्तवैषम्याद्, उक्तरीत्या वस्तुनिष्ठत्वे संभवति तत्त्यागायोगाच्च ।

ननु- स आत्मा तत्त्वमसीत्यत्रातत्त्वमसीति पदच्छेदः, 'शब्दोऽनित्य'इत्यत्रानित्य इति पदच्छेदो यथा घटदृष्टान्तानुसारेण, तथाऽत्रापि शकुनिसूत्रादिदृष्टान्तानुसारात् । न हि प्रथमखण्डे शकुनिसूत्रयोः स यथा शकुनिः सूत्रेण प्रबद्ध इत्युक्तयोः शकुनिसूत्रयोः, षष्ठे लवणमेतदुदकमित्यादिनोक्तयोर्लवणोदकयोः, सप्तमे 'पुरुषं सोम्य गन्धारेभ्य' इत्यादिनोक्तयोः पुरुषगन्धारदेशयोः, नवमे च 'अपहार्षीत् स्तेयमकार्षी'दित्यादिनोक्तयोः स्तेनापहार्ययोः ऐक्यम् । स्तेनापहार्यदृष्टान्ते हि स्पष्टमैक्यज्ञानिनोऽनर्थः, परकीयब्रह्मत्वाभिमानी हि स्तेनः, न तु विद्यमानब्रह्मत्वाज्ञानीति चेन्न । शकुनिसूत्रादौ दृष्टान्ते विद्यमानोऽपि भेदो नातदिति-पदच्छेदप्रयोजकः, तं विनैव तदुपपत्तेः, घटदृष्टान्तस्तु न नित्यत्व उपपद्यत इति वैषम्यात् ।

(अद्वैतसिद्धिः)

तथा हि– ज्वरादिरोगग्रस्तस्य तन्निर्मोके स्वास्थ्ये विश्रान्तिवज्जाग्रत्स्वप्नयोः करणव्यापारजनितश्रमापनुत्तये जीवस्य देवतात्मस्वरूपावस्थानमित्यस्मिन्नर्थे शकुनिसूत्रदृष्टान्त इत्यन्यथैवोपपत्तेः, 'स्वमपीतोभवती'ति श्रुतेः। ननु– ब्रह्मणि स्वशब्दो न जीवाभेदाभिप्रायः, किन्तु आत्मीयत्वाद्यर्थः स्वातन्त्र्याभिप्रायो वा, 'स्वातन्त्र्यात्स्व' इति प्रोक्त इत्यागमाद्, 'अपीतो भवती'त्यस्यापि तिरोहितः सन् प्राप्तो भवतीत्येवार्थः, न त्वभिन्न इति अपेः पिधाने, इणोधातोश्च गतौ, निष्ठायाः कर्तरि शक्तेः क्लृप्तत्वाद्, ऐक्ये योगरूढ्योरभावाच्चेति चेत्, न। स्वशब्दस्य स्वरूपे मुख्यस्यार्थान्तरपरत्वे गौणीलक्षणयोरन्यतरापत्तेः, अभेदे योगरूढ्योरभावेऽपि उपसर्गप्रकृतिप्रत्ययपर्यालोचनया लब्धस्वरूपप्राप्तिरूपार्थस्याभेदे पर्यवसानात्। अत एव– ऐक्यार्थत्वे अपीत इत्यस्य भवतेश्चाकर्मकतया श्रुतद्वितीयायोगः अश्रुततृतीयाकल्पनमिति– निरस्तम्। अत एव– 'यथा अस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहृत्य पक्षौ संलयायैव ध्रियते एवमेवायं पुरुष' इति सुषुप्तिसमये श्रुत्यन्तरे भिन्नश्येननीडदृष्टान्तोक्तिरिति च– निरस्तम्, सर्वसाम्यस्य दृष्टान्ततायामतन्त्रत्वात्। न च– प्राज्ञेनात्मना संपरिष्वक्तः स इति सुषुप्तिविषये भेदश्रुत्या त्वन्मतेऽपि भेदपरेण सुषुप्त्युत्क्रान्त्योर्भेदेनेति सूत्रेण त्वत्पक्षेऽपि जागरण इव सुषुप्तावपि आविद्यकजीवब्रह्मभेदस्वीकारेण च विरोध इति वाच्यम्, यतो जाग्रत्स्वप्नयोरिव स्फुटतरविक्षेपो नास्तीत्यभिप्रायेण स्वस्वरूपप्राप्त्युक्तिः, न त्वात्यन्तिकाभेदाभिप्रायेण, अन्यथा सुषुप्तिमुक्त्योरविशेषापत्तेः। यदि सज्जगतो मूलम्, तदा कथं नोपलभ्यत इत्याशङ्कायां विद्यमानमपि वस्तु नोपलभ्यते, अन्यथा तूपलभ्यत इत्यमुमर्थं स्पष्टीकर्तुं लवणोदकदृष्टान्त इति, तत्राप्यन्यथोपपत्तेः। यद्येवं लवणमिवेन्द्रियैरनुपलभ्यमानमपि जगन्मूलं सद् उपायान्तरेण उपलब्धुं शक्यते इति तस्यैवोपलम्भे क उपाय इत्याशङ्कायाम् 'आचार्यवान् पुरुषो वेदे'त्युपायं वक्तुं गान्धारपुरुषदृष्टान्त इति तत्राप्यन्यथैवोपपत्तेः। तथा चाचार्यवान् विद्वान् येन क्रमेण सता संबध्यते स क इत्याशङ्कायां सत्याभिसन्धस्यार्थप्राप्तिरनृताभिसन्धस्यानर्थप्राप्तिरिति वक्तुं स्तेनास्तेनदृष्टान्त इति तत्राप्यन्यथैवोपपत्तेः। न च सत्यानृतदृष्टान्तेन पूर्तेरपहार्षीत् 'स्तेयमकार्षी'दिति उदाहरणायोगः, तदुपपादकत्वेन पृथक् दृष्टान्तत्वाभावात्।

ननु-नवमखण्डे 'नानात्ययानां वृक्षाणां रसानि'त्यादिनोक्तानां नानावृक्षरसानां दशमे 'इमाः सोम्य नद्य' इत्यादिनोक्तयोर्नदी- समुद्रयोश्चैक्यं वक्तुं न हि शक्यम्, न हि

(अद्वैतसिद्धिः)

नानावृक्षरसा अन्योन्यभेदत्यागेन प्राक् सिद्धेन मधुना ऐक्यमापद्यन्ते, न वा प्राक् भेदभ्रान्ति-विषयाः पश्चात्तदविषयाः, किंतु तन्तव इव पटमन्योन्यभिन्ना एव प्रागसिद्धं मधूत्पादयन्ति, न चेदं दार्ष्टान्तिकानुगुणम् । नदीसमुद्रदृष्टान्तेऽपि किं नदीसमुद्रावयविनोरैक्यम्? किं वा तदवयवजलाणूनाम्? उत द्रव्यान्तरारम्भः? नाद्यद्वितीयौ, माषराशौ प्रक्षिप्तमाषतदवयवानामिव क्षीरे प्रक्षिप्तनीरतदवयवानामिव चान्योन्यमिश्रीभावेऽपि प्राग्भिन्नानां पश्चादप्यैक्यायोगात् । तृतीये तु भेद एव, एवं दार्ष्टान्तिकाननुगुण्यं चेति-चेन्न, स्फुटावच्छेदकविरहेण स्पष्टभेदा-भावाभिप्रायेण दृष्टान्तनामुपात्तत्वेन दृष्टान्ते वास्तवभेदाभेदयोरौदासीन्येन त्वदुक्तदूषणगणा-नामगणनीयत्वात् । अत एव सतो भेदस्याज्ञानमात्रे दृष्टान्त इति निरस्तम्; भेदसत्ताया-मौदासीन्यात् । न चैवमस्फुटभेदविषयत्वस्यात्यन्तिकाभेदेऽनुपयोगः, सूक्ष्मोपाध्यवच्छिन्नस्य महोपाध्यवच्छिन्नैक्यवत्तदवच्छिन्नस्यापि तद्विलये अनवच्छिन्नैक्यमिति सम्भावनाबुद्धिजनन-द्वारोपयोगित्वसंभवात् । अत एव 'ताः समुद्रात् समद्रमेवापियन्ति स समुद्र एव भवती'त्यत्र प्रकृतनदीरुद्दिश्य समुद्रभवनविधाने सुवर्णं कुण्डलं भवतीतिवत्, ताः समुद्र एव भवन्तीति व्यपदेशः स्यात् । अतो नद्योऽनियतजलराशिरूपात् समुद्राद् गच्छन्ति तं प्रविशन्ति च, समुद्रस्तु स एव, नैतासां समुद्रत्वमिति वा, समुद्र एव न तु नदीत्वं प्राप्नोतीति वार्थः । सतोऽप्यन्यौन्यं भेदस्याज्ञान एवेमौ दृष्टान्तौ । अत एव नानारसवाक्ये दार्ष्टान्तिके 'एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपत्स्यामह इति त इह व्याघ्रो वे'ति नदीसमुद्रवाक्ये च दार्ष्टान्तिके 'सत आगम्य न विदुः सत आगच्छामह'इति 'त इह व्याघ्रो वे'ति सतो भेदस्याज्ञानेनैवानर्थ उक्त इति निरस्तम्, स्पष्टभेदविषयताभावाभिप्रायेण दृष्टान्त-त्वात् । यच्च भेदाज्ञाननिबन्धनव्याघ्रादिरूपानर्थपरा श्रुतिरिति, तन्न, सति संपद्येत्येस्या-सन्नत्वात् 'न विदु'रित्यनेन सत्संपत्त्यज्ञानमुच्यते न तु भेदाज्ञानम् । तथा च सत्संपत्ते-र्ज्ञानपूर्वकत्वाभावात् तत्तद्वासनया तत्तद्व्याघ्रादिभाव एव भवतीत्येतत्परत्वात् ।

तस्माद् दृष्टान्तवर्याणां भेदे तात्पर्यहानितः ।
एतेषामनुसारेण छेदो नातदिति स्फुटम् ॥

ननु– अष्टमखण्डे स्वप्नान्तं मे सोम्य विजानीहीति स्वातन्त्र्यशङ्कानास्पदसुषुप्तिनिदर्शनेन एकादशे चास्य यदेकां शाखां जीवो जहातीत्यादिना अन्वयव्यतिरेकोक्त्या पञ्चदशे च पुरुषं

(अद्वैतसिद्धिः)

सोम्योतोपतापिनमित्यादिना स्वातन्त्र्यशङ्कानास्पदमरणनिदर्शनेन ईश्वराधीनत्वस्योक्तत्वादतदित्येव छेदो युक्त इति– चेन्न, स्वप्नान्तमित्यादेः सुषुप्त्यवस्थायामेव जीवत्वविनिर्मुक्तं स्वं देवतारूपं दर्शयिष्यामीत्यनेनाभिप्रायेण उद्दालकेनावतारितत्वेनेश्वराधीनत्वपरत्वाभावात् । जलादुत्थितानां वीचीतरङ्गफेनबुद्बुदानां पुनस्तद्भावं गतानां विनाशो दृष्टः । जीवानां प्रत्यहं स्वरूपतां गच्छतां मरणप्रलययोश्च नाशाभावः कथमित्याशङ्कायां तत्परिहारत्वेनोक्तस्य वृक्षशाखानिदर्शनस्य जीवाधिष्ठितं शरीरं जीवति, तदपेतं च म्रियते, न तु जीवो म्रियत इत्येतत्परत्वात् 'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत' इति वाक्यशेषात् । यथा सोम्योतोपतापिनमित्यस्यापि 'आचार्यवान् विद्वान् केन क्रमेण सत् संपद्यत इत्याशङ्कायां तत्क्रमप्रदर्शनपरत्वेन ईश्वराधीनत्वे तात्पर्याभावात् ।

यत्तु एकादशे 'जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठती'त्यत्र जीवशब्द ईश्वरपरः मोदमान इति संसारिणः पृथगुक्तेरिति, तन्न, मोदमान इत्यस्य दृष्टान्तत्वेन प्रक्रान्तवृक्षविशेषणत्वेन संसारिपरत्वाभावेन जीवइत्यत्र श्रुतार्थत्यागायोगात् । यच्च द्वादशे एतस्यैव सोम्यैषोऽणिम्न एव महान् न्यग्रोधस्तिष्ठतीति, अत्र अणिमशब्दः सूक्ष्मेश्वरपरः, स एषोऽणिमा ऐतदात्म्यमिदं सर्वमिति इहैव श्रुतावीश्वरे तस्य प्रयोगात्, न तु धानापरः, तासां किमत्र पश्यसीति अण्व्य इवेमा धाना इति भावप्रत्ययरहितेन स्त्रीलिङ्गेन बहुवचनान्तेन इवशब्दशिरस्केनाणुशब्देन निर्दिष्टतया तद्विपरीताणिमशब्दानर्हत्वाच्चेति चेन्न । एषोऽणुरात्मेत्यत्र भावप्रत्ययरहितप्रयोगविषयेऽपीश्वरे एषोऽणिमेति प्रयोगदर्शनेन धानासु तथा वक्तुं शक्यत्वात् । न च तर्हि न निभालयस इत्युक्तादृश्यत्वायोगः, अनुभूतायां धानायामेव महान् न्यग्रोधस्थिष्ठति स त्वयाऽनभिव्यक्तत्वात् न ज्ञायत इत्येवं परत्वात् ।

ननु– यदि पञ्चदशे विदुषो ब्रह्मप्राप्तिमात्रं विवक्षितम्, तदा तस्य वाङ्मनसि संपद्यत इत्यादि तेजः परस्यां देवतायामित्यन्तमेव वाक्यं स्यात्, यावन्न वाङ्मनसि संपद्यत इत्यादि व्यर्थं स्यादिति– चेन्न । लौकिकमरणे यः सत्संपत्तिक्रमः, स एव विदुषोऽपि, विशेषस्तु ज्ञानाज्ञानकृत इति अमुमर्थं प्रतिपादयितुं दृष्टान्तेऽन्वयव्यतिरेकाभ्यां सत्संपत्तिक्रम इति वैयर्थ्याभावात् । न च 'तत् सत्यं स आत्मा' इत्यत्रात्मशब्देनाणिमशब्दोक्तेश्वर एव गृह्यते, न तु जीवः ।

(अद्वैतसिद्धिः)

''यदाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति गीयते ॥''

इति वचनादिति– वाच्यम्, कतम आत्मेत्यादौ आत्मशब्दस्य जीवे प्रसिद्धत्वाद्, वचनोक्तविषयात्तृत्वस्य जीव एव च संभवात् तत्परिग्रहस्यैवोचितत्वात् । यच्च 'तमेवैकं जानथ आत्मान'मिति वाक्योक्तो न जीवः तद्वाचिशब्दाभावादिति सिद्धान्तितम्, तदात्मशब्दस्य न जीवे अमुख्यत्वाभिप्रायेण किन्तु प्रधानादौ । जीवस्य तु आत्मत्वेऽपि परिच्छिन्नतया जगत्कर्तृत्वासंभवाद् व्युदास इत्येवं परम् । जीवेनात्मनेति सामानाधिकरण्यानुपपत्तेश्च । न च जीवशब्देन ईश्वर एवोक्तः, रूढिपरित्यागे कारणाभावाद्, रूढेश्च क्लृप्तत्वाद्, अहं हि जीवसंज्ञ इत्यादेश्च अभेदपक्षेऽपि संभवात् । न च प्राणधारकत्वमीशमात्रवृत्ति, जीव-साधारणत्वात् । न च त्रिवृत्करणपूर्वकनामरूपव्याकरणस्य जीवेऽसंभवः अस्मदादावसंभवेऽप्य-त्रिवृत्कृतभूतारब्धलिङ्ग शरीराभिमानिनो हिरण्यगर्भस्य नामरूपात्मकप्रपञ्चव्याकरणसंभवात् । न च – तर्हि पुनर्जीवप्रवेशोक्त्ययोगः, 'तत्तेज ऐक्षत ता आप ऐक्षन्त इमास्तिस्रो देवता' इति पूर्वमेव चेतनत्वसिद्धेरिति वाच्यम्, अव्याकृतभूतसृष्टौ साक्षात्कारणत्ववत् ब्रह्माण्डादिसृष्टौ न साक्षात्कारणता किंतु स्वाभिन्नजीवद्वारेणेत्येवं परत्वात् । किंच 'एकमेवाद्वितीयमित्युप-क्रमात् न श्येनादिदृष्टान्तानुसारादतदिति पदच्छेदो युक्तः, एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञानविरोधाद्, ब्रह्मजीवैक्यस्याप्रसक्तत्वेन निषेधानुपपत्तेश्च । न च– 'इष्टापूर्तं मन्यमाना वरिष्ठ'मित्यादाविव श्रुतितात्पर्यापरिज्ञानेन 'तद्धैक आहुरसदेवेदमग्र आसी'दित्यादावि-वानादिकुसमयेन वा देहेन्द्रियादीन् प्रति स्वातन्त्र्यरूपस्य ऐश्वर्यस्य सर्वैरपि स्वात्मन्य-भिमन्यमानत्वेन प्रत्यक्षेण वा प्रसक्तिरैक्यस्येति– वाच्यम्, ऐक्यतात्पर्यस्य प्रमितत्वेन सुसमय-त्वस्य व्यवस्थापितत्वेन च तात्पर्यापरिज्ञानकुसमय प्राप्तत्वस्य वक्तुमशक्यत्वाद्, ऐक्यलिङ्ग-स्यापि आभिमानिकत्वाभावेन तेन चेत् प्रसक्तिः, तदा निषेद्धुमशक्यतैव, देहेन्द्रियादीनां जीवस्यैक्येनाध्यस्तत्वात् तान् प्रति स्वातन्त्र्याभिमानस्य सार्वलौकिकस्य वक्तुमशक्यत्वाद्, यत्किंचित्प्रति स्वातन्त्र्यस्य ईश्वरलक्षणत्वाभावाच्च । एतेन– एकमेवाद्वितीयमिति समाभ्यधि-कराहित्यस्योपक्रमाद्, ऐतदात्म्यमिति तस्यैवोपसंहाराद्, अतत्त्वमसीति नवकृत्वोऽभ्यासाद्, शास्त्रं विना शास्त्रैकगम्यस्य ईश्वरभेदस्याप्रसक्ततयाऽपूर्वत्वाद्, अथ सम्पत्स्यत इति फल-

(अद्वैतसिद्धिः)

श्रवणाद्, येनाश्रुतं श्रुतं भवतीत्यर्थवादात्, शकुनिसूत्रादिदृष्टान्तैरुपपादनात्, षड्विधतात्पर्य-लिङ्गानि भेदपराण्येवेति– निरस्तम्, एकमेवेत्यत्र समाभ्यधिकराहित्यमात्रेण भेदोपक्रमत्वा-भावाद्, अभेदेऽपि तत्संभवाद्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानविरोधाद्, द्वितीयाभावमात्र-स्यैवोपक्रमात्। अत एवाभ्यासोपसंहारावपि भेदविषयौ न भवतः अभेदे तु यथाऽपूर्वता तथो-क्तम्। फलार्थवादोपपत्तीनामभेद एव संभवाच्च। तथा शाखान्तरस्थिताभेदवाक्यानामुपासना-प्रकरणस्थितानां तूपासनापरतया नाभेदपरवाक्यविरोधः। इति तत्त्वमसिवाक्यार्थनिरूपणम्।

## न्यायामृततरङ्गिणी

॥ एकस्मिन्निति ॥ दशमस्य चतुर्थपादे चिन्तितम्। अग्निष्टोमे उपावर्तध्वमित्यनेन मन्त्रेण दर्भाभ्यां च स्तोत्रोपाकरणमस्ति। वाजपेये श्रूयते रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति। तदिह किं रथो दर्भयोर्निवर्तको घोषो मन्त्रस्य उत रथस्य घोष उभयोर्निवर्तक इति संशये षष्ठीतत्पुरुषे पूर्वपदस्य लक्षणापत्त्या द्वन्द्व एवाश्रयणीयः। एवं च द्रव्यत्वसामान्याद्रथोदर्भयो-र्निवर्तकः शब्दत्वसामान्यात् घोषो मन्त्रस्य। एवञ्च नावश्यं रथस्यैव घोष आदर्तव्यः। घोषस्याविशेषणाद्येन केनचिद्घोषेण कार्यसिद्धेरिति पूर्वपक्षे यद्यपीतरेतरयोगद्वन्द्वे पदद्वयमपि श्रुतिवृत्तं भवति तथापि रथघोषाभ्यामिति द्विवचनं प्राप्नोतीति। समाहारार्थे तु द्वे अपि पदे लक्षणार्थे स्याताम्। तत्र पूर्वपदमात्रे लक्षणामङ्गीकृत्य षष्ठीसमासाश्रयणम्। तस्माद्रथस्य घोष उपाकरणस्य साधनम्। सच प्राकृतसाधनं मन्त्रदर्भौ निवर्तयतीति। उपाकरणं नाम स्तोत्र-पाठायोद्गातुः प्रेरणम् ॥ तत्साहचर्यादिति ॥ वसन्तादिभ्यष्ठगित्यत्र भाष्ये तदधीते तद्वेदेत्यधि-काराद्वसन्तमधीत इत्यर्थासम्भवाद्वसन्तशब्देन वसन्तसहचरित उच्यते। यत्र वसन्तो वर्ण्यते यो वा वसन्ते यो वा वसन्तेऽध्येयः स ग्रन्थो यः स ग्रन्थो वसन्तसाहचर्यात्ताच्छब्द्यं लभत इत्युक्तम् ॥ तदाश्रितत्वादिति ॥ समर्थः पदविधिरित्यत्र समर्थाधिकारस्य विधेयसामानाधि-करण्यान्निर्देशानर्थक्यमिति वार्तिकम्। अस्यार्थः कैयटे विधिशब्दः कर्मसाधन उपात्तः तस्य सम्बन्धी समासादिरर्थो वाच्यः। तत्समानाधिकरणं च समर्थपदमुपात्तम्। तत्रासमर्थानां समासस्यानिवर्तितत्वात्समर्थवचनेन न किञ्चित्कृत्यम्। तथाहि। समर्थानां यः समासः स समर्थ एव यो ह्यसमर्थनां भार्या राज्ञः पुरुषो देवदत्तस्येत्यादौ सोपि नियमाभावान्निवृत्त एव। तस्यासमर्थस्याप्यनेन समर्थग्रहणेन न किञ्चित्क्रियते। निवृत्तत्वात्। तदनेन पूर्वपक्षयित्वा सिद्धान्तितम्। समर्थपदाश्रयत्वात्पदविधि- रुपचारेण समर्थपदेनोच्यते। एवं च क्रुद्धस्य राज्ञः

(तरङ्गिणी)
पुरुष इत्यादौ समासो व्यावर्तितो भवति समर्थवचनेनेति ॥ इग्यणइति ॥ इग्यणः सम्प्रसारणमिति सूत्रेण यणःस्थाने य इग्वर्णः स सम्प्रसारणसंज्ञश्चेत् ष्यङः सम्प्रसारणमित्यादौ दोषः नहि अङो यणस्थाने इकूसिद्धोस्ति यः अङः सम्प्रसारणमित्यनेन विधीयेतेत्यादिना वर्णसंज्ञापक्षं दूषयित्वा यणः स्थाने इकूभवनरूपो यो वाक्यार्थः ससम्प्रसारणसंज्ञ इति द्वितीयं पक्षमुद्भाव्य तमपि वाक्यार्थस्यासत्त्वभूतस्य स्थानित्वाभावात् सम्प्रसारणस्येत्यादौ दोष इति सूचयित्वा नैषदोषः यथाकाकाज्जातः काकः श्येनाज्जातः श्येन एवं सम्प्रसारणाज्जातं सम्प्रसारणं तथा च वाक्यार्थस्यासत्वरूपस्य स्थानित्वाद्यभावेपि सम्प्रसारणसंज्ञकार्थाज्जातो यइकारादिवर्णः सोपि सम्प्रसारणसंज्ञक इति तस्य स्थानित्वाद्युपपत्तिरित्युक्तं महाभाष्ये । ननु काकत्वाभिसम्बन्धात्काकः तत्कथमुच्यते काकाज्जातः काक इत्याशङ्क्य यदानुपजातजात्यभिव्यञ्जकसंस्थानविशेषः काको भवति निर्ज्ञातश्च तस्य काकाज्जन्म भवति तदैतदुक्तम् एवमिहापि सम्प्रसारणाज्जातत्वाद्वर्णोपि ताच्छब्द्यं लभत इत्युक्तं कैयटे ॥ धान्यमसीति ॥ दर्शपूर्णमासयोः पेषणार्थं दृषदि निक्षिप्तानां तण्डुलानामनुमन्त्रणार्थं 'धान्यमसि धिनुहि देवान् धिनुहि यज्ञमि'त्यादिमन्त्रः पठ्यते । अस्ति च शाक्यानामयनं नाम सत्रम् । तत्र तरसमांसमयाः सवनीय पुरोडाशा विहिताः । तत्र मांसमयपुरोडाशेऽस्मिन्मन्त्रेऽतिदेशेन प्राप्ते संशयः किमत्र धान्यपदस्थाने तरसमित्यूहनीयं न वेति । तत्र प्रकृतौ तण्डुलावस्थायां प्रयुज्यमानेऽस्मिन्मन्त्रे धान्यशब्दस्य सतुषवचनस्य समवेतार्थत्वाभावादसमवेतार्थस्य 'देवस्य त्वा सवितुरि'त्यादिमन्त्रे सवित्रादिपदवदनूह्यत्वान्नैवमूहितव्यमिति प्राप्ते धान्यशब्दस्य द्रव्यप्रकाशनरूपदृष्टार्थकल्पनौचित्यात्तस्य च सतुषवाचिनो लक्षणया तत्प्रकृतिकतण्डुलप्रकाशकत्वसम्भवात्समवेतार्थतया तदूहितव्यमिति सिद्धान्तितं नवमस्य प्रथमपादे ।

धान्याधीनत्वतो धान्यशब्दस्तण्डुलगो यथा ।
एव ज़ीवे तदितिगीरीशाधीनतयाभवेत् ।

नन्वभेदे तात्पर्येवधृते तन्निर्वाहाय लक्षणाबाहुल्यं न दोषः । मैवम् । तात्पर्यस्यैवेदानीं विचार्यमाणत्वात्तदवधारणस्यासिद्धेः । अत एवान्यथा तत्वमसीत्यादिवाक्यमबोधकं स्यादित्यादिना तात्पर्याभावमेवाविष्करोति ॥ अतिदेशोयमिति ॥ बहुगणवतुडति सङ्ख्येत्यत्र बहुगणादीनां सङ्ख्यासंज्ञा वाच्याचेदेकद्वित्रीत्यादिकायाःसङ्ख्यायाःसङ्ख्यापूर्वो द्विगुरित्यादिषु सङ्ख्याप्रदेशेषु ग्रहणं न स्यात् । कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय इति न्यायेन कृत्रिमसङ्ख्या-

(तरङ्गिणी)

संज्ञानां बहुगणादीनामेव स्यादिति पूर्वपक्षयित्वा नेदं संज्ञाकरणं किन्त्वतिदेशोयं बहुगणवतुड-तयः सङ्ख्यावद्भवंतीति परिहृते ननु तर्हि सूत्रे वतिनिर्देशःकर्तव्यः न त्वन्तरेण वतिमतिदेशो गम्यत इति पुनराशङ्क्यान्तरेणापि वतिमति देशो गम्यते तद्यथा अब्रह्मदत्तमित्यादिना परिहृतम्। ननु जहदजहल्लक्षणायां विशेषणांशत्यागेपि विशेष्यांशात्यागान्मुख्यार्थपरत्वे सम्भवति न तत्सहचरिताद्यर्थकजहल्लक्षणा युक्ता। तस्यां मुख्यार्थस्य सर्वथा त्यागादित्याशङ्क्य निराकरोति ।। नचैवंमुख्यार्थत्याग इति ।। तद् ब्रह्म त्वमन्तर्यामीत्यर्थे मुख्यार्थत्यागाभावादित्याह ।। अन्तर्यामिणीति ।। तव मते न कोपि तत्त्वमसीत्यस्य मुख्यार्थोस्तीति भावः। ननु तथापि लक्षणापक्षेऽन्तरङ्गत्वादजहल्लक्षणैवास्तु न तु जहल्लक्षणा बहिरङ्गत्वादत आह ।। त्वद्रीत्येति ।। नन्वेकत्वेपि बुद्धिस्थमुख्यासंस्पर्शित्वादजहल्लक्षणैव युक्तेत्यत आह ।। किं चेति ।। प्रकृते शुद्ध इति ।। शुद्धस्य कथमप्यप्रकृतत्वे तत्पदलक्षणापि तत्र न स्यादित्यर्थः ।। शुद्धस्येति ।। न हि वाचकमपि गोपदं गोपदावाच्यस्यापि वाचकं स्यादिति। तथा च पदद्वयेपि लक्षणैवेत्यर्थः ।। तदित्येकपदेति ।। तत्त्वमसीत्यत्र मुख्यार्थत्वाय तत्पदस्य प्रकृतचिन्मात्रपरत्वे तदैक्षत तत्तेजोऽसृजतेत्यादावपि तत्पदस्य चिन्मात्रपरतायामीक्षति सृजती अमुख्यार्थौ स्यातां चिन्मात्रे लक्षणाद्ययोगादित्यर्थः ।। प्रथमैकवचनेति ।। सुपां सुलुगिति सूत्रे यत्सुन्वन्ति तत्सामिधेनीरन्वाहुः यस्मिन् तस्मिन्निति प्राप्त इत्यादिना सप्तम्येकवचनस्य प्रथमैकवचनादेश इति काशिकायामुक्तत्वात्तद्वदत्रापि प्रथमैकवचनादेश इत्यर्थः ।। मीमांसकैरिति ।। हविर्धानाख्यगृहमध्ये दक्षिणोत्तरप्रदेशयोः सोमाख्यहविर्धारणार्थं हविर्धानसंज्ञके द्वे शकटे स्थाप्येते। तयोर्मध्ये दक्षिणहविर्धाने सोमाभिषवःक्रियते। तत्र सामिधेन्यनुवचनं विधातुं उत यत्सुन्वन्तीत्यादिवाक्यम्। तत्र यत्तत्पदयोःसप्तम्यर्थकत्वं मीमांसकैरुक्तमित्यर्थः ।। हविर्धान इति ।। हविर्धानसमीपे स्थित्वेत्यर्थः। अत एव तृतीयस्य सप्तमे उक्तं हविर्धानस्य हविर्धारणाद्यर्थत्वान्न प्रयोजनान्तरापेक्षा प्रकृतितस्त्वाहवनीयप्रत्यग्देशः सामिधेन्यङ्गत्वेन प्राप्तः स च दक्षिणस्योत्तरस्य वा हविर्धानस्य समीपे भवतीति तन्नियममात्रं लाघवाद् विधेयम्। हविर्धानस्यत्वन्त्यन्ताप्राप्तमनपेक्षितंच न युक्तं विधातुं तस्मात् सोमाभिषवहविर्धाने समीपदेशे स्थित्वा सामिधेनीरनुब्रूयादिति ।। न्याय्यश्चेति ।। अग्नीषोमीयपशुसम्बन्धिनः पाशस्य मन्त्रे अदितिः पाशान्प्रमुमोक्तेतानिति बहुवचनस्य कर्मकारकार्थतया सावकाशस्यैकत्वसङ्ख्योपेतपाशाख्यप्रकृतिस्वारस्यायास्वारस्यमुक्तं मीमांसकैर्यथा। तथा तत्त्वमाद्यनेकप्रातिपादिकानां सर्वज्ञत्वादिकर्तृत्वादिविशिष्टरूपस्वार्थात्यागलक्षणस्वारस्याय तत्पदगतप्रथमायाः तृतीयाद्यर्थकत्वरूपमस्वारस्यं

(तरङ्गिणी)

वक्तुं न्याय्यमित्यर्थः । ननु प्रैतुहोतुश्चमसः प्रब्रह्मणः प्रयजमानस्य प्रोद्गातॄणामिति चमसाध्वर्यून्प्रत्यध्वर्योः प्रैषः श्रूयते । सदःसंज्ञकगृहमध्ये होत्रादयः सोमस्य भक्षयितारःसन्ति । तेषां मध्ये होतारं प्रति होतृचमसः प्रैतु गच्छतु ब्रह्मणश्चमसोपि प्रैत्वित्याद्यर्थः । साम्नो या द्वितीया भक्तिरुद्गानाख्या सैकेनैवोद्गातृसंज्ञकेनर्त्विजा क्रियते । गानमात्रं तु प्रस्तोतृप्रतिहर्तृ संज्ञकाभ्यामपि क्रियते । एवं स्थितौ प्रोद्गातॄणामित्यत्र बहुवचनस्वारस्यायोद्गानकर्त्रैकपुरुषवाचकस्योद्गातृशब्दस्य गानकर्तृत्वेन रूपेणाजहल्लक्षणयोद्गातृप्रस्तोतृप्रतिहर्तृपरत्वं कल्प्यते । उद्गात्रादीनां त्रयाणामेकस्तोत्रसम्बन्धात्सदसि सन्निधानभक्षवेलायां च व्यापृतत्वात् त्रयाणामपि भक्षोस्तीत्युक्तं तृतीयस्य पञ्चमे । तस्माद्विभक्त्यस्वारस्यमन्याय्यमित्यत आह ॥ प्रोद्गातॄणामिति ॥ विभक्त्यन्तरइति ॥ एतच्चोपलक्षणम् । गानकारिषु त्रिष्वपि कथञ्चिदवयवयोगेन वर्तमानं प्रातिपदिकं बहुवचनं च द्वयमपि श्रुत्यर्थं भवतीत्यपि बोध्यम् ॥ छन्दोगेष्विति ॥ अपसुब्रह्मण्येष्वित्यर्थः । सुब्रह्मण्याख्यस्य ऋत्विजः सदसि स्थितत्वाभावात्सदसि स्थितान्प्रतिभक्षणार्थं चमसानां नीयमानत्वान्न सुब्रह्मण्यस्य भक्षोऽस्तीति वार्तिककारो मन्यते ॥ दृष्टश्चेति ॥ दर्शपूर्णमासयोःश्रुतं प्रयाजशेषेण हवींष्यभिघारयतीति । प्रयाजशेषाज्येन पुरोडाशादिहविषामभिघारणं किं हविषां संस्कार उत प्रयाजशेषस्य प्रतिपत्तिरिति संशये द्वितीयया हविषां संस्कार्यत्वेन प्राधान्यावगमात्तत्संस्कारःनतु शेषस्य प्रतिपत्तिः । तृतीयानिर्दिष्टस्य गुणत्वेन प्रतिपाद्यत्वायोगादिति प्राप्ते प्रतिपत्तिरेव युक्ता शेषशब्दस्य श्रवणात् । उपयुक्तशेषस्य हि द्रव्यस्य क्वचित् क्षारणरूपा प्रतिपत्तिरपेक्षिता न तु हविःसंस्कारः । अन्तःप्रयाजशेषंहविष्षु क्षारयेदिति वाक्यार्थकल्पनया प्रयाजशेषस्य प्रतिपत्तिरेव ग्राह्येति चतुर्थस्य प्रथमपादे निर्णीतम् । यथा वा सक्तून् जुहोतीत्यत्र होमेन सक्तूनां संस्कार्यत्वासम्भवाद्विभक्तिविपरिणामेन सक्तुभिर्जुहोतीति वाक्यार्थमाश्रित्य प्रातिपदिकस्वारस्यमुक्तं न तु प्रातिपदिके लक्षणाश्रिता तथाऽत्रापि ॥ शरीरवाचिनामिति ॥ ननु शरीरिपर्यन्तत्वं किं तल्लक्षकत्वं वा तत्रापि शक्तत्वं वा शरीरविषयवृत्त्यैव तत्प्रतिपादकत्वं वा । नाद्यः । मुख्यत्वानुपपादनात् । न द्वितीयः । शरीरवाचिनामित्यसाधारणपदेन निर्देशानुपपत्तेः । न तृतीयः । अन्यविषयवृत्तेरन्यत्रानुपयोगात् । मैवम् । द्वितीयपक्षे दोषाभावात् । पामरप्रसिध्या शरीरवाचिनामप्यभियुक्तप्रयोगे शरीरिपर्यन्तं व्याप्रियमाणानां शरीरवाचिनामित्यसाधारणनिर्देशोपपत्तेः । अस्मिन्पक्षे पदद्वयमपि मुख्यार्थमेव ॥ इतरेत्विति ॥ नन्वस्योपासनाप्रकरणस्थत्वाभावेन दृष्टान्तवैषम्यम् । मैवम् । एतस्यैवोपासनप्रकरण उत्कृष्टव्यत्वात् । ननु शकुनिसूत्रदृष्टान्ते विद्यमानोपि भेदो नातदिति पदच्छेदे

(तरङ्गिणी)

प्रयोजकः घटदृष्टान्तस्तु नानित्य इति पदच्छेदं विनोपपद्यत इति वैषम्यमित्यत आह ॥ नह्याद्यखण्डइति ॥ नन्वाचार्यवान्विद्धान्येन क्रमेण सति सम्पद्यते स कीदृगित्याशङ्कायां सत्याभिसन्धस्यार्थप्राप्तिरनृताभिसन्धस्यानर्थप्राप्तिरिति वक्तुं स्तेनास्तेनदृष्टान्त इति नासौ भेदानुगुण इत्यत आह ॥ नचसत्यानृताभिसन्धिमात्रमिति ॥ अनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यत इत्याद्येव दृष्टान्तः स्यात् । ननु सत्यानृतोपपादानय स्तेनाद्युच्यते । मैवम् । उपपादनं भेदेनैव क्रियतेऽतो भेददृष्टान्त एवायम् । ननु रोगग्रस्तस्य तन्निर्मोक्षे विश्रान्तिवज्जाग्रत्स्वप्नावस्थयोः करणव्यापारजनितश्रमापनुत्तये जीवस्य स्वरूपावस्थानमित्यस्मिन्नर्थे शकुनिसूत्रदृष्टान्तः । स्वमपीतो भवतीति तत्रैव श्रुतेः । स्वस्वरूपेण ब्रह्मणाऽपीतः एकीभवतीत्यर्थः । तथा चाद्यदृष्टान्तः कथमभेदाननुगुण इत्यत आह ॥ आद्यखण्डइति ॥ आत्मीयेति ॥ स्वशब्दस्यात्मीयार्थत्वादित्यर्थः । नन्वपीतशब्दस्यैक्ये योगरूढ्यभावेप्युपसर्गधातुप्रत्ययानां कयापि रीत्यैक्यार्थत्वमपि भविष्यतीत्यत आह ॥ ऐक्यार्थत्वइति ॥ सुप्तस्य ब्रह्मैक्यांगीकारेश्रुतिसूत्राभ्यां स्वाङ्गीकारेण च विरोध इत्याह ॥ प्राज्ञेनेति ॥ ननु जाग्रत्स्वप्नयोरिव स्फुटतरविक्षेपो नास्तीत्यभिप्रायेण स्वमपीतो भवतीति स्वरूपप्राप्त्युक्तिर्नत्वात्यन्तिकाभेदाभिप्रायेण । अतो न श्रुत्यादिविरोधः । मैवम् । एतदपेक्षया परमात्मप्राप्तेरेवार्थत्वौचित्यात् । ननु स्पष्टभेदाभावाभिप्रायेण नानावृक्षरसदृष्टान्तोऽतःसोऽभेदविषय एव । न चास्पष्टभेदत्वस्यैकान्तिकाभेदेऽनुपयोगः । स्पष्टभेदाभावे त्वैक्यस्यापि सम्भाविततया ऐक्यसम्भावनाजननद्वारेणोपयोगित्वादिति शङ्कां निराकरोति ॥ नहि नानावृक्षरसा इति ॥ तथा च विशेषदर्शनान्नैक्यसम्भावनापीत्यर्थः । नदीसमुद्रदृष्टान्तो स्पष्टभेदविषयत्वादभेदसम्भावनार्थ इत्येतन्निराकरोति ॥ नदीसमुद्रेति ॥ ननु माषाणां तद्राशेश्च भेदोपलम्भवज्जले प्रक्षिप्तजलेन न भेद उपलभ्यतेऽत आह ॥ ताएवापइति ॥ इन्द्रः सजले वसिष्ठकमण्डलौ स्वकमण्डलुजलं धारयित्वा सुदासो राज्ञो यज्ञं प्रत्याहूतः । स न गतः । तत आगत्य वसिष्ठं जलं ययाचे वसिष्ठस्तु ता एवापो दत्तवानित्यर्थः ॥ सप्तनदीनामिति ॥ एतच्चोपलक्षणम् । गङ्गायमुनयोः प्रयागे सङ्गत्य प्राचीं गतयोः पुनर्विभक्तयोरियं गङ्गा इयं यमुनेति गौडदेशे जनैर्व्यवह्रियमाणयोः सर्वसिद्धत्वात् ॥ समुद्रेत्विति ॥ समुद्रेपि नदीसङ्गमस्थलेऽल्पा वृद्धिर्दृश्यत इति समुद्रतीरवासिनां प्रवादः ॥ वाचस्पतिनापीति ॥ वाक्यान्वयादित्यधिकरणे वाचस्पत्ये ह्येवमुक्तम् । मैत्रेयीब्राह्मणे याज्ञवल्क्येन मुमुक्षुमैत्रेयीं प्रति वित्तसाध्यकर्माद्यसाध्यमोक्षं प्रति ज्ञानं साधनं तच्च ज्ञानं रागविषयेषु पतिपुत्रादिषु विरज्यात्मश्रवणादिना भवतीति वक्तुमात्मनस्तु कामाय सर्वं

(तरङ्गिणी)

प्रियं भवतीत्यादिनाऽऽत्मोपाधिकमेव सर्वस्यापि प्रियत्वं न तु स्वाभाविकं स्वात्मा तु स्वाभाविकप्रिय इत्युक्त्वा । आत्मा वा अरे द्रष्टव्यःश्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्युक्तम् । एवं च मैत्रेयीब्राह्मणस्य परमात्मदर्शनपरत्वे स्थिते आत्मनस्तु कामाय सर्वं प्रियं भवतीति भोक्तृजीवत्मनोपक्रमो न युक्त इत्याशङ्कायाम् उत्क्रमिष्यत एवं भावादित्यौडुलोमिरिति सूत्रेणौडुलोम्याचार्यमतेन समाधानमुक्तम् । जीवो हि परमात्मनोत्यन्तभिन्न एव सन् देहेन्द्रियमनोबुद्ध्युपधानसम्पर्कात्कलुषस्तस्यजीवस्य परमात्मध्यानादिसाधनानुष्ठानाद्देहेन्द्रियादिभ्य उत्क्रमणकाले परमात्मैक्योपपत्तेरिदमभेदेनोपक्रमणं भविष्यन्तमभेदमुपादाय भेदकालेप्यभेद उक्तः । ननु वस्तुतो भिन्नानामभेदो न दृष्टचर इति चेन्न । नदीसमुद्रयोर्दृष्टत्वात् । यथाहुः पाञ्चरात्रिकाः ॥

आमुक्तेर्भेद एव स्याज्जीवस्य परमस्य च
मुक्तस्य तु न भेदोस्ति भेदहेतोरभावत

इति । तदेतत्समाधानं काशकृत्स्नस्याचार्यस्य मते स्थित्वा दूष्यते नदीसमुद्रनिदर्शनात् । भिन्नानामभेद इति न युक्तम् । तथा हि । का पुनर्नद्यभिमता । किं जलपरमाणव उत तेषां संस्थानभेदस्तदारब्धोऽवयवी वा । नाद्यः । नदीपाथःपरमाणूनां समुद्रपाथःपरमाणुभ्यः पूर्वावस्थितेभ्यो भेद एव नाभेदः । एवं समुद्रादपि तेषां भेद एव । नेतरौ । संस्थानभेदस्य वाऽवविनो वा समुद्रनिवेशे विनाशात्कस्य समुद्रेणैकतेति ॥ इमाविति ॥ नानावृक्षरसनदीसमुद्रदृष्टान्तौ ॥ अतएवेति ॥ ननु सति सम्पद्येत्यस्यासन्नत्वान्न विदुरित्यनेन सत्संपत्त्यज्ञानमुच्यते न तु भेदज्ञानम् । तथा च सत्संपत्तेर्ज्ञानपूर्वकत्वाभावात्तत्तद्वासनया तत्तद्व्याघ्रादिभाव एव भवतीत्येवम्परौ दृष्टान्तौ । मैवम् । सत्सम्पत्तेर्ज्ञानपूर्वकत्वाभावबोधकपदाभावात् । सत्सम्पत्तेरज्ञानमात्रेण सत्सम्पत्तिनिबन्धनपूर्णानन्दप्रकाशाभावस्यायोगात् । सत आगत्य न विदुरित्यत्र तु स्पष्टं भेदाज्ञानस्य व्याघ्रादिभावहेतुत्वं प्रतीयतेऽतो नानावृक्षरसेपि भेदाज्ञानादेव व्याघ्रादिभावः ॥ आद्येखण्डइति ॥ ननु स्वप्नांतमित्यादेः सुषुप्त्यवस्थायामेव जीवत्वविनिर्मुक्तं स्वदेवतारूपं दर्शयिष्यामीत्यनेनाभिप्रायेणोद्दालकेनावतारितत्वादीश्वराधीनस्वपरत्वाभावः । मैवम् । उद्दालको हारुणिःश्वेतकेतुं पुत्रमुवाच स्वप्नान्तमेव सोम्य विजानीहीति । यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदां सम्पन्नो भवति । स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वंह्यपीतो भवतीत्यन्ते सुषुप्तिनिरूपणे देवतादिरूपत्वादेस्त्वदुक्तस्याप्रतीतेः प्रत्युत सता सोम्य

(तरङ्गिणी)

तदा सम्पन्नो भवतीत्यादिनेश्वराधीनत्वतद्भेदयोरेव प्रतीतेश्च ॥ चतुर्थेतेति ॥ ननु जलादुत्थितानां वीचीतरङ्गफेनबुद्बुदानां पुनस्तद्भावं गतानां विनाशो दृष्टो जीवानां प्रत्यहं स्वरूपतां गच्छतां मरणप्रलययोश्च नाशाभावः कथमित्येतदाशङ्कायां तत्परिहारत्वेनोक्तस्य वृक्षशाखानिदर्शनस्य जीवाधिष्ठितं शरीरं जीवति तदपेतं च म्रियते न तु जीवो म्रियत इत्येवंपरत्वम् । जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति वाक्यशेषात् । अतो नेश्वराधीनात्वपरश्चतुर्थखण्डः । मैवम् । वृक्षादिदेहं वृक्षादिजीवो यदन्वय एवान्वयते यद्व्यतिरेके चाजिहासितमपि जहातीति वृक्षादिजीवस्यास्वातन्त्र्यप्रतीतेः । ननु वृक्षाधिष्ठातुरेवान्वयव्यतिरेकाभ्यां वृक्षस्य जीवनमरणे प्रतीयेते । जीवशब्दश्रवणात् । न तु तदतिरिक्तस्येश्वरस्येत्यत आह ॥ अनेन जीवेनेति ॥ जडस्य मोदमानत्वासम्भवात् मोदमानत्वलिङ्गेन प्रवेशकर्मणः चेतनत्वेऽवगते प्रविष्टस्य वृक्ष-जीवाद्भिन्नत्वेनावगतस्येश्वरस्य वाचको जीवशब्द इत्यर्थः ॥ एतस्यैवेति ॥ तं होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्यैव सोम्यैषोणिम्न एव महान्न्यग्रोधस्तिष्ठतीत्यात्थ एव-मेतमणिमानं न निभालयसे न पश्यसि एतस्याणिम्नः सम्बन्धे एषः महान् न्यग्रोध एवं परिदृश्यमानरूपेण तिष्ठतीत्यर्थः ॥ भावप्रत्ययरहितेनेति ॥ ननु एषोऽणुरात्मा चेतसा वेदितव्य इत्यत्र भावप्रत्ययरहिताणुशब्दप्रयोगविषयेपीश्वरे एषोणिमेति प्रयोगवद्धानास्वपि तथा वक्तुं शक्यम् । मैवम् । मुण्डके एषोणुरात्मेत्युक्तेःछान्दोग्येऽणिमशब्दनिर्देशाभावं प्रत्यप्रयोजक-त्वात् । तदिदमाह ॥ निर्दिष्टतयेति ॥ सन्निहितप्रयोगविषयतेत्यर्थः ॥ न निभालयसइतीति ॥ न्यग्रोधफलान्तर्गतधानाभेदने कृते सति किमत्र पश्यसीति पृष्टःश्वेतकेतुर्न किञ्चन भगव इत्युत्तरितवान् । स तु धानान्तर्गतं सूक्ष्मरूपं परमेश्वरं न पश्यति । न तु धाना अपि न पश्यति । तासामण्व्य इवेमा धाना भगवः पश्यामीति दृश्यतयोक्तेः ॥ अष्टमइति ॥ ननु लौकिकमरणे यः सत्सम्पत्तिक्रमः स एव विदुषोपि । विशेषस्तु ज्ञानाज्ञानकृत इत्येतमर्थं प्रतिपादयितुमन्वयव्यतिरेकाभ्यां सत्संपत्तिक्रमः कथ्यत इत्यवैयर्थ्यम् । मैवम् । सत्सम्पत्तिं वक्तुमसत्सम्पत्तिकथनस्य विरुद्धत्वात् । तस्मात्स्वातन्त्र्यशङ्कनास्पदमरणनिदर्शनेनेश्वराधीनत्व-मेवोच्यते ॥ नानुमानमिति ॥ ननु प्रधानादिनिराकरणमेवात्मशब्देन क्रियते । तत्रात्मशब्द-स्यामुख्यत्वात् । न जीवस्य । तस्यात्मत्वेपि परिच्छिन्नत्वाज्जगत्कर्तृत्वासम्भव इति जीवव्युदास इति मम द्युभ्वाधिकरणसिद्धान्तः । मैवम् । प्राणभृच्चेति चकाराकृष्टस्यातच्छब्दादिति पूर्वसूत्र-स्थस्य हेतोः प्रकृतस्य त्यागेनाप्रकृतपरिच्छिन्नत्वादिहेतूपादाने प्रकृतहान्यादिदोषात् । ननु सेयं देवतेमास्तिस्रो देवता इत्यादौ सदेव सोम्येत्यादिषु सदादिशब्दनिर्दिष्टं ब्रह्म सेयं देवतेतिशब्देन

(तरङ्गिणी)

परामृश्य तस्य जीवेनात्मनेति सामानाधिकरण्याज्जीवाभेदः प्रतीयतेऽतआह ॥ इमाइति ॥ ननु जीवाभेदादनिरुद्धो जीवाख्योऽतआह ॥ विष्णुरिति ॥ योगाद्विष्णुर्जीवः संसारी तु रूढेरत आह ॥ जीवेपीति ॥ संसारिणइति ॥ नन्वस्मदादावसम्भवेप्यत्रिवृत्कृतभूतारब्धलिङ्गशरीराभिमानिनो हिरण्यगर्भस्य नामरूपात्मकप्रपञ्चव्याकरणं भविष्यति । मैवम् । जीवकोटिनिविष्टे हिरण्यगर्भे जगत्कर्तृत्वापरपर्यायस्य नामरूपव्याकरणस्यासम्भवात् ॥ तेजोबन्नानामिति ॥ तेजोबन्नानामीक्षणदेवतात्वादिना सजीवत्वे सिद्धे पुनः संसारिप्रवेशो न युक्त इत्यर्थः । नन्वव्याकृतभूतसृष्टौ साक्षात्कारणं ब्रह्म । ब्रह्माण्डादिसृष्टौ तु न साक्षात्कारणं किन्तु स्वाभिन्नजीवद्वारा । जीवाविष्टभौतिकानि प्रति परम्परयेति वक्तुं जीवप्रवेशः । मैवम् । तथा सति जीवेनात्मनेत्येतावता पूर्णत्वादनुप्रविश्येत्यनुप्रवेशो व्यर्थः । तदिदमाह ॥ पुनर्जीवप्रवेशेति ॥ एकमेवेति ॥ एकमेवाद्वितीयमिति श्रुतिव्याख्यानेन व्याख्यातः ॥ एकविज्ञानेनेति ॥ वाचारम्भणमिति श्रुतिव्याख्यानावसरे सादृश्यप्राधान्याभ्यामेकविज्ञानेन सर्वविज्ञानं व्याख्यातम् ॥ इष्टापूर्तमिति ॥ अपामसोमममृता अभूम । अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतमित्यादिश्रुतितात्पर्यापरिज्ञानेन प्राप्तं यज्ञादीनां वरिष्ठत्वमिष्टापूर्तं मन्यमानावरिष्ठमिति श्रुत्या निषिध्यते यथा तथैक्यमतत्त्वमसीत्यनेन निषिध्यते ॥ देहेन्द्रियादीन्प्रतीति ॥ ननु देहेन्द्रियादीनां जीवस्यैक्येनाध्यस्तत्वात्तान्प्रति स्वातन्त्र्याभिमानः सार्वलौकिको वक्तुमशक्यः । यत्किञ्चित्प्रति स्वातन्त्र्यं तु नेश्वरलक्षणम् । मैवम् । सर्वान्प्रतीवैकैकं प्रति स्वातन्त्र्यस्यापीश्वरलक्षणत्वात् । मम देह इत्यादिदेहादीन्प्रति स्वातन्त्र्यस्य सर्वैरप्यस्वतन्त्रैरभिमन्यमानत्वाच्च ॥ एवञ्चेति ॥ न च समाभ्यधिकराहित्यमात्रेण भेदोपक्रमत्वाभावः । अभेदेपि तत्सम्भवादिति वाच्यम् । अवरेषु सत्स्वेव समाभ्यधिकराहित्यावगमात्तस्य भेदोपक्रमत्वात् । न च द्वितीयाभावमात्रस्यैवोपक्रमः । द्वितीयाभावरूपद्वितीयस्य सत्त्वासत्त्वाभ्यां द्वितीयाभावमात्रोपक्रमत्वासिद्धेः ॥ अथ सम्पत्स्यत इति ॥ तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यत इति श्रुतिः । तस्य ज्ञानिनः तावच्चिरं तावान् विलम्बः यावत्पर्यन्तं प्रारब्धकर्मभ्योऽन विमोचनं भवति प्रारब्धकर्मक्षयातिरिक्तोऽन्यो विलम्बहेतुर्नास्तीत्यर्थः । एवं शाखान्तरेपि वाक्यानि भेदे तात्पर्यलिङ्गवन्त्युदाहरणीयानि ॥ ॥ तत्त्वमसिवाक्यार्थः ॥

## न्यायामृतकण्टकोद्धारः

किं चेति । न चैक्ये तात्पर्येऽवधृते लक्षणाबाहुल्यं न बाधकम् । तात्पर्याद्धि वृत्तिः, न तु वृत्तेस्तात्पर्यमित्यभियुक्तवचनादिति वाच्यम् । प्रमाणाभावेनैक्ये तात्पर्यावधारणायोगात् । न चोपक्रमादिनैव

(कण्टकोद्धारः)

तदवधारणम् । उपक्रमादीनामैक्यपरत्वाभावेनैक्ये तात्पर्यनिर्णायकत्वासम्भवात् । प्रमाणविरुद्धार्थे उपक्रमादीनामनवकाशात् । न च जहदजहल्लक्षणायां मुख्यार्थात्यागात् एकपदलक्षणातः सा वरेति वाच्यम् । एकपदलक्षणायां मुख्य सहचरितादेर्लक्षितत्वेन मुख्यार्थत्यागाभावात् । विशिष्टवाचकस्य पदस्य विशेष्यमात्रं न मुख्यार्थ इति त्वत्पक्षे सर्वथा मुख्यार्थत्यागाच्च । द्वा सुपर्णेति । न चात्रान्तः करण सहचरितत्वमेवोक्तं, न जीवसहचरितत्वं, पैङ्गिब्राह्मणेन तथा व्याख्यानादिति वाच्यम् । एतत् श्रुत्युदाहरण एव दत्तोत्तरत्वात् । सर्वा इति । न च प्रजाशब्दस्य जायमानपरत्वेन न जीवपरत्वं, तस्य नित्यत्वादिति वाच्यम् । योगरूढिभ्यां जीवपरत्वस्य सर्वसम्मतत्वात् । शरीरयोगेन जायमानत्वाच्च । अन्यथा ज्ञान एवेत्यनुपपन्नं स्यात् । अत एवाथवेत्याद्युपपन्नम् । अथवेति ।

नवमेऽध्याये प्रथमपादे गुणशब्दस्तथेति चेदित्यस्य द्वितीयवर्णके चिन्तितम् । दर्शपूर्णमासयोः श्रूयते धान्यमसि धिनुहि देवानिति मन्त्रः । अस्ति च शाक्यानामयनं, तत्र संस्थितेऽहीने गृहपतिर्मृगयां याति । स यान् यान् मृगान् हन्ति तेषां तरसमयाः सवनीयपुरोडाशाः कर्तव्या इति मांसमयाः पुरोडाशाः विहिताः । तत्रायं मन्त्रोऽतिदेशतः प्राप्तः । तत्र सन्देहः धान्यमिति स्थाने तरसमित्यूहनीयं नवेति । पूर्वपक्षस्तु नोहितव्य इति । प्रकृतौ तण्डुलावस्थायामयं मन्त्रः प्रयुज्यते । स च न समवेतार्थः । तस्य सतुषद्रव्यवचनत्वात् । तण्डुलावस्थायां च सतुषत्वाभावात् । न च भूतपूर्वगत्या सतुषत्वात् समवेतार्थत्वम्, अस्तीति वर्तमानप्रयोगात् । तस्मान्नोहितव्य इति । सिद्धान्तस्तु धान्यशब्दस्य दृष्टार्थत्वसम्भवेऽदृष्टार्थत्वकल्पनायोगात् सतुषद्रव्यवाचकस्यापि मन्त्रस्य लक्षणया तण्डुलपरत्वमास्थेयम् । अदृष्टकल्पनापेक्षया लक्षणायाः श्रेष्ठत्वात् । तथा च प्रकृतौ दृष्टार्थत्वात् तदनुरोधेन तरसमित्यूहितव्यमिति ।

द्वितीयाध्याये भेदलक्षणे प्रथमपादे तृतीयाधिकरणे चिन्तितम् । तानि द्वेधा गुणप्रधानभूतानि । दर्शपूर्णमासयोः श्रूयते - व्रीहीनवहन्ति, तण्डुलान् पिनष्टीति । तत्र सन्देहः किमवघातादिभ्योऽपूर्वमस्ति नवेति । पूर्वपक्षस्तु अवधातादिभ्योऽपूर्वमस्तीति । कुतः ? अवधातादिकमपूर्वजनकं, विहितधात्वर्थत्वात्, यज्यादि धात्वर्थवत् इत्यनुमानात् । विपक्षे विधिवैयर्थ्यम् । दृष्टार्थतायाः प्रत्यक्षसिद्धत्वादिति । सिद्धान्तस्तु अवघातादिभ्यो नापूर्वमिति । दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । न च यज्यादिभ्योऽप्यपूर्वं न स्यादिति वाच्यम् । तत्र क्रियायाः प्राधान्येन ततो दृष्टाभावेनापूर्वकल्पनात् । इह तु व्रीहीनिति द्वितीयया व्रीहीणां प्राधान्यं गम्यते । ततो द्रव्य एवातिशयं जनयति, नापूर्वम् । न च विधिवैयर्थ्यम् । नखभेदनादिनापि तुषविमोकसम्भवेनावधातेनैव तुष विमोकः सम्पादनीय इति नियमस्यापूर्वसाधनत्वेन विधेः सार्थक्यादिति । प्राणेति । अत्र मनःशब्देन जीवः । प्राणः परमात्मेति ज्ञातव्यम् । यथाचैतत् तथोपपादयिष्यते । सारूप्यमितीति । इदमधिकरणं तत्सिद्धिपेटिकाविवरणे विवृतम् । तद्गुणेति । न च बुद्धिगुणसूक्ष्मत्ववज्जीवेपि ब्रह्मणीव सूक्ष्मत्वमित्येवं परं सूत्रमिति वाच्यम् । तच्छब्दस्य प्रकृतब्रह्मपरत्वे सम्भवति अप्रकृत बुद्धिपरत्वायोगात् । उत्क्रान्तिगत्यागतीनामित्याद्युक्तन्यायेन जीवस्याणुत्वेनान्योपाधिक सूक्ष्मत्वायोगाच्च ।

(कण्टकोद्धारः)

त्वत्पक्षे सारशब्दवैयर्थ्याच्च । अन्यथेति । प्रमाणबाधितत्वेनायोग्यतानिश्चयादिति भावः । यथा चैतत् तथाऽखण्डतावादे व्युत्पादितम् । एवं तत्पदलक्षणया वाक्यार्थमुपपाद्य त्वं पदलक्षणयाप्युपपादयति यद्वेति । यजमान इति । इदमपि तत्सिद्धिपेटिकायां विवृतम् । ताद्देश्येति । ताद्देश्यं तद्देशसमानदेशत्वम् । तदधीनत्वेन तात्स्थ्यं तदधीनत्वतात्स्थ्यम् । ताद्धर्म्यं च तद्धर्मसमानधर्मत्वम् । अत्र ताद्धर्म्य पूर्वकैरित्यनेन तत्पदलक्षणा सङ्गृहीता । शिष्टेन त्वंपदलक्षणेति विवेकः । अन्तर्यामिणीति । अहं ब्रह्मास्मीति वाक्यार्थकथनावसर इति शेषः । ननु मन्मते पदद्वयलक्षणायामपि जहदजहल्लक्षणात्वान्मुख्यार्थात्यागः । त्वन्मत एकपदलक्षणायामपि मुख्यार्थत्यागः । अतो मन्मतमेव समीचीनं, मुख्यार्थात्यागादित्यत आह किञ्चेति । उपलक्षणमेतत् । जहदजहल्लक्षणायां विशेष्यमात्रस्य मुख्यार्थत्वाभावेन मुख्यार्थात्याग इत्यस्यार्थ शून्यत्वात् । अन्यथा लक्षणैव नेत्येव वक्तव्यमित्यपि द्रष्टव्यम् । न चेति । तथा च मन्मतेऽप्येकपदलक्षणैवेति भावः । शुद्धेति । वचनवृत्तिविषयतावच्छेदकाभावात् । तस्यात्मत्वादि पुरस्कारेण प्रवृत्तेः । अन्यथा सर्वशब्दवाच्यत्वं स्यात् । तदित्येकपदेति । शुद्धस्य निःसङ्गस्य सर्जनादिक्रियावेशस्य त्वयानङ्गीकारात् तत्पदेन विशिष्टं लक्षणीयमिति भावः । एतावतैकपदलक्षणया वाक्यार्थ उक्तः । इदानीं सापि नेत्याह यद्वेति । उक्तेष्वर्थेषु प्रमाणमाह । ननु प्रथमायाः सप्तम्यर्थत्वं क्वापि नोपलब्धमित्यत आह । उतयदिति ।

तृतीयाध्याये सप्तमपादे चिन्तितम् । सामिधेनीस्तदन्वाहुर्हविर्धानयोर्वचनात् सामिधेनीनाम् ज्योतिष्टोमे श्रूयते उत यत् सुन्वन्ति सामिधेनीस्तन्वाहुरिति । दक्षिणेऽस्मिन् हविर्धानेऽभिषवः तत्र स्थितः सामिधेनीर्ब्रूयादित्यर्थः । तत्र संशयः किं हविर्धानं सामिधेन्यङ्गम् उत तल्लक्षितोदेश इति । हविर्धानस्य हविर्धारणार्थत्वेन प्रयोजनानन्तरापेक्षाभावात् लक्षणापरिहारात् हविर्धानमेवाङ्गमिति । सिद्धान्तस्तु तल्लक्षितो देश इति । हविर्धानस्य हविर्धारणार्थत्वेन प्रयोजनान्तरापेक्षाभावात् । प्रकृतितश्चाहवनीय प्रत्यग्देशः सामिधेन्यङ्गत्वेन प्राप्तः । स च दक्षिणस्योत्तरस्य वा हविर्धानस्य समीपे भवति । तत्र नियममात्रं लाघवाद् विधेयं दक्षिणस्यैव हविर्धानस्य समीपदेश इति । तथा च हविर्धानस्य ह्यङ्गत्वमत्यन्ताप्राप्तमनपेक्षितं विधातुमयुक्तमिति देशलक्षणा । तथाच सप्तम्यर्थस्यापेक्षितत्वात् यत्तदिति प्रथमा सप्तम्यर्थ इत्यर्थः । ननु प्रकृति प्रत्यययोः तुल्यत्वेन प्रत्ययास्वारस्यं किमित्यङ्गीक्रियते ? प्रकृत्यस्वारस्यमेव किमिति नाद्रियत इत्यत आह न्याय्यं चेति । प्रत्ययस्याप्रधानत्वं प्रकृत्युपसर्जनस्वार्थाभिधायकत्वेन । नन्वेवं प्रोद्गातृणामित्यत्रापि विभक्त्यनुरोधेन प्रातिपदिकलक्षणा न स्यात्, तस्या अप्राधान्यादित्यत आह प्रोद्गातॄणामित्यत्रेति ।

तृतीयाध्याये पञ्चमपादे चिन्तितम् । उद्गातृचमसमेकस्य श्रुतिसंयोगात् । सोमे श्रूयते प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां प्रयजमानस्येति । अयमध्वर्योः प्रैषः यत्र सदसि भक्षयितारः स्थितास्तत्र भक्षणीयानां चमसानां नयनार्थम् । तत्रोद्गातृचमस समाख्यया उद्गातुः भक्ष इति स्थितम् । तत्र सन्देहः किमुद्गातैव तं भक्षयेदुत सदसिस्थितौ एकस्तोत्रसम्बन्धिनौ प्रस्तोतृ प्रतिहर्तारावपीति । पूर्वपक्षस्तु । उद्गातैक एव भक्षयेत् । उद्गातृशब्दश्रवणात् । न च बहुवचनानुपपत्तिः । तस्य प्रधानप्रातिपदिकार्थानुसारेणादितिः पाशानित्यादाविव

(कण्टकोद्धारः)

कथंचिन्नेयत्वादिति । सिद्धान्तस्तु । त्रयोपि भक्षयेयुः । उद्गातृशब्दस्याजहल्लक्षणया प्रस्तोतृप्रतिहर्तृपरत्वेन बहुवचनस्यार्थवत्त्वे सम्भवति अन्याय्यत्वस्यायुक्तत्वात् । तस्मात् त्रयोऽपि भक्षयेयुरिति । ननु मीमांसायां प्रातिपदिकानुसारेण विभक्तेरस्वारस्यं क्व दृष्टमिति तत्राह दृष्टं चेति ।

चतुर्थाध्याये प्रथमपादे चिन्तितम् । अभिधारणे विप्रकर्षादनुयाजवत् पात्रभेदः स्यादिति । दर्शपूर्णमासयोः श्रूयते प्रयाजशेषेण हवींष्यभिधारयतीति । तत्र सन्देहः अभिधारणं किं हविषां संस्कारः किंवा प्रयाजशेषस्य प्रतिपत्तिरिति । पूर्वपक्षस्तु हविषां संस्कार इति । हवींषीति द्वितीयया हविषां प्राधान्यावगमात् । न तु प्रतिपत्तिः । तृतीयानिर्दिष्टस्य गुणत्वेन प्रतिपाद्यत्वायोगादिति । सिद्धान्तस्तु । प्रतिपत्तिरेव, अपेक्षितत्वात् । न तु संस्कारः, अनपेक्षितत्वात् । शेषशब्दश्रवणात् उपयुक्तस्य क्वचित् क्षारणरूपा प्रतिपत्तिरेवापेक्षिता । न च तृतीया निर्दिष्टस्य कथं प्रतिपाद्यत्वमिति वाच्यम् । द्वितीयार्थे तृतीयाव्याख्यानात् । न च तृतीयानुसारेण प्रातिपदिकस्य द्रव्यान्तरलक्षकत्वमस्त्विति वाच्यम् । अप्रधानानुसारेण प्रधानस्य लक्षणाया अयुक्तत्वात् । तस्मात् प्रतिपत्तिरिति । प्रयाजशेषं हविष्षु क्षारयेदिति वाक्यं योजनीयमिति । ननु प्रातिपदिकस्य किं प्रधानत्वम्? निरवकाशत्वं किं वानेकत्वम्? नाद्यः । बहुवचनस्य संख्यायामिव प्रातिपदिकस्य विशेष्यांशे सावकाशत्वात् । न द्वितीयः । गभीरायां नद्यां घोष इत्यत्रेवानेकेषामपि लक्षणासम्भवादिति चेन्न । विभक्तेः सङ्ख्याया इव विशेष्यमात्रस्य प्रातिपदिकमुख्यार्थत्वाभावेन तत्र सावकाशत्ववर्णनस्यायुक्तत्वात् । गभीरायामित्यादौ च तात्पर्यात् तथावगमात् । न च प्रकृतेऽप्यैक्यतात्पर्यात् तथास्त्विति वाच्यम् । तत्तात्पर्यस्य सन्दिग्धत्वादित्युक्तत्वात् । अत एव सङ्ग्रहेणाह एवं चेति । असमस्तपदपक्षमुपेत्य वाक्यार्थमभिधाय समस्तपदपक्षमुपेत्यापि तमाह यद्वेति । न च षष्ठीलक्षणारहितेनासमस्तपक्षेणैवोपपत्तौ लक्षणाश्रयणेन समस्तपक्षो न युक्त इति वाच्यम् । असमस्तपक्षे पदद्वय लक्षणाया उक्तत्वात् । सम्बन्धस्यान्वय प्रकारतया लुप्तस्मृत षष्ठ्या वा, शक्त्यैव वा बोधोपपत्तौ लक्षणाया अन्याय्यत्वात् । न च स्थपत्यधिकरणविरोधः तस्य परमताभिप्रायेण प्रवृत्तत्वात् । सति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमित्येवंपरत्वाद्वा । एवं सन्निहितात्मपरामर्शमभ्युपेत्य वाक्यार्थ उक्तः । इदानीं किंचिद् व्यवहितैतदात्म्य परामर्शाङ्गीकारे न काप्यनुपपत्तिः । नाप्येकपदलक्षणा । न पुंसकलिङ्गं चोपपन्नमिति भावेन यद्वेति । नन्वैतदात्म्यपरामर्शाङ्गीकारेपि ब्रह्मणि जीवैक्यमेव स्यात् । तेन तत्प्रतिपादनात् इत्यत आह ऐतदात्म्यमित्यस्य चेति । ननु परकीय एवार्थः किं न स्यादित्यत आह परमते हीति । नन्वर्थान्तरे प्रमाणाभावात् कथं तदाश्रयणमित्यत आह विचित्राहीति । न चेदमर्थेऽञनभिधानात् सौख्यमित्यादौ तदभिधानात् नेदमर्थेऽप्यञिति वाच्यम् । अज्ञानां तत्रैव प्रयोगेण निर्देशोपपत्तेः । यथा देवतावाचिनां मृदादिशब्दानां भूतएवाज्ञानां प्रयोगेण तद्वाचित्वव्यपदेशः । न च मनुष्यादिशब्दप्रवृत्तिनिमित्तमनुष्यत्वादिजातेर्जीवेऽभावात् कथं तत्र शक्तिरिति वाच्यम् । तादृशशरीरसम्बन्धित्वस्यैव प्रवृत्तिनिमित्ततया तस्य जीवे सत्वात् । अत एव ब्राह्मणत्वादिकं जीवनिष्ठमित्युक्तम् । अखण्डजातिश्चावयोरसंमतैवेति । तथाच पदद्वयं मुख्यार्थमेवेति नान्यतरलक्षणोभयलक्षणा वा युक्तेति । इतरेत्विति । न चोपास्ति प्रकरणत्वाभावात् कथमुपास्त्यर्थमैक्योक्तिरिति

(कण्टकोद्धारः)

वाच्यम्। एष सर्वेश्वर इत्यादाविव तत्प्रकरणत्वाभावेऽपि तत्परत्वोपपत्तेः । किञ्च यद् बाधितं श्रुत्यादावुच्यते तत् स्तुत्यर्थमिति आदित्यो यूप इत्यादौ निर्णीतम् । प्रकृते चैक्यं बाधितमित्युक्तम् । तथाचोपासनाद्यर्थमित्येव तात्पर्यमुन्नेयम् । एवं तत्वमसीति वाक्यं विभज्य समस्तासमस्तपदभेदेन व्याख्यातम् ।

इदानीं प्रकारान्तरमाह यद्वेति । अस्मिन् पक्षेऽन्यतरपदलक्षणाशङ्कापि नैवेति हृदयम् । नन्वत्र दृष्टान्ते कथं भेदः प्रतीयत इति तत्राह नहीति । न च शब्दः अनित्य इति पदच्छेदं विना घटदृष्टान्तो नोपपद्यते । प्रकृते च शकुनेः सूत्रावस्थाने यथा श्रमापनोदः तथा जीवस्यापि ब्रह्मावस्थाने जाग्रत्स्वप्नज श्रान्तिपरिहारो भवतीत्यन्यथैवोपपत्तेरिति वाच्यम् । श्रान्तस्य श्रान्तिपरिहारहेतोश्च भेदस्यावश्यकत्वेन तदविवक्षाया अयुक्तत्वात् । अन्यथा तदवस्थानेन श्रमपरिहारानुपपत्तेः । न हि श्रमवत्स्वरूपावस्थाने श्रमपरिहारः । नचाश्रमयुक्तश्रमयुक्तयोरैक्यम् । तथाचात्र यथा शकुनिः सूत्राधीनः सूत्रादत्यन्तभिन्नः, तथा जीवः परमात्माधीनः ततोऽत्यन्तभिन्न इति प्रधानवाक्ये विवक्षितम् । तच्चोक्तपदच्छेदं विना न सम्भवतीति भावः । नन्वाद्य खण्डे स्वमपीतो भवतीत्यनेन जीवैक्यस्योक्तत्वात् उपक्रमाधिकरणन्यायेनोत्तरो वाक्यसन्दर्भो योजनीय इत्यत आह आद्यखण्ड इति । न च स्वशब्दस्य स्वरूपमात्रे मुख्यत्वात् अन्यपरत्वे गौणलक्षणयोरन्यतरापत्तिरिति वाच्यम् । स्मृतौ प्रोक्त इति मुख्यवृत्तेरुक्तत्वात् । स्वमज्ञातिधनाख्यायामिति स्वशब्दस्यानेकार्थतायाः स्पष्टमुक्तत्वात् । तथाच स्वशब्दस्यान्यपरत्वेऽमुख्यत्वमित्यज्ञाननिबन्धनम् । आत्मीयेति । तत्र बहुल प्रयोगादिति भावः । नन्वयमर्थः कथं लब्ध इत्यत आह अपेरेति । न च योगरूढिभ्यामैक्यपरत्वमेव किमिति नाङ्गीक्रियत इत्यत आह ऐक्य इति । अभिधानाभावात्, योगासम्भवाच्चेति भावः । अपीत इत्यस्यैक्यार्थत्वे बाधकं चाह ऐक्यार्थत्व इति । स्वमपीतो भवतीत्यस्य स्वोक्तार्थे स्मृत्यादि समाख्यामाह स्वमित्यारभ्य सत्वाच्चेत्यन्तेन । न च सुषुप्तौ परमात्मप्राप्त्यङ्गीकारे मुक्तिसुप्त्योर्भेदो नस्यादिति वाच्यम् । अज्ञानाभाव तद्भावाभ्यां तदुपपत्तेः । ननु द्वितीय तृतीय दृष्टान्तयोरैक्यस्य स्पष्टमुक्तत्वात् अभ्यासादैक्ये तात्पर्ये तदनुरोधेन दृष्टान्तवाक्यानि योजनीयानीत्याशङ्क्य निषेधति नचेति । अत्र कथमैक्यमुच्यते, भिन्नानां रसानां भेदत्यागेन सिद्धमधुनैक्यम्, उत प्राग्भेदरहिता एव पश्चादैक्यज्ञानविषयाः, अथवा तन्तुपटवदुपादानोपादेय भाववत्त्वात् अभिन्ना इति ? आद्य आह नहीति । मधुना प्राक् सिद्धत्वाभावात् भेदत्यागे कारणाभावाच्च । न द्वितीय इत्याह न वेति । बाधकाभावेन भ्रान्तित्वाभावात् । अस्तु तर्हि तृतीय इत्याह किन्त्विति । सोऽपि नेत्याह न चेति । जीवब्रह्मणो रुपादानोपादेयत्वाभावात् । तथात्वे ब्रह्मणो विकारित्वापत्तेः । जीवस्य चानित्यत्वापत्तेश्चेति भावः । तस्मादत्र मिश्रीभाव एव वक्तव्य इति नात्रैक्यं त्रेधा सम्भवतीति भावः । नदीसमुद्रदृष्टान्तेऽप्यैक्यमसम्भवीत्याह नदीसमुद्रदृष्टान्तेऽपीति । अवयविनावयवानामिव मिश्रीभाव एव, न त्वैक्यमित्यत्र लिङ्गान्याह ता एवेति । ऐक्ये स्वीयनामपि दानसम्भवेन ता एवेत्यवधारणानुपपत्तेः दर्शनाच्चेति भावः । यथेति । अत्र तद्वद्वेति तादृगिति सादृश्यस्यावधारणेनैक्यस्य निषेधादिति भावः । ननु समुद्रस्य नदीभिरैक्याभावे मिश्रत्वे च समुद्रे वृद्धिर्दृश्येतेत्यत आह समुद्रेत्विति । कार्यलिङ्गाच्च मिश्रीभावः नत्वैक्यमित्याह पूतेति । ता इति । अन्यथा समुद्रेणैकीभवन्तीति निर्देशः स्यादिति भावः ।

(कण्टकोद्धारः)

आदिशब्देन कर्मत्वग्रहणम् । त्वत्सिद्धान्तविरुद्धं नदीसमुद्रयोरैक्यमित्याह वाचस्पतिनेति । ननु नानारसानां नदीसमुद्रयोर्यदि नैक्यं, किन्तु मिश्रतैव तर्हि भेदप्रतीतिः स्यादित्यत आह भेदाज्ञानं त्विति । समानाभिधातदोषात् विद्यमानोऽपि भेदो न प्रतीयते । अविद्यमानोऽप्यभेदश्च प्रतीयत इति भावः । अन्त्य इति । द्रव्यान्तरारम्भ इति पक्ष इत्यर्थः । अवयविनोर्नोदनादभिधाताद्वा समवायिकारणसंयोगनाश क्रमेण नष्टत्वात् परमाणुभिः द्व्यणुकादिक्रमेण द्रव्यान्तरारम्भात् न कस्यापि केनाप्यैक्यमिति भावः । दार्ष्टान्तिकेति । तत्र द्रव्यान्तरारम्भाभावादिति भावः । एवं बाह्यानुपपत्तिमुक्त्वा आन्तरानुपपत्तिमाह ताः समुद्रादिति । अवधित्वादिनिर्देशो न स्यादेवेति भावः । ननु भेदपरत्वे कथमस्य योजनेत्यत आह अतो नद्य इति । नन्वभेदे दृष्टान्तो न चेत् कुत्रेमौ दृष्टान्ताविति शङ्कां परिहरन् उपसंहरति तस्मादिति । नन्वत्र भेदाज्ञानमेवोच्यते न तु तस्य सत्वासत्वे, तत्र तस्यौदासीन्यादि ज्ञापकाभावादित्यत आह अत एवेति । भेदाज्ञानेनानर्थोक्त्यैव भेदस्य सत्ता विवक्षितेति ज्ञायते । नह्यविद्यमानाज्ञानेनानर्थो भवति, अतिप्रसङ्गात् । न च तत्तद्वासनया व्याघ्रादिभावापत्तिर्नभेदाज्ञानेनेति वाच्यम् । यद्यद् भवन्ति तत्तदाभवन्तीति पूर्वमुक्तस्याज्ञानस्य तच्छब्देन परामर्शात् । श्रुतपरित्यागेनाश्रुतकल्पनाऽयोगात् । विवेकं न लभन्त इति भेदाज्ञानस्य पूर्वमुक्तत्वात् भेदसत्ताया मौदासीन्ये च तदज्ञानकथनस्य वैयर्थ्यापत्तेः । प्रयोजनाभावात् वासनासन्निवेशे च श्रुतहान्यश्रुतकल्पनापत्तेः । ननु तथापि कथमत्र स्फुट भेदप्रतीतिरिति तत्राह नहीति । परमप्रमेयमुपसंहरति तस्मादिति । उक्तमर्थं श्रुति समाख्यया द्रढ्यति तथाचेति । अतदिति पदच्छेदो दृष्टान्तानुगुण्यादित्युक्तम् । ज्ञापकान्तराच्च तथैव पदच्छेद इत्याह किञ्चेति । नन्वाद्यखण्डे सुषुप्त्यवस्थायामेव जीवत्वनिर्मुक्तं स्वंदेवतास्वरूपं प्रदर्शयिष्यामीत्यनेनाभिप्रायेण उद्दालकेन स्वप्नान्तं मे सोम्य विजानीहीत्यवतारितम् । अतो न तदधीनत्व प्रतिपादकमिदमिति चेन्न । जीवत्वनिर्मोक प्रतिपादकपदाभावात् । स्व सच्छब्दयोः परमात्मपरतया सम्पद्य शब्देन तत्प्राप्त्युक्त्या शकुनिसूत्रदृष्टान्त बलेन च तदधीनत्वस्यैव प्रतीतेः । न चात्रैक्य प्रतिपादकः शब्दोऽस्ति । ननु चतुर्थे कथं जीवस्य तदधीनत्वोक्तिः? यथा जलादुत्थितानां वीचीफेनतरङ्गबुद्बुदानां पुनस्तद्भावङ्गतानां विनाशस्तथा जीवानां प्रत्यहं स्वस्वरूपदेवताभावं गतानां सुप्तिप्रलययोर्नाशात् जीवस्य कथं विनाशा भाव इति शङ्कायां तत्परिहारत्वेन चतुर्थस्य प्रवृत्तत्वात् । तेन हि शरीरस्यैव विनाशो, न जीवस्येति जीवापेतं वाव किलेदं म्रियत इत्यादिनोच्यते इति चेन्न । अत्र खण्डे जीवशब्देन परमात्मनोऽभिधानात् । जीवपरत्वे जहातीति स्वातन्त्र्यकथनानुपपत्तेः । प्राज्ञेनात्मनोत्सर्जद्यातीति त्यागे पराधीनत्वोक्तेः । किञ्च जीव शब्दस्य संसारिपरत्वेऽनेन जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठतीत्यनुपपन्नं स्यात् । जीवस्य मोदपानादौ स्वातन्त्र्याभावात् पेपीयमानो मोदमान इति संसारिणः पृथग्ग्रहणाच्च । न च मोदमानशब्देन शरीरं विवक्षितमिति वाच्यम् । तस्य मोदभोगानुपपत्तेः । सुखस्य चाप्यायतनं शरीरमित्यादि श्रुतिस्मृतिविरोधाच्च । तथाच मोदमानस्य संसारिणो जीवव्यतिरेकेणानवस्थित्युक्त्यान्वयव्यतिरेकाभ्यां तदधीनत्वमेवोच्यत इति न काप्यनुपपत्तिः । न च जीवशब्दस्य परमात्मपरत्वे मुख्यार्थत्यागः । वक्ष्यमाणरीत्या परममुख्यार्थस्यैव सम्भवात् । त्वत्पक्षे च मोदमानशब्देन शरीरग्रहणे च मुख्यार्थत्यागः स्पष्टः । न च मोदमान इत्यस्य

(कण्टकोद्धारः)

वृक्षविशेषणत्वेन संसारिपरत्वाभाव इति वाच्यम् । वृक्षशब्देन वृक्षजीवाग्रहणे तस्य तद्विशेषणत्वानुपपत्तेः तद्विशेषणबलादेव वृक्षशब्दस्य जीवपरत्वात् । अत एवाह चतुर्थ इति । नन्वष्टमस्य विद्वान् केन क्रमेण सत् सम्पद्यत इति शङ्कायां क्रमप्रदर्शनार्थं प्रवृत्तत्वेनेश्वराधीनत्वपरत्वाभाव इति चेन्न । अस्य मूल एव यदि चेत्यादिना परिहरिष्यमाणत्वात् । नन्वणिमधानादृष्टान्ते परमात्मप्रतिपादकाभावात् तत्र कथं तदधीनत्व-परत्वमित्यत आह एतस्यैवेति । नन्वणिमशब्दस्य क्वापि भगवत्यप्रयोगात् कथं तेन भगवतः प्रतिपत्तिरित्यत आह स यइति । तासामिति । न च एषोऽणुरात्मा चेतसा वेदितव्य इत्यादौ भावप्रत्ययरहिताणुशब्द-विषयेऽपीश्वरेऽणिम शब्द प्रयोगवत् प्रकृते किं न स्यादिति वाच्यम् । ईश्वरस्याणुशब्दविषयत्वेऽपि अणिमशब्द विरुद्धार्थकेवलशब्दशिरस्काणुशब्दविषयत्वाभावात् भिन्नप्रकरणत्वाच्च एकप्रकरणे एकस्यैव विरुद्धार्थकशब्दविषयत्वासम्भवस्योक्तत्वात् । अण्वणिमशब्दयोर्विरुद्धार्थत्वाभावाच्च । अण्व्य इवेत्यस्याणिम-शब्दस्य च तत्त्वादिति । न निभालयस इतीति । न चाभिव्यक्तिः विशेषाभावेन वृक्षवदज्ञानात् तथोक्तिरिति वाच्यम् । मुख्यार्थं परित्यागेन गौणग्रहणे कारणाभावात् । यदि चेति । न च लौकिकमरणे यः सत् सम्पत्तिक्रमः स एव विदुषोऽपि । विशेषस्तु ज्ञानाज्ञानकृत इति प्रतिपादकावन्वयव्यतिरेकावुक्तौ । अतो न वैयर्थ्यमिति वाच्यम् । तथाप्यादावन्वयः, पश्चाद् व्यतिरेक इति प्रतिपादनापातात् लौकिकमरण विलक्षणस्यैव विद्वन्मरणस्य श्रुत्यादौ प्रतिपादनेन लौकिकमरणे सत्सम्पत्त्यभावेन च मार्गभेदेन च लौकिकमरण-विद्वन्मरणयोः क्रमवैलक्षण्याच्च । तस्माद्वैयर्थ्यं दुर्वारम् । ननु स आत्मेत्यनेनाणिमशब्दोक्तस्येश्वर-स्यात्मशब्दोक्त जीवेन सामानाधिकरण्य बलादैक्यमुच्यते । तत् कथं सर्वत्रैश्वराधीनत्वोक्तिरित्यत आह स आत्मेत्यत्र चेति । नन्वात्मशब्दस्य जीवे रूढत्वात् तत्परित्यागो मुख्यार्थत्याग इत्यत आह यदिति । आत्मेत्यात्मशब्दस्य जीवेऽपि प्रसिद्धत्वात् विषयात्तृत्वलक्षण योगस्यापि जीवे सम्भवादात्मशब्देन तत्परिग्रह एव युक्त इति वाच्यम् । कतम आत्मेत्यत्रात्मशब्देन परमात्मन एव गृहीतत्वात् । जीवविषयत्वे प्रश्नानु-पपत्तेः । यथा चैतत् तथा ज्योतिर्दर्शनादित्यत्र प्रतिपादितम् । विषयात्तृत्वस्य च सर्वात्तरि अत्ता चराचर-ग्रहणादित्युक्तन्यायेन परमात्मन्येवोपपत्तेः । यथाचैतत् तथा ज्योतिदर्शनादित्यत्र प्रतिपादितम् । न च तमेवैकं जानथेत्यत्र वाक्ये अतच्छब्दादित्युक्तिः न जीवे आत्मशब्दस्यामुख्यत्वाभिप्रायेण, किन्तु जगत् कर्तृत्वासम्भवात् तद्व्युदास इत्यभिप्रायेणेति वाच्यम् । श्रुत हानाश्रुतकल्पनापत्तेर्लाक्षणिकव्याख्याने बीजा-भावाच्च । नन्वत्र प्रकरणे अनेन जीवेनेति सामानाधि करण्याज्जीवपरमात्मनोरैक्यं प्रतीयते । तथा च कथं भेदोपदेश इत्यत आह इमा इति । ननु मुख्यपरित्यागे कारणाभावात् न जीव शब्द ईश्वरपर इत्यत आह । जीव इतीति । तथा च न जीवशब्दो हरावमुख्य इति भावः । योगोऽप्यस्तीत्याह विष्णुरिति । ननु जीवे रूढिः, विष्णौ तु योग इत्यत आह जीवेऽपीति । ननु प्रयोगबाहुल्यादेव जीवे रूढिरवसीयते । । अन्यथा पङ्कजादिशब्दानामपि सा न स्यात् । योगेनैव प्रयोगोपपत्तेः । यदि विष्णावपि रूढिस्तथापि साम्यमेवेत्यत आह अहं हीति । विष्णौ विद्वद्रूढि महायोगाविति विशेषः । ननु जीव शब्द प्रवृत्तिनिमित्तं प्राणधारकत्वं जीवे मुख्यमित्यत आह प्राणेति । स्वातन्त्र्यात् तदधीनत्वादिति न्यायाच्चेति भावः । जीवशब्देन विष्णु

(कण्टकोद्धारः)

**ग्रहणे साधकमुक्त्वा जीवग्रहे बाधकं चाह संसारिण इति । न च जीवमात्रस्य त्रिवृत्करणासम्भवेऽपि त्रिवृत्कृतभूतारब्ध लिङ्गशरीराभिमानिनो हिरण्यगर्भस्य तदुपपत्तिरिति वाच्यम् । तस्याप्यस्वतन्त्र्येणेक्षापूर्वक तत्कर्तृत्वानुपपत्तेः । तस्यापि त्रिवृत्कृत भूतारब्धदेहवत्त्वाच्च । तेजोबन्नानामिति । न चाव्याकृतसृष्टौ साक्षात् कारणत्वं, ब्रह्माण्डादि सृष्टौ न तथा । किन्तु स्वाभिन्न जीवद्वारेणेत्येवं परं तदिति वाच्यम् । मुख्यार्थ-परित्यागेन लाक्षणिकव्याख्याने बीजाभावात् । ननु चैकमेवेत्युपक्रमात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानाच्चैवं कल्प्यत इत्यत आह एकमेवेति । इष्टेति । नचैक्ये तात्पर्यस्यावधृतत्वेन तात्पर्याज्ञानात् तत्प्राप्तिरित्य-युक्तमिति वाच्यम् । तात्पर्यलिङ्गाभावेनैक्ये तात्पर्याभावात् । तात्पर्याज्ञानदोषसम्भवात् । देहेन्द्रियादीनिति । न च देहेन्द्रियादीनां जीवैक्याध्यासेन तान् प्रति स्वातन्त्र्याभिमानायोग इति वाच्यम् । मम शरीरं, चक्षुषा घटमद्राक्षमित्यादि भेददर्शनेनैक्याध्यासायोगात् । ममैतानि करणानीति स्वातन्त्र्याभिमानस्यानुभवसिद्ध-त्वाच्च । न च यत्किञ्चित् प्रति स्वातन्त्र्यं नेश्वरलक्षणमिति वाच्यम् । स्वातन्त्र्यसामान्यस्यैव तल्लक्षणत्वात् । तदन्यस्य कुत्रापि स्वातन्त्र्याभावात् । ननु तथापि नास्य प्रकरणस्य भेदे तात्पर्यम् । तत्र प्रमाणाभावादित्यत आह एवं चेति । भेदस्योपक्रम प्रतिपाद्यत्वार्थमुक्तम् । समेति । समाधिकनिषेधेन न्यूनसद्भावोऽभिहितः । तथा चोपक्रमस्य भेदपरत्वम् । ऐतदात्म्यमिति । तदधीनत्वस्य भेदघटितत्वादिति भावः । भेदपराण्येवेति । भेदतात्पर्यप्रमापकाण्येवेत्यर्थः । इति तत्वमसीति वाक्यार्थः ।**

## न्यायामृतप्रकाशः

जीवाश्रयत्वादिति ॥ जीवं प्रत्याश्रयो जीवाश्रयः । तत्त्वादिति ततुरुपः । जीव आश्रयो यस्येति व्याख्याने उत्तरग्रन्थेन पौनरुक्त्यं स्यादितिध्येयम् ॥ तत्सिद्धचेति ॥ ब्रह्मणः सर्वकर्तृत्वेन जीवकार्यस्य तेन सिध्धा तत्कार्य-कर्तृत्वादित्यर्थः ॥ त्यक्तस्य पुनरिति ॥ समुदायस्य समुदाय्यनन्यत्वादिति भावः ॥ सङ्ख्यार्थत्वेनेति ॥ एक-त्वादिसङ्ख्याया एव प्रथमादिविभक्त्यर्थत्वादिति भावः ॥ एकविभक्त्यस्वारस्यमिति ॥ तन्मते तत् त्वमिति एक-विभक्त्यन्तसामानाधिकरण्येनै वैक्यं बोध्यते । असीतिसामानाधिकरण्यलब्धाभेदानुवादकमित्यङ्गीकारात् । तत्र तदित्येकविभक्तेरेवस्वारस्यमस्तु । प्रातिपदिकापेक्षया विभक्तेरप्रधानत्वादिति भावः ॥ ननु यदि प्रातिपदिक-स्वारस्याय विभक्त्यस्वारस्यमङ्गीक्रियते तर्हि प्रोद्गातॄणामित्यत्रोद्गातुरेकत्वाद्बहुवचनानुपपत्तिमाशङ्क्य षष्ठीबहुवचन-रूपविभक्तिस्वारस्यमङ्गीकृत्य तदर्थम् उद्गातृप्रातिपदिकस्य प्रस्तोत्रादिषु सामगानकर्तृषु लक्षणाङ्गीकृता सा न स्यादित्यत आह ॥ प्रोद्गातॄणामित्यत्रेति ॥ अस्माभिस्तदित्यत्र प्रथमाविभक्तेः तृतीयाद्यर्थकत्वेन प्रथमा-विभक्त्यस्वारस्यं प्रथमैकवचनस्यसुपामिति विभक्त्यन्तरे विधानादाश्रितं न हि तद्वत् षष्ठीबहुवचनस्य एकवचनादि-रूपे विभक्त्यन्तरे विधानमस्ति येन प्रातिपदिकस्वारस्याय विभक्त्यस्वारस्यमुच्यते अतस्तत्र विभक्तिस्वार-स्यमङ्गीकृत्य प्रातिपदिकास्वारस्यमङ्गीकृतमित्यर्थः । धन्दोगेषु अपसुब्रह्मण्येषु ॥ विभक्त्यस्वारस्यमिति ॥ तृतीया-या द्वितीयात्वेन विपरिणतत्वाङ्गीकारादिति भावः । मुख्यनामानुसारतः मुख्यप्रातिपदिकानुसारतः । ननु कथं तदीयत्वरूपार्थान्तराश्रयणं युक्तम् ऐतदात्म्यमित्ययं ष्यञ्प्रत्ययान्तः ष्यञ्च स्वार्थे भावे वा विहितो न तदीयत्व-

रूपार्थ इत्यत आह ॥ विचित्रा हीति ॥ ईश्वरशरीरत्वादिति ॥ तथाच तत् ब्रह्मत्वमित्युच्यते त्वच्छरीरकत्वादित्यर्थः । निर्देश इति । ऐक्यनिर्देश इत्यर्थः । या इन्द्रकमण्डलुस्था इति । इन्द्रः सजले वशिष्ठकमण्डुलौ स्वकमण्डलुजलम् उत्तरत्र परीक्षार्थं स्थापयित्वा सुदासस्य राज्ञो यज्ञं प्रति गत्वा पुनरागत्य वशिष्ठं प्रति परीक्षार्थं स्वजलं ययाचे वशिष्ठस्तज्ज्ञात्वा ता एवाप इन्द्राय ददावित्यर्थः ॥ सप्तनदीनां मिश्रीभूतानामिति ॥ कृष्णवेणीतुङ्गभद्राभीमरथीमलापहाभवनाशिनीतिसप्तनदीनाम् निवृत्तिसङ्गमे मिश्रीभूयोत्तरत्र गतानां पुनर्वियुज्य प्रत्येकं प्रत्येकं समुद्रगमनदर्शनादित्यर्थः ॥ ॥ तत्वमसिवाक्यार्थविवरणम् ॥

## २९. अहं ब्रह्मास्मीत्यादिश्रुत्यर्थः

एतेनाहं ब्रह्मास्मीत्याद्यपि व्याख्यातम् । उक्तरीत्या एकपदलक्षणया ब्रह्मसाहचर्यादिना जीवे ब्रह्मेतिव्यपदेशस्य वा सादेश्यादिना ब्रह्मण्यहमितिव्यपदेशस्य वोपपत्तौपदद्वयलक्षणयैक्यपरत्वायोगात् । किं चाहंशब्दो जीवान्तर्यामिणि मुख्यः ।

सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।
एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः ॥

इत्यादि स्मृतेः ''अहं मनुरभवं सूर्यश्चे''त्यन्तर्यामिणि अहं शब्दप्रयोगाच्च । न हि त्वत्पक्षेऽपि विशिष्टचैतन्यरूपो वामदेवो विशिष्टचैतन्यरूपमनुसूर्यादिर्भवति । अहं मन्वादिशब्दैश्चिन्मात्रलक्षणायां चोत्तमपुरुषायोगः । ''अहं भूमिमदामार्याये'' त्याद्ययोगश्च । न हि चिन्मात्रं भूमिमदात् । भगवान्विष्णुर्हीन्द्राय भूमिमदात् तस्मादहं नामाभवत्तस्योपनिषदहमिति, अहंनामा हरिर्नित्यमहेयत्वात्प्रकीर्तित'' इत्यादि श्रुतेश्च । श्रुत्यन्तरे ''अहं तत्तेजोरश्मीन्नारायणं पुरुषं जातमग्रतः तमिममहं विजानाती''ति अहेये अहं शब्दप्रयोगाच्च । अन्यथा अहं विजानामीति स्यात् । ततश्चान्तर्याम्यैक्यमेवात्रोच्यते । उक्ता चान्तर्यामिणि नियम्यानन्त्यादिना भेदप्रसक्तिः । तथा च श्रुत्यन्तरम्– ''स यश्चायं पुरुषे यश्चासावादित्ये स एक'' इति । अन्यथा ''य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मी''ति छान्दोग्ये ''स एनान् ब्रह्म गमयती''ति भेदपरोत्तरवाक्यविरोधः । किं च ''स य एतमेवं विद्वानुपास्त''इत्युत्तरवाक्ये उपास्तिश्रवणात् त्वन्मते चोपास्यस्यारोपितत्वान्ना-

नेनैक्यसिद्धिः । ''योऽसावसौ पुरुषः सोऽहमस्मि वायु''रितीशावास्ये च ''वायुरनिलममृतमथेदं भस्मान्तं शरीर''मित्युत्तरवाक्यविरोधः । न हि शरीरादेरपि जीवैक्यम् । ''अग्ने ! नय सुपथा राये अस्मानि''त्यादि भेदपरोत्तरवाक्यविरोधश्च । ''तद्योऽहं सोऽसौ योऽसौ सोऽह''मित्यैतरेये च 'चक्षुर्मित्रस्य वरुणस्याग्ने' रितिभेदपरोत्तरमन्त्रविरोधः । 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मि' इति बृहदराण्यके च 'तद्यो यो देवानां प्रत्युबुध्यत तथा ऋषीणां तथा मनुष्याणा' मिति भेदपरवाक्यशेषविरोधः । किं चात्र वाक्ये ब्रह्मण एव प्रकृतत्वात् नानेन जीवब्रह्मैक्यसिद्धिः । 'य एवं वेदाहं ब्रह्मास्मी'त्युत्तरवाक्ये त्वितिशब्दयोगात् त्वन्मते चेतिशब्दयुक्तानाम् 'आदित्यो ब्रह्मे'त्यादीनामुपासनार्थत्वात् । 'अथ योऽन्यां देवतामुपास्त' इत्युत्तरवाक्ये उपास्तिश्रवणाच्च नानेनैक्यसिद्धिः ।

यद्वात्र ब्रह्मशब्दो बृंहणार्थ इति न परब्रह्मैक्यसिद्धिः । अन्यथा पूर्ववाक्ये 'आत्मानमेवावेदि'त्यनेनैव ब्रह्मेति ज्ञानस्य सिद्धत्वाद् ब्रह्मास्मीति व्यर्थम् । एतेन– 'अहं हरिः सर्वमिदं जनार्दन' इत्यादि स्मृतयोऽपि व्याख्याताः । अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशु'रित्यत्राप्यन्तर्यामिभेदज्ञानी निन्द्यते । अन्यथा पदद्वयादिलक्षणादिदोषात् । यद्वा योऽन्यो जीवः अन्यां विलक्षणां देवतामुपास्ते । किमिति? अन्योऽसौ परमात्मा अहस्मीति न स वेद यथा पशुरित्यर्थः, अन्यथाहमर्थस्यापि विशेष्यत्वे देवतामुपास्त इत्ययुक्तम् । न च व्यवहितान्वयदोषः, यस्य येनार्थसम्बन्ध इति न्यायेन सन्निधानाद्योग्यतायाः प्रबलत्वात् । अथवा स्वातन्त्र्येणाऽन्यसद्भावनिषेधाय श्रुतिस्त्वियम् । 'अन्योऽसावन्योऽहमस्मीति पश्यन्नज्ञ इति स्म ह । आह तद्ब्रह्मणोऽधीना भिन्नाजीवास्तु सर्वश'इत्यादि स्मृतेः स्वान्त्र्यज्ञानी पशुरित्यर्थः केचित्तूपास्त इत्यादिश्रवणात्पुंप्रयत्नसाध्यज्ञान विजातीयवृत्त्यन्तररूपोपासनाया एव निषेधः, न तु ज्ञानस्येत्याहुः । 'स यो ह वैतत्परमं ब्रह्म वेद ब्रह्मैव भवती'त्यत्रापि द्वितीयो ब्रह्मशब्दो जीवपरः । बृहजातिजीवकमलासनशब्दराशिष्विति वचनात् । ब्रह्माणि जीवाः सर्वेऽपीत्यादि-

स्मृतेश्च । 'द्वे ब्राह्मणी वेदितव्ये' इत्यादौ जीवे तत्प्रयोगाच्च । तथा च यः परमं ब्रह्म वेद स जीव एव भवति न तु परं ब्रह्मेत्यर्थः । अत एवाद्यो ब्रह्मशब्दः परमत्वेन विशेषितः । यद्वा ब्रह्म भवति बृंहितत्वरूपब्रह्मत्वाक्रान्तो भवतीत्यर्थः । सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेदितिवत् । न हि शूद्रः स्वपूज्यब्राह्मणव्यक्तिरेव भवति किं तु ब्राह्मणत्वजात्याक्रान्तः, ब्रह्मण्यपि ब्रह्मशब्दस्य बृंहणार्थत्वाद्, 'ब्रह्मत्वं बृंहितत्वं स्याज्जीवानां न परत्मते'ति स्मृतेश्च । 'अस्य महिमानमिति वीतशोक' इति वाक्यशेषाच्च । अन्यथा पूर्वत्र 'यथा नद्यः स्यन्दमाना' इति भिन्ननदीसमुद्रदृष्टान्तोक्तिः । 'परात्परं पुरुषमुपैति दिव्य'मिति ब्रह्म प्राप्त्युक्तिश्चायुक्ता स्यात् । किं च त्वत्पक्षे नित्यं ब्रह्मभूतस्यापूर्वब्रह्मभावोक्तिरयुक्ता । आरोपनिवृत्तेः साध्यत्वेऽप्यशाब्दत्वात् । 'ब्रह्मैव सन्ब्रह्माप्येति'त्यत्रापि जीव एव सन् ब्रह्म प्राप्नोतीति कर्तृकर्मभावेन भेद एवोच्यते । 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ती'त्यत्रापि एकीभावः स्थानैक्यं मत्यैक्यं सादृश्यं वा, न स्वरूपैक्यम् ।

अविरोधश्च सादृश्यमेकदेशस्थितिस्तथा ।
एकीभावस्तथा प्रोक्तो नैकीभावः स्वरूपयोः ॥

इति वचनात् । 'अह्नीतस्ततो गता गावः सायं गोष्ठे एकीभवन्ति', 'एकीभूता नृपाः सर्वे ववर्षुः पाण्डवं शरैः', 'अस्मिन्ग्रामे महाजना एकीभूताः', 'कीटो भ्रमरेणैकीभूत' इत्यादौ प्रयोगाच्च । त्वत्पक्षे ऐक्यस्य प्रागेव सिद्धत्वादभूततद्भावार्थच्विप्रत्ययबाधः । तथा सकृत्प्रयुक्तस्यैकीभवन्तीत्यस्य कर्मसु निवृत्तिरर्थः विज्ञानात्मन्यैक्यमर्थ इति अनेकार्थत्वम् । तथा 'परेऽव्यये' इति श्रुतसप्तमीहानिः, अश्रुततृतीयाकल्पनापत्तिः । तथा 'निरञ्जनः परमं साम्यमुपैती'ति पूर्ववाक्येन 'परात्परं पुरुषमुपैति दिव्यमि'त्युत्तरवाक्येन च विरोधः स्यात् । नाप्यन्तर्यामिप्रकरणस्थं 'नान्योऽतोऽस्ति द्रष्टे'ति वाक्यं अक्षरप्रकरणस्थं 'नान्यदतोऽस्ति द्रष्टृ' इति वाक्यं चैक्ये मानम् । अत इत्यनेन प्रस्तुतं सर्वनियन्तारं परामृश्यान्यो द्रष्टा

नास्तीत्युक्ते अस्मिन्ग्रामे अयमेव सर्वनियोजकः, नान्यः पुरुषोऽस्तीत्यादावन्य-शब्दस्य प्रस्तुतसदृशान्यपरतया व्युत्पन्नत्वेनेहापि सर्वनियामकद्रष्ट्रन्तरनिषेधात् । उक्तं हि– 'समानमितरच्छचेनेनेत्यत्र इतरशब्दस्य पूर्वनिर्दिष्टसदृशपरत्वम् । एवं च 'कन्दर्पः सुन्दरो लोके नान्योऽस्तीह पुमानि'त्युक्ते कन्दर्पतोऽन्यः पुमान्नेति न प्रतीयते किन्तु कन्दर्पसदृशः सुन्दरो नेति भासते । एवं परात्मसदृशद्रष्टृभावोऽत्र भासते । अन्यथा अन्तर्यामिवाक्ये 'य आत्मनोऽन्तरः, यमात्मा न वेद, यस्यात्मा शरीरं य आत्मानमन्तरो यमयती'ति पूर्ववाक्येन 'एष त आत्मान्तर्याम्यमृतः अतोऽन्यदार्त'मित्युत्तरवाक्येन च विरोधः । तत्र परमात्मनोऽन्यं चेतनमङ्गीकृत्य तस्यार्तियुक्तत्वेनास्वातन्त्र्यस्यैवोक्तेः । अक्षरवाक्ये च 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यादि पूर्ववाक्येन विरोधः स्यात्, द्वितीयाद्वै भयं भवतीत्यस्यापि विरोधिनः समानाद्भयं भवतीत्येवार्थः लोके तादृशादेव भय-दर्शनात् । अस्य च लोकसिद्धानुवादित्वात् । 'समानाद्धि भयं भवे'दिति स्मृतेश्च । पूर्वत्र 'तस्मादेकाकी बिभेती'ति उत्तरत्र च 'तस्मादेकाकी न रमत' इति श्रवणाच्च । यदाह्येवैष 'एतस्मिन्नुदरमन्तरं कुरुत' इत्यत्रापि एतस्मिन्निति विशेषणात्स्वगतस्यैव भेदस्य निषेधः । एवं 'एको देवः सर्वभूतेषु गूढ' इत्यादि श्रुतिः, 'एक एव हि भूतात्मा भूते भूते व्यवस्थित' इति स्मृतिश्चान्तर्याम्यैक्यपरा । भूतशब्दस्य 'यतो वा इमानि भूतानि जायन्ते यत्प्रयन्त्यभिसंविशन्ती'त्यादाविव चेतनपरत्वात् ।

यावन्मोक्षं तु भेदः स्याज्जीवस्य परमस्य च ।
ततः परं न भेदोऽस्ति भेदहेतोरभावतः ॥
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

इत्यादि स्मृतिष्वपि भेदशब्दो मित्रभेद इत्यादाविव वैमत्यार्थः । जीवस्य परमैक्यं तु बुद्धिसारूप्यमेव चेत्यादि स्मृतेः । जीवस्य हि आमोक्षमीश्वरकामविरुद्धकामिता न तु मोक्षे । अत एव मुक्तः सत्यकामः । असन्तमभद्रमित्यर्थः । क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारते'त्यस्यापि क्षेत्रज्ञं सर्वज्ञं मां सर्वक्षेत्रेष्वपि विद्धीत्यर्थः । तत्रैव

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥

तत् क्षेत्रं यच्च यादृक्च तत्समासेन मे शृणु । इत्युक्त्वा

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥

इत्याद्युक्त्वा 'एतत्क्षेत्रं समासेन सविकारमुदाहृत'मित्यनेन 'यस्य पृथिवी शरीर'मिति श्रुत्या ईश्वरशरीरतयोक्तं चेतनाचेतनात्मकं सर्वं क्षेत्रमित्युक्तत्वात् । मोक्षधर्मे–

क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥ इति
प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंवृतम् ॥

इति चोक्तेः । न चैवं रूढार्थत्यागः, जीवेऽपि क्षेत्रज्ञशब्दस्य यौगित्वात् 'शास्त्रस्था वा'– इति न्यायाच्च । एवमन्यान्यपि वाक्यानि योज्यानि । तस्मान्नागम ऐक्ये प्रमाणम् । अहं ब्रह्मास्मीत्यादिश्रुत्यर्थः ॥

अद्वैतसिद्धिः

बृहदारण्यकस्थितस्य तु 'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मी'ति वाक्यस्यानुपासनाप्रकरणस्थतया अभेदप्रमापकत्वमेव । न च तद्यो यो देवानां प्रत्यबुद्ध्यत, स एव तदभवत्तथर्षीणां तथा मनुष्याणामिति भेदपरवाक्यशेषविरोधः, तत्रापि देवादिषु प्रबुद्धं पुरुषं निर्धार्य 'स एव तदभव'दिति ब्रह्माभेदपरत्वेन भेदपरत्वाभावात् । न च– अत्र वाक्ये ब्रह्मण एव प्रकृतत्वान्नानेन जीवब्रह्मैक्यसिद्धिरिति शङ्क्यम्, यो देवानामिति जीवपरामर्शिवाक्यशेषानुसारेण ब्रह्मपदस्य कार्यब्रह्मपरत्वात्, शुद्धब्रह्मपरत्वे च बोधनिमित्तस्य तस्मात्तत्सर्वम-

(अद्वैतसिद्धिः)

भवदिति सार्वात्म्यलक्षणफलकीर्तनस्यायुक्तत्वापत्तेः । न च– 'नाम ब्रह्मेत्युपासीतादित्यो ब्रह्मेत्यादेश' इत्यादावितिशब्दशिरस्कतया नामाद्यभेदाभावादत्रापीतिशब्दशिरस्कतया ब्रह्म-भेदाभाव इति शङ्क्यम्, अनुपासनाप्रकरणस्थत्वेनाभेदाविवक्षाया नाम ब्रह्मेत्यादाविव वक्तु-मशक्यत्वात् । न चेतिशब्दवैयर्थ्यम्, आत्मेत्येवोपासीत इत्यादाविव शब्दज्ञानयोः स्वाभाविकसकर्मकत्वप्राप्तौ तन्निराकरणपरत्वेनोपयोगात् । यच्च– अहं शब्दो जीवान्तर्यामिणि मुख्यः, अहं मनुरभवं सूर्यश्चेति अन्तर्यामिण्यहं शब्दप्रयोगात्,

सर्वान्तर्यामिको विष्णुः सर्वनाम्नाभिधीयते ।
एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः ॥

इति वचनाच्चेति, तन्न । शास्त्रदृष्ट्या तूपदेशो वामदेववदिति न्यायेन वामदेवजीवचैतन्यस्य वस्तुतो ब्रह्माभेदेन सूर्यादिभावस्योक्ततया अन्तर्यामिपरत्वाभावाद्, 'तद्यो यो देवानां प्रत्यु-बुद्ध्यत स एव तदभव'दिति पूर्ववाक्ये तत्त्वबोधनिमित्तकब्रह्मभावस्य प्रकृततया पश्यन् प्रतिपेदे इत्यादेरपि बोधनिमित्तब्रह्मभावपरतया अन्तर्यामिपरत्वाभावात् । स्मृतेरपि असाधारणतत्त-दात्मनि शक्तेरावश्यकतया तत्सहचारेणान्तर्यामिणि एषोऽहमित्यादिप्रयोगः, न तु सर्वस्वरूपत इति । निषेधस्य तूपहितयोरैक्याभावनिबन्धनत्वान्न विरोधः, अत एव– विशिष्टचैतन्यरूपे वामदेवे विशिष्टचैतन्यरूपमनुसूर्यादिभावो न सम्भवतीति निरस्तम्, शास्त्रदृष्ट्या तूक्तत्वात् । न च तर्हि शुद्धचित्यभवमित्युत्तमपुरुषायोगः, भूतपूर्वगत्या सम्भवात् । न च– अहं भूमिमदा-मार्यायेत्याद्ययोगः, न हि चिन्मात्रं भूमिदात्रिति– वाच्यम्, उपहितचितमादाय तेषामुपपत्तेः । अहं नामाभवत्तस्योपनिषदहमित्यादेश्च तादृशोपासनापरत्वेन शक्तिनिर्णायकत्वाभावात् । तस्मान्नान्तर्याम्यभेदपरेयं श्रुतिः, अन्तर्यामिणि भेदाप्रसक्तेश्च । न च नियम्यानन्त्यादिना प्रसक्तिः, एकस्मिन्नपि जीवे अनेकावयवनियामकत्वस्यैकस्मिन्नपि राजन्ये अनेकदेशनियामक-त्वस्य च दर्शनात् । 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इत्यस्यापि नान्तर्याम्यै-क्यपरता, ब्रह्मविदाप्नोति परमित्यादिना शुद्धस्य ब्रह्मणः प्रकृततया तस्मिन्नुपाधिकृतभेदस्य तात्त्विकत्वप्रसक्तौ तन्निराकरणार्थत्वेन ऐक्योपदेशोपपत्तेः । न चैवं छान्दोग्ये य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मीत्यत्र स एवैनान् ब्रह्म गमयतीत्यत्र भेदपरोत्तरवाक्यविरोधः, तस्य उपासनाप्रकरणस्थत्वेनाहं ग्रहोपासनापरतया विरोधाभावात् । न चोपासनाप्रकरणस्थितवाक्य-

(अद्वैतसिद्धिः)

बलादैक्यासिद्धावपि अनुपासनाप्रकरणस्थितादपि तदसिद्धिः शङ्क्या । अन्यशेषत्वस्य तस्य तत्प्रयोजकस्याभावाद् । 'अथ योऽन्यां देवतामुपास्त' इत्युत्तरवाक्यस्य भेदज्ञाननिन्दापरतया तदनुसारेण पूर्ववाक्यस्योपासनापरत्वायोगात् । यत्तु ब्रह्मशब्दोऽत्र बृंहणार्थ इति न परब्रह्मैक्यसिद्धिः, अन्यथा पूर्ववाक्ये आत्मानमेवावेदहमित्यनेनैव ब्रह्मेति ज्ञानस्य सिद्धत्वाद् ब्रह्मास्मीति व्यर्थमिति, तन्न । आत्मशब्देन जीवचैतन्यमनूद्य बृंहितत्वाद्युपलक्षितब्रह्मचैतन्या-भेदविधिपरत्वेन सार्थकत्वात् । तथा च स्मृतिः 'अहं हरिः सर्वमिदं जनार्दन' इत्यादिकापि सङ्गच्छते । यत्तु 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशु'रित्यत्रान्तर्यामिभेदज्ञाननिन्दनमिति, तन्न, अन्तर्यामिणोऽप्रकृतत्वात् पदद्वयलक्षणा-देस्तात्पर्यानुरोधेन लब्धत्वात् । यत्तु अत्र योऽन्यो जीव अन्यां विलक्षणां देवतामुपास्ते अन्योऽसौ परमात्मा अहमस्मीति न स वेद यथा पशुरित्यर्थ इति, तत्तुच्छम्, व्यवहितान्व-यदोषात् । अहं शब्दसन्निहितान्य इत्यस्य य इत्यत्र नयनात् । न च 'यस्य येनार्थसम्बन्ध' इति न्यायेन सन्निधानाद्योग्यतायाः प्रबलत्वमिति शङ्क्यम्, यथास्थितार्थसम्बन्धेऽप्युक्तक्रमेण योग्यतासत्त्वात् । न चेयं श्रुतिः स्वातन्त्र्येणान्यसद्भावनिषेधिका, अन्यत्वप्रतियोगिनि स्वातन्त्र्योपस्थापकपदाभावात् । यत्तु कैश्चिदुपास्त इति श्रवणात् प्रयत्नसाध्यज्ञान-विजातीयवृत्त्यन्तररूपपोपासनाया एव निषेधः, न तु ज्ञानस्येत्युक्तम्, तन्न । 'तद्यो यो देवानां प्रत्यबुध्यते'ति पूर्ववाक्ये न स वेदेति निन्दावाक्ये च वेदनस्यैव निर्देशात् मध्यस्थितोपास्तेरपि ज्ञानपरत्वात् ।

एवं मुण्डके 'स यो ह वैतत्परमं ब्रह्म वेद ब्रह्मैव भवति' इत्येतदपि वाक्यमभेदपरमेव । न च– द्वितीयब्रह्मशब्दो जीवपर एव, तस्य जातिजीवकमलासनाद्यनेकार्थत्वात्, द्वे ब्रह्मणी इत्यादौ जीवे ब्रह्मशब्दप्रयोगसम्भवाच्च, यः परमं ब्रह्म वेद स जीव एव भवति, न तु परमं ब्रह्मेत्यर्थः । अत एव आद्यो ब्रह्मशब्दः परमत्वेन विशेषित इति– वाच्यम्, जीवे ब्रह्मपद-प्रयोगसम्भवेऽपि प्रकृते परब्रह्मोपदानमेवोचितम्, जीवभावस्याब्रह्मभावस्य च प्रागेव सिद्धतया ब्रह्मज्ञानसाध्यत्वाभावात् । एवं च अर्थाद् द्वितीयब्रह्मभवनमपि परमत्वविशेषितमेव । यच्च ब्रह्म भवतीत्यस्य बृंहितत्वरूपब्रह्मत्वाक्रान्तो भवती'त्यर्थः, सम्पूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेद् इतिवत् । न हि शूद्रोऽपि पूजितब्राह्मणव्यक्तिर्भवति, किन्तु ब्राह्मणत्व-

(अद्वैतसिद्धिः)

जात्याक्रान्त इति, तन्न, पूर्वोक्तयुक्त्या प्रकृते व्यक्त्यभेदस्यैव सम्भवेन दृष्टान्तवैषम्यात् । न च– 'अस्य महिमान'मिति वाक्यशेषात्तदीयमहत्त्वप्राप्तिरेव, न तु तद्भाव इति युक्तम्, देहेन्द्रियादिप्रपञ्चविलक्षणं यो वेद, प्रपञ्च तद्विभूतिं च यो वेद, स वीतशोको भवतीत्येवं परत्वात् । न च 'यथा नद्यः स्यन्दमाना' इति भिन्ननदीसमुद्रदृष्टान्तोक्तिरयुक्तेति वाच्यम्, स्पष्टभेदविलयनमात्रपरत्वेन दृष्टान्तोपपत्तेरुक्तत्वात् । परात् परं पुरुषमुपैति दिव्यमिति न देशान्तरस्थब्रह्मप्राप्त्युक्तिपरा, तस्याः सगुणोपासनाफलत्वेन ब्रह्मविद्याफलत्वासम्भवेन स्वरूपभूतब्रह्मप्राप्तिपरत्वात् ।

न च– अद्वैतमते नित्यं ब्रह्मभूतस्यापूर्वब्रह्मभावोक्तिरयुक्तेति वाच्यम्, कण्ठगतचामीकरादौ भ्रान्तिनिवृत्तिमात्रेण प्राप्तप्राप्तिरूपतया फलत्वदर्शनात् । न चारोपनिवृत्तेरशाब्दत्वम्, श्रुतार्थापत्तिगम्यतया शाब्दत्वोपपत्तेः । 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुतिरप्यैक्यपरा । न चात्र प्रथमब्रह्मपदस्य जीवपरत्वाभावे कर्तृकर्मभावविरोधः, साक्षात्कारप्राक्कालीनौपाधिकभेदमादाय तादृङ्निर्देशोपपत्तेः । परेऽव्यये सर्व एकीभवन्तीत्येतदप्यभेदे मानम् । न च गावः सायं गोष्ठ एकीभवन्ति । एकीभूता नृपाः सर्वे ववर्षुः पाण्डवं शरैः । कीटो भ्रमरेणैकीभूत इति स्थानैक्यमत्यैक्यसादृश्यनिबन्धनैकीभावस्य गोनृपकीटभ्रमरादौ दर्शनाद्, अत्रापि तैरेव निमित्तैः गौण एकीभाव इति– वाच्यम्, मुख्यत्वे सम्भवति गौणत्वस्यायोगात् । ब्रह्मैक्यमात्रपरत्वेन सकृदुच्चरितस्य नानेकार्थपरत्वशङ्कापि । न चैक्यस्य प्रागेव सिद्धतया अभूततद्भावार्थच्विप्रत्ययायोगः, स्वगृहनिक्षिप्ताज्ञातनिधिवत् सतेऽप्यावृतत्वेनाभूतसमतया च्विप्रत्ययोपपत्तेः । न च परेऽव्यय इति श्रुतसप्तमीहानिरश्रुततृतीयाकल्पनापत्तिश्चेति– वाच्यम्, श्रुत्यन्तरानुसारेण सप्तम्या अननुसरणीयत्वात् । न च 'परमं साम्यमुपैति', 'परात्परं पुरुषमुपैती'ति पूर्वोत्तरवाक्यविरोधः, तस्य प्रागेव निरासात् । तथान्तर्यामिप्रकरणस्थं 'नान्योऽतोऽस्ति द्रष्टे' इति वाक्यम् अक्षरप्रकरणस्थं 'नान्यदतोऽस्ति द्रष्टृति' वाक्यं च ऐक्ये प्रमाणम् । न चात इत्येनेन प्रस्तुतं सर्वनियन्तारं परामृश्यान्यो द्रष्टा नास्तीत्युक्तेः स्वनियामकद्रष्ट्रन्तरनिषेध आयाति, न तु द्रष्टृसामान्यनिषेधः, अस्मिन् ग्रामे अयमेव सर्वनियामको नान्यः पुरुषोऽस्तीत्यदावन्यशब्दस्य प्रस्तुतसदृशान्यपरतया व्युत्पन्नत्वात् समानमितरच्छचेनेनेत्यत्र इतरशब्दस्य पूर्वनिर्दिष्टसदृशपरत्वोक्तेश्चेति– वाच्यम्, अनेन ह्येतत्सर्वं वेदेति प्रतिज्ञातस्य एकविज्ञानेन

(अद्वैतसिद्धिः)

सर्वविज्ञानस्योपपादनार्थम् अन्यत्वेन प्रतीतेन जीवेनाभेदबोधनात् । अचेतनवर्गस्य अतोऽन्यदार्तं, नेति नेतीति निषेधाच्च जीवब्रह्माभेद एव वाक्यप्रमेयः । दृष्टान्ते तु अभेदस्याविवक्षितत्वात् त्वदुक्तप्रकाराश्रयणे बाधकाभावात् ।

न चात्राप्यन्तर्यामिवाक्ये 'य आत्मनोऽन्तरः यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयती'ति पूर्ववाक्येन 'एष त आत्माऽन्तर्याम्यमृतः अतोऽन्यदार्तमि'त्युत्तरवाक्येन च विरोधः । तत्र परमात्मनोऽन्यं चेतनमङ्गीकृत्य तस्यार्तियुक्तत्वेनास्वातन्त्र्यस्यैवोक्तिरिति वाच्यम्, पूर्ववाक्यस्यौपाधिकभेदमात्रेणोपपत्तेः । उत्तरवाक्येन न चेतनान्तरस्यार्तियोगो विधीयते, किन्तु 'एषोऽन्तर्यामी ते आत्मे'ति जीवस्वरूपभूतादन्तर्यामिणो व्यतिरिक्तं सर्वम् आर्तं विनश्वरमिति वा मिथ्येति वा बोधनान्न विरोधशङ्का । अत एव अक्षरवाक्येऽपि 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिपूर्ववाक्येन विरोध इत्यपास्तम् । किञ्च द्वितीयाद्वै भयं भवतीति भेदस्य भयहेतुत्वेन निन्दितत्वादप्यभेद एवोपनिषद्गम्यः । न च– अस्य विरोधिनः समानाद् भयं भवतीत्येवार्थः, लोके तादृशादेव भयं भवतीति लोकसिद्धनुवादित्वात् पूर्वत्र 'तस्मादेकाकी बिभेति' उत्तरत्र 'तस्मादेकाकी न रमत' इति श्रवणाच्चेति वाच्यम्, यन्मदन्यन्नास्ति कस्मान्न बिभेमीति तत एवास्य भयं वीयायेति श्रुतेः । सामान्यतो द्वितीयमात्रदर्शनस्यैव भयहेतुत्वाद् विशेषकल्पनायोगात् । एकाकी बिभेतीति पूर्ववाक्ये परमार्थदर्शनरहितस्य तन्निमित्तभयसम्भवाद् एकाकी बिभेतीत्युक्तम् । उत्तरवाक्ये तस्मादेकाकी न रमत इत्यत्र इष्टसंयोगजन्यरतेरेकाकिन्यभावाद् एकाकिनो रतिर्नास्तीत्युक्तम् । ततश्चातत्त्वज्ञविषयोक्तवाक्यानुसारेण तत्त्वज्ञविषयमध्यवाक्यस्य स्वार्थसमर्पणेनाप्युपयुक्तत्वात् तद्विरोध्यर्थपरत्वायोगात् । 'एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवती'ति भेदनिन्दयाप्यभेदसिद्धिः । न च एतस्मिन्निति श्रवणात् स्वगतभेदनिषेधोऽयम्, न भेदमात्रनिषेध इति शङ्क्यम्, अल्पार्थकारशब्दस्वारस्यादप्यर्थकोत्पदस्वारस्याद्, एतस्य प्रतियोगित्वेनानुल्लेखाच्च भेदमात्रनिषेधपरतया तद्विशेषनिषेधपरत्वकल्पनायोगात् । एवं 'एको देवः सर्वभूतेषु गूढ' इत्यादिश्रुतिरप्यत्रैक्यप्रमाणम् । न च– अन्तर्याम्यैक्यपरेयं श्रुतिः, 'यतो वा इमानि भूतानि जायन्ते' इत्यादाविव भूतशब्दस्य चेतनपरत्वादिति वाच्यम् । दृष्टान्तासंप्रतिपत्तेः, चेतनस्य जायमानत्वाद्ययोगाद्, भूतहिंसानिषेधवाक्य इव चेतनाधिष्ठितप्राण-

(अद्वैतसिद्धिः)

शरीरादेरेव भूतशब्दवाच्यत्वात् । अत एव 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । इत्यादिस्मृतिरपि । एवं

यावन्मोहं तु भेदः स्यात् जीवस्य परमस्य च ।
ततः परं न भेदोऽस्ति भेदहेतोरभावातः ॥
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

इत्यादिस्मृत्या भेदस्याविद्यकत्वप्रतीतेरभेद एव तात्त्विक इति गम्यते । न चात्र भेदशब्दो मित्रभेद इत्यादाविव वैमत्यार्थः, तथा सति लक्षणापत्तेः, अन्योऽन्याभावादेरेव मुख्यत्वात्, श्रुतार्थत्यागस्यान्याय्यत्वात् ।

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत इत्यादिस्मृतिरप्यत्र मानम् । न च क्षेत्रज्ञं सर्वज्ञं मां सर्वक्षेत्रेषु विद्धीत्यर्थः । 'महाभूतान्यहङ्कार' इत्याद्युक्त्वा 'एतत्क्षेत्रं समासेन सविकार-मुदाहृतम्' इत्यनेन 'यस्य पृथिवी शरीर'मित्यादिश्रुत्येश्वरशरीरतयोक्तं चेतनाचेतनात्मकं सर्वं क्षेत्रमित्युक्तत्वादिति वाच्यम्, सर्वनियामकतया सकलक्षेत्रसम्बन्धस्य प्रागेव सिद्धेः पौनरुक्त्यापत्तेः, तत्तत्क्षेत्राधिष्ठातृत्वेन क्षेत्रज्ञपदवाच्यजीवाभेदपरत्वस्यैवोचितत्वात् । अत एव

क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे ।
श्रुतानि वेत्ति योगात्मा ततः क्षेत्रज्ञ उच्यते ॥
प्रकृतेश्च विकाराणां द्रष्टारमगुणात्मकम् ।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंवृतम् ॥

इत्यादिस्मृतौ क्षेत्रज्ञशब्दस्य सर्वान्तर्यामिसर्वज्ञपरत्वेऽपि प्रकृते तदसम्भवः जीवे सुप्रसिद्धत्वाच्च । न च शास्त्रस्था वेति न्यायः, तस्य एकतराशास्त्रीयविषयत्वात् । एवमन्या-न्यपि वाक्यानि यथासम्भवमैक्ये योज्यानि । तस्मादागम ऐक्ये मानम् । इत्यद्वैतसिद्धौ अहं ब्रह्मास्मीत्याद्यनेकश्रुतिस्मृत्यर्थकथनम् ।

## न्यायामृततरङ्गिणी

॥ लक्षणां विनैवेष्टसिद्धिरित्याह ॥ किञ्चेति ॥ अन्तर्यामिण्यहंशब्दस्य मुख्यत्वाय तत्र तस्य श्रौतप्रयोगमप्याह ॥ अहंमनुरिति ॥ नन्वेतन्मन्त्रद्रष्टरि वामदेव एवाहंशब्दोस्त्वित्यत आह ॥ नहीति ॥ ननु शास्त्रदृष्ट्या तूपदेशो वामदेववदिति न्यायेन वामदेवजीवचैतन्यस्य वस्तुतो ब्रह्माभेदेन सूर्यादिभाव उच्यतेऽतो न विरोध इत्यत आह ॥ अहमिति ॥ तथा सति वामदेव-शब्दे चिन्मात्रलक्षणापत्तावभवमित्युत्तमपुरुषायोगः ॥ अहंभूमिमिति ॥ चिन्मात्रस्य सूर्यादि-भवनसम्भवेपि भूमिदानं न सम्भवति । ननु चिन्मात्रस्येवान्तर्यामिणोपि भूमिदानं न सम्भव-तीत्यत आह ॥ भगवानिति ॥ विष्णुर्व्यापनशीलः सर्वान्तर्यामी । एको विष्णुर्महद्भूतमिति स्मृतेः । प्रसिद्धं हीन्द्रायेन्द्रेण राज्यं दत्तमिति । मन्त्रवर्णोपि

सखे विष्णो वितरं विक्रमस्व द्यौर्देहि लोकं वज्राय विष्कभे ।
हनाववृत्रं रिणचावसिन्धूनिन्द्रस्य यन्तु प्रसवे विसृष्टाइति ।

अस्यार्थोमाधवीये हेसखेविष्णो वितरमत्यन्तं विक्रमस्व विक्रमं कुरु हे द्यौः त्वं वज्राय वज्रस्य विष्कभे विष्कंभाय लोकम् अवकाशं देहि हे विष्णो त्वं चाहं चोभावपि वृत्रमसुरं हनाव हन्वःसिन्धून्वृत्रावष्टब्ध नदीरिणचाव स्रावयावः त इमे विसृष्टाःसिन्धव इन्द्रस्य प्रसवे यं तु प्रेरणे गच्छन्तु । तमिममर्थं सङ्गृह्य श्लोकैः शौनको दर्शयति ।

त्रीन्लोकानभिवृत्यैतान्वृत्रस्तस्थौ स्वया त्विषा ।
तन्नाशकद्धन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत् ।
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य ममान्तिके ।
उद्यतस्य तु वज्रस्य द्यौर्ददातु ममान्तरम् ।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरं ददौ ।
तदेतदखिलं प्रोक्तं सखे विष्णविति ह्यृचेति ।
तथा विश्वेत्ताविष्णुराभरदुरुक्रमस्त्वेपितः ।
शतं महिपान्क्षीरपाकमोदनं वराहमिन्द्र एमुषम् ।

हे इन्द्र त्वेषितः त्वया प्रार्थितःउरुक्रमो विष्णुः विश्वा पूर्णानि ता तानि धनानि आहरत् इत् एव तानि कानि शतं अपरिमितान् महिषान्प्रशस्तान्पदार्थान्क्षीरपकमोदनं च आहरत् ।

(तरङ्गिणी)
इन्द्रः भवान् एमुषं आमुषं आकारस्य एकारःछान्दसः धनानां आमुषं वराहनामकमसुरं अविध्यदिति शेषः । इत्यादिष्विन्द्राय विष्णू राज्यादि दत्तवानिति । अस्येदमातुःसवनेषु सद्य इत्यत्रापीयं कथा श्रूयते । ततश्चान्तर्यामिणो विष्णुत्वात्तस्य भूमिदानादि युज्यते ॥ ततश्चान्तर्याम्यैक्यमिति ॥ न चात्राहमस्मीत्युत्तमपुरुषायोगः । अन्तर्यामिणोपि प्रत्यक्त्वात्तत्पराहंशब्दयोगेपि जीवपराहंशब्दयोग इवोत्तमपुरुषोपपत्तिः । अन्तर्यामिभेदनिराकरणं श्रुतावद्दृष्टचरमिति शङ्कां निराकरोति ॥ तथाचेति ॥ ननु ब्रह्मविदाप्नोतिपरमित्यादिना शुद्धस्य ब्रह्मणः प्रकृततया तस्मिन्नुपाधिकृतभेदस्य तात्विकत्वप्रसक्तौ तन्निराकरणार्थत्वात्स यश्चायमित्यादेर्नान्तर्याम्यैक्यपरत्वम् । मैवम् । ब्रह्मणि भेदनिराकरणस्याप्यन्तर्यामिणि भेदनिराकरणतुल्यत्वात् ॥ अन्यथेति ॥ अहं ब्रह्मणोरभेदपरवाक्यानां जीवब्रह्माभेदपरत्वे ॥ स एनानिति ॥ 'अथ यदु चैवास्मिंच्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसम्भवन्त्यर्चिषो हरि'त्यारभ्य 'तत्पुरुषो मानवःस एनान्ब्रह्मगमयत्येष देव पथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त' इत्यादिना विरोधः । अस्मिन् ब्रह्मविदि । शव्यं शवसम्बन्धिकर्म । आशौचकर्मकरणाकरणाभ्यां ब्रह्मविदां नोत्कर्षापकर्षौ किन्तु ब्रह्मविदोऽर्चिरादिमार्गेण गच्छन्त्येवेति श्रुत्यर्थः ॥ किञ्चेति ॥ अथ हैनं गार्हपत्योनुशशास य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति स य एतमेवंविद्वानुपास्तेऽपहते पापकृत्यां लोकीभवतीत्युपास्तिः श्रूयते । उपास्तिवाक्यस्य चोपासनायाः कर्तव्यत्वे वस्तुतस्तथात्वे च न तात्पर्यमित्यर्थः । किञ्च ब्रह्मविद्यार्थं सत्यकामाख्यस्य गुरोःकुले वसन्तं गुर्वनुज्ञयाग्नीन्परिचरन्तं गुरुणा बहुकालमनुपदिष्टविद्यत्वादनश्नन्तमुपकोसलं प्रति कृपालुभिरग्निभिरुक्तं य एष आदित्य इत्यादि । तत्र न विशिष्टचैतन्यरूपाणां गार्हपत्याद्यग्नीनां सूर्येणैक्यं सम्भवति किन्त्वंतर्याम्यैक्यमेव । ननूपासनाप्रकरणस्थादैक्यासिद्धावप्यनुपासनाप्रकरणस्थात् यः प्रसिद्धः असौ आदित्यमण्डलस्थःअसौ पुरुषः परिपूर्णः सह प्रसिद्धः परिपूर्ण एवाहमस्मीत्येवमर्थकाद्योसाविति वाक्यादैक्यसिद्धिः स्यादत आह ॥ योसाविति ॥ वायुरनिलमिति ॥ पूषन्नेकर्षे यमसूर्यप्राजापत्यव्यूहरश्मीन्समूहतेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामीति पूर्वेण च विरोधः । ननु पूषन्नित्याद्यमन्त्रे हे पूषन् हे एकर्षे हे यम हेप्रजापतेरपत्यभूतेति सूर्यं सम्बोध्य सौरकिरणानामपसरणं प्रार्थ्यते तदैक्यज्ञानाय । वायुरनिलमित्यत्र तु मरणकाले वायुः प्राणः अनिलं बाह्यवायुं यात्विति शेषः । अमृतं आनन्दात्मरूपम् अहमस्मीति पूर्वेण सम्बन्धः । अथ वायुगमनानन्तरम् इदं प्रत्यक्षं शरीरं भस्म अन्ते यस्य तत् पृथिवीं यात्वितिशेषः इत्येवार्थसत्त्वान्न पूर्वोत्तराभ्यां विरोध

(तरङ्गिणी)

इत्यत आह ।। नहीति ।। अयं भावः । वायुरनिलमित्यादेरेकवाक्यतयान्वये शरीरादेरैक्यंस्यात् । भिन्नतयान्वये तु वाक्यभेदोऽध्याहारादिदोषप्रसङ्गः । वायोर्बाह्यवायुं प्रति गमनस्य शरीरस्य भस्मभावस्य चावश्यंभावित्वात्प्रार्थनानुपपत्तिश्च । एकस्यासावित्यस्य वैयर्थ्यं च । तस्मात् हे पूषादिगुण मदीयान्रश्मीन्व्यूह तेजश्च समूह । स्वरूपभूतं बाह्यं च मदीयं ज्ञानं विस्तारयेति यावत् । तथा च यत्ते रूपं कल्याणतमं तत्ते प्रसादादहं पश्यामि योऽसौ प्रसिद्धः असौ असु-शब्दवाच्ये प्राणे स्थितः पुरुषः स एव अहेयत्वजीवान्तर्यामित्वाभ्यां नित्यसत्तामानाभ्या-महमस्मि शब्दाभिधेयस्तञ्च पश्यामीति । नन्वेतदयुक्तं प्रत्यक्षत एव देहस्य भस्मान्तत्व-दर्शनाद्देहनाशे च तदन्तर्गतजीववन्मरणाद्यवश्यम्भावादित्याशङ्कायामिदमुच्यते वायुरनिलमि-त्यादि । तस्यार्थः । यद्यपीदं शरीरं भस्मान्तं तथापि तदन्तर्गतस्य परमेश्वरस्य न मरणादि-दोषः । कुतः । अकारवाच्यो विष्णुः नीडं स्थानमस्य सोऽनिलः । अनिलः परमेश्वराश्रितो वायुरपि यदामृतःअथ तदा परमेश्वरोमृत इति किं वक्तव्यमित्ययमर्थोस्य वाक्यस्य ईशावास्य-भाष्यतट्टीकानुसारेण ज्ञेयः ।। अग्ने नयेति ।। हे अग्ने देव विश्वानि सर्वाणि वयुनानि विद्वान् जानासि त्त्वं अतः राये मोक्षाख्यधनार्थम् अस्मान् सुपथा शोभनमार्गेण नय जुहुराणं कुटिलम् एनः अस्मत्सकाशात् युयोधि वियोजय ते तुभ्यं भूयिष्ठां नम उक्तिं नमस्कारं विधेम एषा ते अपचितिरित्यर्थः ।। चक्षुरिति ।। अत्र मित्रादिदेवानां भेदेन निर्देशान्मन्त्रस्य भेदपरत्वम् । चित्रं देवानामिति मन्त्रस्यायमर्थः । देवानामनीकं समूहरूपं चित्रम् आश्चर्यकरं सूर्यस्य मण्डल-मुदगात् उदयाचलं प्राप्तमासीत् कीदृशं मित्रस्य मित्राद्युपलक्षितानां सर्वेषां चक्षुः प्रकाशकम् उदयं प्राप्य वा दिवं पृथिवीम् अन्तरिक्षं च आप्राः स्वकीयेन तेजसा आसमन्तात् प्रा पूरण-इतिधातोर्लङ्पुरुषव्यत्ययः अदादित्वाच्छपो लुक् । मण्डलान्तर्गतः सूर्याख्यो नारायणः जगतां स्थावराणां च आत्मा चैतन्यप्रद इति ।। तद्यो यो देवानामिति ।। नन्वत्र देवादिषु प्रबुद्धं पुरुषं निर्धार्य स एव तदभवदिति ब्रह्माभेदपरत्वेन ब्रह्मभेपरत्वाभावः । मैवम् । बहुमुक्तिरबोद्धुस्तद-भाव इति भेदस्य स्पष्टं प्रतीतेः । न चायं मिथ्याभेदः । स्वतःप्रमाणसिद्धस्य मिथ्यात्वानु-पपत्तेः ।। किञ्चात्रेति ।। ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्व-मभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणामिति वाक्ये प्रकृतं ब्रह्म आत्मानमेव ब्रह्मत्वेनावेदित्यवगम्यते । नतु जीवः स्वात्मानं ब्रह्मतयावेदिति । येन जीवब्रह्मैक्यपरमिदं वाक्यं स्यादित्यर्थः । ननु यो यो देवानामिति जीवपरर्षिवाक्यशेषानुसारेण ब्रह्मशब्दः कार्य-ब्रह्मपरः । मैवम् । तदाहुर्यद् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मनुष्या मन्यंते किमु तद्

(तरङ्गिणी)

ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति पूर्वकण्डिकायां यस्य ब्रह्मणो विज्ञानेन सर्वभवनरूपफलावाप्तिः तस्याकार्यस्य ब्रह्मणः प्रकृतत्वात् । नहि कार्यब्रह्मविद्यायाः सार्वात्म्यं फलम् । नच शुद्धब्रह्मणो बोधनिमित्तस्य सार्वात्म्यस्याभावात्तस्मात्तत्सर्वमभवदिति बोधनिमित्तकसार्वात्म्यलक्षणफलस्य कीर्तनमयुक्तमिति वाच्यम् । स्वस्य पूर्णत्वानुभवोद्रिक्तानन्दात्सर्वात्मकत्वोपपत्तेः । ननु तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेतितदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीति जीवपरवाक्यगताहं ब्रह्मास्मीति वाक्येन ब्रह्मैक्यसिद्धिः स्यादित्यत आह । य एवं वेदेति । ननु तद्वाक्ये इतिशब्दश्रवणेऽपि नोपासाश्रीयतेत आह ॥ अथयोन्यामिति ॥ ननु यो यो देवानां प्रत्यबुध्यतेति पूर्ववाक्येन सवेदेत्युत्तरवाक्ये च वेदनस्य निर्देशान्मध्यस्थितोपास्तिरपि ज्ञानमेव । मैवम् । लक्षणापत्तेः ॥ अनेनेति ॥ य एवं वेदाहं ब्रह्मेत्यनेन नैक्यसिद्धिः ॥ यद्वात्रेति ॥ ब्रह्म वा इत्यादिवाक्यप्रकृतं ब्रह्म अहं बृंहितः पूर्णोस्मीत्यात्मानमवेदित्यर्थसम्भवेन न ततो जीवब्रह्मैक्यसिद्धिः ॥ अन्यथेति ॥ ब्रह्मशब्दस्य बृंहणार्थत्वानङ्गीकारे प्रसिद्धब्रह्मार्थकत्वाङ्गीकारे । ननु परमते उपासनायामर्थासत्त्वेपि भवन्मते तस्यामर्थोस्ति । अतो भेदोपास्तिनिन्दानुपपत्तिरत आह ॥ अथ योन्यामिति ॥ अन्यथेति ॥ भेदज्ञानिनिन्दापरत्वे अदःशब्दास्मच्छब्दवोध्यविशिष्टयोर्भेदस्य सत्वे न तज्ज्ञानिनो निन्द्यत्वाभावात्ताभ्यां शब्दाभ्यां भागत्यागलक्षणया चिन्मात्रमुपलक्ष्य तद्भेदज्ञानी निन्द्यत इत्यर्थवर्णने पदद्वयलक्षणादोष इत्यर्थः ॥ अन्यथेति ॥ अन्योसावहमन्य इति प्रकारेण देवतामुपास्त इत्यर्थकरणे अदःशब्दार्थसमकक्ष्यतयाहमर्थस्याप्युपास्तिं प्रति विशेष्यतया तस्मिन् देवतात्वायोगः ॥ व्यवहितेति ॥ अहंशब्दसन्निहितान्य इत्यस्य य इत्यत्र नयनात् ॥ यस्येति ॥ व्याख्यातमेतन्नतु तद्द्वितीयमस्तीति श्रुत्यर्थनिरूपणे ॥ सजीव एव भवतीति ॥ ननु जीवभावस्य प्रागपि सिद्धतया ब्रह्मवेदनसाध्यत्वानुपपत्तिः । मैवम् । जीवो भवतीत्यस्य मरणादिदुःखाभावे तात्पर्यात् । नन्वेवमशाब्दोऽर्थः स्यादित्याशङ्क्य तवापि सममित्याह ॥ किञ्च त्वत्पक्षइति ॥ ननु कण्ठगतचामीकरादाविवारोपिताब्रह्मत्वनिवृत्तिरेव ब्रह्मत्वप्राप्तिरत आह ॥ आरोपितेति ॥ स्थानैक्ये उदाहरणमाह ॥ अह्नीति ॥ मत्यैक्ये नृपा महाजनाश्च । सादृश्ये कीटोदाहरणम् ॥ सकृदिति ॥

गताः कलाः पञ्चदशप्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।<br>
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्तीति

(तरङ्गिणी)

श्रुतौ पञ्चदशकलाः प्रतिष्ठाः स्वमूलरूपं प्रति गताः सर्वे देवाः स्वमूलदेवताः प्रतिगताः कर्माणि निवृत्तानि विज्ञानात्मा च परेणैकीभूत इत्यर्थकरणे वाक्यभेदादिदोष इत्यर्थः ॥ अतोऽन्यदार्तमिति ॥ नचार्तशब्देन मिथ्येति वा विनश्वरमितिवोच्यतेऽतो न विरोध इति वाच्यम् । आर्तो जिज्ञासुरर्थार्थीत्यादौ दुःखिनीव मिथ्यादौ तदप्रयोगात् ॥ समानादिति ॥ ननु सोऽबिभेत्तस्मादेकाकी बिभेति सहायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मात्तु बिभेमीति तत एवास्य भयं वीयाय कस्माध्यभेष्यत् द्वितीयाद्वै भयं भवतीतिश्रुतौ द्वितीयमात्रदर्शनस्यैव सामान्यतो भयहेतुत्वाद्विशेषकल्पनायोग इत्यत आह ॥ लोकइति ॥ अन्यथा यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयायेत्यत्र द्वितीयाभावस्य भयाभावहेतुत्वकथनमयुक्तम् स्यात् । द्वितीयाभावस्येव द्वितीयस्य भयहेतोः सत्त्वात् ॥ उत्तरत्रेति ॥ सवै नैव रेमे तस्मादेकाकी न रमत इतिश्रुतेः ॥ यदा ह्येवैष इति ॥ नन्वल्पार्थकारशब्दस्वारस्यादपि शब्दार्थकोत्पद-स्वारस्यादेतच्छब्दार्थस्य प्रतियोगित्वेनानुपादानाच्च भेदमात्रनिषेधपरतया स्वगतभेदनिषेध-परत्वायोगः । मैवम् । यदि न्यायेनेमौ स्निग्धावित्यादिलौकिकरीत्या च भेदप्रयोगित्वेनैतस्मि-न्निति शब्दनिर्दिष्टस्य सन्निहितस्यैवान्वये उदरशब्दयोरस्मन्मते स्वारस्यात् ॥ एको देव इति ॥ ननु नात्रान्तर्याम्यैक्यं शक्यं वक्तुम् । भूतशब्दस्य चेतनपरत्वाभावात् । भूतहिंसानिषेधवाक्य इव चेतनाधिष्ठितशरीरादेरेव भूतशब्दवाच्यत्वादत आह ॥ भूतशब्दस्येति ॥ नच चेतने जनेर-योगः जनेरनेकविधत्वेन चेतनेपि तत्संभवात् । ननु वैमत्यार्थत्वे भेदशब्दस्य लक्षणापत्तिः । तस्यान्योन्याभावेरूढत्वादत आह ॥ जीवस्येति ॥ ऐक्यव्याख्यात्र्या स्मृत्या तद्विपर्ययो भेदोप्यर्थाद्व्याख्यात इति भावः । ननु सर्वक्षेत्रेषु क्षेत्रज्ञं जीवं मां विद्धीत्येतदर्थकं क्षेत्रज्ञं चापि मां विद्धीत्यादिवाक्यमैक्ये प्रमाणमत आह ॥ क्षेत्रज्ञंचापीति ॥ क्षेत्रज्ञस्य जीवात्पृथगुक्तेर्न क्षेत्रज्ञो जीव इत्याह ॥ प्रकृतश्चेति ॥ क्षेत्रज्ञइति ॥ क्षेत्रज्ञः शुद्धः परमात्मा अविकर्तुर्जीवस्य मया रचिताः अनित्याः एताः विभूतीः आविर्हिताः तिरोहिताश्च विचष्टे प्रकटयति ॥ शास्त्रस्थावेति ॥ व्याख्यातमेतत् ॥ ॥ अहंब्रह्मास्मीत्यादिश्रुत्यर्थः ॥

## न्यायामृतकण्टकोद्धारः

नन्वहं ब्रह्मास्मीत्यादिनाऽभेदस्य निर्णीतत्वात् तदनुसारेण तत्वमसीत्यादेर्योज्यत्वात् न तद्वाक्यं भेदपरमित्यतः तदेतद्व्याख्यानेन व्याख्यातमित्याह एतेनेति । अतिदिष्टं हेतुं दर्शयति उक्तरीत्येति । एकपदलक्षणयेत्यङ्गीकृत्योक्तम् । सापि नास्मन्मत इत्याह किंचेति । ननु योगरूढ्योर्मुख्यत्वात् तत्रापि योगाद् रूढेर्मुख्यत्वात् ब्रह्मणि च तदभावात् कथं ब्रह्मण्यहं शब्दो मुख्य इत्यत आह सर्वेति । अत्र

(कण्टकोद्धारः)

नाम्नाभिधीयत इत्युक्तत्वाद् रूढिसिद्धिः । योगस्तु अहेयत्वादहं नामेति स्मृत्युक्तो द्रष्टव्यः । नचान्तर्यामिणि जीवसाहचर्यात् तद्वाचकाहमादिशब्दप्रयोग इत्येवं परतया स्मृतिर्नेयेति वाच्यम् । अभिधीयत इत्यभिधानस्यैव स्मृत्युक्तत्वात् । ननु रूढेर्बहुलप्रयोगनिबन्धनत्वात् अन्तर्यामिणि च प्रयोगाभावात् कथं तत्र रूढिरित्यत आह अहमिति । न च शास्त्रदृष्ट्यातूपदेशो वामदेववदित्युक्तन्यायेन तत्वमसीत्यत्रेवात्रैक्योपदेशो, नान्तर्याम्यैक्याभिप्रायेणेति वाच्यम् । तत्राप्यन्तर्यामिदृष्ट्येत्येव सूत्रार्थः । न तु भवद्रीत्या चैतन्यैक्य-मात्रमर्थः । तत्वमसीत्यादेस्तु यथा भेदपरत्वं तथोपपादितम् । न च तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवदिति पूर्ववाक्ये तत्वबोधनिमित्तक ब्रह्मभावस्य प्रकृततया पश्यन् प्रतिपदे इत्यादेरपि बोधनिमित्त ब्रह्मभावपरतयान्तर्यामिपरत्वाभाव इति वाच्यम् । तद्वाक्यस्य मुक्तभेदपरत्वेन त्वदुक्तार्थपरत्वाभावात् । यथा चैतत् तथाग्रे उपपादयिष्यामः । उदाहृतस्मृतिविरोधाच्च । न च स्मार्तनिषेधस्योपहितैक्यनिषेधपरतया चिन्मात्रैक्ये न विरोध इति वाच्यम् । न तु सर्वस्वरूपत इति साक्षान्निषेधस्यैवाभिधानात् । अत एवाह नहीति । ननु शास्त्रदृष्ट्या चिन्मात्रलक्षणया प्रयोग इत्यत आह अहमिति । न च भूतपूर्वगत्यायम् । अहं मनुरित्यादिना चिन्मात्रस्यैव प्रकृतत्वात् भूतपूर्वगतेश्च निरस्तत्वात् । भगवतोऽहं शब्दवाच्यत्वे श्रुत्यादिकं दर्शयति तस्मादिति । न चेदं श्रुत्यादिकमुपासनापरमिति वाच्यम् । उपासनावाचकाश्रवणात् । असदुपास-नाया निषेधाच्च । अन्यथा सत्यं ज्ञानमित्यादेरप्युपासनापरत्वे शून्यवादापातात् । परमप्रमेयमुपसंहरति तत-श्चेति । अहं ब्रह्मास्मीत्यत्रेत्यर्थः । नन्वन्तर्यामिणि भेदस्या प्रसक्ततया तदैक्यकथनमयुक्तमित्यत आह उक्ताचेति । न च नियम्यानन्त्यादिना नियामके भेदप्रसक्तिरयुक्ता । एकस्यैव जीवस्यानेकशरीरावयव नियामकत्वदर्शनात् । राजादेश्चानेकदेशनियामकत्व दर्शनाच्चेति वाच्यम् । जीवेऽप्यंशविशेषाभावेऽ-वयवनियामकत्वासम्भव एव । स्वरूपेणैवानेक नियामकत्वेन भेदस्योक्ततया राजदृष्टान्तायोगात् । न हि राजादिः स्वस्वरूपेणानेकनियामकः । किन्तु भृत्यादिद्वारेणेत्यलम् । ननु नियम्यभेदेन नियामकभेदप्रसक्तौ नियामकैक्यकथनं क्वापि नोपलब्धमित्यत आह तथाचेति । नन्वत्र ब्रह्मविदाप्नोति परमिति ब्रह्मणः प्रकृतत्वेन तद्भेदस्यौपाधिकत्वमेव, न तु तात्विकत्वमित्यत्रोच्यत इति चेन्न । स एक इति भेदनिषेधस्यैव प्रतीय-मानत्वात् । तात्विकत्वनिषेध ज्ञापकाभावात् । लक्षणाया अयुक्तत्वाच्चेत्यलं पल्लवेन ।

नन्वहमादिशब्दानां जीवादि मात्रपरतया जीवब्रह्मैक्यं सोहमित्यत्र प्रतिपाद्यते । अतस्तत्समाख्यया प्रकृतेऽपि स एवार्थ इत्यतस्तत्राप्यन्तर्याम्यैक्यमेवार्थोऽन्यथोत्तरवाक्यविरोध इत्याह अन्यथेति । अहमादि-शब्दानामन्तर्यामिपरत्वानङ्गीकार इत्यर्थः । स एनानित्यत्र प्राप्यप्रापकतया भेदोक्तिः द्रष्टव्या । न चात्र ब्रह्मशब्दस्य गौणब्रह्मपरतया तेन भेदस्याङ्गीकृतत्वान्न शुद्धब्रह्माभेदे तद्विरोध इति वाच्यम् । परं जैमिनिरिति सूत्रकारेणैव मुख्यत्वेन ब्रह्मशब्दस्य परब्रह्मपरत्वाङ्गीकारात् । परब्रह्मण एव शुद्धत्वात् । ननु नानेन वाक्येन जीवब्रह्मभेदसिद्धिः । तस्य व्यावहारिकभेदानुवादकत्वेन तत्र तात्पर्याभावात् । पूर्ववाक्यं तु अपूर्वार्थत्वेन तात्पर्ययुक्तत्वेन बलवत्त्वान्नैक्यसिद्धिरित्यत आह किंचेति । तथाचैक्यवाक्यस्याप्युपासनायामेव तात्पर्या-न्नैक्यसिद्धिः । अन्यथा वाक्यभेदापत्तेरिति भावः । व्यावहारिकभेदस्याद्याप्यसिद्धत्वात् अनुवादस्य च

(कण्टकोद्धारः)

प्रयोजनाभावात् जीवपरमात्मभेदस्य च श्रुतिं विनाऽसिद्धेः तत्राप्यपूर्वत्वेन बलवत्त्वात् पूर्वोक्तदूषणमपि निरवद्यम् । नन्वीशावास्ये 'योऽसावसौ पुरुषः सोऽहमस्मि वायु'रित्यत्र जीवपरमात्मनोरभेद उच्यते । तदनुसारेण भेदवाक्यान्यभेदपराण्येवेत्यत आह योसाविति । जीवपरमात्माभेदपरत्वेन व्याख्यायमान इत्यर्थः । कथमेतद्वाक्यविरोध इति चेदिदं हि परमात्मनो जीवशरीरस्थत्वे शरीरस्य प्रत्यक्षेण भस्मान्तत्वदर्शनात् जीववन्मरणशङ्कायां प्रवृत्तम् । तथाचानेन जीववैलक्षण्यं प्रतिपाद्यते यद्यपीदं शरीरं भस्मान्तम् । तथापि तत्स्थः परमात्मा नित्य एव । यतो वायुरमृतःस्मृतः । ननु वायोरमृतत्वे परमात्मनः किमायातमिति चेत् तन्नित्यत्वेऽनिल इत्यनेन अःनिलोऽस्येति वा, अस्य निल इति वा व्युत्पत्त्या परमात्माश्रितत्वस्य तदाश्रयत्वस्य वा हेतूकरणात् । न चेदं द्वितीयान्तं कथं प्रथमान्तवायुरित्यस्य विशेषणमिति वाच्यम् । व्यत्ययेन प्रथमान्तत्वोपपत्तेः । न च वायुरनिलं प्राप्यामृतो भवतु, इदं तु शरीरं भस्मान्तं भूयादित्यर्थः किं न स्यादिति वाच्यम् । अवश्य भाविन्यर्थे प्रार्थनानुपत्तेः । तथाचानेन जीववन्मरणाभावरूपवैलक्षण्य प्रतिपादनाद् अस्य जीवभेदपरत्वम् । तथाच योऽसावित्यस्यैतद्विरोध इत्यर्थः । उपलक्षणमेतत् । हिरण्मयेनेत्यावरणापगमप्रार्थनानुपपत्तिश्च । तथाच सन्दंशन्यायेन योऽसावित्यस्य भेदपरत्वमेव । यदिच सामानाधिकरण्यबलेनैक्य परत्वं तर्हि शरीरादिनाप्यैक्यप्रसङ्गः । न च तद्युक्तमित्याह नहीति । शरीरत्वाज्जीवस्यापि नाशप्रसङ्ग इति भावः । इष्टापत्तौ चोत्तरवाक्य विरोध इत्याह अग्ने नयेति । अत्र जीवस्य भगवत्प्राप्तिरूप मोक्षप्रतिपादनादिति भावः । यद्वा चशब्दस्वारस्यात् योसवित्यस्यैक्यपरत्वे विरोधान्तरमनेनोच्यते अग्ने नयेत्यस्य भगवत्प्राप्तिपरतया भेदपरत्वादिति । ननु तथाप्यैतरेये तद्योहमित्यनेन जीवब्रह्मैक्य प्रतिपादनमस्तु । तस्य तत्परत्वे उत्तरविरोधाभावादित्यत आह तद्योऽहमिति । अत्र मन्त्रे मित्रादीनां चक्षुरित्यनेन प्रकाशकत्वोत्त्याभेदप्रतीतिः । न च सूर्य आत्मा जगतस्तस्थुषश्चेत्यात्मशब्देन स्थावर जङ्गमात्मक जगत्स्वरूपत्वमुच्यत इति कथं भेद परत्वमिति वाच्यम् । आत्मशब्दस्यादानादि कर्तृत्वार्थत्वेन तस्यात्यन्तभेदपरत्वात् । स्वरूपपरत्वे षष्ठ्या औपचारिकत्वापत्तेः । ननु बृहदारण्यके अहं ब्रह्मास्मीति जीवपरमात्मनोरभेदाभिधानात् तदनुसारेण भेदवाक्यानि योजनीयानीत्यत आह ब्रह्मवा इदमिति । बृहदारण्यके च नाभेदः प्रतिपाद्यः । यतः उत्तरवाक्यविरोध इति योजना । न च तद्य इत्यत्राप्यभेद एव प्रतिपाद्यते । अतः कथं तद्विरोध इति वाच्यम् । अस्याभेदपरत्वे योयोऽबुध्यत स एव तदभवदित्यनेनैव पूर्त्या देवानामित्यादि तारतम्यकथनवैयर्थ्यापत्तेः । तथाच तद्य इति भेदपरमेव । तद्विरोधात् पूर्ववाक्यमपि भेदपरमेवेति भावः । किंचात्राहं ब्रह्मास्मीति सामानाधिकरण्यात् जीवब्रह्मणोरैक्यं प्रतिपाद्यत इति वाच्यम् । नचाहं शब्देन जीव उच्यते । किन्तु तदात्मानमेवावेदिति पूर्ववाक्ये ब्रह्मणः एव प्रकृतत्वेनाहं शब्देन ब्रह्मग्रहणादित्याह किंचेति अस्तु वाहंशब्देन जीवग्रहणं तथापि नानेन जीवपरमात्मैक्यसिद्धिः । अस्य तत्र तात्पर्याभावात् । कुत इत्यत आह य एवं वेदेति । नन्विति शब्दसद्भावेऽपि कुतो जीवब्रह्मैक्यतात्पर्याभाव इत्यत आह त्वन्मतेचेति । उभयत्र तात्पर्ये वाक्यभेदः स्यात् । अन्यथादित्यादीनामपि ब्रह्मैक्यसिध्यापत्तेः । जीवब्रह्मैक्यपरत्वाभावे ज्ञापकान्तरमाह अथेति । न चेति शब्दादि यत्र श्रूयते तस्य तत्परत्वं मास्तु । तदात्मानमेवावेदहं

(कण्टकोद्धारः)

ब्रह्मास्मीत्यस्य तत्परत्वे नकोऽपि दोष इति वाच्यम् । एतत्प्रकरणगतस्यात्रापि अन्वयात् फलवाक्य-समानार्थत्वाच्च । यद्वास्यार्थान्तरसम्भवान्नानेन जीव ब्रह्मैक्यसिद्धिरित्याह यद्वेति । अन्यथेति । ब्रह्मशब्दस्य बृंहणाद्यर्थत्वानङ्गीकार इत्यर्थः । सिद्धत्वात् । प्रश्नोत्तरवाक्यपर्यालोचनयेति भावः । ब्रह्मास्मीति व्यर्थमिति । नन्वनेनात्मनमिति जीवचैतन्यमनूद्य तस्य ब्रह्मचैतन्याभेद बोध इति न वैयर्थ्यमिति वाच्यम् । तथापि आत्मा ब्रह्मेति वा अहमिति वा एकवाक्येनैव पूर्त्या ब्रह्मास्मीत्यस्य वैयर्थ्यापरिहारात् । एतेनेति । श्रुति-व्याख्यानेनेत्यर्थः । सावकाशान्येतानि वाक्यानि निरवकाशभेदवाक्यबलात् अन्यथा योजनीयानीति भावः । ननु भेदवाक्यानुसारेणाभेदवाक्यानि योजनीयानीति कथमुच्यते? अथयोऽन्यामिति वाक्ये भेदज्ञानिनो निन्दितत्वेन भेदवाक्यानां तत्परत्वाभावात् इत्यत आह अथयोऽन्यामिति । न चान्तर्यामिणोऽप्रकृतत्वात् कथं तद्भेदज्ञानिन इति वाच्यम् । अहं ब्रह्मास्मीत्यादावहं शब्देनान्तर्यामिणः प्रकृतत्वात् । अन्यथेति । जीवपरभेदज्ञानिनिन्दापरत्वाङ्गीकारे इत्यर्थः । न च तात्पर्यबलादेव लक्षणासिद्धिरिति वाच्यम् । तात्पर्य-स्याद्यप्यसिध्याऽन्योन्याश्रयात् । अन्यथेति । उक्तयोजनानङ्गीकार इत्यर्थः । नह्यहमर्थस्य विशेष्यत्वे अह-मर्थोपासना स्यात् । तथाच देवतामुपास्त इत्यनन्वितमेव स्यादिति भावः । यस्येति । इदं त्वानन्तर्य-मचोदनेत्येतद्विवरण एव विवृतम् । न च सन्निहितान्वयेऽपि योग्यतास्तीति वाच्यम् । देवतामुपास्त इत्यस्यान्वयाभावेनायोग्यताया उक्तत्वात् । अथवेति । न च स्वातन्त्र्योपस्थापक पदाभावात् स्वातन्त्र्य-निषेधोऽयुक्त इति वाच्यम् । स्वातन्त्र्यस्यैव मुख्यत्वेन मुख्यामुख्ययोरिति न्यायेन स्वतन्त्रस्यैव शब्दात् प्रतीतेः । यद्वान्यशब्देन स्वातन्त्र्यं प्रतिपाद्यते । लोके सोऽन्यः अहमन्य इत्युक्ते स्वातन्त्र्य प्रतीतेरिति भावः । केचित्त्विति । न च पूर्ववाक्ये तद्य इत्यत्र न स वेदेति निन्दावाक्ये च वेदनस्यैवोक्तत्वेन तन्मध्य-पतितस्योपास्त इत्यस्यापि वेदनपरत्वस्यैव युक्तत्वादिति वाच्यम् । उपास्त इत्यस्य विशेषत्वेन तदनुसारेण सामान्यस्य योजनीयत्वात् । विशेषस्य निरवकाशत्वात् । उपास्त इत्यस्य ज्ञानविजातीय वृत्त्यन्तरत्वम-प्रामाणिकमिति सूचनाय केचिदित्युक्तम् । ननु मुण्डके स यो हवैतत्परमं ब्रह्मवेद ब्रह्मैव भवतीत्यत्र जीवस्य ब्रह्मभाव उच्यते । न चेयं श्रुतिरन्यथाव्याख्यानमर्हति । अब्रह्मत्वव्यावर्तकैवकारबलेन निरवकाशत्वादित्यत आह स य इति । ननु न ब्रह्मशब्दस्य जीवे शक्तिः । तज्ज्ञापकाभिधानादेरभावात् । नापि लक्षणा । मुख्यार्थे सम्भवति लाक्षणिक ग्रहणानुपपत्तेरित्यत आह बृहजातीति । तथाचाभिधानादि सद्भावात् शक्ति-रेवेति भावः । द्वितीय ब्रह्मशब्दस्य जीवपरत्वे ज्ञापकमाह अत एवेति । नन्विदं वाक्यं ब्रह्मज्ञानफलपरम् । तत्र ब्रह्मभावो नाम जीवभाव इति व्याख्यायते चेत् तस्य प्रागपि सिद्धत्वात् ब्रह्मज्ञानफलता न स्यादिति चेन्न । अत्र हि अवधारणबलेन जीव एव भवति, न तु जीवत्वं जहातीत्यर्थः । जीवत्वं च प्राणधारक-त्वम् । तथा च प्राणवियोगलक्षण मरणाभाव रूप मुक्तिप्रतिपादकत्वेन फलपरत्वोपपत्तेः । सततमरणा-भावस्यैव मुक्तित्वात् । यद्वेति । न च सोयं गकार इत्यादाविव नात्र जात्यभेदग्रहणं युक्तम् । दृष्टान्ते तु जात्यभेदो बाधकाद् गृहीतः । न चात्र मुख्याभेदे बाधकमस्ति । येन जात्यभेदग्रहणं स्यादिति वाच्यम् । प्रकृतेऽपि श्रुत्यादेर्बाधकस्य सत्वात् । बाधकान्तरं चाह ब्रह्मत्वमिति । अस्य महिमानमिति । न च प्रपञ्चम्

(कण्टकोद्धारः)

अस्य महिमानं विभूतिरूपं वेदेत्यर्थपरत्वमस्य वाक्यस्येति वाच्यम् । अध्याहारदोषप्रसङ्गात् महिमशब्दस्य महत्वपरत्वस्य सुप्रसिद्धत्वेन प्रमाणविरुद्ध विभूतिपरत्वानुपपत्तेश्च । अन्यथेति । न च तद्वाक्यं विलयमात्रपरं, न भेदपरमिति वाच्यम् । भेदपरत्वस्य सुदृढं प्रतीतेः । न च परात्परमिति सगुणोपासनफलमिति वाच्यम् । परात्परमिति विशेषणात् । सगुणोपास्त्या च परात्परप्राप्त्यनुपपत्तेः । ननु ब्रह्मभावस्य नित्यत्वेऽप्यारोपिताब्रह्मत्वनिवृत्तेः साध्यत्वसम्भवात् तथोक्तिः । यथा कण्ठमाणौ विद्यमानेऽप्यज्ञानविपरीतज्ञाननिवृत्त्या प्राप्तकण्ठमणिरित्युक्तिरित्यत आह आरोपितनिवृत्तेरिति । अशाब्दत्वात् । ब्रह्मभावशब्दाप्रतिपाद्यत्वात् । न च श्रुतार्थापत्ति लभ्यत्वादारोपनिवृत्तेः शाब्दत्वमिति वाच्यम् । यश्चार्थादर्थो न स चोदनार्थ इति न्यायात् । ब्रह्मभावस्य प्रकारान्तरेण व्याख्यातत्वेन श्रुतार्थापत्तेरभावाच्च । अज्ञातविपरीतज्ञातकण्ठमणिस्थलेऽपि ज्ञातकण्ठमणिरित्येवोच्यते, न प्राप्तकण्ठमणिरिति दृष्टान्तोऽप्यसङ्गत एवेति भावः । वाक्यान्तरेऽप्ययमेव न्यायो द्रष्टव्य इत्याह ब्रह्मैवेति । न च काल्पनिक भेदमादाय कर्तृकर्मभावोपपत्तिरिति वाच्यम् । भेदस्य काल्पनिकत्वासिध्याऽन्योन्याश्रयात् । एक्यनिर्देश एव काल्पनिकैक्यमादायेति वक्तुं शक्यत्वाच्च । ननु तथापि परेऽव्यये सर्व एकीभवन्तीति ऐक्यप्रमाणस्य विद्यमानत्वात् अस्य च पूर्ववद् व्याख्यानायोगात् एतदनुसारेण भेदवाक्यानियोजनीयानीत्यत आह कर्माणीति । ननु मुख्ये बाधक एव गौणार्थस्य स्वीकरणात् प्रकृते च बाधकाभावात् कथं स्थानैक्याद्यर्थत्वमिति चेन्न । श्रुत्यादेर्बाधकस्योक्तत्वात् । बाधकान्तरं चाह अविरोधश्चेति । ननु स्थानैक्यादिनिमित्तैक्यव्यपदेशस्य काप्यदर्शनात् कथं तन्निमित्तैक्य व्यपदेशो व्याख्यायत इत्यत आह अङ्गीति । त्वत्पक्ष इति । न च ज्ञानाभावमात्रेण च्वि प्रत्ययोपपत्तिरिति वाच्यम् । श्रुतैक्यस्यैवातद्भावसम्भवेऽश्रुतज्ञानातद्भावकल्पनाऽयोगात् । तथेति । न चेदं वाक्यमात्मैक्यमात्रपरमिति अर्थद्वय कल्पना नास्तीति वाच्यम् । ऐक्यमात्रपरत्वज्ञापकाभावात् । अनेकपदमुख्यार्थत्याग प्रसङ्गाच्च । तथा पर इति । न च सप्तम्यविवक्षितेति वाच्यम् । अविवक्षा कारणाभावात् । नचैक्यश्रुत्यन्तरानुसारेण सप्तमी नेयेति वाच्यम् । ऐक्यश्रुतीनां सर्वासां भेदपरत्वस्योक्तत्वात् । तथा निरञ्जन इति । न चेदं सगुणोपास्तिफलमिति वाच्यम् । पुण्यपापविधूननस्य निरञ्जनत्वस्य मोक्षं विनानुपपत्तेः । ननु तथाप्यन्तर्याम्यक्षरप्रकरणस्थवाक्याभ्यामैक्यं प्रतिपाद्यते । तत्रान्तर्याम्यक्षरातिरिक्त द्रष्टन्तरनिषेधादित्यत आह नापीति । न चानेनैतत्सर्वं वेदेति प्रतिज्ञातस्यैकविज्ञानेन सर्वविज्ञानस्योपपादनार्थमस्य प्रवृत्तत्वेनात्र जीवाभेद एव तात्पर्यम् । न तु सदृशद्वितीयाभाव इति वाच्यम् । एकविज्ञानेन सर्वविज्ञानस्य प्राधान्यादिनोपपादनात् । प्राधान्योपपादनार्थं सदृशद्वितीयनिषेधोपपत्तेः । न च ततोऽन्यदार्तम् नेति नेतीत्यादावचेतननिषेधः क्रियते । अतस्तद्विरोध इति वाच्यम् । एकत्र जीवचैतन्यस्य दुःखित्वस्य परत्र ब्रह्मणः सर्ववैलक्षण्यस्य चोक्तत्वेनाचेतननिषेधाभावात् । ननु चान्यशब्दस्य सदृशान्यवाचकत्वं न दृष्टमित्यत आह उक्तं हीति ।

सप्तमाध्याये प्रथमपादे द्वितीयाधिकरणे चिन्तितम् । समाने पूर्ववत्त्वात् उत्पन्नाधिकारः स्यात् । इषावेकाहे श्रूयते समानमितरच्छ्येनेनेति । तत्र संशयः । किमयमनुवाद उतश्येनवैशेषिकाणामतिदेशविधिरिति । पूर्वपक्षस्तु इतरशब्दस्य सन्निहितवाचकत्वात् श्येन वैशेषिकाणां चासन्निहितत्वात् न तद्वाचकः । किन्तु

(कण्टकोद्धारः)

चोदक प्राप्तास्तु ज्योतिष्टोमधर्माः । ते श्येनेऽपि विद्यन्ते इति तत्सादृश्यमिषोरासादयन्तीति तदपेक्षोऽय-मनुवाद इति । सिद्धान्तस्तु सत्यमितरशब्दः सन्निहितमभिधत्ते । न तु तन्मात्रम् । किन्तु पूर्वनिर्दिष्टसदृशं सन्निहितं च यद्द्वयं तदभिधत्ते । तदिह यत् सन्निहितं ज्यौतिष्टोमिकं न तत् पूर्वोक्तसदृशम् । न प्राकृतानि सप्ताहादीनां पूर्वमुक्तत्वात् । यत्त्वप्राकृतं लोहितोष्णीषादिकं श्येनवैशेषिकं तद् यद्यप्यसन्निहितम् । तथापि सादृश्यमस्तीति अवश्यहातव्येऽन्यतरस्मिन् वचनार्थवत्वाय सन्निधिं हित्वा सादृश्यपरिग्रहेण श्येनवैशेषि-काणामतिदेशेन विधिरिति । अन्यथेति । सदृश द्रष्टन्तरनिषेधानङ्गीकारे इत्यर्थः । न च पूर्ववाक्यमौ-पाधिकभेदपरमिति वाच्यम् । स्वाभाविक भेदपरत्वे बाधकाभावात् । अन्यथाऽभेदवाक्यमेवौपाधिका-भेदपरमिति स्यात् । ननूत्तरवाक्यमपि न चेतनस्यार्तिविधायकम् । किन्तु एषोऽन्तर्यामी ते आत्मेति जीवस्वरूपातिरिक्तस्य नश्वरत्वं मिथ्यात्वं वा बोधयतीति न विरोधशङ्केति चेन्न । आर्तशब्दस्य मिथ्यात्वादा-वशक्तेः अन्तर्यामिण एव पृष्टत्वेन तस्यैवात्मशब्दवाच्यत्वमुच्यत इति नानेनान्तर्यामिणो जीवैक्यमुच्यत इति तद्विरोधोऽपरिहार्य एवेति भावः । विरोध प्रकारं दर्शयति तत्रेति । एवमक्षरवाक्येऽपि पूर्वोत्तरवाक्यविरोध उपपादनीयः । ननु द्वितीयाद्वै भयं भवतीति द्वितीयमात्रस्य भयहेतुत्वेन निषेधादत्रापि द्वितीयमात्रनिषेधो युक्त इत्यत आह द्वितीयाद्वै भयमिति । ननु सामान्यशब्दस्य सामान्यपरत्वे बाधकसद्भाव एव विशेषपर-त्वम्। न च प्रकृते तदस्तीत्यत आह लोक इति । सन्दंश न्यायेनापि अस्य समानद्वितीयनिषेध परत्वमित्याह पूर्वत्रचेति । ननु पूर्ववाक्ये इष्टसंयोगजन्यरतेरेकाकिनोऽसम्भवात् एकाकिनो रतिर्नास्तीत्यु-क्तम्। तथाच तदज्ञविषयम्। एवं सति तदनुसारेण कथं तत्वज्ञविषयं वाक्यमन्यथा व्याख्यायत इति चेन्न। तन्न्यायेनास्यापि तत्वज्ञविषयत्वाभावात्। अथ यथा तत्वविषयता अस्य वाक्यस्य तथा पूर्ववाक्यस्यापि वक्तुं शक्यत्वात् । ननु उदरमन्तरं कुरुत इत्यत्र भेदज्ञानस्यानर्थहेतुत्वोक्तेर्न भेदवाक्यानां भेदपरत्वमित्यत आह यदाह्येवेति । पदिन्यायेनोपस्थितस्यैव प्रतियोगित्वसम्भवेऽनुपस्थितप्रतियोगिकल्पना न युक्तेति भावः । न चाल्पार्थकारशब्दास्वारस्यमिति वाच्यम् । भेदसहिताभेद निवारकतया स्वारस्योपपत्तेः । उक्तन्याय-मन्यत्राप्यतिदिशति एवमिति । भूतशब्दस्येति । न च दृष्टान्तासम्प्रतिपत्तिः जीवानां जायमानत्वाद्ययोगादिति वाच्यम् । शरीरादिसम्बन्धेन जायमानत्वादिसम्भवात् । अभिसंविशन्तीतयुक्त मोक्षान्वयार्थं भूतशब्देन चेतनस्यैव ग्राह्यत्वाच्च । ननु विभेदजनकज्ञान इत्यादिस्मृतिषु भेदस्य सावधिकत्वासत्त्वादेरुक्तत्वात् भेदो न तात्विकोऽभेद एव तात्विक इत्यत आह यावदिति । न च भेदशब्दस्य वैमत्यार्थत्वे मुख्यार्थत्यागः । अन्योन्याभावस्यैव मुख्यार्थत्वादिति वाच्यम् । वैमत्ये बहुल प्रयोगेण रूढलक्षणात्वात् । मुख्यार्थ-भेदनित्यत्वादिवाक्यविरोधात् । वैमत्यार्थत्वं स्मृत्यादिसिद्धमित्याह जीवस्येति । ननु तथाच जीवब्रह्मभेदे तद्विरोध इत्यत आह क्षेत्रज्ञं चापीति । ननु क्षेत्रज्ञमिति सर्वज्ञमिति व्याख्यातं, तन्न युक्तम् । क्षेत्रशब्दस्य चेतनाचेतनात्मक जगत्परत्वे प्रमाणाभावादित्यत आह तत्रैवेति । न च सर्वनियामकतया सर्वक्षेत्रसम्बन्धस्य प्रागेव सिद्धत्वात् पुनस्तदभिधाने पौनरुक्त्यमिति वाच्यम् । क्षेत्रशब्दस्य व्याख्यानार्थं पूर्वसिद्धस्याप्यनु-वादसम्भवात् । यद्वा सर्वनियामकतया सिध्यन् सर्वसम्बन्धो राजादिवन्न । किन्तु तत्र तत्र स्थित्वा

(कण्टकोद्धारः)

**तन्नियामकत्वमिति दर्शयितुमस्य प्रवृत्तिरिति न पौनरुक्त्यम् । मोक्षधर्मे ईश्वरस्यैव क्षेत्रज्ञत्वोक्ते जीवस्य तदभावोक्तेश्च क्षेत्रज्ञशब्देनेश्वर एव ग्राह्य इत्याह मोक्षधर्मे चेति । शास्त्रस्थावेति न्यायश्च पूर्वमेव विवृतो द्रष्टव्यः । उक्तन्यायमन्यत्राप्यतिदिशति एवमिति । इति अहंब्रह्मास्मीत्यादि श्रुत्यर्थः ।**

न्यायामृतप्रकाशः

किञ्चात्रवाक्य इति ॥ बृहदारण्यकवाक्य इत्यर्थः ॥ यस्य येनेति ॥ यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः । ग्राह्य इति वचनादित्यर्थः ॥ इति श्रवणादिति ॥ उपास्त इति पुम्प्रयत्नसाध्यत्वश्रवणात् ज्ञानस्य चातथात्वात् उपासनाया एव तथात्वादिति भावः ॥ सर्वक्षेत्रेष्वपि विद्धीति ॥ सर्वत्र मम सत्वाच्चेतनाचेतनात्मकेषु प्रतिमात्वेन मच्छरीरभूतेषु स्थितं विद्धीत्यर्थः । चेतनाचेतनात्मकस्य प्रपञ्चस्य क्षेत्रत्वं कुत इत्यत आह ॥ तत्रैवेति ॥ गीतायामेवेत्यर्थः । तथापि तस्य शरीरत्वं कुत इत्यत उक्तम् ॥ यस्य पृथिवीति ॥ तानि वेत्तीति ॥ यत इति शेषः । यतो वेत्ति ततः स योगात्मा ज्ञानरूपो भगवान् क्षेत्रज्ञ उच्यत इत्यर्थः ॥ रूढार्थेति ॥ क्षेत्रज्ञ आत्मा पुरुष इत्यभिधानेन क्षेत्रज्ञशब्दस्य जीवे रूढत्वादित्यर्थः । योगरूढ्योश्च रूढेरेवप्रबलत्वादित्यर्थः । जीवेपि न रूढः किं तु यौगिक एवेत्याह ॥ जीवेपीति ॥ ननूभयत्रापि यौगिकत्वाविशेषाज्जीवः कुतो न गृह्यत इत्यत आह ॥ शास्त्रस्थावेतिन्यायाच्चेति ॥ प्रकृते क्षेत्राणि च शरीराणीति मोक्षधर्माख्यशास्त्रेण क्षेत्रज्ञशब्दस्य ईश्वरे प्रसिद्धत्वात्स एव ग्राह्य इति भावः ॥ ॥ अहंब्रह्मास्मीति श्रुत्यर्थविवरणम् ॥

## ३०. ऐक्यानुमानभङ्गः

**नाप्यनुमानम् । जीवाः परमात्मनस्तत्त्वतो न भिद्यन्ते, आत्मत्वात्, परमात्मवदित्यत्र त्वात्मत्वस्य ज्ञातृत्वादिरूपत्वे तवाऽसिद्धेः । अवेद्यत्वादिरूपत्वे ममासिद्धेः । जातिरूपत्वे विरोधात् । अबाध्यत्वादिरूपत्वेऽनैकान्त्यात् । विस्तृतं जैतज्जडत्वभङ्गे । जीवाः परमात्मनो व्यवहारतोऽपि न भिद्यन्ते, आत्मत्त्वात्, परमात्मवदित्याद्याभाससाम्याच्च । विमता जीवाश्चैत्रात्तत्त्वतो न भिद्यन्ते, जीवत्वात्, चैत्रवत् । विमतं वस्तुतो ब्रह्मतो न भिन्नम्, वस्तुत्वाद् ब्रह्मवदित्यत्रापि चैत्रादयो व्यवहारतोऽपि न भिद्यन्ते, जीवत्वाच्चैत्रवदित्याभाससाम्यात् । विमतानि शरीराणि चैत्राधिष्ठितानि शरीरत्वाच्चैत्रशरीरवदित्यत्र चैत्राधिष्ठितत्वेऽप्यन्याधिष्ठितत्वसम्भवेनैक्यासिद्धेः । चैत्रेणैवाधिष्ठितानीत्युक्तौ त्वीश्वरस्यापि चैत्रशरीराधिष्ठातृत्वेन दृष्टान्तस्य साध्यवैकल्यात् । चैत्रस्यैव भोगायतनानीत्युक्तौ च त्वन्मते यस्य**

भोक्तृत्वं अन्तःकरणविशिष्टस्य, तस्य प्रतिशरीरं भेदः, यस्य चैक्यं शुद्धचैतन्यस्य तस्याभोक्तृत्वमितिबाधात् । विमतानि शरीराणि चैत्रमनसैव युक्तानि, शरीरत्वा-चैत्रशरीरवदित्याद्याभाससाम्याच्च । आत्मा द्रव्यत्वातिरिक्तापरजात्या नाना न भवति, विभुत्वाद्, गगनवदित्यत्र त्वन्मते गगनस्य प्रतिकल्पं भेदेन साध्य-वैकल्यात्, परिच्छिन्नत्वेन साधनवैकल्याच्च । आत्मत्वस्य परमाणुत्ववदजातित्वेन त्वात्मभेदसिद्ध्यार्थान्तरत्वाच्च ।

विमतो भेदो, मिथ्या, एकस्यां दृशि कल्पितो वा भेदत्वाद् दृश्यत्वाच्च, चन्द्र-भेदवद् । एकस्यां दृशि क्षणिकवादिकल्पितभेदवद्वेत्यत्र तूक्तरीत्या मिथ्यात्वा-निरुक्तेः । सत्यासत्यभेदानुगतभेदत्वसामान्यस्यासिद्धेश्च । चन्द्रस्य कल्पिताद् द्वितीयचन्द्राद्भेदस्य सत्यत्वेन दृष्टान्तस्य साध्यवैकल्याच्च । मुक्तेः संसाराद् ब्रह्मणोऽ-नृतादात्मनो देहाद्भेदे च व्यभिचाराच्च । अभेदो मिथ्या, अभेदत्वाद्, देहात्माभेद-वदित्याभाससाम्याच्च । दृश्यत्वादेर्निरस्तत्वाच्च । विमता भेदप्रतीतिः, भ्रान्तिः, भेद-प्रतीतित्वात्, चन्द्रभेदप्रतीतिवदित्यत्र ब्रह्मणोऽनृताद्भेदप्रतीतौ व्यभिचाराद् आभास-साम्याच्च ।

विमतं तत्त्वतः स्वान्तर्भेदहीनं महत्त्वतः ।
यदित्थं तत्तथा यद्वत्खं तथेदं ततस्तथा ॥

इत्यत्र त्वन्मते गगनस्य सावयवत्वात् संयोगित्वेन सांशत्वस्य सुसाधत्वाच्च, साध्यवैकल्यात् । संवित् स्वान्तर्गणिकस्वाभाविकभेदहीना, उपाधिभेदमन्तरेणा-विभाव्यमानभेदत्वाद्, गगनवदित्यत्र साध्यवैकल्यात् । इच्छादेरपि घटेच्छा पटेच्छे-त्युपाधिभेदेनैव विभाव्यमानभेदत्वेन व्यभिचाराच्च । विमतः अव्याप्यवृत्ति-धर्मानवच्छिन्नप्रतियोगिताको भेदः स्वसमानाधिकरणात्यन्ताभावप्रतियोगी, भेद-त्वात्, संयुक्तप्रतियोगिताकभेदवदित्यत्राव्याप्यवृत्तिशब्देन स्वसमानाधिकरणात्यन्ता-भावप्रतियोग्युक्तौ बाधात् । अवयववृत्त्युक्तौ त्ववयववृत्तिद्रव्यत्वाद्यवच्छिन्नप्रति-

**योगिकभेदस्यापक्षत्वापातात् । विमतो भेदः केवलान्वय्यत्यन्ताभावप्रतियोगी, पदार्थत्वात्, नित्यद्रव्यवदित्यत्र च स्वरूपेणात्यन्ताभावप्रतियोगित्वे साध्येऽत्यन्तासत्त्वापातात् । पारमार्थिकत्वादिधर्मावच्छेदेन तत्प्रतियोगित्वे साध्येऽर्थान्तरात् । अन्योन्याभावत्वं स्वसमानाधिकरणात्यन्ताभावप्रतियोगिवृत्ति, त्रैकालिकाभावमात्रवृत्तित्वे सत्यभावत्वसाक्षाद् व्याप्यधर्मत्वाद्, अत्यन्ताभावत्ववदित्यत्र मन्मतेऽपि शुक्तौ शुक्तिभेदस्यारोपितत्वेन सिद्धसाधनात् । त्रैकालिकस्य मिथ्यात्वायोगेन विरोधाच्च, संयोगादिवत् सत्यत्वेऽपि स्वात्यन्ताभावसामानाधिकरण्यसम्भवेनार्थान्तरत्वाच्च । तत्र विप्रतिपत्तौ च दृष्टान्तस्य साध्यवैकल्यात् । एवमन्यान्यप्यनुमानानि दूष्याणि । धर्मिग्राहकप्रत्यक्षश्रुत्यादिबाधः, पूर्वोक्तैर्भेदानुमानैः सत्प्रतिपक्षत्वम्, अप्रयोजकत्वम्, सुखदुःखाद्यनुसंधानापत्तिरूपप्रतिकूलतर्कपराहतिरित्यादयो भेदमिथ्यात्वानुमानसाधारणदोषाः । ऐक्यानुमानभङ्गः ॥**

## अद्वैतसिद्धिः

एवमनुमानमपि तत्र मानम्– जीवाः, परमात्मनस्तत्त्वतो न भिद्यन्ते, आत्मत्वात्, परमात्मवत् । ननु– आत्मत्वं जातिरत्र हेतुः तथा चाभेदे हेतूच्छित्तिरेव प्रतिकूलतर्क इति चेन्न, तत्त्वतोऽभेदेऽपि व्यावहारिकभेदेनैव व्यावहारिकजातेरनुच्छेदोपपत्तेः । ज्ञातृत्वादित्यप्यत्र हेतुः । जीवे उपधेये अन्तःकरणोपहितवृत्तेस्तस्यासिद्धेरभावात् । व्यवहारे स्वभिन्नज्ञानानपेक्षत्वं हेतुः । तवापि जीवस्य स्वाभिन्ननित्यज्ञानस्याबाध्यव्यवहारविषयत्वात् । अबाध्यत्वमप्यत्र हेतुः । न च जडे व्यभिचारः, तत्र बाध्यत्वेन हेतोरभावात्, 'तात्त्विकभेदस्य सर्वत्रासत्त्वेन व्यभिचारानवकाशात् । न च– एवं व्यावहारिकभेदव्यतिरेकोऽप्येवमेव साध्यतां जीवपरमात्मनोरिति वाच्यम्, तत्र प्रत्यक्षविरोधस्यैव बाधकत्वात्, श्रुत्यनुग्रहाच्चाभाससाम्यापादनाप्रयोजकत्वानवकाशात् । अत एव– विमता जीवाश्चैत्रात् तत्त्वतो न भिद्यन्ते, जीवत्वाच्चैत्रवदिति जीवैक्ये, विमता जीवा वस्तुतो ब्रह्मणो न भिद्यन्ते, वस्तुत्वाद्, ब्रह्मवदिति ब्रह्मजीवक्ये च यदनुमानम्, तत्र व्यवहारतोऽपि न भिद्यन्त इत्यप्येवं साध्यतामित्याभाससाम्यम् - अपास्तम् ।

(अद्वैतसिद्धिः)

एवं विमतानि शरीराणि, चैत्राधिष्ठितानि, शरीरत्वात्, संमतवत् । न च– एतावता न जीवैक्यसिद्धिः, चैत्राधिष्ठितत्वेऽपि अन्याधिष्ठितत्वसम्भवात्, चैत्रमात्राधिष्ठितत्वे तु अन्तर्याम्यधिष्ठितत्वेन दृष्टान्ते साध्यवैकल्यापत्तिरिति वाच्यम्, चैत्रमात्रसंसार्यधिष्ठितत्वस्य साध्यत्वात् । चैत्रमात्रभोगायतनानीति वा साध्यम् । न च– भोक्तृत्वमन्तःकरणविशिष्टस्य, तच्च प्रतिशरीरं भिन्नम्, यच्चैकं शुद्धचैतन्यं तन्न भोक्त्रिति बाध इति वाच्यम्, भोक्तृत्वस्य विशिष्टवृत्तित्वेऽपि विशेष्यवृत्तित्वानपायात् । न चैवं विमतानि शरीराणि चैत्रमनसैव युक्तानीत्याभाससाम्यम्, मनसोऽप्यैक्ये व्यवस्थायाः सर्वथानुपपत्तेः, श्रुत्यनुग्रहाननुग्रहाभ्यां विशेषाच्च, दृष्टिसृष्टिपक्षे तदभ्युपगमाच्च । आत्मा, द्रव्यत्वापरजात्या नाना न, विभुत्वाद्, आकाशवत् । न च– प्रतिकल्पमाकाशस्य भेदेन साध्यवैकल्यं परिच्छिन्नत्वेन साधनवैकल्यं चात्मत्वस्य परमाणुत्वादिवदजातित्वेऽपि आत्मभेदसिद्ध्या चार्थान्तरमिति– वाच्यम् । आत्मत्वाधिकरणं, द्रव्यत्वापरजात्यैककाले नाना न, समानकालीनमूर्तमात्रसंयुक्तत्वाद्, गगनवदित्यत्र तात्पर्यात् । पक्षविशेषणमहिम्ना च नार्थान्तरम् । विमतो भेदः, मिथ्या, एकस्यां दृशि कल्पितो वा, भेदत्वाद्, दृश्यत्वाद्वा, चन्द्रभेदवद्, एकस्यां दृशि कल्पितो वा, भेदत्वाद्, दृश्यत्वाद्वा, चन्द्रभेदवद्, एकस्यां दृशि क्षणिकवादिकल्पितभेदवद्वा । मिथ्यात्वं प्रागुक्तमेव । न च कल्पितसाधारणभेदत्वासिद्धिः, भेदे अकल्पितत्वस्यैवासिद्धेः । अत एव– चन्द्रस्य कल्पितद्वितीयचन्द्राद् भेदस्य सत्यत्वेन दृष्टान्ते साध्यवैकल्यम्, मुक्तेः संसाराद् ब्रह्मणो अनृताद् भेदे च व्यभिचार इति निरस्तम्, न चैवमभेदो मिथ्या अभेदत्वाद् देहात्माभेदवदित्यादि सुसाधम्, शून्यवादापत्तेरुक्तत्वात् । एवं विमता भेदधीः, मिथ्या, भेदधीत्वाच्चन्द्रभेदधीवत् । न च ब्रह्मानृतभेदप्रतीत्यादौ व्यभिचारः, तासामपि पक्षसमत्वात् । आभाससाम्यस्य तात्त्विकत्वे प्रत्येतव्यत्वानुपपत्त्यैव निरासः । अत एव ।

विमतं तात्त्विकस्वान्तर्भेदशून्यं महत्त्वतः ।
यदेवं तत्तथा यद्वत् खं तथेदं ततस्तथा ॥

इत्यत्र गगनस्य सावयत्वेन न साध्यवैकल्यम्, स्वान्तःपदेन स्वावयवातिरिक्तस्योक्तेः । एवं संवित्, स्वान्तर्गणिकस्वाभाविकभेदहीना, उपाधिमन्तरेणाविभाव्यमानभेदत्वाद्, गगनवत् । न च साध्यवैकल्यम्, नैयायिकदिशा दृष्टान्तत्वोक्तेः । न च– इच्छादेरपि घटपटाद्युपाधिभेदेन

(अद्वैतसिद्धिः)

विभाव्यमानभेदतया व्यभिचारस्तेष्विति वाच्यम्, इच्छादीनामेकान्तःकरणपरिणामत्वेन तत्रापि साध्यसत्त्वात् । विमतो अव्याप्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताको भेदः, स्वसमानाधिकरणात्यन्ताभावप्रतियोगी, भेदत्वात्, संयुक्तभेदवत् । विमतो भेदः, केवलान्वय्यत्यन्ताभावप्रतियोगी, पदार्थत्वात्, नित्यद्रव्यवत् । स्वरूपेणात्यन्ताभावप्रतियोगित्वे यथा न तुच्छत्वं पारमार्थिकत्वाकारेणात्यन्ताभावप्रतियोगित्वे ब्रह्मवत् तद्रूपतोपपत्त्या न यथार्थान्तरम्, तत् प्रागुक्तम् । अन्योऽन्याभावत्वम्, स्वसमानाधिकरणात्यन्ताभावप्रतियोगिवृत्ति, त्रैकालिकाभाववृत्तित्वे सति अभावत्वसाक्षाद्व्याप्यत्वाद्, अत्यन्ताभावत्ववदित्यनुमानं पूर्वोक्तसंयुक्तप्रतियोगिकभेदरूपदृष्टान्तसिद्ध्यर्थम् । न च शुक्तौ शुक्तिभेदस्यारोपितस्य सत्त्वेन सिद्धसाधनम्, असदन्यथाख्यातिवादिनस्तवानङ्गीकृत्वेन तस्य साध्यत्वात् । न च त्रैकालिकत्वे मिथ्यात्वायोगः, मायाचित्संबन्धस्य कालत्वेन सर्वकालस्थितेरतद्विरोधित्वात् । न चाव्याप्यवृत्तितया संयोगादिवत् समानाधिकरणात्यन्ताभावप्रतियोगित्वेनार्थान्तरम्, पक्षविशेषणमहिम्ना अव्याप्यवृत्तित्वस्यासम्भवेन तदयोगात् । अनुसन्धानाद्यव्यवस्थादिकं प्रागेव निराकृतम् । अप्रयोजकत्वाभाससाम्यसत्प्रतिपक्षोपाध्यादि पूर्वोक्तप्रपञ्चमिथ्यात्वानुमानवन्निराकरणीयम् । एवमात्मत्वमेकत्वव्याप्यम्, आत्ममात्रवृत्तित्वात्, चैत्रत्ववदित्याद्यपि द्रष्टव्यम् । इत्यद्वैतसिद्धौ जीवब्रह्माभेदानुमानम् ।

## न्यायामृततरङ्गिणी

**।। अबाध्यत्वादीति ।। जडस्याप्यबाध्यत्वात्तत्र हेतोरनैकान्त्यमित्यर्थः ।। साध्यवैकल्यादिति ।। नन्वात्मत्वाधिकरणं द्रव्यत्वापरजात्यैककालेन नाना । समानकालीनमूर्तमात्रसंयुक्तत्वात् गगनवदित्यत्र साध्यसाधनवैकल्याभाव इति चेन्न । तथाप्यर्थान्तरानिस्तारात् ।। चन्द्रस्येति ।। ननु चन्द्रभेदादीनां पक्षसमत्वान्न दोषः । मैवम् । कल्पिताकल्पितयोर्मुक्तिसंसारादीनां भेदस्यावश्यमङ्गीकार्यत्वात् । नच स व्यावहारिकः । अन्योन्याश्रयात् । स्वतःप्रामाण्यप्रमाणसिद्धस्य तात्त्विकत्वाच्च ।। त्वन्मतेपीति ।। नच स्वान्तःपदेन स्वावयवातिरिक्तमुच्यत इति वाच्यम् । स्वावयवभेदवत्तदतिरिक्तभेदसत्त्वेपि हेतूपपत्त्याऽप्रयोजकत्वात् ।। इच्छादेरपीति ।। नचेच्छादीनामेकान्तःकरणपरिणामत्वेन तत्रापि साध्यमस्तीति वाच्यम् ।। इच्छादीनामभेदे इच्छाद्वेषसुखदुःखादीनां साङ्कर्यप्रसङ्गात् ।। अव्याप्यवृत्तिधर्मेति ।। भेदप्रतियोगितावच्छेदका-**

(तरङ्गिणी)

त्यन्ताभावस्य भेदरूपतयाऽव्याप्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताको भेद इत्यनेन भेदसमानाधिकरण धर्मानवच्छिन्नप्रतियोगिताको भेद इत्युक्तं भवति । एतस्यापि भेदः भेदप्रतियोगितावच्छेदकेन समानाधिकरणो न भवतीति फलितोऽर्थः । तथाच प्रतियोगितावच्छेदकासमानाधिकरणो भेदः स्वसमानाधिकरणात्यन्ताभावप्रतियोगीत्यनेन प्रतियोगितावच्छेदकसामानाधिकरण्ये साध्यमाने बाध इत्यर्थः ॥ स्वसमानाधिकरणात्यन्ताभावप्रतियोगिवृत्तीति ॥ संयोगात्यन्ताभावमादायात्यन्ताभावत्वे साध्यमस्ति ॥ त्रैकालिकेति ॥ प्रागभावत्वादावव्यभिचाराय सत्यन्तम् । रूपात्यन्ताभावत्वादाव्यभिचारायाभावत्वेत्यादि ॥ मन्मतेपीति ॥ ननु शुक्तौ शुक्तिभेदस्यासत्त्वान्न तस्मिन्नन्योन्याभावत्वमतः कथं तदादाय सिद्धसाधनमितिवाच्यम् । अन्योन्याभाव इति शब्दजन्यज्ञानविषयत्वादिरूपस्यान्योन्याभावत्वस्यारोपितान्योन्याभावेपि सत्त्वात् । संयुक्तान्योन्याभावमादाय सिद्धसाधनाच्च ॥ त्रैकालिकस्येति ॥ ननु मायाचित्सम्बन्धस्य कालत्वेन सर्वकालस्थितेर्न मिथ्यात्वविरोधित्वम् । मैवम् । अस्तु यः कोपि कालः तथापि तस्य नित्यत्वात्तत्सम्बन्धिनो मिथ्यात्वस्य विरुद्धत्वात् ॥ संयोगादिवदिति ॥ संयुक्तोन्योन्याभाववद्घटाद्यन्योन्याभावानामप्यव्याप्यवृत्तित्वमेव सिध्यति नतु तेषांमिथ्यात्वमित्यर्थः ॥ ॥ ऐक्यानुमानभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

नन्वद्वैतश्रुतीनां युक्त्यनुगृहीतत्वेन प्रबलत्वात् तदनुसारेणैव भेदवाक्यानि योजनीयानीत्यत आह नापीति । अत्र जीवशब्देन संसाराधिकरणं चैतन्यं, परमात्मशब्देन तदनधिकरणं चैतन्यं विवक्षितमिति न बाधद्रिप्रसङ्ग इति ध्येयम् । ज्ञातृत्वादि रूपत्व इति । न च जीवे उपधेये अन्तःकरणोपहितवृत्तेर्ज्ञातृत्वस्य सत्वान्नासिद्धिरिति वाच्यम् । उपहितस्य विशिष्टत्वे तस्य ब्रह्मैक्यासंमतेः, चैतन्यमात्रत्वे तु विशिष्टवृत्तिधर्मस्य विशेष्यमात्रेऽभावादसिद्धिरिति भावः । असिद्धेरित्युपलक्षणम् । अनुमानवैयर्थ्यापत्तेश्चेत्यपि द्रष्टव्यम् । जातिरूपत्वइति । व्यक्त्यनेकत्व एव जातेरभ्युपगमादिति भावः । न च व्यावहारिकभेदमादाय जात्युपपत्तिरिति वाच्यम् । ऐक्यसिद्धेः पूर्वं व्यावहारिकभेदासिद्धेः । अन्यथाकाशत्वादेरपि जातित्वापत्तेः । अबाध्यत्वादीति । आदिपदेन स्वभिन्नज्ञानानपेक्षत्वादिसङ्ग्रहः । ननु कथं व्यभिचारदानम्? मया चैतन्यातिरिक्ते बाध्यत्वानङ्गीकारात् । तात्विकभेदाभावस्य सर्वत्र सम्भवेन व्यभिचार सम्भवाच्चेति चेन्न । अन्यतरानैकान्त्यापरिहारात् । प्रपञ्चे बाध्यत्वाभावस्याद्याप्यनिर्णीतत्वेन सन्दिग्धानैकान्त्यापरिहाराच्च । आदिशब्दोपात्तस्य पक्षेऽसिद्धत्वाच्च । ननु ब्रह्मणः स्वप्रकाशत्वात् आदिपदोपात्तं सिद्धमेवेत्यत आह विस्तृतं चैतदिति । जीवा इति । न च श्रुत्यनुकूलत्वाननुकूलत्वाभ्यां वैषम्यात् कथमाभाससाम्यमिति वाच्यम् ।

(कण्टकोद्धारः)

अद्वैतश्रुतीनामन्यथा व्याख्यानात् । न चाभासानुमाने प्रत्यक्षविरोधः । त्वदनुमानेपि प्रत्यक्षविरोधस्य वक्तुं शक्यत्वेन साम्यात् । विमता इति । अत्राद्यानुमानं जीवैक्ये, द्वितीयं तु ब्रह्मैक्य इति द्रष्टव्यम् । विमतानीति । अत्र चैत्राधिष्ठानत्वमात्रं वा साध्यते, चैत्रमात्राधिष्ठितत्वं वा, चैत्रस्यैव भोगायतनत्वं वा? नाद्य इत्याह चैत्राधिष्ठितत्वेऽपीति । न द्वितीय इत्याह चैत्रेणैवेति । न तृतीय इत्याह चैत्रस्यैवेति । न च विशिष्टनिष्ठत्वेऽपि विशेष्यवृत्तित्वं नापैतीति वाच्यम् । विशेष्यस्य निष्क्रियत्वेन भोक्तृत्वस्य बाधात् । न च संसारिचैत्रमात्राधिष्ठितत्वं साध्यम् । ब्रह्मग्रहादेरप्यधिष्ठानसम्भवेन बाधानिस्तारात् । विमतानीति । न च मनस ऐक्ये व्यवस्थानुपपत्तिरूपप्रतिकूलतर्कपराहतमिति वाच्यम् । जीवब्रह्मैक्ये जीवानां परस्पर मैक्येऽपि तदनुपपत्तेरुक्तत्वात् । न च श्रुत्यनुग्रहाभ्यां विशेषात् दृष्टिसृष्टिपक्षे तदभ्युपगमाच्च नाभाससाम्यमिति वाच्यम् श्रुतीनामन्यथा व्याख्याततत्वेन तदनुग्रहाभावात् । दृष्टिसृष्टिपक्षस्य प्रागेव दूषितत्वाच्च । आत्मेति । ननु आत्मत्वाधिकरणं द्रव्यत्वापरजात्यैककाले नाना नसमानकालीन मूर्तमात्रसंयुक्तत्वात् गगनवदित्यत्र तात्पर्यान्न कश्चिद्दोष इति चेन्न । आत्मत्वस्य ज्ञातृत्वादिरूपस्य पूर्वोक्तयुक्त्याऽसम्भवेन पक्षासिद्धेः । आकाशभेदवादिनाकाशत्वजातेरङ्गीकृतत्वेन तत्र साध्यवैकल्यापरिहारात् । आत्मत्वस्य परमाणुत्ववदौपाधिकत्वेऽप्यात्मसिध्यार्थान्तराच्च । असङ्गस्यात्मनो मूर्तमात्रसंयुक्तत्वाभावे नाऽसिद्धेश्चेत्यलमति पिष्ट पेषणेनेति । विमत इति । भेदस्य मिथ्यात्वे च जीवब्रह्मणोरैक्यसिद्धिः । परस्परविरोधेऽन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् । अतो नार्थान्तरादीति भावः । उक्तरीत्येति । इदं तु वक्ष्यमाण दूषणमात्रे सम्बध्यते । उपपादनं च मिथ्यात्वभङ्गादौ द्रष्टव्यम् । अभेद इति । न चाभेदमिथ्यात्वे शून्यत्वापत्तिः । भेदमिथ्यात्वे जगतः शून्याद् भेदा भावेन तदावश्यकत्वात् अभेदमिथ्यात्वे च शून्यात् भेदेन तदभावात् । दृश्यत्वादेरिति । दृश्यत्वभङ्गादाविति शेषः । आभाससाम्याच्चेति । न च प्रत्येतव्यत्वानुपपत्तिः । सत्यत्वेऽपि दृश्यत्वादेरुपपादितत्वात् । विमतमिति । व्यावहारिकभेदस्य स्वेनाङ्गीकृतत्वाद् बाधवारणाय तात्विकेति विशेषणम् । गगनस्येति । न च तार्किकमतानुसारेणायं दृष्टान्त इति वाच्यम् । तत्ववादिनं प्रति साध्यवैकल्यापरिहारात् । ननु तत्ववादिनं प्रत्यव्याकृताकाशमेव दृष्टान्त इत्यत आह संयोगित्वेनेति । नचांशांशिनोरभेदस्य विशेषबलेनांशांशिभावस्य च त्वया स्वीकारात् अन्योन्याभावलक्षणभेदाभावात् कथं दृष्टान्ते साध्यवैकल्याभिधानमिति वाच्यम् । अव्याकृताकाशस्य परासंमतेर्भूताकाशस्यैव दृष्टान्तत्वेन तदभिधानादिति । इच्छादेरपीति । न चैकान्तःकरणपरिणामादिच्छादेरपि स्वाभाविकभेदासिद्धिः । अन्तःकरणानामनेकत्वेन तत्परिणामानां भेदस्यावश्यकत्वात् । एकमृत्पिण्डपरिणामानामपि घटशरावोदञ्चनानां स्वाभाविकभेददर्शनाच्च । विमत इति । अत्र विमत इत्यस्यैव विवरणमव्याप्यवृत्तीति । इदं तु संयुक्तान्योन्याभावस्यापि पक्षत्वे तत्र सिद्धसाधनतावारणाय । इदमन्योन्याभावस्य व्याप्यवृत्तित्वपक्षे । यदा तु संयोगात्यन्ताभावेनैव संयोगीनेत्यादि प्रतीत्युपपत्तिः तदा विशेषणानर्थक्यं दृष्टान्तासम्भवश्चेति द्रष्टव्यम् । अपक्षत्वापातादिति । तथाचार्थान्तरसन्दिग्धानैकान्त्यादीति भावः । न च व्याप्यवृत्तिधर्मानवच्छिन्नपदेन स्वसमानाधिकरणात्यन्ताभाव प्रतियोगिधर्मावच्छिन्नत्वाभावो विवक्षितः । अतो नोक्तदोष

(कण्टकोद्धारः)

**इति वाच्यम् । स्वस्वात्यन्ताभावयोरेकत्र प्रतीत्यसम्भवात् अव्याप्यवृत्तिधर्मावच्छेदेन स्वसमानाधिकरणत्वं वाच्यम् । तथाच स दोषस्तदवस्थ एवेति भावः । स्वरूपेणेत्यादि । इदं सर्वं मिथ्यात्वानुमानभङ्ग एवोपपादितमिति नेह तन्यते । अन्योन्याभावत्वमिति । इदमनुमानं पूर्वोक्त संयुक्तप्रतियोगिक भेदरूप दृष्टान्तसिध्यर्थम् । अतो नार्थान्तरमिति भावः । तत्प्रागभावत्वे व्यभिचारवारणाय हेतौ साक्षादिति । प्रागभावत्वे तद्वारणाय त्रैकालिकेति । मन्मतेऽपीति । नचान्यथाख्यातिवादिभिस्तदनङ्गीकारादेतत् साध्यमिति वाच्यम् । व्यधिकरणत्वात् । मया मन्मते सिद्धसाधनतेत्युक्तेऽन्यं प्रतिनेत्यस्यानुत्तरत्वात् । तन्मतेपि शुक्तिभेदस्यान्यत्र सत्वेऽपि शुक्तिनिष्ठात्यन्ताभावप्रतियोगित्वेनोक्तसाध्यसिद्धेः सिद्धसाधनताऽपरिहारात् । त्रैकालिकस्येति । न च चित्सम्बन्धस्यैव कालत्वेन सर्वकालस्थितेस्तद्विरोध इति वाच्यम् । एवमपि सर्वदा चित्सम्बन्धस्य मिथ्यात्वायोगात् । चित्सम्बन्धस्य कालत्वासम्भवाच्च । तथाभियुक्तव्यवहाराभावात् । अन्यथा प्रागभावादेरपि त्रैकालिकत्वापातात् । संयोगादिवदिति । न च पक्षविशेषणमहिम्नार्थान्तरनिरासः । तस्य प्रागेव निरस्तत्वात् । तत्रेति संयोगादावित्यर्थः । उक्तन्यायमन्यत्रातिदिशति एवमिति । भेदमिथ्यात्वसर्वानुमानसाधारणदोषानाह धर्मिग्राहकेत्यादि । इदं सर्वं पूर्वमेवोपपादितमिति । इति ऐक्यानुमान भङ्गः ।**

## न्यायामृतप्रकाशः

जातिरूपत्वे विरोधादिति ॥ आत्मत्वस्य जातिरूपत्वे तस्याश्रयीभूततात्विकात्मव्यक्तिनानात्वसापेक्षत्वेन उक्तसाध्याभावेनैव व्याप्त्या विरुद्धत्वादित्यर्थः ॥ अबाध्यत्वादिरूपत्वेऽनैकान्त्यादिति ॥ अभावद्वैतमस्तीति मते द्वितीयाभावे व्यभिचारः अबाध्यत्वरूपात्मत्वस्य तत्र सत्वेपि परमात्मनस्तत्वतो भेदस्यैव सद्भावादित्यर्थः । तद्भेदस्यातात्विकत्वे च तन्निवृत्तौ द्वितीयाभावब्रह्मणोरैक्यापत्तिः सा च न युक्ता भावाभावयोर्विरुद्धरूपयोरैक्यायोगादिति भाव इति संप्रदायः । विमतानि शरीराणि मद्भोगायतनानि च । शरीरत्वादितिभगवत्पादैर्भोगायतनत्वेनाभेदसाधकानुमानमनूदितमस्ति तदेव कुतोऽनूदितं चैत्राधिष्ठानत्वं वा चैत्रेणैवाधिष्ठितत्वं वा कस्मान्नानुवदितव्यमित्यतस्तत्र कृत्यप्रदर्शनाभिप्रायेण परिशेषमाह ॥ विमतानीत्यादिना ॥ अन्याधिष्ठितेति ॥ ग्रहवदिति शेषः ॥ ईश्वरस्यापीति ॥ अन्तर्यामित्वादिति भावः । अत्र चैत्रशब्देन विशिष्टचैतन्यं विवक्षितं शुद्धचैतन्यं वा । नाद्य इत्याह ॥ यस्येति ॥ यस्यान्तःकरणविशिष्टस्य भोक्तृत्वं अङ्गीकृतमिति शेषः ॥ भेद इति ॥ तथा च तस्य भोगायतनत्वेनैक्यसाधने वाध इत्यर्थः । न द्वितीय इत्याह ॥ यस्य चेति ॥ अभोक्तृत्वमङ्गीकृतमिति शेषः । तथा च तस्य भोगायतनत्वेनैक्यसाधनं कार्यं तथा च तत्रैक्यसम्भवेपि तस्याभोक्तृत्वेन तस्य भोगायतनानीत्युक्ते बाध इत्यर्थः ॥ इत्याद्याभासेति ॥ मनसामप्यभेदः सिध्येदिति भावः ॥ द्रव्यत्वेत्यादि ॥ स्वाभाविकभेदवान्न भवतीति यावत् ॥ परिच्छिन्नत्वेनेति ॥ गगनस्य परिच्छिन्नत्वेन विभुत्वाभावादित्यर्थः । आकाशद्वैतस्य त्वयानङ्गीकारादिति भावः । भेदत्वहेतौ चन्द्रभेदो दृष्टान्तः दृश्यत्वहेतौ तु द्वितीय इति विवेकः ॥ विमत इति ॥ विमतस्य घटपटभेदस्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वे साध्येऽव्याप्यवृत्तित्वमादायार्थान्तरता स्यान्न तु मिथ्यात्वमित्यतोऽव्याप्यवृत्तिधर्मेत्यादिपक्षविशेषणम् । तत्र प्रतियोगिताच्छेदकस्य घटत्वादेर्व्याप्यवृत्तित्वेनाव्याप्यवृत्तित्वाभावात्तद्भेदे उक्तं पक्षविशेषणमस्तीत्यर्थः । एतादृशे भेदे उक्तसाध्यं

(प्रकाशः)
पर्यवस्यत् मिथ्यात्वमादायैव पर्यवस्यतीति ध्येयम् ॥ संयुक्तेति ॥ संयुक्तवृक्षप्रतियोगिको भेदो वृक्ष एवास्ति वृक्षः संयोगवान्नेति प्रतीतेस्तार्किकैरङ्गीकारात् । तत्र भेदसमानाधिकरणो योऽत्यन्ताभावः प्रतियोगितावच्छेदकीभूतः संयोग एव अन्योन्याभावप्रतियोगिकात्यन्ताभावस्य प्रतियोगितावच्छेदकरूपत्वेन संयोगवति वृक्षे तद्वदन्योन्याभावस्यापि सत्वात् एवं च तत्प्रतियोगित्वं भेदेऽस्तीति द्रष्टव्यम् ॥ अव्याप्यवृत्तिशब्देनेति ॥ अव्याप्यधर्मानवच्छिन्नेत्यत्राव्याप्यवृत्तिशब्देनेत्यर्थः । अव्याप्यवृत्तित्वं च समानाधिकरणात्यन्ताभावप्रतियोगित्वम् । एवं च स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिघटत्वाद्यवच्छिन्नप्रतियोगिताको भेदः स्वसमानाधिकरणात्यन्ताभावप्रतियोगीति साधने बाध इत्यर्थः ॥ अवयववृत्तीति ॥ घटपटयोरन्त्यावयविवृत्तित्वेनावयवृत्तित्वाभावादवयववृत्तिधर्मानवच्छिन्नप्रतियोगिताके भेद उक्तसाध्यसाधनेन बाध इत्यर्थः ॥ द्रव्यत्वादिति ॥ एवं सति अन्त्यावयविवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्यैव मिथ्यात्वप्राप्तावपि अवयवानवयववृत्तिर्यो धर्मो द्रव्यत्वादिस्तदवच्छिन्नप्रतियोगिको भेदः गुणो द्रव्यं नेत्येवंरूपस्तस्य पक्षत्वाभावेन मिथ्यात्वालाभादित्यर्थः ॥ अन्योन्याभावत्वमित्यादि ॥ भेदत्वमित्यर्थः । स्वशब्देन भेदः तत्समानाधिकरणो योऽत्यन्ताभावो भेदात्यन्ताभावः तत्प्रतियोगी भेदः तद्वृत्तित्वमन्योन्याभावत्वेऽस्ति एवं च स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वेन मिथ्यात्वं सिध्यति । दृष्टान्तेपि स्वशब्देन संयोगात्यन्ताभावस्तत्समानाधिकरणो योऽत्यन्ताभावः संयोगात्यन्ताभावप्रतियोगिकोऽत्यन्ताभावः संयोग एव अभावाभावस्य भावत्वात् तद्वृत्तित्वमत्यन्ताभावत्वेऽस्तीत्येवमव्याप्यवृत्तिसंयोगात्यन्ताभावमादाय दृष्टान्ते साध्यं द्रष्टव्यम् । अभावे विभाजकोपाधिचतुष्टयमितिमतानुसारेणाभावत्वसाक्षाद्व्याप्यधर्मत्वादित्युक्तम् । सत्यन्ताभावे प्रागभावत्वादौ व्यभिचारः स्यात् प्रागभावध्वंसयोः प्रागुत्तरकालयोः सत्वेन तत्प्रतियोगिकात्यन्ताभावाभावे न तत्र साध्याभावात् अतः सत्यन्तं । तावत्युक्ते रूपात्यन्ताभावत्वादौ व्यभिचारः स्यात् । रूपस्य व्याप्यवृत्तित्वेन संयोगवदव्याप्यवृत्तित्वाभावाद्रूपात्यन्ताभावाभावस्य स्वशब्दोक्तरूपात्यन्ताभावसमानाधिकरणत्वाभावात् अतो विशेष्यभागः । रूपात्यन्ताभावत्वस्य चाभावत्वव्याप्याऽत्यन्ताभावत्वव्याप्यत्वेन अभावत्वसाक्षाद्व्याप्यधर्मत्वाभावान्न व्यभिचार इत्यनुमानं परिशोधनीयमिति सम्प्रदायः ॥ मन्मतेपीति ॥ एतावता अनेनानुमानेन भेदस्याध्यस्तत्वं साधितं तच्चेष्टमेव । स्वस्मिन् स्वप्रतियोगिकाभेदस्यैवावयोर्मतेसत्यत्वेन स्वस्मिन्स्वप्रतियोगिकभेदस्य मिथ्यात्वेन तमादाय साध्यपर्यवसानसम्भवात्सिद्धसाधनमर्थान्तरं । नैतावता घटपटादिभेदमिथ्यात्वसिद्धिरिति भावः ॥ विरोधादिति ॥ हेतोः साध्याभावेन सत्यत्वेन व्याप्यत्वादित्यर्थः ॥ तत्रेति ॥ संयोगस्य स्वात्यन्ताभावसामानाधिकरण्ये विप्रतिपत्तावित्यर्थः ॥ दृष्टान्तस्येति ॥ अत्यन्ताभावत्वेऽव्याप्यवृत्तिसंयोगात्यन्ताभावमादायैव साध्योपपादनं कार्यं तच्च सम्भवीत्यर्थः ॥ अनुमानानि भेदामिथ्यात्वानुमानानि । एवमित्युक्तान्साधारणदोषान् दर्शयति ॥ धर्मिग्राहकेत्यादिना ॥ ॥ ऐक्यानुमानभङ्गविवरणम् ॥

## ३१. अंशत्वेनैक्यसिद्धिभङ्गः

**न च ''अंशो ह्येष परमस्य'', ''पादोऽस्य विश्वा भूतानी''ति श्रुतौ ''ममैवांशो जीवलोके जीवभूतः सनातन'' इत्यादि स्मृतौ ''अंशो नानाव्यपदेशादि''ति**

सूत्रे चांशत्वोक्तेरैक्यम् । अयं ज्येष्ठस्यांशः, अयं तु कनिष्ठस्यांशः, चैत्रस्य चतुर्थांशबलो मैत्रः, अनर्घ्यस्यास्य रत्नस्यायं रत्नाभासः सहस्रांश इत्यादिवत् मार्गविन्यस्तचैत्रपादाकृतौ चैत्रपाद इतिवच्च भेदेनैवोपपत्तेः । त्वन्मतेऽपि ब्रह्म प्रति जीवस्यांशत्वं न तावदारम्भकत्वम्, ब्रह्मणोऽनादित्वात् । नापि खण्डत्वम्, अच्छेद्यत्वात् । नापि समुदायित्वम्, समुदायस्य समुदाय्यनन्यत्वेन व्यवहारदशायामपि संसारिजीवान्यशुद्धब्रह्माभावापातात् । नापि भिन्नाभिन्नद्रव्यत्वम्, अनङ्गीकारात् । नापि प्रदेशत्वम्, खण्डपटस्य पटं प्रतीव निष्प्रदेशं ब्रह्म प्रत्यकल्पितस्य तस्यायोगात् । नापि घटाकाशस्याकाशं प्रतीव कल्पितप्रदेशत्वम्, प्रतिबिम्बपक्षे तदयोगात् । स्वतो निरंशे औपाधिकांशायोगस्योक्तत्वाच्च । नाप्यत्यन्ताभिन्नत्वम्, तत्रांशशब्दाप्रयोगात्, पटाद्भिन्नेप्येकस्मिन् तन्तौ पटांशत्वव्यवहाराच्च । तस्मात् तत्सदृशत्वे सति ततो न्यूनत्वं जीवस्यांशत्वं न तु तदेकदेशत्वम् ।

अभिन्नांशास्तु मत्स्याद्यास्तेजसः कालवह्निवत् ।
जीवा भिन्नांशकास्तत्र तेजसः प्रतिबिम्बवत् ॥ इति स्मृतेः ।

किं च त्वन्मते जीवस्यांशत्वं किं शुद्धचैतन्यं प्रति ? ईश्वरं प्रति वा ? नाद्यः, पादोऽस्य विश्वा भूतानि इति श्रुताविदंशब्देन सहस्रशीर्षत्वादिविशिष्टप्रकृतेश्वरस्य ''ममैवांश'' इति स्मृतौ चेश्वरप्रयुक्तास्मच्छब्देनेश्वरस्यैवोक्तेः । नान्त्यः, त्वन्मते ईश्वरस्याप्युपहितत्वेन घटाकाशं प्रति करकाकाशस्येवेश्वरं प्रति जीवस्यांशत्वायोगात् । न च मठाकाश एव पुनर्घटेनेवेश्वरोपाधिनावच्छिन्नमेव चैतन्यं पुनर्जीवोपाधिनावच्छिद्यते । तथात्वेहि मुक्तस्य शुद्धब्रह्मत्वं न स्यात् । तस्मात्त्वन्मतेऽपि न मुख्यांशत्वम् । अत एव त्वयापि भाषितम्– ''अंश इवांशः, न हि निरवयवस्य मुख्यांशः सम्भवति'' इति । एवं च–

शतांशश्चन्द्रबिम्बस्य गुरुबिम्बं यथा तथा ।
भेदेऽपि न्यूनतामात्राज्जीवो ब्रह्मांश उच्यते ॥

तस्मान्नांशत्वेनैक्यसिद्धिः । अंशत्वेनैक्यसिद्धिभङ्गः ॥ ३१ ॥

## अद्वैतसिद्धिः

'पादोऽस्य विश्वा भूतानी'ति श्रुतौ 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति स्मृतौ चांशत्वव्यपदेशादपि जीवब्रह्माभेदसिद्धिः । यद्यपि ब्रह्म प्रति जीवस्यांशत्वं न तावदारम्भकत्वम्, ब्रह्मणोऽनादित्वात् । नापि खण्डत्वम्, अच्छेद्यत्वात् । नापि समुदायित्वम्, समुदायस्य समुदाय्यनन्यत्वेन व्यवहारदशायामपि संसार्यन्यशुद्धब्रह्माभावापातात् । नापि भिन्नाभिन्नद्रव्यत्वम्, अनङ्गीकारात् । नापि पटं प्रति खण्डपटस्येव प्रदेशत्वम्, निष्प्रदेशब्रह्म प्रति कल्पनां विना तदयोगात् । तथापि घटाकाशस्य महाकाशं प्रतीव कल्पितप्रदेशत्वरूपमंशत्वं जीवस्यावच्छेदपक्षे गम्भवति । स्वतो निरंशेऽपि औपाधिकांशो यथा युज्यते, तथोक्तं पुरस्तात् । न तु सदृशत्वे सति ततो न्यूनत्वम्, स्थूलपटं प्रति सूक्ष्मपटस्याप्यंशत्वापत्तेः । वस्त्वेकदेशे मुख्यस्यांशशब्दस्य स्वतो निरंशेऽपि कल्पितैकदेशे प्रयोगस्यार्थान्तरे प्रयोगकल्पनापेक्षयाऽभ्यर्हितत्वात् । 'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एक' इति सूत्रे 'सोऽन्वेष्टव्यः स विजिज्ञासितव्य, एतमेवं विदित्वा मुनिर्भवति य आत्मनि तिष्ठ'न्नित्यादिभेदव्यपदेशस्य 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उतेत्याथर्वणमन्त्रे अभेदव्यपदेशस्य चोदाहृतत्वाच्चोक्तार्थपरिग्रहस्योचितत्वात् । आत्यन्तिकभेदगर्भार्थान्तरस्वीकारे चैतत्सूत्रविरोधापत्तेः, कुत्रचिदन्यत्र प्रयोगमात्रेण सर्वत्रैतत्कल्पने बहुविप्लवापत्तेश्च । अत एव ननु जीवस्य शुद्धचैतन्यांशत्वं वा? ईश्वरांशत्वं वा? पादोऽस्येत्यनया श्रुत्या बोध्यम्? नाद्यः, पादोऽस्य विश्वा भूतानीति श्रुताविदंशब्देन सहस्रशीर्षत्वादिविशिष्टप्रकृतेश्वरस्य ममैवांश इति स्मृतौ चेश्वरे प्रयुक्तास्मच्छब्देनेश्वरस्यैवोक्तेः । नान्त्यः, त्वन्मते ईश्वरस्याप्युपहितत्वेन घटाकाशं प्रति करकाकाशस्येवेश्वरं प्रति जीवस्यांशत्वायोगात् । न च गृहाकाश एव पुनर्घटेनेवेश्वरोपाधिनाऽवच्छिन्नमेव चैतन्यं पुनर्जीवोपाधिनावच्छिद्यत इति वाच्यम्, तथात्वे हि मुक्तस्य शुद्धब्रह्मत्वं न स्यात्, तस्मात्त्वन्मतेऽपि न मुख्यमंशत्वम्, नाप्यौपाधिकं वक्तुं शक्यम्, अतो मदुक्तप्रकार एवादरणीय इति निरस्तम् । अर्थान्तरपरिग्रहे विरोधस्योक्तत्वात्, श्रुतिस्मृतिगतसर्वनाम्ना सहस्रशीर्षत्वाद्युपलक्षितचैतन्यपरामर्शादुक्तदूषणानवकाशाच्च । तस्मात् "त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन्यदास्ते' इत्यादिश्रुत्या

(अद्वैतसिद्धिः)

जीवब्रह्माभेदे प्रमितेऽपि मन्तृमन्तव्यत्वादिभेदव्यपदेशनिर्वाहार्थं काल्पनिकांशत्वस्य श्रुतिस्मृति-व्याहतत्वेन तद्बलादप्यभेदोऽवगम्यत इति सिद्धम् ॥ इत्यद्वैतसिद्धौ अंशत्वेनाप्यैक्यसिद्धिः ॥

## न्यायामृततरङ्गिणी

**तस्मात्तत्तत्सदृशत्वे सति ततो न्यूनत्वमिति ॥ एतच्च जीवरूपस्यांशस्य लक्षणम् । नतु पटाद्यंशस्यापि तेन स्थूलपटं प्रति सूक्ष्मपटस्य नांशत्वापत्तिः ॥ ॥ अंशित्वेनैक्यसिद्धिभङ्गः ॥**

## न्यायामृतकण्टकोद्धारः

ननु तथापि न जीवब्रह्मणोर्भेदो वक्तुं शक्यते अंशत्वानुमानविरोधात् । जीवो न ब्रह्मणो भिद्यते अंशत्वात् मत्स्यादिवदित्यनुमानविरोधात् । न चासिद्धिः । आकरोदाहृतश्रुत्यादिसिद्धत्वादित्यत आह नापीति । ऐक्यं जीवस्य ब्रह्मणेतिशेषः । किमिदमंशत्वम्? किमंशशब्दवाच्यत्वमुत वक्ष्यमाणम्? नाद्योऽनैकान्तिकत्वादित्याह अयंत्विति । पादवच्चेति पादशब्दोऽप्यंशवाचीति भावः । भेदेनैवेति । एवकारोऽप्यर्थः । भेदेनापीत्यर्थः । यद्वोपसंह्रियमाणांशत्वाभिप्रायेणाह भेदेनैवेति । तथा च विरुद्धोहेतुरिति भावः । न द्वितीय इत्याह त्वन्मतेपीति । अवयव्याकारेण विनाशापन्नावयवत्वं खण्डत्वमिति बोध्यम् । नापीति । ननु समुदायसमुदायिभावोपपत्तये तयोर्भेदोऽपि स्वीक्रियत इति कथं शुद्धब्रह्माभाव इति चेन्न । वक्ष्यमाणदूषणेन निरासात् । नन्वर्थान्तरकल्पनापेक्षया लाघवात् कल्पितप्रदेशत्वमेवांशत्वमित्यत आह स्वत इति । आकाशदृष्टान्तोऽसंप्रतिपन्न इति भावः । तत्रेति । नचात्यन्ताभिन्नेषु मत्स्यादिष्वंशशब्द प्रयोगात् कथमेतदिति वाच्यम् । निर्विशेषाभेदाभिप्रायेणास्योक्तत्वात् । परेण च तथैव जीवब्रह्माभेदाङ्गीकारात् । पटादिति । न चायं लक्षणया प्रयोग इति वाच्यम् । मुख्यप्रतीतिव्यवधानानुपलब्ध्या तथाऽकल्पनात् । तस्मादिति । न च स्थूलपटं प्रति सूक्ष्मपटस्याप्यंशत्वापत्तिः । तस्य तत्सदृशत्वे सति ततो न्यूनत्वादिति वाच्यम् । नहीदं सर्वत्रांशत्वम् । किन्तु जीवस्यांशत्वं वाच्यम् । तत्र कोऽति प्रसङ्गः? यद्वा प्रयोगानुरोधेन निमित्तानुसरणं, न तु निमित्तमस्तीति प्रयोगः इति भावः । ननु जीवस्य भिन्नांशत्व व्यवहारे भवेदेतत् । स एव कुत इत्यत आह अभिन्नांशस्त्विति । किंचेति । नच श्रुतिस्मृतिगतसर्वनाम्ना सहस्रशीर्षत्वादिना सिद्धं चैतन्यमेवोपलक्ष्यत इति वाच्यम् । विशिष्टाङ्गीकारे बाधकएवोपलक्षणं स्वीकर्तव्यम् । न च तत्र बाधकमस्ति । उपलक्ष्यतावच्छेदकं विनोपलक्षणासम्भवादित्युक्तत्वाच्च । त्वन्मत इति । नन्वर्थान्तरकल्पनाभयादेवमास्थीयत इति वाच्यम् । अर्थान्तरस्य प्रामाणिकत्वेन कल्पनाभावात् । अन्यथा ब्रह्मापि गौरवान्नाङ्गीकर्तव्यं लाघवात् ब्रह्मैव सर्वमित्यङ्गीकरणीयं स्यात् । तथात्वेहीति । त्वयेश्वरस्य शुद्धब्रह्मत्वानङ्गीकारादिति भावः । उक्तमर्थं कारिकया सङ्गृह्णाति एवं चेति । इत्यंशत्वेनैक्यसिद्धिभङ्गः ।

न्यायामृतप्रकाशः

मत्स्याद्यभिन्नांशेऽतिव्याप्तिवारणाय ततो न्यूनत्वमिति । तदधीनत्वमिति यावत् ॥ ईश्वरोपाधिनेति ॥ ईश्वर-रूपोपाधिनेत्यर्थः ॥ तथात्व इति ॥ यथा घटरूपोपाधिनाशे घटाकाशस्य महाकाशेनैक्यं भवति तस्यैवेतद-वच्छिन्नत्वात् एवमविद्यान्तःकरणादिरूपजीवोपाध्यपगमे तस्येश्वरोपाध्यवच्छिन्नचैतन्यैक्यस्यैव प्राप्त्या मुक्तस्य शुद्धब्रह्मत्वं न स्यात् । तथा च न मुक्तिः स्यात् । शुद्धब्रह्मत्वस्यैव त्वन्मते मुक्तित्वादित्यर्थः ॥ गुरुबिम्बमिति ॥ बृहस्पतिमण्डलं चन्द्रमण्डलाच्छतांशन्यूनं चन्द्रमण्डलस्याऽष्टाशीतिसहस्रत्वादिति मण्डलप्रयुक्त एव न्यूनाधिक-भावो न तु स्वरूपतः अतो न कश्चित्क्षुद्रोपद्रव इत्यवधेयम् ॥ ॥ अंशत्वेनैक्यसिद्धिभङ्गविवरणम् ॥

## ३२. बिम्बप्रतिबिम्बैक्यभङ्गः

नापि जीवब्रह्मणोर्बिम्बप्रतिबिम्बत्वान्मुखप्रतिमुखवदैक्यम् । दृष्टान्तस्य साध्य-वैकल्यात्, तथा हि— बिम्बप्रतिबिम्बयोरैक्ये न तावत्प्रत्यक्षं मानम्, इमे चैत्रतच्छाये भिन्ने इतिवद् इमे चैत्रतत्प्रतिबिम्बे भिन्ने इत्येव पार्श्वस्थेन ग्रहणात् । स्वेनापि स्वकरतत्प्रतिबिम्बे भिन्ने इत्येव ग्रहणाच्च । ननु यथा बहिःस्थितश्चैत्रो यत्स्वलक्षणः प्रतिपन्नः, तत्स्वलक्षण एव वेश्मान्तःस्थोऽपि भाति, तथा यत्स्वलक्षणं ग्रीवास्थं मुखं तत्स्वलक्षणमेव दर्पणस्थमपि भाति, न तद्वस्त्वन्तरत्वे युज्यते तस्मादेक-मेकदेशस्थं च मुखं भ्रान्त्या भिन्न भिन्नदेशस्थं च भातीति चेद्, उच्यते—किमनेन सव्येतरहस्तयोरिवात्यन्तसादृश्यधीरुपन्यस्ता ? प्रत्यभिज्ञा वा ? नाद्यः, तयैक्या-सिद्धेः । अन्त्येऽसिद्धिः । किञ्चित्स्वच्छताम्रादौ प्रतीते मुखच्छायामात्रे मुखसंस्थान-विशेषाप्रतिपत्त्या प्रत्यभिज्ञाभावस्य स्पष्टत्वात् । स्वनेत्रगोलकादौ स्वस्याभिज्ञाभावेन प्रत्यभिज्ञायोगाच्च । सूर्यपार्श्वे प्रतिसूर्य इतिवत् दर्पणे मम मुखच्छायेत्येवानुभवेन दर्पणे मम मुखं लग्नमिति प्रतीत्यभावाच्च, चैत्रप्रतिबिम्बमेव दृष्टं न चैत्रः, चैत्रस्तु तेनानुमित इत्यनुभवायोगाच्च । प्रतिमुखे प्रत्यङ्मुखत्वादिना दृश्यमानेऽपि स्वमुखे तद्बुद्ध्यभावाच्च । अत एव बालानां स्वप्रतिबिम्बे बालान्तरभ्रमः, क्वचित्प्रतिमुखे मम मुखमिति व्यपदेशस्तु स्वच्छायाशिरसि स्वशिरोव्यवहारवत्, मार्गविन्यस्तस्व-पादाकृतौ स्वपादव्यवहरवच्च गौणः । भेदज्ञाने सत्यभेदव्यवहारस्य गौणत्वनियमात् ।

किं च बिम्बप्रतिबिम्बयोर्भेदसाक्षात्कारे तावन्न विवादः, अन्यथा त्वयापि कस्य भ्रमत्वमुच्येत? न च भेदं भेदकं च साक्षात्कुर्वन्नभेदमपि साक्षात्कुर्वन् दृष्टः । न चैक्ये साक्षात्कृतेऽपि सोपाधिकभेदभ्रमो युक्तः, तदुपादानस्याप्यैक्याज्ञानस्यैक्यज्ञानेन निवृत्तेः । न चोपाधिनिवृत्तिसहकृतमेवैक्यज्ञानं अज्ञाननिवर्तकम्, ज्ञाते कदापि न जानामीत्यननुभवेन ज्ञानस्य स्वप्रागभावं प्रतीवाज्ञानं प्रत्यप्यन्यानपेक्षस्यैव निवर्तकत्वादित्युक्तत्वात् । न च बिम्बप्रतिबिम्बयोरैक्ये ज्ञातेऽपि तदवच्छिन्नचैतन्यैक्याज्ञानात्तत्र भेदभ्रमः, अतिप्रसङ्गात् । न च बिम्बप्रतिबिम्बैक्यज्ञानाभावेऽपि मूलाविद्याकार्योऽयं भेदभ्रमः, व्यावहारिकत्वापत्तेः । न च सोपाधिकभ्रमं प्रति नाज्ञानज्ञाने उत्पादकनिवर्तके, किं तूपाधिसन्निधानरूपदोषतदपगमाविति वाच्यम् । दोषो निमित्तं कार्यानुगुणम्, मिथ्याभूतमज्ञानमेव तूपादनमितित्वन्मतहानेः । अन्यथा ह्यज्ञानाकार्यत्वेन ज्ञानानिवर्त्यत्वेन च बिम्बप्रतिबिम्बभेदः सत्यः स्यादितिदिक् ।

नाप्यनुमानं तत्र मानम्, अत्यन्तसादृश्यस्य सव्येतरकरादौ व्यभिचाराद्, विरोधाच्च । वैधर्म्याभावस्य चासिद्धेः । क्रियासाम्यस्य च च्छायादावनैकान्त्यात् । बिम्बकारणमात्रजन्यत्वस्य च बिम्बादर्वाचीने प्रतिबिम्बेऽसिद्धेः । पृथग्दृष्टकार्यानुरोधेन परिवेषेन्द्रचापच्छायाप्रतिसूर्यादाविव कारणस्य कल्प्यत्वात् । प्रतिबिम्बमपि हि च्छायाविशेषः । न हि भेरीघातादिक्लृप्तहेत्वभावाद् ध्वनावुपरतेऽप्युपलभ्यमानः प्रतिध्वनिर्न शब्दान्तरम् । एतेन दर्पणादौ न मुखव्यक्त्यन्तरमस्ति तज्जन्मकारणशून्यत्वात्, शशमस्तके विषाणवद्'' इति विवरणोक्तं निरस्तम् । एतेनैवाभिज्ञायां भेदो भाति प्रत्यभिज्ञायां त्वभेदः । तत्र भेदधीर्मुखान्तरहेत्वभावेनोपपत्तिहीनत्वाद् भ्रान्तिः, अभेदधीस्तु सोपपत्तिकत्वात् प्रमेति निरस्तम्, अभेदधीरेव नास्तीत्युक्तत्वात् । छायादाविव कारणस्य कल्प्यत्वेन भेदबुद्धेः सोपपत्तिकत्वाच्च । क्लृप्तद्रव्यानन्तर्भावे तमोवद् द्रव्यान्तरत्वसम्भवाच्च । ''नोपरक्तं न वारिस्थम्''ति स्मार्तव्यवहारस्तु चित्रितः सिंह इति लोकव्यवहारवद् ''यथा दारुमयो योषा यथा

चर्ममयो मृगः'' इत्यादिस्मार्तव्यवहारवच्च गौणः। त्वत्पक्षेऽपि हि वारिस्थशब्दो न मुख्यः, वारिणि सूर्यान्तराभावात्। गगनस्थस्य च वारिस्थत्वायोगात्। भेदस्तूक्तप्रत्यक्षेण न्यूनाधिकपरिमाणत्वचलत्वोपाधिसंयुक्तत्वासंयुक्तत्वत्वगादिग्राह्यत्वाग्राह्यत्वप्रत्यक्प्राङ्मुखत्वरूपेण कस्तूरीतत्प्रतिबिम्बयोः सौरभतदभावरूपेण, गुडतत्प्रतिबिम्बयोर्माधुर्यतदभावरूपेण, वह्नितत्प्रतिबिम्बयोरौष्ण्यतदभावरूपेण, पर्वततत्प्रतिबिम्बयोर्गुरुत्वतदभावरूपेण, सशब्दभेरीतत्प्रतिबिम्बयोः शब्दतदभावरूपेण चानुमानेन–

यथैषा पुरुषे छाया एतस्मिन्नेतदाततम्।
छाया यथा पुं सदृशी पुमधीना च दृश्यते॥
एवमेवात्मकाः सर्वे ब्रह्माद्याः परमात्मनः। इत्यादि श्रुत्या

तवैव सदृशश्चायं विम्बस्य प्रतिबिम्बवत्॥
बहवः सूर्यका यद्वत्सूर्यस्य सदृशा जले।
एवमेवात्मका लोके परात्मसदृशा मताः॥

इत्यादिस्मृत्या च सिद्धः।

न च बिम्बातिरेकेण दर्पणे कस्तूर्यन्तराभावात्तत्र गन्धाभाव इति वाच्यम्, तथापि यत्स्वलक्षणं कस्तूर्यादि, तत्स्वलक्षणस्यैव दर्पणस्थत्वेनारोपिततया तद्रूपादियुक्तस्येव तद्गन्धादियुक्तस्यैव दर्पणस्थत्वेन प्रतीत्यापत्तेः। घटे गगनस्येव दर्पणे कल्पितभेदयुक्तमुखस्याप्यभावे उपाधेः प्रतिबिम्बपक्षपातित्वेन मुखप्रतिमुखयोरवदातत्वश्यामत्ववत् जीवब्रह्मणोः संसारासंसारादिव्यवस्थितमिति त्वन्मतहानेश्च। न हि शुक्तौ न शुक्तिरियमितिभेदभ्रान्तिमात्रेण रूप्यं न शुक्तावध्यस्तम्। आरोपितेन दर्पणस्थत्वेन विशिष्टं प्रतिबिम्बं तत्र मालिन्याध्यास इति चेत्, न, मालिन्यवद् दर्पणस्थत्वस्याप्यारोपितत्वेनैकविशिष्टे इतरारोपायोगात्। प्रतिमुखमेव दर्पणस्थं न तु मुखमिति प्रतिबिम्बे दर्पणस्थत्वानुभवने प्रतिबिम्बत्वस्य तत्स्थत्वगर्भितत्वा-

भावाच्च । मालिन्यस्थानीयसंसारस्यापि विशिष्टनिष्ठत्वापत्त्या शुद्धाश्रितमोक्ष-सामानाधिकरण्यायोगाच्च । एतेन वृक्षस्था कपिसंयोगाधारताग्रेणेव मुखस्था मालिन्याधारता उपाधिनावच्छिद्यते । तथा च दर्पणावच्छिन्न एव मालिन्यधीर्युक्तेति निरस्तम्, संसारस्यापि शुद्धचिन्मात्रगतत्वापाताद्, वृक्षः कपिसंयुक्त इतिवत् मुखं मलिनमित्यनुभवापत्त्या मुखं न मलिनम्, किं तु प्रतिमुखमेवेत्यनुभवविरोधाच्च । यदि च कस्तूर्यादिप्रतिबिम्बे तत्स्वलक्षणाननुगमेऽपि तदाकारतामात्रेण तत्त्वम्, तर्हि च्छायाप्रतिमुद्राप्रतिमादीनामपि तत्त्वं स्यात् । न च प्रतिमुखे प्रत्यङ्मुखत्वादि-धीर्भ्रान्तिः, प्रतिबिम्बं बिम्बाभिमुखं नेति कदाप्यननुभवाद् अबाधेऽप्यारोपितत्वे प्रतिमुखस्वरूपस्य सालक्षण्यस्य चारोपितत्वापातात् । छायादावपि वैधर्म्यधीर्भ्रान्ति-रिति सुवचत्वेन तस्यापि पुरुषादिनैक्यापत्तेश्च । एतेन–

दर्पणाभिहता दृष्टिः परावृत्त्य स्वमाननम् ।
व्याप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम् ॥ इति निरस्तम् ।

परावृत्त्य स्वमुखस्यैव ग्रहणे पार्श्वस्थस्य मुखद्वयप्रतीत्ययोगात् । अस्मिन्पक्षे दर्पणादेर्नेत्राद्यभिघातकत्वमात्रेणोपक्षीणत्वेन दर्पणैक्य इव दर्पणभेदेऽप्यनेकमुख-प्रतीतेः, मणिदर्पणकृपाणेषु च विरुद्धरूपानेकमुखप्रतीतेश्चायोगात् । अस्याः प्रक्रियायाः ब्रह्मप्रतिबिम्बे जीवे असम्भवाच्च । नेत्रस्य परावृत्या नेत्रं प्रत्याभि-मुख्येऽपि स्वात्मानं प्रत्याभिमुख्यप्रतीत्ययोगाच्च । विरलावयवस्य जलस्य नेत्राभि-घातकत्वे स्वच्छजलान्तर्गतशिलाद्यग्रहणापत्तेश्च । दर्पणाद्यभिहतेन नेत्रेण बहुयोजन-व्यवहितोर्ध्वभागस्थसूर्यादिग्रहणे पृष्ठभागस्थस्यापि व्यवहितस्य ग्रहणापत्तेश्च । अस्यां प्रक्रियायां स्वच्छताया अनुपयोगेन शिलाद्यभिहतनेत्रस्यापि स्वमुखग्राहकत्वा-पाताच्च । प्रतिचन्द्रादिदर्शनेन चन्द्रादिदर्शनजन्यसुखादेः कपिलादिप्रतिबिम्बदर्शनेन कपिलादिदर्शनजन्यपुण्यादेश्च प्रसङ्गाच्च । सूर्यकस्यापि सूर्यवद् दुर्दर्शत्वादिप्रसङ्गाच्च । अतिस्वच्छदर्पण इव किञ्चित्स्वच्छताम्रादावपि मुखसंस्थानविशेषप्रतीत्यापाताच्च । अवच्छेदपक्षे द्विगुणीकृत्य वृत्त्यसम्भवेऽपि प्रतिबिम्बनपक्षे तत्सम्भवेनान्तर्यामित्व-

मिति स्वोक्तिविरोधाच्च । उपाधेः प्रतिबिम्बपक्षपातित्वोक्त्योगादित्युक्तत्वाच्च । एतेन नेदं रूप्यमितिवन्नेदं मुखमितिस्वरूपेण न बाधः, किं तु नात्र मुखमिति संसृष्टतयैवेति न दर्पणे मुखव्यक्त्यन्तरमस्तीति निरस्तम् । नात्र मुखच्छायासीदित्यननुभवेन प्रत्युत एतावन्तं कालमत्र प्रतिसूर्य आसीदितिवदत्र प्रतिमुखमासीदित्येवानुभवेन "प्रतिबिम्बमिवादर्शे" इत्यादि स्मृत्याच्च प्रतिमुखे दर्पणस्थत्वस्याप्यबाधात् । न हि भूमौ मेघो नेत्येतावता मेघच्छायापि बाधिता ।

छायापुरुषवत्तस्माच्छायावत्प्रतिसूर्यवत् ।
प्रतिध्वानादिवद् भिन्नं प्रतिबिम्बं हि बिम्बतः ॥

अन्यथा प्रतिबिम्बाद्बिम्बानुमितिर्न स्यात् । साध्यावैशिष्ट्यात् "नेक्षेतोद्यन्तमादित्य" मित्यनेन उद्यत्प्रतिबिम्बदर्शनस्यापि निषेधः स्यात् । वारिस्थसूर्यदर्शननिषेधेनाकाशस्थतद्दर्शनस्यापि निषेधः स्यात्, त्वत्पक्षे गगनस्थस्यैव वारिस्थत्वेन प्रतीतेः । प्रतिबिम्बदर्शनेनैव दृष्ट्वा स्नायादि"ति शास्त्रार्थोऽप्यनुष्ठितः स्यात् । न च तात्त्विकाभेदेऽपि कल्पितभेदाच्छास्त्रीया व्यवस्था, औदुम्बरतया ज्ञातेनानौदुम्बरेणौदुम्बरो यूपो भवतीतिशास्त्रार्थासिद्धिप्रसङ्गाद् । आत्मतया ज्ञातदेहश्रवणादिना "आत्मा श्रोतव्य" इति शास्त्रार्थसिद्धिप्रसङ्गाच्च । किं चानादेर्जीवस्य नोपाध्यधीनत्वादिरूपं प्रतिबिम्बत्वम्, किन्तु तदधीनत्वे सति तत्सदृशत्वरूपं तच्च, भेदव्याप्तमिति विरुद्धो हेतुः । उक्तं हि सूत्रकृता– "अत एव चोपमा सूर्यकादिवदि"ति । भाष्यकृता च अत एव भिन्नत्वतदधीनत्वतत्सादृश्यैरेव सूर्यकाद्युपमा नोपाध्यधीनत्वादिने"ति । बिम्बप्रतिबिम्बैक्यभङ्गः ॥

## अद्वैतसिद्धिः

तथा जीवब्रह्मणोर्मुखप्रतिमुखवद् बिम्बप्रतिबिम्बरूपत्वादप्यभेदोऽवगन्तव्यः । ननु दृष्टान्ते नाभेदः संप्रतिपन्नः, चैत्रतच्छाये भिन्ने इतिवत् चैत्रतत्प्रतिबिम्बे भिन्ने इत्येव पार्श्वस्थितेन ग्रहणात्, स्वेनापि स्वकरतत्प्रतिबिम्बे भिन्ने इति ग्रहणाच्चेतिचेन्न । आपाततो भेदप्रतीतावपि

(अद्वैतसिद्धिः)

सयुक्तिकप्रत्यक्षेण बिम्बप्रतिबिम्बयोरैक्यसिद्ध्या दृष्टान्तत्वोपपत्तेः । यथा लक्षणापरिज्ञाने भेदभ्रमवतोऽपि बहिस्थितश्चैत्रो यत्स्वलक्षणकत्वेन प्रतिपन्नः, ततो गृहस्थे तथा भाति तस्मिन् चैत्र एवायमिति धीः, तथा ग्रीवास्थं मुखं यत्स्वलक्षणकं प्रतिपन्नं दर्पणस्थमपि तथेत्यवधार्य तथैवेदं मुखमिति स एवायं कर इति च स्वपरसाधारणप्रतीतिरप्यनुभवसिद्धा । न च किञ्चित्स्वच्छताम्रादौ मुखछायामात्रे प्रतीतेऽपि संस्थानविशेषाप्रतीत्या प्रत्यभिज्ञाया असिद्धिरिति वाच्यम्, सर्वत्राप्रतीतावपि निर्मलदर्पणादावेव तत्सिद्ध्या दृष्टान्तसिद्धेः । ननु स्वनेत्रगोलकादौ स्वस्याभिज्ञाविरहात् प्रत्यभिज्ञापि कथमिति चेन्न, दर्पणाहतचक्षूरश्मीनामग्रावच्छेदेन सम्बन्धात् स्वनेत्रगोलकादीनामभिज्ञायाः सन्निहितपूर्वसमय एव संभवात् । यत्तु सूर्यपार्श्वस्थिते प्रतिसूर्ये प्रत्यभिज्ञाविरहादत्रापि प्रत्यभिज्ञाविरहः इति, तन्न, तत्रोपाधेरत्रेवानाकलनेनौपाधिकत्वानिर्णयात् । तथा च उपाधिनिबन्धनत्वज्ञानं तल्लक्षकत्वज्ञानं चाभेदसाक्षात्कारे सामग्री । तस्यां सत्यां दर्पणे मम मुखं लग्नमिति अनुभवाभाव एवानुभवविरुद्धः । यत्तु चैत्रप्रतिबिम्बो दृष्टो न चैत्रः, किन्तु तेनानुमित इति विपरीतानुभवविरोधः इति, तन्न, वस्तुतोऽभेदे ज्ञातेऽपि उपाध्यवच्छिन्नो दृष्टोऽनवच्छिन्नोऽनुमित इति प्रतीत्यविरोधात् शरद्गङ्गया वर्षर्तुगङ्गानुमानवत् । न च एवं प्रतिमुखे प्रत्यङ्मुखत्वादिना दृश्यमाने स्वमुखे तद्बुद्धिः स्याद्, बालानां च स्वप्रतिबिम्बे बालान्तरभ्रमो न स्यादिति वाच्यम्, तयोः स्वलक्षणकत्वाज्ञाननिबन्धनत्वात् । अत एव कदाचित् प्रतिमुखेऽपि मम मुखमिति बुद्धिव्यपदेशौ । न चायं व्यवहारो भेदज्ञानपूर्वकत्वेन मार्गे स्वपदव्यां स्वपदव्यवहारवद्गौणः, स्वलक्षणकत्वज्ञानदशायां भेदज्ञानस्यासत्कल्पत्वात् ।

ननु अविवादः स्याद् भेदसाक्षात्कारे, अन्यथा त्वयापि कस्य भ्रमत्वमुच्येत ? न च भेदं भेदकं च साक्षात्कुर्वन् अभेदं साक्षात्कुर्वाणो दृष्ट इति चेत्, श्वैत्यव्याप्यशङ्खत्वसाक्षात्कारे पीतसाक्षात्कारवद् उपाधिमाहात्म्यादभेदं साक्षात्कुर्वाणो भेदं साक्षात्करोतीत्यङ्गीक्रियते, अनुभवस्य दुरपह्नवत्वात् । न चैवमुपादानस्य ऐक्याज्ञानस्य ऐक्यज्ञानेन निवृत्तेः भ्रमानुपपत्तिः, तन्निवर्तने उपाधिविरहस्यापि सहकारित्वात् । न च एवं तज्ज्ञाने सति तन्न जानामीत्यननुभवेन तस्य स्वप्रागभावं प्रतीवाज्ञानं प्रत्यप्यन्यानपेक्षस्यैव निवर्तकत्वमिति वाच्यम्, न जानामीति व्यवहारप्रयोजकाज्ञानांशनिवर्तनेऽपि भ्रमस्यानुभूयमानत्वेन तदुपादानांशस्य निवृत्तौ जीवन्मुक्तौ

(अद्वैतसिद्धिः)

प्रारब्धकर्मण इवोपाधेरेव प्रतिबन्धकतया तद्विरहापेक्षाया आवश्यकत्वात् । एतेन भेदभ्रमस्यास्य मूलाविद्योपादानकत्वे व्यावहारिकत्वापत्तिः, अज्ञानानुपादानकत्वे अपसिद्धान्तः, बिम्बप्रतिबिम्बभेदस्य सत्यत्वापत्तिश्चेति निरस्तम्, उक्तन्यायेनोपपत्तेर्व्यावहारि कत्वेऽप्यनुपपत्त्यभावाच्च ।

तयोरैक्ये अनुमानमपि प्रमाणम् । अत्र यद्यप्यत्यन्तसादृश्यं सव्येतरकरादौ व्यभिचारि, तथापि प्रतिबिम्बो बिम्बाभिन्नः तद्गतासाधारणधर्मवत्त्वात्, तद्विरुद्धधर्मानधिकरणत्वाद्, बिम्बाजनकाजन्यत्वाच्च । न च द्वितीयहेतोरसिद्धिः, प्रत्यङ्मुखत्वादिविरुद्धधर्मस्य उपाधिकृतत्वेन स्वाभाविकविरुद्धधर्मानधिकरणत्वस्य सत्त्वात् । न च बिम्बानन्तरजाते प्रतिबिम्बे तृतीयहेतोरसिद्धिः, ऐक्य वादिनं प्रति बिम्बानन्तरत्वस्यैवासिद्धेः । ननु पृथक्कार्यानुरोधेन परिवेषेन्द्रचापच्छायाप्रतिसूर्यादाविवात्रापि पृथक्कारणं कल्पनीयम्, प्रतिबिम्बमपि हि छायाविशेषः, न हि भेरीघातादिक्लृप्तहेत्वभावाद् ध्वनावुपरतेऽपि श्रूयमाणः प्रतिध्वनिर्न शब्दान्तरमिति चेन्न । प्रतिबिम्बस्य छायाविरोधिन्यालोकेऽपि सम्भवेन छायाविशेषत्वासिद्धेः, प्रतिध्वनेस्तु भिन्नकालत्वेन तद्भेदस्य प्रकृतेऽनुपयोगात्, कार्यपार्थक्यसिद्ध्युत्तरकालकल्प्यकारणभेदस्य प्रथमं वक्तुमशक्यत्वात्, क्लृप्तहेतुभावेन कार्यस्यैव भावाच्च, प्रत्यक्षस्य भेदाभेदयोः समत्वात्, युक्त्या अभेद एव प्राबल्याच्च । अत एवोक्तम् । विवरणे– 'दर्पणादौ न मुखव्यक्त्यन्तरमस्ति, तज्जनकशून्यत्वात्, शशशिरसि विषाणवदिति । एवमभेदधिय उपपादितत्वाद् अस्याः प्राबल्यम् । व्यक्त्यन्तरहेत्वभावात् सैव नास्तीत्यपास्तं प्राक् । न च छायादाविव कारणभेदस्य कल्प्यत्वेन भेदबुद्धिः सोपपत्तिका तथा क्लृप्तद्रव्यानन्तर्भावि तमोवद् द्रव्यान्तरतैवेति वाच्यम्, अन्योन्याश्रयापत्तेः । भेदसोपपत्तिकत्वेद्रव्यान्तरत्वकारणान्तरत्वयोः कल्पनम्, तस्मिंश्च सोपपत्तिकत्वमिति । अत एव 'नोपरक्तं न वारिस्थ'मिति स्मार्तव्यवहारो मुख्यः, न तु यथा चित्रितः सिंहः, यथा दारुमयी योषा, यथा चर्ममयो मृग इत्यादिवद् गौणः । न च त्वत्पक्षेऽपि वारिस्थशब्दो न मुख्यः, वारिणि सूर्यान्तराभावाद् गगनस्थस्य वारिस्थत्वायोगादिति वाच्यम्, वारिस्थत्वेनोपस्थिताशेषवारिस्थसूर्यनिषेधात् । ननु वारिस्थत्वेन सूर्य एवोपस्थितः तयोरभेदो न प्रत्यक्षसिद्धः, नापि युक्तः, न्यूनाधिकपरिमाणवत्त्वचलत्वोपाधिसंयुक्तत्वासंयुक्तत्वत्वगादिग्राह्यत्वाग्राह्यत्वप्रत्यङ्मुखत्वाप्रत्यङ्मुखत्वादिना कस्तूरीबिम्बप्रतिबिम्बयोः सौरभासौरभादिना च भेदसिद्धेरिति चेन्न, न्यूनपरिमाणादिना सौरभादिना च

(अद्वैतसिद्धिः)

उपाधिगतस्य भेदः साधनीयः । तथा च उपाधिगतत्वस्य बिम्बे कल्पितत्वेन पक्षहेत्वोरसिद्धेः, कल्पितहेत्वादिना तत्समानसत्ताकसाध्यसिद्धाववविवादाच्च । नापि–

> "यथैषा पुरुषे छाया एतस्मिन्नेतदाततम् ।
> छाया यथा पुंसदृशी पुमधीना च दृश्यते ॥
> एवमेवात्मकाः सर्वे ब्रह्माद्याः परमात्मनः ॥"

इति श्रुत्या भेद इति वाच्यम्, कल्पितभेदमात्रेण सादृश्योपपत्तेः तात्त्विकत्वे श्रुतितात्पर्याभावाद्, ऐक्यप्रतिपादकानेकश्रुतिविरोधाच्च । ननु तत्स्वलक्षणकस्यैव दर्पणस्थत्वेनारोपिततया तद्रूपादियुक्तस्येव तद्गन्धादियुक्तस्यापि दर्पणस्थत्वेन प्रतीतिः स्यादिति चेन्न, तत्स्वलक्षणकत्वेनारोपितत्वेऽपि यावत्स्वलक्षणकत्वेनारोपितत्वानङ्गीकारेण गन्धादिप्रतीत्यापादनस्याशक्यत्वात् ।

ननु एवं दर्पणे मुखस्याभावे उपाधेः प्रतिबिम्बपक्षपातित्वेन मुखप्रतिमुखयोरवदातत्वश्यामत्ववत् जीवब्रह्मणोः संसारित्वासंसारित्वादिव्यवस्था कथमिति चेत्, न । आरोपितेनादर्शस्थत्वेन विशिष्टे प्रतिबिम्बे तद्धर्मस्य मालिन्यादेः सम्भवात् । न च उपाधिस्थत्वस्यापि आरोप्यत्वेन कथं मालिन्याश्रयतावच्छेदकत्वम्? एकविशिष्टे इतरारोपाभावादिति वाच्यम्, आरोपपूर्वप्रतीतधर्मविशिष्टस्यैवारोप्याश्रयत्वात्, न तु तस्य सत्यत्वमपीति परप्रक्रियानिबन्धनदोषानवकाशात् । न च प्रतिमुखमेव दर्पणस्थं न तु मुखमिति प्रतिबिम्बदर्पणस्थत्वानुभवेन कथं प्रतिबिम्बत्वस्य तत्स्थत्वगर्भतेति वाच्यम्, अविद्योपहितस्याविद्याश्रयत्ववत् दर्पणोपहितस्य दर्पणाश्रितत्वसंभवात् । एतेन मालिन्यस्थानीयस्य संसारस्य विशिष्टवृत्तित्वात् शुद्धाश्रितमोक्षसामानाधिकरण्यायोग इति निरस्तम् । संसारस्तावदुपहितवृत्तिः, तथा चोपधेयांशमादाय सामानाधिकरण्यसंभवात् । तथा च वृक्षस्थकपिसंयोगाधारता अग्रेणेव मुखेमालिन्यं दर्पणसम्बन्धेनावच्छिद्यते । एतावानेव विशेषः वृक्षे कपिसंयोगस्तु साहजिकः, मुखे औपाधिकं मालिन्यम् । तेनोपहिते उपाध्यवच्छिन्न एव मुखे मालिन्यधीः, एतेन दर्पणमालिन्यस्य मुखनिष्ठत्वे संसारस्यापि शुद्धनिष्ठतापत्तिः, वृक्षः संयुक्त इति वत् मुखं मलिनमिति प्रतीत्यापत्तिः, मखं न मलिनम् किन्तु प्रतिमुखमित्यनुभवविरोधापत्तिश्चेति निरस्तम् । ननु कस्तूर्यादिप्रतिबिम्बस्य स्वलक्षणाननुगमेन कथं

(अद्वैतसिद्धिः)

बिम्बैक्यम्? न च तदाकारतामात्रेण तत्त्वं, तर्हि छायाप्रतिमुद्राप्रतिमादीनामपि तत्त्वं स्यात्, प्रत्यङ्मुखत्वादेर्भेदकस्यात्रापि सत्त्वाच्च । न च प्रत्यङ्मुखत्वधीर्भ्रान्ता, प्रतिबिम्बं बिम्बाभिमुखं नेति कदाप्यननुभवादिति चेन्न, दर्पणादिप्रतिबिम्बे स्वलक्षणानुगमेन बिम्बैक्ये व्यवस्थिते प्रतिबिम्बत्वावच्छेदेनैव तत्कल्पनाद्, छायादौ स्वलक्षणकत्वस्य कुत्राप्यदर्शनेन साम्याभावात् । नापि प्रत्यङ्मुखत्वादि भेदकम्, मलिनत्ववदुपाधिकृतत्वात् । अत एव जपाकुसुमे रक्तताप्रतीतिवत् तद्धीर्भ्रान्ता । दर्पणाहतं चक्षुः प्रत्यङ्मुखं भवति, तस्य च स्वाभिमुखतया ग्रहणसामर्थ्याच्चान्याभिमुखस्यापि मुखादेस्तथाग्रहणोपपत्तेश्च । तदुक्तं–

"दर्पणाभिहता दृष्टिः परावृत्त्य स्वमाननम् ।
व्याप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम् ॥"

न च परावृत्त्य स्वमुखस्यैव ग्रहणे पार्श्वस्थस्य मुखद्वयप्रतीत्ययोगः, स्वमुखस्यैवेति नियमासिद्धेः, उपाधिसन्निहितमात्रस्यैव तथा ग्रहणात् । न च एवं दर्पणादेरभिघातकतामात्रेण उपक्षीणतया दर्पण इव दर्पणभेदेऽप्यनेकमुखप्रतीतिर्न स्यादिति वाच्यम्, अभिघातकानेकत्वेन चक्षुषोऽनेकाग्रसम्पत्त्या प्रत्यग्रं स्वाभिघातकावच्छेदकमुखग्राहकतया दृष्टान्तवैषम्यात् । न च मणिदर्पणकृपाणादिषु विरुद्धरूपानेकमुखप्रतीतिः कथमेवं युज्यत इति वाच्यम्, अन्वयव्यतिरेकसिद्धोपाधि- प्राबल्यनिबन्धनत्वादिति गृहाण । न च चक्षुःपरिवृत्तिप्रक्रिया ब्रह्मप्रतिबिम्बे जीवे न संभवतीति वाच्यम्, चाक्षुषप्रतिबिम्बमात्रविषयतयैवास्या उपपादितत्वात् । न च विरलावयस्य जलस्य नेत्राभिघातकत्वे जलान्तर्गतशिलाद्यग्रहणप्रसङ्गः, सर्वावच्छेदेनाभिघाताभावेनान्तरेऽपि चक्षुषः प्रवेशसंभवात् । न च एवं बहुदूरव्यवहितोर्ध्वभागसूर्यादिग्रहणे पृष्ठभागस्थस्य व्यवहितस्यापि ग्रहणापत्तिरिति वाच्यम् चक्षुषो गमनागमनाभ्यां विशेषात् । न हि दूरस्थसूर्यग्रहणं वदता पृष्ठकुड्यादिकं भित्त्वा चक्षुर्गच्छतीत्युक्तं भवति । न च एवं शिलाभिहतमपि चक्षुः परावृत्त्य मुखं गृह्णात्विति वाच्यम् । तवापि प्रतिबिम्बं तत्रोत्पद्यतामित्यापत्तेः, अस्वच्छतया परिहारस्यास्माकमपि समत्वात् । तव स्वच्छ एव उत्पद्यते, मम तत एव चक्षुः परावर्तते इत्यङ्गीकारात् । न चैवं प्रतिबिम्बदर्शनेनापि बिम्बदर्शनजन्यसुखपुण्यादिप्रसङ्गः, यत्र तद्दर्शनमात्रजन्यता नान्यतः, तत्रेष्टापत्तेः यत्र चोपाधिविनिर्मुक्तज्ञानत्वेन विशिष्य जन्यता, तत्रापादकाभावात् । नचैवं सूर्यकस्यापि सूर्यवद् दुर्दर्शत्वापत्तिः, गोलके सूर्यतेजःसाम्मुख्यस्य दुर्दर्शताप्रयोजकस्य सूर्यकग्रहणकालेऽभावात् । न च स्वच्छदर्पण किञ्चित्स्वच्छताम्रादौ मुख-

(अद्वैतसिद्धिः)
संस्थानविशेषप्रतीत्यापातः, उपाधिगतात्यन्तस्वच्छताव्यतिरेकप्रयोजकमालिन्यादेरेव तत्र प्रतिबन्धकत्वाद्, अन्यथा तवापि तादृक्संस्थानविशेषवत् प्रतिबिम्बं तत्र कथं नोत्पद्यत इत्यस्य दुष्परिहरत्वापत्तेः ।

ननु अवच्छेदपक्षे द्विगुणीकृत्य वृत्त्यसम्भवेऽपि प्रतिबिम्बपक्षे तत्संभवेनान्तर्यामित्वमिति स्ववचनविरोधः, उपाधेः प्रतिबिम्बपक्षपातित्वमित्युक्त्ययोगश्चेति चेन्न, सर्वोपाध्यवच्छिन्नत्वैकदेशोपाध्यवच्छिन्नत्वाभ्यामुपाधिकल्पितभेदेन च स्वोक्त्यविरोधोपपत्तेः । अत एव दर्पणे न मुखमित्येव उपाधिसंसृष्टतया निषिध्यते, न तु 'नेदं रूप्य'मितिवत् नैतन्मुखमिति स्वरूपेण । ननु नात्र मुखच्छायास्तीत्यननुभवेन प्रत्युतैतावन्तं कालम् अत्र प्रतिसूर्य आसीदितिवत् प्रतिमुखमासीदित्येवानुभवेन प्रतिबिम्बमिवादर्शे इत्यादिस्मृत्या व प्रतिमुखे दर्पणस्थत्वस्याप्यबाध एव, न हि भूमौ मेघो नेत्येतावता मेघच्छायापि तत्र बाधितेति - चेन्न, मुखप्रतिमुखयोरेकस्वलक्षणकत्वेनैक्यव्यवस्थित्या मुखस्यैव तत्स्थत्वनिषेधेन प्रतिमुखस्य तत्सत्त्वनिषेधसंभवात् । मेघच्छायाप्रतिसूर्यादीनां न तथेति न मेघादिनिषेधेन छायादिनिषेधः । स्मृतिस्तु प्रातीतिकार्थमादाय दृष्टान्तपरा । न च एवं प्रतिबिम्बाद् बिम्बानुमानोच्छेदः साध्याविशेषादिति वाच्यम्, उपाधिकल्पितभेदेन विशेषोपपत्तेः । एतेन 'नेक्षेतोद्यन्तमादित्य'मित्यनेन उद्यत्प्रतिबिम्बदर्शनस्यापि निषेधः स्यात्, वारिस्थ सूर्यदर्शननिषेधेनाकाशस्थसूर्यदर्शनस्यापि निषेधश्च स्यात्, प्रतिबिम्बदर्शनेनैव दृष्ट्वा स्नायादिति शास्त्रार्थोऽप्यनुष्ठितः स्यादिति निरस्तम्, कल्पितभेदादेव शास्त्रीयव्यवस्थोपपत्तेः न च औदुम्बरतया ज्ञातेनानौदुम्बरेण औदुम्बरो यूपो भवतीति शास्त्रार्थसिद्धिप्रसङ्गः, आत्मतया ज्ञातदेहश्रवणादिनात्मा श्रोतव्य इति शास्त्रार्थसिद्धिप्रसङ्गश्चेति वाच्यम्, प्रमया उपपत्तौ संभवन्त्यां भ्रमेण तदुपपादनस्यायुक्तत्वात् । ननु अनादेर्जीवस्य नोपाध्यधीनं प्रतिबिम्बत्वम्, किन्तु तदधीनत्वे सति तत्सदृशत्वम्, तच्च भेदव्याप्तमिति विरुद्धो हेतुः । उक्तं हि सूत्रकृता- 'अत एव चोपमा सूर्यकादिव'दिति चेत्, न, उपाध्यधीनत्वं हि उपाधौ सत्येव सत्त्वम् । तच्च नानादित्वविरोधि, अनादिजीवस्यापि तत्संभवात् । अत एव प्रतिबिम्बपदस्य भेदसादृश्यार्थकत्वमादाय विरुद्धत्वोक्तिर्हेतावयुक्ता । तदेवम्–

प्रतिबिम्बस्य बिम्बेनैक्ये व्यवस्थिते ।
ब्रह्मैक्यं जीवजातस्य सिद्धं तत्प्रतिबिम्बनात् ॥

इत्यद्वैतसिद्धौ बिम्बप्रतिबिम्बन्यायेनैक्यसिद्धिः ॥

## न्यायामृततरङ्गिणी

॥ स्वनेत्रगोलकादाविति ॥ ननु दर्पणाहतचक्षूरश्मीनामग्रावच्छेदेन सम्बन्धात्स्वनेत्रगोलकादीनामभिज्ञाप्रत्यभिज्ञायाः सन्निहितपूर्वकाल एव सम्भवति । मैवम् । तत्काल एवाभिज्ञाप्रत्यभिज्ञयोः कुत्राप्यदर्शनात् ॥ नच भेदं भेदकश्चेति ॥ अपीतत्वव्याप्यशङ्खत्वसाक्षात्कारेप्यपीताभेदसाक्षात्कारदर्शनाद्भेदमित्युक्तम् । भेदसाक्षात्कारे सत्यभेदसाक्षात्कारः कुत्रापि न दृष्ट इत्यर्थः ॥ अतिप्रसङ्गादिति ॥ घटकलशयोरैक्यज्ञानेपि तदवच्छिन्नचैतन्यैक्याज्ञानाद्घटकलशयोर्भेदभ्रमः स्यात् ॥ विरोधाच्चेति ॥ सादृश्यस्य भेदगर्भत्वात्तेनाभेदसाधने विरोधः ॥ बिम्बादर्वाचीनइति ॥ नचैक्यवादिनः प्रतिबिम्बस्य बिम्बादर्वाचीनत्वमसिद्धम् । उपाध्यन्वयाद्यनुविधानेन तत्सिद्धेः । नचान्वयाद्यनुविधानं प्रतिबिम्बप्रत्यक्ष उपक्षीणम् । गेहान्तर्गतजलस्थसूर्यप्रतिबिम्बाप्रत्यक्षे प्रकाशविशेषेण बहिष्ठैर्गेहान्तर्गतजले सूर्यप्रतिबिम्बानुमानात् ॥ एतेनैवेति ॥ आदर्शे भिन्नं मुखमित्येषा प्रथमजा बुद्धिरभिज्ञा । अनन्तरं यत्स्वलक्षणं ग्रीवास्थमुखं तथैवेदं दर्पणस्थमपि भातीति जायमानं ज्ञानं प्रत्यभिज्ञेत्यर्थः ॥ अभेदधीरेवेति ॥ अभेदे प्रत्यक्षानुमित्योरभावस्य किञ्चित्स्वच्छताम्रादौ प्रतीते मुखच्छायामात्रे मुखसंस्थानविशेषाप्रतीत्या प्रत्यभि- ज्ञाभावस्य स्पष्टत्वादित्युक्तत्वात् ॥ च्छायादाविवेति ॥ ननु भेदबुद्धेः सोपपत्तिकत्वे सिद्धे प्रतिबिम्बस्य कारणान्तरकल्पनं तस्मिंश्च सोपपत्तिकत्वमित्यन्योन्याश्रयः । मैवम् । प्रतिबिम्बेकारणकल्पनाधीनस्य भेदबुद्धौ सोपपत्तिकत्वस्यानुक्तत्वात् । किन्तु वक्ष्यमाणरीत्या प्रत्यक्षानुमानागमसिद्धतया सोपपत्तिकभेदे सति प्रतिबिम्बे कारणान्तरमपि कल्प्यत इति ॥ नोपरक्तमिति ॥

> नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
> नोपरक्तं नवारिस्थं नमध्यं नभसोगत

मित्यत्र वारिस्थे सूर्यप्रतिबिम्बे सूर्यत्वाभावात्तत्रादित्यशब्दो गौणः ॥ त्वत्पक्षेपीति ॥ ममादित्यशब्दवत्तव वारिस्थशब्दो गौणः गगनस्थे सूर्ये उद्यत्त्वोपरक्तत्वादिवद्वारिस्थत्वाभावात् । नच वारिस्थत्वेनोपस्थितगगनस्थसूर्यपरं वारिस्थपदमिति वाच्यम् । लक्षणापत्तेरेव । भेदबुद्धेः सोपपत्तिकत्वमाह ॥ भेदस्त्विति ॥ एतस्य सिद्ध इत्यनेनाग्रेतनेन सम्बन्धः ॥ तथापियत्स्वलक्षणेति ॥ ननु तत्तत्स्वलक्षणत्वेनारोपितत्वेपि यावत्स्वलक्षणकत्वेनारोपितत्वानङ्गीकारेण गन्धादिप्रतीत्यापादनमशक्यम् । मैवम् । प्रत्यभिज्ञयाऽभेदसिध्युक्त्ययोगात् । यदि च

(तरङ्गिणी)

कस्तूर्यादीत्यादिनाग्रे निरसिष्यमाणत्वाच्च ॥ मालिन्यवदिति ॥ नन्वारोपपूर्वप्रतीतधर्मविशिष्टस्यैवारोप्याश्रयत्वादेकारोपितविशिष्टेपरारोपः । मैवम् । आरोपिताधिकसत्ताकस्यैवारोपाश्रयतावच्छेदकत्वात् रूप्यनिवृत्तावपि शुक्तित्वानिवृत्तिवदुपाध्यपगमे मालिन्यनिवृत्तावपि प्रतिबिम्बानिवृत्त्यापत्तेः ॥ प्रतिमुखमेवेति ॥ नन्वविद्योपहितस्याविद्याश्रयत्ववद्दर्पणोपहितस्य दर्पणाश्रितत्वं सम्भविष्यति । मैवम् । अविद्योपहितस्याविद्यकत्वेनाविद्याश्रयत्वानवच्छेदकत्वाद्दर्पणोपहितत्वस्यापि दर्पणाश्रितत्वादिरूपत्वेन दर्पणाश्रितत्वं प्रत्यप्रयोजकत्वात् ॥ मालिन्येति ॥ ननु संसार उपहितवृत्तिः । तथाचोपधेयांशमादाय सामानाधिकरण्यसंभवः । मैवम् । उपहितवृत्तिधर्मस्योपधेयेऽसत्त्वात् । वृत्त्युपहितस्य दृश्यत्वाङ्गीकारेण तदुपधेये शुद्धेपि दृश्यत्वापत्तेः । संसारस्य शुद्धाश्रितमोक्षसामानाधिकरण्यमानेतुमाह ॥ वृक्षस्थेति ॥ उपाधिना उपाधिसम्बन्धेन । दर्पणस्थत्वादिरूपउपाधिसम्बन्धो मुखेनानुभूयते प्रत्युत प्रतिबिम्ब एवानुभूयते इत्याद्युक्तहेतुमेतेनेत्यनेन परामृशति । संसारस्य मोक्षसामानाधिकरण्यमपि तवानिष्टमित्याह ॥ संसारस्यापीति ॥ वृक्षसंयोगवद्दुःखादिरूपः संसारोपि शुद्ध एव स्यात् । तथाच नित्यमुक्तत्वश्रुतिर्निर्विषया स्यात् । ननु सर्वसालक्षण्याभावेपि किञ्चित्सालक्षण्यमात्रेणैव बिम्बप्रतिबिम्बयोरभेदोस्तु । अत एव कस्तूर्या बिम्बप्रतिबिम्बयोः सौरभतदभावाभ्यां न भेदानुमानमत आह ॥ यदि चेति ॥ एतेनेति ॥ उक्तप्रत्यक्षादिना बिम्बप्रतिबिम्बयोर्भेदस्य सिद्धत्वेन ॥ मुखद्वयेति ॥ स्वस्य मुखद्वयाभावादित्यर्थः । ननु स्वमुखस्यैव ग्रहणमिति न नियमः । उपाधिसन्निहितमात्रस्यैव तथा ग्रहणात् । मैवम् । उपाधिप्रतिबिम्बतत्त्वातिरिक्तस्योपाधिसन्निहितत्वस्याभावात् ॥ अस्मिन्पक्षइति ॥ नन्वभिघातकानेकत्वेन चक्षुषोनेकाग्रतासंपत्त्या प्रत्यग्रं स्वाभिघातकावच्छिन्नमुखाग्राहकता अतोऽनेकमुखप्रतीतिः । मैवम् । अनेकाग्रताशब्देनानेककिरणवत्त्वं वाऽनेकत्वं वा । नाद्यः । तस्योपाधिं विनैव सिद्धेः । नहि चक्षुष एक एव किरणः । नान्त्यः । बाधितत्वात् ॥ दर्पणेति ॥ नचान्वयव्यतिरेकसिद्धोपाधिप्राबल्याद्विरुद्धरूपमुखप्रतीतिः । मैवम् । स्वस्मिन्मुखान्तरोत्पादकत्वान्यस्योपाधिप्राबल्यस्याभावात् ॥ अस्याइति ॥ चक्षुःपरिवृत्तिरूपप्रक्रियायाः ॥ विरलेति ॥ नच सर्वावच्छेदेनाभिघाताभावादन्तरेपि चक्षुःप्रवेशसम्भव इति वाच्यम् । यथेच्छकल्पनाया निष्प्रमाणत्वात् ॥ अस्यामिति ॥ एतेन तवापि शिलादौ प्रतिबिम्बमुत्पद्यताम् अस्वच्छतया परिहारस्तु ममापि सम इति निरस्तम् । स्वच्छतायाः प्रतिबिम्बोत्पत्तिं प्रतीव चक्षुःप्रतिघातं प्रत्यप्रयोजकत्वात् ॥ प्रतिचन्द्रादीति ॥ त्वन्मते प्रतिचन्द्रादिदर्शनस्यापि समीचीनचन्द्रादिदर्शनत्वात् । ननु यत्र

(तरङ्गिणी)
सामान्यतस्तद्दर्शनमात्रजन्यता तत्रेष्टापत्तिः । यत्र चोपाधिनिर्मुक्तज्ञानत्वेन विशेष्यजन्यता तत्रापादकाभावः । मैवम् । कपिलादीनामुपाधिकवलितत्वतद्विनिर्मुक्तत्वलक्षणद्विरूपाभावात् । आदित्यमीक्षयेदित्यादावुपाधिविनिर्मुक्तेतिविशेषस्य क्वाप्यभावात् ॥ अवच्छेदपक्ष इति ॥ यो विज्ञाने तिष्ठन्य आत्मनि तिष्ठन्नित्यादावन्तर्यामित्वं श्रूयते । तच्च यद्यप्यवच्छेदपक्षे न सम्भवति । घटावच्छिन्नाकाशे बाह्याकाशादर्शनात् । द्विगुणीकृत्य वृत्त्यनुपपत्तेः । तथापि प्रतिबिम्बपक्षे सम्भवति जलप्रतिबिम्बिताकाशे बाह्याकाशस्यापि दर्शनादित्यादिना ब्रह्मणोन्तर्यामित्वमुक्तम् । तच्च प्रतिबिम्बाख्यव्यक्त्यन्तरानङ्गीकारे न युज्यते ॥ उपाधेरिति ॥ प्रतिबिम्बाख्यवस्त्वन्तराभावात्कस्य पक्ष उपाधिः पतेत् ॥ प्रतिमुखे दर्पणस्थत्वस्येति ॥ ननु मुखप्रतिमुखयोरैक्यान्मुखस्यैतत्स्थत्वनिषेधेन प्रतिमुखस्यैव तत्स्थत्वनिषेधः । मैवम् । तयोरेकस्यासिध्यान्योन्याश्रयात् ॥ नहि भूमाविति ॥ एवमादर्शे मुखं नेत्येतावता प्रतिमुखमपि नास्तीति न संभवतीत्यर्थः । तस्मादित्युपसंहारः ॥ अन्यथेति ॥ तयोरभेदे ॥ किञ्चानादेरिति ॥ ननूपाध्यधीनत्वं ह्युपाधौ सत्येव सत्वम् । तच्च नानादित्वविरोधि । अनाद्युपाधिनाऽनादिजीवस्यापि तत्संभवात् । मैवम् । उपाधेर्ब्रह्मातिरिक्तस्य कल्पिततया सादित्वावश्यंभावात् ॥ दधीनत्व इति ॥ बिम्बाधीनत्वे सति बिम्बसदृशत्वम् ॥ अतएवचोपमेति ॥

बहवः सूर्यका यद्वत्सूर्यस्य सदृशाजले ।
एवमेवात्मका लोके परात्मसदृशा मता

इत्यादिषु जीवस्य परमेश्वरप्रतिबिम्बरूपोपमा क्रियते या सा सूत्रस्थचशब्दप्रदर्शितभेदे सत्येवेश्वराधीनत्वतत्सदृशत्वादिना । तत्र दृष्टान्तः सूर्यकादिवदिति । यथा सूर्यकस्य सूर्येणोपमा क्रियते तद्वत् । नच भेदाद्यसिद्धिः । पृथगुपदेशात् सन्ध्ये सृष्टिराह हि तद्गुणसारत्वादित्यादितत्सिद्धेः ॥ इदमुक्तं भवति ॥ जीवो ब्रह्मभिन्नः तत्प्रतिबिम्बत्वात् । सामान्यव्याप्तौ सूर्यको दृष्टान्तः ॥ भिन्नत्वेति ॥ अयं सौत्रचशब्दस्यार्थः । भिन्नत्वरूपसाध्यस्य तदधीनत्वादिरूपहेतोश्च सूर्यक इव जीवेपि सत्वादुपमा क्रियते । ननु सूर्यके उपाध्यधीनत्वमप्यस्ति जीवे तु तन्नास्ति नित्यत्वादत उक्तम् । नोपाधीति ॥ ॥ बिम्बप्रतिबिम्बैक्यभङ्गः ॥

## न्यायामृतकण्टकोद्धारः

ननु तथापि जीवब्रह्मभेदपरत्वं श्रुतीनां न सम्भवति । जीवो ब्रह्माभिन्नस्तत्प्रतिबिम्बत्वात् प्रतिमुखवदित्यनुमानविरुद्धत्वात् इत्यत आह नापीति । इम इति । नचापाततो भेदप्रतीतावपि सयुक्तिकप्रत्यक्षेण

(कण्टकोद्धारः)

बिम्बप्रतिबिम्बयोरभेदसिध्या दृष्टान्तोपपत्तिरिति वाच्यम् । तर्हि भेदप्रतीतिर्न स्यात् । प्रबलाभेदप्रतीत्या बाधितत्वात् । किंच भेदप्रतीतेरपि सयुक्तिकत्वस्य वक्ष्यमाणत्वेन परस्पर प्रतिबन्धादेकस्याप्यसिध्या दृष्टान्तासम्भवात् वक्ष्यमाणरीत्याऽभेदप्रतीतेरेवानुदयेन तत्प्राबल्यस्य दूरनिरस्तत्वाच्च । एतदभिप्रायेणैव शङ्कते नन्विति । तयेति । सादृश्यस्य भेदघटितत्वात् पदार्थान्तरत्वेऽपि तद्व्याप्तत्वात् इति भावः । किं सर्वत्र बिम्बप्रतिबिम्बस्थले प्रत्यभिज्ञास्तीत्युच्यते, उत क्वचिदेव? नाद्य इत्याह किंचिदिति । न च क्वचित्प्रत्यभिज्ञयैक्यसिद्धौ दृष्टान्तोपपत्तिरिति वाच्यम् । क्वचिद् भेदसिद्धौ अत्रापि सादृश्यमात्रेणैवं प्रतिभातीति प्रत्यभिज्ञायामेव प्रामाण्यसन्देहादिनैक्यासिद्धेः । स्वनेत्रेति । न च दर्पणाहत चक्षूरश्मीनामग्रावच्छेदेन सम्बन्धात् स्वनेत्रगोलकादीनामभिज्ञायाः सन्निहितपूर्वसमय एव सम्भवादिति वाच्यम् । मुखप्रतीत्यतिरिक्त गोलकाभिज्ञायाः पूर्वमसिध्या अग्रावच्छेदेन सम्बन्धासिद्धेः । सूर्यपार्श्व इति । नचात्रेव तत्रौपाधिकत्वानिर्णयात् तथाचौपाधिकत्वज्ञानं तल्लक्षणवत्वज्ञानं चाभेदज्ञानसामग्री । सा च प्रकृतेऽस्त्येवेति वाच्यम् । अभेदप्रतीतौ भेदस्यौपाधिकत्वनिर्णयः तन्निर्णये चाभेदधीरिति परस्पराश्रयात् तल्लक्षणवत्त्वं किं पाठतल्लक्षणवत्त्वमुत किञ्चिद्धर्मवत्त्वम्? नाद्योऽसिद्धेः । न द्वितीयः । अतिप्रसङ्गादिति । बिम्बमेवेति । नचावच्छिन्नो दृष्टोऽनवच्छिन्नोऽनुमित इति प्रतीत्योरविरोध इति वाच्यम् । अस्याः कल्पनाया अभेदसिध्यधीनत्वेनान्योन्याश्रयात् । प्रतिमुख इति । न च लक्षणत्वाज्ञाननिबन्धनं तदिति वाच्यम् । सर्वसालक्षण्यस्यानुभवबाधितत्वात्, किंचित्सालक्षण्यस्याति प्रासङ्गिकत्वात् । नन्वेवं दर्पणे मम मुखं लग्नमिति प्रतीतेः कागतिरित्यत आह किंचिदिति । एतावता भेदप्रत्ययोऽस्तीत्युपपादितम् । अधुनाऽभेदप्रत्यय एव न सम्भवतीत्याह किंचेति। अन्यथेति । भेदप्रत्ययानङ्गीकार इत्यर्थः । नचेति । न च लक्षणवत्वज्ञानदशायां भेदज्ञानस्यासत्कल्पत्वमिति वाच्यम् । तस्य प्रागेव दूषितत्वात् । न चोपाधिमहात्म्यात् अभेदसाक्षात्कारेऽपि भेदसाक्षात्कार इति वाच्यम् । उभय साक्षात्कारस्यापि अन्योन्याश्रयात् । किंचोपादानाभावाच्च न भेदभ्रमः सोपाधिकोऽपि सम्भवतीत्याह न चेति । अति प्रसङ्गादिति । बिम्बप्रतिबिम्बयोरैक्यज्ञानेऽप्यज्ञानानुवृत्तिः स्यात् । तत्रापि चैतन्यैक्याज्ञानस्य वक्तुं शक्यत्वादित्यर्थः । व्यावहारिकत्वापत्तेरिति । वियदादिवन्मूलाविद्याकार्यस्य त्वन्मते व्यावहारिकत्वनियमादित्यर्थः अन्यथेति । अविद्योपादानकत्वाभाव इत्यर्थः । न च दृश्यत्वादिना तस्य मिथ्यात्वम् । तस्य निरस्तत्वादिति भावेनाह दिगिति । तत्रेति बिम्बप्रतिबिम्बयोरैक्य इत्यर्थः । विरोधादिति । सादृश्यस्य भेदघटितत्वेन भेदव्याप्तत्वान्न तेनाभेदानुमानमित्यर्थः । असिद्धेरिति । प्रत्यङ्मुखत्वादिवैधर्म्यस्याग्र उपादयिष्यमाणत्वादिति भावः । पृथगिति । न च कार्यभेदसिद्धौ पृथक् कारणकल्पना । तस्यां च पृथक् कार्यसिद्धिरित्यन्योन्याश्रय इति वाच्यम् । भेदप्रत्यक्षस्योपपादितत्वेन कार्यभेदस्यानुभवसिद्धत्वात् ।प्रतिबिम्बमिति । नचालोकेऽपि प्रतिबिम्बसम्भवेन छायाविशेषत्वसिद्धिरिति वाच्यम् । छायाविशेषस्यालोकसापेक्षत्वात् । अत एव छाया प्रतीतिर्न तमसीति भावः । ननु क्लृप्तहेत्वभावात् पृथक्कार्याभाव एव किं न स्यादित्यत आह नहीति । न च तत्र भिन्नकालत्वेन दृष्टान्तवैषम्यमिति वाच्यम्। प्रकृतेऽपि मुखस्य पूर्वकालीनत्वेन भिन्नकालीनत्वात् । अत्रेव तत्रापि समानकालीनत्वात् । एतेन

(कण्टकोद्धारः)

कार्यानुरोधेन कारणोपादानेनेत्यर्थः । एतेनेति परामृष्टं हेतुं दर्शयति अभेदधीरेवेति । तथाचोपपत्तिः कुत्र सहकारिणी स्यादिति भावः । ननु भेदस्यानन्यथासिद्धप्रमाणसिद्धत्वेऽभेदव्यपदेशस्य गौणत्वं स्यात् । तदेव कुत इत्यत आह भेदस्त्विति । उक्तेति । दर्पणे मम मुखप्रतिबिम्ब एव, न मम मुखमिति, प्रत्यक्षेणेत्यर्थः । न्यूनेत्यादि । न च विरुद्ध धर्माणामौपाधिकत्वात् न तैर्वास्तव भेदसिद्धिरिति वाच्यम् । प्रमाणाभावस्योपपादितत्वेन विरुद्धधर्माणां स्वाभाविकत्वस्यैव स्थितत्वात् । अत एव श्रुतिस्मृत्यादिप्रतिपादितं सादृश्यं कल्पित भेदनिबन्धनमित्यपास्तम् । अत्रायं प्रयोगः । प्रतिबिम्बो बिम्बात्स्वाभाविकभेदवान् तदवृत्तिधर्माधिकरणत्वात् सम्मतवदिति । कस्तूरिका तत्प्रतिबिम्बयोरित्यादि । ननु प्रतिबिम्बादौ गन्धाद्यभावः किं प्रत्यक्षेण, अथवानुमानेन, उतागमेन? नाद्यः । इन्द्रियासन्निकर्षात् । नानुमानम् । तत्प्रतिबद्धलिङ्गाभावात् । नाप्यागमः । तदभावात् इति चेन्न । दूरस्थे पुष्पे तत्र गन्धप्रतीतिवत् दूरस्थेऽपि प्रतिबिम्बे घ्राणादिनैव तदभाव प्रतीत्युपपत्तेः । इन्द्रियाणां तैजसत्वेन रश्मिद्वारा सन्निकर्षसम्भवात् । यद्वा क्वचित् चाक्षुषे प्रतिबिम्बे बिम्बासाधरणधर्माभावे चक्षुषैव निर्णीते अन्यत्र तत्प्रतिबिम्बत्वेन तदसाधारण धर्माभावानुमानमिति को दोषः? यद्वोदाहृतश्रुतिस्मृत्यादिभिः बिम्बप्रतिबिम्बयोर्भेदे निर्णीते तदृष्टान्तेनोक्तस्थले उक्तरीत्यानुमानमिति न कश्चिद् दोषः । ननु जीवब्रह्मणो र्भेद भ्रमेण संसारासंसारादि व्यवस्था भविष्यतीत्यत आह नहीति । आरोपितेनेति । तथाच विशिष्टाविशिष्टभेदेन संसारादि व्यवस्थोपपत्तिरिति भावः । मालिन्यवदिति । ननु रज्जौ सर्पत्वारोपानन्तरं तद्विशिष्टे अभिसर्पणाद्यारोपवत् आरोपितैकविशिष्ट इतरारोपो भविष्यतीति चेन्न । सर्पत्वविशिष्टस्यैव जीवस्य विशिष्टत्वेन मिथ्यात्वापत्तेर्ब्रह्मैक्यं न स्यात् । प्रतिमुखमेवेति । नचाविद्योपहितस्याविद्याश्रयत्ववत् दर्पणोपहितस्य दर्पणाश्रितत्वं भविष्यतीति वाच्यम् । दृष्टान्तस्यासंप्रतिपत्तेः । ननु कथं मोक्षस्य संसारसामानाधिकरण्यायोगः? उपाधेरवच्छेदकत्वमात्रेणाधारकोटावप्रवेशादित्यत आह एतेनेति । एतेनेति परामृष्टं हेतुं दर्शयति संसारस्यापीति । ननु मया कस्तूर्यादि प्रतिबिम्बे तत्स्वलक्षणाभावेऽपि तदाकारतामात्रेणैक्यमङ्गीक्रियते । तथाच भवदीयो हेतुरप्रयोजक इत्यत आह अबाध इति । प्रत्यक्ष विरोधेन युक्तेरेवाभासत्वादिति भावः छायादावपीति । तत्रापि यथाकथञ्चित् युक्तिबाधस्य वक्तुं शक्यत्वात् तत्प्रत्यक्षविरोधेन युक्तेराभासत्ववर्णने प्रकृतेऽपि तथैव स्यादिति भावः । प्रत्यङ्मुखत्वादिधीरित्यत्र यां युक्तिं कश्चिदाह तामतिदेशेन दूषयति एतेनेति । अत्र युक्तिरेकस्यैव प्राङ्मुखत्वादिना ग्रहणसम्भवे व्यक्त्यन्तरकल्पने गौरवमिति । एतेनेति परामृष्टं हेतुं दर्शयति परावृत्त्येति । अस्मिन् पक्षे बहूनां दोषाणां विद्यमानत्वात् गौरवं प्रामाणिकमिति भावः । ननु स्वमुखस्यैवेति नियमोऽसिद्धः । सन्निहितमात्रस्य परावृत्त्यङ्गीकारादिति चेन्न । तावता स्वमुखस्यैव ग्रहणं स्यात् । नतु भिन्नदेशस्थस्यान्यस्य परावृत्तानां तेषां स्वाभिमुखत्वादिति भावः । अस्मिन् पक्ष इति । न चाभिघातकानेकत्वेन चक्षुषोऽनेकाग्रसम्पत्त्या प्रत्यग्रं स्वाभिघातकावच्छेदकमुखग्राहकतया दृष्टान्तवैषम्यमिति वाच्यम् । अभिघातकानेकत्वेनाभिघातविषयस्यानेकत्वाभावात् । अन्यथानेकैरेकदोत्सारितस्यानेकत्वापत्तेः । न च तेज सस्तथात्वमिति वाच्यम् । दीपादि रश्मीनामनेकाभिघातेऽनेकत्वादर्शनात् । अस्यां कल्पनायां प्रमाणाभावाच्च । मणिदर्पण-

(कण्टकोद्धारः)

कृपाणेष्विति । नचान्वय व्यतिरेक सिद्धोपाधिप्राबल्यनिबन्धनेयं प्रतीतिरिति वाच्यम् । अन्वय व्यतिरेकयोरभिधातकत्वमात्रोपक्षीणत्वेन विरुद्धप्रतीतावनुपयोगात् । परावृत्तेरनिर्णीतत्वेनास्यां कल्पनायामन्योन्याश्रयाच्च । अस्या इति । न चेयं चाक्षुषप्रतिबिम्बविषयैवोपपादितेति वाच्यम् । जीवब्रह्मणोरैक्यार्थं बिम्बप्रतिबिम्बदृष्टान्त उपपाद्यते । तथा च प्रकृतानुपयुक्तोपपादनेऽर्थान्तरत्वापातात् । नेत्रस्थेति । तथा च ग्रीवास्थमुखग्रहणं न स्यादिति भावः । विरलावयवस्येति । न च सर्वावच्छेदेनाभिधाताभावाच्चक्षुषः अन्तरपि प्रवेश सम्भव इति वाच्यम् । विनिगमकाभावेनैतदवच्छेदेनाभिधात इत्यत्र नियामकाभावेन सर्वावच्छेदेनैव तदावश्यकत्वात् । प्रतिबिम्बग्राहकैरेव कालान्तरस्थग्रहणानुभवाच्च । दर्पणाद्यभिहतेनेति । चक्षूरश्मीनामति व्यवहित ग्राहकत्वेन व्याप्तत्वात् पृष्ठभागस्थेनापि सम्बन्धस्यावश्यकत्वादिति भावः । अस्यामिति । न च तव यत्र प्रतिबिम्बोत्पत्तिः स्वच्छे, तत एव परावृत्त्यङ्गीकारान्नोक्तदोष इति वाच्यम् । पाषाण शरीरादि परावृत्तः स्वच्छताया अभावेपि भित्त्यादिना दर्शनेन तत्र तस्या अनुपयोगात् । उत्पत्तेरस्वच्छेऽदर्शनेन तत्र तदुपयोग कल्पनादिति भावः । प्रतिचन्द्रादि दर्शनेनेति । न चेष्टापत्तिरिति वाच्यम् । चन्द्रदर्शनवत् चन्द्रप्रतिबिम्बदर्शनस्य तादृशसुखाजनकत्वेनेष्टापत्तेरयोगात् । सूर्यकस्यापीति । न च सूर्यकग्रहणकाले दुर्दर्शत्व प्रयोजकस्य गोलकस्य सूर्यतेजः सांमुख्यस्याभावान्न, दुर्दर्शत्वमिति वाच्यम् । नायनरश्मीनां सौरतेजःसम्बन्धस्यैव दुर्दर्शत्व प्रयोजकत्वे सम्भवति गौरवेण गोलकतेजः सांमुख्यस्याप्रयोजकत्वात्। अतिस्वच्छदर्पण इवेति । न चोपाधिगत मालिन्यादिकं तत्र प्रतिबन्धकम् । अन्यथा तवापि स्वच्छ इवास्वच्छेऽपि तादृशप्रतिबिम्बोत्पादापत्तिर्दुःपरिहरेति वाच्यम् । अस्मिन् पक्षे उपाधेः प्रतिधातकत्वमात्रेणोपयोगितया तद्गतमालिन्यादेः प्रतिबन्धकत्वोक्त्ययोगात् । मत्पक्षे तु स्वच्छकिंचित्स्वच्छावयवानां स्वच्छकिंचित्स्वच्छ प्रतिबिम्ब जनकत्वेन मालिन्यवति स्वच्छप्रतिबिम्बोत्पत्त्यसम्भवात् । अवच्छेदपक्ष इति । तथाच प्रतिबिम्बपक्षे द्विगुणीकृत्य वृत्तिमुपपादयता उपाधौ प्रतिबिम्बवृत्तिः स्वीकृता । अन्यथा तदुपपादनासम्भवात् । तथाच तत्र प्रतिबिम्बाभावाङ्गीकारे स्वोक्तिविरोध इत्यर्थः । न च सर्वोपाध्यवच्छिन्नत्वैकदेशोपाध्यवच्छिन्नत्वाभ्यां कल्पितभेदेनच स्वोक्त्यविरोधः सम्भवतीति वाच्यम् । प्रतिबिम्बनपक्षे अवच्छेदपक्षमादाय अविरोधोपपादनस्यासम्भवात् । उपाधेरिति । नायनरश्मिप्रतिधात मात्रेणैवोपयोगेन कल्पितभेदप्रतिबिम्बाभावेन पक्षपातायोगादिति भावः । एतेनेति । विशिष्टबाधस्य विशेषणबाधेनाप्युपपत्त्या विशेष्यविषयत्वाकल्पनात् । अन्यथा स्वर्गी ध्वस्त इत्यादावपि तथात्वापत्तेरिति भावः । एतेनेति परामृष्टं हेतुं दर्शयति नात्रेति । तथाच बाधस्य बिम्बविषयत्वमेव, न प्रतिमुखविषयत्वमिति भावः । ननु मुखबाधेनैव प्रतिमुखबाधः । तयोरेकस्वलक्षणकत्वेनैक्य व्यवस्थितेरित्यत आह नहीति । पूर्वोक्तरीत्यैकस्वलक्षणकत्वस्यासिंध्या ऐक्यासिद्धेः अन्यनिषेधेनान्यनिषेधेऽति प्रसङ्ग इति भावः । तस्मादिति । पूर्वोक्तप्रमाणैरभेदस्यैव सिद्धत्वात् बाधकाभावाच्चेत्यर्थः । बिम्बप्रतिबिम्बयोर्भेदानङ्गीकारे बाधकमाह अन्यथेति । लिङ्ग लिङ्गि भावस्य भेदनियतत्वात् । अन्यथा सिद्धसाधनादिप्रसङ्गादिति भावः । अनौदुम्बरतयेति । नचानौदुम्बरात् कल्पिताभेदेऽपि स्वाभाविकौदुम्बराभेदस्य सत्वात् स्वाभाविकाभेदेन कल्पितभेदस्य बाधात्

(कण्टकोद्धारः)

**न स्वार्थासिद्धिरिति वाच्यम् । प्रकृतेऽपि स्वाभाविकमुखाभेदेन कल्पितभेदबाधया लिङ्गलिङ्गि भावाद्यसिद्धेः । आत्मतयेति । न च श्रवणादिकर्मणः अकल्पितात्मत्वमेव श्रवणादि शास्त्रार्थसिद्धिप्रयोजकमिति नातिप्रसङ्ग इति वाच्यम् । लिङ्ग लिङ्गि भावादावपि स्वाभाविक भेदस्यैव प्रयोजकत्वादिति वक्तुं शक्यत्वात् । आत्मनो निर्धर्मकत्वेन कस्याप्यकल्पितस्य धर्मस्याभावादिति । तथाच प्रतिबिम्बत्वहेतुः प्रतिकूलतर्कबाधित इति भावः । स्वरूपासिद्धो विरुद्धो वेत्याहकिंचेति । प्रतिबिम्बत्वहेतोः स्वरूपासिद्धत्वादिकं सिद्धान्त संमत्या द्रढयति उक्तं हीति । इति बिम्बप्रतिबिम्बैक्यभङ्गः ।**

## न्यायामृतप्रकाशः

अत एवेति ॥ प्रतिबिम्बस्य वस्त्वन्तरत्वादेव । बालान्प्रति आदर्शे प्रदर्शिते सति अस्मत्सदृशोऽन्यो बाल इत्येव भ्रमो बालानां भवति नाहमेवेतीत्यर्थः ॥ अतिप्रसङ्गादिति ॥ घटपटयोरपि वस्तुगत्या ऐक्यमेव । तत्र भेद-प्रतीतिस्तु तदवच्छिन्नचैतन्यैक्याज्ञानाद्भ्रमरूपेति वक्तुं शक्यत्वादित्यतिप्रसङ्ग इत्यर्थः ॥ क्रियासाम्यस्येति ॥ बिम्बचलने सति प्रतिबिम्बचलनमिति बिम्बचलनाधीनचलनरूपक्रियासाम्येत्यर्थः ॥ बिम्बादर्वाचीन इति ॥ बिम्बसमानकालोत्पत्तिके प्रतिबिम्बे कथञ्चित्सम्भवेपि बिम्बादर्वाचीने बिम्बोत्पत्तेः पश्चादुत्पद्यमाने बिम्बकारण-मात्रजन्यत्वस्यासिद्धेरित्यर्थः । तर्हि किं तदुत्पत्तौ कारणमित्यत आह ॥ पृथगिति ॥ परिवेषः खेणेत्यपभ्रष्टभाषा किं च च्छाया तावन्न त्वन्मते देहप्रतिबिम्बः । तथा च च्छायायां तावत्पृथक्कारणं त्वयाऽवश्यं वाच्यमेव तदेव मन्मते प्रतिबिम्बोत्पत्तौ कारणं भवति कुत इत्यत आह ॥ प्रतिबिम्बमपि हीति ॥ ननु परिदृश्यमानानां बिम्बोत्पत्तौ क्लृप्तकारणानां सम्भवान्न प्रतिबिम्बं वस्त्वन्तरमित्यत आह ॥ न हीति ॥ उपलभ्यमानः । प्रदेशान्तर इति शेषः । कल्पितभेदमात्रमेवाङ्गीकृत्य कल्पितभेदयुक्तप्रतिबिम्बरूपवस्त्वन्तरानङ्गीकारे दूषणमाह ॥ न हीति ॥ शुक्तावध्यस्तं रूप्यं प्रातिभासिकं वस्त्वन्तरं नेति न हीत्यन्वयः । तथा च शुक्तौ न शुक्तिरिति भेदमात्रमेव स्यान्न तु तत्राध्यस्तं रूप्यं त्वन्मते स्यादित्यर्थः ॥ स्वात्मानं प्रतीति ॥ मैत्रं प्रतीत्यर्थः ॥ दृष्ट्वा स्नायात् ॥ आदित्यं दृष्ट्वा स्नायात् स्नानफलको भवतीत्यर्थः । दृष्ट्वा स्नात इत्यपि क्वचित्पाठः । अन्त्यजा वैष्णवादीनां दर्शने सति धर्मशास्त्रे आदित्यमवलोकयेदिति प्रायश्चित्तं विहितमस्ति अयं च शास्त्रार्थो गगनस्थबिम्बभूतादित्यावलोकना-भावेपि वारिस्थप्रतिबिम्बदर्शनेनैवानुष्ठितः स्यात्तयोरभिन्नत्वादित्यर्थः ॥ ॥ बिम्बप्रतिबिम्बैक्यभङ्गविवरणम् ॥

# ३३. जीवाणुत्वविवरणम्

**अणुत्वाच्च जीवो व्याप्तादीशाद्भिन्नः । नन्वेतदयुक्तम्, "नित्यः सर्वगतः स्थाणु" रित्याद्यागमैः । जीवो नाणुः प्रत्यक्षगुणाश्रयत्वात्, प्रत्यक्षत्वाच्च, घटवदित्य-द्यनु-मानैश्च विपक्षे देहव्यापि स्पर्शादिज्ञानं न स्यादित्यादिबाधकसहितैस्तस्य विभुत्वा-दिति चेन्न, अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं च पापं च**

''बालाग्रशतभागस्य शतधाकल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पत''

इत्यादिश्रुत्या ''अणुमात्रोऽप्ययं जीव'' इत्यादिस्मृत्या, जीवो न व्याप्तः उत्क्रान्तिमत्वाद्गतिमत्वादागतिमत्त्वात्क्रियावत्त्वाच्च खगशरीरवदित्याद्यनुमानैश्च विपक्षे हेतूच्छित्तिबाधकसहितैरणुत्वसिद्धेः । न चासिद्धिः, ''सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमधिगच्छति, अमुष्मादिमं लोकमागच्छती''त्यादि श्रुतिभिः ''तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तत'' इत्यादिस्मृतिभिश्च तत्सिद्धेः । न च गत्यादिश्रुतिर्बुद्धिविषया ''नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति, ते अशुभमनुभूयावर्तन्त'' इत्यादिश्रुतौ गतेः सुखदुःखाद्यनुभवसामानाधिकरण्योक्तेः । ''स एनान्ब्रह्म गमयती''त्यादिश्रुतौ तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना'' इत्यादि स्मृतौ च मुक्तिसामानाधिकरण्योक्तेश्च । तेन प्रद्योतेनैष आत्मा निष्क्रामती''त्यात्मनिष्ठत्वश्रुतेश्च । अन्यथा बन्धमोक्षादिकमपि बुद्धेरेव स्यात् । न च श्रुतिर्बुद्ध्युपाधिकगत्यादिविषया । ''तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेमवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याती''ति स्वाभाविकगत्याश्रयशकटदृष्टान्तोक्तेः । ''तमुत्क्रामन्तं प्राणोऽनूत्क्रामती''त्यादि श्रुतौ त्वद्रीत्या प्राणाख्यबुद्धिगतितः प्रागेव जीवगत्युक्तेश्च । ''मन उदकामन्मीलित इवाश्नन्पिबन्नास्ते वे''त्यादिश्रुतौ मनस उत्क्रमणेऽणि आत्मनस्तदभावश्रवणाच्च । ''तदा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य''मित्यादि श्रुतौ नामरूपाद्विमोक्षानन्तरमपि गतिश्रवणाच्च । परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते,'' ''स उत्तमः पुरुषः स तत्र पर्येती''त्यादिश्रुतौ मुक्तेऽपि गत्युक्तेश्च ।

किं च बुद्धिगतेन गत्यादिना तदवच्छिन्नात्मनि गत्यादि जायते वा ? बुद्धिगतमेवारोप्यते वा ? उपचर्यते वा ? नाद्यः, घटगत्या तदवच्छिन्ने नभसि गत्यन्तरादृष्टेः, अन्यथा यतो घटस्य बुद्धेर्वा गतिः तत्राकाशस्यात्मनो वा सच्छिद्रत्वम् अन्यत्र द्विगुणीकृत्य वृत्तिश्च स्यात् । न च प्रतिबिम्बपक्षे नोक्तदोष इति

वाच्यम्, तस्य वस्त्वन्तरत्वमते दोषाभावेऽपि दर्पणाभिहता दृष्टिः परावृत्य स्वमुखं गृह्णातीति त्वन्मते उपाधिगत्या बिम्बे न गतिः प्रतिबिम्बे तु सेत्यस्यायोगात् । नान्त्यौ, कर्तुरवच्छिन्नस्यैतदात्मप्रदेशस्य भोगायतनलोकान्तराप्राप्तेः, किं तु गतया बुद्ध्यावच्छिन्नप्रदेशान्तरमेव भुङ्क्त इति स्वीकारे कृतहान्यादिप्रसङ्गात्, कर्तुर्भोक्तुश्चावच्छिन्नस्य भिन्नत्वाद्, अभिन्ने चानवच्छिन्ने कर्तृत्वाद्यभावात्, बाधकं विना बहूनां वाक्यानामप्रामाण्यस्य उपचरितार्थत्वस्य चाऽयोगाच्च । न च व्यावहारिकस्य गत्यादेः, सत्त्वान्नात्यन्ताप्रामाण्यम्, अमूर्ते मूर्तावच्छिन्नेऽपि व्यावहारिकगत्यदृष्टेः, व्यावहारिकत्वे घटगतिवद् बुद्धिगतव्यावहारिकगत्युपाधिकत्वायोगाच्च । न च व्यावहारिकत्वेऽपि धर्मिणा परमार्थसदात्मना सत्त्वाभावादौपाधिकत्वं धर्मिणोऽवच्छिन्नात्मनोऽप्यपरमार्थत्वात् । विस्तृतं चैतत्कर्तृत्वाध्यासभङ्गे ।

केचित्तु आत्मत्वमणुनिष्ठं द्रव्यत्वसाक्षाद्व्याप्यजातित्वात्, पृथिवीत्ववत्, जीवो वा न व्याप्तः, भूतेतरत्वे सति परत्वासमवायिकरणानाधारत्वे सत्यसर्वज्ञत्वात्, शब्देतरानित्यविशेषगुणाश्रयत्वात्, संस्काराश्रयत्वाच्च, कटवत् । जीवोऽणुः ज्ञानासमवायिकरणाश्रयत्वात् मनोवदित्याद्यनुमानैर्जीवस्याणुत्वमित्याहुः । अणुत्वेऽपि जीवस्य देहव्यापिस्पर्शादिज्ञानं ज्ञानरूपगुणव्याप्त्या युक्तम् । जीवस्याणुत्वेऽपि तद्गुणव्याप्तिस्तु प्रदीपगुणभूतायाः प्रभायाः प्रदीपं विनान्यत्र वर्तनवत् जातिसमवायादेः धर्मितोऽन्यत्र वर्तनवद् वन्ह्यौष्ण्यस्य तत्समीपे वर्तनवद् गन्धस्य द्रव्यं विनान्यत्र वर्तनवच्च युक्ता । वह्निसमीपस्थौष्ण्यस्य तत्समीपस्थानुद्भूतरूपतेजोऽन्तरगुणत्वे वह्नेरुद्भूतस्पर्शो न सिद्ध्येत् । न च गन्धे आश्रयद्रव्यावयवगतिः कल्प्या, सर्वतो योजनादिव्यापिगन्धोपलम्भायानेकस्थूलावयवापसारेण सद्यो गुरुत्वादिह्रासस्य द्रव्यक्षयस्य चापातात् । स्फटिककरण्डकान्तःस्थकस्तूर्यादौ चावयवान्तरानुप्रवेशकल्पने मानाभावात् प्रत्यभिज्ञाविरोधाच्च । "नित्यः सर्वगतः स्थाणु"रित्यत्र "नित्यसर्वगते विष्णावणुर्जीवो व्यवस्थित" इत्यादिस्मृत्यनुसारेण सर्वगतस्थश्चासावणुश्चेतिविग्रहः । अन्ये तु क्रमेण नानादेहसम्बन्धाज्जीवस्य सर्वगतत्वोक्ति-

रित्याहुः । प्रत्यक्षत्वादितिहेतुस्त्वप्रयोजकः, तेनैवाविभुत्वस्यापि सुसाधत्वाद् उक्त-श्रुत्यादिविरुद्धश्च । किं चात्मनां व्याप्तत्वे सर्वशरीरेन्द्रियाणां सर्वदा सर्वात्म-संयुक्तत्वेन सर्वात्मसाधारण्यात् । कर्मणापि साधारणदेहादिकृतत्वेनासाधारण्या-योगात् । अहंत्वा पादेरपि नियामकमूलसम्बन्धाद्याभावेरोनैयत्यायोगात् । सर्वाण्यपि शरीराणि सर्वेषां भोगायतनानि स्युरिति प्रतिकूलतर्कपराहतिः । एतेन चैत्रभोगार्थ-स्यांकुरादेः तददृष्टजन्यत्वाद् आत्मसमवेतस्य चादृष्टस्य साक्षादम्कुराद्य सम्बन्धेनात्म-द्वारा सम्बन्धस्य वाच्यत्वाद्, आत्मनो विभुत्वमिति निरस्तम् । चैत्रभोगाहेतो-रप्यङ्कुरादेरात्मद्वारकादृष्टसम्बन्धेऽपि तदजन्यत्वेन तज्जन्यत्वे तस्यातन्त्रतया प्रति-योग्यनुयोगिभाववाच्यवाचकज्ञानज्ञेयादाविवादृष्टकार्ययोरपि सम्बन्धान्तरस्यैव वक्त-व्यत्वात् । अस्ति हि कारीर्यदृष्टस्य वृष्ट्या सह तदुद्देशेन विहितक्रिया-जन्यत्वादिरूपः सम्बन्धः । न च "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यव-रोऽपि दृष्ट" इति श्रुतौ बुद्धिगुणेनाराग्रमात्रत्वमात्मनो गुणेन तु विभुत्वमुक्तमिति वाच्यम्, "तद्यथा अणुनश्चक्षुषः प्रकाशो व्याप्त एवमेवाऽस्य पुरुषस्य प्रकाशो व्याप्तोऽणुर्ह्येवैषपुरुष" इति श्रुत्यनुसारेण बुद्धेर्ज्ञानस्य गुणेनावरः आत्मगुणेन त्वाऽऽराग्रमात्र इति अन्वयादिति दिक् । तस्मादणुत्वादपि जीवो व्याप्तादीश्वराद्भिन्न इति । जीवाणुत्वम् ॥

तस्मादविरोधाध्यायोक्तन्यायैर्दोषिभ्यो जीवेभ्योऽत्यन्तभिन्नस्य निर्दोषस्य ब्रह्मणः साक्षात्कारायाङ्गीभूतं निदिध्यासनमङ्गभूतं श्रवणादिकं च मुमुक्षुणा कार्यमिति सिद्धम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना सङ्गृहीते न्यायामृते द्वितीयः परिच्छेदः ॥ २ ॥

## अद्वैतसिद्धिः

ननु अणुत्वाज्जीवस्य कथं व्यापकादीश्वरादभेद इति चेन्न, 'नित्यः, सर्वगतः', 'स वा एष महानज आत्मा' इत्यादिश्रुत्या जीवो नाणुः, प्रत्यक्षगुणाश्रयत्वात् प्रत्यक्षत्वाच्च, घटवद्,

(अद्वैतसिद्धिः)

आत्मत्वादभूतत्वाच्चेश्वरवदित्याद्यनुमानैश्च जीवानणुत्वसिद्धेः । विपक्षे च देहव्यापिसुखज्ञानाद्यनुपलम्भापत्तिर्बाधिका । न च– ''अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं च पापं च,''

बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥

इति श्रुत्या जीवोऽणुरिति वाच्यम्, व्यापकत्वप्रतिपादकबहुश्रुतिविरोधेन दुर्विज्ञेयत्वपरत्वाद् देहव्यापिगुणोपलम्भस्यान्यथयितुमशक्यत्वात् । एतेन जीवो न व्यापकः, उत्क्रान्तिमत्त्वाद्, गतिमत्त्वात्, क्रियावत्त्वाच्च, खगशरीरवद्, विपक्षे हेतूच्छित्त्यापत्तिर्बाधिकेति निरस्तम्, हेत्वसिद्धेः । न च 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमधिगच्छति, अमुष्मादिमं लोकमागच्छती'त्यादिभिः श्रुतिभिः 'तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तत'' इत्यादिस्मृतिभिश्च हेतुसिद्धिरिति वाच्यम्, उत्क्रमणादीनां बुद्धिगतानां तदुपहिते श्रुत्या प्रतिपादनात् । न च 'नाकस्य पृष्ठे सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति, ते अशुभमनुभूयावर्तन्त' इत्यादौ श्रुतौ सुखदुःखाद्यनुभवसामानाधिकरण्यस्य गतावुक्तेः कथं तस्या बुद्धिगतत्वमिति वाच्यम्, आत्मनि सुखदुःखाद्यनुभवस्यापि बुद्ध्युपाधिकत्वेन तत्सामानाधिकरण्यस्य गतौ स्वाभाविकत्वासाधकत्वात् । ननु– 'स एनान् ब्रह्म गमयती'त्यादिश्रुतौ 'तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना' इत्यादिस्मृतौ च गतेर्मुक्तिसामानाधिकरण्योक्तेः कथमसिद्धिरितिचेन्न, अव्यापकस्यैवाव्यापकं प्रत्येव गमनम् । ब्रह्म च व्यापकं तत्प्रति गमनासंभवेन गमनपदस्य उपाधिकृतभेदराहित्य- परतया गतिमुक्तिसामानाधिकरण्याप्रतिपादकत्वात् ।

ननु– 'प्रद्योतेनैव एष आत्मा निष्क्रामती'त्यात्मनिष्ठत्वश्रुतेर्नासिद्धिः, अन्यथामोक्षादिकमपि बुद्धेरेव स्यात्, नापि श्रुतेर्बुद्ध्युपाधिकगत्यादिविषयत्वं संभवति, 'तद्यथा अनः सुसमाहितमुत्सर्जद्यायादेवमेवायं शरीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् याती'ति स्वाभाविकगत्याश्रयशकटदृष्टान्तोक्तेरिति चेन्न, एष इति बुद्ध्युपहितस्यैव परामर्शेन शुद्धात्मनिष्ठत्वस्य गतावनुक्तेः, मोक्षे तु बुद्ध्युपरमेण तन्निष्ठत्वस्यासंभाविततया वैषम्यात्, सर्वसाम्यस्य दृष्टान्ततायामप्रयोजकत्वात्, तद्बलेन स्वाभाविकत्वपर्यन्तत्वस्यासिद्धेः । न च– 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती''त्यादिश्रुतौ प्राणाख्यबुद्धिगतितः प्रागेव जीवे गत्युक्तेः कथं बुद्धिगत्याऽन्यथासिद्धिरिति वाच्यम्, प्राणाख्यांशेन क्रियाशक्तिशालिना पश्चाद्गतावप्यंशान्तरेण प्रथम-

(अद्वैतसिद्धिः)

मुत्क्रमणसंभवात् । एतेन– 'मन उदक्रामन्मीलित इवाश्नन् पिबन्नास्ते वेत्यादिश्रुतौ मन-उत्क्रमणेऽपि आत्मनस्तदभावश्रवणाच्च कथं तद्गत्यैव गतिमत्त्वमिति निरस्तम्, उपहित-स्योपाधिनिबन्धनगतिमत्त्वे बुद्ध्यनुपहितस्य तदभावाविरोधात् । न च तथा 'विद्वान्नाम-रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमित्यादिश्रुतौ नामरूपविमोक्षानन्तरमपि गतिश्रवणात् कथं सा औपाधिकीति वाच्यम्, परमपुरुषस्य सर्वत्र सन्निहितत्वेन तं प्रति गमनासंभवेन उपैतीत्यस्यापि पूर्ववदर्थान्तरपरत्वात् । अत एव ''परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः स तत्र पर्येतीत्यादिश्रुतिरपि न गत्यर्था ।

ननु– बुद्धिगतेन गत्यादिना किं तदवच्छिन्नात्मनि गत्यादि जायते ? उत बुद्धिगत-मेवारोप्यते ? उतोपचर्यते ? नाद्यः, घटगत्या तदवच्छिन्ने नभसि गत्यन्तरादर्शनात् । अन्यथा यतो घटस्य बुद्धेर्वा गतिः तत्राकाशस्यात्मनो वा सच्छिद्रत्वं स्यात् । अन्यत्र द्विगुणीकृत्य वृत्तिश्च स्यात् । न च प्रतिबिम्बपक्षे नोक्तदोष इति वाच्यम्, तस्य वस्त्वन्तरत्वमते उक्तदोषाभावेऽपि दर्पणाहता दृष्टिः परावृत्य स्वमुखं गृह्णातीति त्वन्मते उपाधिगत्या बिम्बे न गतिरिति प्रतिबिम्बेऽप्यस्यायोगात् । नान्त्यौ, कर्तुरवच्छिन्नस्यैतदात्मप्रदेशस्य न भोगायतन-लोकप्राप्तिः, किन्तु गतया बुद्ध्याऽवच्छिन्नस्य प्रदेशान्तरस्यैवेति स्वीकारे कृतहान्यादिप्रसङ्गात् कर्तुर्भोक्तुश्चावच्छिन्नस्य भिन्नत्वात् अभिन्ने वाऽनवच्छिन्ने कर्तृत्वाद्यभावादिति चेन्न, उपाधिगत्या उपहिते गतिप्रयोग औपचारिक एव । न चैवं कृतहान्याद्यापत्तिः, यद्बुद्ध्य-वच्छिन्नेन येनैवात्मना यत् कृतं तदवच्छिन्नेन तेनैव भोगजननात् । न ह्यात्मनो निरवयवस्य प्रदेशोऽस्ति । यत्तु अवच्छिन्नस्य कर्तुर्भोक्तुर्भेद इत्युक्तम्, तन्न, अवच्छेद्यात्मनोऽवच्छेदक-बुद्धेश्चैक्येऽवच्छिन्ने भेदस्य वक्तुमशक्यत्वात् । न चात्मत्वमणुनिष्ठं द्रव्यत्वसाक्षाद्व्याप्य-जातित्वात् पृथिवीत्ववदित्यनुमानम्, व्यापकावृत्तित्वस्योपाधित्वात्, स्पर्शादिसामानाधि-करण्यस्याप्येवं साधनप्रसङ्गाच्च । जीवो न व्यापकः, भूतेतरत्वे सति परत्वासमवायि-कारणानाधारत्वे सत्यसर्वज्ञत्वात् शब्देतरानित्यविशेषगुणाश्रयत्वात् संस्काराश्रयत्वाच्च कटवदि-त्यत्रानात्मत्वमुपाधिः, अनित्यविशेषगुणसंस्कारादीनामुपाधिवृत्तित्वेनासिद्धिश्च । एवं महत्त्व-स्यापि सुसाधत्वं च । जीवः, अणुः, ज्ञानासमवायिकारण संयोगाश्रयत्वात्, मनोवद् इत्यत्र मध्यमपरिमाणवत्त्वेन मनसो दृष्टान्तासम्प्रतिपत्तेः । जडत्वस्योपाधित्वाच्च । सर्वत्र चात्र

(अद्वैतसिद्धिः)

व्यापिसुखज्ञानाद्युपलम्भः प्रतिकूलस्तर्कः, एकस्याणोरेकदा व्यवहितदेशद्वयावच्छेदासंभवेन 'पादे मे सुखं शिरसि वेदना' इत्यादियुगपदनुभवविरोधश्च । न च गुणिनः अणुत्वेऽपि गुण-व्याप्त्या व्यापिसुखज्ञानानुमानविरोधः, गुणिव्यतिरेकेणास्यासंभावितत्वात् । अन्यथा घटव्यति-रेकेणापि घटरूपं स्यात् । प्रदीपादन्यत्र दृश्यमानापि प्रभा न दीपगुणः, किन्तु अनुद्भूतस्पर्शं द्रव्यान्तरम् । न च जातिसमवायादेर्धर्मितोऽन्यत्र वर्तमानत्ववदत्रापि गुणस्य बुद्धेरन्यत्रोपलम्भः स्याद् इति वाच्यम्, जातिसमवायादिवदत्रापि तर्हि व्यापकत्वप्रसङ्गात्, धर्मिणो विहायापि स्थितौ तस्या नियामकाभावात् । न च कारणनियमान्नियमः, तर्ह्यव्यवहितसमवायिकारण-नियमादेव नियमे अणुमात्रदेशता दुर्वारैव । न च वह्नेरौष्ण्यं बहिर्नोपलभ्येत, समीपवृत्त्य-नुद्भूतरूपतेजसस्तदित्युच्यमाने वह्नेरौष्ण्यं न सिध्येदिति वाच्यम् । बाधके सति सविधे तेजोऽन्तरकल्पनेऽपि दृश्यमानवह्नावनुभूयमानौष्णस्पर्शे बाधकाभावेन तस्मिंस्तेजोऽन्तरत्व-कल्पनस्याशक्यत्वात् । एतेन केतक्यादौ परितो गन्धानुभवाद् गुणानां गुणिनैरपेक्ष्यम् । न च तत्र केतक्यवयवानां परितः प्रसरतां ते गन्धाः, तर्हि द्रव्यक्षयप्रसङ्गात् । न चावयवान्तर-प्रवेशात्तदक्षयः, स्फटिककरण्डिकास्थकस्तूर्यादौ अवयवान्तरप्रवेशकल्पते मानाभावाद् इति निरस्तम्, समवायिनैरपेक्ष्येकार्यस्य निराश्रयत्वापत्तौ तत्प्रत्यासत्तिनिबन्धनकारणान्तर-स्याप्युच्छेदे कार्यत्वहानेरेव तत्र कल्पनायां मानत्वात् ।

यत्तु नित्यः सर्वगतस्थाणुरित्यत्र 'नित्ये सर्वगते विष्णावणुर्जीवो व्यवस्थितः' इति स्मृत्यन्तरानुसारात् सर्वगतस्थः अणुश्चेति विग्रहः इति तन्न । 'आकाशवत्सर्वगतश्च नित्यः' 'स वा एष महानज आत्मे'ति श्रुत्यनुसार्यर्थस्यैवोचितत्वाद् अणुरिति पदच्छेदे तद्विरोधा-पत्तेः । यत्तु क्रमेण नानादेहसम्बन्धादणोरेव सर्वगतत्वोक्तिः इति, तन्न, अशेषवाचि-सर्वशब्दसङ्कोचे मानाभावात् । यदपि प्रत्यक्षत्वादिनैवाव्यापकत्वं साधनीयमित्युक्तम्, तन्न, प्रतिकूलतर्कस्योक्तत्वाद् व्यापकत्वसाधने तस्यैवानुकूलत्वेनाप्रयोजकत्वाभावाच्च । ननु आत्मनो व्यापकत्वे 'सर्वाणि शरीराणि सर्वस्यैव भोगायतनानि स्युः, सर्वशरीरेन्द्रियादीनां सर्वदा सर्वात्मसंयुक्तत्वात्, कर्मणामपि साधारणदेहादिकृतत्वेनासाधारण्यायोगाद्, अहन्त्वारोपादेरपि नियामकमूलसम्बन्धादेरभावेन नैयत्यायोगादिति चेन्न, तवापीश्वरस्य व्यापकत्वेन सर्वशरीराणां तद्भोगजनकत्वापत्तेः समानत्वात् । न च तददृष्टाजन्यत्वात्तत्संयुक्तत्वेऽपि न तत्र भोगजननम्

(अद्वैतसिद्धिः)

तर्हीहापि समम् । न च कर्मणामेव कथमसाधारण्यम्? पूर्वतत्कर्मजन्यत्वाद्, एवमनादितैव । अन्यथा ईशात्मनि तवाप्यगतेः चैत्रभोगजनकाङ्कुरादेः तददृष्टजन्यत्वाद आत्मसमवेतस्यादृष्टस्य साक्षादङ्कुरासंबन्धाद् आत्मद्वारकसम्बन्धस्य वाच्यतायामात्मनो विभुत्वम् । न च चैत्रभोगाहेतोरप्याङ्कुरादेरात्मद्वाराऽदृष्टासंबन्धेऽपि तदजन्यत्वेन तस्यातन्त्रत्वमिति वाच्यम्, जनकादृष्टनिरूपितात्मद्वारकसन्निकर्षस्यातिप्रसङ्गाभावेन तन्त्रत्वात् । जनकता तु अदृष्टस्य फलैकोन्नेया । एवमेवोपपत्तौ प्रतियोग्यभाववाच्यवाचकज्ञानज्ञेयादाविवादृष्टकार्ययोरपि संबन्धान्तरस्वीकारे मानाभावः । यत्तु कारीर्यदृष्टस्य वृष्ट्या सह तदुद्देशेन विहितक्रियाजन्यत्वादिरूपः संबन्धोऽस्तीत्युक्तम्, तन्न तत्रापि यजमानात्मद्वारकसंयुक्तसमवायस्यैव जलक्षरणादिप्रयोजकत्वात् । एतच्च सर्वं पररीत्योक्तम् । स्वमते च व्यवस्था प्रागुक्तैव । तथा च 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट' इति श्रुतौ बुद्धिगुणेनाराग्रमात्रत्वोक्तेः स्वाभाविकमेव विभुत्वम् । न चात्रात्मगुणेनाराग्रमात्रत्वं बुद्धेर्गुणेन चावरत्वमिति व्युत्क्रमयोजना, "तद्यथाणुनश्चक्षुषः प्रकाशो व्याप्तः, एवमेवास्य पुरुषस्य प्रकाशो व्याप्तः अणुर्ह्येवैषपुरुष" इति श्रुत्यनुसारादिति वाच्यम् । व्यापकत्वबोधकानेकश्रुतिविरोधेन बुद्धेर्गुणेनेत्येतदनुसारेण चास्या एव औपाधिकाणुत्वपरत्वात्, पुरुषस्येति षष्ठ्या राहोः शिर इत्यादिवदुपचरितार्थत्वाच्च । तथा च न व्युत्क्रमेणान्वयः, तस्मादणुत्वं नात्मभेदकम् ॥ इति अद्वैतसिद्धौ आत्मनोऽणुत्वभङ्गः ॥

स्थितानि ग्रन्थेषु प्रकटमुपदिष्टानि गुरुभिर्गुणो,
वा दोषो वा न मम परवाक्यानि वदतः ।
परं त्वस्मिन्नस्ति श्रमफलमिदं यन्निजधिया,
श्रुतीनां युक्तीनामकलि गुरुवाचां च विषयः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीचरणशिष्य-
श्रीमधुसूदनसरस्वतीविरचितायामद्वैतसिद्धौ आत्मनिरूपणं नाम द्वितीयः परिच्छदः ॥

## न्यायामृततरङ्गिणी

**॥ गतेः सुखदुःखाद्यनुभवसामानाधिकरण्योक्तेरिति ॥ नन्वात्मनि सुखदुःखाद्यनुभवस्याप्यौपाधिकत्वेन तत्सामानाधिकरण्यं गतेः स्वाभाविकत्वासाधकमिति चेन्न । ज्ञानत्व-**

(तरङ्गिणी)

वत्सौषुप्तिकाज्ञानादिसाक्षित्ववत्सत्यस्यासत्यस्य वा सुखादिभोक्तृत्वादेरप्यात्मन्येव स्वीकर्तव्यत्वादित्युक्तत्वात् कर्तृध्यासभङ्गे ॥ स एनानिति ॥ नन्वव्यापकस्यैवाव्यापकं प्रतिगमनं ब्रह्म च व्यापकमिति कथं तत्प्रतिगमनम् । मैवम् । विभोरप्याकाशादेः सर्वमूर्तक्रियाजन्यसंयोगाश्रयत्वरूपतत्प्राप्यत्वात् । व्यापकस्यापीश्वरस्याचिन्त्य- शक्त्याणुत्वाच्च ॥ तेन प्रद्योतेनैष इति ॥ नन्वेष इति बुद्ध्युपहितस्यैव परामर्शेन शुद्धात्मनिष्ठत्वं गतावनुक्तमिति तदाशङ्क्य परिहरति ॥ नच श्रुतिरिति ॥ तमुत्क्रामन्तमिति ॥ नच प्राणाख्यांशेन पश्चाद्गतावप्यंशान्तरेण बुद्धेः प्रथममुत्क्रमणमिति वाच्यम् । त्वन्मते प्राणातिरिक्तस्य क्रियाशक्तियुक्तस्याभावात् ॥ पुरुषमुपैतीति ॥ व्यापकस्यापि प्राप्यत्वं तूक्तम् ॥ कृतहान्यादीति ॥ ननु न कृतहान्यादिप्रसङ्गः । यद्बुध्यवच्छिन्नेन येनैवात्मना यत्कृतं तदवच्छिन्नेन तेनैव भोजनात् । नह्यात्मनो निरवयवस्य प्रदेशोऽस्ति । मैवम् । गतिमतीबुद्धिर्यत्रात्मनि सम्बध्य कर्तारमकरोत्ततोऽन्यत्रगत्वा तमेवात्मानमभिलक्ष्य तत्र भेदं कल्पयित्वा तमात्मानं स्वोपहितं कृत्वा तमेवात्मानं भोक्तारं करोतीत्यत्र कृतहान्याद्युक्तेः ॥ कर्तुर्भोक्तुरिति ॥ नन्ववच्छेद्यात्मनोवच्छेदकबुद्धेश्चैक्येवच्छिन्नभेदो वक्तुमशक्यः । मैवम् । उक्तरीत्या गच्छन्त्या बुध्यावच्छिन्नस्य भिन्नत्वात् । अन्यथात्मनि गत्ययोगात् । तदेतदाह ॥ अभिन्न इति ॥ द्रव्यत्वेति ॥ घटत्वादावव्यभिचाराय साक्षात्पदम् । नच व्यापकावृत्तित्वमुपाधिः । सत्तादौ साध्याव्यापकत्वात् । तस्यैव साध्यत्वाच्च ॥ भूतेतरत्व इति ॥ आकाशे कालदिशोरीश्वरे चाव्यभिचाराय क्रमेण पदानि ॥ शब्देतरेति ॥ आकाशेश्वरयोरव्यभिचाराय विशेषान्तम् । नच त्रिष्वप्यनात्मत्वमुपाधिः । धर्मिग्राहकमानसिद्धव्याप्तत्वे कालादौ साध्याव्याप्तेः । विशेषगुणसंस्काराणां चात्मवृत्तित्वं नतु मनोवृत्तित्वमतो नासिद्धिः ॥ मनोवदिति ॥ मनसो मध्यमपरिमाणानङ्गीकारान्न तत्र साध्याप्रसिद्धिः । नच जडत्वमुपाधिः । त्वन्मते शुद्धात्मनो निर्विषयत्वेनाज्ञानत्वादिरूपजडत्वस्य पक्षादव्यावृत्तेः ॥ जातिसमवायादेरिति ॥ नच तद्वदेव गुणस्य व्याप्तिरपि स्यादिति वाच्यम् । आश्रयं विनान्यत्र वृत्तौ दृष्टान्तकरणात् । प्राभाकरैर्नीलपीतादीनां व्याप्त्यङ्गीकाराच्च ॥ स्फटिकेति ॥ तस्यातिनिबिडत्वेन तत्रावयवान्तरप्रवेशस्यासंभावितत्वात् ॥ नित्यः सर्वगतेति ॥ नचाकाशवत्सर्वगतः स वा एष महानज आत्मेत्यादिविरोधः । तस्येश्वरत्वात् ॥ नानादेहेति ॥ नचाशेषवाचिसर्वशब्दस्य देहपरत्वेन सङ्कोचे मानाभावः । सर्वस्यापि क्रमेण जीवदेहत्वात् ॥ प्रत्यक्षत्वादीति ॥ प्रत्यक्षगुणाश्रयत्वादणुत्वसाधनं यत्कृतं तदप्रयोजकम् ॥ सर्वेषां भोगायतनानि स्युरिति ॥ ननु तवापीश्वरस्य व्यापकत्वेन सर्वदेहानांतद्भोगजनकत्वापत्तिः समाना । मैवम् । सम्भोगप्राप्तिरिति

(तरङ्गिणी)
चेन्न वैशेष्यादित्यादिना सूत्रकृतैवाचिन्त्यशक्तिमत्त्वेन सर्वगतस्यापि तस्य भोगानापत्तेरुक्तत्वात् ।। चैत्रभोगाहेतोरपीति ।। नच जनकादृष्टनिरूपितात्मद्वाराकसन्निकर्षादतिप्रसङ्गाभाव इति वाच्यम् । सम्बन्धं विना दृष्टस्य जनकत्वस्याग्रहेणान्योन्याश्रयात् ।। बुद्धेर्ज्ञानस्येति ।। नचैवं योजनायां व्युत्क्रमप्रसङ्गः । श्वेताश्वतरे बुद्धेर्गुणेनेत्यस्यानन्तरं

वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीव इति ज्ञेयः स चानन्त्याय कल्पत

इत्युक्तेः । अणुत्वसाधकानेकश्रुतिस्मृत्यानुकूल्यादुक्तयोजनाया युक्तत्वात् । परिच्छेदार्थमुपसंहरति ।। तस्मादिति ।। ।। जीवाणुत्वम् ।।

नविद्याभीराभीरवगतिबिभंत्साभिरबुधां-
जिगीषाभिः किन्तु स्ववचसि शुशुत्साभिरकृषि ।
तरङ्गिण्या ख्यातां बुधजनघनस्सूक्तिसलिलैर्नयेत्पूर्ण-
प्रज्ञोदितनिगमसिद्धान्तजलधिम् ।। १ ।।

सद्योजातजटाजपावनसरिद्गोदावरीतीरतो-
गव्यूतिर्वसतिः सतां कुलवतामम्बा पुरी तत्र ये ।
व्यासाख्या उपमन्युगोत्रजबुधास्तेष्वास्त यो मुद्गल-
स्तत्राजज्ञत येमुरारिचरणा व्यासाभिधाना बुधाः ।। २ ।।

तेभ्योऽजायत विश्वनाथ इति यः सज्ज्ञानरत्नाकर-
स्तस्मादाविरभूत्सुरद्रुमयशा आचार्यनारायणः ।।
रामाचार्य इतीरितस्तदनुजो यस्तत्ववादाम्बुधे-
रातानीत्स तरङ्गिणीमिह परिच्छेदो द्वितीयोपि यः ।।

।। इति श्रीमद्रामाचार्यविरचितायां
न्यायामृततरङ्गिण्यां द्वितीयः परिच्छेदः ।।

## न्यायामृतकण्टकोद्धारः

किञ्च जीव परमात्मनोरभेदे जीवस्याणुत्वं न स्यात् । अभिन्नयोर्भिन्नपरिमाणत्वानुपपत्तेरित्याह अणुत्वाच्चेति । प्रत्यक्षेति । न च ज्ञानादीनामन्तःकरणात्मत्वेनात्मगुणत्वाभावादसिद्धो हेतुरिति वाच्यम् । अन्तःकरणगुणत्वे घटो रूपवानितिवत् अन्तःकरणं ज्ञानवदिति प्रतीत्यापत्तेः, अहं ज्ञानवानिति प्रतीत्यभावापत्तेश्च । न च त्र्यणुके व्यभिचार इति वाच्यम् । परमाणुत्वाभावस्य साधनात् । प्रत्यक्षत्वाच्चेति । लौकिकप्रत्यक्षत्वादित्यर्थः । तस्येति । मध्यमपरिमाणस्यानित्यत्वप्रसङ्गेन निराकृतत्वात् । द्रव्यत्वेन परिमाणसिद्धौ अणुत्वमध्यमपरिमाणाभाववत्त्वे सति परिमाणवत्त्वात् परिशेषाद् विभुत्वमित्यर्थः । उक्तानुमानं श्रुत्यादिबाधितमित्याह अणुरिति । सिनीतः बध्नीतः । षिञ् बन्धन इति धातोः । उत्क्रमणमूर्ध्वगमनम् । गतिश्च तिर्यगादिसाधारणमिति भेदः । न चासिद्धिरिति । उत्क्रान्त्यादिहेतूनामिति शेषः । स इति । ननूत्क्रमणादिमात्रं वाहेतुः, कर्मायत्तं तद्वा? नाद्यः । ईश्वरेऽनैकान्त्यात् । न द्वितीयः । दृष्टान्ते साधन वैकल्यादिति चेन्न। द्वितीयस्यैव विवक्षितत्वात् । न च दृष्टान्तस्य साधनवैकल्यम् । खगशरीरगत्यादेरपि तदधिष्ठातृजीवकर्मायत्तत्वात् । अन्यथा मृतशरीर ऊर्ध्वगत्याद्यापत्तेः । न चाचेतनत्वमुपाधिः । विपक्ष बाधकेन प्रकृतहेतोः साध्यव्याप्यतया साध्यव्याप्यहेत्वव्यापकत्वेनोपाधेः साध्याव्यापकत्वात् । न च विपक्षबाधकमसिद्धमिति वाच्यम् । तस्य हेतूच्छित्यादिरूपस्य मूलएवोक्तत्वात् । गतेरिति । ननु सुखाद्यनुभवस्य बुध्युपाधिकत्वेन न गतेः स्वाभाविकत्वसाधकत्वमिति चेन्न बुध्युपाधिकत्वेन न गतेः स्वाभाविकत्वसाधकत्वमिति चेन्न बुध्युपाधिकत्वं हि किं बुद्धिमात्रनिष्ठत्वमात्मनि तत्सम्बन्धादुपचर्यते, अथारोप्यते, अथवा तथा जन्यते? नाद्यः । संसारस्य बुद्धिगतत्वेनान्यनिष्ठसंसारनिवृत्त्यर्थमात्मनः श्रवणादिप्रयत्नवैयर्थ्यापत्तेः । न द्वितीयः । नाहं संसारीति बाधकापत्तेः । न तृतीयः । बुद्धिजन्यत्वेनानित्यत्वेऽपि गतेः स्वाभाविकत्व साधकत्वसम्भवात् । अनित्येनापि गन्धनपृथिवीत्वस्य स्वाभाविकत्व साधनात् । स एनानिति । न चाव्यापकस्याव्यापकं प्रत्येवगमनम् । ब्रह्मतु व्यापकमिति वाच्यम् । 'ब्रह्मविदाप्नोतिपरम्' । 'एतमानन्दमयमात्मानुमुपसङ्क्रामति' इत्यादि श्रुतिषु ब्रह्मप्राप्ति रूप मोक्षोक्त्या स्थानविशेषाभिव्यक्तरूपविशेषं प्रतिगमनसम्भवेन एमनस्य मुक्तिसामानाधिकरण्योपपत्तेः । ननु तथापि आत्मत्वसामानाधिकरण्येन गत्यादेरनुक्तत्वात् असिद्धिरेवेत्यत आह तेनेति । न चैष इति । बुध्युपाधिक परामर्शात् न केवलात्मनिष्ठत्वमिति वाच्यम् । पूर्वं ब्रह्मज्ञानिन एव प्रक्रान्ततया विशिष्टपरामर्शकल्पकाभावात् । अन्यथेति । अत्मनोगत्याद्यनङ्गीकारे बुद्धेरेव तदङ्गीकारे चेत्यर्थः । तद्यथेति । आत्मनोगत्याद्यनङ्गीकारे बुद्धेरेव तदङ्गीकारे चेत्यर्थः । तद्यथेति । न चायमिति विशिष्टपरामर्श इति वाच्यम् । शारीर इत्यनेनैव विशिष्टोक्त्या अयमित्यस्योपाध्यसंसृष्टचेतन परत्वात् । ननु न शकट दृष्टान्तमात्रेण स्वाभाविक गतिसिद्धिः । गतिमात्रेदृष्टान्तसम्भवात् । विशेषहेत्वभावादित्यत आह तमिति । न च प्राणस्य पश्चाद् गमनेऽपि पूर्वमंशान्तरेण गमनमिति वाच्यम् । श्रुतेः पश्चाद् गमनमात्रप्रतिपादकतया पूर्वगमने प्रमाणाभावात् । अन्यथा अनुशब्दायोगात् । अत एव मन इत्यादिकमपि समाहितम् । ननूदाहृत श्रुत्यादिषु बुध्युपाधिकमेव

(कण्टकोद्धारः)

गत्यादिकमात्मनि स्वीकर्तव्यम् । व्यापकश्रुत्यादि बाहुल्येन स्वाभाविक गत्यनुपपत्तेः । न च व्यापक श्रुत्यादेः गौणत्वं परमात्मविषयत्वं वा स्वीकर्तव्यं गति श्रुत्यनुरोधादिति वाच्यम् । गति श्रुतेर्बुध्युपाधिकत्वेन सावकाशत्वादित्यत आह किंचेति । अन्यथेति । अवच्छेदक गत्यावच्छिन्न गत्यङ्गीकार इत्यर्थः । कर्तुरिति । ननु यदुपाध्यवच्छिन्नस्य कर्तृत्वं तदुपाध्यवच्छिन्नस्यैव भोक्तृत्वाङ्गीकारात् कथं प्रकृत हान्यादिकम्? भिन्नभिन्नोपाध्यवच्छिन्नस्य कर्तृत्वाद्यङ्गीकारे हि तत् स्यादिति चेन्न । कर्तृताप्रयोजक उपाधिः सर्वदेशे सम्बध्यते उत प्रदेशे? नाद्यः । तथात्वे उपाधेरपि उपधेयव्यापकतया व्यापकताया आवश्यकत्वात् उपाधिगमनानुपपत्तिः । न द्वितीयः । प्रदेशस्य स्वाभाविकत्वे औपाधिकत्वे वा अवच्छेदकैक्येऽप्यवच्छेद्यस्य प्रदेशस्य भेदात् अवच्छिन्न भेद एव । अवच्छेदकभेदस्यैवावच्छेद्यभेदस्यापि अवच्छिन्नभेदप्रयोजकत्वात् । तथा च कथं न कर्तृभोक्त्रोर्भेदः? कथं च न कृतहान्यादीति भावः । ननु प्रदेशानां भेदेऽपि आत्ममात्रस्याभिन्नत्वात् तस्यैव कर्तृत्वाद्यभ्युपगमान्न कृतहान्यादीत्यत आह अभिन्ने चेति । आत्ममात्रस्य च कर्तृत्वं त्वया नाङ्गीक्रियते । निष्कलं निष्क्रियमित्यादि श्रुतिविरोधात् । ननु व्यापकत्व श्रुत्यनुरोदेन गतिवाक्यानामुपचरितत्वादि कल्प्यत इत्यत आह बहूनामिति । व्यापकत्व श्रुतेः परमात्मविषयत्वेन सावकाशत्वात् न तदनुरोधेन बहु गतिवाक्यानामप्रामाण्यादीति भावः । व्यावहारिकत्व इति । आत्मगतेरिति शेषः । व्यावहारिकस्य प्रातिभासिकोपाधिताया एव दृष्टत्वात् । अन्यथा स्फटिके लौहित्यमप्रातिभासिकं स्यादिति भावः । नन्वात्मव्यापकत्वस्यानुमानादि सिद्धत्वात् व्यावहारिकस्यापि क्वचित् प्रातिभासिकोपाधित्वं कल्प्यत इत्यत आह विस्तृतं चेति । ततश्च तत्रोक्ता अति प्रसङ्गाद्द्रष्टव्याः । अनुमानादिकं चाग्रे दूष्यत इति भावः । केचित्त्विति । अत्र घटत्वादौ व्यभिचार वारणाय द्रव्यत्वसाक्षाद् व्याप्येति । आकाशत्वादौ तद्वारणाय जातिपदम् । न च व्यापकावृत्तित्वमुपाधिः । द्रव्यत्वादौ साध्याव्यापकत्वात् । न च स्पर्शादि सामानाधिकरण्यमप्यनुमातुं शक्यमिति वाच्यम् । अप्रयोजकत्वात् । अणुनिष्ठत्वानुमानस्य वक्ष्यमाण व्यापकत्वबाधकानुगृहीतत्वेन बलवत्त्वात् । जीवो न व्याप्त इति । स्वरूपेणेति शेषः । तेन गुणव्याप्त्याद्यङ्गीकारेण नापसिद्धान्तादीति भावः । भूतेतरत्वे सतीति । अत्रासर्वज्ञत्वं सर्वज्ञत्वाभावः । न तु किञ्चिज्ज्ञत्वम् । घट दृष्टान्ते साधनवैकल्यापत्तेः । व्यर्थविशेषणत्वाच्च । तथाचाकाशे व्यभिचार वारणायाद्यं, द्वितीयं च काले, तृतीयं चेश्वरे द्वितीय हेतावप्याद्यमाकाशे, द्वितीयमीश्वरे व्यभिचारवारणाय । तृतीयमपि तत्रैवेति द्रष्टव्यम् । अत्राहुरित्यस्वरसोद्भावनम् । तद्बीजं तु प्रथमानुमाने जातेर्वादिनानङ्गीकारादसिद्धिः । न च जातिपदं धर्ममात्रपरम् । आकाशत्वादौ व्यभिचारापत्तेः । न च तार्किकमतानुसारेण तदिति वाच्यम् । तेनात्मनां व्यापकत्वाङ्गीकारेणापसिद्धान्तापत्तेः । द्वितीयानुमाने स्वमतानुसारेण विशेषणद्वयं व्यर्थम् । तृतीये चतुर्थे चासिद्धिः । विशेषगुणसंस्काराणामन्तःकरण निष्ठत्वाङ्गीकारात् । पञ्चमेऽसिद्धिः । स्वमते समवायाभावे नासमवायिकारणाभावात् । मनोदृष्टान्ते साध्यवैकल्यम् । मनसः सावयवत्वेनाणुत्वाभावादित्यादि द्रष्टव्यम् । तार्किकमतानुसारेणेत्यस्य दत्तमुत्तरम् । नन्वात्मनोऽणुत्वानुमानमनणुत्वे देहव्यापिस्पर्शादिज्ञानं न स्यादिति प्रतिकूल तर्कबाधितमित्यत आह अणुत्वेऽपीति । ननु गुणिनं विहाय गुणस्य वृत्तेरदृष्टचरत्वात् कथं गुण

(कण्टकोद्धारः)

व्याप्तिरित्यत आह जीवस्येति । प्रदीपेति । न च न प्रभा प्रदीपगुणः । किन्तु द्रव्यान्तरमिति वाच्यम् । नियत प्रदीपानुविधानायोगात् । द्रव्यस्य द्रव्यान्तरानुविधानादृष्टेः । नचेन्द्रनील प्रभायाः तद्गुणत्वापातः । बाधकेनेन्द्रनील सहचरित तेजोऽन्तर गुणत्वाङ्गीकारात् । यद्वा प्रभागुणत्ववादिनं प्रत्ययं द्रष्टान्त इति नकोऽपि दोषः । न च तत्रापि प्रभाश्रयतेजोऽन्तरकल्पनान्नायं दृष्टान्त इति वाच्यम् । तत्कल्पनस्य निर्मूलत्वात् । गुणस्य गुणिनं विहाय वृत्तेरसिद्धेः । जातीति व्यक्तिपरतन्त्रस्य व्यक्तिं विहाय वर्तने दृष्टान्तः । न च तद्वत् व्यापकत्वं स्यादिति वाच्यम् । आपादकाभावात् । तयोरपि व्यक्तिसम्बन्धिमात्र व्यापकत्वेन निरवधिकत्वाभावात् । अन्यथोत्कर्षसमापत्तेः । ननु वह्निसमीपस्थौष्ण्यं न वह्नेर्गुणः, तत्समीपस्थ तेजोऽन्तरस्यैवेत्यत आह वह्नीति । न च वह्नेर्नोद्भूत स्पर्श इति वाच्यम् । अनुभवविरोधात् । ननु न गुणत्वे द्रव्यक्षयः, मध्येऽवयवान्तराणामागमनादित्यत आह स्फटिकेति । प्रत्यभिज्ञेति । अवयवान्तरानुप्रवेशकल्पने अवयवाभिधातेन कारणीभूत संयोग विनाशेन द्रव्यान्तरोत्पादादिति भावः । न च प्रत्यभिज्ञा भ्रान्तिरिति वाच्यम् । घटादावपि तथात्वप्राप्तौ क्षणिकवादापत्तेः । ननु जीवानामणुत्वे नित्यः सर्वगत इति स्मृतिविरोध इत्यत आह नित्य इति । न च सवा एष महानज आत्मेति श्रुत्यनुसार्यर्थकल्पना युक्ता । स्मृत्यपेक्षया श्रुतेः प्रबलत्वादिति वाच्यम् । तस्याः परमात्मविषयत्वेन जीवविषयत्वाभावात् । अजत्वादि तल्लिङ्गात् । अन्येत्विति । न च सर्वशब्दसङ्कोचे मानाभावः । उक्ताणुत्वप्रमाणस्यैव तन्नियामकत्वात् । प्रत्यक्षत्वादिर्हेतुरिति । नचाणुत्वबाधकस्यैवानुकूलतर्कत्वमिति वाच्यम् । तस्य परिहृतत्वात् । व्यापकत्वे बाधकान्तर मणुत्वसाधकं तर्कमाह किञ्चेति । नचेश्वरस्यापि सर्वगतत्वे समानोऽयं प्रसङ्ग इति वाच्यम् । सम्भोगप्राप्तेरिति चेदित्यनेन परिहृतत्वेन ब्रह्ममीमांसावार्तानभिज्ञस्येदं, प्रतिबन्दिग्रहणमित्युपेक्ष्यम् । एतेनेति परामृष्टं हेतुं दर्शयति चैत्रेति । स्वजनकादृष्टनिरूपितात्मद्वारकसम्बन्धस्यातिप्रसङ्गाभाव इति वाच्यम् । सम्बन्धाभावाददृष्टं जनकं नेत्युक्ते जनकादृष्ट द्वारक सम्बन्धस्याभिधानस्यायुक्तत्वात् । न च सम्बन्धान्तरकल्पने गौरवमिति वाच्यम् प्रतियोग्यादिवत् प्रामाणिकत्वात् । अस्तिहीति । न च तत्रापि जमानद्वारक एव सम्बन्ध इति वाच्यम् । तस्यातिप्रसञ्जकत्वात् ननु यथावस्थित सम्बन्धं विहाय विपरीतसम्बन्धकल्पने गौरवमित्यत आह दिगिति । विभुत्वस्य बह्वणुत्व प्रतिपादक श्रुत्यादिविरोधेन प्रतिकूलानेकतर्कपराहतत्वेनायुक्तत्वादिति भावः । जीवाणुत्वसाधकस्य प्रकृतोपयोगं दर्शयति तस्मादिति । परमात्मनस्तु व्याप्तत्वमुभयसिद्धमिति भावः । जीवेन परमात्मनोऽत्यन्तपारमार्थिक भेदप्रतिपादनेन किं लब्धमित्यत तद् प्रधान प्रमेयोपसंहारव्याजेनोत्तरप्रबन्धोपक्षेपोपयोगितया दर्शयति तस्मादिति । परमेश्वरस्य जीवादात्यन्तिक पारमार्थिक भेदनिपुणतरं साधकसद्भावेन बाधकाभावेन च साधितत्वादित्यर्थः । साक्षात्कारायेत्यादिनोत्तरप्रबन्धोपक्षेप इति सर्वं सुस्थम् ।

निर्दोष जीवतोऽत्यन्तभिन्नं नरहरिं परम् ।
मुमुक्षुभिः सेवनीयं भजे पापापनुत्तये ॥

इति श्रीमद्रघूत्तमतीर्थनिजशिष्येण पाण्डुरङ्गि आनन्दाचार्येण
विरचितायां न्यायामृतप्रकाशाख्यायां द्वितीयः परिच्छेदः समाप्तः ।

## न्यायामृतप्रकाशः

वालाग्रेति ॥ अश्वपुच्छाग्रेत्यर्थः । शतधाकल्पितस्य शतधाकृतस्यत्यर्थः ॥ कर्त्तुरवच्छिन्नस्येत्यादि ॥ बुद्धिरूपोपाध्यवच्छिन्नस्यात एव कर्मकर्तुरात्मप्रदेशस्य आत्मरूपांशस्य स्वतो गत्यभावेन तस्य भोगायतनलोकान्तरप्राप्तिर्नास्तीति तद्बुध्यवच्छेदेन कृतस्य कर्मणः फलप्रदत्वहानिः स्यात् तथा ततः कर्तुरात्मनः (प्रका)-सकाशाद्गताया बुद्धेरेव गत्यङ्गीकारात् तं विहाय गतया यता बुद्ध्यावच्छिन्नं यत्प्रदेशान्तरम् आत्मांशान्तरम् आत्मनो व्याप्तत्वादेव च तदेव भुङ्क्ते भोगसम्पादिकाया बुद्धेरात्मांशान्तरावच्छिन्नत्वात्तस्य भोगः स्यात् एवं च तस्याकृताभ्यागमः स्यादित्यर्थः ॥ भूतेतरत्वे सतीति ॥ आकाशे कालदिशोरीश्वरे च व्यभिचारवारणाय क्रमेण पदानि ॥ शब्देतरेति ॥ आकाशे ईश्वरे कालदिशोश्चातिव्याप्तिपरिहाराय क्रमेणपदानि द्रष्टव्यानि ॥ कटवदिति ॥ कटे मध्यमपरिमाणस्य सत्वेन व्याप्तत्वाभावरूपसाध्यमस्तीति ज्ञेयम् । ज्ञानासमवायिकारणमात्ममनःसम्योगः ॥ तेजोन्तरेति ॥ अनुद्भूतरूपमुद्भूतस्पर्शं तेजोन्तरं वह्निसमीपे कल्पयित्वा तत्रत्य एवोष्णस्पर्श उपलभ्यत इत्यपि कल्पयितुं शक्यत इत्यर्थः ॥ वह्नेरिति ॥ परिदृश्यमानवह्नेरित्यर्थः । अनुद्भूतरूपवह्निरेव उद्भूतरूपवह्न्युपरिपतितोऽस्ति तदीयस्पर्श एव स्पार्शने नोपलभ्यत इत्यपि कल्पयितुंशक्यत्वादित्यर्थः ॥ चैत्रभोगाहेतोरपीति ॥ यथा आत्मनो व्याप्यत्वमङ्गीकृत्य चैत्रभोगहेतुभूतकाशीस्थाङ्कुरादेरात्मद्वारकादृष्टसम्बन्धोस्ति एवमात्मनो व्याप्यत्वाच्चैत्रभोगाहेतोरपि मार्गस्थाङ्कुरादेरप्यात्मद्वारकादृष्टसम्बन्धस्य सत्वात्तज्जन्यत्वं स्यात् न चैतदस्तीत्येवं तस्यात्मद्वारकादृष्टसम्बन्धस्य तज्जन्यत्वेऽतन्त्रत्वादित्यर्थः । नन्वङ्कुरादिकं तावदात्मा दृष्टजन्यं भवति आत्मनश्च व्याप्यत्वेन तद्द्वारकसम्बन्धाभावे कः सम्बन्ध इति चेत् तदुद्देशेन विहितक्रियाजन्यत्वादिरूपसम्बन्धान्तरस्यैव कल्प्यमानत्वात् । घटतदभावयोः पदपदार्थयोः घटतज्ज्ञानयोश्च सम्बन्धवदित्यर्थः । तदेव सम्बन्धान्तरं दृष्टान्तमुखेन दर्शयति ॥ अस्ति हीति ॥ आत्मनो व्याप्यत्वसाधकं श्वेताश्वेतरोपनिषद्वाक्यमाशङ्क्य दूषयति ॥ न चेति ॥ बुद्धेर्गुणेन, ज्ञानेनाऽऽराग्रमात्रः अत्यणुः आत्मगुणेन परिमाणेनापरो व्याप्त इत्यन्वयः पूर्वपक्ष्यभिप्रेतः । अत्राऽऽरशब्दो वालवाची वालाग्रमात्र इत्यर्थः । अपरशब्दश्च विभुत्ववाची । आत्मगुणेन विभुत्वमित्युत्तरत्र व्यवहारादिति ध्येयम् । अत एव तत्रोपनिषदि एतद्वाक्यादुत्तरत्रैव वालाग्रशतभागस्येति वाक्यमस्तीति द्रष्टव्यम् । एवं च ''व्याप्ता ह्यात्मानः अणुर्ह्येवैष आत्मे''ति श्रुत्योरविरोधोऽनेनोक्त इति द्रष्टव्यम् । त्वदुक्तप्रकारेणान्वयो न भवतीत्याह ॥ तद्यथेति ॥ आत्मगुणेन परिमाणेनाराग्रमात्रोणुरित्यर्थः ॥ ॥ जीवाणुत्वविवरणम् ॥ परिच्छेदार्थमुपसंहरन् उत्तरप्रमेयमुपक्षिपति ॥ तस्मादिति ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन
श्रीनिवासेन विरचिते न्यायामृतप्रकाशे
द्वितीयः परिच्छेदः ॥ २ ॥

# तृतीयः परिच्छेदः

## १. मननिदिध्यासनयोः विवरणोक्तश्रवणाङ्गत्वभङ्गः

नन्वेतदयुक्तं विवरणे श्रवणमङ्गि, प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात् । मननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणसंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्य-द्वारेण ब्रह्मानुभवहेतुतां प्रपद्येते इति फलतोपकार्यङ्गे इत्युक्तत्वादिति चेन्न ।

यतो विचारः करणं नैव बोधे शब्दप्रमाणजे ।
न चायं सन्निपत्याङ्गं शब्दस्य करणात्मनः ॥
करणान्तर्गतो येन विचारो हन्तिवद्भवेत् ।
सन्निपात्यपि नैवासौ शेषी मत्यादिकं प्रति ॥
अन्यथा हि भवेद्धन्तेः प्रयाजान्प्रति शेषिता ।
हीषादेश्च यथा भिन्नफले सौभरशेषिता ॥
श्रवणादेस्तथा भिन्नफले स्याच्छब्दशेषिता ।
तस्मान्न युक्ता मत्यादेः श्रवणं प्रति शेषिता ॥

तथा हि न तावच्छ्रवणरूपो विचारः शाब्दज्ञाने करणं वेदेन धर्म इव ब्रह्मणि प्रमीयमाणे विचारस्यानुमानादौ तर्कस्येव शब्दरूपे शब्दज्ञानरूपे वा करणे इति कर्तव्यमात्रत्वात् । एतेनानुमितौ लिङ्गज्ञानवत् शाब्दज्ञाने तात्पर्यविशिष्टशब्दज्ञानं करणमितिविद्यासागरोक्तं निरस्तम् । आकाङ्क्षादियुक्तशब्दज्ञानस्यैव करणत्व-सम्भवेऽपि विवरणे अन्योन्याश्रयात् शाब्दप्रमाकरणतां निषिध्य तात्पर्यभ्रमरूप-प्रतिबन्धनिरासोपक्षीणतयोक्तस्य तात्पर्यज्ञानस्यापि करणकोटित्वे मननादेरपि तदा-पत्तेः । किं च तात्पर्यज्ञानस्यापि करणत्वे वेदेऽपि तात्पर्यभ्रमसम्भवाद्, बाह्या-गमेऽपि तात्पर्यप्रमासम्भवात् शाब्दज्ञानकरणस्य दुष्टत्वादुष्टत्वव्यवस्था न स्यात् । तस्मान्न तात्पर्यज्ञानं करणम् । न चाकरणमपि तद्यागस्यावघातादिकमिव शब्दस्य सन्निपत्योपकारकं येन करणकोटिनिविष्टं स्यात् । तद्वत्करणीयद्रव्यशेषत्वादेरभावात् ।

किं च सन्निपत्योपकारकत्वेऽपि न फलोपकारकमनाननिदिध्यासनरूपाङ्गं प्रति शेषिता, अन्यथाऽवघातादिः प्रयाजादिं प्रति शेषी स्यात् । एतेन करणभूत-शब्दगतातिशयहेतुत्वाच्छ्रवणस्य करणत्वेनाङ्गित्वं मनननिदिध्यासनयोस्तु सह चारिभूतचित्तगतातिशयहेतुत्वाच्छ्रवणे फलोपकार्यङ्गतेति चित्सुखोक्तं प्रत्युक्तम् । सोमयागसहकारिभूतदीक्षणीयाद्यङ्गत्वेन तद्गतातिशयहेतोः प्रयाजप्रोक्षणादेः सोमयागे सन्निपत्याङ्गत्वेन तद्गतातिशयहेत्वभिषवग्रहणादिकं प्रत्यङ्गत्वप्रसङ्गात् । गौणाङ्गत्वं त्वनङ्गत्वे पर्यवस्यति । एतेन करणीभूतशब्दधर्मशक्तितात्पर्यविषयत्वाच्छ्रवणस्य करणान्तर्भावेनाङ्गित्वमिति तत्त्वशुद्ध्युक्तं निरस्तम् ।

किं च शब्देनापरोक्षज्ञप्तावप्रतिबद्धापरोक्षज्ञप्तौ वोत्पाद्यायां मनननिदिध्यासन-योरिवापरोक्षज्ञप्तौ प्रतिबद्धापरोक्षज्ञप्तौ वोत्पाद्यायां श्रवणस्याप्यपेक्षितत्वात् त्रयाणा-मपि शब्दं प्रति फलोपकार्यङ्गत्वे कथं परस्परमङ्गाङ्गिभावः ? अन्यथा "यो वृष्टि-कामोयोऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत, हीषिति वृष्टिकामाय निधनं कुर्याद् ऊर्गित्यन्नाद्यकामाथ ऊ इति स्वर्गकामाय" –इतिश्रुतानां वृष्ट्यादि-फलाय सौभरेतिकर्तव्यताभूतानां निधनगतहीषादीनां परस्परमङ्गाङ्गिभावः स्यात् । करणापूर्वोत्पत्तौ च यागार्थस्यावघातादेः परमापूर्वोत्पत्तौ तदर्थप्रयाजादिः शेषः स्यात् । क्लृप्तं च परोक्षज्ञानं लोके शब्दफलम् । न चाकरणमपि श्रवणं प्रति निदि-ध्यासनस्याङ्गत्वे श्रुतिवाक्ये स्तः । लिङ्गं तु विपरीतम् । नापि प्रकरणम्, श्रवणस्य फलासम्बन्धेन प्राधान्यासिद्धावितिकर्तव्यताकाङ्क्षायोगात् । स्थानसमाख्ये त्वसम्भाविते ।

किं च तात्पर्यज्ञानस्य शाब्दप्रमाहेतुतायास्त्वया निषेधात्तदर्थस्य विचारस्य कथं प्रमाफलम्, येन मननादेः फलोपकार्यङ्गता स्यात् । यच्चोक्तं मननस्य चित्तैकाग्र्या-योग्यत्वरूपासम्भावनानिरसनं द्वारं निदिध्यासनस्य तु विपरीतसंस्काररूप-विपरीतभावनानिरसनं द्वारमिति । तन्न । सूक्ष्मवस्तुज्ञाने चित्तैकाग्र्यस्य हेतुत्वे दृष्टेऽपियुक्त्यनुसन्धानरूपमननस्यायुक्तत्वशङ्कानिवर्तकताया एव दृष्टत्वेन तद्रहिते उक्तायोग्यत्वशङ्कानिवर्तकताया अदृष्टत्वेन च दृष्टहानाद्यापातात् । मननविधेरपूर्व-

विधित्वापाताच्च । "मतिर्यावदयुक्तते"त्यादिस्मृतिविरोधाच्च । निदिध्यासनस्य तु विपरीत संस्कारनिवर्तकत्वे दृष्टेऽपि तन्निवृत्तेर्न ज्ञानहेतुता दृष्टा, रूप्यसंस्कारानुवृत्तावपि शुक्तिसाक्षात्कारदर्शनात् । तस्माच्छ्रवणसामर्थ्यरूपलिङ्गेन "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इत्यादि वाक्येन निदिध्यासनस्य फलसम्बन्धात् प्रकरणेन च श्रवणादिकं निदिध्यासने सन्निपात्यङ्गम् । युक्तश्च विप्रकृष्टात्फलोपकारात् सन्निकृष्टः स्वरूपोपकारः । अत एव नवमे पार्वणहोमयोरारादुपकारा-कत्वत्यागेन सन्निपत्योपकारकतोक्ता । न च "द्रष्टव्यः श्रोतव्य" इति दर्शना-व्यवहितपाठरूपसन्निधानाच्छ्रवणस्य दर्शनान्वयः । सन्निधानस्य लिङ्गादितो दुर्बलत्वात् । किं च "श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शन"मिति स्मृत्या श्रवणस्याज्ञाननिवृत्तिद्वारा, मननस्य तु संशय-विपर्ययनिवृत्तिद्वारा परोक्षतत्त्वनिश्चयसाध्ये साक्षात्कारफलके निदिध्यासनेऽङ्गता सिद्धा । तदुक्तम्–

अपरोक्षदृशिश्चैव श्रवणान्मनानादनु ।
सम्यङ्निश्चिततत्त्वस्य निदिध्यासनया भवेत् ॥ इति ।

उक्तं च सुधायां "निदिध्यासनं ब्रह्मदर्शनसाधनं तत्सिद्धये श्रवणमनने अपि कर्तव्ये" इति । न च भावनाप्रकर्षजन्यत्वेन साक्षात्कारस्य कामुकस्य कामिनो-साक्षात्कारवदप्रमात्वापातः, त्वयापि–

वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः ।
मूलप्रमाणदार्ढ्येन प्रामाण्यं प्रतिपद्यते ॥ इत्युक्तेः ।

न च निदिध्यासनस्य प्रमाकरणत्वमसिद्धमिति वाच्यम्, त्वया प्रतिबन्धनिरास-कत्वेनोक्तस्य श्रवणस्यापि तदसिद्धेः । निदिध्यासनानन्तरं पुनरनुस्मृतः शब्द एव करणं निदिध्यासनं तु तत्सहकारि, श्रवणादि तु निदिध्यासनाङ्गमिति सम्भवाच्च । अथवा श्रवणाद्यङ्गकनिदिध्यासनमपरोक्षज्ञान- करणमनः सहकारि । तस्मात्–

**ध्याने श्रुत्यादिभिः साक्षात्काररूपफलान्विते ।**
**मननश्रवणे अङ्गे निरस्याज्ञानसंशयौ ॥**

**न तु विवरणमत इव श्रवणमङ्गि निदिध्यासनादिकं तु तदङ्गमिति ।**

**मनननिदिध्यासनयोर्विवरणोक्तश्रवणाङ्गत्वभङ्गः ॥ १ ॥**

## अद्वैतसिद्धिः

तदेवमैकात्म्ये व्यवस्थिते तत्साक्षात्काराय श्रवणमङ्गि, मनननिदिध्यासने तदङ्गतया मुमुक्षुभिरनुष्ठेये । तदुक्तं विवरणे– 'श्रवणमङ्गि, प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात्, मनननिदिध्यासने तु चित्तस्य प्रत्यगात्मप्रवणसंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतां प्रतिपद्येते' इति फलोपकार्यङ्गे । ननु श्रवणं तावद्विचाररूपं शाब्दज्ञाने न करणम्, वेदेन धर्म इव ब्रह्मणि प्रमीयमाणे विचारस्यानुमानादौ तर्कस्येव शब्दरूपे तज्ज्ञानरूपे वा करणे इतिकर्तव्यमात्रत्वादिति चेन्न, शब्दशक्तितात्पर्यावधारणं तावद् विचारः । अवधृततात्पर्यकश्च शब्दः करणमिति विचारस्य करणकोटिप्रवेशेनेतिकर्तव्यतात्वाभावाद् अङ्गित्वनिर्णयात् । तदुक्तं विद्यासागरेण अनुमितौ लिङ्गज्ञानवत्तात्पर्यविशिष्टशब्दज्ञानं करणम्, अतस्तात्पर्यावधारणरूपविचारस्याङ्गित्वम् । न च आकाङ्क्षादिसहितशब्दज्ञानस्यैव करणत्वसम्भवे तात्पर्यभ्रमनिरासोपक्षीणतयोक्ततात्पर्यज्ञानस्य करणकोटिप्रवेशे मननादेरपि तत्कोटिप्रवेशः स्यादिति युक्तम्, एवं साकाङ्क्षादिधियोऽपि निराकाङ्क्षत्वादिभ्रमनिरासकत्वमात्रेणोपयोगापत्तौ आकाङ्क्षादिकमपि करणकोटिप्रविष्टं न स्यात् । न चान्योन्याश्रयः, सामान्यतोऽर्थावगमनेन तात्पर्यग्रहसम्भवात् । अन्यथा नानार्थादौ विनिगमनादिकं च न स्यात् । तथा च सर्वत्र तात्पर्यज्ञानस्याजनकत्वेऽपि यत्र तात्पर्यसंशयविपर्ययोत्तरं शाब्दधीः, तत्र तात्पर्यज्ञानस्य हेतुता ग्राह्या संशयविपर्ययोत्तरप्रत्यक्षे विशेषदर्शनस्येव । अत एव न विवरणविरोधोऽपि ।

ननु तात्पर्यज्ञानस्य करणकोटिप्रवेशे वेदेऽपि तात्पर्यभ्रमसम्भवात् बाह्यागमेऽपि तात्पर्यप्रमासम्भवात् शाब्दज्ञानकरणस्य दुष्टत्वादुष्टत्वव्यवस्था न स्याद् इति चेन्न, वेदे कदाचित् कस्यचित् कुत्रचित्तात्पर्यभ्रमेऽपि निर्दुष्टत्वेन यथार्थतात्पर्यमस्त्येव, परागमे तु पौरुषेयतया

(अद्वैतसिद्धिः)

प्रतारणादिमत्पुरुषप्रणीततया दुष्टत्वेन न तथेति दुष्टत्वादुष्टत्व न्यवस्थासंभवात् । तात्पर्यांशस्यावघातादेरिव यागे शब्दे सन्निपत्योपकारकतया करणकोटिप्रविष्टत्वेनाङ्गित्वम् । न च दृष्टान्ते करणद्रव्यशेषत्वात् तथा, सर्वसाम्यस्य दृष्टान्तत्वाप्रयोजकत्वात् । ननु सन्निपत्योपकारकत्वेऽपि न फलोपकारकमनननिदिध्यासनरूपाङ्गं प्रति शेषिता, अन्यथा प्रयाजादिकं प्रत्यवघातादिः शेषी स्यादिति चेन्न, विशिष्टयागप्रविष्टतया शेषित्वे इष्टापत्तेः असाधारण्येन शेषिता तु असाधारणफलोपकारकत्वे स्यात्, असम्भावनाविशेषनिवृत्तिरूपासाधारणोपकारजनकत्वात् सापि श्रवणस्य सम्भावितैव । अत एवोक्तं चित्सुखाचार्यैः– 'करणीभूतशब्दगतातिशयहेतुत्वात् श्रवणस्य करणत्वेनाङ्गित्वम्, मनननिदिध्यासनयोस्तु सहकारिभूतचित्तगतातिशयहेतुत्वाद् फलोपकार्यङ्गते'ति । न च एवं सोमयागसहकारिभूतदीक्षणीयाद्यङ्गस्य तद्गतातिशयहेत्वभिषवग्रहणादिकं प्रत्यङ्गत्वप्रसङ्ग इति वाच्यम्, पूर्ववदुक्तोत्तरत्वात् । तदुक्तं तत्त्वशुद्धौ– 'करणीभूतशब्दधर्मशक्तितात्पर्यविषयत्वात् श्रवणस्य करणान्तर्भावेनाङ्गित्व'मिति ।

न च शब्देनापरोक्षज्ञप्तौ अप्रतिरुद्धापरोक्षज्ञप्तौ चोत्पाद्यायां मनननिदिध्यासनयोरिव परोक्षज्ञप्तावप्रतिरुद्धपरोक्षज्ञप्तौ चोत्पाद्यायां श्रवणस्याप्यपेक्षिततया त्रयाणामपि फलोपकार्यङ्गत्वमेवेति कथं परस्पराङ्गाङ्गिभाव इति वाच्यम्, मनननिदिध्यासने फले जनयितव्ये शब्दस्य सहकारिणं सम्पादयतः श्रवणं तु तस्य जनकतामेवेति विशेषात् । यत्र च नैवं, तत्र तुल्यवदङ्गतैव । एतेन– ''यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत, हीषिति वृष्टिकामाय निधनं कुर्याद् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाये'ति श्रुतानां वृष्ट्यादिफलाय सौभरेतिकर्त व्यतानिधनगतहीषादीनां श्रवणमननादिवत् परस्परमङ्गाङ्गिभावप्रसङ्ग इति निरस्तम्, करणस्वरूपसम्पादकत्वसहकारिसम्पादकत्वरूपतत्प्रयोजकस्यात्रैव तत्राभावात् । न च एवं करणापूर्वोत्पत्तौ यागार्थस्यावघातादेः परमापूर्वोत्पत्तौ तदर्थः प्रयाजादिः शेषः स्यादिति वाच्यम्, एकफल उभयोर्यागार्थत्वाभावेन विशेषात् । ननु क्लृप्तं परोक्षज्ञानं लोके शब्दस्य फलम् । तथा च शब्दातिशयाधायकस्य श्रवणस्य साक्षात्कारफलजनकाङ्गित्वं कथमिति चेत्, साक्षात्त्वं न जातिः न वा इन्द्रियजन्यत्वादिकं नियामकम्, किन्तु विषयगताज्ञाननिवर्तकत्वमेवापरोक्षत्वे प्रयोजकम् । तथा चाज्ञाननिवर्तकत्वं विषयपर्यन्तत्वेन । तच्चात्मपर्यन्तत्वादत्रास्त्येवेति नादृष्टकल्पना । इत्थं च प्रकरणबलादपि सिद्धमस्याङ्गित्वम्, श्रवणस्य फलसम्बन्धेन प्राधान्यसिद्धावितिकर्तव्यताकाङ्क्षायाः संभवात् ।

(अद्वैतसिद्धिः)

ननु यद्यपि चित्तैकाग्र्यस्य सूक्ष्मवस्तुज्ञानहेतुत्वं दृष्टमस्ति, तथापि मननं न चित्तैकाग्र्यहेतुः युक्त्यनुसन्धानरूपमननस्यायुक्तत्वशङ्कानिवर्तकताया एव दृष्टत्वेन चित्तैकाग्र्यहेतुत्वकल्पने सति दृष्टहान्यापत्तेः मननविधेरपूर्वविधित्वापाताच्च 'मतिर्यावदयुक्तते'ति स्मृतिविरोधाच्चेति चेन्न, तादृक्छङ्कायां सत्यां नानाकोटौ चित्तविक्षेपस्य तस्याश्च निवृत्तौ युक्तत्वेनावधारणविषयकोटौ चित्तप्रवणतायास्तावत्पर्यन्तत्वस्य दृष्टत्वेन दृष्टहान्यापूर्वविधिस्मृतिविरोधाभावात् निदिध्यासनस्य तु विपरीतभावनानिवर्तकता सकलसिद्धा । ननु तन्निवृत्तेः न ज्ञानहेतुता दृष्टा रूप्यसंस्कारानुवृत्तावपि शुक्तिसाक्षात्कारदर्शनादिति चेत्, 'इयं शुक्ति'रिति ज्ञानानन्तरं तद्रजततया ज्ञातमिति स्मृतेर्ज्ञानगोचरसंस्कारसत्त्वेऽपि तद्रजतमित्यस्मरणेन विपरीतसंस्कारनिवृत्तेस्तत्रापि सत्त्वात् ।

ननु शब्दसामर्थ्यरूप लिङ्गेन 'ततस्तु तं पश्यते निष्कलं ध्यायमान' इत्यादि वाक्येन निदिध्यासनस्य फलसम्बन्धात् प्रकरणेन च श्रवणादिकं निदिध्यासने सन्निपत्याङ्गमिति चेन्न, निदिध्यासनपदस्य बर्हिर्देवसदनमित्यादाविव साक्षात्काररूपफलसम्बन्धे न शक्तिरिति शब्दसामर्थ्याभावात् । वाक्येऽपि योग्यताबलाच्छ्रवणमेवाध्याह्रियते । तथा च तच्छ्रवणाद्ध्यायमानो निष्कलं ब्रह्म पश्यतीत्यनुकूलार्थस्यैव पर्यवसानात् । तस्माद् ''द्रष्टव्यः श्रोतव्य'इति दर्शनेनाव्यवहितपाठरूपसन्निधानात् श्रवणस्य दर्शनेन साक्षादन्वयादङ्गित्वम् । किञ्च निदिध्यासनरूपभावनाप्रकर्षजन्यत्वे साक्षात्कारस्य कामिनीसाक्षात्कारवत् अप्रमात्वापातः । न च मूलप्रमाणदार्ढ्यात् प्रमात्वं तर्हि तदेव साक्षात् करणमस्तु ? किं तदुपजीविनान्येन ? एतेन निदिध्यासनसहकृतमनःकरणत्वमपि निरस्तम् ॥ इत्यद्वैतसिद्धौ मनननिदिध्यासनयोः श्रवणाङ्गत्वम् ॥

## न्यायामृततरङ्गिणी

सद्गुणङ्करधृतार्वसद्गुणं दूरदोषमुरुदोषमप्यलम् ।
पार्थसारथिमपार्थसारथिं नन्दनन्दनतिसाधनं नुमः ॥ १ ॥

**निदिध्यासनमङ्गि श्रवणादिकमङ्ग मित्येतदाक्षिपति ॥ नन्वेतदिति ॥ विवरणइति ॥ नन्वपरोक्षफलोदये निदिध्यासनाङ्गतैव श्रवणमननयोः किं न स्यात् । त्रयाणामपि सन्निपत्योपकाराविशेषात् । दर्शपूर्णमासवत्समप्रधानता वा किं न स्यादिति । उच्यते । शक्तितात्पर्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन करणं भवति । प्रमाणस्य प्रमेयावगमं**

(तरङ्गिणी)

प्रतीत्याद्युक्तम् ॥ मननिदिध्यासनेति ॥ तत्रापि मननस्य चित्तैकाग्र्यायोग्यरूपासम्भावनानिरसनद्वारेण चित्तस्य प्रत्यगात्मैकाग्रवृत्तिहेतुत्वं निदिध्यासनस्य तु विपरीतसंस्काररूपविपरीतभावनानिरसनद्वारा तद्धेतुत्वम् ॥ प्रत्यगात्मेति ॥ प्रत्यगात्मप्रवणतालक्षणो यः संस्कारः तेन परिनिष्पन्ना या ब्रह्मैकाग्र्यलक्षणावृत्तिः सैव कार्यं तद्द्वारेणेत्यर्थः ॥ इतीति ॥ फलं प्रत्यव्यवहितस्य कारणस्य विशिष्टशब्दावधारणस्य व्यवहिते मननिदिध्यासने इति हेतोरित्यर्थः । शक्तितात्पर्यविशिष्टशब्दावधारणरूपस्य श्रवणस्य ब्रह्मानुभवं प्रति साक्षाद्धेतुत्वेन करणत्वमित्युक्तं दूषयति ॥ विचारइति ॥ शाब्दज्ञाने शब्दस्य तज्ज्ञानस्य वा साक्षात्कारणत्वं नान्यस्य । ननु शक्त्यादीनां सन्देहादौ सति शाब्दज्ञानाभावेन विशिष्टस्य हेतुत्वे वाच्ये विशेषणस्यापि हेतुत्वेन व्यवधानद्वाराऽवघाततण्डुलादेरिव करणान्तर्गतिरस्तीत्यतः करणवदेव शेषित्वं भविष्यतीत्यत आह ॥ नचेति ॥ अस्तु वा करणान्तर्गतिः शक्त्याद्यवधारणस्य तथापि न तस्य शब्दवन्मत्याद्यपेक्षया शेषित्वमित्याह ॥ सन्निपात्यपीति ॥ प्रधानं प्रति सन्निपात्यङ्गस्यारादुपकारकाङ्गानां च परस्परमङ्गाङ्गित्वाभावात् । अन्यथाऽवघातं प्रति प्रयाजादेः शेषत्वं स्यादित्यर्थः। तर्ह्याग्नेयादिवत् त्रयाणामपि प्राधान्यमस्त्वित्यत आह ॥ हीषादेरिति ॥ सौभराख्येन सामविशेषेण वृष्ट्यावन्नाद्ये स्वर्गे च फले जननीये सति हीष् ऊर्क ऊ इत्येषां सौराख्यसामसमाप्त्यवयवानां सौभरेण वृष्टौ जननीयायां हीषृइत्येतस्य अन्नाद्ये जननीये ऊर्क इत्येतस्य स्वर्गे जननीये ऊ इत्येतस्य सौभरं प्रत्येव यथाङ्गत्वं तथा शब्देन परोक्षज्ञाने जननीये शक्त्याद्यवधारणरूपविचारस्याङ्गत्वमपरोक्षज्ञाने शब्देन जननीये मननादेरङ्गत्वमिति शब्दं प्रत्येव त्रयाणामङ्गत्वं वक्तुं युक्तम् । नतु परस्पराङ्गत्वम् । अन्यथा हीष् इत्यादीनामपि परस्पराङ्गत्वं स्यात् ॥ भिन्नफल इति ॥ शब्देन जननीय इति शेषः । स्याच्छब्दोऽनास्थायाम् । निदिध्यासनं प्रति श्रवणादेरङ्गत्वस्य वक्ष्यमाणत्वात् । मौनिश्लोकादौ शब्दाभावादाह ॥ शब्दज्ञाने वेति ॥ शक्त्यवधारणस्य विचारात्पूर्वभावित्वेन विचारानन्तर्गतत्वात्तात्पर्यावधारणमेव तदन्तर्गतमिति मत्वाह ॥ तात्पर्यविशिष्टेति ॥ अन्योन्याश्रयादिति ॥ तात्पर्यविषयशब्दार्थमज्ञात्वा तत्र तात्पर्यस्य ग्रहीतुमशक्यत्वात्तात्पर्यज्ञाने शाब्दज्ञानापेक्षा तस्मिंश्च तात्पर्यज्ञानापेक्षेत्यन्योन्याश्रयः । नन्वेवमाकाङ्क्षादिधियोपि निराकाङ्क्षत्वादिभ्रमनिरासिका एव नतु शाब्दधीहेतव इति स्यात् । न स्यात् । निराकाङ्क्षत्वादिज्ञानाभावेप्याकाङ्क्षादिज्ञानं विना शब्दज्ञानाभावस्यानुभवसिद्धत्वात् । ननु तात्पर्यज्ञानाहेतुत्वे कथं नानार्थे विनिगमना । अन्वयविशेषयोग्यतयेति गृहाण । यत्तु ग्राह्यसंशयविपर्ययोत्तरप्रत्यक्षे विशेषदर्शनमिव तात्पर्यसंशयोत्तरशाब्दज्ञाने तात्पर्यधीः कारणमिति

(तरङ्गिणी)

तन्न। उभयत्रोभयस्य प्रतिबन्धनिरासमात्रोपयोगित्वेनाहेतुत्वात् । तदिदमुक्तं प्रतिबन्धनिरासेत्यादि । तात्पर्यभ्रमस्य प्रतिबन्धकत्वं च कार्यबलान्मणिमन्त्रादिवत् । अत एव साक्षादविरोधिनो ज्ञानस्य जनकज्ञानविघटकतयैव प्रतिबन्धकत्वमित्यादेरनवकाशः ।। बाह्यागमेपीति ।। शब्दार्थस्य बाधितत्वेपि तद्वक्तुस्तत्र तात्पर्यमबाधितमेव ।। दुष्टत्वेति ।। ज्ञानरूपेषु ज्ञानकरणेषु भ्रमरूपं दुष्टं प्रमारूपमदुष्टमित्यन्यत्र दृष्टा व्यवस्था न स्यात् । यादृच्छिकसंवादिलिङ्गविभ्रमस्य तु दुष्टत्वमेव । स्वव्यापकभ्रमहेतुत्वात् । तत्र प्रतीतस्य तदव्यापकत्वात् । ननु वेदे कुत्रचिदेव तात्पर्यभ्रमो बाह्यागमे तु कुत्रचिदेव तत्प्रमेति । मैवम् । यत्रैव तद्भ्रमप्रमे तदंश एव तयोर्दुष्टत्वादुष्टत्वापातात् ।। करणीयेति ।। करणं व्यवदानयागः। तस्य द्रव्यं व्रीह्यादि । तत्रावघातादेः शेषत्वं यथास्ति तथा प्रकृते नास्तीत्यर्थतात्पर्यावधारणं शब्दं प्रति न सन्निपात्यङ्गमित्यर्थः । यत्तु दृष्टान्ते सर्वसाम्यं नापेक्षितमतोवघातवैषम्येपि तात्पर्यावधारणं शब्दं प्रति न सन्निपत्याङ्गमेवेति । तन्न । मीमांसकप्रक्रियालेशस्याप्यज्ञानेनोक्तत्वात् ।। सन्निपत्येति ।। दृष्टार्थानि क्रियारूपाणि स्वकारकस्योत्पत्त्यादि कुर्वन्ति अदृष्टार्थानि सन्निपातीनि तु स्वकारकेष्वतिशयमादधति तत्तदङ्गभावमनुभवन्ति तात्पर्यावधारणं त्वनुभयं कथं सन्निपाति स्यात् ।। अन्यथावघातादिरिति ।। ननु विशिष्टयागप्रविष्टतयावघातस्य शेषित्वमिष्टमेव । असाधारण्येन शेषिता तु न । असाधारण्येन फलोपकारत्वाभावादिति । न । श्रवणत्वेन श्रवणस्य शेषित्ववदवघातत्वेनावघातस्य प्रयाजादिशेषित्वस्यापाद्यमानत्वात् ।। एतेनेति ।। प्रधानं प्रति सन्निपत्योपकारस्य प्रधानोपकारकान्तरापेक्षया शेषित्वेऽवघातादेः प्रयाजाद्यपेक्षया शेषित्वापातेनेत्यर्थः । ननु प्रयाजादिकं यागस्यैव सहकारि मननादिकं तु शब्दसहकारिभूतस्य चित्तस्य सहकारीति वैषम्यमित्यत आह ।। सोमयागेति ।। सोममभिषुणोति आश्विनं गृह्णातीत्यादिना विहितमभिषवग्रहणादिकं सोमयागे सन्निपात्यङ्गम् । अत एवाभिषवादिकं करणभूते शब्दस्थानीये सोमयागे अतिशयाधायकं करणान्तर्गततात्पर्यावधारणस्थानीयं तत्प्रति सोमयागसहकारिभूतायाः दीक्षणीयचित्तस्थानीयान्तरगमत एव तद्गतातिशयहेतुः प्रयाजप्रोक्षणादिमननादिस्थानीयमङ्गं स्यात् । नन्वभिषवादियुक्तसोमयागं प्रत्यङ्गस्य प्रयाजादेरभिषवादिकं प्रत्यपि तदस्त्येवेति वदन्तं प्रत्याह ।। गौणाङ्गत्वमिति ।। श्रुत्यादिगम्येऽङ्गत्वे तद्विनापि कल्पनेऽतिप्रसङ्गः । शब्दादापरोक्ष्यं वदता शब्दत्रयाणामङ्गत्वं वक्तुं युक्तमित्याह ।। किञ्चेति ।। अन्यथेति ।। अनेकफलानि साधयतैकेन तत्तत्फले जनयितव्येऽपेक्षितानां सहकारिविशेषाणां परस्परमङ्गाङ्गिभावाङ्गीकार इत्यर्थः । सौभरेण सौभरनामकेन साम्ना । निधनं साम्नोन्त्योवयवः ।

(तरङ्गिणी)

द्वितीयस्य चतुर्थेभिहितम् । सौभरे पुरुषश्रुतेर्निधने कामसंयोगः । ब्रह्मसामाख्यं स्तोत्रं प्रकल्प्य तदाश्रितं सौभरं फलत्रयसाधनत्वेन यो वृष्टिकाम इति वाक्येन विधाय वृष्ट्यादिसाधने सौभरे निधनसाधनत्वेन हीषादयो हीषादिवाक्येन विहिताः । तत्र संशयः । किम्हीषादयो निधनविशेषाः सौभरफलात्फलान्तरार्थेन विधीयन्ते उत सौभरस्यैव तत्तत्फलं साधयतः तत्तन्निधनमनियमेन पाठतः प्राप्तं नियम्यत इति । तदर्थं किं वृष्टिकामादिशब्दोक्तपुरुषशेषत्वेनैते साक्षाद्विधीयन्ते उत वृष्टिसाधनसौभरशेषत्वेनेति । तत्र वृष्टिकामादिशब्दैः पुरुषस्य श्रुतत्वात्तादर्थ्यमेव हीषादीनां चतुर्थ्या विज्ञायते । पुरुषशेषता च तदभिलषितफलसाधनतयेति फलार्थत्वमेवैषाम् । वृष्टिकामशब्देन वृष्टिकामस्येच्छाविषयवृष्टिसाधनसौभरोक्तौ लक्षणा स्यात् । नच श्रुतिसम्भवे सा युक्ता । तस्माद्धीषादयो गुणाः सौभरफलाद्वृष्ट्यादेर्भिन्नस्य हेतव इति । अत्राहुः । वृष्ट्यादीनि पूर्वोक्तान्येव विपरिवर्तमानानि प्रत्यभिज्ञायन्त इति न फलान्तरावगमः । किञ्च हीषादिशब्दमात्रे फलाय विहिते सत्याश्रयापेक्षाया न तावन्निधनमाश्रयो भवितुं युक्तम् । तस्याप्रकृतत्वात् । नापि सौभरम् । प्रकृतत्वेप्यनेकावयवत्वान्नियमेन निधनसम्बन्धायोगात् । तथात्वे निधनमित्यनर्थकं स्यात् । निधनस्यापि विधाने वाक्यभेदः । तस्माद्वृष्टिकामादिशब्दलक्षिते सौभरे निधनत्वेनैवानियतप्राप्ता हीषादयो नियम्यन्ते । अथवा लक्षणापि नास्ति । नहि यदेव फलस्य कारणं तस्यैव पुरुषशेषत्वं तदङ्गस्यापि तद्द्वारेणास्ति पुरुषशेषिता । तथा च प्रयोगो दृश्यते । वासिष्ठानां नाराशंसो द्वितीयः प्रयाज इति । सौभराङ्गभूतास्तद्द्वारेण वृष्टिकामादीनां पुरुषाणामनियमेन शेषभूताः प्राप्तास्तानेव प्रति यथा प्राप्तरूपा नियम्यन्त इति न लक्षणा । तदुक्तम् । ''तस्मात्फलान्तरार्थेन नैव हीषादयो गुणाः । विधीयन्ते नियंम्यन्ते ते यथा प्राप्तसौभर'' इति । एकस्य भिन्नभिन्नकार्यजननेऽपेक्षितानां भिन्नभिन्नसहकारिणां परस्परमङ्गाङ्गिभावे दूषणान्तरमाह ॥ करणापूर्वेति ॥ यागेन करणापूर्वे जननीयेऽवघातादिः सहकारी। परमापूर्वे तु जननीये प्रयाजादिः सहकारी । नत्ववघातादिकं प्रति प्रयाजादिः शेषः । त्वद्रीत्या तु स्यादित्यर्थः । करणापूर्वं नाम प्रधानमात्रेण जननीया पूर्वम् । साङ्गेन तेन जननीयं तु परमापूर्वमिति । ननु शब्दस्य परोक्षज्ञानं प्रति हेतुत्वे तदवच्छेदेन श्रवणस्य शब्दं प्रत्यङ्गत्वं स्यात्तदेव तु नास्तीत्यत आह ॥ क्लृप्तं चेति ॥ एतेन यागेऽपूर्वभेदवत्प्रकृते न कार्यभेद इति निरस्तम् । नन्वकरणमपि प्रयाजादिकं प्रत्याज्यग्रहणादेरिव श्रवणं प्रति मननादेरङ्गत्वं भविष्यतीत्यत आह ॥ नचाकरणमपीति ॥ चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तदित्यादेरिवात्र श्रुत्यादेरभावात् ॥ लिङ्गन्त्विति ॥ श्रुतस्यार्थस्य मन्तव्यादिरूपतया श्रवणस्य मननाद्युपकारकत्व-

(तरङ्गिणी)
रूपसामर्थ्यवन्मननध्यानयोः श्रोतव्यत्वाभावेन तयोस्तथासामर्थ्याभावाद्विपरीतं लिङ्गं सामर्थ्यम् ॥ प्रकरणमिति ॥ इतिकर्तव्यताकाङ्क्षाप्रकरणम् ॥ श्रवणस्येति ॥ तात्पर्यावधारणरूपश्रवणस्य शाब्दप्रमारूपफलाहेतुत्वात् ॥ स्थानेति ॥ स्थानं सादेश्यम् । समाख्या यौगिकी संज्ञा । ननु तात्पर्यावधारणरूपश्रवणस्य शाब्दप्रमां प्रत्यहेतुत्वेनाप्रधानतयेतिकर्तव्यतारूपाकांक्षाविरहेपि तात्पर्यावधारणहेतोर्विचारस्य शाब्दप्रमाहेतुत्वादिकं स्यादित्यत आह ॥ किञ्चेति ॥ मननादेः शाब्दज्ञानेऽहेतुत्वेन श्रवणं प्रति मतयोः फलोपकार्यङ्गत्वमित्याह ॥ यच्चोक्तमिति ॥ तत्र मननस्य न शाब्दज्ञानहेतुत्वं द्वाराभावादित्याह ॥ सूक्ष्मेति ॥ चित्तैकाग्र्यस्य शाब्दज्ञान-विशेषत्वेपि न तस्य मननसाध्यत्वम् । किन्त्वयुक्तत्वं शङ्कानिवृत्तिरेव तत्साध्या । तद्रहिते अयुक्तत्वशङ्कारहिते ॥ उक्तेति ॥ चित्तैकाग्र्यम् ॥ शङ्केति ॥ असम्भावनेत्यर्थः । अयुक्तत्व-शङ्कानिवृत्तिस्तु मननद्वारा । तस्याः प्रतिबन्धकाभावरूपत्वादिति भावः ॥ मननविधेरिति ॥ चित्तैकाग्र्यस्य मननसाध्यताया मानान्तराप्राप्तत्वात् ॥ मतिरिति ॥ अयुक्तत्वशङ्कानिवर्तकत्वमेव मनने प्रतीयते । नतु चित्तैकाग्र्यहेतुत्वम् । निदिध्यासनस्यापि न शाब्दधीहेतुत्वम् । द्वारा-भावादित्याह ॥ निदिध्यासनस्येति ॥ रूप्येति ॥ ननु इयं शुक्तिरिति ज्ञानानन्तरं तद्रजततया ज्ञातमिति स्मृतेर्ज्ञानगोचरसंस्कारसत्त्वेपि तद्रजतमिति स्मरणेन विपरीतसंस्कारनिवृत्तिस्त-त्राप्यस्तीति ॥ मैवम् । रूप्यसंस्कारसत्त्वेन शुक्तिसाक्षात्कारवत्प्रपञ्चसंस्कारसत्त्वेपि ब्रह्म-साक्षात्कारसंभवात् । तत्प्रवृत्तिनिदिध्यासनस्य द्वारमित्युक्तावेतस्य व्यधिकरणत्वात् ॥ श्रवण-सामर्थ्येति ॥ श्रुतार्थस्यैव मतस्यैव ध्यातव्यत्वात् ॥ निदिध्यासनस्येति ॥ फलसाधनस्यैवेति-कर्तव्यताकाङ्क्षारूपप्रकरणं फलसाधनं च निदिध्यासनमेव ततस्तु तं पश्यत इति वाक्यात् । ननु श्रवणमनने ध्यानं प्रति लिङ्गप्रकरणाभ्यां सन्निपात्यङ्गे इति न युक्तम् । तयोर्ध्यानं प्रति फलोपकारकत्वसम्भवादित्यत आह ॥ युक्तश्चेति ॥ अतएवेति ॥ स्वरूपोपकारस्यान्तरङ्गत्वादेव । नवमे द्वितीयपाद इति शेषः । पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हि दर्शपूर्णमासयोः । स्रुवेण पार्वणहोमौ जुहोतीति तद्धितश्रुत्या पर्वदैवत्यौ होमौ श्रुतौ । तौ किं विकृतिर्दृश्यते नवेति संशयः तदर्थमिदं विचार्यते किं पर्वशब्दः कालवचनः कालोस्य देवता तस्य चासंस्कार्यत्वादारादुपकारकौ होमौ उताग्नेयादिसमुदायवचनः समुदायदैवत्यौ होमौ तत्संस्कार्याविति । तत्र पृणातेर्दानकर्मणः पर्वशब्दः सच दीयतेस्मिन्नित्यधिकरणव्युत्पत्त्या कालेपि मुख्यो भावव्युत्पत्त्या कर्मण्यपि । तत्र प्रकरणात्सामवायिकत्वलाभाच्च कर्मवचनत्व-मङ्गीकृत्य तत्संस्कारार्थता होमयोः । तेषां च कर्मणां तन्त्रेणाभिहितानामग्नीषोमयोरिव

(तरङ्गिणी)

व्यासक्तं देवतात्वम् । नैकैकशः । तेन समुदायस्य देवतात्वात् । तस्य च विकृतिस्वभावादतद्विकारत्वाच्च सौर्यादेस्तत्र होमयोरप्रवृत्तिः । नहि सौर्यादयः समुदायविकाराः । तदुक्तम् । काले शब्दस्य मुख्यत्वात्कालामाज्येह गम्यते । पृणातेर्दानकर्मत्वात्कर्मण्यपि च मुख्यतेति ॥ पाठरूपेति ॥ यथा सान्नाय्यपात्रशुन्धनक्रमाच्छुन्धध्वमिति मन्त्रस्य सान्नाय्यपात्राङ्गत्वम् ॥ सन्निधानस्येति ॥ यथा दर्शपूर्णमासयोः श्रूयते हस्ताववनिक्ते उलुपराजिंस्तृणातीति तत्र हस्तावनेजनं हस्तसंस्कारार्थं सत् करिष्यमाणसर्वाङ्गं वा अनन्तरोक्तोलुपराजिस्तरणाङ्गं वेति संशये आनन्तर्यरूपसन्निधानात्तन्मात्राङ्गमिति प्राप्ते लिङ्गेन सर्वाङ्गमिति सिद्धान्तितं तृतीयस्य द्वितीये । आदिपदेन श्रुत्वा मत्वेत्यादिका श्रुतिः सन्निधानं च गृह्यते । श्रवणमननयोर्दृष्टद्वारा ध्यानस्वरूपनिष्पादकतया ध्याने सन्निपात्यङ्गत्वन्ध्यानस्य तु फलसम्बन्धेन प्राधान्यमित्यर्थे पाठसादृश्यलक्षणः सन्निधिरप्यस्तीत्याह ॥ श्रुत्वा मत्वेति ॥ परोक्षनिश्चयं विना ध्यानस्वरूपासिद्धेस्तत्र तयोः सन्निपातित्वमपि ॥ प्रमाकरणत्वमसिद्धमितीति ॥ ततस्तु तं पश्यत इति वाक्ये दर्शनमात्रश्रवणादिति भावः ॥ निदिध्यासनानन्तरमिति ॥ अत एव ध्यानममानकमित्यत आह ॥ अथवेति ॥ मननिदिध्यासनयोर्विवरणोक्तश्रवणाङ्गत्वभङ्गः ॥ १ ॥

## न्यायामृतकण्टकोद्धारः

यो योगिभिर्विरक्त्या युक्तैः सेव्यो हि नित्यदा ।
भक्त्यैकलभ्यः पुरुषस्तं भजे वल्लभं श्रियः ॥

ननु यदुक्तं मुमुक्षुणा श्रवणाद्यङ्गकमङ्गीभूतं निदिध्यासनं ब्रह्मसाक्षात्कारायानुष्ठेयमिति तदयुक्तम् । श्रवणस्याङ्गित्वेन मननिदिध्यासनयोश्चाङ्गत्वेन श्रवणस्याङ्गत्वासम्भवात् । न च तस्याङ्गित्वं कुत इति वाच्यम् । द्रष्टव्यः श्रोतव्य इति दर्शनरूपफलवत्त्वात् प्रमाणत्वाच्चेत्याशयेन शङ्कते नन्वेतदिति । विवरणे इत्युक्तत्वादित्यन्वयः । प्रमाणस्येति । प्रमेयभूतब्रह्मावगमं प्रति श्रवणरूपप्रमाणस्याव्यवधानेनाङ्गित्वमिति भावः । ननु मननिदिध्यासनयोरङ्गत्वमयुक्तम् । तथा हि तद्धि प्रोक्षणादेरिव करणस्वरूपनिष्पादकत्वेन सन्निपत्योपकारकत्वं वा प्रयाजादेरिव फलोपकार्युपकारसम्पादकत्वरूपमारादुपकारकत्वं वा ? नाद्यः । मननिदिध्यासनयोरभावेऽपि श्रवणस्य सम्भवेन कारणस्वरूपनिष्पादकत्वाभावात् । न द्वितीयः । तादृशोपकारादर्शनादित्यतः आह मननेति । मननिदिध्यासने फलोपकार्यङ्गे इत्यन्वयः । तत्र हेतुश्चित्तस्येत्यादिः । प्रत्यगात्मप्रवणः प्रत्यगात्मविषयो यः श्रुतिदृढः संस्कारः तेन परिनिष्पन्ना या चित्तस्य तदेकाग्रा वृत्तिः तद्रूपं यत् कार्यं तद्द्वारेणेत्यर्थः । अयमभिसन्धिः । मननिदिध्यासनयोः फलोपकार्युपकारसम्पादकत्वेनारादुपकारकत्वमेव । न च तादृश उपकारो न दृश्यत इत्युक्तमिति वाच्यम् । प्रत्यगात्मविषयातिदृढसंस्कार

(कण्टकोद्धारः)
सञ्जात चित्तैकाग्र्य वृत्तेरेव तादृशोपकारस्य सम्भवादिति । अत्र यदुक्तं फलवत्त्वात् प्रमाणत्वाच्च श्रवणस्याङ्गित्वमिति, तत्र न तावदाद्यो हेतुः । 'ततस्तुतं पश्यते निष्कलं ध्यायमानः' 'श्रुत्वामत्वा तथाध्यात्वे'त्यादि श्रुतिस्मृतिभिर्ध्यानस्यापि फलवत्त्वात् । द्वितीयेऽपि श्रवणं किं प्रत्यक्षमुतानुमानमथवा शब्दः आहोस्वित् स्वतन्त्रमेव प्रमाणम्? नाद्यद्वितीयौ । तथा सति नेन्द्रियाणि नानुमानमिति श्रुते ब्रह्मणः शब्दैकसमधिगम्यत्वेन श्रवणविषयताभाव प्रसङ्गात् । नापि तृतीयः । विवरणे श्रवणस्य विचाररूपताया उक्तत्वेन, विचारस्य च युक्त्यनुसन्धानात्मकत्वेन शब्दरूपत्वासम्भवादित्यभिप्रेत्य चतुर्थपक्षं प्रतिषेधति । न यत इति । शब्दप्रमाणज इति हेतुगर्भं विशेषणम् । अन्यथा शब्दप्रमाणजन्यत्वं न स्यादित्यर्थः । ननु मास्तु श्रवणरूपविचारस्य स्वातन्त्र्येण करणत्वम् । तथापि ब्रह्मविषयकबोधं प्रति करणीभूतशब्दाङ्गत्वेन भविष्यतीति चेन्न । अङ्गत्वं हि तस्य किं सन्निपत्योपकारकत्वरूपमुतारादुपकारकत्वरूपम्? नाद्यः इत्याह । न चायमिति । हन्तिवत् अवघातवत् । अवघातादेः पुरोडाशस्वरूपनिष्पादकत्वमिति द्वितीयः पक्षोऽप्यपास्तः । तथा सत्यन्योन्यं शेषिभावो न स्यात् । अन्येति । सन्निपत्याङ्गत्वेऽपि यदि शेषित्वं तर्हीत्यर्थः । अत्र दृष्टान्तमाह हीषादेश्चेति । उपसंहरति तस्मादिति । ननूक्तरीत्या द्विविधाङ्गत्वासम्भवेऽपि श्रवणरूपविचारस्य शब्दशक्ति तात्पर्यावधाणणरूपत्वादवधृतशक्तितात्पर्यकशब्दस्यैव करणत्वे करणकोटिनिवेशेन करणत्वं स्यादेवेति न कोऽपि दोष इत्याशङ्कां परिहरन् स्वकारिकां स्वयमेव विशदयति तथाहीति । शब्दरूपे शब्दज्ञानरूपे वेति मतभेदाभिप्रायेण । इतिकर्तव्यता मात्रत्वादिति । न चैवमपि अवधृततात्पर्यक शब्दस्यैव करणत्वात् विचारस्य करणकोटिनिवेशेन करणत्वादितिकर्तव्यतात्वाभावात् अङ्गित्वं स्यादित्युक्तस्य न परिहार इति वाच्यम् । अवधृततात्पर्यकशब्दस्य करणत्वं किं शाब्दज्ञानत्वावच्छेदेन, ब्रह्मविषयक शाब्दज्ञानत्वावच्छेदेन वा? नाद्यः । तात्पर्यावधारणाभावेऽपि लोके शब्दादर्थबोधस्य जायमानत्वेन व्यभिचारात् । न द्वितीयः । अन्यत्रक्लृप्त पूर्ववर्तिन एव कारणत्वसम्भवे अधिककल्पने मानाभावात्, वक्ष्यमाणान्योन्याश्रयग्रासाच्च । तात्पर्यविशिष्टेति । विशेषणीभूत तात्पर्यविचारस्यापि करणकोटि निवेश इति भावः । एतेनेत्येतदेव विशदयति आकाङ्क्षेति । तात्पर्यज्ञानस्य करणकोटिनिवेशः किं प्रकारान्तरेण शब्दज्ञानस्य करणत्वासम्भवाद्वा त्वदभियुक्तोक्तेर्वा? नाद्य इत्याह । आकाङ्क्षेति । न द्वितीय इत्याह । विवरण इति । अन्योन्याश्रयादिति । सत्यां शाब्दप्रमायामस्य शब्दमात्रे तात्पर्यमित्यवधृततात्पर्यकं शाब्दज्ञानम् । तस्मिंश्च सति शाब्दप्रमेत्यन्योन्याश्रय इत्यर्थः । ननु यदि तात्पर्यज्ञानस्य तात्पर्यभ्रमरूपप्रतिबन्धनिरासोपक्षीणत्वेनान्यथासिद्धत्वात् न करण कोटिनिवेशस्तर्हि आकाङ्क्षादिज्ञानस्यापि निराकाङ्क्षत्वभ्रम निरासकत्वमात्रेणोपयोगापत्तौ आकाङ्क्षादेरपि करणकोटि निवेशो न स्यादिति चेन्न । अनन्यथासिद्धान्वयव्यतिरेकाभ्यां शाब्दज्ञानत्वावच्छदेनाकाङ्क्षादि ज्ञानस्य करणत्वावधारणेनान्यत्रोपक्षयकल्पनासम्भवात् । नचैवमनन्यथासिद्धान्वयव्यतिरेकौ तात्पर्यज्ञानस्य विद्येते । तात्पर्यज्ञानाभावेऽपि शाब्दबोधस्य जायमानत्वेन व्यभिचारात् । किञ्चाकाङ्क्षाभ्रमाच्छाब्दभ्रमस्य जायमानत्वात् यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपि कार्यकारणभाव इति न्यायेन शाब्दज्ञानमात्रे आकाङ्क्षादिज्ञानस्य कारणत्वम् । न चैवं तात्पर्यभ्रमादपि

(कण्टकोद्धारः)

शाब्दभ्रमस्य जायमानत्वेनैतन्न्याय विषयत्वमिति वाच्यम् । अत्र व्यभिचाररूप बाधकसत्वेनासति बाधक इत्यस्याभावेनैतन्न्यायाविषयत्वाच्च । नन्वेवं सर्वत्र तात्पर्यज्ञानस्याजनकत्वेऽपि संशयविपर्ययोत्तरशाब्दज्ञानविशेषे तस्य हेतुत्वं स्यादेव संशयविपर्ययोत्तरप्रत्यक्षे विशेषदर्शनस्येवेति चेन्न । तथासति विशेषदर्शनवदेव तात्पर्यज्ञानस्य शाब्दज्ञानविशेषे स्वातन्त्र्येणैव कारणत्वसम्भवेन कारणकोटिनिवेशकल्पनस्यायुक्तत्वात् । कारणकोटिनिवेशेहि शाब्दज्ञानमात्रे कारणत्वं समायाति । तच्च स्वोक्तिविरुद्धम् । अन्यथा विशेषदर्शनस्यापि कारणकोटिनिवेशः स्यादिति विशेषदर्शनसहितचक्षुरादेः कारणत्वं स्यात् । अभ्युपेत्यचेदमुदितम् । वस्तुतस्तु संशयोत्तरप्रत्यक्षे विशेषादर्शनस्य प्रतिबन्धकत्वेन प्रतिबन्धकाभावसम्पादकत्वेनान्यथासिद्धत्वात् विशेषदर्शनस्य न कारणत्वम् । किञ्च विशेषदर्शनस्य प्रत्यक्षमात्रे वा कारणत्वं, संशयोत्तरप्रत्यक्षेवा, तदुत्तरैकमात्रकोटिकप्रत्यक्षे वा? नाद्यः । व्यभिचारात् । न द्वितीयः । संशयानन्तरसंशयान्तरोदयात् । न तृतीयः । तथासत्येकमात्रकोटिकं प्रत्यक्षं भवतु । उभयकोट्यारोपरूप संशयानुत्पादः कथम्? न च तस्य संशयोत्पादे प्रतिबन्धकत्वात् न तदुत्पाद इति वाच्यम् । तर्ह्यन्यथासिद्धत्वेन कारणत्वाभावः स्यादिति न तद्दृष्टान्तेन शाब्दज्ञानविशेषे तात्पर्यज्ञानं कारणमिति न तस्य कारणकोटिनिवेशकल्पनं युक्तम् । न च सामान्यतोऽर्थावगमेन तात्पर्यग्रहसम्भवान्नान्योन्याश्रय इति वाच्यम् । यस्मिन्कस्मिंश्चदर्थसामान्ये शब्दतात्पर्यावगमस्यातिप्रसङ्गित्वात् विशेष तात्पर्यावगमस्य चान्योन्याश्रयग्रस्तत्वात् । नानार्थे च प्रकरणादेरेव नियामकत्वसम्भवात् । अन्यत्रोपक्षीणत्वोक्त्या विशेषकारणत्वस्यानभिप्रेतत्वेन विवरण विरोधापरिहाराच्चेत्यलम् । ननु तात्पर्यज्ञानस्य यथाकथञ्चिदपि शाब्दज्ञानोपयुक्तत्वात् कारणकोटिनिवेशो युज्यते । न तु मननादेः । यथाकथञ्चिदपि शाब्दज्ञानोपयुक्तत्वाभावादित्यत आह किञ्चेति । न च वेद बाह्यागमयोः सत्वेपि दुष्टत्वादुष्टत्वव्यवस्था युज्यते । वेदस्यापौरुषेयत्वेन निर्दोषत्वात् । बाह्यागमस्य तु पौरुषेयतया प्रतारणादिमत्पुरुषकृतत्वेन दुष्टत्वादयथार्थं तदिति वाच्यम् । एवमपि तात्पर्यभ्रमप्रमयोरुभयत्र सत्वेन सङ्करस्यापरिहारात् । न च योग्यताप्रमात्वाप्रमात्वाभ्यामेव व्यवस्थेति वाच्यम् । तथा सति तत्प्रमात्वाप्रमात्वाभ्यामेव दुष्टत्वादुष्टत्व इति तस्यैव करणकोटिनिवेशसम्भवे तात्पर्यज्ञानस्य तदुपवर्णनायोगात् । ननु शब्दस्वरूपानुप्रविष्टत्वेनाकारणत्वेऽपि शब्दस्य सन्निपत्त्योपकारकत्वेन कारण कोटिनिवेशः स्यादित्याशङ्क्य परिहरति । न चेति । न च सर्वसाम्यं दृष्टान्तत्वे न प्रयोजकम् अतिप्रसङ्गादिति वाच्यम् । यत्साम्यमुपादाय दृष्टान्तत्वं तत्साम्यस्य दार्ष्टान्तिके अवश्याश्रयणीयत्वात् । सन्निपत्योपकारकत्वं हि करणस्वरूपनिष्पादकत्वम् । तदभावे एवमेव तु सन्निपत्योपकरत्वोक्तेः रिक्तत्वात् अतिप्रसङ्गाच्च । तुष्यतु दुर्जन इति न्यायेन सन्निपत्योपकारकत्वमभ्युपेत्यापि दूषणमाह किञ्चेति । सन्निपत्योपकारकफलोपकारकयोरङ्गाङ्गिभावस्य काप्यदर्शनेनेति भावः । अन्यथेति । सन्निपत्योपकारकस्यापि फलोपकारकं प्रति शेषित्वे इत्यर्थः । ननु विशिष्टयागप्रविष्टत्वेन वा शेषित्वमापाद्यते असाधारण्येन वा? नाद्यः । इष्टापत्तेः । असाधारण्येन फलोपकारकत्वाभावेन असाधारण्येन शेषित्वस्य वक्तुमशक्यत्वात् । युज्यते च श्रवणस्य, करणोपकारजनकत्वादिति चेन्न । श्रवणं हि किं तात्पर्यावधारणरूपम्, उत

(कण्टकोद्धारः)

युक्त्यनुसन्धानात्मकविचाररूपम्, अथवा शाब्दज्ञानम्? नाद्यः । असंभावनानिवृत्त्यभावेऽपि उपक्रमादिनैव तात्पर्यावधारणरूपश्रवणसम्भवेन मननादेस्तदुपयोग्युपकारजनकत्वासम्भवेन शेषित्वानुपपत्तेः । मननादेस्तदुपयोग्युपकारजनकत्वासम्भवेन शेषित्वानुपपत्तेः । न द्वितीयः । तथासति श्रवणस्य मनन रूपतापत्त्या स्वजन्योपकारस्य स्वापेक्ष्यत्वासम्भवात् । स्वस्यैव स्वं प्रति शेषित्वापाताच्च । न तृतीयः । असम्भावनानिवृत्तेरसंसर्गाग्रहरूपत्वेन तस्य च विशिष्टज्ञानमात्रकारणत्वेन श्रवणोपयोग्यसाधारणोपकारजनकत्वाभावात् । निदिध्यासनस्य चित्तसन्ततिरूपत्वेनोपकारजनकत्वस्य सर्वथाभावाच्च । एतेनेत्यस्यार्थमाह सोमयागेति । न चासाधारणोपकारजनकत्वोक्त्या उक्तोत्तरमेतदिति वाच्यम् । तस्य दूषितत्वात् । श्रवणस्योक्तरित्या तात्पर्यवधारणरूपत्वे विचाररूपत्वे शाब्दज्ञानरूपत्वे वा शब्दगतस्य जातिरूपस्योपाधिरूपस्य वाऽजननात् । मननादिजन्यचित्तैकाग्र्यरूपचित्तगतातिशयस्योक्तरूपश्रवणोपकारकत्वाभावाच्च । यत्तु श्रवणजन्यः शब्दगतोऽतिशयः शक्तितात्पर्यविषयत्वरूप एवेति न दोष इति तत्वशुध्युक्तं तदतिदेशेन निरसितुमनुवदति एतेनेति । ननु सन्निपत्योपकारकफलोपकारकयोः परस्परमङ्गाङ्गिभावाभावेऽपि त्रयाणामपि फलोपकार्यङ्गत्वेन परस्परमङ्गाङ्गिभावः स्यादित्यत आह किञ्चेति । न च त्रयाणां फलोपकार्यङ्गत्वेऽपि मननिदिध्यासनयोः फले जनयितव्ये शब्दसहकारिसम्पादकत्वात्, श्रवणस्य तु शब्दे फलजनकतासम्पादकत्वेन विशेषाद्युज्यतेऽङ्गाङ्गिभाव इति वाच्यम् । श्रवणं हि किं शब्दे साक्षात्काररूपफलजनकतां सम्पादयति, उत परोक्षज्ञानरूपफलजनकताम्? नाद्यः । शब्दस्य साक्षात्काररूप फलजनकत्वाभावेन श्रवणस्य तत्सम्पादकत्वायोगात् । धर्मादेरपि शब्दादापरोक्ष्य सम्भवेनातीन्द्रियोच्छेदापत्तेश्च । न द्वितीयः । जनकत्वस्य शक्तिरूपतया स्वत एव सिद्धत्वेन श्रवणस्य तज्जनकत्वानुपपत्तेः । वक्ष्यमाणरीत्या श्रवणस्य शाब्दज्ञानरूपत्वेन स्वस्य स्वजनकत्वापाताच्च । फलोपकार्यङ्गानामपि परस्परमङ्गाङ्गिभावाङ्गीकारे बाधकमाह अन्यथेति । न च करणस्वरूपसम्पादकत्वरूप प्रयोजकस्यात्रैव तत्राभाव इति वाच्यम् । करणीभूतशब्दस्वरूपस्य नित्यतया तत्सम्पादकत्वानुपपत्तेः । श्रवणस्य शाब्दज्ञानरूपतया तत्सम्पादकत्वासम्भवाच्च । अतिप्रसङ्गान्तरमाह करणेति । नचैकफले उभयोर्यागार्थत्वाभावेन विशेष इति वाच्यम् । एवमप्यनेकफलेऽतिप्रसङ्गापरिहारात् । किञ्चैकफलेऽपि उभयोर्यागार्थत्वाभावः कुतः? न च पूर्वगतसदाप्रधानजन्यापूर्वसहितैककपालहोमरूपक्रिययैव परमापूर्वोत्पत्तिसंभवे एककपालजन्यकरणापूर्वं नाभ्युपेयत इति वाच्यम् । समप्रधानपूर्वसहितैक कपालहोमाख्यक्रियाकाल एव परमापूर्वोत्पत्तिर्न संभवति । उत्तराङ्गजन्यापूर्वस्य सहकारिभूतस्याभावात् । क्रियायाश्च त्रिक्षणावस्थायित्वेन परमापूर्वोत्पत्तिकालेऽभावात् मध्ये करणापूर्वोत्पत्तिरावश्यकीति उभयोर्यागार्थत्वसत्वेन विशेषाभावापादनं युक्तमेवेति । न च परोक्षज्ञानस्यैव शब्दफलत्वात् कथं शब्दस्यापरोक्षज्ञप्तौ उत्पाद्यायां श्रवणस्यापेक्षितत्वेन फलोपकार्यङ्गत्वमित्यत्राह क्लृप्तं चेति । लोक इत्युपलक्षणम् । वेदेऽपीतिद्रष्टव्यम् । तथा च शब्दे अतिशयाधायकत्वेनाङ्गीकृतस्य श्रवणस्य साक्षात्कार फलजनकाङ्गित्वकल्पनेऽदृष्टकल्पनेति भावः । ननु किमिदं साक्षात्त्वम्? न तावज्जातिः । नाप्युपाधिरिन्द्रिय जन्यत्वादिकम् । किन्तु विषयगताज्ञाननिवर्तकत्वमेवापरोक्षत्वे प्रयोजकम् । तच्चातिशयाधायकत्वेऽपि युज्यत

(कण्टकोद्धारः)

एवेति नादृष्टकल्पनेति चेन्न । विषयगताज्ञाननिवर्तकत्वस्यापरोक्षत्वप्रयोजकत्वे धर्मादिविषयकानुमित्यादेरपि अपरोक्षत्वापत्तिः । नचानुमित्यादेर्विषयगताज्ञाननिवर्तकत्वमेव नेति वाच्यम् । तथासति धर्मादौ ज्ञातेऽपि न जानामीति बुध्यापत्तिः । अस्तुवा साक्षात्त्वं जातिः । न च प्रमात्वेन साङ्कर्यम् । तस्योपाधिरूपतया जातित्वाभावात् । जातित्वेऽपि तद्व्याप्यं प्रमात्वं नानैवेति न साङ्कर्यापातः । अस्तु वा उपाधिरूपं तत् । नचेन्द्रियजन्यत्वमनुमितावप्यस्तीति वाच्यम् । इन्द्रियत्वेनेन्द्रिय जन्यत्वस्य विवक्षितत्वात् । अनुमितौ च मनस्त्वेन जनकत्वसत्वेन इन्द्रियत्वेन तदभावात् । तथाचादृष्टकल्पनातादवस्थ्यमेवेति । श्रुतिवाक्ये इति । अनपेक्षः शब्दः श्रुतिः । पदसङ्घातमात्रं वाक्यमित्यर्थः । लिङ्गं तु विपरीतमिति । तच्चान्वयव्यतिरेकावसेयम् । यदि हि निदिध्यासनाभावे श्रवणाभावः स्यात् तदा निदिध्यासनस्याङ्गत्वं स्यात् । न चैवं, किन्तु श्रवणाभावे निदिध्यसनाऽसम्भवात् तस्मिन् सत्येव च निदिध्यासनसंभवेन श्रवणस्यैवाङ्गत्वं प्रतीयत इति लिङ्गं विपरीतमित्यर्थः । नापि प्रकरणमिति । इतिकर्तव्यताकाङ्क्षारूपमित्यर्थः । इतिकर्तव्यताकाङ्क्षा हि प्रधानेभवति । प्राधान्यं हि फलसम्बन्धिन एव । न च श्रवणस्य फलसम्बन्धोऽस्तीति प्राधान्यासिद्धा-वितिकर्तव्यताकाङ्क्षाऽसंभवादित्यर्थः । स्थानसमाख्येत्विति । पाठानुष्ठानसादेश्यरूपस्य स्थानस्य प्रकृतेऽ-संभावितत्वात् । पाठसादेश्यं हि यथासङ्ख्यसन्निधिरूपम् । न च तत् प्रकृतेऽस्तीति भावः । समाख्या हि यौगिकी संज्ञा । न च प्रकृते आध्वर्यवमित्यादि संज्ञावद् यौगिकी संज्ञास्ति, यया शेषशेषिभावोऽवगन्तव्य इति भावः । किञ्च श्रवणरूपविचारस्य सति प्रमाफलकत्वे मननादेः फलोपकार्यङ्गत्वं वक्तव्यम् । तच्च न युज्यते । तद्धि किं साक्षाद्वा, तात्पर्य ज्ञानद्वारा वा? नाद्यः । अनुपलम्भात् । न द्वितीयः । तात्पर्यज्ञानस्य शाब्दप्रमाहेतुतायास्त्वयैव निषिद्धत्वादित्याह किञ्चेति । ननु मननादेः श्रवणं प्रति फलोपकार्यङ्गत्वं किं दृष्टद्वारा, उतादृष्टद्वारा? नान्त्यः । अनङ्गीकारात् । आद्येऽपि मनननिदिध्यासनयोरेकमेव दृष्टद्वारमङ्गीक्रियते भिन्नमेव वा? एकद्वारत्वेऽपि समुच्चित्य वा कारणत्वमुत प्रत्येकमेव वा? नाद्यः । एकैकेनापि तस्य जाय-मानत्वात् । न द्वितीयः । अन्यतरवैयर्थ्यापत्तेः । विकल्पापत्तेश्च । न द्वितीयः । अदर्शनात्, इत्याशङ्का-परिहाराय यत् परैर्भिन्नत्वपक्षमभ्युपेत्य द्वारद्वैविध्यमुक्तं तद् दूषयितुमनुवदति यच्चोक्तमिति । असंभावना-विपरीतभावनयोरेकत्वादेकद्वारत्वमित्यत उक्तं चित्तैकाग्र्येति । विपरीतसंस्कारेति । तद्रहित इति । अयुक्तत्व-शङ्कारहित इत्यर्थः । दृष्टहान्यादीत्यादिपदेनादृष्टकल्पनपरिग्रहः । मननविधेरिति । मननस्यायुक्तत्वशङ्का-निवर्तकत्वे हि तस्या अन्वयव्यतिरेकाभ्यां प्राप्तत्वात् नियमविधित्वं युज्यते । उक्तयोग्यत्वशङ्कानिवर्तकत्वे हि तस्याप्राप्तत्वात् अपूर्वविधित्वं स्यादित्यर्थः । न च तादृशशङ्कायां सत्यां चित्तविक्षेपस्य जायमानत्वात् चित्तप्रवणताया अभावे उक्तशङ्कानिवृत्तौ चित्तविक्षेपस्य निवृत्तेः तावत्पर्यन्तत्वस्य दृष्टत्वेन दृष्टहान्याद्यभाव इति वाच्यम् । एतादृशचित्तप्रवणताया ज्ञानमात्रहेतुत्वेन मननस्य ज्ञानमात्रकारणत्वापत्तेः । निदिध्यासन-स्यापि उक्तविधं द्वारं नोपपद्यत इत्याह निदिध्यासनस्येति ।

(कण्टकोद्धारः)

ननु भवत्पक्षेऽपि निदिध्यासनस्याङ्गित्वं, श्रवणमनयोश्चाङ्गत्वमयुक्तम् । निदिध्यासनस्याङ्गित्वे प्रमाणाभावात् । श्रवणादेश्चाङ्गत्वं किं सन्निपत्याङ्गत्वमुतारादुपकारकत्वम् ? नाद्यः । ध्यानस्वरूपनिष्पादकत्वाभावात् । न द्वितीयः । अनङ्गीकारादित्याशङ्कां परिहरन्नुपसंहरति तस्मादिति । श्रवणस्य सामर्थ्यं कारणत्वं च सति श्रवणे ध्यानं, श्रवणाभावे तदभावः इत्यन्वयव्यतिरेकाभ्यामवसीयते । तथा च तेन लिङ्गेन प्रकरणेन चाङ्गत्वम् । नन्वितिकर्तव्यताकाङ्क्षा प्रकरणम् । इतिकर्तव्यताकाङ्क्षा च प्रधानस्यैव । प्राधान्यं च फलसम्बन्धे सत्येवभवति । न च निदिध्यासनस्य फलसम्बन्धोऽस्ति प्रमाणाभावात् । इत्यत उक्तं ततस्तु तं पश्यत इत्यादि । न च निदिध्यासनपदस्य बर्हिर्देवसदनं दामीत्यादाविव साक्षात्काररूप फलसम्बन्धे न शक्तिरिति सामर्थ्याभाव इति वाच्यम् । निदिध्यासनपदस्य साक्षात्काररूपफलसम्बन्धे शक्तेरनुक्तत्वेनोक्तदूषणस्य ग्रन्थार्थाबोधविजृम्भितत्वात् । वाक्ये च मध्ये श्रवणाध्याहारो न युक्तः । योग्यताबलस्यैवाभावात् । तथा च श्रवणमननयोर्ध्यानस्वरूपनिष्पादकत्वात् सन्निपत्योपकारकत्वमिति भावः । ननु फलोपकारकत्वमेव कुतो नाभ्युपेयत इत्यत आह युक्तिश्चेति । अत एवेति । फलोपकारात् स्वरूपोपकारस्य सन्निकृष्टत्वादेवेत्यर्थः । सन्निधानस्येति । तस्य समाख्यारूपत्वेन षष्ठप्रमाणत्वादिति भावः । ननु श्रवणमननयोर्ध्यानाङ्गत्वं किं साक्षाद्वा परम्परया वा? नाद्यः । श्रवणे सत्यनन्तरमेव ध्यानादर्शनात् । न द्वितीयः । परम्पराघटकद्वाराभावात् इत्यत आह किञ्चेति । उक्तेऽर्थे आचार्यसंमतिमाह तदुक्तमिति । यदि हि भावनाप्रकर्षजन्यत्वमात्रस्य साक्षात्काराप्रमात्वे प्रयोजकत्वं स्यात् तदैवमापादनम् । न चैवम् । किन्तु भावनामूलभूतकरणस्याप्रामाण्ये सत्येव तस्याप्रामाण्यम् । प्रकृते भावना मूलभूतकरणवेदान्तानां प्रामाण्यात् युज्यते साक्षात्कारस्य प्रमात्वम्। न केवलमेतन्मयैवोच्यते । अपितु त्वयाप्युक्तमित्याह त्वयापीति । न चैवं मूलभूतशब्दस्यैव साक्षात्कारकारणत्वमस्तु । किं तदुपजीविनान्येनेति वाच्यम् । शब्दस्य परोक्षज्ञानजनकत्वेनापरोक्षज्ञानजनकत्वाभावात्, परोक्षनिश्चयादिजनकतयाऽन्यथासिद्धत्वाच्च । अन्यथा धर्मादिरपि शब्दादापरोक्ष्येऽतान्द्रियोच्छेदापत्तिः । न च निदिध्यासनस्येति । इन्द्रियलिङ्गज्ञानशब्दरूपत्वाभावेन त्रिकान्तर्भावासंभवात् अतिरिक्त प्रमाणस्य चानङ्गीकारात् प्रमाकरणत्वासिद्धिरिति भावः । त्वयेति । तथा चान्यथासिद्धत्वात् तात्पर्यावधारणरूपत्वेनोक्त प्रमाणान्तर्भावासंभवाच्च न प्रमाकरणत्वमिति भावः । ननु नैतावताप्युक्तदोषः परिहृत इत्यत आह निदिध्यासनेति । स्वेन शब्दस्य साक्षात्कारकारणत्वानभ्युपगमात् स्वमतेन परिहारमाह अथवेति । उक्तमर्थं कारिकारूढं करोति तस्मादिति । परपक्षनिरासमुपसंहरति नन्विति ॥ इति मनननिदिध्यासनयोर्विवरणोक्तश्रवणाङ्गत्वभङ्गः ॥

## २. श्रवणादिविधेः विवरणोक्तनियमविधित्वभङ्गः

यच्चोक्तं विवरणे श्रवणादीनां विषयावगमं प्रत्यन्वयव्यतिरेकसिद्धोपायत्वादिना तद्विधेरपूर्वसङ्ख्याविधित्वायोगेन नियमविधित्वमिति । तन्न, यतः

श्रवणं ह्यापरोक्ष्याय त्वन्मते श्रवणेन च ।
नापरोक्ष्यं क्वचिद्दृष्टं तेनापूर्वविधिर्भवेत् ॥

तथा हि त्वन्मते परोक्षज्ञाने कामनाभावात् तत्कामस्य विचारविध्यनधिकारित्वेन परोक्षज्ञानं प्रति साधनत्वेन विचारविधानायोगात् त्वदभिप्रेतायाश्चापरोक्षज्ञानं प्रति-विचारसाधनताया अत्यन्ताप्राप्तत्वेनापूर्वविधित्वमेव युक्तम् । ननु गान्धर्वशास्त्रादि-विचारस्य षड्जादिसाक्षात्कारहेतुता क्लृप्तेति चेन्न, न तावद्विचार्यशास्त्रार्थसाक्षात्कारे स हेतुः क्लृप्तः । कर्मकांडविचारेण तदर्थसाक्षात्कारादर्शनात् । आत्मनोऽपरोक्षत्वा-त्तद्विचारस्तथा कर्माणि तु नैवमिति चेन्न, अपरोक्षे विचारवैयर्थ्यात् । न हि यो योऽपरोक्षः, स स विचार्यते । नापि विचारेण वा विचार्यशास्त्रेण वा जन्य-साक्षात्कारे स हेतुः क्लृप्तः आत्मसाक्षात्कारोद्देशेन शास्त्रविचारविधिं विनात्म-साक्षात्कारस्य शास्त्रविचारजन्यत्वानिश्चयात् । नापि विचार्यशास्त्रार्थस्य साक्षात्कार-योग्यस्य साक्षात्कारे स हेतुः क्लृप्तः । कालान्तरे साक्षात्करिष्यमाणत्वेन तद्योग्ये विचार्यशास्त्रार्थे स्वर्गादौ निध्यादौ च विचारेण तददर्शनात् । तस्मात्षड्जादि-साक्षात्कारे गान्धर्वादिशास्त्रविचारो हेतुत्वेन क्लृप्त इति वाच्यम् । न च प्रकृतकार्य-विजातीयकार्ये प्रकृतविचारविजातीयविचारस्य हेतुताक्लृप्तिमात्रेण प्रकृते तस्यापूर्व-विधित्वहानिः, अपूर्वविधिमात्रोच्छेदापातात् ।

किं च पाक्षिकप्राप्तौ हि नियमः, सा च साधनान्तरप्राप्तौ, न च रूपादि-रहितात्मज्ञानेऽन्यप्राप्तिरस्ति । नन्वपूर्वार्थेषु व्रीहिषु नखविदलनादेरप्राप्तावपि व्रीहिमात्रे तत्प्राप्त्या "व्रीहीनवहन्ती"ति यथा नियमः, तथा निर्विशेषात्मनि मानान्तराप्राप्तावप्यात्ममात्रे तत्प्राप्त्या नियम इति चेन्न । व्रीहीनित्यत्र व्रीहि-शब्दोऽपूर्वीयद्रव्यपरो न तु व्रीहिपरः । अन्यथा यवेष्ववघात औपदेशिको न स्यात् । नीवारेषु च व्रीहिरूपद्वाराभावेनातिदिष्टोऽपि बाध्येतेति नवमे स्थापितत्वेना-पूर्वीयद्रव्य एव विदलनादिप्राप्तेर्वक्तव्यत्वात् । अन्यथा वैतुष्यमात्रेऽवघातनियमे द्रव्यार्जने याजनाद्युपायनियमवत् तस्य पुरुषार्थत्वप्रसङ्गेन लौकिकेष्वपि व्रीहिषु दलने

प्रत्यवायः स्यात् । न च सामान्ये दलनादिप्राप्त्या विशेषेऽवघातनियमः । इह निर्विशेषसविशेषरूपविशिष्टद्वयानुगते विशेषाभावादिद्वारा वेदान्तवेद्ये चिन्मात्रे मानान्तराप्राप्तेः । यत्रापूर्वीयेष्ववघातनियमस्तत्रैव दलनप्राप्तिसम्भवे वैयधिकरण्यायोगाच्च । सम्भवति ह्यपूर्वीयेष्वपि व्रीहिषु नियमादृष्टाजनकस्यापि दलनस्य प्राप्तिः । न हि तस्य प्राप्तिर्नाम तेन तस्य वैतुष्यसम्पादनम् । तथात्वेऽवघातनियमायोगात्, किं तु शक्तत्वेन प्रसक्तिमात्रम् । तच्च दलनादेरपूर्वीयेष्वप्यस्ति । निर्विशेषात्मनि तु प्रत्यक्षादेः प्रसक्तिरपि नास्तीति विशेषः । अवघातसाध्यवैतुष्यस्य दलनादिसाध्याद्वैजात्येऽपि विध्यन्तरापेक्षितवैतुष्यस्य सामान्यस्य दलनेनापि सिद्धेर्नियमः ।

कौमुद्यां तु यथा मन्त्रार्थज्ञानस्य तन्मूलकल्पसूत्रीयग्रहणकवाक्यादिप्राप्त्या पक्षेऽप्राप्तमन्त्रसाध्यत्वं नियम्यते ''मन्त्रैरेव स्मृतिः साध्ये''ति । तथा वेदान्तमूलस्त्रीशूद्रसाधारणस्मृतिपुराणादिप्राप्त्या पक्षेऽप्राप्तवेदान्तश्रवणादिपरिपूर्णार्थो नियमः । ''तस्माद् ब्राह्मणो नावैदिकमधीयीत'' इति श्रुतेः । ''श्रोतव्यः श्रुतिवाक्येभ्य''इति स्मृतेश्चेत्युक्तम् । तन्न, ''इतिहासपुराणाभ्यां वेदं समुपबृंहये''दित्यादिस्मृतिविरोधात् । न ह्यविचारितेन गहनेन तेनोपबृम्हणं युक्तम् । ''अपि स्मर्यते'' इत्यादिना सूत्रकारेणाप्युबृंहणाच्च । न च वेदान्ततात्पर्यनिर्णयायैव तद्विचारो न तु ब्रह्मज्ञानायेतिवाच्यम्, कर्मविषयकस्मृतिभिः कर्मज्ञानस्येव ब्रह्मविषयकात् भारतादौ मुमुक्षून् शुकादीन् प्रत्युपदिष्टादितिहासादपि साक्षाद्ब्रह्मज्ञानस्योदयात् । समुपबृंहयेदित्यस्य तु वेदतात्पर्यं वेदवाक्यानुसारेणेवाऽनेकशाखाद्यभिज्ञऋषिप्रणीतनिर्णयात्मकेतिहासानुसारेणैव ज्ञेयमित्यर्थः । न तु सर्वेणापीतिहासादिनावेदतात्पर्यमेव ज्ञेयं । अर्थस्तु न ज्ञेय इति । ''नावैदिक''मिति श्रुतिस्तुं अवैदिकबाह्यागमाध्ययनं निषेधति । न तु वैदिकेतिहासादेः । ''ऋग्वेदं भगवोऽध्येमी''त्यारभ्य ''इतिहासपुराणं पञ्चमं वेदानां वेद''मिति श्रुत्या ''वेदानध्यापयामास महाभारतपञ्चमानि''त्यादि स्मृत्या च विरोधात् । वेदाङ्गाध्ययनस्यापि निषेधापाताच्च । ''श्रोतव्यः श्रुतिवाक्येभ्य'' इति तु श्रुतीनां मूलप्रमाणत्वाभिप्रायम् ।

**किं च विप्रकीर्णनानाशाखार्थसङ्ग्रहादिरूपेणेतिहासादिना तत्त्वनिश्चयदर्शनात्, सति च तस्मिन् विविदिषाद्वारा तदर्थाया अन्तःकरणशुद्धेरपेक्षितत्वात् । आपरोक्ष्यस्य च विषयस्वभावादेव सिद्धया वेदजन्ये ब्रह्मज्ञाने इतिहासादिजन्यादधिकस्यापरोक्ष्यस्याननुभवेन च तस्य नियमादृष्टासाध्यत्वात् । ज्ञानस्य च स्वप्रागभावनिवर्तन इवाज्ञाननिवर्तनेऽप्यदृष्टनिरपेक्षत्वादन्यस्य च नियमादृष्टसाध्यस्याभावान्न नियमविधिर्युक्तः । तस्मात्–**

**नियमादृष्टसाध्यस्य व्यावर्त्यस्याप्यभावतः ।**
**श्रवणादेर्नियमनं परपक्षे न युज्यते ॥**

**एतेन शूद्रप्रणीतात्मविद्याप्रबन्धादिप्राप्तिनिमित्तकाप्राप्तांशपूरणार्थो नियमविधिरिति निरस्तम् । श्रवणादिविधेर्विवरणोक्तनियमविधित्वभङ्गः ॥ २ ॥**

## अद्वैतसिद्धिः

तच्च श्रवणादिकं विषयावगमं प्रत्यन्वयव्यतिरेकसिद्धोपाय इति तद्विधेर्नापूर्वविधित्वम्, किन्तु नियमविधित्वमेव । ननु अत्र श्रवणस्यापरोक्षफलं प्रति साधनत्वम् । तच्चान्यतो नावगतमित्यपूर्वविधित्वमिति चेन्न । गान्धर्वशास्त्रविचारे षड्जादिसाक्षात्कारे हेतुताया दृष्टत्वात् । न च एतावता शास्त्रविचारः सर्वत्रार्थसाक्षात्कारहेतुरिति न सिद्धम्, धर्मशास्त्रविचारे व्यभिचारादिति वाच्यम्, अपरोक्षार्थकशास्त्रविचारत्वेन साक्षात्कारजनकतायास्तद्दर्शनबलेन सिद्धेः । आत्मा च षड्जादिवदपरोक्षः, न धर्मादिः । न च अपरोक्षे विचारवैयर्थ्यम्, न हि यद्यदपरोक्षं तत्तद्विचार्यत इति नियम इति वाच्यम् । अपरोक्षे विचार्यत्वनियमाभाववदविचार्यत्वनियमोऽपि नास्ति । षड्जादावपरोक्षेऽपि विचार्यत्वदर्शनात् तद्वदेव साफल्यसम्भवाच्च । सन्दिग्धत्वसप्रयोजनत्वयोरेव सर्वत्र विचार्यत्वे प्रयोजकत्वात् । एतेन विचार्यशास्त्रार्थस्य साक्षात्कारयोग्यस्य साक्षात्कारे स हेतुरिति न युज्यते । कालान्तरे साक्षात्करिष्यमाणत्वेन तद्योग्ये विचार्यशास्त्रार्थे स्वर्गनिध्यादौ विचारेण तदभावादिति निरस्तम् । निध्यादिसाक्षात्कारे तदसन्निकर्षादजातेऽपि विचारस्य तद्धेतुता न गच्छति । तत्र विचार इन्द्रियसहकारित्वेन तद्विलम्बेन विलम्बात्, प्रकृते तु शाब्दत्वात् साक्षात्कारस्य न तदपेक्षा, अपरोक्षयोग्यार्थ-

(अद्वैतसिद्धिः)

सात्कारत्वेन कार्यत्वस्य तादृशार्थकशास्त्रविचारत्वेन साधनत्वस्य सत्त्वात् । एतेन प्रकृतकार्य-विजातीयकार्ये प्रकृतविचारविजातीयविचारस्य हेतुताक्लृप्तिमात्रेण तस्यापूर्वविधित्वत्यागे अपूर्व-विधिमात्रोच्छेदापात इति निरस्तम् ।

ननु पाक्षिकप्राप्तौ नियमः, सा च साधनान्तरप्राप्तौ, न च रूपादिरहितात्मज्ञाने तत्प्राप्तिर-स्तीति चेन्न । निर्विशेषात्मनि मानान्तराप्राप्तावपि आत्मनि सामान्यतस्तत्प्राप्तिरस्तीति नियम-सम्भवात् । यथाऽपूर्वीयेषु व्रीहिविशेषेषु नखविदलनादेरप्राप्तावपि व्रीहिसामान्ये तत्प्राप्त्या व्रीहीनवहन्तीति नियमविधिः ।

ननु व्रीहीनवहन्तीत्यत्र व्रीहिपदमपूर्वीयद्रव्यपरं न तु व्रीहिमात्रपरम्, अन्यथा यवेष्ववघात औपदेशिको न स्यात्, नीवारेषु च व्रीहित्वाभावेनातिदिष्टोऽपि बाध्येतेति नवमे स्थापित-त्वेनापूर्वीयद्रव्य एव नखविदलनादिप्राप्तिर्वक्तव्या । अन्यथा वैतुष्यमात्रे अवघातनियमे द्रव्या-र्जने याजनाद्युपायनियमवत् तस्य पुरुषार्थत्वप्रसङ्गेन लौकिकेष्वपि व्रीहिषु दलने प्रत्यवेयादिति चेन्न, नियम्यमानावघातस्यापूर्वीयद्रव्यमात्रविषयत्वेऽपि सामान्यविषयकप्राप्त्यैव नियमोपपत्तौ विशेषविषयप्राप्तेरनपेक्षितत्वात् । न च निर्विशेषसविशेषरूपविशिष्टद्वयानुगते विशेषाभावादि-द्वारा वेदान्तवेद्ये चिन्मात्रे न मानान्तरप्राप्तिरिति वाच्यम् । उभयानुगते सविशेषतया प्रमेयतायां मानान्तरप्राप्तेः सत्त्वात् । सजातीये प्राप्त्यापि यत्र सजातीयान्तरे नियमसम्भवः, तदा किमु वाच्यमेकस्मिन्नेवात्मनि अवस्थाविशेषेण मानान्तरप्राप्त्या विशेषान्तरे नियम इति । न च एवं विशेषान्तरे प्राप्त्या विशेषान्तरनियमे वैयधिकरण्यमिति वाच्यम्, व्यक्तिसामानाधिकरण्या-भावेऽपि अनन्यगत्या सामान्यधर्ममादाय सामानाधिकरण्याङ्गीकारात् ।

ननु अत्रान्यैव गतिरस्ति अपूर्वीयव्रीहिषु नियमादृष्टाजनकस्यापि दलनस्य प्राप्तिरस्ति । न हि यत्र तेन वैतुष्यसम्पादनं तत्र तत्प्राप्तिः, किन्तु शक्तत्वेन प्रसक्तिमात्रमिति चेन्न, एवं तद्योग्यत्व-मिति पर्यवसितोऽर्थः । तच्च तज्जातीयेऽन्वयी न तु तत्र, तथा च वैयधिकरण्यतादवस्थ्यम् । प्रकृते च सविशेषनिर्विशेषरूपदशाद्वयानुगतैकात्मविषयतया वैयधिकरण्यशङ्कानवकाशाच्च ।

तत्त्वकौमुदीकृतस्तु– 'यथा मन्त्रार्थज्ञानस्य कल्पसूत्रात्मीयग्राहकवाक्यादिनापि प्राप्तत्वेन पक्षे अप्राप्तमन्त्रसाध्यत्वं नियम्यते मन्त्रैरेव स्मृतिः साध्येति तथा वेदान्तमूलस्त्रीशूद्रसाधारण-

(अद्वैतसिद्धिः)

स्मृतिपुराणादिप्राप्त्या पक्षे अप्राप्तवेदान्तश्रवणादिपरिपूरणार्थो नियमः । 'तस्मात् न ब्राह्मणोऽवैदिकमधीयीत' इति श्रुतेः 'श्रोतव्यः श्रुतिवाक्येभ्य' इत्यादिस्मृतेश्चेति आहुः । न च 'इतिहासपुराणाभ्यां वेदं समुपबृम्हये'दित्यादिस्मृतिविरोधः, अविचारितेन उपबृम्हणा-योगादिति वाच्यम्, वेदान्ततात्पर्यनिर्णयाय तद्विचारापेक्षायामपि ब्रह्मज्ञाने तद्विचारापेक्षा-विरहात् । न च कर्मविषयकस्मृतिभिः कर्मज्ञानस्येव ब्रह्मविषयात् भारतादेरितिहासादपि साक्षात् ब्रह्मज्ञानस्योदयात् ब्रह्मज्ञानेऽपि तदपेक्षेति वाच्यम्, उभयत्रपि स्मृत्यादेः स्वातन्त्र्येणा-प्रमाणतया श्रुतितात्पर्यनिर्णायकत्वात् । अत एवोक्तं– 'वेदं समुपबृम्हये'दिति, न तु वेदार्थं जानीयादिति । यत्तु– 'श्रोतव्यः श्रुतिवाक्येभ्य' इत्यादिकं श्रुतिमूलप्रमाणाभिप्रायकम् इति, तन्न, पञ्चमीप्रतीतहेतुत्वस्य साक्षात् सम्भवे पारम्पर्यकल्पनायोगात् ।

न च विप्रकीर्णनानाशाखार्थसङ्ग्रहादिरूपेणेतिहासादिना तत्त्वनिश्चयदर्शनात् सति च तस्मिन् विविदिषाद्वारा तदर्थाया अन्तकरणशुद्धेरनपेक्षितत्वात् आपरोक्ष्यस्य विषयभावादेव सिद्ध्या वेदजन्यब्रह्मज्ञाने इतिहासजन्यादधिकस्यापरोक्ष्यस्याननुभवेन तस्य नियमादृष्टासाध्य-त्वात् ज्ञानस्य च स्वप्रागभावनिवर्तन इव अज्ञाननिवर्तने अदृष्टनिरपेक्षत्वात्, अन्यस्य च नियमादृष्टसाध्यस्याभावात् न नियमविधिरिति वाच्यम्, 'तमेतं वेदानुवचनेने'त्यादि श्रुतिबलात् यज्ञादिजन्यादृष्टस्य नियमादृष्टस्यच विविदिषाद्वारकान्तःकरणशुद्धेरेव सर्वादृष्टसाध्यायाः सम्भवेन ज्ञानस्वरूपोपकारितया तत्साध्याज्ञाननिवृत्तौ तदपेक्षत्वाच्च विद्यायुक्ततदयुक्तकर्मजन्य-फलगतचिराचिरस्वरूपातिशयवत् नियमादृष्टजन्यसाक्षात्कारे तदजन्यतत्त्वनिश्चयापेक्षयातिशय-कल्पनस्यावश्यकत्वाच्च नियमविधित्वसम्भवात् । तस्मात्–

नियमादृष्टसाध्यस्य व्यावर्त्यस्यापि सम्भवात् ।
श्रवणादेर्नियमनं सर्वथैवोपपद्यते ॥ इति ।

अत एव शूद्रप्रणीतात्मप्रबन्धादिप्राप्तिनिमित्तकाप्राप्तांशपूरणार्थो नियमविधिरित्याचार्यान्तरो-क्तिरपि व्याख्याता ॥ इति विवरणोक्तनियमोपपत्तिः ॥

## न्यायामृततरङ्गिणी

**॥ परोक्षज्ञाने कामनाभावादिति ॥ परोक्षज्ञानज्ञानं विना तत्कामनाया अयोगेन तज्ज्ञाने सति तद्विषयस्यापि ज्ञातत्वान्न तत्रेच्छासम्भवति । सिद्धे इच्छाविरहात् ॥ स्वर्गादौ निध्यादाविति ॥ यत्तु**

(तरङ्गिणी)

स्वर्गनिधिसाधनसाक्षात्कारेपि विचारस्येन्द्रियसहकारित्वाद्धेतुत्वमेवेति । तन्न । न्यायानुसन्धानादिना अलौकिकेनाञ्जनादिना पामराणामपि स्वर्गनिधिसाक्षात्कारसत्त्वात् ।। प्रकृतविचारेति ।। श्रुत्याद्यविरोधितदनुग्राहकन्यायानुसन्धानरूपप्रकृतविचारः ।। अपूर्वविधीति ।। स्वर्गविजातीये लौकिकसुखे यागविजातीयलौकिकक्रियायाः हेतुत्वदर्शनाद्यागादिविधिरप्यपूर्वविधिर्नस्यात् ।। अन्यथेति ।। व्रीहीनवहन्तीत्यत्र व्रीहिशब्दस्य व्रीहिमात्रपरत्वे हि वैतुष्यमात्रेऽवघातनियम इति स्यात् तथाचावघातः पुरुषार्थः स्यात् न तु क्रत्वर्थः । ननु व्रीहीनवहन्तीत्यत्र व्रीहिशब्दोऽपूर्वद्रव्यपरोऽतो नावघातस्य पुरुषार्थत्वं व्रीहित्वेन विदलनप्राप्तिरित्यत आह ।। न च सामान्य इति ।। ननूभयानुगते सविशेषतया प्रमेयतायां मानान्तरप्राप्तिरस्त्येव सजातीये प्राप्त्यापि यत्र सजातीयान्तरे नियमसम्भवस्तदा किमु वाच्यमेकस्मिन्नेवात्मन्यवस्थाविशेषेण मानान्तरप्राप्त्या विशेषान्तरे नियम इतीत्यत आह ।। यत्रापूर्वीयेष्विति ।। यत्र यद्रूपेषु यदवस्थेषु भिन्नभिन्नावस्थयोः प्राप्तिनियमयोरुक्तौ वैयधिकरण्यं भिन्नविषयत्वं स्यात् । तच्चाङ्गीकारानर्हम् । ननु सामानाधिकरण्यासम्भवाद्वैयधिकरण्यमप्यवघाते प्रकृते चाऽऽश्रयणीयमत आह ।। सम्भवति हीति ।। यद्रूपाणां यदवस्थानां व्रीहीणामपूर्वीयत्वं तत्रैव विदलनप्राप्तिरस्ति प्रकृते तु न तथेत्यर्थः ।। तथात्व इति ।। अपूर्वीयेषु व्रीहिषु दलनस्य प्राप्तिश्चेद्वैरूप्यस्य तेनैव सिद्धत्वादवघातनियमायोगः । अप्राप्तिश्चेत्सुतरां तदयोगः ।। प्रसक्तिमात्रमिति ।। तदन्वयितावच्छेदकसम्बन्धः । स च व्रीहिष्वपूर्वीयेष्वस्ति निर्विशेषात्मनि तु न कस्यापि सम्बन्ध इति वैषम्यम् । ननु व्रीहिवैतुष्ये साधनान्तरप्राप्तावपि नियमविषये तद्वैतुष्यविशेषे न तत्प्राप्तिरिति वैयधिकरण्यमत आह ।। अवघातसाध्येति ।। अपूर्वीयेष्ववघातसामान्यसाधनप्राप्तिमात्रेण सामानाधिकरण्यम् । निर्विशेषात्मनि तु ज्ञानसामान्यसाधनस्य वेदान्तवाक्यभिन्नस्य प्राप्तिर्नेति वैषम्यं । ग्रहणकवाक्यं सङ्ग्रहवाक्यम् ।। परिपूर्णार्थ इति ।। अस्मिन्पक्षे वेदान्तवाक्यं न प्राप्तं तस्मिन्नपिपूर्यते ।। कर्मविषयकेति ।। ननूभयत्र स्मृत्यादेः स्वातन्त्र्येणाप्रमाणतया श्रुतितात्पर्यनिर्णायकत्वमेव । मैवम् । श्रुतेरिव स्मृतेरपि धर्मादौ प्रामाण्यात् । अन्यथा स्मृत्यनुमितश्रुतेरपि श्रुत्यन्तरतात्पर्यग्राहकत्वं स्यात् । श्रुतिविरोधे स्मृतिर्दुर्बलेत्येव स्मृतेरस्वातन्त्र्यम् ।। समुपबृंहयेदिति ।। इतिहासादिनैव बृंहयेन्नतु तेन बृंहयेदेवेत्यर्थः ।। मूलप्रमाणत्वेति ।। स्मृतीनामपि श्रुतिमूलत्वात्ताभ्यः श्रुतमपि श्रुतिभ्य एव श्रुतमिति नानेन स्मृतिनिषेधः । श्रुतिवाक्येभ्य इति पञ्चमी तु प्रयोजकत्वेपि । इतिहासपुराणं पञ्चमं वेदानां वेदमित्यादिवचनादेव श्रवणनियमाद्दृष्टस्य किञ्चिद्विषयाज्ञानहेतुभूतायामन्तःकरणशुद्धावुपयोगो

(तरङ्गिणी)

वा शबलापरोक्षे वा तद्विशेषे वा तज्जन्याज्ञाननिवृत्तौ वा मोक्षीयानन्दानुभवे वा । नाद्य इत्याह ।। विप्रकीर्णेति ।। न द्वितीय इत्याह ।। आपरोक्ष्यस्येति ।। न तृतीय इत्याह ।। वेद-जन्येति ।। न चतुर्थ इत्याह ।। ज्ञानस्येति ।। न पञ्चम इत्याह ।। अन्यस्य चेति ।। आनन्दानु-भवादेः । एतेन तमेवं वेदानुवचनेनेत्यादिश्रुतयज्ञादिजन्याद्दृष्टस्य नियमाद्दृष्टस्य चान्तःकरण-शुद्धावुपयोग इति निरस्तम् । यज्ञादिकर्मणां ज्ञानार्थत्वेपि नियमादृष्टस्य तथात्वे मानाभावात् ।। नियमादृष्टसाध्यस्येति ।। अपिशब्दश्चशब्दार्थे ।। श्रवणादिविधेर्विवरणोक्तनियमविधित्वभङ्गः ।। २ ।।

## न्यायामृतकण्टकोद्धारः

श्रवणविधेर्विवरणोक्तनियमविधित्वं दूषयितुमनुवदति यच्चोक्तमिति । अपूर्वपरिसङ्ख्चेति । अत्यन्ता-प्राप्तेह्यपूर्वविधिः । तत्र चान्यत्र च प्राप्तौ परिसङ्ख्याविधिः । प्रकृते चान्वयव्यतिरेकाभ्यां श्रवणादेर्विषयावगमं प्रति साधनतायाः प्राप्तत्वेनापूर्वपरिसङ्ख्याविधित्वयोरसंभवान्नियमविधित्वमेवाश्रीयत इत्यर्थः । अत्र हि विषयावगमं प्रति श्रवणादेः साधनता श्रुत्यैव ज्ञेया नान्येनेति साधनतायां नियमः, उत विषयावगमः श्रवणादिनैव साध्यः नान्येनेति फले नियमः? इति विकल्पं मनसि निधाय आद्यं दूषयति यत इत्यादिना । श्रवणस्यापरोक्षसाधनतया त्वया स्वीकृतत्वात् तस्याश्चान्वयव्यतिरेकाभ्यामप्राप्तत्वान्न नियमविधिरिति । ननु च श्रवणस्य परोक्षज्ञानसाधनत्वमेवाङ्गीक्रियते तस्य चात्यन्तं प्राप्तत्वाद्युज्यते नियमविधिरित्यतः स्वकारिकां स्वयमेव व्याचष्टे तथाहीति । परोक्षज्ञान इति । ज्ञाते वा ज्ञाने कामना, अज्ञाते वा? नान्त्यः । कामनाया धर्मिज्ञानसाध्यत्वेनाज्ञाते ज्ञाने कामनाऽयोगात् इत्येवं त्वया कामनाया निषिद्धत्वादिति भावः । ननु गान्धर्वेति । तथा च विचारस्य साक्षात्कारहेतुताया अदृष्टत्वान्न प्रकृते नियमविधित्वं युज्यते इति भावः । नन्वपरोक्षार्थकशास्त्रविचारत्वेन विचारस्यापरोक्षज्ञानजनकत्वम् । आत्मनश्चापरोक्षस्वरूपत्वाच्छास्त्रेण तदा-परोक्ष्यं युज्यते । न तु कर्मादेः । तस्यातीन्द्रियत्वादिति शङ्कते आत्मन इति । अपरोक्षस्यापि कुतो न विचार्यतेत्यत आह न हीति । नन्वपरोक्षेऽविचार्यत्वनियमोऽपि नास्ति । अपरोक्षेपि षड्जादौ विचार्यत्व-दर्शनात् । सन्दिग्धत्वप्रयोजनवत्वयोरेव विचार्यत्वप्रयोजकत्वे प्रकृते तत्सत्वेन न वैयर्थ्यमिति चेन्न । प्रत्यहं ब्रह्मणि भासमानेपि प्रयोजनानुपलम्भात् स्वरूपमात्रस्य च स्वप्रकाशत्वेन नित्यसिद्धत्वात् सन्दिग्धत्व-सप्रयोजनत्वयोरभावेन विचार्यत्वासंभवात् । न च स्वरूपमात्रस्य नित्यसिद्धत्वेऽपि नित्यशुद्धबुद्धा-द्वितीयत्वादिरूपेणासिद्धत्वात् सन्दिग्धत्वं, तादृशस्यर्ब्रह्मणोऽप्रकाशमानत्वात् सप्रयोजनत्वं च युक्तमिति वाच्यम् । नित्यशुद्धत्वादेः ब्रह्मस्वरूपत्वेन ब्रह्मणि प्रकाशमाने तदप्रकाशासंभवात् । न च तदस्वरूपमिति वाच्यम् । अस्वरूपत्वे मिथ्यात्वप्रसङ्गेन ब्रह्मणः सद्वितीयत्वापत्तिः । अन्यथा सदद्वैतभङ्गात् । त्वया ब्रह्मणो निर्विशेषत्वस्याभ्युपगतत्वेन सामान्यतो ज्ञातत्वस्य विशेषेणाज्ञातत्वस्य चायोगाच्च । विशिष्टप्रत्यये विशेष्य-भाननियमाच्चेत्यलम् । आत्मसाक्षात्कारेति । तथाचात्मसाक्षात्कारस्य शास्त्रविचारजन्यत्वसिद्धौ तमुद्दिश्य

(कण्टकोद्धारः)
शास्त्रविचारविधिः, सति च तस्मिन् तस्य तज्जन्यत्वनिश्चय इत्यन्योन्याश्रय इत्यर्थः । ननु मास्तु साधनतायां नियमः । तथापि ब्रह्मरूपविषयावगमः श्रवणेनैव सम्पादनीयो, न तु साधनान्तरेणेत्येवं फल एव नियमोऽङ्गीक्रियत इति न कश्चिद् दोष इति द्वितीयः पक्षोऽस्त्वित्यत आह किञ्चेति । साधनान्तरप्राप्तिः किं निर्विशेषात्मज्ञाने वा आत्ममात्रे वा? नाद्य इत्याह न च रूपादीति । द्वितीयं शङ्कते नन्वपूर्वीयेष्विति । अन्यथेति । अपूर्वीयद्रव्य एव विदलनादिप्राप्तिर्नोच्यते चेदित्यर्थः । पुरुषार्थत्वप्रसङ्गेन । अदृष्टार्थत्वप्रसङ्गेन । इह निर्विशेषेति । निर्विशेषत्वाङ्गीकारेणोभयानुगतसामान्याभावादिति भावः । नन्वपूर्वीयेष्ववघातप्राप्तिरेव नास्ति । प्राप्तिर्हि तेन तत्र वैतुष्यसंपादनम् । न चापूर्वीयेषु विदलनेन वैतुष्यं संपादितमित्यत आह संभवति हीति । ननु प्रसक्तिमात्रं प्रकृतेऽपि स्यादित्यत आह निर्विशेषेति । नन्ववघातसाध्यवैतुष्यस्य दलन साध्यवैतुष्यविजातीयत्वेनाप्राप्तेर्न नियमविधिर्युज्यते इत्यत आह अवघातेति । कौमुद्युक्तनियमविधिपक्षं दूष यितुमनुवदति कौमुद्यां त्विति । ननु स्मृतिपुराणाभ्यां श्रवणं कर्तव्यम् । न तु वेदान्तेभ्यः । प्रमाणाभावादित्यत आह तस्मादिति । इतिहासेति । अत्र हि वेदसमूहबृंहणोक्त्या इतिहास पुराणयोरपि श्रवणसाधनताया उक्तत्वात् तद्विरोध इति भावः । नन्वविचारिताभ्यामेव ताभ्यां वेदोपबृंहणसंभवात् न तयोः श्रवणाङ्गतेत्यत आह नहीति । ब्रह्मज्ञानाय इतिहासपुराणविचाराकरणं किमितिहासादे र्ब्रह्मविषयत्वाद्वा मुमुक्ष्वनुपयोगाद्वा ब्रह्मबोधाजनकत्वाद्वा साक्षात्तदजनकत्वाद्वेति विकल्पान् मनसिकृत्य सर्वानपि दूषयति कर्मेति । ननु समुपबृंहयेदित्यस्य इतिहासादिना वेदतात्पर्यमेव ज्ञेयम्, अर्थो न ज्ञेय इत्यर्थकत्वान्न तद्विरोध इत्यत आह । समुपेति । तर्हि नावैदिकमित्यस्य का गतिरित्यत आह । नावैदिकमिति । वेदातिरिक्तसर्वाध्ययननिषेधपरता किं न स्यादत्राह ऋग्वेदमिति । श्रोतव्य इति । एवं च श्रुतिवाक्येभ्य इत्यस्य श्रुतिरूपाणि वाक्यानीति श्रुतिमूलानि वाक्यानीति चार्थः इति द्रष्टव्यम् । किं चायं विधिः किं तत्वनिश्चयार्थमुतान्तःकरण शुध्यर्थमथ वा अपरोक्षार्थमुताज्ञाननिवृत्त्यर्थमथ प्रयोजनान्तरार्थम्? नाद्य इत्याह किञ्च विप्रकीर्णेति । ननु नेतिहासादेर्वेदार्थतत्वनिश्चायकत्वं, वेदान्तानामनन्तत्वेन तदर्थतत्वस्यातिगहनस्य भूयस इतस्ततो विक्षिप्योक्तस्येतिहासेनाप्रतिपादनादित्यत उक्तं विप्रकीर्णेति । तथा च नानार्थसङ्ग्रहरूपत्वात् युज्यते तत्वनिश्चायकत्वमिति भावः । द्वितीयं प्रत्याह सतिचेति । तत्वनिश्चये सतीत्यर्थः । तदर्थाया इति । तत्व निश्चयार्थाया इत्यर्थः । तृतीयं निरस्यति आपरोक्ष्यस्येति । नन्वितिहासजन्यात् ब्रह्मज्ञानात् वेदजन्ये ज्ञाने अधिकापरोक्ष्यस्य सद्भावान्नियमविधिः स्वीक्रियत इत्यत उक्तं वेदजन्य इति । चतुर्थं प्रत्याह ज्ञानस्येति । पञ्चममनुपलम्भेन पराकरोति अन्यस्येति । उक्तमर्थं कारिकया सङ्गृह्णाति तस्मादिति । एतेनेति । नियमादृष्ट साध्यव्यावर्त्याभावेनेत्यर्थः ।। इति श्रवणादिविधेर्विवरणोक्तनियमविधित्व भङ्गः ।।

## ३. परमते श्रवणादिविध्यनुपपत्तिः

किं च न तावच्छक्तितात्पर्यावधारणं वा तद्विशिष्टशब्दावधारणं वा तात्पर्यप्रमापकलिङ्गावधारणं वा आगमाचार्योपदेशजन्यज्ञानं वा श्रवणम् । परमते ज्ञान-

**विध्यभावात् । अवाच्ये च ब्रह्मणि शक्त्यसम्भवात् । तात्पर्यमपि न तावदापातधीजन्यस्य विचारनिवर्त्यस्य संशयस्य धर्मिणि, तस्य प्रागेव निश्चितत्वेन तन्निश्चयार्थं तात्पर्यनिश्चियसाधनस्य विचारस्य वैयर्थ्यात् । अन्यथा विचारानन्तरमपि संशयादिप्रसङ्गात् । नापि संशयधर्मिगतप्रकारविशेषे तद्विशिष्टे तदुपलक्षिते वा, अखण्डार्थताहानेः । नापि गुरुमुखाद्वेदान्तानां ब्रह्मणि संयोजनं श्रवणम्, संयोगस्याऽप्युक्ततात्पर्यावधारणाद्यनातिरेकात् । नापि वाक्यविशेषप्रयोगरूपवादकथा श्रवणम्, तत्र श्रवणपदाप्रयोगात् । अत एव न परमते मनननिदिध्यासनविधिर्युक्तः, तयोरपि ज्ञानविशेषव्यतिरेकेण दुर्निरूपत्वात् । न चानिच्छतोऽपि दुर्गन्धादिज्ञानदर्शनेन ज्ञानस्याविधेयत्वेऽपि निदिध्यासनस्य ज्ञानसन्तानत्वेन विधेयत्वम्, अनिच्छतोऽपि दुर्गन्धज्ञानसन्तानदर्शनात् । न चावधारणं नाम न ज्ञानं किं तु ध्यानमुभयविजातीयं चेतोवृत्त्यन्तरं वा । ''श्रवणादिक्रिया तावत्कर्तव्येह प्रयत्नत'' इति सुरेश्वरेण क्रियाशब्दप्रयोगादिति वाच्यम्, तात्पर्यरूपे विषये उपक्रमादिरूपे प्रमाणे च सति जायमानस्य तस्य ज्ञानाद्बहिर्भावानुपपत्तेः । न हि वाचो धेनुत्वेनोपासनादिकं प्रमाणवस्तुपरतन्त्रम् । एतेन तर्कात्मको विचारः श्रवणमिति प्रत्युक्तम्, व्याप्तिज्ञानपरतन्त्रत्वेनानुमितेरिव तर्कज्ञानस्याप्यपुन्तन्त्रत्वात् । न हि पुन्तन्त्रः प्रतिमादौ नारायणाद्यारोपो व्याप्तिज्ञानाद्यपेक्षः । तस्मात्–**

**श्रुत्यादेर्धीस्वरूपत्वाद् विध्यनर्हत्वतो धियाम् । परपक्षे नैव युक्तः श्रवणादिविधिः क्वचित् ॥ परमते श्रवणादिविध्यनुपपत्तिः ॥ ३ ॥**

## अद्वैतसिद्धिः

ननु किमिदं श्रवणं नाम ? शक्तितात्पर्यावधारणं वा ? तद्विशिष्टशब्दावधारणं वा ? तात्पर्यप्रमापकलिङ्गावधारणं वा ? आगमाचार्योपदेशजज्ञानं वा ? नाद्यः, अवाच्ये ब्रह्मणि शक्त्यसम्भवात् । तात्पर्यमपि न तावदापातधीजन्यस्य विचारनिवर्त्यस्य संशयस्य धर्मिणि, तस्य प्रागेव निश्चितत्वेन तन्निश्चयार्थं तात्पर्यनिश्चयसाधनस्य विचारस्य वैयर्थ्यात्, अन्यथा विचारानन्तरमपि संशयादिप्रसङ्गात् । नापि संशयधर्मिगतप्रकारविशेषे तद्विशिष्टे तदुपलक्षिते

(अद्वैतसिद्धिः)

वा, अखण्डार्थताहानेः, अवधारणस्य ज्ञानत्वे विधेयत्वस्य त्वयानङ्गीकारात् । अत एव न द्वितीयादि । नापि गुरुमुखाद्वेदान्तानां ब्रह्मणि सम्योजनं श्रवणम्, तस्याद्यपक्षानतिरेकात् । नापि वाक्यविशेषप्रयोगरूपवादकथा श्रवणम्, तत्र श्रवणपदाप्रयोगात् । अत एव मनननिदिध्यासनयोरपि न विधिः, तयोरपि ज्ञानानतिरेकादिति चेन्न, आद्यपक्षस्यैव क्षोदक्षमत्वात् । न च तत्र शब्दशक्त्यसम्भवो दोषः, शुद्धेशक्त्यसम्भवेऽपि विशिष्टशक्तेस्तद्बोधोपयोगिन्या अवधारणीयायाः सम्भवात्, तात्पर्यस्यापि संशयधर्मिणो निश्चितत्वेन तत्रासम्भवेऽपि संशयकोट्युपलक्षिते निर्विशेषे सम्भवेन विचारवैयर्थ्यात् । न चाखण्डार्थताहानिः, स्वरूपमात्रोपलक्षकतया अखण्डार्थताया उपपादितत्वात् । न चावधारणस्य ज्ञानरूपतया अविधेयता, तस्य तर्कत्वेन ज्ञानविजातीयचेतोवृत्त्यन्तरत्वात्, सुरेश्वराचार्यैः 'श्रवणादिक्रिया तावत् कर्तव्येह प्रयत्नत' इति श्रवणादौ क्रियापदप्रयोगात् । एवमेव मनननिदिध्यासनयोरपि विधेयत्वमुन्नेयम् । न च तात्पर्यरूपे विषये उपक्रमादिरूपे च प्रमाणे सति जायमानस्य तस्य ज्ञानबहिर्भावानुपपत्तिः तद्बहिर्भूतवाग्धेनूपासनादौ प्रमाणवस्तुपरतन्त्रत्वादर्शनादिति वाच्यम्, मन्मते लिङ्गस्य प्रामाण्यानभ्युपगमेन सति प्रमाण इत्यस्यैवाभावाद्, उपक्रमादेः प्रमाणत्वपक्षे तत्पूर्वकालीनत्वेनास्य प्रमाणे सतीत्येतदंशासिद्धेः । तस्मात् श्रवणादेरधीरूपतया मनोव्यापारत्वेन विधेयत्वोपपत्तिः । सिद्धान्तबिन्दुकल्पलतिकयोर्विस्तरः ।

यच्चानुवादित्वादिवर्णनं वाचस्पत्ये, तत् प्रस्थानान्तरत्वान्न विधित्वोक्तिविरोधि ॥ इत्यद्वैतसिद्धौ श्रवणादेर्विधेयत्वोपपत्तिः ॥

## न्यायामृततरङ्गिणी

**॥ ज्ञानविध्यभावादिति ॥ प्रमाणविषयपरतन्त्रस्य ज्ञानस्य पुमतन्त्रत्वेनाविधेयत्वाङ्गीकारात् ॥ शक्त्यसम्भवादिति ॥ न च शुद्धे शक्त्यसम्भवेपि विशिष्टशक्तिरेव तद्बोधोपयोगिनी सैवावधारणीयेति वाच्यम् । शक्तितात्पर्ययोर्भिन्नविषयत्वापातात् । अन्यशक्त्यान्योपस्थापने लक्षणयाऽनवस्थापातेन विशिष्टशक्तेः शुद्धबोधानुपयोगितया तत्र शक्त्यवधारणस्य व्यर्थत्वाच्च ॥ अखण्डार्थताहानेरिति ॥ प्रकारोपलक्षितमपि तदुपलक्षितत्वादिधर्मवदेवेत्यर्थः ॥ उपक्रमादिरूप इति ॥ ननु परमते लिङ्गस्य प्रमाणत्वानभ्युपगमेन प्रमाणे सतीत्येतदसिद्धमिति । न । यदेवानुमाने प्रमाणत्वेनाभिमतं परेण तस्यैवात्र प्रमाणशब्देनाभिमतत्वात् । प्रमाणवस्तुपरतन्त्रस्यापि**

(तरङ्गिणी)
ज्ञानविजातीयत्वेऽनुमित्यादिकमपि ज्ञानं न स्यात् । नन्वनुमितेरपुन्तन्त्रत्वादस्तु ज्ञानत्वमिति चेत्समं प्रकृतेपीत्याह ॥ व्याप्तिज्ञानेति ॥ ननु व्याप्तिज्ञानापेक्षत्वमेव पुन्तन्त्रत्वमित्यत आह ॥ न हि पुन्तन्त्र इति ॥ श्रवणादिविध्यनुपपत्तिः ॥ ३ ॥

न्यायामृतकण्टकोद्धारः

श्रवणस्वरूपस्यैव निर्वक्तुमशक्यत्वात् परमते श्रवणविधिर्नोपपद्यत इत्यभिप्रेत्य श्रवणं दूषयितुं विकल्पयति किञ्चेति । आद्यद्वितीययोर्विशेषणविशेष्यभावव्यत्यास एव, न त्वर्थभेद इति द्रष्टव्यम् । आद्यद्वितीययोर्दूषणान्तरमाह अवाच्ये चेति । अवाच्यत्वेनाभ्युपगत इत्यर्थः । तथा च न साध्याविशेष इति भावः । तात्पर्यमपीति । ननु संशयधर्मिणि तात्पर्यमित्ययुक्तम् । धर्मिनिश्चयाभावे हेत्वभावेन संशयायोगादित्यत उक्तम् आपातधीजन्यस्येति । ननु यथाकथंचिद् धर्मिधियः संशयनिवर्तकत्वात् कथं तत्सत्वे संशय इत्यत उक्तं विचारनिवर्त्यस्येति । अन्यथेति । निश्चये सत्यपि संशयश्चेदित्यर्थः । अखण्डार्थेति । निर्विशेषार्थनिष्ठत्वस्याखण्डार्थशब्दार्थत्वादिति भावः । अत एवेत्यस्यार्थमाह तयोरपीति । उभयविजातीयमिति । ज्ञानध्यानोभयविजातीयमित्यर्थः । नन्वेवं सति वाचो धेनुत्वेनोपासनस्यापि ज्ञानरूपता स्यादित्यत आह न हीति । तथा च तस्य प्रमाणवस्त्वन्यतरजन्यत्वाभावाद् युज्यते ज्ञानबहिर्भाव इति भावः । ननु व्याप्तिज्ञानसापेक्षत्वेऽपि अस्तु पुंतन्त्रत्वमित्यत आह न हि पुंतन्त्र इति । उक्तमर्थं कारिकारूढं करोति तस्मादिति ॥ इति परमते श्रवणादि विध्यनुपपत्तिः ॥

## ४. श्रोतव्य इत्यादेरनुवादकत्वभङ्गः

केचित्तु अधीतात्स्वाध्यायात्प्रयोजनवदर्थदर्शनात्तन्निर्णयाय पुरुषः स्वयमेव तत्त्वदर्शिन आचार्यान्न्याययुक्तवाक्यार्थग्रहणरूपे श्रवणे प्रवर्तत इति श्रोतव्य इत्यनुवादः । आचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनरूपस्य मननस्य श्रवणप्रतिष्ठार्थत्वेन प्राप्तत्वान्मन्तव्य इति चानुवादः । निदिध्यासितव्य इत्येव तु विधिः । अविच्छिन्नस्मृतिसन्तानरूपध्यानात्मकनिदिध्यासनकर्तव्यताया अन्यतोऽप्राप्तेः । द्रष्टव्य इत्यनेन तु तस्य ध्यानस्य विशदतरावभासत्वरूपा दर्शनसमानाकारता विधीयत इत्याहुः तन्न, त्वयापि ''सहकार्यन्तरविधि''रिति सूत्रे ''तस्माद् ब्राह्मणः पाण्डित्य''मित्यादि वाक्ये औपदेशिकार्थाधिगमस्य पुनः पुनर्ब्रह्मसंशीलनस्य च विधेरनङ्गीकृतत्वेन तयोरेव श्रोतव्यो मन्तव्य इत्याभ्यां विधिसम्भवात् । औपदेशिकार्थाधिगमादौ श्रवणादिपदप्रयोगात् ।

किं चोपायत्वदशाप्रभृति भगवज्ज्ञानं प्रीतिरूपमिति वदतस्तव मते कृतश्रवणमननं पुरुषं प्रति भगवतोऽत्यन्तानुकूलत्वाद् अनुकूलविषयचिन्तने च रागत एव प्रवृत्तेश्चिन्तनरूपनिदिध्यासनस्यैव विधिर्न स्यात् । तत्र रागप्राप्ते चिन्तनेऽविच्छिन्नत्वादिगुणविधानं चेत्, रागप्राप्ते वाक्यार्थग्रहणे गुरुमुखपूर्वकत्वादिगुणविधानं श्रवणादिवाक्येष्वस्तु । किं च ज्ञानस्य विशदतरावभासत्वं, न तावदधिकविषयत्वं स्मरणस्य स्वजनकानुभवात्तज्जन्यस्मरणाच्चाधिकविषयत्वायोगात् । नापि साक्षात्त्वम्, स्मृतौ तदसम्भवात् । पुत्रादिध्यानस्येव साक्षात्त्वस्य भ्रान्तिमात्रत्वे च मोक्षहेतुत्वायोगात् । दर्शनश्रुतीनामुपचरितार्थत्वापत्तेश्च । श्रोतव्य इत्यादेरनुवादत्वभङ्गः ॥ ४ ॥

## न्यायामृततरङ्गिणी

॥ रागप्राप्ते वाक्यार्थग्रहण इति ॥ वेदाध्ययनकाले वाक्यार्थज्ञानस्य प्रयोजनवत्त्वज्ञानात्तत्रेच्छा ॥ दर्शनश्रुतीनामिति ॥ साक्षात्कार एव दृशेः प्रयोगादित्यर्थः ॥ श्रोतव्य इत्यादेरनुवादकत्वभङ्गः ॥ ४ ॥

### न्यायामृतकण्टकोद्धारः

केचिन्निदिध्यासितव्य इत्येवं विधिः । श्रोतव्यो मन्तव्य इति त्वनुवाद इत्यास्थिताः । तन्मतं दूषयितु मनुवदति केचित्त्विति । तन्निर्णयाय अर्थनिर्णयाय । तथाच अधीतस्वाध्यायस्यार्थज्ञानहेतुताया दृष्टत्वात् वाक्यार्थग्रहणरूपश्रवणस्यान्यतः प्राप्तत्वेनाप्राप्तार्थत्वाभावात् नायं विधिरिति भावः । मन्तव्य इत्यस्याप्यनुवादित्वमुपपादयति आचार्येति । उपायत्वदशप्रभृतीति । साधनानुष्ठानदशाप्रभृतीत्यर्थः । स्मरणस्येति । अननुभूतार्थस्यास्मर्यमाणत्वादनुभवस्मृत्योः समानविषयत्वनियमादिति भावः । साक्षात्त्वमिति । प्रत्यक्षत्वरूपत्वमित्यर्थः । तत्वज्ञानस्यैव मोक्षहेतुताया उक्तत्वात् भ्रान्त्या मोक्षो न सम्भवतीति भावः । दर्शनश्रुतीनामिति । असिंहे सिंहशब्दवद् असाक्षात्काररूपे साक्षात्त्वस्या भावेनौपचारिकत्वं स्यादिति भावः ॥ इति श्रोतव्य इत्यादेरनुवादकत्वभङ्गः ॥

## ५. श्रवणविधेर्विवरणोक्तविचारविधायकत्वभङ्गः

यच्चोक्तं विवरणे श्रवणविधिरेव विचारविधायक इति विचारविधायकं जिज्ञासासूत्रं श्रवणविधिमूलमिति । तन्न, त्वया विचारविधौ श्रवणासाध्यपरोक्षज्ञानाधीनाया

अपरोक्षज्ञानकामनाया अधिकारिविशेषणत्वाङ्गीकारेणान्योन्याश्रयापातात् । किं चायं जिज्ञासासूत्रोक्तो विचारस्तत्त्वनिर्णायकन्यायानुसन्धानरूपः, अन्यथा न्यायग्रथनात्मकशास्त्रारम्भसिद्धये तत्कर्तव्यतोक्त्ययुक्तेः । इतरस्य वेदेतिकर्तव्यतानुपपत्तेश्च । न च श्रवणमुक्तन्यायानुसन्धानरूपम्, मननाभेदप्रसङ्गात् । नन्वद्वितीये ब्रह्मणि वेदान्तानां शक्तितात्पर्यावधारणं श्रवणम् । तच्चोपक्रमोपसंहारादितात्पर्यलिङ्गविचाराधीनमिति विचारविधायकं श्रवणविधिमूलमेव जिज्ञासासूत्रम् । मननं तु श्रुतस्यार्थस्य युक्तिभिरनुचिन्तनमिति चेन्न, विवरणे श्रवणमङ्गि, प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानादिति करणत्वेनोक्तस्य श्रवणस्येतिकर्तव्यतारूपविचरत्वायोगात् ।

किं च युक्तिभिरनुचिन्तनं नाम यदि श्रवणनिश्चितस्य तात्पर्यस्य तद्विषयस्य वा स्मरणं वा प्रत्यभिज्ञा वा संस्कारदार्ढ्यफलकं श्रवणसमानाकारमभिज्ञान्तरं वा, तर्हि तस्याऽऽवश्यकश्रवणावृत्त्यैव सिद्धेर्मननविधिवैयर्थ्यम् । त्रिविधस्यापि तस्य श्रवणानन्तर्गतयुक्त्यनपेक्षत्वेन "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि"रिति व्यवस्थापकस्मृतिविरोधश्च । "श्रवणं यावदज्ञानं मतिर्यावदयुक्तते"ति मननस्य श्रवणानिवर्त्यायुक्तत्वशङ्कानिवर्तकत्ववाचिस्मृतिविरोधश्च । यदि त्वनुचिन्तनं श्रवणेन तात्पर्ये गृहीतेऽप्यस्यात्र तात्पर्यं युक्तं न वेति संशयादिनिवर्तकयुक्त्यनुसन्धानरूपम्, तर्हि युक्तायुक्तत्वसंशयादेः संशयपूर्वपक्षसिद्धान्तैर्मीमांसाशास्त्रे ग्रथितात् संशयादिनिवर्तकान्न्यायजातादन्येनानिवृत्तेस्तादृशन्यायग्रथनात्मकमीमांसाशास्त्रारंभोपयुक्तविचारकर्तव्यताप्रतिपादयदाद्यं सूत्रं मननविधिमूलमेव स्यात् ।

एतेन गुरुमुखाद्वेदान्तानां ब्रह्मणि संयोजनं श्रवणम् । मननं तु युक्तितोऽसम्भावनानिरसनमिति कौमुद्युक्तस्तयोर्भेदः प्रत्युक्तः । श्रवणे उक्तयुक्त्यननुप्रवेश इष्टसिद्धेः । अनुप्रवेशे च भेदासिद्धेः । तेनैवासम्भावनानिरसनसिद्धेश्च । युक्त्यननुसन्धानेऽपि श्रुतपदप्रयोगाच्च । न च कौमुद्युक्तस्य वादकथारूपश्रवणस्य युक्त्यनुसन्धानात्मकमननाद्भेदः, वादकथायास्तत्त्वनिर्णायकन्यायचर्चारूपत्वेन मननाद्भेदायोगात् । वाक्यार्थग्रहणं विना निरालम्बनचर्चायोगेन तदर्थवाक्यार्थग्रहणरूपत्वे

चेष्टापत्तेः । न्यायानुसन्धानार्थप्रश्नार्थप्रश्नोत्तररूपवाक्यविशेषप्रयोगरूपत्वे च तत्र श्रवणपदाप्रयोगात् । विचारविधायकस्याद्यसूत्रस्य श्रवणविधिमूलत्वासिद्धेश्च । ननु समन्वयाध्यायोक्ततात्पर्यनिर्णायकोपक्रमादियुक्त्यनुसन्धानं श्रवणम् । द्वितीयाध्यायोक्तार्थासत्त्वाशङ्कानिवर्तकयुक्त्यनुसन्धानं तु मननं । सुरेश्वरेण

देवान्तश्रवणं यत्तदुपायस्तर्क एव च ।
श्रुतिलिङ्गादिको न्यायः शब्दशक्तिविवेककृत् ॥
आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते ।
वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते ॥ इत्युक्तेः ।

अन्यैरपि

वेदान्तानामशेषाणामादिमध्यावसानतः ।
ब्रह्मात्मन्येव तात्पर्यमिति धीः श्रवणं भवेत् ॥
समन्वयाध्याय एतत्सूक्तं धीस्वास्थ्यकारिभिः ।
तर्कैः सम्भावनार्थस्य द्वितीयाध्याय ईरिताः ॥

इत्युक्तेरिति चेन्न, विवरणे "यौक्तिकासम्भावनाविपरीतभावनानिरासिततर्काणां प्रथमज्ञानेऽन्तभूर्तत्वा"दित्यादिनार्थोपपत्तीनामपि श्रवणान्तर्गतिमुक्त्वा ब्रह्मात्मपरिभावनाप्रचयनिमित्तकतदेकाग्रवृत्त्ययोग्यत्वमसम्भावना, विपरीतभावना तु शरीराद्यध्याससंस्कारप्रचयः" इत्यादिना असम्भावनानिवर्तकस्य मननस्यार्थनिश्चयानन्तरभाविभावनाप्रचयहेतुचित्तैकाग्र्यहेतुताया एवोक्तत्वात्, जिज्ञासासूत्रस्यांशे मननविधिमूलत्वापाताच्च । "मन्तव्यश्चोपपत्तिभि"रिति स्मृतिस्थोपपत्तिशब्दस्य "मतिर्यावद्युक्तते"ति स्मृतिस्थायुक्तशब्दस्य च "श्रोतव्यः श्रुतिवाक्येभ्य" इति श्रुतिशब्दस्येव सामान्यपरताहानेन "आदौ यच्छ्रद्धया सिद्धं पश्चान्न्यायेन साधित"मिति न्यायेन युक्त्यनपेक्षश्रद्धामात्रेण प्रतिवाक्यमयमस्य वाक्यस्यार्थ इति गुरुमुखाद्वाक्यार्थग्रहणं श्रवणं पश्चान्न्यायानुसन्धानं मननमिति

भेदसम्भवे युक्तिष्वेव श्रवणमननभेदकल्पनायोगाच्च । उक्तस्य वाक्यार्थग्रहणस्य श्रवणादित्रयानन्तर्भावेन चतुर्थस्यापि मुमुक्ष्वनुष्ठेयत्वापाताच्च । केवलं गुरुमुखाद्वेदार्थं श्रुतवति न श्रुतमनेनेति प्रसङ्गाच्च । प्रमाणभूतश्रुतितात्पर्ये निश्चितेऽर्थ-सत्त्वार्थमुपपत्त्यपेक्षायोगेन मननस्यार्थासत्त्वरूपाप्रामाण्यशङ्कानिवर्तकत्वे वक्तव्ये निश्चितप्रामाण्यस्य पुंसो मननाभावप्रसङ्गाच्च । न चापेक्षितसर्वतर्काणां श्रवणा-न्तर्गतावपि श्रुत्यविरुद्धमनुमानमर्थापत्तिर्वा मननमिति युक्तम्, ब्रह्मण औपनिषदत्व-श्रुत्यानुमानाद्यगोचरत्वात् । श्रवणनियमने शब्देतरस्य सर्वस्य करणस्य निषेद्धव्य-त्वाच्च । अन्यथा कदाचिदनुमानादिनापि ब्रह्मनिश्चयसम्भवेन श्रवणे नियमेन न प्रवर्तेतापि । तस्माद्युक्त्यनुसन्धानरूपो विचारो न श्रवणम्, किं तु मननमेवेति मननविधिमूलमेव जिज्ञासासूत्रम् । उक्तं हि सुधायां "जिज्ञासा नाम युक्त्यनु-सन्धानात्मकविचारापरपर्यायं मनन"मिति ॥

किं च त्वन्मते कर्मकाण्डविचारो यथोत्तरक्रतुविधिप्रयुक्तस्तथा ब्रह्मकाण्डविचारो ज्ञानविधिप्रयक्तः किं न स्यात् ? उत्तरक्रतुविधिभिः स्वानुष्ठाप्यार्थनिर्णयाय तद्विचारस्येव "तरति शोकमात्मविदि"त्यादिना शोकनिवृत्तिहेतुत्वेनावगतेनात्म-ज्ञानेन स्वसिद्धये वेदान्तविचारस्याऽऽक्षेपात् । युक्तं चानेकेषां क्रतुविधीना-माक्षेपकत्वादप्येकस्येव तत् । यदि चाध्ययनविधेर्नित्यत्वेनार्थज्ञानार्थत्वाभावेना-दृष्टार्थत्वाद्विचारविध्यभावे विषनिर्हरणमन्त्रस्येव तरतीत्यादेरर्थपरत्वाभावान्न तदा-क्षेपकता, तर्हि तत एवोत्तरक्रतुविधीनामपि सा न स्यात् । अथाध्ययनविधे-र्नित्यत्वेऽपि शब्दसामर्थ्यात् प्रतीतार्थो न त्याज्य इति क्रतुविधीनामाक्षेपकता, तर्हि तत एव तरतीत्यादेरपि सा स्यात् । अस्ति च ब्रह्मकाण्डवत्कर्मकाण्डेऽपि साक्षाद्विचारविधिः । "स्थाणुरयं भारवाहः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।" पठेद्वेदानथार्थानधीयीत,

यदधीतमविज्ञातं निगदेनैव शब्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥ इत्यादि

**तस्माच्छ्रवणविध्याक्षिप्तो विचार इति विवरणमतं न युक्तम् । अत एव कर्मकाण्डविचारस्यार्थज्ञानपर्यन्ताध्ययनविधिप्रयुक्तत्वेऽपि ब्रह्मविचारः श्रवणविधिप्रयुक्त इति कौमुद्युक्तं च निरस्तम्, विचारस्य श्रवणविधिप्रयुक्तत्वनिरासात् । कर्मविचारवत् ब्रह्मविचारस्याप्यध्ययनविधि- प्रयुक्तत्वसम्भवाच्च ।**

**ननु साक्षात्कारफलकमावृत्तिगुणकं मननाद्यङ्गकमिदं श्रवणमध्ययनविधिप्रयुक्तश्रवणमात्राद्भिन्नमितिविध्यन्तरं युक्तमिति चेन्न, ब्रह्मविचारस्याध्ययनविधिप्रयुक्तत्वेऽपि साक्षात्कारस्यापरोक्षैकरसात्मविषयकत्वेनैव सिद्धेः । आवृत्तेश्च विध्यन्तराङ्गीकारेऽप्यवघातादिवत् दृष्टफलत्वेनैव वक्तव्यत्वात् । कर्मकाण्डेऽपि तात्पर्यावधारणपर्यन्तं विचारावृत्तेरपेक्षितत्वात् । ततः परं ब्रह्मकाण्डेऽपि तदावृत्तेरनपेक्षणात् । मननस्य च कर्मकाण्डेऽपि तदर्थनिश्चयायापेक्षितत्वादध्ययनविधिविहितैकदेशारण्यकाध्ययनानुवादेन वाक्यान्तरेणारण्याद्यङ्गान्तरविधानवत् मुण्डककारीर्याद्यध्ययनानुवादेन शिरोव्रतभूभोजनाद्यङ्गविधानवत् "तां चतुर्भिरादत्त" इत्यत्रार्थप्राप्तादानानुवादेन सङ्ख्याविधानवच्चाध्ययनविध्याक्षिप्तविचारैकदेशानुवादेन त्वद्रीत्या मननाद्यङ्गविधानस्य सम्भवात्, तस्मात्–**

**युक्तिचिन्तनरूपस्य विचारस्य विधायकम् । सूत्रं तद्रूपमननविधातृ श्रुतिमूलकम् ॥ न तु विवरणकारमत इव श्रवणविधिमूलम् । श्रवणविधेर्विचारविधायकत्वभङ्गः ॥ ५ ॥**

## अद्वैतसिद्धिः

एवं विचारविधायकश्रवणविधिरेव जिज्ञासासूत्रमूलम् । न च विचारविधौ श्रवणसाध्यापरोक्षज्ञानाधीनाया अपरोक्षज्ञानकामनाया अधिकारिविशेषणत्वाङ्गीकारेण अन्योन्याश्रयापात इति वाच्यम् । अधीतवेदस्य विदितपदपदार्थसङ्गतिकस्यापाततो जायमानपरोक्षज्ञानाधीनापरोक्षज्ञानकामनाया अधिकारिविशेषणत्वेनोक्तान्योन्याश्रयानवतारात् । न च जिज्ञासासूत्रोक्तो विचारस्तत्त्वनिर्णायकन्यायानुसन्धानरूपः, अन्यथा न्यायग्रथनात्मकशास्त्रारम्भसिद्धये तत्कर्तव्यतोक्त्ययुक्तेः, इतरस्य वेदेतिकर्तव्यतात्वानुपपत्तेश्च । श्रवणं च नोक्तन्यायानुसन्धानरूपं

(अद्वैतसिद्धिः)

मननाभेदप्रसङ्गात् । अतो न श्रवणविधिजिज्ञासासूत्रयोर्मूलमूलिभाव इति वाच्यम् । जिज्ञासा-सूत्रस्य श्रवणविधिसमानविषयकतया मूलमूलिभावाभावेऽपि श्रवणविधिविषयशक्तितात्पर्या-वधारणात्मकश्रवणाक्षिप्तोपक्रमोपसंहारादितात्पर्यलिङ्गविचारमादाय समानविषयत्वसम्भवेन तदुपपत्तेः । मननं तु श्रुतस्यार्थस्य युक्तिभिश्चिन्तनमिति न तदभेदोऽपि, अर्थाक्षिप्त-विचारस्येतिकर्तव्यतात्वेऽपि तात्पर्यावधारणरूपे श्रवणे उक्तस्याङ्गित्वस्यानपायात् । यत्तु युक्तिभिरनुचिन्तनं नाम यदि श्रवणनिश्चितस्य तात्पर्यस्य तद्विषयशब्दस्य वा स्मरणम्, प्रत्य-भिज्ञानं वा, संस्कारदाढर्चफलकं श्रवणसमानाकारमभिज्ञान्तरं वा, तर्हि तस्यावश्यक-श्रवणावृत्त्यैव सिद्धेः मननविधिवैयर्थ्यम्, त्रिविधस्यापि तस्य श्रवणानन्तर्गतयुक्त्यनपेक्षत्वेन श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरितिस्मृतिविरोधश्च, 'श्रवणं यावदज्ञानं मतिर्या-वद्युक्तता' इति मननस्य श्रवणानिवर्तितायुक्तत्वशङ्कानिवर्तकत्वप्रतिपादकस्मृतिविरोधश्च इति । तन्न, अनुचिन्तनस्य श्रुतार्थविषयकयुक्तायुक्तत्वादिसंशयनिवर्तकयुक्त्यनुसन्धानरूपत्वेन विवक्षिततया त्वदुक्तदोषानवकाशात् । न च एवं युक्तायुक्तत्वसंशयादेः संशयपूर्वपक्षसिद्धान्तात् मीमांसाशास्त्रग्रथितात् संशयादिनिवर्तकात् न्यायजातादन्येनानिवृत्तेः तादृशन्यायग्रथनात्मक-मीमांसाशास्त्रारम्भोपयुक्तविचारकर्तव्यतां प्रतिपादयदाद्यसूत्रं मननविधिमूलमेवस्यात्, न तु श्रवणविधिमूलमिति वाच्यम् । तात्पर्यविषययुक्तायुक्तत्वादिसंशयादिनिवर्तकविचारापेक्षया तात्पर्यनिर्णायकश्रवणाक्षिप्तलिङ्गविचारस्याभ्यर्हिततया तदाक्षेपकश्रवणविधिमूलत्वस्यैव वक्तुं शक्यत्वात्, युक्तायुक्तत्वविचारस्यानुषङ्गिकत्वाच्च ।

यद्वा समन्वयाध्यायोक्ततात्पर्यनिश्चायकोपक्रमादियुक्त्यनुसन्धानं श्रवणं द्वितीयाध्या-योक्तार्थासत्त्वशङ्कानिवर्तकयुक्त्यनुसन्धानं मननम् । ननु एवं विवरणोक्तिविरोधः, यौक्तिका-सम्भावनाविपरीतभावनानिरासितर्काणां प्रथमज्ञानान्तर्भूतत्वाद् इत्यादिना अर्थापत्तीनामपि श्रवणान्तर्गतिमुक्त्वा ''ब्रह्मात्मत्वविपरीतभावनाप्रचयनिमित्ततदेकाग्रवृत्त्ययोग्यत्वमसम्भावना विपरीतभावना तु शरीराध्याससंस्कारप्रचयः'' इत्यादिना असम्भावनानिवर्तकस्य मनन-स्यार्थनिश्चयानन्तरभाविभावनाप्रचयहेतुचित्तैकाग्र्यहेतुताया एवोक्तत्वादिति चेन्न, भिन्नप्रस्थान-तया विवरणविरोधस्याकिञ्चित्करत्वात् । न च जिज्ञासासूत्रस्यांशे मननविधिमूलत्वापातः, समन्वयोक्तविचारस्याभ्यर्हिततया श्रवणविधिमूलत्वस्यैव वक्तव्यत्वोपपत्तेः ।

(अद्वैतसिद्धिः)

ननु 'मन्तव्यश्चोपपत्तिभि'रिति स्मृतिगतोपपत्तिशब्दस्य मतिर्यावदयुक्ततेति स्मृतिस्थायुक्त शब्दस्य श्रोतव्यः श्रुतिवाक्येभ्य इति श्रुतिशब्दस्येव सामान्यपरत्वाहानेन 'आदौ यच्छ्रद्धया सिद्धं पश्चान्न्यायेन साधितम्' इति न्यायेन युक्त्यनपेक्षश्रद्धामात्रेण प्रतिवाक्यमयमस्य वाक्य-स्यार्थ इति गुरुमुखाद्वेदार्थग्रहणं श्रवणं पश्चात् न्यायानुसन्धानं मननमिति भेदसम्भवे युक्तिष्वेव श्रवणमननभेदकथनायोग इति चेन्न, वाक्यार्थग्रहणस्य प्रमारूपतया अविधेयत्व-स्योक्तत्वात् । ननु उक्तस्य वाक्यार्थग्रहणस्य श्रवणादित्रयानन्तर्भावे चतुर्थस्यापि मुमुक्ष्वनुष्ठेय-त्वापात इति चेन्न, तस्य ज्ञानरूपतया अनुष्ठानानर्हत्वात्, श्रद्धामात्रात् स्वत एव जातत्वे-नापुन्तन्त्रत्वाच्च । न चैवं केवलं गुरुमुखात्तदर्थं श्रुतवति श्रुतमनेनेति प्रयोगानुपपत्तिः, विधेय-त्वान्यथानुपपत्त्या अर्थान्तरत्वे स्थिते अस्य प्रयोगस्य गौणतादिना कथञ्चिदुपपादनीयत्वात् । अत एव स्मृतिगतोपपत्त्ययुक्ततापदयोर्न सामान्यपरता । न च प्रमाणभूतश्रुतितात्पर्ये निश्चिते अर्थसत्त्वार्थमुपपत्त्यपेक्षायोगेन मननस्यार्थासत्त्वरूपाप्रामाण्यशङ्कानिवर्तकत्वे वक्तव्ये निश्चित-प्रामाण्यस्य पुंसो मननाभावप्रसङ्ग इति वाच्यम् । तादृशं प्रति तदभावस्येष्टत्वात्, कृष्णले अतिदेशप्राप्तस्यावघातस्य द्वारबाधेन बाधदर्शनात् । तस्मात्तात्पर्यावधारणं श्रवणम् । तच्च लिङ्गविचाराधीनमिति विचारकर्तव्यतापरमाद्यसूत्रं श्रवणविधिमूलकम्, न तु मननविधिमूलक-मिति सिद्धं जिज्ञासासूत्रस्य श्रवणविधिमात्रमूलकत्वम् ॥

ननु त्वन्मते कर्मकाण्डविचारो यथोत्तरक्रतुविधिप्रयुक्तः, तथा ब्रह्मकाण्डविचारोऽपि मान-विधिप्रयुक्त इत्येव किं न स्यात् ? उत्तरक्रतुविधिभिः स्वानुष्ठाप्यार्थनिर्णयान्तविचारस्येव 'तरति शोकमात्मवि'दित्यादिना शोकनिवृत्तिहेतुत्वेनावगतेनात्मज्ञानेन स्वसिद्धये वेदान्त-विचारस्याक्षेपात् । युक्तं चानेकेषां क्रतुविधीनामाक्षेपकत्वादप्ये- कस्यैवाक्षेपकत्वमिति चेन्न, यद्यपि कार्येण कारणाक्षेपः सम्भवति, तथापि तस्य वैधत्वसिद्ध्यर्थं विधिमूलत्वस्यावश्यं वक्तव्यत्वात् । अन्यथा कर्मकाण्डविचारस्यापि कर्मज्ञानादेवाक्षेपे अध्ययनविधेर्वोत्तरक्रतुविधीनां वा आक्षेपकत्वोक्तिरयुक्ता स्यात्, मननविधिमूलत्वं वदता त्वयापि अस्याक्षेपस्यावश्यं परिहरणीयत्वात् । एतेन अर्थावगमपर्यन्ताध्ययनविधिप्रयुक्तत्वस्य कर्मविचारवद् ब्रह्मविचारेऽपि संभवे न श्रवणविधिप्रयुक्तत्वम् । न च साक्षात्कारफलकमावृत्तिगुणकं मननाद्यङ्गकमिदं श्रवणमध्ययनविधिप्रयुक्तश्रवणमात्राद् भिन्नमिति विध्यन्तरं युक्तमिति वाच्यम्, ब्रह्मविचार-

(अद्वैतसिद्धिः)

स्याप्यध्ययनविधिप्रयुक्तत्वेऽपि साक्षात्कारस्यापरोक्षैकरसात्मविषयत्वेनैव सिद्धेः, आवृत्तेश्च विध्यन्तराङ्गीकारेऽपि अवघातवद् दृष्टफलत्वेन वक्तव्यत्वात् कर्मकाण्डेऽपि तात्पर्यावधारण-पर्यन्तविचारावृत्तेरपेक्षितत्वात्, ततः परं ब्रह्मकाण्डेऽपि तदावृत्तेरनपेक्षितत्वात् । मननस्य च कर्मकाण्डेऽपि तदर्थनिश्चयायापेक्षितत्वादध्ययनविधिविहितैकदेशारण्यकाध्ययनानुवादेन वाक्यान्तरेणारण्याद्यङ्गान्तरविधानवत् मुण्डककारीर्याद्यध्ययनानुवादेन शिरोव्रतभूमिभोजनाद्यङ्ग-विधानवत् 'तां चतुर्भिरादत्त' इत्यर्थप्राप्ताभ्यादानानुवादेन सङ्ख्याविधानवच्चाध्ययनविध्याक्षिप्त-विचारैकदेशानुवादेन त्वद्रीत्या मननाद्यङ्गविधानस्य सम्भवादिति निरस्तम्, मननविधि-मूलत्ववादिनोऽपि समानत्वादध्ययनविधेः स्वाध्यायावाप्तिफलकतया अर्थज्ञानफलकत्वाभावाद्, अध्येतव्य इति कर्मप्रधानतव्यप्रत्ययेन स्वाध्यायस्यैव फलत्वावगमात् । न च तस्यापुरुषार्थतया फलवदर्थावबोधपर्यन्तं व्यापारः, 'चित्रया यजेत पशुकाम' इत्यादावपि काम्यमानपश्वादेरप्य-फलत्वापत्तेः, परम्परया पुरुषार्थसाधनतया फलत्वे प्रकृतेऽपि तस्य सम्भवात् । तस्माच्छ्रवण-विधिर्मूलं विचारविधायकजिज्ञासासूत्रस्य, न तु मननविधिरिति सिद्धम् ॥ इत्यद्वैतसिद्धौ विचारस्य श्रवणविधिमूलत्वोपपत्तिः ॥

## न्यायामृततरङ्गिणी

**॥ श्रवणविधिरेवेति ॥ श्रवणस्य विचारगर्भत्वात् ॥ श्रवणसाध्येति ॥ अपरोक्षज्ञाने सति तज्जन्यापरोक्षज्ञानकामनायां श्रवणविध्यधीनविचारविधिः श्रवणविधौ च सति परोक्षज्ञान-मित्यन्योन्याश्रयः । नन्वधीतवेदस्य विदितपदपदार्थसङ्गतिकस्यापाततो जायमानं परोक्षज्ञानं श्रवणं विनैवेति नान्योन्याश्रयः । मैवम् । अध्ययनोत्तरस्य विचारप्राग्भाविनो वेदार्थज्ञानस्य श्रवणफलत्वाच्छ्रवणविचारयोरत्यन्तवैलक्षण्याच्छ्रवणविधिर्न विचारविधायक इत्याह ॥ किञ्चायमिति ॥ निर्णयात्मको निर्णयहेतुः ॥ अन्यथेति ॥ न्यायानुसन्धानस्य कर्तव्यत्वं न्यायं विनानुपपन्नमिति न्यायग्रथनात्मकशास्त्रमारम्भणीयं जिज्ञासासूत्रोक्तविचारस्य न्यायानुसन्धाना-त्मकत्वाभावे तथा विधविचारस्य कर्तव्यता केनापि नोक्तेति न न्यायग्रथनात्मक-शास्त्रारम्भसाधकं किञ्चिदस्तीत्यर्थः ॥ इतरस्येति ॥ विचारस्य वेदापेक्षितन्यायानुसन्धानरूपत्वे तस्य वेदं प्रतीतिकर्तव्यतारूपमङ्गत्वमित्यन्यथाश्रवणवदङ्गित्वमेव स्यात् ॥ मननाभेदप्रसङ्गा-दिति ॥ मननवदङ्गत्वप्रसङ्ग इत्यपि बोध्यम् । तथा च श्रवणविधिजिज्ञासासूत्रयोर्भिन्नविषयतया न मूलमूलिभाव इति भावः । ननु जिज्ञासासूत्रस्य श्रवणविधिविषयशक्तितात्पर्यावधारणात्मक-**

(तरङ्गिणी)

श्रवणाक्षिप्तोपक्रमोपसंहारादितात्पर्यलिङ्गविचारमादाय समान विषयत्वमस्तीति शङ्कते ॥ नन्वद्वितीय इति ॥ एवं सति श्रवणस्य मननाभेदं निरस्यति ॥ मननन्त्विति ॥ वेदान्तवाक्यनिष्ठमद्वितीयब्रह्मविषयकं यत्तात्पर्यं तस्य विचारितोपक्रमादिलिङ्गैर्यदवधारणं तच्छ्रवणमित्युक्तम् भवति । तत्र च त्वदभ्युपगमविरोध इत्याह ॥ विवरण इति ॥ उक्तविधस्य श्रवणस्येतिकर्तव्यतात्वमेवायाति तच्च त्वदनभिमतमित्यर्थः । एतेनार्थाक्षिप्तविचारस्येतिकर्तव्यतात्वेपि तात्पर्यावधारणरूपे श्रवणे उक्तस्याङ्गित्वस्यानपाय इति निरस्तम् । त्वदभिमतश्रवणस्यैव तद्रूपत्वेनाक्षेपासम्भवात् ॥ श्रवणावृत्त्यैवेति ॥ उक्तस्मरणादित्रितयान्यतमदृष्टमेव श्रवणफलं प्रकल्प्य दृष्टार्थानां च फलसिद्धिपर्यन्तमावृत्तेरर्थसिद्धत्वान्मननविधिं विनैव तत्सिद्धिरित्यर्थः ॥ त्रिविधस्यापीति ॥ श्रवणे युक्तीरविधाय मनने ता विदधतीति स्मृतिर्मनने तदपेक्षां सूचयति । न चोक्तत्रिविधस्यापि मननस्य श्रवणानपेक्षितयुक्त्यपेक्षातो न स्मार्ता व्यवस्था युक्तेत्यर्थः ॥ श्रवणं यावदज्ञानमिति ॥ न चोक्तविधश्रवणमननयोर्विषयभेदः । येन श्रवणानिवर्तितशङ्कानिवर्तकं मननं स्यात् ॥ ॥ तर्हि युक्तायुक्तत्वेति ॥ न्यायरूपयुक्त्यनुसन्धानकर्तव्यताबोधकमननविधेः न्यायग्रथनात्मकशास्त्रारम्भकर्तव्यताबोधकस्य न्यायानुसन्धानरूपविचारकर्तव्यताविधायकस्याद्यसूत्रस्य च समानविषयत्वाद्युक्तो मननविधेराद्यसूत्रमूलभावो न तु श्रवणविधेरित्यर्थः । एतेन तात्पर्यविषययुक्तायुक्तत्वादिसंशयनिवर्तकविचारापेक्षया तात्पर्यनिर्णायकश्रवणाक्षिप्तलिङ्गविचारस्याभ्यर्हितत्वेन तदाक्षेपकश्रवणविधिरेव सूत्रमूलमिति निरस्तम् । विशिष्टतात्पर्यनिर्णयस्य मन्मते श्रवणत्वेन तस्य तदाक्षेपकत्वायोगस्योक्तत्वात् । लिङ्गविचारस्य लिङ्ग्यर्थत्वेन लिङ्गिन एवाभ्यर्हितत्वाच्च ॥ उक्तयुक्तीति ॥ मननेन्तर्गतानामसम्भावनानिरासिनीनाम् ॥ तेनैवेति ॥ श्रवणेनैवासम्भावनानिरासे मननवैयर्थ्याच्च ॥ युक्त्यननुसन्धानेपीति ॥ श्रुतपदप्रयोगेण सिद्धश्रवणभावे युक्त्यनुप्रविष्टश्रवणलक्षणमव्याप्तं स्यादित्यर्थः । कौमुद्युक्तं लक्षणान्तरं निराकरोति ॥ न च कौमुदीति ॥ इष्टापत्तेरिति ॥ मननान्तर्गतयुक्तीनामुक्तरूपे श्रवणेनन्तर्भावात् ॥ विचारविधायकस्येति ॥ एतच्च मध्यमपक्षेपि दूषणं बोध्यम् ॥ वेदान्तश्रवणमिति ॥ शब्दशक्तिनिर्णायको यः श्रुतिलिङ्गादिको न्यायस्तदनुकूलश्च तर्कस्तद्वेदान्तश्रवणम् आगमार्थनिश्चयार्थो यो न्यायः यश्च तदनुकूलस्तर्कस्स मन्तव्य इति शब्देन भण्यत इत्यर्थः ॥ वेदशब्देति ॥ शुष्कतर्कस्य निषेधेपि वैदिकतर्कस्य मीमांसन्त इत्यादिना वेदेनैव नियुक्तत्वात् ॥ सम्भावनेति ॥ तर्कैः कृतार्थस्य सम्भावनाया तन्मननमिति पूरणीयम् । शब्दतात्पर्यतदर्थनिर्णायकयुक्तीनामनुसन्धाने श्रवणमनने इत्यस्मिन्नर्थे दूषणमाह ॥

(तरङ्गिणी)

विवरण इति ॥ अयमत्र टीकाविवरणादीनामभिप्रायः । आत्मैकत्वविद्याप्रतिपत्तय इत्यत्र भाष्ये प्रतिपत्तिशब्दस्याप्त्यर्थत्वमभिसन्धाय ननु न विद्या गवादिवत्तटस्था सिध्यति किन्तु वेत्राश्रिता वेद्यं प्रकाशयन्त्येवोत्पद्यतेऽतस्तस्या आप्तिर्न सम्भवतीत्याशङ्क्य अत्र भाष्ये विद्याशब्देन शक्तितात्पर्यविचारसहकृतशब्दजन्यं प्रत्यक्षरूपं प्रमाणज्ञानमभिधीयते तच्च दूरदेशवर्त्याभ्रमरी च फलसाक्षात्कारवदप्रतिष्ठितमेव प्रथममुत्पद्यत इत्याप्तिशब्देन विद्यायाः स्वविषयेण सह पुनरप्यापरोक्ष्यरूपा प्रतिष्ठोच्यते तच्चापरोक्ष्यं ब्रह्मात्मपरिभावनाप्रचयनिमित्ततदेकाग्रवृत्तिं प्रति चित्तस्य यदयोग्यत्वं तद्रूपा याऽसम्भावना तस्यां मननेन निवृत्तायां शरीराद्यध्याससंस्कारप्रचयरूपविपरीतभावनायां च निदिध्यासनेन निवृत्तायां सम्यगापरोक्ष्यं भवतीति परिहृत्य? ननु शब्दगताया अर्थगताया वाऽसम्भावनाया विपरीतभावनाया निवर्तके मनननिदिध्यासने उच्येतां किमर्थं चित्तैकाग्रवृत्त्ययोग्यत्वनिरासेन चित्तस्य प्रत्यगात्मप्रवणसंस्कारनिष्पन्नतदेकाग्रवृत्तियोग्यत्वहेतू उच्येते इत्याशङ्क्य यौक्तिकासम्भावनाविपरीतभावनानिरासितर्काणां प्रथमज्ञानेन्तर्भूतत्वादित्यादिना परिहृतम् ॥ प्रथमज्ञान इति ॥ श्रवणे ॥ उक्त्वेति ॥ वक्ष्यमाणमभिसन्धायेत्यर्थः । तेन विवरणवाक्ययोः पौर्वापर्यव्यत्यासनिमित्तो विरोधो नाशङ्क्यः ॥ ब्रह्मात्मेति ॥ ब्रह्मण आत्मभावेन या परिभावना तस्याः प्रचयो निमित्तं यस्याः सा तथोक्ता एवंभूता या तदेका वृत्तिस्तां प्रति चित्तस्य यदयोग्यत्वं तदसंभावनेत्यर्थः ॥ भावनाप्रचयेति ॥ भावनाप्रचयो हेतुर्यस्य एवंभूतं यच्चित्तैकाग्र्यं तत्प्रति हेतुतायाः मननस्योक्तत्वादित्यर्थः । अत्र भिन्नप्रस्थानतया विवरणविरोधोऽकिञ्चित्कर इति कस्यचित्प्रलपितमयुक्तम् । जिज्ञासासूत्रस्य श्रवणविधिमूलताया विवरणोक्ताया निषिध्यमानत्वेन तत्रैव तद्विरोधस्योच्यमानत्वात् । अत एवाह ॥ जिज्ञासासूत्रस्येति ॥ समन्वयेऽविरोधादौ च न्यायानुसन्धानकर्तव्यत्वं विदधदाद्यसूत्रं समन्वयांशे श्रवणविधिमूलकमविरोधे च मननविधिमूलकं स्यात् साधनाद्यंशे चानुभयमूलकं स्यादित्यपि बोध्यम् । यत्तु समन्वयोक्तविचारस्याभ्यर्हिततया श्रवणविधिमूलत्वोक्तिरिति ॥ तन्न। समन्वयादप्यविरोधस्य परपक्षदूषणपर्यवसायिनो वैतण्डिकान्प्रत्यभ्यर्हिततरत्वात् ॥ मन्तव्यश्चोपपत्तिभिरितीति ॥ शब्दसम्बन्धिनीनामर्थसम्बन्धिनीनां चोपपत्तीनां मनन एवान्तर्भावसम्भवेन स्मृतिस्थोपपत्तिशब्दस्य शब्दार्थविषयत्वेनावान्तरभेदकल्पने मानाभावात् । श्रवणमननयोर्भेदस्तु प्रकारान्तरेणापि सम्भवतीत्यर्थः ॥ उक्तस्येति ॥ न चास्य ज्ञानरूपतया नानुष्ठेयत्वमिति वाच्यम् । ज्ञानस्याप्यनुष्ठेयताया वक्ष्यमाणत्वात् । श्रवणादितुल्यत्वाच्च ॥ केवलमिति ॥ त्वन्मते तस्याश्रवणत्वात्तत्र श्रुतशब्दो गौणः स्यात् ॥ निश्चितप्रामाण्यस्येति ॥

(तरङ्गिणी)

न च कृष्णलयवावघातस्येव तादृशपुरुषं प्रति मननविधिबाध इति युक्तम् । मुमुक्षुकर्तव्यत्वेन नित्यवत् श्रुतत्वात् । उक्तविधयान्यथाप्युपपत्तेश्च ॥ श्रवणनियमेनेति ॥ अनुमानादिप्राप्तिपक्षेपि वेदान्तवाक्यस्यैवाप्राप्तस्य नियमविधिना पूरणादित्यर्थः ॥ अन्यथेति ॥ सर्वस्मिन्नपि पक्षे वेदान्तवाक्यस्य पूरणाभावे ॥ जिज्ञासानामेति ॥ टीकास्थस्य श्रवणादिरूपा जिज्ञासा-कर्तव्येत्युक्तमित्यादौ श्रवणेपि जिज्ञासापदप्रयोगस्यातद्गुणसंविज्ञानबहुव्रीह्याश्रयणादिना गति-श्चन्द्रिकायामुक्ता ॥ उत्तरक्रतुविधिप्रयुक्त इति ॥ ज्योतिष्टोमादिक्रतुविधयो यागादिकमनुष्ठा-पयन्ति । अनुष्ठानं च विचारसाध्यज्ञानं विना न सम्भवतीति क्रतुविधेः कर्मकाण्ड-विचाराक्षेपकत्वं यथा तथा तरति शोकमिति शोकनिवृत्तिहेतुत्वेन श्रुतमात्मज्ञानमपि स्वसिद्धये ब्रह्मकाण्डविचारमाक्षिपेत् । कार्येण कारणाक्षेपसम्भवात् । यत्तु विचारस्य वैधत्वसिध्यर्थं विधि-मूलत्वमेवावश्यवक्तव्यम् । अन्यथा कर्मज्ञानादेव कर्मविचाराक्षेपेऽध्ययनविधेर्वोत्तरक्रतुविधीनां वा तदाक्षेपकत्वोक्तिरयुक्ता स्यात् । मननविधिमूलत्वं वदता त्वयाप्ययमाक्षेपोऽवश्यं परिहरणीय इति । तन्न । ज्ञानविधिव्यापारविषयत्वेनापि वैधत्वोपपत्तेः । अन्यथा विवरणमते श्रवणविधेरपि न विचारविधायकत्वं किन्तु तदाक्षेपकत्वमिति तस्य वैधत्वं न स्यात् । अध्ययनविधेर्ज्ञानार्थत्वे तु तस्य साक्षाद्विचारविधायकत्वम् । मम मते मननविधिस्तु साक्षादेव विचारविधायक इति वैषम्यम् ॥ एकस्यैवेति ॥ तरति शोकमित्यादिज्ञानविधेः ॥ ननु ब्रह्मकाण्डविचारविधायकस्य श्रोतव्य इत्यादिविधेः सत्त्वेन नाध्ययनविधेर्विचाराक्षेपकत्वं कल्प्यते गौरवादित्यत आह ॥ अस्ति चेति ॥ दृष्टफलत्वेनैवेति ॥ दृष्टफलानां फलपर्यन्तमनुष्ठेयत्वात् ॥ मुण्डकेति ॥ मुण्डक आथर्वणोपनिषत् । तदध्ययने शिरोव्रतं विधिवद्यैस्तु चीर्णमिति शिरोव्रतस्याङ्गत्वं विहितम् । कारीरी कारीरीप्रतिपादकोऽनुवाकः । तदध्ययने भूभोजनस्याङ्गत्वम् ॥ तां चतुर्भिरिति ॥ ताम् इष्टकां मृत्खननार्थामभ्रिंवैणवीङ्कुद्दालसदृशीं चतुर्भिः मन्त्रैः । ते च देवस्य त्वा सवितुः प्रसवे-श्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाददेऽङ्गिरस्वत् । अभ्रिरसि नारिरसि पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन त्वाछन्दसाददेऽङ्गिरस्वत् । अभ्रिरसि नारिरसि त्वया वयं सधस्थ आग्निं शकेम खनितुं पुरीष्यं जागतेन त्वा छन्दसाधदेङ्गिरस्वत् । हस्त आध्याय सविता बिभ्रदभ्रिं हिरण्ययीं तया ज्योतिरजस्रमिदग्निं खात्वा न आभरानुष्टुभेन त्वाछन्द-साददेङ्गिरस्वत् । इत्येवं रूपा न्यायसुधायामुक्ताः ॥ अर्थप्राप्तेति ॥ अभ्रेरभिघरणं विना मृत्खननायोगात्तदादानमन्यथानुपपत्तिप्राप्तमित्यर्थः ॥ सङ्ख्येति ॥ यद्यपि लिङ्गापेक्षया श्रुतेः शीघ्रत्वात्सङ्ख्याविशिष्टमन्त्रयुक्तादानविधिरिति वार्तिकात्प्रतीयते । तथापि गुणार्थत्वमेव फलत

(तरङ्गिणी)

**इति तदत्राभिमतम् । तथैव न्यायसुधायां व्याख्यातम् । तथोक्तम् । आदानविध्यभावादरुणैकहायनीन्यायानुपपत्तेरर्थप्राप्तस्य चादानस्यानुवाद्यत्वेनैकविधावितरेण विशेष्टुमशक्यत्वाल्लिङ्गतश्चैकैकस्यैव मन्त्रस्य प्राप्तेः सङ्ख्यानाकाङ्क्षत्वात्समुच्चयासिद्धेः फलतो गुणार्थत्वमिति ॥**

**॥ श्रवणविधेर्विवरणोक्तविचारविधायकत्वभङ्गः ॥ ५ ॥**

## न्यायामृतकण्टकोद्धारः

जिज्ञासासूत्रस्य मननविधिमूलत्वं समर्थयितुं विवरणोक्तं श्रवणविधिमूलत्वं दूषयितुमनुवदति **यच्चोक्तमिति**। त्वयेति । तथा चापरोक्षज्ञानकामनायां सत्यामधिकारित्वसिध्या श्रवणसाध्यपरोक्षज्ञानम् । **तस्मिंश्च** सत्यपरोक्षज्ञानकामनेत्यन्योन्याश्रय इति भावः । अन्यथेति । विचारस्य तत्वनिर्णायकन्यायानु सन्धानरूपत्वाभाव इत्यर्थः । तत्कर्तव्यतेति । तत्वनिर्णायकन्यायानुसन्धानरूपविचारकर्तव्यतेत्यर्थः । इतरस्येति । तत्वनिर्णायकन्यायानुसन्धानरूपविचारेतरस्येत्यर्थः । मननभेदकं शङ्कते नन्विति । ननु मननविधेः श्रवणानन्तर्गतयुक्तिसापेक्षत्वान्न वैयर्थ्यमित्यत आह त्रिविधस्येति । उक्तत्रयातिरिक्त श्रवणपदार्थाङ्गीकारे तु मननवैयर्थ्यमित्याशयेन त्रिविधस्येत्युक्तम् । तथा चोक्तश्रवणपदार्थाङ्गीकारे उपपत्रिमात्रस्य श्रवणान्तर्गतत्वेन व्यवस्थापकस्मृतिविरोध इति भावः । श्रवणमिति । अयुक्तत्वशङ्कायाः श्रवणेनैव निवर्तितत्वादिति भावः । ननु नोक्तरूपमनुचिन्तनं स्वीक्रियते । किन्तु तात्पर्यविषयकायुक्तत्व शङ्कानिवर्तकयुक्त्यनुसन्धानरूपम् । अतो न दोष इत्याशङ्क्याह यदि त्विति । युक्तायुक्तत्वसंशयादे रन्येनानिवृत्तेरित्यन्वयः । एतेनेत्यस्यार्थमाह श्रवण इति । किञ्च युक्त्यनुसन्धानस्य श्रवणप्रवेशाङ्गीकारे तेनैवासंभावनानिरसनसिद्धेर्मननानर्थक्यमित्याह तेनैवेति । वादकथा हि किं तत्वनिर्णायकन्यायचर्चारूपा, उत वाक्यार्थग्रहणरूपा, अथवा वाक्यविशेषप्रयोगरूपा? नाद्य इत्याह वादेति । न द्वितीय इत्याह वाक्यार्थेति । तृतीयं प्रत्याह न्यायेति । विचारेति । किं तर्हि प्रयोगमूलं स्यादिति भावः । प्रकारान्तरेण श्रवणमननयोर्भेदं शङ्कते ननु समन्वयेति । उक्तेर्थे सुरेश्वरसम्मतिं दर्शयति सुरेश्वरेणेति । यद् वेदान्तश्रवणं तत् तर्क एवोपक्रमादिः । तदुपायः श्रुतिलिङ्गादिको यो न्यायो युक्त्यनुसन्धानरूपः स चागमार्थ विनिश्चित्यै मन्तव्य इति भण्यते । अत्र मननेन वेदशक्त्यनुरोधी वेदानुकूलः उपक्रमादिरूपस्तर्कोऽपि अर्थनिर्णयाङ्गं भवतीत्यर्थः । धीस्वास्थ्यकारिभिस्तर्कैः अर्थासत्वशङ्क्या संभावनार्थस्य संशयविषयस्यार्थस्य निरूपण प्रकारः द्वितीयाध्याये ईरित इत्यर्थः । विवरणविरोधेन दूषयति विवरण इति । जिज्ञासेति । युक्त्यनुसन्धानरूपांशस्य मननश्रवणयोरुभयोरपि अविशिष्टत्वादिति भावः । उक्तरूपश्रवणाङ्गीकारे दोषान्तरमाह उक्तस्येति । युक्त्यनपेक्षस्य श्रद्धामात्रेण प्रतिवाक्यमयमस्य वाक्यस्यार्थ इत्युक्तस्येत्यर्थः । किञ्चैवं मननस्याप्यावश्यकता न स्यादित्याह प्रमाणेति । श्रवणनियमेनेति । अन्यथा तस्य नियमविधित्वं न स्यादिति भावः । अन्यथेति । शब्देतरकारणानिषेध इत्यर्थः । प्रकारान्तरेण श्रवणविधिप्रयुक्तत्वं दूषयति किञ्चेति । एतदेव विशदयति उत्तरक्रतुविधिभिरिति । एकस्यैवेति । ननु यदि ह्यध्ययनविधिर्दृष्टार्थः स्यात् तदार्थज्ञानार्थत्वाद् अर्थज्ञानस्य च विचारं विनाऽसंभवात् विचाराक्षेपकत्वं

(कण्टकोद्धारः)
युज्यते। न चैवम् । अध्ययनविधेर्नित्यत्वेन दृष्टार्थत्वाभावादित्यत आह यदि चेति । ननु ब्रह्मकाण्डे साक्षाद्विचारविधेर्विद्यमानत्वात् नाध्ययनविधेस्तदाक्षेपकतेत्यत आह अस्ति चेति । अत एवेत्यस्यार्थमाह विचारस्येति । साक्षात्कारफलकत्वाद् ब्रह्मविचारस्य अध्ययन विधिप्रयुक्तत्वाभावो वाच्यः । आत्मनोऽपरोक्षैकरसत्वान्नैवम् । तद्विचारस्य साक्षात्कारफलकत्वसंभवात्, अपरोक्षार्थविषयकविचारस्य साक्षात्कारफलकत्वनियमादित्याह ब्रह्मेति । तथाप्यध्ययनविधिप्रयुक्तत्वे आवृत्तिगुणकत्वं न संभवतीत्यत आह आवृत्तेश्चेति । अपिशब्दाद् विध्यन्तरानङ्गीकारेऽपि । अवघातादेर्हष्ट वैतुष्यफलकत्वाद् विध्यन्तराभावेऽपि यावद् वैतुष्यं तावदावृत्तिः क्रियते । एवं प्रकृतेऽपि साक्षात्कारफलकस्य श्रवणस्य यावत्साक्षात्कारमावृत्तिरावश्यकीति विध्यन्तराङ्गीकारोऽनर्थक इति भावः । तथापि मननाद्यङ्गविधानमध्ययनविधिप्रयुक्तत्वे न संभवति । कर्मकाण्डे अभावादित्यत आह मननस्यैवेति । न चैतन्मननविधिमूलत्ववादिनोऽपि समानमिति वाच्यम् । विचाराक्षेपकतया तन्मलत्वस्येष्टत्वात् । न चाध्ययनविधेः स्वाध्यायावाप्तिफलकत्वेनार्थज्ञानपर्यन्तत्वाभाव इति वाच्यम् । अर्थावबोधपर्यन्तत्वस्याग्रे वक्ष्यमाणत्वात् । स्वाध्यायावाप्तेरपुरुषार्थतयाऽर्थावबोधपर्यन्तताया आवश्यकत्वाच्च । न चैवं चित्रया यजेतेत्यादौ पश्वादेरप्यफलत्वापत्तिरिति वाच्यम् । तत्र पुरुषार्थ साधनतया फलत्वसम्भवात् । काम्यमानत्वेन श्रुतत्वाच्च । प्रकृते दृष्टफलस्योपपत्तौ अदृष्टस्वीकारस्य व्यर्थत्वात् । उक्तमर्थं कारिकारूढं करोति तस्मादिति । तद्रूपं युक्तिचिन्तनरूपम् ॥ इति श्रवणविधेर्विवरणोक्तविचारविधायकत्व भङ्गः ॥

## ६. अध्ययनविधेर्नित्यत्वेऽपि विचारविधायकत्वम्

यत्तु भामत्युक्तम् ''श्रवणादिविध्यभावादध्ययनविधिरेव काण्डद्वयविचराक्षेपक'' इति, तत् ''स्वाध्यायस्य हि तथात्वेने''त्यत्र सूत्रभाष्यादौ ''अध्ययनस्य चार्थज्ञानपर्यन्तत्वादि''ति टीकायां च तस्य तदाक्षेपकताया उक्तत्वादिष्टम्, श्रवणादिविधिस्तु समर्थयिष्यते । ननु तत्रैव टीकायां योऽनधीत्येत्यकरणे प्रत्यवायस्मरणेनाध्ययनस्य नित्यताप्युक्ता, तत्कथं तस्यार्थज्ञानपर्यन्तत्वमिति चेन्न, अर्थज्ञा-(नार्थत्वे)नपर्यन्तत्वेऽप्यध्ययनविधेरवैयर्थ्यायाधीतेनैव वेदेन कर्तव्यतां ज्ञात्वानुष्ठितं कर्म फलायालमित्यादिनियमाश्रयणात् । असत्यध्ययने यथोक्तनित्यादिकर्मानुष्ठानासिद्ध्या प्रत्यवायश्रवणोपपत्तिः । तथा चार्थज्ञानार्थस्याप्यध्ययनस्य फलतो नित्यत्वमिति केचित् । अपरे तु अनध्ययनेन सन्ध्यानुपासनेनेव साक्षात्प्रत्यवायस्मरणेनाध्ययनस्यादृष्टार्थत्वेऽप्यर्थज्ञानस्यापि दृष्टत्वादपेक्षितत्वाच्च तादर्थ्यमपीत्युभयार्थता पशुपुरोडाशादिवदित्याहुः ।

**अथवा श्रुतिबलाद्दध्यादेः क्रत्वर्थत्वपुरुषार्थत्ववद्दर्शपूर्णमासादेर्नित्यकाम्यत्ववच्चाध्ययनस्याप्युभयार्थता । प्रत्यवायस्येव "सर्वे वेदा यत्पदमामनन्ति" इत्यादि श्रुत्या "वेदैश्च सर्वैरहमेव वेद्य" इति स्मृत्या च ब्रह्मज्ञानार्थत्वस्याप्यवगमात् । यद्वोक्तश्रुत्याध्ययनस्य ब्रह्मज्ञानार्थत्वेऽपि "यदेव विद्यया करोती"त्यादिश्रुत्या ब्रह्मज्ञानस्यैवावश्यकत्वात् ज्ञानार्थत्वेऽप्यध्ययनस्याकरणे प्रत्यवायश्रवणं युक्तम् । एतेन नित्यत्वादध्ययनविधिर्न विचाराक्षेपक इति यद्विवरणाभिप्रेतं तन्निरस्तम् । तस्मात्–**

**ब्रह्मज्ञानफलस्यापि स्वाध्यायाध्ययनस्य या ।**
**टीकायां नित्यता प्रोक्ता सापि नैव विरुध्यते ॥**

**अध्ययनविधेर्नित्यत्वेऽपि विचारविधायकत्वम् ॥ ६ ॥**

अद्वैतसिद्धिः

प्रस्थानान्तरे तु अध्ययनविधेरेवार्थावगमपर्यन्तत्वात् काण्डद्वयविचाराक्षेपकत्वम्, श्रवणादिषु च न विधिः । तेषामन्वयव्यतिरेकसिद्धसाक्षात्कारसाधनताकत्वादित्युक्तम् । न च अध्ययनाभावे प्रत्यवायश्रवणादध्ययनस्य नित्यताया अप्यवगमात् कथं तस्यार्थावगमपर्यन्तत्वमिति वाच्यम्, अर्थज्ञानार्थत्वेऽपि अध्ययनविधेरवैयर्थ्याय अधीतेनैव वेदेन कर्तव्यतां ज्ञात्वा अनुष्ठितं कर्म फलायालमित्यादिनियमाश्रयणादसत्यध्ययने यथोक्तनित्यादिकर्मानुष्ठानासिद्ध्या प्रत्यवायश्रवणोपपत्तिः । तथा चार्थज्ञानार्थस्यापि अध्ययनस्य फलतो नित्यत्वमिति केचित् । अपरे तु अनध्ययने सन्ध्यानुपासन इव साक्षात् प्रत्यवायश्रवणेनाध्ययनस्यादृष्टत्वेऽप्यर्थज्ञानस्यापि दृष्टत्वादपेक्षितत्वाच्च तादर्थ्यमपीतुभयार्थता पशुपुरोडाशादिवदिति आहुः । अत्र चाध्ययनविधेर्नित्यत्वे सत्युभयविचाराक्षेपकत्वं परेणाप्यङ्गीकृतं, तदयुक्तम्, जिज्ञासासूत्रस्य मननविधिमूलत्ववादिनस्तस्य तदङ्गीकारानर्हत्वात्, अयुक्तत्वशङ्कानिवर्तकमननरूपविचारस्यापि अध्ययनविध्याक्षिप्तत्वेन तत्र विधिवैयर्थ्यात् सूत्रस्य तन्मूलत्वासिद्धेः ॥ इत्यद्वैतसिद्धौ वाचस्पत्युक्तस्वाध्यायविधिविचाराक्षेपकत्वस्योपपत्तिः ॥

## न्यायामृततरङ्गिणी

॥ श्रवणादीति ॥ श्रवणादेर्ज्ञानरूपत्वात्तस्यैव विधेयत्वात्तव्यादयः श्रूयमाणा अर्हार्था एव न विधायका इत्याहुः ॥ स्वाध्यायस्येति ॥ सर्वशाखानामेकेन पुंसाऽध्येतुमशक्यत्वात्सर्ववेदान्तप्रत्ययं ब्रह्म न भवतीति शङ्कायां तत्परिहारत्वेन स्वाध्यायस्य हि तथात्वेन समाचारेधिकारच्चेति सूत्रम् । तस्यार्थः । स्वाध्यायोऽध्येतव्य इति सामान्यविधिना वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मनेति स्मृत्या च हिशब्दसूचितया सर्वैः सर्वशाखोक्तकर्मानुष्ठानरूपसमाचाराच्च सर्वशाखाध्ययनमस्ति शाखाभेदस्त्वशक्तित इति । अत्र भाष्ये सरहस्य इत्यादिनाध्ययनस्यार्थज्ञानपर्यन्तत्वावगमादध्ययनविधेर्विचाराक्षेपकत्वमनुमतम् । अत्रैव सूत्रे टीकायाम् अध्ययनं च तदुक्तार्थज्ञानार्थमेवेत्युक्तमित्यर्थः ॥ अध्यनविधेरिति ॥ वाक्यग्रहणं विना वाक्यार्थावधारणानुपपत्तेर्वेदार्थग्रहणकामस्य वेदाध्ययनं रागतः प्राप्तमतोध्ययनविधिवैयर्थ्यं तन्माभूत् ॥ उभयार्थतेति ॥ प्रत्यवायपरिहारार्थज्ञानं चेत्युभयम् ॥ पशुपुरोडाशेति ॥ चतुर्थस्य प्रथमे विचारितम् आश्रयिष्वविशेषेण भावोप्यप्रतीयते । अग्नीषोमीयपश्वङ्गत्वेन पुरोडाशयागः श्रुतः । अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशं निर्वपतीति । अग्नीषोमीयपशुयागस्य देवतास्मरणरूपसंस्कारं कुर्वन्पुरोडाशयागोग्नीषोमीयस्य सन्निपत्योपकारक इति दाशमिकमर्थं सिद्धवत्कृत्य किमयं पशुपुरोडाशयागः पशुदेवतायाः स्मरणरूपं संस्कारं कुर्वन् दृष्टार्थ एव उतादृष्टार्थोपीति संशये एकं वा चोदनैकत्वादित्येकेनैव प्रयोजनेन विध्युपपत्तेः प्रयोजनद्वयं नाश्रयणीयमिति पूर्वपक्षे देवतोद्देशेन त्यागरूपस्य यागस्योद्देशशिष्टार्थत्वेपि त्यागांशेऽदृष्टार्थत्वं विनानुपपत्तेरुभयार्थमिति सिद्धान्तः ॥ श्रुतिबलादिति ॥ दध्ना जुहोति दध्नेन्द्रियकामस्य जुहुयादिति तृतीयाश्रुतिबलात् ॥ क्रत्वर्थत्वेति ॥ चतुर्थस्य तृतीयेभिहितम् एकस्य तूभयार्थत्वे संयोगपृथक्त्वम् । अग्निहोत्रे श्रूयते दध्ना जुहोति दध्नेन्द्रियकामस्य जुहुयात् इति । तत्र किं फलार्थमेव दध्युत क्रत्वर्थमपीति संशये फलवाक्येन दध्नः फलसम्बन्धविधायकेन तस्य होमसम्बन्धविधानायोगात्फलवाक्यापेक्षितदधिहोमसम्बन्धविधायकतया होमवाक्यस्य फलवाक्यैकवाक्यतया होमे दधिविधायकस्य वाक्यान्तरस्याभावात्फलार्थमेव दधीति प्राप्ते सिद्धरूपस्य दध्नःस्वतोऽननुष्ठेयस्य फलार्थत्वेन विधानायोगात्तदुपपत्तये स्वतःसाध्यरूपक्रियाश्रयापेक्षायामपि प्रकरणेनैव होमरूपाश्रयसम्बन्धलाभान्न तदर्थं दध्ना जुहोतीत्यस्य तदेकवाक्यतेति तेन पृथगेव क्रत्वर्थतया दधिविधानादुभयार्थं दधीति सिद्धान्तः ॥ नित्यत्वकाम्यत्वेति ॥ द्वितीयस्य चतुर्थेभिहितम् । यावज्जीविकोभ्यासः कर्मधर्मः प्रकरणात् । यावज्जीवं दर्शपूर्णमासाभ्यां यजेत दर्शपूर्णमासाभ्यां

(तरङ्गिणी)

स्वर्गकामो यजेतेति श्रूयते । तत्र यावज्जीववाक्येन स्वर्गकामवाक्योक्ते काम्यप्रयोगे यावज्जीवमभ्यासलक्षणो गुणो विधीयत इति प्राप्ते गुणविधौ जीवनशब्देन तत्सहचरितकालो लक्षणीयो जुहोतिशब्देन चाभ्यासः । अधिकारान्तरचोदनायां श्रुत्यर्थस्य जीवनस्याधिकारिविशेषणत्वाद्यागस्यैव विधेयत्वान्न कापि लक्षणा । ततश्च वाक्यद्वयवशात्काम्यो नित्यश्च दर्शपूर्णमास इति सिद्धान्तः ॥ आवश्यकत्वादिति ॥ वीर्यवत्तरफलसाधनत्वेन ॥ प्रत्यवायेति ॥ तादृशफलासिद्धिरूपः प्रत्यवायः ॥ एतेनेति ॥ अध्ययनविधेरवैयर्थ्यायेत्याद्युक्तेन ॥ ब्रह्मज्ञानफलस्यापीति ॥ सर्वे वेदा इत्यादिश्रुतेः ॥ अध्ययनविधेर्नित्यत्वेपि विचारविधायकत्वम् ॥ ६ ॥

## न्यायामृतकण्टकोद्धारः

नन्वध्ययनविधेः काण्डद्वयविचाराक्षेपकत्वं भामत्युक्तं कुतो न दूष्यत इत्यत आह यत्त्विति । ननु श्रोतव्य इत्यादिः किमनुवाद उत विधिरिति जिज्ञासायामाह श्रवणादीति । अध्ययन विधेरर्थज्ञानपर्यन्तत्वमुक्तमाक्षिपति ननु तत्रैवेति । अन्यथा प्रत्यवायस्मरणं विरुध्येतेति भावः । अर्थ ज्ञानार्थत्वेऽपि प्रत्यवायश्रवणोपपत्तिरित्यन्वयः । अवैयर्थ्यायेति । अन्वयव्यतिरेकाभ्यामध्ययनस्यार्थज्ञान हेतुतायाः प्राप्तत्वादध्ययनविधेर्वैयर्थ्ये प्राप्ते तत्परिहाराय नियम आश्रीयत इत्यर्थः । पशुपुरोडाशादिवदिति । यथा पश्वादेः प्रकृतयागस्वरूपनिष्पादकत्वेन दृष्टार्थत्वमदृष्टार्थत्वं च एवं प्रकृतेऽपीत्यर्थः । नन्वर्थज्ञानस्या पेक्षित्वेऽप्यध्ययनस्यार्थज्ञानार्थताया अप्रामाणिकत्वादुयुक्तमुभयार्थत्वमित्यत आह अथवेति । प्रकारान्तरेण प्रत्यवायश्रवणमुपपादयति यद्वेति । एतेनेति । अर्थज्ञानार्थताया उपपादितत्वेनेत्यर्थः । उक्तमर्थं कारिकारूढं करोति तस्मादिति । नचैतज्जिज्ञासूत्रस्य मननविधिमूलत्ववादिनाङ्गीकारानर्हम् । मननरूपविचारस्याप्यध्ययनविध्याक्षिप्तत्वेन तत्र विधिवैयर्थ्यादिति वाच्यम् । तेन हि सामान्यतो विचाराक्षेपेऽपि अप्राप्तार्थताया वक्ष्यमाणत्वेनापूर्वविधित्वस्य नियमविधित्वस्य च संभवात् ॥ इति अध्ययनविधेर्नित्यत्वेऽपि विचारविधायकत्वम् ॥

# ७. स्वमते श्रवणादिविधिसमर्थनम्

अस्माकं तु-

श्रवणं शब्दजं ज्ञानमुपपत्त्यनुचिन्तनम् ।
मतिर्निरन्तरा चिन्ता निदिध्यासनमुच्यते ॥

आपातदर्शनभिन्नं कृतिसाध्यत्वेन विधानार्हं प्रतिवाक्यमयमस्य वाक्यस्यार्थ इति सिद्धार्थोक्तिरूपेणगुरूपदेशेनानेकशाखास्थवाक्यार्थग्रहणमात्रं श्रवणम् । तच्चाज्ञान-

मात्रविरोधि, न तु मननमिव संशयादिविरोधि, मननरूपन्यायावताराङ्गसंशयधर्मिज्ञानरूपत्वात् । उक्तं हि सुधायाम्– ''श्रवणजं ज्ञानं पूर्ववृत्त''मिति मीमांसातः श्रवणस्य पूर्ववृत्तत्वम् । मननं तु 'अयमेव वाक्यार्थो युक्तो नान्य' इति निर्णयहेतुयुक्त्यनुसन्धानम् । तत्र समन्वयाध्यायोक्ताः उपक्रमादियुक्तयो वाक्यार्थतत्त्वनिर्णायिकाः । युक्तिसमयपादाभ्यामुक्तास्तु युक्तत्वनिर्णायिका इत्युभयविधयुक्त्यनुसन्धानमपि मननान्तर्गतम्, तच्च संशयादिविरोधि । निरन्तरं ध्यानं निदिध्यासनम्, तच्चापरोक्षज्ञानसाधनम् । एतच्च ''तन्निर्धारणार्थनियम'' इति सूत्रभाष्यादौ स्पष्टम् । उक्तश्च भामत्यामपि तृतीयाध्याये इत्थमेव श्रवणादीनां भेदः । विचारादिविधिस्त्वपूर्वविधिः, ब्रह्मज्ञाने वेदविचारहेतुतया अत्यन्ताप्राप्तत्वात् । न हि वेदार्थज्ञानाय वेदविचारः कर्तव्य इति वचनव्यक्तिः, ब्रह्मज्ञानस्यानुद्देश्यत्वात् । नापि ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इति, तथात्वे ब्रह्मणो विधेयविशेषणतया गुणत्वापातात् । किं तु ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्येव वचनव्यक्तिः । यद्यपि ब्रह्मपरवेदविचार एव ब्रह्मविचारः, तथापि न ब्रह्मविचाररूपेण विधानम् । किं तु वेदविचाररूपेण । तथा च श्रुतिः ''तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छे''दिति । टीका च ब्रह्मज्ञानोद्देशेन जिज्ञासाविधानात्कुतोऽप्राधान्यमिति । एवं च यथा घटादावितरभेदे सिद्धेऽपि पृथिवीत्वोपहिते तदसिद्धेः पृथिवी इतरेभ्यो भेद्यत इत्यत्र न सिद्धसाधनता, यथा वा स्थानप्रकरणाधिकरणोक्तरीत्या राजसूयान्तर्गतेष्टिपशुसोमेषु प्रातिस्विकरूपे चोदकत इतिकर्तव्यताप्राप्तावपिराजसूयरूपे तदप्राप्तिः, तथा वेदविचारत्वोपहिते ब्रह्मज्ञानहेतुताया अप्राप्तेरपूर्वविधिता । न हि कर्मकाण्डादिना ब्रह्मकाण्डेऽप्यवान्तरकारणादिवाक्ये पदवर्णस्वरादिना च आपाततोऽपि ब्रह्मधीरस्ति । अत एवानुव्याख्याने ''जिज्ञास्योऽयं विधीयत'' इति भाष्ये च ''आत्मेत्येवोपासीतेत्यादिविधीनामिति''निरुपपदविधिपदप्रयोगः ।

यद्वा निदिध्यासनस्याव्यक्तस्वभावब्रह्मसाक्षात्कारहेतुता नान्यतः प्राप्तेति स तावदपूर्वविधिः । तथाऽज्ञातादौ निदिध्यसनासम्भवेन श्रवणमननयोर्निदिध्यासने

लिङ्गादेव प्राप्तावपि नियतविषयकनिदिध्यासनविषयगुणान्यगुणेषु लिङ्गेन तयोरप्राप्तेस्तद्विधिरप्यपूर्वविधिरेव । एवं च श्रवणमननयोर्निदिध्यासितव्यगुणांशे दृष्टद्वाराऽन्यत्रत्वदृष्टद्वारेण निदिध्यासनाङ्गतेति ध्येयम् ।

यद्वा गुरुप्रसादपूर्वकत्वरहितस्वयत्नमात्रसाध्यवाक्यार्थग्रहणादिप्राप्तिनिमित्तकः श्रोतव्य इत्यादिनियमोऽस्तु । "आचार्यवान् पुरुषो वेदे"त्यादिश्रुतेः । अथवा दुःशास्त्ररूपोपायान्तरप्राप्तिनिमित्तको नियमोऽस्तु । पाशुपताद्यागमविचारस्य ब्रह्मप्रमाहेतुत्वाभावेऽपि जगत्कारणज्ञानहेतुतायाः प्राप्तेः । अत एव शास्त्रयोनिसूत्रम् । "दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दन" इति स्मृतिश्च, "सच्छास्त्रमभ्यसेन्नित्यं दुःशास्त्रं तु परित्यजेदि"त्यनुव्याख्यानं च ।

यद्वा विचारसाध्यज्ञानविशेष्यात्मज्ञानेष्वनुमानादेः प्राप्त्या नियमोऽस्तु, "नैषा तर्केण"त्यादि श्रुतेः । न च यदाकारज्ञानं विचारहेतुकं तदाकारज्ञाने उपायान्तरप्राप्तिर्नियमे तन्त्रम् । इदं तत्त्वत एव परामृष्टव्यमित्यादावेकस्मिन्विशेष्ये उपायान्तरप्राप्तिमात्रेण नियमदर्शनात् । न ह्येकस्मिन्नेवाकारे तात्त्विकत्वातात्त्विकत्वयोः प्राप्तिरस्ति । परमते तु विशेषस्यैवौपनिषदत्वात्तत्रैवोपायान्तराप्राप्तिरिति वैषम्यम् । सम्भवति च शब्दयुक्तिजन्यज्ञानवाचिभ्यां श्रोतव्यमन्तव्यपदाभ्यां दुरागमरूपशब्दाभासतदनुग्राहकन्यायाभासजन्यज्ञानव्यावर्तनम् । एवं श्रवणस्याप्यध्ययनवद् गुरुनिरूप्यत्वादगुरुमुखाभ्यासव्यावृत्तिः । तस्माज्ज्ञानरूपमपि श्रवणादि विधेयम् ।

केचित्तु कार्यत्वाद्यनुमानस्य श्रुतिविचारस्य च नियमेन प्राप्तावाज्यभागौ यजतीतिवदेकस्मिन् शेषिणि शेषद्वयप्राप्तौ शेषान्तरनिवृत्तिफलकपरिसङ्ख्येत्याहुः । तन्न, तत्राखण्डोपकारस्य समुच्चिताज्यभागप्रयाजादिसाध्यत्ववदिह ज्ञानसमुच्चितप्रमाणसाध्यत्वाभावात् । शब्देतिकर्तव्यताभूततर्कसाहित्यस्य चेष्टत्वात् । अन्ये तु "अन्या वाचो विमुञ्चथे"ति श्रुतेरब्रह्मविचारनिषेधपरत्वमित्याहुः । तन्न, ब्रह्मज्ञानेऽब्रह्मविचारस्याप्राप्तेः । इतरे तु श्रुत्यादिविचारस्यापातप्रतीतब्रह्मतदन्यज्ञानसाधनत्वे प्राप्ते

**''इत्यश्वाभिधानीमादत्त'' इतिवदेकस्य शेषस्य शेषिद्वयसम्बन्धप्राप्तौ शेष्यन्तर-निवृत्तिफलकपरिसङ्ख्येत्याहुः । तन्न, श्रुत्यादिनाऽऽपाततोऽन्यप्रतीतावपि श्रुत्यादि-विचारस्यान्यज्ञानसाधनत्वेनाप्राप्तेः । अपरे तु ''श्रवणाज्जनलोकादि''रित्यादि-वचनेनापोदितं यच्छ्रवणस्य ज्ञानहेतुत्वं तस्य प्रतिप्रसवार्थं ज्ञानोद्देशेन श्रवणादि-विधानमित्याहुः । तन्न, श्रवणादितिवाक्यस्य श्रवणाद् दृष्टज्ञानद्वारा जनलोकादि-रित्येवंपरत्वेन ज्ञानसाधनत्वानपवादकत्वादिति । स्वमते श्रवणादिविधिसमर्थनम् ॥**

## अद्वैतसिद्धिः

यत्तु शब्दजज्ञानस्वरूपमेव श्रवणं विधेयमिति, तन्न, आपातदर्शनस्य तद्भिना जायमान-त्वात्। न च तद्भिन्ने प्रतिवाक्यमस्य वाक्यस्यायमर्थ इति सिद्धार्थोपदेशेनानेक-शाखास्थवाक्यार्थज्ञानम्, वेदान्तरूपवाक्यार्थविचारस्य सामान्यतः साधनत्वेन प्राप्तत्वात् । न च यथा घटादावितरभेदे सिद्धेऽपि पृथिवीरेभ्यो भिद्यत इत्यत्र न सिद्धसाधनम्, यथा च स्थानप्रकरणाधिकरणोक्तरीत्या राजसूयान्तर्गतेष्टिपशुसोमेषु प्रातिस्विकरूपेण चोदकत इति-कर्तव्यताप्राप्तावपि राजसूयरूपे तदप्राप्तिः, तथा वेदान्तविचारत्वोपहिते ब्रह्मज्ञानहेतुताया अप्राप्तेरपूर्वविधितेति वाच्यम्, सामान्यतः प्राप्तसाधनसाध्यभावमनादृत्य विशेषोपाधिना आप्राप्तसाधनत्वप्राप्तये अपूर्वविध्यङ्गीकारे ज्योतिष्टोमादिवाक्यविचारेऽपि तेन रूपेण तद्वाक्यार्थज्ञानं प्रत्यप्राप्तसाधनतासिद्धये अपूर्वविध्यन्तरकल्पनापत्तेः ।

एतेन निदिध्यासनस्याव्यक्तस्वभावब्रह्मसाक्षात्कारहेतुता नान्यतः प्राप्तेति स तावदपूर्व-विधिः, तथा अज्ञातादौ निदिध्यासनासम्भवेन श्रवणमननयोर्निदिध्यासने लिङ्गादेव प्राप्तावपि नियतविषयकनिदिध्यासनविषयगुणान्यगुणेषु लिङ्गेन तयोरप्राप्तेः तद्विधिरप्यपूर्वविधिरेव, एवं च श्रवणमननयोर्निदिध्यासितव्यगुणांशे दृष्टद्वारेण, अन्यत्र त्वदृष्टद्वारेण निदिध्यासनाङ्गतेति– निरस्तम् । श्रवणादीनां निर्गुणविषयतया सगुणविषयत्वाभावात्, विपरीताङ्गाङ्गिभावस्य स्थापितत्वाच्च, सूक्ष्मार्थगोचरनिदिध्यासनस्य तादृशार्थविषयकसाक्षात्कारहेतुताया दृष्टत्वेना-पूर्वत्वाभावाच्च ।

## न्यायामृततरङ्गिणी

नन्वध्ययनविधेर्विचारविधायकत्वे जिज्ञासासूत्रं तन्मूलमेव स्यान्न मननविधिमूलम् । श्रवणादिविधिवैयर्थ्यञ्चेति शङ्कां परिहरिष्यन् श्रवणादिभेदाय तत्स्वरूपं तावदाह ॥ अस्माकं त्विति ॥ वेदार्थज्ञानाय वेदविचारस्याध्ययनविधितःप्राप्तावपि ब्रह्मज्ञानाय वेदविचारस्य ततोऽ-प्राप्तेर्मननविधिर्युक्तः । यद्यपि ब्रह्मणो वेदार्थत्वेन तज्ज्ञानायापि वेदविचारस्याध्ययनविधितः-प्राप्तिरस्ति तथापि न ब्रह्मत्वेन रूपेण तज्ज्ञानाय तत्प्राप्तिरिति भावः ॥ प्रतिवाक्यमिति ॥ तत एव श्रवणविधेरवैयर्थ्यम् । अध्ययनविध्याक्षिप्तविचारेण कर्मब्रह्मकाण्डयोः कर्मब्रह्मपरत्वावग-मस्य श्रवणफलत्वात् । तस्य च वाक्यार्थावधारणहेतूपक्रमादियुक्तिभिरर्थगतायुक्तत्वादिशङ्का-निवर्तिकाभिर्युक्तिभिश्च दृढीकरणं मननफलम् । दृढीकृतार्थस्यापरोक्ष्याय निरन्तरं ध्यानं निदि-ध्यासनमिति सर्वमवदातम् ॥ एतच्चेति ॥ श्रवणादेरज्ञानादिनिवर्तकत्वम् ॥ तन्निर्धारणार्थनियम इति ॥ तन्निर्धारणार्थनियमस्तदृष्टेः पृथग्घ्यप्रतिबन्धः फलम् इति सूत्रम् । तस्यार्थः । ज्ञाना-र्थमुपासनं तच्च श्रवणमननाभ्यामेव भविष्यति किं ध्यानेनेति शङ्कायामुच्यते । तन्निर्धारणेऽर्थ-नियमः ध्यानादेवार्थदर्शनं तथा दृष्टेः श्रवणमननयोरज्ञानविपर्ययरूपप्रतिबन्धकनिवर्तनद्वारा ब्रह्मदर्शनोपयोग इति ॥ ब्रह्मज्ञानोद्देश्यत्वादिति ॥ विचारविधाविति शेषः । उक्तवचनव्यक्तौ च वेदार्थज्ञानस्यैवोद्देश्यत्वं न ब्रह्मज्ञानस्येत्यर्थः ॥ कर्मकाण्डादिनेति ॥ कर्मकाण्डादिना ब्रह्मधीर्न-ह्यस्तीत्याद्यन्वयः ॥ अवान्तरकारणेति ॥ आत्मन आकाशः सम्भूत इत्यादौ ॥ पदवर्णेति ॥ अन्यपरतया प्रतीयमानज्योतिष्टोमादिवाक्यगतपदैर्वर्णैरुदात्तादिस्वरैः । आदिपदेन वर्णसंहिताः ध्वन्यादिशब्दाश्च गृह्यन्ते ॥ आत्मेत्येवोपासीतेति ॥ उपासनाया जिज्ञासारूपत्वात् । एतेन सामान्यतःप्राप्तसाध्यसाधनभावमनादृत्य विशेषोपाधिनाऽप्राप्तसाधनत्वप्राप्तयेऽपूर्वविध्यङ्गीकारे ज्योतिष्टोमादिवाक्यविचारेपि तेन रूपेण तद्वाक्यार्थज्ञानं प्रत्यप्राप्तसाधनतासिद्ध्येऽपूर्व-विध्यन्तरकल्पनापत्तिरिति निरस्तम् । कर्मकाण्डादिना ब्रह्मज्ञानस्य सामान्यतोप्यप्राप्तेः ॥ लिङ्गादिति ॥ सामर्थ्यरूपात् ॥ नियतविषयेति ॥ बहुशाखोक्तगुणानां ज्ञेयत्वेपि स्वयोग्यायाः कतिपयगुणोपासनाया एव कर्तव्यत्वात् ॥ अदृष्टद्वारेणेति ॥ न च तयोर्निदिध्यासनाङ्गत्वे मानाभावः । वस्तुतस्तु तं पश्यत इति वाक्येन तदवगमात् । तस्माज्ज्ञानरूपमपीति ॥ आज्यभागौ यजतीतिवदिति ॥ चातुर्मास्ये साकमेधपर्वणि गृहमेधीयेष्टिरुक्ता मरुद्भ्यो गृहमे-धिभ्यः सर्वासां दुग्धे सायं चरुमिति । तत्र श्रूयते आज्यभागौ यजतीति । तत्र प्रकृतितः प्राप्तयोराज्यभागयोः पुनर्वचनानर्थक्यमाशङ्क्य पञ्चमपक्षेण समाधानं पूर्वपक्षेऽभिहितं परि-

(तरङ्गिणी)

सङ्ख्येयमाज्यभागावेवेति । तेनैकस्य गृहमेधीयाख्यस्य शेषिणः प्रयाज्याद्याज्यभागाद्यनेकशेषप्राप्तावाज्यभागेतरेषां परिवर्जनं भवति । एवमेकं ब्रह्मज्ञानं प्रति श्रुत्यनुमानयोः प्राप्तयोः श्रुतिग्रहणेनानुमानं परिसङ्ख्यायते ॥ तत्राखण्डेति ॥ आज्यभागप्रयाजादीनां परस्परमङ्गाङ्गिभावानापत्त्याऽऽभ्यामखण्डकरणोपकारं प्रति हेतुत्ववदिह श्रुत्यनुमानाभ्यां स्वतन्त्राभ्यामेक-ब्रह्मज्ञानजननाभावात् । गुणप्रधानभावेन तु ताभ्यामेकज्ञानजननमिहानुमतमेवेति न तत्परिसङ्ख्यायते ॥ इत्यश्वाभिधानीमिति ॥ अश्वमेधेऽश्वगर्दभाभिधान्यौ रज्जू वर्तेते तयोर्द्वयोर्ग्रहणे इमामगृभ्णन्रशनामृतस्येति मन्त्रो रशनाग्रहणप्रकाशनरूपसामर्थ्यात्प्राप्तः । स तु इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इत्यनेन गर्दभाभिधान्यादानात्परिसङ्ख्यायते यथा तथा श्रुतिविचारस्य ब्रह्मज्ञानसाधनत्वं प्राप्तमब्रह्मज्ञानात्परिसङ्ख्यायते ॥ श्रुत्यादिनेति ॥ इमामिति मन्त्रस्योभयरज्जुग्रहणे प्राप्तिवत् श्रुतिविचारस्य ब्रह्मतदन्यज्ञानयोः प्राप्त्यभावाद्वैषम्यम् ॥ श्रवणादितीति ॥ परम्परया हेतावपि पञ्चमीदर्शनात् ॥ स्वमते श्रवणादिविधिसमर्थनम् ॥

## न्यायामृतकण्टकोद्धारः

ननु श्रवणादिपदानां परोक्तार्थासम्भवे निरर्थकत्वं स्यादित्यतः स्वमतेन श्रवणादिस्वरूपं निरूपयति अस्माकं त्विति । श्रवणत्वं व्यावर्तयितुं सिद्धार्थोक्तिरूपेणेति । एकशाखास्थयत्किञ्चिद्वाक्यार्थग्रहणस्यापि श्रवणत्वं व्यावर्तयितुम् अनेकेति । तत्फलमाह तच्चेति । कुतो न तस्य संशयादिविरोधित्वमित्यत आह मननेति । धूमादियुक्त्यनुसन्धानस्यापि मननत्वं स्यादित्यत्राह मननंत्विति । नन्वेवं तर्हि युक्तत्वनिर्णायक युक्त्यनुसन्धानस्यैव मननरूपत्वं स्यात् । न तूपक्रमादिरूपेण वाक्यार्थतत्वनिर्णायकयुक्तीनाम् । तथाच तदनुसन्धानस्य चतुर्थत्वापत्तिरित्यत आह तत्रेति । एतच्चेति । ध्यानस्यापरोक्षसाधनत्वमित्यर्थः । तत्वनिश्चय वेदार्थनियमद्वारा अज्ञानविपर्ययादि निरसनस्यैव श्रवणमननफलत्वोक्त्या अपरोक्षज्ञानस्य ध्यानफलताया एवोक्तत्वादिति भावः । ननु विचारादिविधेः किमपूर्वविधित्वमुतनियमविधित्वमिति जिज्ञासायामाह विचारादीति । ननु विचारस्य ज्ञानहेतुतायाः प्राप्तत्वेनाप्राप्तार्थत्वाभावान्नापूर्वविधितेत्यत आह नहीति । किन्त्विति । तथा च वेदविचारस्य ब्रह्मज्ञानं प्रति हेतुतायाः सर्वथा अप्राप्तत्वादपूर्वविधित्वं युज्यत इति भावः । यद्यपीति । तथा च पूर्वाभेद इति ब्रह्मणोऽप्राधान्यप्राप्तिरनिवार्येति भावः । अत्रैव श्रुत्यादि सम्मतिमाह यथाचेति । तथापि वेदविचारस्य ब्रह्मज्ञानहेतुत्वाप्राप्तावपि एकदेशे साधनतायाः प्राप्तत्वात् कथमपूर्वविधित्वमित्यतो दृष्टान्तेन सम्यगुपपादयति एवं चेति । ननु ब्रह्मकाण्डेऽपि अवान्तरकारणादि वाक्येनापाततो ब्रह्मज्ञानस्य जायमानत्वात् अप्राप्तार्थत्वमसिद्धमित्यत आह नहीति । अत एवेति । वेदविचारस्य ब्रह्मज्ञानहेतुताया अप्राप्तत्वादेवेत्यर्थः । निरुपपदेति । निरुपपदविधिशब्दस्यापूर्वविधावेव मुख्यत्वादिति भावः। न च सामान्यतः प्राप्तसाध्यसाधनभावमनादृत्य विशेषोपाधिना अप्राप्त साधकत्वप्राप्तये

(कण्टकोद्धारः)
अपूर्वविध्यङ्गीकारे ज्योतिष्टोमादिवाक्यविचारेऽपि तेनरूपेण तदवाक्यार्थज्ञानं प्रत्यप्राप्तसाधनत्वसिद्धये अपूर्वविध्यन्तरकल्पनापत्तिरिति वाच्यम् । तत्राध्ययनविधिनैव सामान्यतस्तद्विचाराक्षेपात् विशेषविध्यभावाच्च । प्रकृतेतु श्रोतव्य इत्यादि विधिश्रवणात् तस्य च त्वदुक्तनियमविधित्वस्योक्तरीत्या दूषितत्वेनापूर्वविधित्वस्यैव युक्तत्वादिति । प्रकारान्तरेणापूर्वविधित्वं व्युत्पादयति यद्वेति । अव्यक्तस्वभावेति हेतुगर्भविशेषणं, ध्यानस्य ब्रह्मसाक्षात्कारहेतुता प्रमाणान्तरेण कुतो न प्राप्तेत्यतो ब्रह्मणोऽव्यक्तस्वभावत्वेन न प्रमाणान्तरादीति दर्शयितुम् । नियतेति । नियतविषयकं यन्निदिध्यासनं तस्य विषयभूता ये गुणाः तदन्यगुणेत्यर्थः । तयोः श्रवणमननयोः । ननु निदिध्यासनाविषयगुणविषयक श्रवणमननयोः कथं निदिध्यासनाङ्गत्वं, दृष्टद्वाराभावादित्यत्राह एवं चेति । अन्यत्रत्विति । अनिदिध्यासितगुणांश इत्यर्थः । न च श्रवणादीनां निर्गुणविषयतया सगुणविषयत्वा भावात् श्रवणस्याङ्गितायाः स्थापितत्वाच्चायुक्तमेतदिति वाच्यम् । निर्गुणाप्रामाणिकत्वस्योपपादितत्वात् । श्रवणाङ्गिताया निराकृतत्वाच्च । अथवा अयं नियमविधिरेव । न च तर्हि पाक्षिकी प्राप्तिः कथमिति वाच्यम् । गुरुप्रसादतद्रहितप्रयत्नादिरूपसाधनद्वयस्य वाक्यार्थग्रहणे प्राप्तत्वेन पाक्षिकप्राप्तेर्विद्यमानत्वादित्याह यद्वेति । ननु दुःशास्त्रस्य ब्रह्मप्रमाहेतुत्वाभावात् कथं तदुपायान्तरप्राप्तिनिमित्तको नियम इत्यत्राह पाशुपतेति । अत एवेति । जगत्कारणज्ञानहेतुताया अन्यतः प्राप्तेरेवेत्यर्थः । नैषेति । अन्यथा निषेधस्यासंभवादिति भावः । न चेति । विचारो हेतुर्यस्य तद् विचारहेत्विति विग्रहः । न च प्रकृते तदाकारज्ञाने उपायान्तरप्राप्तिरस्तीति भावः । परमते तु सर्वथा उपायान्तरप्राप्तिर्न संभवतीत्याह परमत इति । आकारस्य मिथ्यात्वादिति भावः । ननु श्रवणमननविध्योर्नियमविधित्वमयुक्तम्, व्यावर्तनीयस्याभावादित्यत आह संभवति चेति । अन्यदपि श्रवणविधेर्व्यावर्त्यं दर्शयति एवमिति । कैश्चिदुक्तं परिसंख्याविधित्वं दूषयितुं तदनुवदति केचित्त्विति । दृष्टान्तवैषम्येण दूषयति तन्नेति । ननु शब्देतिकर्तव्यताभूततर्कनिवृत्तिः परिसंख्याफलमित्यत्राह शब्देति । अन्यथा वेदार्थविचारायोग इति भावः । एकदेश्युक्तं प्रतिप्रसवं दूषयितुमनुवदति अपरे त्विति ॥ इति स्वमते श्रवणादिविधिसमर्थनम् ॥

## ८. ज्ञानविधिसमर्थनम्

अत्र परैरुक्तं अनिच्छतोऽपि दुर्गन्धादिज्ञानदर्शनात् ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेनाविधेयत्वाल्लिङादयः श्रूयमाणा अपि शिलातलप्रयुक्तक्षुरतैक्ष्ण्यवत् कुण्ठीभवन्तीति । तन्न, ''पत्न्यवेक्षितमाज्यं भवति'', ''विदुषा कर्म कर्तव्यं तस्मात्पश्येत नित्यश'' इत्यादिना तद्विधानात् । तत्र तद्धेत्विन्द्रियसम्प्रयोगादिविधौ लक्षणाप्रसङ्गात् । सम्प्रयोगस्यापीन्द्रियनिष्ठक्रियाद्वारा कृतिसाध्यत्वेन साक्षात्तदसाध्यत्वात् । परम्परया कृतिसाध्यत्वस्य च ज्ञानेऽपि सम्भवात् । अनिच्छतश्चा-

निष्टसम्प्रयोगदर्शनात् । ''भक्षेही''ति भक्षमन्त्रे च तृप्तेरनुनिष्पादिततयाननुष्ठेयत्वेन तृप्तिप्रकाशकभागस्य तत्र विभज्य विनियोगाभावेऽप्यवेक्षणस्यानुष्ठेयत्वात्तत्प्रकाशकभागस्यावेक्षणे विभज्य विनियोग इति तृतीयेऽभिहितत्वात् । एकश्रोत्रगतानेकतारगकारेषु च बुभुत्साप्रयत्नाभ्यामभीष्टगकारज्ञानदर्शनात् । ज्ञानस्य च ''यदेव विद्यया करोती''त्यङ्गत्वश्रवणात् । अविहितस्य चाङ्गत्वानुपपत्तेः । दुर्गन्धादिज्ञानस्येच्छाविषयत्वाभावेऽपि ब्रह्मज्ञानस्य तद्विषयत्ववत्, ज्ञानान्तरस्य नियमादृष्टासाध्यत्वेऽपि ब्रह्मज्ञानस्य तत्साध्यत्ववत्, पर्वतादिज्ञानस्य नयनोन्मीलने सति प्रयत्नान्तरनिरपेक्षत्वेऽपि ध्रुवारुन्धत्यादिज्ञानस्य तत्सापेक्षत्ववच्चातिसूक्ष्मब्रह्मज्ञानस्येच्छाप्रयत्नसाध्यत्वसम्भवात् । शास्त्रार्थज्ञानस्य च नियमेन पुंतन्त्रत्वदर्शनात् । ब्रह्मणश्च शास्त्रर्थत्वात् । प्रशस्ताप्रशस्तज्ञानयोश्च विधिनिषेधदर्शनात् । इच्छादिना चोत्पत्तिनिरोधयोरनुभवात् । तत्र च करणव्यापारस्येव पुंतन्त्रत्वाङ्गीकारे नामादिषु ब्रह्मोपासनायां त्वया विधेयत्वेनाङ्गीकृतायामपि मनोनिरोधादेरेव पुंतन्त्रत्वम्, न तूपासनाया इति प्रसङ्गात् । अनेकशारवाजन्यज्ञानरूपस्य च श्रवणस्य तदुपक्रमोपसम्हारैकरूप्याद्यनुसन्धानरूपस्य च मननस्य श्रुतमतानेकगुणविशिष्टतया निरन्तरानुस्मरणरूपस्य च निदिध्यासनस्यातिप्रयत्नसाध्यत्वानुभवात् । निदिध्यासनादेश्च ''खण्डा स्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते । अप्रयत्नात्समाधिश्च'' इत्यादि स्मृत्या प्रयत्नसाध्यत्वप्रतीतेः । त्वन्मतेऽपि परोक्षज्ञानसन्तानरूपस्य निदिध्यासनस्य विधेयत्वात् । सन्तानिनां च कृत्यसाध्यत्वे सन्तानस्य तदयोगात् । श्रवणादीनां ज्ञानातिरेकेण दुर्निरूपत्वस्योक्तत्वात् । तेषां च ज्ञानानात्मकत्वे ''श्रवणं यावदज्ञान''मित्याज्ञानविरोधित्वस्मृतेः श्रवणेनाज्ञानं निवृत्तमित्यनुभवस्य चानुपपत्तेः । ''विज्ञाय प्रज्ञां कुर्वीते''त्यादौ च विज्ञानानन्तरभाविनः प्रज्ञाशब्दार्थस्य विचारत्वानुपपत्तेः । ध्यानस्य च त्वयापि विधेयत्वेनाङ्गीतत्वात् । तस्य च ज्ञानानात्मकत्वे तेन स्वविषये व्यवहाराभावप्रसङ्गात् । ध्यानान्यज्ञानेन च ध्यानविषये व्यवहाराङ्गीकारे गौरवात् । ध्यानविषये च कदाचिन्न जानामीत्यनुभवप्रसङ्गात् । संस्कारस्य च ज्ञानजन्यत्वेन ध्याने स्मरणाभावप्रसङ्गात् । ''तस्याभिध्याना''दिति श्रुतौ च ध्यानस्य

मायाख्याविद्यानिवर्तकत्वोक्तेः । त्वयापि विधेयतयाङ्गीकृतोपासनायां च श्रुतौ ''मनो ब्रह्मेत्युपासीत य एवं वेदे''ति तथा ''आत्मेत्येवोपासीत यस्तद्वेदे''त्यादि बहुस्थलेषु ज्ञानार्थं विदधातु प्रयोगेणोपासनाया ज्ञानात्मकत्वात् । प्रमाणादि-परतन्त्रस्यापि ज्ञानस्य प्रतिग्रहीत्रादिपरतन्त्रस्यापि दानादेरिव पुंतन्त्रत्वोपपत्तेः । ब्रह्मपरवाक्यमध्येऽप्युपासनाविधिवत् ज्ञानविधेरपि सम्भवात् । वृथैव वैदिक-लिङादेरस्वारस्यायुक्तेः ।

न च ज्ञानस्याक्रियात्वेनाविधेयत्वम्, धात्वर्थस्य पूर्वापरीभूतस्य वा क्रियात्वा-सिद्धेः, शास्त्रार्थं जानामीत्यादौ पचतीत्यादाविव पूर्वापरीभावप्रतीतेः । स्पन्दस्या-क्रियात्वे तु यागादेरप्यक्रियात्वं स्यात् । तस्मात्–

पत्न्यवेक्षितमित्यादौ ज्ञानस्यैव विधानतः ।
सूक्ष्मशास्त्रार्थबुद्धेश्च कृतिसाध्यत्वदर्शनात् ॥
ध्यानस्यापि च विज्ञानव्यतिरेकानिरूपणात् ।
ज्ञानस्वरूपमपि च श्रवणादि विधीयते ॥

ननु तथापि ज्ञानस्यानवगमे तत्कर्तव्यताबोधनासम्भवात्तदवगमस्य च विषया-वगमं विनाऽयोगाद्विषयस्याप्यवगमे फलस्य जातत्वाद् व्यर्थो विधिरिति चेन्न, त्वयापि विचारविध्यङ्गीकाराद् विचारस्य च विषयनिरूप्यत्वेन साम्यात् । सामान्यतो ब्रह्मज्ञानमात्रेण च तद्विषयकश्रवणादेः कर्तव्यताबोधनसम्भवात् । वेदान्तवाक्यानुग्राहकन्यायानुसन्धानादिरूपतया च ब्रह्मज्ञानात्प्रागेव ज्ञातस्य मननादेः ब्रह्मज्ञानाय विधानसम्भवाच्चेति ॥

ननु तथापि ज्ञानं न विधेयं तथा हि विधीयमानं ज्ञानं किं शाब्दम्? किं वा तदभ्यासः ? यद्वा तत्त्वमनपेक्ष्यारोपितविषयतया मनसः सङ्कल्पप्रवाहरूपं ध्यानम्? किं वा परोक्षफलं ज्ञानान्तरम्? नाद्यः, कर्मकाण्ड इव गृहीतसङ्गतेः स्वतः सिद्ध-त्वेन कृत्यसाध्यत्वेन विध्यनपेक्षणात् । द्वितीये तद्विधिर्मोक्षाय चेत्, तस्य

**नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वं स्यात्, साक्षात्काराय चेत्स नादृष्टं फलम्, प्रमाणायत्तत्वात्तस्य । नापि फलं दृष्टम्, परोक्षज्ञानाभ्यासेन साक्षात्कारादर्शनात् । अत एव न तृतीयः, प्रोषितपुत्रादिध्यानेनारोपितरूपसाक्षात्कारदर्शनेऽपि तत्त्व-साक्षात्कारादर्शनात् । चतुर्थे शब्दस्य ब्रह्मणि प्रामाण्यं न स्यात् । ब्रह्मणि प्रमाणी-भूतज्ञानकर्तव्यतायामेव प्रमाणत्वादिति चेत् न तावदाद्ये दोषः, कर्मकाण्डेऽप्या-पातजन्यस्य स्वतः सिद्धत्वेऽपि विमर्शजन्यस्य कृतिसाध्यत्वात् । अन्यथाऽध्ययन-विधेरुत्तरक्रतुविधेर्वा तद्विचाराक्षेपकता न स्यात् । द्वितीयेऽपि न दोषः । दृष्टफलत्व इव नैयोगिकफलत्वेऽपि बन्धध्वंसस्य ध्वंसत्वात् श्रुत्यादिबलाच्च नित्यत्वोपपत्तेः । तृतीयेऽपि न दोषः । मोक्षस्य नैयोगिकफलत्वेऽपि नित्यताया उक्तत्वात् । ध्याना-दिना प्रसन्नदेवतासाक्षात्कारदर्शनेन ध्यानसंस्कृतमनसा ब्रह्मसाक्षात्कारोपपत्तेश्च । चतुर्थेऽपि न दोषः, ज्ञानविधिवाक्यस्य ज्ञानकर्तव्यतायां प्रमाणत्वेऽपि ब्रह्मण्यपि महातात्पर्यवत्त्वात्, सत्यज्ञानादिवाक्यस्याविधिपरत्वाच्चेति । ज्ञानविधिसमर्थनम् ॥**

## अद्वैतसिद्धिः

ननु अत्र श्रूयमाणलिङादेः का गतिरिति चेत्, शिलातलप्रयुक्तक्षुरतैक्ष्ण्यवत् कुण्ठीभावात् 'जर्तिलयवाग्वा वा जुहुया'दित्यादाविवार्थवादत्वमेव । न च 'पत्न्यवेक्षितमाज्यं भवति', 'विदुषा कर्म कर्तव्यं तस्मात् पश्येत नित्यशः ।' इत्यादिना ज्ञानस्यापि विधानं दृष्टमिति वाच्यम्, तत्र तद्धेत्विन्द्रियसंयोगादेर्विधेयत्वाद् अनन्यगत्या लक्षणाया इष्टत्वात् । न च 'न विधौ परः शब्दार्थ' इत्यनेन विरोधः, 'गोभिः श्रीणीत मत्सर'मित्यादौ विधिवाक्येऽपि लक्षणादर्शनेन तस्यौत्सर्गिकत्वाद्, अर्थवादानुरोधेनविधौ न परः शब्दार्थ इत्यर्थकत्वाच्च । न च साक्षात्कृतिसाध्यत्वस्य इन्द्रियसम्प्रयोगेऽप्यभावाद् इन्द्रियनिष्ठक्रियाद्वारा परम्परया कृति-साध्यत्वस्य ज्ञानेऽपि सम्भवाद्, अनिच्छतो दुर्गन्धादिज्ञानवद् अनिष्ठसम्प्रयोगस्यापि दर्शनाच्च ज्ञानसाम्यं संयोगस्येति वाच्यम्, स्वर्गादाविव स्वेच्छाधीनकृतिसाध्यत्वस्य विधेयताप्रयोजकस्य ज्ञाने अभावात्, सम्प्रयोगस्य तु तद्वैपरीत्येन विशेषात् । न च 'भक्षेही'ति भक्षमन्त्रेषु तृप्तेरनु-निष्पादिततयाऽननुष्ठेयत्वेन तृप्तिप्रकाशभागस्य तत्र विभज्य विनियोगाभावेऽपि अवेक्षण-

(अद्वैतसिद्धिः)

स्यानुष्ठेयत्वात् तत्प्रकाशकभागस्य अवेक्षणो विनियोग इति तृतीयाध्यायोक्तिविरोध इति वाच्यम्, इन्द्रियसम्प्रयोगरूपावेक्षणस्य तृप्त्यादिवदनुनिष्पादित्वाभावेनानुष्ठेयतया तत्प्रकाशकभागस्य तस्मिन्विभज्य विनियोग इत्येवम्परत्वात् । यच्च एकश्रोत्रगतानेकगकारेषु बुभुत्साप्रयत्नाभ्यामभीष्टगकारज्ञानदर्शनेन ज्ञानस्यापि विधेयत्वमिति, तन्न, अनभिमतविषयवैमुख्यस्यैव बुभुत्साप्रयत्नसाध्यतया ज्ञानं प्रति तयोरजनकत्वात् । न च– "यदेव विद्यया करोती"ति विद्याया अङ्गत्वश्रवणाद् अविहितस्य चाङ्गत्वानुपपत्त्या विद्याया विधेयत्वमिति वाच्यम्, तस्य वाक्यस्योद्गीथोपासनाप्रकरणस्थतया तत्रत्यविद्यापदस्य उपासनापरतया विहितत्वेनाङ्गत्वाविरोधात्, 'तन्निर्धारणानियमस्तद्दृष्टे'रित्यत्र विद्याया अङ्गावबद्धाया अङ्गत्वनिरासेऽपि न विधेयत्वहानिः ।

ननु यथा दुर्गन्धादिज्ञानस्येच्छाविषयत्वाभावेऽपि ब्रह्मज्ञानस्य तद्विषयत्वम्, यथा च ज्ञानान्तरस्य नियमादृष्टासाध्यत्वेऽपि ब्रह्मज्ञानस्य तत्साध्यत्वम्, यथा पर्वतादिज्ञानस्य नयनोन्मीलने सति प्रयत्नान्तरनिरपेक्षत्वेऽपि ध्रुवारुन्धत्यादिज्ञाने तत्सापेक्षत्वम्, तथाऽतिसूक्ष्मब्रह्मज्ञानस्य इच्छाप्रयत्नसाध्यत्वसम्भव इति चेन्न, प्रामाणिकदृष्टविजातीयकिञ्चिद्धर्मदर्शनेनाप्रामाणिकवैजात्यस्य कल्पयितुमशक्यत्वात्, प्रयत्नान्वयव्यतिरेकयोश्च ज्ञानसाधनजनने उपक्षीणतया ध्रुवारुन्धात्यादिनिदर्शनान्यथासिद्धतया तन्न्यायेन ब्रह्मज्ञाने कृतिसाध्यत्वस्य वक्तुमशक्यत्वाच्च । न च शास्त्रार्थज्ञानस्य नियमेन पुंतन्त्रत्वदर्शनाद् ब्रह्मणश्च शास्त्रार्थत्वात् तज्ज्ञानस्य पुंतन्त्रत्वमिति वाच्यम्, तत्रापि ज्ञानसाधनस्यैव पुंतन्त्रत्वात् । यच्च प्रशस्ताप्रशस्तज्ञानयोर्विधिनिषेधदर्शनम्, तदपि ज्ञानकारणविषयकमेव । यच्च इच्छादिना उत्पत्तिनिरोधयोरनुभवः, सोऽपि करणव्यापारविषयक एव । न च एवं नामादिषु ब्रह्मोपासनायां त्वया विधेयत्वेनाङ्गीकृतायां पुंतन्त्रत्वं न सिध्येत्, तत्रापि मनोधारणादेरेव पुंतन्त्रत्वस्य वक्तुं शक्यत्वादिति वाच्यम्, ज्ञानविध्युक्तानुपपत्तेस्तत्राभावेन निरोधादीनामन्यपरत्वस्य वक्तुमशक्यत्वात् । न च उक्तज्ञानरूपश्रवणादिष्वतिप्रयत्नसाध्यत्वस्यानुभवसिद्धत्वाद् विधेयत्वमिति वाच्यम्, अनुभवान्यथासिद्धेरुक्तत्वात् । न च त्वयापि निदिध्यासनस्य परोक्षज्ञानसन्तानरूपस्य विधेयत्वं वदता सन्तानिनां ज्ञानानामपि विधेयत्वमङ्गीकर्तव्यमेव तदविधाने सन्ततिविधानानुपपत्तेरिति वाच्यम्, आवृत्तिगुणयोगस्यैव विधेयत्वाद् उपनिषदमावर्तयेदित्यत्रेव । न च

(अद्वैतसिद्धिः)
श्रवणादेः ज्ञानानात्मकत्वे श्रवणं यावदज्ञानमित्यज्ञानविरोधित्वस्मृतेः श्रवणेनाज्ञानं निवृत्तमित्यनुभवस्य चानुपपत्तिरिति वाच्यम्, आवृत्तिगुणयोगवाक्यार्थप्रमित्युपयुक्ततात्पर्यनिर्णयद्वारा उपक्रमादिलिङ्गविचारात्मकश्रवणादेरज्ञानादिविरोधितया स्मृत्यनुभवयोरुपपत्तेः । 'विज्ञाय प्रज्ञां कुर्वीते'त्यादौ ज्ञानविधावुक्तानुपपत्त्या प्रज्ञाशब्दस्य विचारलाक्षणिकत्वोपपत्तेः । न च त्वया विधेयत्वेनाङ्गीकृतस्य ध्यानस्य ज्ञानभिन्नत्वे तस्य स्वविषये व्यवहारजनकत्वं न स्यादिति वाच्यम्, तदन्यज्ञानेनैव तत्कारणतयाऽऽवश्यकेन तद्विषये व्यवहारोपपत्तेः प्रमाणवतोऽस्य गौरवस्यादोषत्वात् । अत एव ध्यानविषये जानामीत्यनुभवस्मरणे तद्भिन्नज्ञानप्रयुक्ततया व्याख्याते । तस्याभिध्यानादिति श्रुतौ ध्यानस्य मायाख्याविद्यानिवर्तकत्वेऽपि तदुक्तिः ध्यानानन्तरभाविसाक्षात्कारद्वाराभिप्रायेति न तया विरोधः । यत्तूपासीतेत्युपक्रम्य 'य एवं वेदे'त्युपसम्हारेण त्वयापि विधेयत्वेनाङ्गीकृतायामुपासनायां विदिधातुप्रयोगेण उपासनायाः ज्ञानत्वावगमाद् अन्यत्रापि ज्ञानत्वं न विधेयत्वविरोधीति, तन्न, उक्तानुपपत्त्या विदेस्तत्रामुख्यत्वेनैव ज्ञानत्वागमकत्वाद् धात्वनेकार्थत्वेन वा । न च मानतन्त्रतामात्रेण कथमपुंतन्त्रता प्रतिग्रहीत्रादितन्त्रस्यापि दानादेस्तद्दर्शनादिति वाच्यम्; न ह्यन्यतन्त्रतामात्रेणाविधेयत्वं ब्रूमः किन्तु पुमिच्छाभिर्यत्कारणे सति अन्यथा कर्तुमशक्यत्वम् । ज्ञानस्य पुरुषतन्त्रताभङ्गः ।

किं च विधीयमानं ज्ञानं किं शाब्दम्? किं वा तदभ्यासः ? यद्वा तत्त्वमनपेक्ष्यारोपितविषयतया ध्यानम्? किं वापरोक्ष्यफलकं ज्ञानान्तरम्? नाद्यः, कर्मकाण्ड इव गृहीतसङ्गतेः स्वतःसिद्धत्वेन कृत्यसाध्यतया विध्यविषयत्वात् । न च कर्मकाण्डेऽप्यापातजन्यस्य स्वतःसिद्धत्वेऽपि विमर्शजन्यस्य कृतिसाध्यत्वम्, अन्यथा अध्ययनविधेरुत्तरक्रतुविधेर्वा तदाक्षेपकता न स्यादिति वाच्यम्, तज्जनकविचार एव विधेयताप्रयोजककृतिसाध्यत्वपर्यवसानेन तादृशज्ञानेऽप्यसम्भवात् । न द्वितीयः, स किं मोक्षाय विधीयते? साक्षात्काराय वा? नाद्यः, तस्य नैयोगिकत्वेन स्वर्गादिवदनित्यत्वापातात् । न च बन्धध्वंसस्य नैयोगिकत्वेऽपि ध्वंसत्वात् श्रुत्यादिबलाच्च नित्यत्वोपपत्तिरिति वाच्यम्, न हि मन्नय इव त्वन्नयेऽपि बन्धध्वंसमात्रं मुक्तिः किन्तु लोकान्तरप्राप्तिः, तस्यामुक्तदोषतादवस्थ्यापत्तिः । न चानावृत्तिश्रुत्या नित्यत्वम्, 'तद्यथेहकर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुत्या नैयोगिकस्यानित्यत्वावगमात् । न चैतच्छ्रुतिविरोधेन तस्यानित्यत्वाबोधकत्वम्, 'यत्कृतकं तदनित्यम्'

(अद्वैतसिद्धिः)

इति युक्त्युपोद्बलिततया प्राबल्यात् । न द्वितीयः, तत् किं दृष्टफलकम्? अदृष्टफलकं वा? नाद्यः, परोक्षज्ञानाभ्यासेन तत्त्वसाक्षात्कारादर्शनात् । न द्वितीयः, प्रमाणायत्तत्वात्तस्य । अत एव न तृतीयः, ध्यानस्य ज्ञानरूपत्वाभावाच्च । न चतुर्थः, शब्दस्यापि प्रामाण्याभावापाताद् ब्रह्मणि प्रमाणीभूतज्ञानकर्तव्यतायामेव प्रामाण्यात् । न च महातात्पर्यमादाय ब्रह्मण्यपि प्रामाण्यम्, तादृशज्ञानस्यापि प्रमाणायत्ततया विधिफलत्वाभावात् । तस्मात् पत्न्यवेक्षित-माज्यमित्यादावपि ज्ञानस्याविधानाद् ध्यानस्यापि विज्ञानव्यतिरेकसाधनात् सूक्ष्मशास्त्रार्थबुद्धौ कृत्यन्वयव्यतिरेकयोस्तत्साधनविषयतयान्यथासिद्धत्वाच्च नात्मज्ञानं विधातुं शक्यते । तदेवं श्रवणस्य ज्ञानरूपत्वे विधेयत्वानुपपत्तिः । तस्मात् ज्ञानविजातीयं श्रवणम् अपरोक्षज्ञान-जनकशब्देतिकर्तव्यतारूपविचारात्मकं मनननिदिध्यासनाङ्गकं प्रमेयावगमं प्रत्यङ्गतया प्रधान-भूतमपरोक्षज्ञानफलकतया विधीयत इति सिद्धम् ।। इत्यद्वैतसिद्धौ ज्ञानविधिभङ्गः ।

## न्यायामृततरङ्गिणी

कुण्ठीभवन्तीति ।। जर्तिलयवाग्वा जुहुयादित्यादिवदर्थवादा भवन्तीत्यर्थः । बाधकं विना वैदिकलिङादीनामर्थवादत्वोक्तिरयुक्तेत्याह ।। पत्न्यवेक्षितमिति ।। जर्तिलादिवाक्येषु बाधकं दश-माध्यायस्याष्टमपादेभिहितम् । तथा हि । अग्निहोत्रे जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वेत्युक्त्वाऽनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेति चोक्त्वा पयसाग्निहोत्रं जुहुयादिति श्रुतम् । तत्र जर्तिलादिवाक्यस्य विधित्वेऽनाहुतिवादोऽनर्थकः स्यात् । तस्य हि षोडशिग्रहणवाक्य-वद्विहितप्रतिषेधत्वाद्विकल्पः फलं । तच्चानाहुतिवादं विनापि पयोवाक्यसद्भावात्सिद्धं । तस्मा-दनाहुतिवादस्तावज्जर्तिलादिनिन्दाद्वारेण पयसः स्तुत्यर्थः । यदा चैवं तदा जर्तिलादिविधिरपि तन्निन्दाद्वारेण पयसः प्रशस्ततरत्वं ज्ञापयन्नर्थवाद इति । पत्न्यवेक्षितमित्यादौ तु न किञ्चि-द्बाधकमिति भावः । तदिदं वक्ष्यति वृथैव वैदिकलिङादेरस्वारस्यायुक्तेरिति ।। भक्षेहीति ।। तृतीयस्य द्वितीयेभिहितम् । लिङ्गसमाख्याभ्यां भक्षार्थतानुवाक्यस्यास्ति भक्षानुवाको भक्षे हि मा विश दीर्घायुत्वायेत्यादिः । तत्र कश्चिदंशो भक्षणप्रकाशक उपहूतस्योपहूतो भक्षयामीत्यादिः कश्चिद्ग्रहणस्य अश्विनोस्त्वा बाहुभ्यां सख्या समित्यादिः । सख्या सन्धारयामीत्यर्थः । कश्चिद-वेक्षणस्य । अवख्येषमित्यादिः । तत्र किं सर्वोप्ययं मन्त्रो भक्षणे विनियोक्तव्य उत ग्रहणादि-ष्वपि यथासामर्थ्यं विभज्य विनियोक्तव्य इति संशये भक्षानुवाकसमाख्यावशाद्विहितभक्षण-प्रकाशकांशैकवाक्यत्वाच्च सर्वोपि भक्षणे विनियोक्तव्यः । यद्यपि सख्या समित्यादेर्ग्रहणादि-

(तरङ्गिणी)

प्रकाशनसामर्थ्यरूपं लिङ्गमस्ति । तच्च वाक्यसमाख्याभ्यां बलवत् । तथापि मुख्यस्य ग्रहणादेरर्थप्राप्तस्यावेदितत्वेनाक्रत्वर्थत्वात्तादर्थ्येन मन्त्रस्य क्रत्वपूर्वानुपयोगितयानर्थक्यापत्तेरसंभवति लिङ्गविनियोगे सवित्रादिपदानामिव लक्षणया वाक्यशेषवशेन प्राक्कालवर्तिग्रहणादिविशिष्टचोदितभक्षार्थता युक्ता । तदुक्तम् । सर्वस्य भक्षणाङ्गत्वं ग्रहणादेरचोदनात् । अक्रत्वर्थो न मन्त्रस्य द्वारीभवितुमर्हति । भक्षानुवाकसंज्ञा च भक्षणाङ्गत्वबोधिनी । सामर्थ्यं चास्ति मन्त्रस्य भक्षणे तद्विशेषणादिति । तस्मात्सर्वानुवाको भक्षाङ्गमिति प्राप्ते असति ग्रहणादौ चोदितो भक्षो न शक्यते कर्तुमित्यर्थात्तदपि कर्तव्यं भक्षणाच्चोदनयैव न चोदितमित्यपि वक्तुं तच्चास्मृतमशक्यमनुष्ठातुमिति स्मारकापेक्षत्वाद्भक्षद्वारेण च क्रतूपयोगत्वाच्छक्नोति स्मारकं मन्त्रं ग्रहीतुम् । एवं सम्भवति लैङ्गिके विभज्यविनियोगे वाक्यसमाख्याभ्यामेकवाक्यत्वापादनेन भक्षार्थता सर्वस्य न युज्यते । समाख्या च भक्षसम्बन्धमात्रं प्रतिपादयन्ती सम्बन्धस्य साक्षाद्वा ग्रहणादिद्वारेण वोभयथाप्युपपत्तेर्नानुपपन्ना । सम्यग्जरणपर्यन्तं च भक्षणं स्वरसतो लोकसिद्धम् । तादृशमेव द्रवद्रव्यस्य भक्षणमिति जरणमपि विधेयम् । तच्चासनविशेषव्यापारादि- साध्यमिति युक्तस्तत्रापि मन्त्रविनियोगः । तस्माद्विभज्य विनियोगः । तदुक्तम् । ग्रहणादौ विभागेन विनियोगोऽस्य लिङ्गतः । वाक्यसंज्ञे हि नेशाते कर्तुं लिङ्गस्य बाधनम् । ग्रहणादिव शास्त्रेण भक्षाद्यर्थेप्यचोदितम् । तथापि चोदितार्थेन कर्तव्यत्वात्प्रकाश्यत इति । गुणाभिधानान्मन्द्रादिरेकमन्त्रःस्यात्तयोरेकार्थसंयोगादित्युत्तराधिकरणे मन्द्राभिभूतिरित्यादितृप्यत्वित्यन्तं तृप्तौविनियोक्तव्यमुत वसुमद्गणादेकवाक्यं सत्तृप्तिविशिष्टं भक्षणमेव प्रकाशयतीति । पूर्ववल्लिङ्गात्तृप्तिप्रकाशने प्राप्तेऽभिधीयते । तृप्तिर्भक्षा तु निष्पन्ना न व्यापारान्तरार्थिनी । तेन स्मृत्यनपेक्षत्वान्न मन्त्रोत्र प्रयुज्यते । तस्मात्तृप्तौ न विभज्य विनियोग इति ॥ अनुनिष्पादिततयेति ॥ भक्षणे दत्ते स्वयमेव तदनुसिद्धत्वात् ॥ अवेक्षणस्येति ॥ गृहीत्वावेक्षे सम्यग्जरणाय भक्षयामीत्येवं ग्रहणावेक्षणादीनामनुष्ठेयत्वादत्राप्यवेक्षणशब्देन प्रियसंयोग इति कस्यचित्प्रलपनं निर्मूलम् ॥ एकश्रोत्रगतेति ॥ न चानभिमतवैमुख्यस्यैव बुभुत्सा प्रयत्नसाध्यतया ज्ञानं प्रति तयोरजनकत्वमिति वाच्यम् । अनभिमतविषयवैमुख्ये सत्यप्यभिमतविषयसांमुख्यं विना तदग्रहणस्यानुभवसिद्धत्वात् ॥ अविहितस्य चेति ॥ तदुक्तं शाबरभाष्ये । नचाविहितमङ्गं भवतीति । न चात्र विद्याशब्देनोपासनेति वाच्यम् । विद्याशब्दस्य ज्ञाने मुख्यत्वात् ॥ अतिसूक्ष्मेति ॥ ब्रह्मज्ञानादाविच्छादिविषयत्वं प्रामाणिकमत्र तु न तदित्येवाप्रामाणिकम् ॥ शास्त्रार्थेति ॥ अत्र सर्वत्र साधनस्यैव पुन्तन्त्रत्वकल्पनं तु जल्पनमेव । अत एवाह ॥ नामादिष्विति ॥

(तरङ्गिणी)

विध्यनुपपत्तेरुभयत्राप्यभावात् ॥ प्रयत्नसाध्यत्वानुभवादिति ॥ अतदनुभवस्यानन्यथासिद्धत्वेन तदन्यथासिद्धिरसिद्धेत्यर्थः ॥ प्रयत्नेति ॥ समाधेरप्रयत्नसाध्यत्वोक्त्या ध्यानधारणयोः प्रयत्नसाध्यत्वमवगम्यते ॥ त्वन्मतेपीति ॥ न चात्र वृत्तिगुण एव विधेय इति युक्तम् । आवर्त्यमानानुष्ठेयत्वे तदावृत्तेर्विषयत्वात् । ग्रहाभ्यासवत् ॥ श्रवणमिति ॥ यत्तु वाक्यार्थप्रमित्युपयुक्ततात्पर्यनिर्णयद्वारोपक्रमादिलिङ्गविचाराद्यात्मकश्रवणादेरज्ञानादिविरोधितया स्मृत्यनुभवयोरुपपत्तिरिति । तन्न । लिङ्गविचारस्य ज्ञानानात्मकत्वे संशयाद्यनिवर्तकत्वात् । ज्ञानस्यैव तन्निवर्तकत्वात् ज्ञानात्मकत्वे त्विष्टापत्तेः । तदिदमुक्तं श्रवणादीनां ज्ञानातिरेकेण दुर्निरूपत्वस्योक्तत्वादिति ॥ विचारत्वेति ॥ ज्ञानानात्मकविचारत्वानुपपत्तेरित्यर्थः ॥ त्वयापीति ॥ श्रवणादौ विधिमनङ्गीकुर्वतापि ॥ तस्याभिध्यानादिति ॥ योजनरूपाच्छ्रवणात्तत्वभावरूपान्मननात्समुत्थं यद् ब्रह्मविषयं ध्यानं ततो मायाभूयोपि प्रारब्धतो भोगाय या स्थिता सापि निवर्तत इति परेषां श्रुत्यर्थः । न चात्र साक्षात्कार एव निवर्तकः तस्याश्रुतत्वात् । ध्यानात्पूर्वमपि सत्त्वाच्च ॥ विदिधात्विति ॥ विदेरमुख्यार्थत्वकल्पनं तु जल्पनमात्रम् ॥ पुन्तन्त्रत्वेति ॥ पुमिच्छानुविधायित्वम् ॥ वेदान्तवाक्येति ॥ अनेन रूपेण ज्ञाने च न मननविषयज्ञानमायातीत्यर्थः ॥ कर्मकाण्डेऽपीति ॥ न च ज्ञानजनकविचार एव कृतिसाध्यता । विचारस्यापि ज्ञानानतिरेकस्योक्तत्वात् ॥ दृष्टफलत्व इवेति ॥ पश्वादेर्दृष्टफलस्यानित्यत्वेपि तथाविधस्यापि बन्धध्वंसस्य नानित्यत्वं यथा तथा स्वर्गादेर्यौगिकफलस्यानित्यत्वेपि तथाविधस्यापि बन्धध्वंसस्य ध्वंसत्वात् श्रुत्यादिबलाच्च नित्यत्वं भवतु ॥ ध्वंसत्वादिति ॥ न च त्वन्मतेन ध्वंसमात्रं मुक्तिः । किन्तु लोकान्तरप्राप्तिरपि अतः तस्यानित्यत्वप्राप्तिरिति वाच्यम् । श्रुतिबलाल्लोकान्तरस्यापि नित्यत्वावगमात् । यत्र ज्योतिरजस्रमित्यत्रामृते लोके अक्षित इति । सुकिंशुकं शल्मलिमित्यादौ अमृतस्य लोकमित्युक्तेः । यथेह पुण्यजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयत इति श्रुतिस्तु केवलपुण्यार्जितलोकविषया ॥ ज्ञानविधीति ॥ त्वन्मते तत्त्वंपदार्थशोधकवाक्यस्य ब्रह्मणीयेत्यर्थः ॥ ज्ञानविधिसमर्थनम् ॥ ८ ॥

## न्यायामृतकण्टकोद्धारः

श्रोतव्य इत्यादेः शब्दज्ञानादिरूपश्रवणादिविधित्वमुक्तमाक्षिपति अत्र परैरिति । ज्ञानस्यापि विधेयत्वे अनिच्छतोऽपीत्ययं हेतुः । तर्हि तस्याकस्मिकताऽऽयातेत्यत उक्तं प्रमाणेति । तर्हि लिङादि प्रत्ययस्यानर्थक्यमित्यत आह लिङादय इति । ननु तत्रावेक्षणहेत्विन्द्रियसन्निकर्ष एव विधीयत इति न ज्ञानविधिरुपपद्यत इत्यत आह तत्र चेति । ज्ञानविधेरुपपादयिष्यमाणत्वेनानन्यगतेरभावात् । किञ्च सम्प्रयोगस्य

(कण्टकोद्धारः)

किं साक्षात्कृतिसाध्यत्वाद् विधेयत्वमुत परम्परया? नाद्य इत्याह संप्रयोगस्येति । द्वितीयं प्रत्याह परम्परयेति। ननु संप्रयोगो भवत्वितीच्छायां सत्यामेव तस्य भावाद् विधेयत्वमित्यत आह अनिच्छत इति । तथा च ज्ञानसाधनसंप्रयोगविधिर्युज्यत इति भावः । न च स्वर्गादिवत् फलेच्छाधीन कृतिसाध्यत्वस्य विधेयताप्रयोजकस्य ज्ञाने अभावात् संप्रयोगे च भावाद् विशेष इति वाच्यम् । श्रवणादिरूपज्ञानेऽपि मोक्षरूपफलेच्छाधीनकतिसाध्यत्वसत्वेन विशेषाभावात् । अवेक्षणविध्यनङ्गीकारे मीमांसाविरोधश्चेत्याह भक्षेहीति भक्षमन्त्र इति । न चेन्द्रियसंप्रयोगरूपावेक्षणस्य तृप्त्यादि वदनुनिष्पादित्वाभावादनुष्ठेयतया तत्प्रकाशकभागस्य तत्र विभज्य विनियोग इत्येवंपरत्वान्न विरोध इति वाच्यम् । ईक्षणस्येन्द्रियसंप्रयोगरूपत्वोक्तेः शब्दार्थाबोधनिबन्धनत्वात् । ईक्ष दर्शनाङ्कनयोरिति हि पठ्यते । तथाच न तदुक्तिरन्यथयितव्येति सुस्थस्तद्विरोध इति भावः । दूषणान्तरमाह एकश्रोत्रेति । अस्त्वङ्गत्वश्रवणम् । तथापि विधेयत्वं कुत इत्यत आह अविहितस्यचेति । न चास्य वाक्यस्योपासनाप्रकरणस्थतया विद्यापदस्योपासनापरतया तस्या एव विहितत्वेनाङ्गत्वाविरोध इति वाच्यम् । उपासनस्यापि ध्यानरूपतया तस्य ज्ञानरूपतायाः समर्थयिष्यमाणत्वेन दोषाभावात् । ननु दुर्गन्धादिज्ञानस्येच्छाप्रयत्नसाध्यत्वाभाववत् ज्ञानत्वाविशेषाद् ब्रह्मज्ञानस्यापि इच्छाप्रयत्नसाध्यत्वाभाव इत्यत आह दुर्गन्धादीति । न च प्रामाणिकदृष्टविजातीयकिञ्चिद्धर्मदर्शनेनाप्रामाणिक वैजात्यकल्पनमयुक्तमिति वाच्यम् । अनुभवादिप्रमाणैः ब्रह्मज्ञानस्येच्छाप्रयत्नसाध्यत्वस्य साधयिष्यमाणत्वेनाप्रामाणिकत्वाभावात् । ज्ञानस्य प्रयत्नसाध्यताया अन्वयव्यतिरेकसिद्धत्वाच्च । नचान्वयव्यतिरेकौ ज्ञानसाधन एवोपक्षीणाविति न ज्ञानस्य प्रयत्नसाध्यत्वे प्रमाणमिति वाच्यम् । अनुभवादिप्रमाणसिद्धसाधनत्वस्यान्यत्रोपक्षयकल्पने इन्द्रियान्वयव्यतिरेकयोरपि अर्थसन्निकर्ष एवोपक्षीणत्वसंभवेनान्यथासिद्धतया ज्ञानजनकत्वाभावप्रसङ्गात् । शास्त्रार्थेति । न चात्रापि ज्ञानसाधनस्यैव पुंतन्त्रत्वमिति वाच्यम् । उक्तोत्तरत्वात् । विधिनिषेधदर्शनानुराधेनापि ज्ञानविधिः स्वीकर्तव्य इत्याह प्रशस्तेति । ननु यत्र प्रशस्तज्ञानं विधीयते तत्र तज्ज्ञानकारणस्यैव पुंतन्त्रत्वमङ्गीक्रियत इति न ज्ञानविधिरित्यत आह तत्र चेति । सामान्यतो ज्ञानविधिं समर्थ्य विशेषतः श्रवणादित्रयस्य प्रयत्नसाध्यत्वमनुभवेनोपपादयति अनेकेति । स्मृत्याप्युपपादयति निदिध्यासनादेश्चेति । परमतेनाप्युपपादयति त्वन्मतेऽपीति । एवमपि सन्तानिभूतज्ञानानां कृत्यसाध्यत्वादविधेयत्वमेवेत्यत आह सन्तानिनां चेति । ननु श्रवणादिविधिसमर्थनेऽपि न ज्ञानस्य विधेयत्वम् । श्रवणादेर्ज्ञानरूपत्वाभावादित्यत आह श्रवणादीनांचेति । विपक्षे बाधकेनाप्युपपादयति तेषां चेति । किञ्च ध्यानस्य ज्ञानरूपत्वमवश्यमङ्गीकर्तव्यम् । अन्यथा हि ध्याते स्मरणं न स्यात् । स्मरणं संस्कारजन्यम् । संस्कारस्तु ज्ञानजन्यः । ध्यानस्य ज्ञानत्वानङ्गीकारे च ध्यानानन्तरभाविनः स्मरणप्राक्कालीनस्य तत्स्मरणजनकसंस्कारजनकस्य ज्ञानान्तरस्याभावात् तत्स्मरणं न स्यात् । न च मध्ये ज्ञानान्तरं कल्प्यत इति वाच्यम् । अप्रामाणिकतत्कल्पने गौरवापत्तेः । न चैवमपि संस्कारस्यानुभवजन्यत्वात् ध्यानस्य च स्मरणरूपत्वेन संस्काराजनकत्वात् ध्याते स्मरणाभावः स्यादेवेति वाच्यम् । अनुभवस्यैव संस्कारजनकत्वमित्यस्याप्रयोजकत्वात् । तथाहि न तावदनुभवत्वं संस्कारजनकतावच्छेदकम् । निर्विकल्पकानुभवस्य संस्कार-

(कण्टकोद्धारः)

जनकत्वापत्तेः । न च निर्विकल्पकभिन्नत्व विशेषितमवच्छेदकति वाच्यम् । तथासति अपेक्षाज्ञानस्यापि संस्कारजनकत्वापत्तेः । न च तद्भिन्नत्वेनापि विशेषणीयम् । एवमपि संशयस्यापि तज्जनकत्वापत्तेः । न च संशयभिन्नत्वेनापि विशेषणीयम् । एवं च संशयभिन्ननिर्विकल्पकभिन्नापेक्षाज्ञानभिन्नजन्यानुभवत्वेनैव संस्कारजनकत्वमिति न ध्यानस्य तज्जनकत्वमिति वाच्यम् । एतदपेक्षया उक्तविधजन्यज्ञानत्वस्यैव संस्कार-जनकतावच्छेदकत्व संभवात् । अनुभवशब्दार्थपर्यालोचनया तत्रापि गौरवात् । एकदा स्मरणानन्तरं संस्कारदार्ढ्यानुभवाच्च । तस्मात् ध्यानस्य स्मृतिरूपत्वेपि न संस्कारजनकत्वं संभवतीत्युक्तमयुक्तम् । ननु प्रमाणादिपरतन्त्रस्य ज्ञानस्य कथं पुंतन्त्रत्वमित्यत आह प्रमाणादीति । ननूपांशुयाजवाक्यमध्यस्थस्य विष्णवादिवाक्यस्य विधिपरत्वाभाववत् श्रोतव्य इत्यादेरपि ब्रह्मपरवाक्यमध्यस्थत्वान्न विधिपरत्वमित्यत आह ब्रह्मपरेति । कथमुभयविधक्रियात्वं मानस्येत्यत आह शास्त्रार्थमिति । उक्तमर्थं सङ्गृह्णाति तस्मादिति । बाधकान्तरमाशङ्कते ननु तथापीति । प्रतिबन्द्या परिहरति त्वयापीति । प्रतिबन्द्या अनुत्तरत्वादाह सामान्यत इति । नैयोगिकफलत्वेनेति । नियोगसाध्यं नैयोगिकम् । नियोगो ह्यपूर्वम् । परोक्षज्ञानेति । अन्यथा धर्मादिविषयपरोक्षज्ञानाभ्यासेन तत्साक्षात्कारः स्यादिति भावः । अत एवेत्यस्यार्थमाह प्रोषितेति । तर्हि किं सर्वथाऽप्रामाण्यमेव तस्येत्यत आह ब्रह्मणीति । ब्रह्मापरोक्ष्यफलत्वात् ज्ञानं ब्रह्मणि प्रमाणम् । विधि-रूपशब्दस्य तु ज्ञानकर्तव्यतायामेव प्रामाण्यं स्यादिति भावः । विमर्शजन्यस्येति । अन्यथेति । विमर्श-जन्यस्य कृत्यसाध्यत्व इत्यर्थः ॥ इति ज्ञानविधिसमर्थनम् ॥

## ९. शाब्दप्रत्यक्षभङ्गः

यच्चोक्तम्– ''तत्त्वमसी''त्यादिवाक्यादेवापरोक्षधीः । ''तद्धास्य विजज्ञौ तमसः पारं दर्शयती''त्यादावुपदेशादेवापरोक्षज्ञानोक्तेः । ''वेदान्तविज्ञान- सुनिश्चितार्था'' इत्यत्र शाब्दज्ञानस्य विशब्देन विशेषविषयत्वे सिद्धे सुशब्देनापरोक्षत्वोक्तेश्च । 'विमतं शाब्दज्ञानमपरोक्षम्, अपरोक्षमात्रविषयकत्वात्, सुखादिज्ञानवत् ।' 'अपरोक्षत्वम्, वेदान्तवाक्यजन्यज्ञानवृत्ति, अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगि-त्वात्, ज्ञानत्ववद्' इत्याद्यनुमानाच्च । न च 'विमतः शब्दो नापरोक्षधीहेतुः, शब्द-त्वाज्ज्योतिष्टोमादिशब्दवद्' इत्यादिना सत्प्रतिपक्षत्वम्, दशमस्त्वमसीत्यादौ शब्दा-देवापरोक्षधीदर्शनेन व्यभिचारात् । न च तत्रापीन्द्रियमेव करणं शब्दस्तु सहकारीति युक्तम्, क्वचिद्बहुलतमे तमसि क्वचिच्च लोचनहीनस्यापि वाक्याद्दशमोस्मीऽत्य-परोक्षधीदर्शनादिति ।

मैवम्, ''तद्धास्य विजज्ञा''वित्यादेः परोक्षज्ञानेनापि चरितार्थत्वात् । दर्शयतीत्यादेस्तु ग्राममार्गोपदेष्टरि ग्रामं दर्शयतीतिवत्परम्परया साक्षात्कारसाधनत्वेन कृतार्थत्वात् । अन्यथा ''मनसैवानुद्रष्टव्य''मित्यादि श्रुतिविरोधात् । वेदान्तविज्ञानेत्यत्र सुशब्देनाप्रामाण्यशङ्काभावादेरुक्तेः । अन्यथा वेदान्तबोध्यस्य च विचारकर्तव्यतादेरर्चिरादेश्चापरोक्ष्यापातात् । आद्यानुमानस्य अयं घटः त्वं सुखवानसीत्यादिवाक्यजन्यज्ञाने वक्ष्यमाणरीत्या व्यभिचारात् । अज्ञानावृते ऐक्ये आपरोक्ष्याभावेनासिद्धेश्च । आपरोक्ष्ययोग्यत्वविवक्षायां तु भित्त्यन्तरितघटविषयकशब्दज्ञाने व्यभिचारात् । द्वितीयानुमाने अपरोक्षत्वं ज्योतिष्टोमादिवाक्यजन्यज्ञानवृत्तीत्यपि सुसाधत्वेनाभाससाम्यात् ।

शब्दत्वहेतुना सत्प्रतिपक्षत्वाच्च । किं चास्य शब्दस्यापरोक्षधीहेतुत्वे प्रत्यक्षेऽन्तर्भावापत्तिः । न च यथा बाह्यप्रत्यक्षत्वे योगिमनोऽन्यत्वे सति बाह्यप्रत्यक्षप्रमितिकरणत्वं तन्त्रम्, तथा स्वतोऽपरोक्षविषयशब्दान्यत्वे सति प्रत्यक्षप्रमाकरणत्वं प्रत्यक्षत्वे तन्त्रमिति वाच्यम्, वक्ष्यमाणरीत्या क्वापि शब्दादपरोक्षज्ञानाभावेन विशेषणकल्पकाभावात् । यश्च शब्दत्वहेतोर्दशमस्त्वमसीत्यादौ व्यभिचार उक्तः, स किं स्वात्मनो दशमत्वं पश्यन्तं प्रति प्रयुक्ते दशमस्त्वमसीति वाक्ये ? अन्यं प्रति वा ? नाद्यः, तस्य दृष्टघटं प्रति प्रयुक्तादयं घट इति वाक्याज्जन्यज्ञानस्येव परोक्षत्वेऽपि प्रत्यक्षसिद्धार्थानुवादित्वमात्रेण प्रत्यक्षत्वाभिमानात् । द्वितीयेऽपि यदीन्द्रियव्यापारोऽस्ति तदा रत्नतत्त्व इवोपदेशसहकृतेन्द्रियेणैव दशमत्वेऽपरोक्षधीः । यदि स नास्ति तदा धर्मवांस्त्वमसि पर्वतोऽग्निमानित्यादाविव विशेष्यस्य प्रत्यक्षत्वेऽपि विशेषणे दशमत्वे परोक्षधीरेव ।

तत्राप्यपरोक्षेति मयोच्यमानत्वात्प्रतीतिकलहोऽयं निरवधिक इति चेत्, न तावच्छब्दस्यापरोक्षधीहेतुत्वं स्वाभाविकम्, अतिप्रसङ्गात् । नाप्यपरोक्षविषयकत्वनिमित्तकम्, 'जीवाः परमात्मनो न भिद्यन्ते, आत्मत्वाद्' इत्यादिलिङ्गजन्यायाः श्रवणात्प्रागापततो वेदान्तजन्याया भाषाप्रबन्धजन्याया अनधीतवेदान्तजन्याया-

श्चैक्यप्रतीतेरापरोक्ष्यापातेन श्रवणनियमादेरयोगात् । किं च अर्थस्यापरोक्षत्वं न तावदपरोक्षधीरूपत्वम्, तस्य ब्रह्मणि सत्त्वेऽपि दशमत्वादावसत्त्वात् । चैत्रस्यापरोक्षज्ञाने मैत्रस्य शब्दादिना साक्षात्कारादर्शनाच्च । नाप्यपरोक्षव्यवहारविषयत्वम्, व्यवहारापरोक्ष्यस्य परोक्षविषयत्वरूपत्वेऽन्योन्याश्रयात् । अपरोक्षोऽयमित्येवंरूपत्वे त्वज्ञानावृते ऐक्ये तदभावात् । त्वयापि न प्रकाशत इत्यादिव्यवहारार्थमेवावरणकल्पनात् । उक्तव्यवहारयोग्यत्वरूपत्वे भित्तिव्यवहिते घटे शब्दादपरोक्षधीप्रसङ्गात् । अपरोक्षज्ञानजन्यत्वरूपत्वे च वक्ष्यमाणपक्षान्तर्भावात् । तस्मादर्थस्यापरोक्षधीविषयत्वमेवापरोक्षत्वं वाच्यम् । तत्र चैतज्ज्ञानविषयत्वेन तदुक्तावन्योन्याश्रयात् । ज्ञानान्तराभिप्राये तु केषाञ्चिदपरोक्षे स्वर्गादावस्माकं शब्दादपरोक्षधीः स्यात् । एकपुरुषाभिप्राये च पूर्वेद्युश्चैत्रस्यापरोक्षे इदानीं शब्दादपरोक्षधीः स्यात् । एककालाभिप्राये च प्रत्यक्षेऽग्नौ लिङ्गाच्छब्दाच्चापरोक्षधीः स्यात् । न चेष्टापत्तिः, करणशक्तिमतिलङ्घ्य ज्ञानस्य विषयानुसारित्वे चाक्षुषादिविषयकस्मृत्यनुमितिस्पार्शनज्ञानादेश्चाक्षुषत्वाद्यापातात् । लिङ्गशब्दादिसिद्धे चेन्द्रियात्परोक्षधीप्रसङ्गात् । अनुमिते च शब्दादनुमितिप्रसङ्गात् । एवं च—

परोक्षे चापरोक्षेव चाक्षुषे स्पार्शिनीव च ।
अपरोक्षे परोक्षा धीर्युक्ता करणशक्तितः ॥

तस्माद् ये विरुद्धे न त्वावान्तरजाती परोक्षत्वापरोक्षत्वे तदाश्रययोर्ज्ञानयोर्भिन्नत्वात् । यश्चैको विषयस्तत्र विरुद्धजात्यभावाद्विरुद्धजात्याधारज्ञानविषयत्वस्य च चाक्षुषस्पार्शनज्ञानविषयत्वस्येवैकस्मिन् सम्भवात्प्रत्यक्षविषयमपि शाब्दज्ञानं परोक्षमेव ।

किं च धर्मिमात्रस्य प्रत्यक्षत्वाभिप्राये प्रत्यक्षे घटादौ अयं गुरुः पर्वतोऽग्निमानित्यादिशब्दादपरोक्षधीः स्यात् । नापि सप्रकाराभिप्रायं, प्रकृते तदभावात् । न हि दशमस्त्वमसि तत्त्वमसीत्यादिबोधकबोध्यं दशमत्वैक्यादिप्रागपरोक्षम्, वाक्यवैयर्थ्यात् । न च स्वरूपाभिन्ने ऐक्ये स्वरूपज्ञानेनापरोक्षतो भात्यपि वृत्त्यर्थं शब्दः ।

त्वया स्वरूपज्ञानप्रयुक्तभानप्रतिबन्धार्थमेवावरणकल्पनात् । एतेनापरोक्षे ब्रह्मणि परोक्षधीः परोक्षे कामिन्यादावपरोक्षधीरिवाप्रमाणं स्यादिति निरस्तम् । स्मृतेऽनुभववद् अनुमितेऽग्नाविन्द्रियेणापरोक्षधीवत् पूर्वं परोक्षे पश्चाद्योगजसाक्षात्कारवत् परोक्षतत्तायामपरोक्षप्रत्यभिज्ञानवच्चापरोक्षज्ञानविषयेऽर्थे परोक्षत्वजात्याधारज्ञानोदयेऽप्यपरोक्षस्य परोक्षत्वेनानुल्लेखेनाप्रामाण्यानापत्तेः । कामिनीसाक्षात्कारस्तु बाधादप्रमाणम्, न तु परोक्षार्थविषयकापरोक्षत्वजात्याधारत्वात् । तथात्वे योगजसाक्षात्कारादेरप्यप्रामाण्यप्रसङ्गात् ।

किं चैवं शब्दादेवापरोक्षधीरिति त्वदेकदेशिमते दोषाभावेऽपि इन्द्रियमादावभिज्ञानमुत्पाद्य संस्कारसचिवं प्रत्यभिज्ञानमिव शब्द आदौ परोक्षज्ञानमुत्पाद्य मननादिसाध्यप्रतिबन्धनिवृत्तिसचिवोऽपरोक्षज्ञानं जनयतीति त्वदेकदेशिमते प्रथमोत्पन्नपरोक्षज्ञानस्याप्यप्रामाण्यं स्यात् । एतेन प्रमातारमपेक्ष्य देशतः कालतः स्वभावतो वा विप्रकृष्ट एव परोक्षज्ञाननियमात्स्वप्रकाशप्रमातृचैतन्याभिन्नत्वेनाविप्रकृष्टे ब्रह्मणि परोक्षधीरेव न युक्तेति निरस्तम्, प्रत्यक्षे वह्नौ लिङ्गादप्यपरोक्षधीप्रसङ्गात् । अविप्रकृष्ट एवापरोक्षज्ञाननियमेन विप्रकृष्टतत्ताव्यास्यादाविन्द्रियजन्यप्रत्यभिज्ञाव्यास्यादिज्ञानस्यापि परोक्षत्वापाताच्च । तत्र संस्कारादेरेव सन्निकर्षत्वेऽत्राप्यावरणकृतविप्रकर्षस्य सत्त्वाद् वृत्तेरावरणनिवर्तकत्वेऽपि वृत्त्युदयात्प्राग्विप्रकर्षात् पराचीनस्य चाविप्रकर्षस्य प्राचीनवृत्त्या आपरोक्ष्येऽतन्त्रत्वात् । ननु कर्तृत्वादिरूपापरोक्षाध्यासस्य परोक्षप्रमयाऽनिवृत्तेरौपनिषदे ब्रह्मणि मानान्तराप्रवृत्तेः शब्दादपरोक्षज्ञानानुत्पत्तावनिर्मोक्षः स्यादिति चेन्न, तस्य ज्ञाननिवर्त्यताया निरस्तत्वात् । निदिध्यासनसंस्कृतमनसाऽपरोक्षधीसम्भवाच्च । ''यन्मनसा न मनुत'' इत्यादि श्रुतिस्तु ''मनसैवानुद्रष्टव्य''मित्यादिश्रुति- विरोधेनापक्वमनोविषया । ''मनसा तु विरुद्धेने'' त्यादिश्रुतेः । अन्यथा शब्दस्य करणत्वेऽपि ''यतो वाचो निवतन्त'' इत्यादिश्रुतिबाधः स्यात् । मनसा न क्वाप्यपरोक्षधीर्दृष्टेति चेन्न, योगजसाक्षात्कारदर्शनात् । शब्देनापि तददर्शनाच्च । मनसस्तत्करणत्वे उक्तश्रुतेरिव शब्दस्य तत्करणत्वे

**श्रुत्यादेरदर्शनाच्च । ''औपनिषदः पुरुष'' इत्यादि तु मनसः करणत्वेऽप्यौपनिषदनिदिध्यासनापेक्षत्वात् । तदुक्तम्–**

**शब्देन दृश्यते ब्रह्मेत्यत्र मानं न दृश्यते ।**
**मनसा दृश्यते ब्रह्मेत्यत्र मानं तु दृश्यते ॥**

**इति शाब्दप्रत्यक्षभङ्गः ॥ ९ ॥**

**तस्मात्साधनाध्यायोक्तन्यायैर्मोक्षाय श्रवणादिसाध्यनिदिध्यासनजन्यसाक्षात्कारेणेश्वरः प्रसन्नीकरणीय इति सिद्धम् ।**

**इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना सङ्गृहीते न्यायामृते तृतीयः परिच्छेदः ॥ ३ ॥**

अद्वैतसिद्धिः

ननु कथमपरोक्षज्ञानजनकत्वं शब्दस्य ? मानाभावादिति चेन्न, ''तद्धास्य विजज्ञौ तमसः पारं दर्शयती''त्यादेः ''वेदान्तविज्ञानसुनिश्चितार्था'' इत्यादेश्च मानत्वात् । पूर्ववाक्ये तज्जनकापरोक्षज्ञानस्योपदेशमात्रसाध्यत्वोक्तेः, द्वितीयश्रुतौ शाब्दज्ञानस्य विपदेन विशेषविषयत्वस्य लाभात् सुपदेनापरोक्षत्वोक्तेः । न च विजज्ञावितीत्यादेः परोक्षज्ञानेनापि चरितार्थता, ''तमसः पारं दर्शयती''त्युत्तरवाक्यस्वरसेन अपरोक्षज्ञानपरत्वसिद्धेः । न च ग्राममार्गोपदेष्टरि ग्रामं दर्शयतीतिवत् परम्परया प्रयोजकतयोपचारः साक्षात्साधनत्वे बाधकाभावेन तस्यात्रान्याय्यत्वाद्, उपदेशातिरिक्तकारणस्य नारदसनत्कुमाराख्यायिकायामप्रतीतेश्च । न च मनसैवानुद्रष्टव्यमित्यादिश्रुतिविरोधः, तस्याश्चित्तैकाग्र्यपरत्वात् । न च सुपदस्याप्रामाण्यशङ्काविरहपरत्वेन द्वितीयवाक्येन तेनापरोक्षरूपताप्राप्तिः, अन्यथा वेदान्तबोध्यस्य विचारकर्तव्यतादेश्चापरोक्षत्वापातादिति वाच्यम्, निश्चितपदेनैवाप्रामाण्यशङ्काविरहादेर्लब्धतया सुपदस्यातत्परत्वात् । नापि वेदान्तबोध्यस्य ब्रह्मातिरिक्तस्याप्येवमापरोक्ष्यापत्तिः, अर्थपदस्य मुख्यतस्तात्पर्यविषयपरत्वाद्, वेदान्तबोध्यताया ब्रह्ममात्रपर्यवसन्नत्वाच्च ।

(अद्वैतसिद्धिः)

एवमनुमानमप्यत्र मानम्– 'अपरोक्षत्वम्, तत्त्वमस्यादिवाक्यजन्यज्ञानवृत्ति, अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात्, ज्ञानत्ववत्' । न च कर्मकाण्डजन्यज्ञानवृत्तीत्येवमपि साध्येतेति वाच्यम्, विपक्षबाधकसत्त्वासत्त्वाभ्यां विशेषात् । तथा हि तत्त्वमस्यादिवाक्यस्यापरोक्षज्ञानाजनकत्वे अपरोक्षभ्रमनिवृत्तिर्न स्यात् । न च मनसैवापरोक्षज्ञानम्, मनसः कुत्राप्यसाधारण्येन प्रमाकरणत्वाभावाद्, आत्मनः स्वप्रकाशत्वात् सुखादीनां साक्षिवेद्यत्वात् । न च शब्दे अपरोक्षज्ञानजनकत्ववद् अन्यत्राक्लृप्तमेव मनसि तत्कल्पनीयम् । एवं हि सर्वांशस्यैव मनसि कल्प्यत्वेन विशेषात् । न चैवं ज्योतिष्टोमादिविषयककर्मकाण्डजन्यज्ञाने कल्पकमस्ति । तत्र हि कल्पनीयमनुष्ठानाय वा? फलाय वा ? नाद्यः, परोक्षज्ञानादेव तत्सम्भवात् । तत एवानुष्ठानात् फलसिद्धेर्न द्वितीयोऽपि ।

न च विमतः शब्दो नापरोक्षधीहेतुः शब्दत्वादिति प्रतिसाधनम्, 'दशमस्त्वमसी'त्यादावेव व्यभिचारात् । न च तत्रापीन्द्रियमेव करणं शब्दस्तत्सहकारीति वाच्यम्, क्वचित् बहुलतमे तमसि लोचनहीनस्यापि तद्वाक्यादपरोक्षभ्रमनिवर्तकस्य दशमोऽस्मीत्यपरोक्षज्ञानस्य दर्शनात् । यत्रापीन्द्रियसद्भावः, तत्रापि तदप्रयोजकमेव । न च धर्मवांस्त्वमसि पर्वतोऽग्निमानित्यादौ विशेष्यापरोक्षत्वेऽपि विशेषणपारोक्ष्यवद् अत्रापि दशमत्वे पारोक्ष्यमस्त्विति वाच्यम्, अत्र परोक्षत्वे अपरोक्षभ्रमानिवृत्तिप्रसङ्गात् ।

ननु एवमपि शब्दस्यापरोक्षज्ञानजनकत्वं किं स्वाभाविकम् ? उतापरोक्षविषयनिमित्तकम् ? नाद्यः, अतिप्रसङ्गात् । न द्वितीयः, जीवाः परमात्मनो न भिद्यन्ते आत्मत्वादित्यादिना जायमानानुमितेः श्रवणात् प्रागापततो वेदान्तजन्याया भाषाप्रबन्धजन्याया अनधीतवेदान्तजन्याया ऐक्यप्रतीतेश्चापरोक्ष्यापातात् श्रवणनियमादेरनियमात् । किञ्चार्थस्यापरोक्ष्यं न तावदपरोक्षबुद्धिरूपत्वम्, ब्रह्मण्यस्य सत्त्वेऽपि दशमत्वादावभावात्, चैत्रापरोक्षज्ञाने मैत्रस्य शब्दादिना आपरोक्ष्यादर्शनाच्च । नाप्यपरोक्षव्यवहारविषयत्वम्, व्यवहारापरोक्ष्यस्य तादृगर्थभेदविषयकत्वरूपत्वे अन्योन्याश्रयात्, अपरोक्षोऽयमित्येवंरूपत्वे अज्ञानावृतेऽपि तदभावात्, त्वयापि न प्रकाशत इत्यादिव्यवहारार्थमेवावरणकल्पनाद्, उक्तव्यवहारयोग्यत्वरूपत्वे व्यवहितघटे शब्दादपरोक्षज्ञानप्रसङ्गाद्, अपरोक्षज्ञानजन्यत्वरूपत्वे च वक्ष्यमाणपक्षान्तर्भावात् । तस्मादर्थस्यापरोक्षधीविषयत्वमेवापरोक्षत्वं वाच्यम् । तत्र चैतज्ज्ञानविषयत्वेन तदुक्तावन्यो-

(अद्वैतसिद्धिः)

न्याश्रयः, ज्ञानान्तराभिप्राये तु केषाञ्चिदपरोक्षे स्वर्गादावस्माकं शब्दादपरोक्षधीप्रसङ्गात् । एकपुमभिप्राये तु पूर्वापरोक्षे शब्दादिना इदानीमपरोक्षधीप्रसङ्गात् । एककालाभिप्राये प्रत्यक्षाग्नौ लिङ्गाच्छब्दाद्वा आपरोक्ष्यं स्यादिति चेन्न, यं शाब्दबोधमादाय यस्य बोध्यत्वम्, तत्साक्षात्कारार्थं तदभिन्नार्थावगाहित्वनिमित्तकमित्युक्तदोषानवकाशात् ।

न च एवं प्रत्यक्षान्तर्भावः शब्दस्य स्यादिति वाच्यम्, बोध्यभिन्नार्थकशब्दातिरिक्तत्वे सति प्रत्यक्षप्रमाकरणत्वस्य प्रत्यक्षस्यान्तर्भावे तन्त्रत्वात् । ननु– ''मनसैवानुद्रष्टव्य''मित्यादेरिव मनःकरणताप्रतिपादकस्य प्रकृते अभावात् अनौपदेशिकं शब्दस्य साक्षात्कारकरणत्वमिति चेन्न, ''तं त्वौपनिषदं पुरुषं पृच्छामी''त्यादौ तत्र साधुरिति तदन्यासाधुत्वे सति तत्साधुत्वरूपसाध्वर्थविहिततद्धितश्रुत्या एव मानत्वात् । ननु मनसः करणत्वेऽपि औपनिषदत्वस्य निदिध्यासनापेक्षिततया अन्यथासिद्धिः, न, ''यन्मनसा न मनुत'' इति मनसः करणत्वनिषेधात् । न च ''यतो वाचो निवर्तन्त'' इति शब्दस्यापि करणत्वानुपपत्तिः, औपनिषदत्वश्रुत्यनुसारेण तस्याः शक्त्या अबोधकत्वपरत्वात् । तदुक्तं– 'चकितमभिधत्ते श्रुतिरपी'ति । न च मनसैवानुद्रष्टव्यमिति तृतीयाश्रुत्यनुसारेण न मनुत इत्यस्यैवापक्वमनोविषयतयाऽन्यथानयनसाम्यमिति वाच्यम्, एवं साम्येऽपि मनसः करणत्वे ह्यधिककल्पना । शब्दस्य करणत्वे त्वल्पकल्पनेति विशेषात् । तस्मात्तत्वमस्यादिवाक्यस्यापरोक्षज्ञानजनकत्वादविद्यानिवृत्त्यात्मकमोक्षसाधनब्रह्मसाक्षात्काराय मननाद्यङ्गकं श्रवणमङ्गि नियमविधिविषय इति सिद्धम् ॥ इत्यद्वैतसिद्धौ शब्दादपरोक्षोपपत्तिः ॥

विश्वेश्वराख्यस्य गुरोः प्रसादादद्वैतसिद्धिर्मधुसूदनस्य ।
अभूदभूमिः खलु दूषणानां गुणैरमेयैरवगुम्फितश्रीः ॥

ससम्भ्रममपेक्षया परगुणोन्नतिर्दुःसहा
नितान्तमनपेक्षया निजपुमर्थहानिः परा ।
अतः सुमतयो यथानयमुपेक्ष्य दुर्मत्सरं
प्रयोजनवशानुगाः कुरुत मत्कृतौ सत्कृतिम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसस्वतीश्रीचरणशिष्य श्रीमधुसूदनसरस्वतीविरचितायामद्वैतसिद्धौ श्रवणादिनिरूपणं नाम तृतीयः परिच्छेदः ॥

## न्यायामृततरङ्गिणी

तद्धास्येति वाक्ये ज्ञानस्य विशब्देन विशेषणेपि निर्दुष्टत्वमेव लभ्यते न त्वापरोक्ष्यमिति श्रुत्यन्तरमाह ॥ तमस इति ॥ दृशेः साक्षात्कारार्थकत्वादित्यर्थः ॥ उपदेशादिति ॥ तथा च लिङ्गाच्छब्दस्य साक्षात्कारहेतुत्वमवगम्यते ॥ वेदान्तेति ॥ विचारितवेदान्तजन्यापरोक्षज्ञान-विषयीकृतवेदान्तार्थकत्वं सुनिश्चितार्थत्वमित्यर्थः ॥ अपरोक्षज्ञानेति ॥ चाक्षुषत्वादौ व्यभिचार-वारणाय निषेधद्वयान्तर्भावः ॥ तत्रापीति ॥ दशमादिपदैः सङ्ख्यादिषूपस्थितेषु चक्षुषा संसर्ग-बोधः ॥ अन्यथेति ॥ विचारितवेदान्तजन्यापरोक्षज्ञानविषयीकृतवेदान्तार्थकत्वस्य सुनिश्चितार्थ-शब्दार्थत्वे विचारकर्तव्यतादेरर्चिरादिमार्गस्यातीतपुरीततनाडीवंशादीनां च वेदान्तप्रतिपाद्यत्वेना-परोक्ष्यं स्यात् ॥ वक्ष्यमाणेति ॥ इन्द्रियव्यापारविरहदशायां संस्कारवांस्त्वमसीत्यादौ विशेष्यस्य प्रत्यक्षत्वेपि विशेषणविशिष्टे परोक्षत्वमेव यथा तथा विशेषणविशेष्ययोः प्रत्यक्षत्वेपीन्द्रिय-व्यापाराभावेनायं घट इति शब्दजज्ञाने परोक्षत्वसम्भवात् ॥ अज्ञानेति ॥ शब्दजन्यापरोक्ष-ज्ञानानन्तरमैक्यावरणानिवृत्तौ तस्यापरोक्षत्वं तदापरोक्ष्ये च शब्दस्य तद्विषयकापरोक्ष्यहेतुत्व-मित्यन्योन्याश्रयप्राप्तेरित्यर्थः ॥ स्वतोऽपरोक्षेति ॥ तत्वमस्यादिवाक्ये सत्यन्ताभावात् ज्योतिष्टोमादिवाक्ये विशेष्याभावात् प्रत्यक्षत्वप्रयोजकाभावः ॥ वक्ष्यमाणेति ॥ तथा च तत्त्वमादिवाक्यसङ्ग्रहाय विशेषणोपादानमसङ्गतमित्यर्थः ॥ विशेषणेति ॥ दशमत्वरूप-विशेषणविशिष्टे ॥ वक्ष्यमाणपक्षेति ॥ तत्र चान्योन्याश्रयादि वक्ष्यते ॥ तत्र चैतदिति ॥ धर्मवांस्त्वमसीत्यादिवाक्यजन्यमपरोक्षज्ञानं तद्विषयत्वेन तत्र धर्मत्त्वादावपरोक्षत्वं धर्मवत्त्वा-देरर्थस्यापरोक्षत्वे तद्विषयकस्योक्तवाक्यजज्ञानस्यापरोक्षत्वमित्यन्योन्याश्रयः ॥ ज्ञानान्तरेति ॥ अपरोक्षरूपज्ञानान्तरविषयत्वेन स्वर्गादेरपरोक्षत्वात्तत्रास्माकं स्वर्गादिवाक्यादपरोक्षधीप्रसङ्गः । एवमेकपुरुषैककालयोर्योज्यम् ॥ चाक्षुषादित्वेति ॥ चाक्षुषविषयकाणां स्मृत्यादीनां चाक्षुषत्वं स्पार्शनविषयकाणां स्पार्शनत्वमित्यादि । यत्तु यं शब्दमादाय यस्य बोद्धृत्वं तदभिन्नार्था-वगाहित्वनिमित्तं तदर्थस्य साक्षात्त्वमिति । तन्न । एवं हि बोद्धृभिन्नार्थविषयकज्ञानविषयत्व-मित्युक्तं स्यात् । तस्य च धर्माभेदपरे परमधर्मा त्वमित्यादिवाक्यजज्ञानविषये धर्मवदादौ सत्त्वात् । अपरोक्षार्थविषयकत्वं शब्दस्यापरोक्षज्ञानहेतुत्वे तन्त्रमित्यत्र दोषान्तरमाह ॥ किञ्चेति ॥ वाक्यवैयर्थ्यादिति ॥ उपलक्षणमिदम् । वाक्यजज्ञानात्प्रागवृत्तत्वाच्चेत्यपि ज्ञेयम् ॥ तत्र संस्कारादेरिति ॥ तत्तादेर्विप्रकृष्टस्यापि संस्कारादिना विप्रकृष्टत्वसम्पादने ॥ अत्रापीति । सन्निकृष्टस्याप्यावरणेन विप्रकर्षोस्ति । आवरणनिवृत्त्या सन्निकृष्टमिति शङ्कां वारयति ॥

(तरङ्गिणी)

वृत्तेरिति ॥ तस्येति ॥ बिम्बप्रतिबिम्बादेस्त्वन्मते ऐक्यसाक्षात्कारे सत्यपि भेदभ्रमानुवृत्तेरित्यर्थः ॥ मनसैवेति ॥ एतस्यास्तृतीयायुक्तत्वेन बलवत्त्वात् ॥ मनसेति ॥ मनसः करणान्तरसहकारितया न पृथक्करणत्वमित्यर्थः ॥ औपनिषद इत्यादीति ॥ तत्र साधुरिति साध्वर्थतद्धितस्य यथाकथञ्चित्तदुपयोगेन साधुत्वात् । परिच्छेदार्थमुपसंहरति ॥ तस्मादिति ॥ शाब्दप्रत्यक्षत्वभङ्गः ॥ ९ ॥

सद्योजातजटाजपावनसरिद्गोदावरीतीरतो-
गव्यूतिर्वसतिस्सतां कुलवतामम्बापुरी तत्र ये ।
व्यासाख्या उपमन्युगोत्रजबुधास्तेष्वास्त यो मुद्गलः
तत्राजज्ञत ये मुरारिचरणा व्यासाभिधाना बुधाः ॥ १ ॥

तेभ्यो जायत विश्वनाथ इति यस्सज्ज्ञानरत्नाकरः
तस्मादाविरभूत्सुरद्रुमयशा आचार्य नारायणः ।
रामाचार्य इतीरितस्तदनुजो यस्तत्ववादाम्बुधेः
आतानीत्सतरङ्गिणीमिह परिच्छेद-स्तृतीयोऽपि यः ॥ २ ॥

॥ इति श्रीमन्न्यायामृततरङ्गिण्यां तृतीयः परिच्छेदः ॥

## न्यायामृतकण्टकोद्धारः

शब्दस्यापरोक्षज्ञानजनकत्वमुक्तं खण्डयितुं तन्मतमनुवदति यच्चोक्तमिति । ननु शब्दस्यापरोक्षज्ञान जनकत्वमयुक्तम् । प्रमाणाभावादित्यत आह तद्वास्येति । नन्वेतत् परोक्षज्ञानेनापि चरितार्थमित्यत आह तमस इति । अत्र च साक्षात्कारार्थे दृशेः प्रयोगान्न परोक्षज्ञानेनोपपत्तिः कर्तुं शक्येति भावः । वेदान्तेति । अन्यथा सुशब्दानर्थक्यं स्यादिति भावः । अनुमानमपि शब्दस्यापरोक्षज्ञानजनकत्वे प्रमाणयति विमतमिति । हेतौ मात्रपदोपादानं वह्निविषयकानुमितौ व्यभिचारवारणाय । तमसः पारमित्यस्य तु न परोक्षज्ञानेन चरितार्थत्वमित्यत आह दर्शयतीत्यादेस्त्विति । अन्यथेति । शब्दस्यैवापरोक्षसाधनत्व इत्यर्थः । वेदान्तेति । एवं च न सुशब्दानर्थक्यमिति भावः । अन्यथेति । वेदान्तानां ब्रह्मविषयकापरोक्षज्ञानजनकत्व इत्यर्थः । आद्यानुमानस्येति । नन्वेतच्छब्दजज्ञानेप्यपरोक्षत्वमस्त्येवेति न व्यभिचार इत्यत उक्तं वक्ष्यमाणरीत्येति । किञ्चास्येत्यादिवक्ष्यमाणरीत्येर्थः । ननु शब्दत्वहेतुना सत्प्रतिपक्षो न युक्तः । व्यभिचारस्योक्तत्वादित्यत्राह यच्चेति । अतिप्रसङ्गादिति । स्वर्गापूर्वादिविषयशब्दात् स्वर्गादेरप्यापरोक्ष्यं स्यादित्यर्थः । जीवा इति । तथा चानुमानादेरप्यपरोक्षधीहेतुता स्यादित्यर्थः । किञ्चार्थस्यापरोक्षत्वसंभवे तद्विषयत्वेन शब्दस्यापरोक्षहेतुत्वं

(कण्टकोद्धारः)

वक्तव्यम् । न च तत् संभवति । विकल्पानुपपत्तेरित्याह किञ्चेति । व्यवहारस्यापरोक्षत्वं किमपरोक्षार्थ-विषयत्वं, किं वा परोक्षोऽयमित्येवंरूपत्वम्? नाद्य इत्याह व्यवहारेति । अन्योन्याश्रयादिति । अर्थापरोक्ष्येण व्यवहारापरोक्ष्यं, तेन चार्थापरोक्ष्यमित्यन्योन्याश्रय इत्यर्थः । द्वितीयं निरस्यति अपरोक्षोऽयमित्येवमिति । नन्वैक्यस्याज्ञानवृतत्वेऽपि कुत एतादृशव्यवहाराभाव इत्यत आह त्वयापीति । अर्थस्यापरोक्षत्वं हि अपरोक्षधीविषयत्वम् । तच्च एतदपरोक्षज्ञानविषयत्वेन वा, ज्ञानान्तरविषयत्वेन वा, एकपुरुषीय-ज्ञानान्तरविषयत्वेन वा, एककालीनतद्विषयत्वेन वा? नाद्य इत्याह तत्रेति । तदुक्तौ अर्थापरोक्ष्योक्तौ । एतज्ज्ञानविषयत्वेनार्थापरोक्ष्यम्, अपरोक्षार्थविषयत्वेन चैतज्ज्ञानस्यापरोक्ष्यमित्यन्योन्याश्रय इत्यर्थः । द्वितीयं दूषयति ज्ञानान्तरेति । तृतीयं निरस्यति एकपुरुषेति । चतुर्थं प्रत्याह एककालीनेति । नन्वथापि ब्रह्मणोऽपरोक्षत्वात् तद्विषयकं शाब्दज्ञानं कथं परोक्षमिति चेदत्राह एकज्ञानस्य विरुद्धजात्याश्रयत्वापत्तिः स्यादिति ।

..... (ग्रन्थपातः)

आवरणस्य निवृत्तत्वात् नावरणकृतो विप्रकर्ष इत्यत आह वृत्तेरिति । तथापि वृत्त्युदयोत्तरं विप्रकर्षासत्वादापरोक्ष्यं स्यादित्यत आह पराचीनस्येति । शब्दस्यापरोक्षज्ञानाजनकत्वे बाधकं शङ्कते ननु कर्तृत्वादीति । निरस्तत्वात् । ज्ञाननिवर्त्यत्वान्यथानुपपत्तिभङ्गे इति शेषः । ननु न मनसाऽपरोक्षधीसंभवः, निषेधादित्यत आह यन्मनसेति । अन्यथेति । एवमपि अपरोक्षधीजनकत्वाभावे इत्यर्थः । उक्तेर्थे संमतिमाह तदुक्तमिति । परिच्छदार्थमुपसंहरति तस्मादिति ॥ इति शाब्दप्रत्यक्षभङ्गः ॥

यत्पादकञ्जमाश्रित्य नन्दन्ति सततं बुधाः ।
मुक्ताः सन्तो यथायोगं तमुपासे रमापतिम् ॥

इति न्यायामृतकण्टकोद्धारे तृतीयः परिच्छेदः

## चतुर्थः परिच्छेदः

### १. अविद्यानिवृत्तिभङ्गः

नन्वेतदयुक्तम् अविद्यानिवृत्तिर्हि मोक्षः । ज्ञानं चाविद्यां दीप इवान्धकारं प्रसादनिरपेक्षमेव निवर्तयति । स्यादेतत्–अविद्यानिवृत्तेरात्ममात्रत्वे न साध्यत्वम् । अनात्मत्वे तु सत्त्वेऽद्वैतहानिः । अनिर्वाच्यत्वेऽविद्यातत्कार्ययोरन्यतरत्वं स्यात् । न च वृत्तिविशिष्ट आत्माऽज्ञानहानिः । वृत्तिनिवृत्तौ मोक्षनिवृत्त्यापतादितिचेद्, वृत्त्युपलक्षितस्यात्मनोऽज्ञानहानित्वात् । उपलक्षणे निवृत्तेऽपि मुक्तेरनिवृत्तिः पाके निवृत्तेऽपि पाचकस्येव युक्ता, उक्तं हि–

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।
उपलक्षणहानेऽपि स्यान्मुक्तिः पाचकादिवत् ॥" इति ।

यद्वा आत्मान्यैव निवृत्तिः । तत्र चानिर्वाच्यत्वं सदसद्विलक्षणत्वं चेन्निवृत्तिरनिर्वाच्यैव, अविद्याद्यन्यतरत्वे तु निवृत्तिमत्त्वं तन्त्रम्, न च निवृत्तेर्निवृत्तिर्युक्ता । अनिर्वाच्यत्वं ज्ञाननिवर्त्यत्वरूपं बाध्यत्वं चेत्, पञ्चमप्रकारः । उक्तं हि–

न सन्नासन्न सदसन्नानिर्वाच्यश्च तत्क्षयः ।
यक्षानुरूपो बलिरित्याचार्याः प्रत्यपीपदन् ॥ इति ।

एवं च नाद्वैतहानिः, सतो द्वितीयस्याभावात् । नाप्यविद्याद्यन्यतरत्वापत्तिः, अनिर्वाच्यत्वाभावात् । अथवा भावाद्वैतमते आत्मान्या सत्यैव निवृत्तिरिति ।

उच्यतेन तावदात्मान्यत्वपक्षो युक्तः, आत्मा वृत्तिव्याप्योऽपि नेति मतेऽपसिद्धान्तात् । वृत्त्युपलक्षितस्य वृत्तेः पश्चादिव पूर्वमपि सत्त्वाच्च । पाकोपलक्षितोऽपि पाकात्पूर्वमस्त्येव । किं तु तदज्ञानात्पाचक इत्यव्यवहारः । न चात्र मुक्त इति व्यवहारः साध्यः, किं तु मुक्तिः । एवं च–

वृत्त्योपलक्षितचितः पश्चादिव पुरापि च ।
सद्भावान्मोहकालेऽपि मोहहानिः प्रसज्यते ॥

किं च पाकर्तृत्वं पाचकत्वमिति मते पश्चान्न पाचकः, तद्व्यवहारस्तु भ्रष्टाधिकारे दण्डनायक इतिवद् भूतपूर्वगत्यैव । कर्तृत्वावच्छेदकावच्छिन्नत्वरूपं कर्तृत्वात्यन्ताभावानधिकरणत्वरूपं वा तद्योग्यत्वं पाकानवच्छिन्नाधिकरणताकपाकबोधितव्यावृत्त्यधिकरणत्वरूपं पाकोपलक्षितत्वं वा पाचकत्वमिति मतेऽपि तदुभयं पश्चादप्यस्ति । न चेह मुक्तावात्मातिरिक्तं योग्यत्वाद्यस्ति, चिन्मात्रं तु प्रागपि । एवं च–

वृत्त्योपलक्षितस्यापि चिन्मात्रत्वे न साध्यता ।
पाकोपलक्षितस्येव त्वाधिक्ये सविशेषता ॥

किं च वृत्त्युपलक्षितात्मरूपस्याज्ञानध्वंसस्य प्रागेव सिद्धत्वेन श्रवणादिवैयर्थ्यम् । असिद्धत्वे नात्ममात्रत्वम्, आत्मनो नित्यसिद्धत्वात् । अभावापलापपक्षेऽपि कैवल्यादिविशिष्टस्यैवाधिकरणस्याभावत्वात् । अन्यथा तत्राप्युक्तदोषात् । आत्मान्यत्वे तु मुक्तावप्यविद्याभेदयोरनिवृत्तिः । एवं च–

प्रागेव सिद्धो मोक्षश्चेच्छ्रवणादिश्रमो वृथा ।
असिद्धौ नात्ममात्रत्वमन्यत्वे सद्वितीयता ॥

किं चेयं प्रक्रिया किमन्यत्रापि ? इहैव वा ? नाद्यः, बिम्बप्रतिबिम्बैक्याज्ञाननिवृत्तावपि ज्ञातं तदैक्यमित्यापत्त्या तदैक्यधीकाले सोपाधिकतद्भेदभ्रमोपादानाज्ञानानुवृत्त्ययोगात् । नान्त्यः, नियामकाभावात् । विश्वमिथ्यात्वश्रुतेर्ज्ञानाद्विश्वनिवृत्तिपरत्वेन स्वतात्पर्यविषयनिवृत्तीतरमिथ्यात्वपरत्वोपपत्तेः । अपि च वृत्त्युपलक्षित आत्मा जीवन्मुक्तावप्यस्तीति तदापि मोक्षः स्यात् । न च सर्वकर्मनाशोपलक्षितत्वे सति वृत्त्युपलक्षित आत्मा मोक्षः, तदा चारब्धकर्मास्तीति वाच्यम्, विशेष्यवैयर्थ्यात् । कर्मनाशोपलक्षितस्य कर्मकालेऽपि सत्त्वाच्च । अविद्यानाश इव कर्मनाशेऽप्यात्ममात्रत्वे तदन्यत्वे चोक्तदोषाच्च । एतेन वृत्ति-

निवृत्त्युपलक्षित आत्मा मुक्तिः, स च वृत्तेः प्राङ्नास्तीति निरस्तम्, वृत्तिनिवृत्तेरात्मत्वादावुक्तदोषात् । जीवन्मुक्तस्य सुषुप्त्यादौ वृत्तिनिवृत्त्युपलक्षितस्य सत्त्वाच्च । एतेनैव चरमसाक्षात्कारेण निवृत्तेन तेन वोपलक्षित आत्मा मोक्षः । जीवन्मुक्तौ च न चरमः साक्षात्कारोऽस्तीति निरस्तम्, चरमसाक्षात्कारात्पश्चादिव पूर्वमपि तदुपलक्षितस्य सत्त्वात् । तन्निवृत्तेरात्मत्वादौ दोषोक्तेश्च । पूर्वस्माच्चरमज्ञाने आनन्दाभिव्यक्तिरूपविशेषाभावे चरमक्षणेन वा चरमश्वासेन वोपलक्षित आत्मा मुक्तिरित्यापाताच्च । एवं च–

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।
इत्येतन्नैव घटते जीवन्मुक्तौ प्रसक्तितः ॥

किं च वेदान्तश्रवणादिसाध्येन पुरुषार्थेन भाव्यम्, न च त्वन्मते तद्युक्तम् । मुक्त्यनुस्यूतस्य सुखज्ञप्तिरूपस्यात्मनः पुरुषार्थत्वेऽप्यसाध्यत्वात् । चरमवृत्त्युपलक्षितस्याप्यद्वैतभङ्गापत्त्या सिद्धात्ममात्रत्वात् । वृत्तेस्तु साध्यत्वेऽपि स्वतोऽपुरुषार्थत्वात् । तथा चात्मान्यो वृत्तिसाध्य आवरणनिवृत्तिरूप आनन्दप्रकाशः पुरुषार्थो वक्तव्य इति कथमात्मैव निवृत्तिः । एवं च–

यः पुमर्थः स साध्यो न आत्मानन्दचिदात्मकः ।
या च साध्या वृत्तिरिष्टा न तत्र पुरुषार्थता ॥

तस्मान्नाज्ञानहानिरात्मस्वरूपम् ।

अनिर्वाच्यत्वपक्षोऽप्ययुक्तः । अनिर्वाच्यस्याध्यस्तत्वेन मोक्षे तदध्यासोपादानाज्ञानानुवृत्त्यापत्तेः । अध्यस्तस्याप्यभावत्वेन निरुपादानत्वे सघटे घटाभावाध्यासस्य प्रपञ्चान्तर्गतस्य घटध्वंसस्य घटान्योन्याभावस्य च ज्ञानान्निवृत्तिर्न स्यात् । किं च निवृत्तेरबाध्यत्वे कथमबाध्यरूपसद्वैलक्षण्यम् ? बाध्यत्वे तु तन्निवृत्तिः स्यात् । ज्ञानान्निवृत्तेरेव बाध्यत्वात् । प्रतिपन्नोपाधौ त्रैकालिकसत्त्वनिषेधस्यापि तद्व्याप्तत्वात् । निवृत्तेर्निवृत्तिरयुक्तेति चेन्न, अत एवानिष्टत्वेन तव तदापादनात् । न च

निवृत्तेर्निवृत्तिरस्तु अज्ञानानुन्मज्जनं तु प्रागभावनिवृत्तिरूपघटनाशेऽपि प्रागभावस्येव युक्तमिति वाच्यम्, अप्रामाणिकानन्तनिवृत्त्यापाताद्, आत्मान्यस्याभावात् । तन्मात्रस्य चाहेतुत्वेन निवृत्तेर्निवत्तिहेत्वभावाच्च ।

पञ्चमप्रकारत्वपक्षोऽप्ययुक्तः, चतुर्थप्रकारत्वस्येव निरस्तत्वेन तस्याष्टमरसतुल्यत्वात् । बौद्धैरपि–

न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥ (मा. का. १।९)

इत्युक्तत्वेन तत्वस्थितौ बौद्धमतानुसरणापाताच्च । बाध्यत्वाबाध्यत्वयोर्दोषोक्तेश्च । मिथ्यात्वमनिर्वाच्यत्वादिकमिति मते दृश्यत्वादेर्निवृत्तौ व्यभिचाराच्च । प्रातिभासिकव्यावहारिकान्यस्यास्य पारमार्थिकत्वेनाद्वैतहानेश्च । प्रतियोगिवैलक्षण्येऽपि सदसदात्मकत्वापत्त्या पञ्चमप्रकारत्वासिद्धेश्च । एवं च–

यक्षानुरूपवलिवत्प्रतियोगिविलक्षणः ।
मोहध्वंसो यदि तदा भवेत्सदसदात्मकः ॥

सत्त्वपक्षोऽप्ययुक्तः, अभावद्वैतस्य निरासात् । ध्वंसस्य प्रतियोगिसमसत्ताकत्वेनाविद्याया अपि सत्त्वापत्तेश्च । एवं च–

प्रागेव सिद्धो मोक्षश्चेच्छ्रवणादिश्रमो वृथा ।
असिद्धौ नात्ममात्रत्वमन्यत्वे सद्वितीयता ॥

अविद्यानिवृत्तिभङ्गः ॥ १ ॥

## अद्वैतसिद्धिः

ननु मुक्तिस्तावदविद्यानिवृत्तिर्न सम्भवति । तथा हि– सा किमात्मरूपा ? तद्भिन्ना वा ? नाद्यः, असाध्यत्वापत्तेः द्वितीयेऽपि किं सती ? मिथ्या वा ? आद्ये अद्वैतहानिः, द्वितीये

(अद्वैतसिद्धिः)

अविद्यातत्कार्यान्यतरत्वापत्तिरिवि चेन्न, चरमवृत्त्युपलक्षितस्यात्मनोऽज्ञानहानिरूपत्वात् । तथा चोपलक्षणसाध्यतयैव मुक्तेरपि साध्यता । न चोपलक्षणनिवृत्त्या मुक्तेरपि निवृत्तिः, पाके निवृत्तेऽपि पाचकानिवृत्तिदर्शनात् । तदुक्तम्–

''निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।
उपलक्षणनाशेऽपि स्यान्मुक्तिः पाचकादिवत् ॥'' इति ।

न च वृत्त्युपलक्षितस्य पश्चादिव पूर्वमपि सत्त्वेन मोहकालेऽपि तद्धान्यापत्तिः, पूर्वमसिद्धस्योपलक्षणत्वायोगात्, नहि पाकसंबन्धात् पूर्वं पाचको भवति तथा व्यवह्रियते वा । यत्तु पाककर्तृत्वमेव पाचकत्वम्, तदा अपचति तत्प्रयोगो भूतपूर्वन्यायेनौपचारिकः । यदि तु पाककर्तृतावच्छेदकावच्छिन्नत्वं तत्कर्तृत्वात्यन्ताभावानधिकरणत्वं वा, तद्द्वयमपि पश्चादस्ति । न चैवं मुक्तावात्मातिरिक्तं योग्यत्वादिकमस्ति, चिन्मात्रं तु प्रागप्यस्ति इत्यसाध्यतापत्तिः, पाकोपलक्षितत्ववद् वृत्त्युपलक्षितत्वस्याधिकत्वे सविशेषतापत्तिः इति, तन्न, उपलक्ष्यस्वरूपस्यासाध्यत्वेऽपि उपलक्षणगतसाध्यत्वोपपत्तेः, घटाकाशे उत्पत्तिवत् । यद्वा अविद्यानिवृत्तिस्तद्विरोधिवृत्तिरेव यावत्कार्योत्पत्तिविरोधिकार्यमेव ध्वंस इत्यङ्गीकारात् । न च वृत्तौ नष्टायां विरोधिनः कार्यान्तरस्यानुदयात् तदापि ध्वंससत्त्वेन स न ध्वंस इति वाच्यम्, यावद्विरोधिकार्योदयमेव तथात्वाद्, यावद्विभागं तस्य ध्वंसरूपत्वेऽपि विभागध्वंसस्याधिकरणरूपतावच्चरमवृत्तिपर्यन्तं विरोधिकार्यरूपत्वेऽपि ध्वंसस्य चरमवृत्तिध्वंसस्याधिकरणरूपतैव ।

ननु इयं प्रक्रिया किमन्यत्र ? इहैव वा ? नाद्यः बिम्बप्रतिबिम्बैक्याज्ञाननिवृत्तिरपि ज्ञाततदैक्यरूपेति तदैक्यधीकाले सोपाधिकतद्भेदभ्रमोपादानाज्ञानानुवृत्त्ययोगात् । नान्त्यः, नियामकाभावात् । न चेह निवृत्तेर्ज्ञाताधिष्ठानातिरेके विश्वमिथ्यात्वश्रुतिपर्यालोचनया निवृत्तेरपि निवृत्त्यापत्तिर्नियामिका, तस्या ज्ञानाद्विश्वनिवृत्तिपरत्वेन स्वतात्पर्यविषयनिवृत्तीतरमिथ्यात्वपरत्वादिति चेन्न, न तावदाद्ये दोषः, सोपाधिकभ्रमे उपाधिविरहकालीनस्यैव तस्य तथात्वात् । नापि द्वितीयः, नेति नेतीतिश्रुतेः स्वारस्येनात्मातिरिक्तसर्वनिवृत्तावेव तात्पर्यात् । न च वृत्त्युपलक्षित आत्मा जीवन्मुक्तावप्यस्तीति तदापि मोक्षापत्तिः, मुक्तिमात्रापादनस्येष्टत्वात्, परममुक्तेश्चरमसाक्षात्कारोपलक्षितात्मस्वरूपत्वेन तदापादकाभावात् । न च चरम-

(अद्वैतसिद्धिः)
साक्षात्कारनिवृत्तेरात्मत्वेऽसाध्यत्वापत्तिः, अविद्यानिवृत्तेरसाध्यत्वेऽप्रवृत्त्यापत्तिवद् अत्र तदभावात् । न च जीवन्मुक्तिप्रयोजकवृत्त्यपेक्षया परममुक्तिप्रयोजकवृत्तौ आनन्दाभिव्यक्तिगतविशेषाभावे चरमक्षणेन चरमश्वासेन वा उपलक्षित आत्मा मुक्तिरिति किं न स्यादिति वाच्यम्, प्रारब्धकर्मप्रयुक्तविक्षेपाविक्षेपाभ्यामभिव्यक्तिविशेषस्याङ्गीकारात् ।

एतेन वेदान्तश्रवणादिसाध्यः पुमर्थो वाच्यः, न च स त्वन्मते वक्तुं शक्यः, मुक्त्यनुस्यूतसुखज्ञप्तिरूपस्यात्मनः पुरुषार्थत्वेऽप्यसाध्यत्वात्, वृत्तेः साध्यत्वेऽपि स्वतोऽपुमर्थत्वात् । तस्मादात्मव्यतिरिक्त एव वृत्तिसाध्य आवरणनिवृत्तिरूपः आनन्दप्रकाशः पुमर्थो वाच्यः । तथा च कथमात्मैव निवृत्तिरिति अपास्तम्, प्राप्तप्राप्तिरूपतया फलस्यानन्दप्रकाशस्य स्वरूपतोऽसाध्यत्वेऽपि तत्तिरोधायकाज्ञाननिवर्तकवृत्तेः साध्यत्वमात्रेण साध्यत्वोपपत्तेः, कण्ठगतचामीकरादौ तथा दर्शनात् । तस्मादज्ञानहानिरात्मस्वरूपं तदाकारा वृत्तिर्वेति सिद्धम् । ये तु पञ्चमप्रकारादिपक्षाः, ते तु मन्दबुद्धिव्युत्पादनार्था इति न तत्समर्थनमर्थयामः ॥
इत्यद्वैतसिद्धौ अविद्यानिवृत्तिनिरूपणम् ॥

## न्यायामृततरङ्गिणी

श्रीयुतारण्यके दृष्टं पुष्टमाभीरगोकुले ।
शुकादिजुष्टं विधिनादिष्टं नौम्यक्षयं फलम् ॥ १ ॥

**श्रवणादिजनितसाक्षात्काराविष्कृतः ईश्वरप्रसादो मोक्षहेतुरित्येतदाक्षिपति ॥ नन्वेतदिति ॥ वृत्तिनिवृत्ताविति ॥ एतच्चोपलक्षणम् । वृत्तेरज्ञानोपादानकत्वेन वृत्तिकालेऽज्ञानावश्यकतया प्रतियोगितध्वंसयोरेककालत्वापात इत्यपि बोध्यम् ॥ निवृत्तिरिति ॥ ज्ञातत्वं वृत्तिः तयोपलक्षितआत्मा मोहनिवृत्तिः । वृत्तिनिवृत्तौ मोक्षनिवृत्तिं परिहरति ॥ उपलक्षणेति ॥ नन्वविद्यानिवृत्तेरात्मान्यत्वेऽनिर्वाच्यत्वं स्यादित्याशङ्क्य सदसद्विलक्षणत्वमनिर्वाच्यत्वमिति मते इष्टापत्तिरित्याह ॥ तत्र चेति ॥ नन्वविद्यानिवृत्तेरनिर्वाच्यत्वेऽविद्यातत्कार्यान्यतरत्वापत्त्या तस्याः ज्ञाननिवर्त्यत्वं स्यादित्यत आह ॥ अविद्यादीति ॥ अविद्यानिवृत्तौ निवृत्तिसामान्यस्यैवाभावात्तद्विशेषापादनमयुक्तमित्याह ॥ न च निवृत्तेरिति ॥ प्रत्यपीपदन् प्रतिपादयामासुः । तस्मादात्मस्वरूपाऽविद्यानिवृत्तिस्तदतिरिक्ता वेति पक्षद्वयम् । द्वितीयेप्यनिर्वाच्या वा पञ्चमप्रकारा सत्या वेति पक्षत्रयमित्युपसंहरति ॥ इतीति ॥ यत्किञ्चिद्विषयकवृत्त्युपलक्षितात्मनः**

(तरङ्गिणी)

संसारकालेपि सत्त्वेनातिप्रसङ्गाच्छ्रवणादिजन्यात्मविषयकवृत्त्युपलक्षितआत्माऽज्ञाननिवृत्तिरिति वाच्यम् । तत्र चापसिद्धान्त इत्याह ॥ आत्मेति ॥ न चात्रेति ॥ वृत्तेः पूर्वं मुक्त इति व्यवहाराभावेपि पूर्णानन्दप्रकाशरूपमुक्तिः स्यादेव पाके निवृत्तेऽपि पाचकस्यानिवृत्तिरिति पराभिमते पाचकत्वं किं पाककृत्याश्रयत्वं पाककर्तृत्वयोग्यत्वं वा आद्य आह ॥ पाककर्तृत्वमिति ॥ तथा च स न दृष्टान्त इत्यर्थः । द्वितीये यद्यपि दृष्टान्ते तत्सम्भवति तथापि दार्ष्टान्तिके तन्नास्तीत्याह ॥ कर्तृत्वेत्यादि ॥ चिन्मात्रमिति ॥ तथा च प्रागपि मुक्तिः स्यात् ॥ न साध्यतेति ॥ न चोपलक्षणसाध्यत्वेनैव तदुपलक्षितस्य साध्यत्वमिति वाच्यम् । परमपुरुषार्थे मोक्षे औपचारिकपुरुषार्थत्वापातात् ॥ इयं प्रक्रियेति ॥ अज्ञाननिवृत्तिर्ज्ञानाधिष्ठानमात्ररूपेत्येवं रूपा प्रक्रिया ॥ बिम्बेति ॥ न च सोपाधिकभ्रमे उपाधिनिवृत्तिसहितं ज्ञातमधिष्ठानमज्ञाननिवृत्तिरिति वाच्यम् । नियामकाभावात् ॥ नियामकेति ॥ एतत्प्रक्रियां विनाऽनुपपत्त्यभावादित्यर्थः । नन्वज्ञाननिवृत्तेरधिष्ठानातिरेके विश्वमिथ्यात्वश्रुतिपर्यालोचनया निवृत्तेरपि निवृत्त्यापत्तिरतस्तदेव नियामकमित्यत आह ॥ विश्वमिथ्यात्वेति ॥ विश्वमिथ्यात्वश्रुतिर्ह्यज्ञाननिवृत्तेरधिष्ठानरूपत्वं न साक्षाद्वक्ति । ज्ञानाद्विश्वनिवृत्तेरेव तदर्थत्वात् । किन्तूक्तविधयानुपपत्त्या । सा चान्यथाप्युपपन्ना । निषेधस्य विहितेतरनिषेधपरत्वादिति भावः ॥ कर्मनाशोपलक्षितस्येति ॥ उपलक्षणप्रागभावकालेपि तदुपलक्षितस्वरूपमात्रस्य सत्त्वात् ॥ पूर्वस्मादिति ॥ ज्ञानात् ॥ आनन्दाभिव्यक्तीति ॥ वृत्तावानन्दाभिव्यक्तिरूपविशेषसत्त्वे तस्या असाध्यत्वापातः ॥ या च साध्येति ॥ न चानन्दप्रकाशतिरोधायकाज्ञाननिवर्तकत्वेन वृत्तिः पुरुषार्थ इति वाच्यम् । अज्ञाननिवृत्तेरात्ममात्रत्वादौ दोषस्योक्तत्वात् ॥ अनिर्वाच्यस्याध्यस्तत्वेनेति ॥ अध्यासस्याज्ञानोपादकत्वेनाज्ञाननिवृत्तिकालेप्यज्ञानसत्त्वापत्तिः ॥ अभावत्वेनेति ॥ भावरूपस्याध्यस्तस्याज्ञानोपादानत्वमित्यङ्गीकारे ॥ निवृत्तिः स्यादिति ॥ निवृत्तेरित्यनुषङ्गः । ननु ज्ञाननिवर्त्यत्वाभावेपि प्रतिपन्नोपाधावित्यादिरूपं बाध्यत्वं निवृत्तौ भविष्यतीत्यत आह ॥ प्रतिपन्नेति ॥ तद्व्याप्यत्वात् । ज्ञाननिवर्त्यत्वव्याप्यत्वात् ॥ अभावद्वैतस्येति ॥ भावापेक्षयाऽभावस्यात्यन्तगुरुत्वात् ॥ प्रागेव सिद्ध इति ॥ क्वचित्त्वयं श्लोकः किं चेयं प्रक्रियेत्यादिग्रन्थात्पूर्वमेव पठ्यते । अत्रैव तु युक्तः पाठः ॥ अविद्यानिवृत्तिभङ्गः ॥ १ ॥

## न्यायामृतकण्टकोद्धारः

श्रीवेदव्यासाय नमः ॥ वैराग्यादीनि मोक्षसाधनानि निरूप्येदानीं फलभूतमोक्षस्वरूपं स्वमते निरूपयितुं परोक्तमोक्षस्वरूपं तावत् खण्डयितुमनुवदति ॥ नन्वेतदिति ॥ यद्वा परिच्छेदान्ते साक्षात्कारेण परमात्मा

(कण्टकोद्धारः)
प्रसन्नीकरणीयः इत्युक्तम् । तदसहमानः परः प्रत्यवतिष्ठते ॥ नन्वेतदिति ॥ प्रसन्नीकरणीय इत्येतदित्यर्थः । कुतोऽयुक्तमित्यत आह ॥ अविद्येति ॥ हिशब्द उक्तमोक्षस्य प्रसिद्धत्वं द्योतयति । अस्तूक्तो मोक्षः । तथाऽप्यस्य प्रसादव्यतिरेकेणासम्भवात् कथं प्रसन्नीकरणीय इत्येतदयुक्तमित्यत्राह ॥ ज्ञानं चेति ॥ ज्ञानाज्ञानयोर्विरोधात् ज्ञान उत्पन्नेऽज्ञानं स्वयमेव नश्यतीति क प्रसादस्योपयोगः । अन्यथा शुक्ति-तत्वज्ञानेनाप्यज्ञाननिवृत्तौ प्रसादापेक्षा स्यादिति भावः ।

स्यादेतत् प्रसादनैरपेक्ष्यवर्णनं यदि त्वदुक्तं मोक्षस्वरूपमुपपद्येत तदेव तु न युक्तमिति शङ्कते ॥ स्यादेतदिति ॥ अविद्यानिवृत्तेर्मोक्षत्वं वर्णयता तस्याः किमात्मस्वरूपत्वमङ्गीक्रियत उत ततोऽतिरिक्तत्वम् । नाद्य इत्याह ॥ अविद्येति ॥

नन्वस्या आत्मस्वरूपत्वेऽपि कुतो न साध्यत्वम् । न चात्मस्वरूपस्यानादिनित्यत्वेन तदभिन्नाया अस्या अपि तथात्वादसाध्यत्वमिति वाच्यम् । अनादेरपि दुःखप्रागभावस्य प्रायश्चित्तसाध्यत्ववत् प्रकृतेऽपि तत्सम्भवात् । न च जन्यत्वरूपं साध्यत्वं दुःखप्रागभावेऽपि न सम्भवतीति वाच्यम् तदसम्भवेऽपि यस्मिन् सति अग्रिमक्षणे यत्सत्वं यद्व्यतिरेकेण चासत्वमित्येवंरूपयोगक्षेमसाधारणस्य साध्यत्वस्य दुःखप्रागभाव इव प्रकृतेऽपि सम्भवात् । न च यद्व्यतिरेकेऽसतः सत्वमित्यस्य दुःखप्रागभावेऽप्यसंभव इति वाच्यम् गौरवेण 'असतः' इत्यस्य तत्राप्रवेशात् । तथा चासाध्यत्वापादनमयुक्तमिति चेत् । मैवम् । अविद्या-निवृत्तेरात्मस्वरूपेण सह किं सविशेषाभदो उत निर्विशेषाभेदः । नाद्यः । निर्विशेषत्वाङ्गीकारविरोधात् । न द्वितीयः । निर्विशेषात्ममात्राविद्यानिवृत्तौ यस्मिन् तत्वज्ञाने सत्यग्रिमक्षणे निर्विशेषात्मसत्त्वं तत्वज्ञान-व्यतिरेकेण च निर्विशेषात्मासत्वमिति हि साध्यत्वं वक्तव्यम् । न चैतदुपपद्यते । अपसिद्धान्तप्रसङ्गात् । सद्रूपत्वप्रतिपादकश्रुत्यादि- विरोधाच्चेति युक्तमसाध्यत्वापादनम् ।

द्वितीयं निराचष्टे ॥ अनात्मत्व इति ॥ वृत्तिनिवृत्ताविति ॥ विशेषणनिवृत्तौ विशिष्टनिवृत्तेः स्वर्गो ध्वस्त इत्यादौ दृष्टत्वादिति भावः । विशेषणनिवृत्तौ विशिष्टनिवृत्तिवदुपलक्षणनिवृत्तावुपलक्षितस्यापि निवृत्तिः स्यादिति पूर्वोक्तदोषः स्यादेवेत्यत आह ॥ उपलक्षण इति ॥ उक्तेऽर्थे सिद्धान्तसम्मतिमाह ॥ उक्तं हीति ॥ तथा सति सत्वानिर्वाच्यत्वपक्षोक्तदोषापात इत्यत आह ॥ तत्र चेति ॥ ननु निवृत्तेः सदसद्वैलक्षण्येऽ-विद्याद्यन्यतरत्वं स्यात् । तत्र सदसद्वैलक्षण्यस्य प्रयोजकत्वादित्यत आह ॥ अविद्याद्यन्यतरत्वं इति ॥ आत्मातिरिक्ताविद्यानिवृत्यङ्गीकारेऽद्वैतहानिरित्यत्राह ॥ एवञ्चेति ॥ ननु "एकमेवाद्वितीयं" इति श्रुत्या सामान्यतो द्वितीयनिषेधात् सद्द्वितीयनिषेधपरत्वेन संकोचो न युक्त इत्यत आह ॥ अथवेति ।

सिद्धान्तयति ॥ उच्यत इति ॥ आत्मत्वपक्ष इति ॥ वृत्युपलक्षित आत्मा अज्ञानहानिरिति पक्ष इत्यर्थः । ननु यन्मते आत्मा वृत्तिव्याप्यस्तन्मतानुसारेणैवैतन्मोक्षस्वरूपं निरूप्यत इति नापसिद्धान्त इत्यत आह ॥ वृत्त्युपलक्षितस्येति ॥ तथा च पूर्वमपि मुक्तत्वं स्यादिति भावः । तर्हि पाकोपलक्षितस्यापि पाकात् पूर्वं सत्वं

(कण्टकोद्धारः)

स्यादित्यत आह ॥ पाकेति ॥ प्रकृतेऽपि व्यवहार एव साध्य इत्यत आह ॥ नचात्रेति ॥ न च "विमुक्तश्च विमुच्यते" इति श्रुत्या मुक्तत्वस्य पूर्वमपि सत्त्वाद् व्यवहारमात्रमेव साध्यमिति वाच्यम् । व्यवहारमात्रस्य "मुक्तोऽयं" इत्यादिलौकिकवाक्यादेव सम्भवेन वेदान्तश्रवणाद्यायासवैय्यर्थ्यापातात् । ननु पाकोपलक्षितस्य पाचकस्य पाकात् पूर्वमपि सत्ववर्णनमयुक्तम् । पाककर्तृत्वं हि पाचकत्वम् । न च पाकपूर्वकाले तदस्ति । तथा च वृत्त्युपलक्षितस्यापि पूर्वं सत्वमयुक्तमेवेत्यत आह । किञ्चेति । तथा च तद्वदेव वृत्त्यनन्तरमपि मुक्तत्वं न स्यादिति भावः । ननु पाचकत्वं न पाककर्तृत्वम् । किं तु पाकयोग्यत्वं वा पाकोपलक्षितत्वं वा। तच्च पश्चादस्तीति पश्चात् पाचकत्वमिव पश्चान्मुक्तत्वमपि युज्यत इत्यत आह ॥ कर्तृत्वेति ॥ पाकेनेति ॥ पाकेनानवच्छिन्ना अधिकरणता यस्य एवंभूतो यः पाकः तेन बोधिता या व्यावृतिः तदधिकरणत्वमित्यर्थः । पश्चादपीत्यपिशब्दात् पूर्वमप्यस्तीत्यर्थः । आत्मातिरिक्तस्य तस्याभावेऽपि चिन्मात्रत्वमेव योग्यत्वं प्रकृतेऽस्तीत्यत आह ॥ चिन्मात्रं त्विति ॥ तथा च प्रागपि मुक्तत्वं स्यादिति भावः । उक्तमर्थं कारिकारूढं करोति ॥ एवं चेति ॥ वृत्त्योपलक्षितचैतन्यमेवाज्ञानहानिरूपा मुक्तिरिति वदता उपलक्ष्यतावच्छेदकं किञ्चित् वक्तव्यम् । तद्धि किं चिन्मात्रत्वम्? उत धर्मविशेषः? आद्य आह ॥ चिन्मात्रत्व इति ॥ द्वितीयं दूषयति ॥ आधिक्य इति ॥

ननु धर्मविशेषस्यैवोपलक्ष्यतावच्छेदकत्वाङ्गीकाराभासाध्यत्वापत्तिः । न च सविशेषत्वप्रसङ्गः । मिथ्याभूतसविशेषत्वाङ्गीकारे बाधकाभावादित्यत आह ॥ किञ्चेति ॥ वैय्यर्थ्यं साध्याभावादिति भावः । कुत इत्यतो विरुद्धधर्माधिकरणत्वादित्याह ॥ आत्मन इति ॥ न चाभावोऽधिकरणात्मैव नातिरिक्त इत्यङ्गीकुर्वतां गुरूणां मते यद्यभावोऽधिकरणमात्रं तर्हि घटवत्यपि भूतले अधिकरणमात्रस्य सत्त्वादभावप्रतीत्यापत्तिः । अधिकरणमात्रत्वे प्रतियोगिसापेक्षज्ञानत्वं च न स्यात्, अधिकरणस्य तदभावादित्यादिदोषाप्रसक्तिवत् प्रकृते तथाऽस्त्वित्यत आह ॥ अभावापलापेति ॥ कैवल्यं च धर्मान्तरं भूतलस्येति भावः ॥ अन्यथेति ॥ अभावस्याधिकरणमात्रत्व इत्यर्थः ॥ आत्मान्यत्व इति ॥ अज्ञाननिवृत्तिरात्मातिरिक्ताऽवस्था चेत् तर्ह्यात्माज्ञाननिवृत्त्योर्भेदस्य मुक्तौ सत्वापत्तिः । अज्ञानध्वंसस्य प्रतियोगिना सह भिन्नसत्ताकत्वे विरोधाभावापत्त्या विरोधाय तुल्यसत्ताकत्वमवश्यं वक्तव्यम् । तथा चाज्ञानध्वंसस्य पारमर्थिकत्वादज्ञानस्यादि पारमार्थिकत्वेन मुक्तौ सत्त्वं स्यादित्यर्थः । उक्तमर्थं संगृह्णाति ॥ एवं चेति ॥

दूषणान्तरमाह किं चेयं प्रक्रियेति । अज्ञाननिवृत्तिर्ज्ञानाज्ञानविषयमात्रमिति प्रक्रियेत्यर्थः । ननु नियामाकाभावोऽसिद्धः । विश्वमिथ्यात्वश्रुतेरेव नियामकत्वादित्यत आह ॥ विश्वमिथ्यात्वश्रुतेरिति ॥ स्वतात्पर्यविषयनिवृत्तेरपि मिथ्यात्वप्रतिपादने विषयाभावेनाप्रामाण्यं श्रुतेः स्यादिति भावः । ननु वेदान्तानां लक्षणया अखण्डब्रह्ममात्रपरत्वाङ्गीकारेण निवृत्तौ तात्पर्यानङ्गीकारादित्यत आह ॥ अपिचेति ॥ विशेष्येति ॥ वृत्त्युपलक्षित इति विशेष्यस्येत्यर्थः । किञ्च चरमसाक्षात्कारफले पूर्वज्ञानापेक्षया विशेषोऽस्ति वा ? न वा ? आद्ये निर्विशेषत्वाङ्गीकारविरोधः । द्वितीयं दूषयति ॥ पूर्वस्मादिति ॥

(कण्टकोद्धारः)

**किञ्च नाज्ञानहानेर्मोक्षत्वम् । पुरुषार्थत्वासम्भवादित्याह ॥ किञ्चेति ॥ तद्युक्तमिति ॥ पुरुषार्थभवनं युक्तमित्यर्थः । ननु चरमवृत्त्युपलक्षितस्य साध्यत्वं युज्यत इत्यत आह चरमेति ॥**

**नन्वज्ञाननिवृत्तेरभावत्वादभावस्य च निरुपादानत्वादज्ञानानुवृत्त्यापादनमयुक्तमित्यत आह ॥ अध्यस्तस्येति ॥ अज्ञानोपादानत्वाभावादिति भावः । ननु न ज्ञाननिवृत्तिर्बाधः । किन्तु प्रतिपन्नोपाधौ त्रैकालिकसत्वप्रतिषेध इति न निवृत्त्यापादनं युक्तमित्यत आह ॥ प्रतिपन्नोपाधाविति ॥ नन्विदमयुक्तम् । ज्ञाननिवर्त्यत्वप्रतिपन्नोपाधौत्रैकालिकसत्त्वनिषेधयोर्व्याप्यव्यापकभावो हि किं यत्र ज्ञाननिवर्त्यत्वं तत्र प्रतिपन्नोपाधौ त्रैकालिकसत्वनिषेध इति? उत यत्र प्रतिपन्नोपाधौ त्रैकालिकसत्वनिषेधस्तत्र ज्ञाननिवर्त्यत्वमिति? नाद्यः । अज्ञानभ्रमादौ व्यभिचारात् । तयोश्च सत्त्वेन प्रमितत्वात् । न द्वितीयः । तुच्छे व्यभिचारात् इति चेन्मैवम् । नहि ज्ञाननिवर्त्यत्वं नाम ज्ञानेन नाशोऽत्राभिमतः । किन्तु ज्ञानबोधितत्रैकालिकाभावप्रतियोगित्वम् । एवं ज्ञाननिवर्त्यत्वस्य व्याप्यत्वेऽपि नाज्ञान भ्रमादौ व्यभिचारः । ज्ञानेन तदभावस्याबोधनात् । किञ्चोभयोरपि सत्वनिषेध एव पर्यवसानादेकत्वेन निवृत्त्यापादनं युक्तम् । न चाभेदे न व्याप्यव्यापकभावः । अभेदेऽपि व्याप्यव्यापकभावस्यावश्यकत्वात् । अन्यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्याप्युपाधितापत्तेरयुक्तमापादनम् ॥ निवृत्तेर्निवृत्तिरिति ॥ अन्यथा प्रतियोग्युन्मज्जनं स्यादिति भावः । अज्ञाननिवृत्तेर्निवृत्तिरज्ञानरूपा वा? अतिरिक्ता वा? नाद्यः । तथा सति प्रतियोगिभूताज्ञानोन्मज्जनापत्तेः । न च प्रागभावनिवृत्तिरूपपटनाशेऽपि प्रागभावानुन्मज्जनवत् प्रकृतेऽपि तथाऽस्त्विति वाच्यम् । प्रागभावनिवृत्तिनिवृत्तेः प्रागभावरूपत्वाभावेन वैषम्यात् । द्वितीयं दूषयति ॥ अप्रामाणिकेति ॥ कारणाभावादपि निवृत्तेर्निवृत्तिर्न सम्भवतीत्याह ॥ आत्मेति ॥ तत्त्वस्थिताविति ॥ मोक्षस्वरूपविषय इत्यर्थः ॥ प्रतियोगिन इति ॥ अन्यथा समसत्ताकत्वाभावेन विरोधी न स्यादिति भावः । इति अविद्यानिवृत्तिभङ्गः ॥**

## न्यायामृतप्रकाशः

समस्तवेदसंवेद्यं व्यासं सर्वगुणार्णवम् ।
विवृणोमि प्रणम्याहं परिच्छेदं चतुर्थकम् ॥ १ ॥

ईश्वरप्रसादो मोक्षहेतुरित्येतदाक्षिपति ॥ नन्विति ॥ वृत्तिनिवृत्तौ मोक्षनिवृत्तिं परिहरपि ॥ उपलक्षण इति ॥ निवृत्तिरिति ॥ ज्ञानं वृत्तिः तया उपलक्षित आत्मा मोहहानिः ॥ नन्वविद्यानिवृत्तेरात्मान्यत्वेऽनिर्वाच्यत्वं स्यादित्याशङ्क्य सदसद्विलक्षणत्वमनिर्वाच्यत्वमिति मते इष्टापत्तिरित्याह ॥ तत्र चेति ॥ नन्वविद्यानिवृत्तेरनिर्वाच्यत्वेऽविद्यातत्कार्यान्यतरत्वापत्त्या तस्याज्ञाननिवर्त्यत्वं स्यादित्यत आह ॥ अविद्यादीति ॥ अविद्यानिवृत्तौ सामान्यस्यैवाभावात्तद्विशेषापादनमयुक्तमित्यत आह ॥ न च निवृत्तेरिति ॥ प्रत्यपीपदन् प्रतिपादयामासुः । तस्मादात्मस्वरूपा अविद्यानिवृत्तिस्तदतिरिक्तावेतिपक्षद्वयं द्वितीयेप्यनिर्वाच्यावा पञ्चमप्रकारा वा सत्या वेति

(प्रकाशः)

पक्षत्रयमित्युपसंहरति ॥ इतीति ॥ यत्किञ्चिद्वृत्त्युपलक्षितात्मनः संसारकालेपि सत्त्वेनातिप्रसङ्गात् श्रवणादि-जन्यात्मविषयकवृत्त्युपलक्षित आत्माऽज्ञाननिवृत्तिरिति वाच्यम् । तत्र चापसिद्धान्त इत्याह ॥ आत्मेति ॥ न चात्रेति ॥ वृत्तेः पूर्वं मुक्त इति व्यवहाराभावेपि पूर्णानन्दप्रकाशरूपमुक्तिः स्यादेव पाके निवृत्तेपि पाचकस्या-निवृत्तेरिति भावः । पराभिमतपाचकत्वं किं पाकजनककृत्याश्रयत्वं वा पापकर्तृत्वयोग्यत्वं वा । आद्ये आह ॥ पाककर्तृत्वमिति ॥ तथा च स न दृष्टान्त इत्यर्थः । द्वितीये यद्यपि दृष्टान्ते तत्सम्भवति तथापि दार्ष्टान्तिके तन्नास्तीत्याह ॥ कर्तृत्वेत्यादि ॥ चिन्मात्रमिति ॥ तथा च प्रागपि मुक्तिः स्यादित्यर्थः ॥ इयं प्रक्रियेति ॥ अज्ञाननिवृत्तिर्ज्ञानाधिष्ठानरूपेत्येवंरूपा प्रक्रियेत्यर्थः ॥ नियामकेति ॥ एतत्प्रक्रियां विनाऽनुपपत्त्यभावादित्यर्थः । नन्वज्ञाननिवृत्तेरधिष्ठानातिरिक्तत्वे विश्वमिथ्यात्वश्रुतिपर्यालोचनया निवृत्तेरपि निवृत्त्यापत्तिरतस्तदेव नियामक-मित्यत आह ॥ विश्वमिथ्यात्वेति ॥ विश्वमिथ्यात्वश्रुतिर्हि अज्ञाननिवृत्तेरधिष्ठानरूपत्वं न साक्षाद्वक्ति । ज्ञाना-द्विश्वनिवृत्तेरेव तदर्थत्वात् । किन्तूक्तविधयानुपपत्त्या । सा चान्यथाप्युपपन्ना । निषेधस्य विहितेतरनिषेधपरत्वा-दिति भावः ॥ कर्मनाशोपलक्षितस्येति ॥ उपलक्षणप्रागभावकालेपि तदुपलक्षितस्वरूपमात्रस्य सत्त्वादित्यर्थः ॥ पूर्वस्मादिति ॥ ज्ञानादित्यर्थः ॥ आनन्दाभिव्यक्तीति ॥ वृत्तावानन्दाभिव्यक्तिरूपविशेषसत्त्वे तस्या असाध्यत्वापात इत्यर्थः ॥ अनिर्वाच्यस्याध्यस्तत्वेनेति ॥ अध्यस्तस्याज्ञानोपादानकत्वेनाज्ञाननिवृत्तिकालेप्यज्ञान-सत्त्वापत्तिरित्यर्थः ॥ अभावत्वेनेति ॥ भावरूपस्याध्यस्तस्याज्ञानोपादानकत्वमित्यङ्गीकारे निवृत्तिः स्यादिति भावः ॥ निवृत्तेरित्यनुषङ्गः । ननु ज्ञाननिवर्त्यत्वाभावेपि प्रतिपन्नोपाधावित्यादिरूपं बाध्यत्वं निवृत्तौ भविष्यती-त्यत आह ॥ प्रतिपन्नेति ॥ तद्व्याप्तत्वात् ॥ ज्ञाननिवर्त्यत्वव्याप्तत्वात् । अभावात् मुक्ताविति शेषः ॥ न द्वितीय इत्याह ॥ तन्मात्रस्येति ॥ तत्वस्थितौ । तत्वव्यवस्थापने इत्यर्थः ॥ व्यभिचाराच्चेति ॥ तत्वस्थितौ पञ्चम-प्रकारत्वपक्षे सदसद्वैलक्षण्यरूपानिर्वाच्यत्वरूपमिथ्यात्वाभावादित्यर्थः ॥ प्रतियोगिन इति ॥ प्रतियोगितद्ध्वंसयोः समानसत्ताकत्वे हि विरोधः । अन्यथा विरोध एव न स्यादिति भावः ॥ अभावद्वैतस्येति ॥ भावापेक्षयाऽ-भावस्यात्यन्तगुरुत्वादिति भावः । प्रागेव सिद्ध इत्ययं श्लोकः क्वचित्पुस्तके किञ्चेयं प्रक्रियेत्यादिग्रन्धात्पूर्वं पठ्यते । अत्रैव तु युक्तः पाठः । तस्मादविद्यानिवृत्तेरात्ममात्रत्वमिति मतं १ आत्मान्यत्वेपि सदसद्वैलक्षण्य-रूपानिर्वाच्यत्वमिति मतं २ ज्ञाननिवर्त्यत्वरूपं बाध्यत्वमनिर्वाच्यत्वमिति मते पञ्चमप्रकारत्वमतं ३ आत्मान्यत्व-पक्षेपि भावाद्वैतमते सत्त्वं चेति मतमिति ४ मतचतुष्टयमप्ययुक्तमिति द्रष्टव्यम् ॥ इत्यविद्यानिवृत्तिभङ्गविवरणम् ।

## २. अविद्यानिवर्तकभङ्गः

**यच्चोच्यते ब्रह्मरूपायाः स्वप्रकाशचितोऽज्ञानसाधकत्वेन तदनिवर्तकत्वेऽपि तद्वि-षया वेदान्तश्रवणादिजन्याऽपरोक्षवृत्तिर्निवर्त्तिकेति । तन्न, असत्यात् सत्यसिद्धे-र्निरस्तत्वेनासत्यया वृत्त्या सत्याया निवृत्तेरसिद्धेः । अज्ञाने न जानामीतिज्ञप्तिरूप-**

चिद्विरोधस्यैवानुभवेनाज्ञप्तिरूपवृत्तिविरोधस्यासम्भवाच्च । चिता प्रकाशमाने सुखादावज्ञानादर्शनाच्च । वृत्तेर्जातिविशेषेणैव तन्निवर्तकत्वे इच्छादिनिवर्त्यद्वेषादिवदज्ञानस्य सत्त्वापत्त्या शुक्त्यादिज्ञानवदर्थप्रकाशकत्वेन तन्निवर्तकत्वे वक्तव्ये चैतन्यस्यापि तत्त्वेन तन्निवर्तकत्वावश्यम्भावाच्च । न च निर्विशेषे वृत्तिश्चैतन्यादधिकप्रकाशिका । त्वन्मतेऽयं घट इत्यादिवृत्तावपि घटस्य प्रकाशेऽपि चितोऽप्रकाशाच्च । उक्तं चैतदविद्याविषयभङ्गे ।

किं च तन्निवर्तकत्वे तत्स्थित्यसहिष्णुस्थितिकत्वरूपविरोधस्य तन्त्रत्वात्कार्यस्य चोपादानेनाविरोधान्न वृत्तिः स्वोपादानाज्ञाननिवर्तिका । उपान्त्यजन्योऽन्त्यः शब्दस्तन्निवर्तकोऽपि न तदुपादानकः । आतंचनादिना निवृत्तक्षीरत्वगोमयत्वाद्यवस्था एव च तत्तदवयवा दधिवृश्चिकाद्युपादानानीति न क्वापि कार्येणोपादाननाशः । एतेन वृत्तिप्रतिबिम्बिता चिदेवाविद्यानिवर्तिका, उक्तं हि–

"तृणादेर्भासिकाप्येषा सूर्यदीप्तिस्तृणं दहेत् ।
सूर्यकान्तमुपारुह्य तं न्यायं चिति योजयेत् ॥"

इति निरस्तम् । अपरोक्षवृत्तौ सत्यां चिद्प्रतिबिम्बनेनानिवृत्तेरदर्शनाच्च । किं च निवर्तकस्य ज्ञानस्य न तावच्छुद्धात्मा विषयः, तस्यादृश्यत्वात् । उक्तं चैतद्दृश्यत्वभङ्गे ।

नाप्यन्यः, तस्याध्यस्तत्वेन तज्ज्ञानस्य भ्रान्तित्वापातात् । अपि चान्त्यज्ञानस्य निवर्तकं स्वयमेव वा ? अन्यद्वा ? नाद्यः, प्रागभावः प्रतियोगिहेतुरिति पक्षे तन्मात्रस्याहेतुत्ववत्प्रतियोगी ध्वंसहेतुरिति पक्षेऽप्यतिप्रसङ्गेन तन्मात्रस्याहेतुत्वात् । दग्धदाह्यदहनस्यापीशेच्छादिनैव नाशात् । कतकरजस्तु न पंकं नाशयति, नापि स्वयं स्वेनैवनश्यति, विश्लेषमात्रदर्शनात् । नान्त्यः शुद्धात्ममात्रस्य किञ्चिदपि प्रत्यहेतुत्वात् । तदन्यस्य च निवृत्तत्वादिति । अविद्यानिवर्तकभङ्गः ॥ २ ॥

## अद्वैतसिद्धिः

अविद्यानिवर्तकं च यद्यपि न स्वप्रकाशब्रह्मरूपज्ञानमात्रम्, तस्य तत्साधकत्वात्, तथापि श्रवणादिसाध्यापरोक्षवृत्तिसमारूढं तदेव । अत एवैतदपास्तम्–किं स्वप्रकाशचिदविद्यानिवर्तिका ? तदाकारा अपरोक्षवृत्तिर्वा ? नाद्यः, तस्या इदानीमपि सत्त्वात् । न द्वितीयः, असत्यात्सत्यसिद्धेरयोगाद् अज्ञाने न जानामीति ज्ञप्तिरूपचिद्विरोधस्यानुभवेनाज्ञाप्तिरूपवृत्तिविरोधस्यासंभवात्, चिता प्रकाशमानसुखादावज्ञानादर्शनाच्च । किञ्च इच्छानिवर्त्यद्वेषवज्ज्ञातिनिबन्धनवृत्तिनिवर्त्यस्याज्ञानस्याविशेषेण सत्त्वापत्तिः इति वृत्त्युपारूढचितो वा चित्प्रतिबिम्बधारिण्या वृत्तेर्वा निवर्तकत्वात् । न चासत्यायाः सत्योत्पादकत्वविरोधः, अभावस्य भावजनकत्ववदस्य संभवात्, प्रातिभासिकस्य व्यावहारिकसुखजनकत्वदर्शनाच्च । नापि न जानामीति ज्ञाप्तिरूपचिद्विरोधित्वानुभवविरोधः, चिदसंसृष्टवृत्तेर्विरोधित्वस्यानङ्गीकारात् । यत्तूक्तं द्वेषवत् सत्यत्वमिति तन्न, अधिष्ठानतत्त्वसाक्षात्कारत्वनिबन्धननिवर्तकत्वस्य शुक्त्यादिज्ञानवदत्रापि संभवेन तन्निवर्त्यरूप्यवत् सत्यत्वानापत्तेः । यत्तूक्तं चरमवृत्तेर्घटादिवृत्त्या चिद्विषयत्वे अविशेषः इति, तन्न, अवच्छिन्नानवच्छिन्नविषयतया विशेषात् । यत्तु स्वनिवर्तकत्वे स्थितिविरोधः स्वोपादाननिवर्तकत्वं त्वदृष्टचरम् इति, तन्न, अन्यत्रादृष्टस्यापि प्रमाणबलादत्रैव कल्पनात् । तथा हि– 'मायां तु प्रकृतिं विद्या'दित्यवगतमायोपादानकत्वस्याप्यात्मतत्त्वसाक्षात्कारस्य 'तरति शोकमात्मवित् सोऽविद्याग्रन्थिं विकिरतीह सोम्ये'त्यादिना तन्निवर्तकत्वस्य च प्रमितत्वात् । वृत्तिप्रतिबिम्बतचितो निवर्तकत्वे तु नोक्तवचसः शङ्कापि । तदुक्तम्–

''तृणादेर्भासिकाप्येषा सूर्यदीप्तिस्तृणं दहेत् ।
सूर्यकान्तमुपारुह्य तन्न्यायं चिति योजयेत् ॥''

न च अपरोक्षवृत्तौ सत्यां चिदप्रतिबिम्बनिबन्धननिवृत्तिविलम्बादर्शनात् न विशिष्टे निवर्तकतेति वाच्यम्, शुद्धजडस्य शुद्धचितश्च जडतया तद्भासकतया चाज्ञानानिवर्तकतया विशिष्टे निवर्तकताया आवश्यकत्वात् । यत्तु निवर्तकं ज्ञानमपि न शुद्धविषयकम्, तस्यादृश्यत्वात्, नापि विशिष्टविषयकम्, तस्याध्यस्तत्वेन भ्रमत्वापत्तेः इति, तन्न, उपहितस्य विषयत्वेऽपि उपाधेरविषयत्वेनाभ्रमत्वात् । यत्तु अन्त्यस्य ज्ञानस्य किं निवर्तकम् ? स्वयम् ?

(अद्वैतसिद्धिः)

अन्यद्वा ? नाद्यः, अन्यनिरपेक्षप्रतियोगिनो ध्वंसजनकत्वे क्षणिकत्वापत्तेः, दग्धदारुदहनस्यापि ईश्वरेच्छादिनैव नाशात् । कतकरजस्तु न पङ्कं नाशयति, नापि स्वम्, विश्लेषमात्रदर्शनात् । नान्त्यः । शुद्धात्मनः किञ्चिदपि प्रत्यहेतुत्वात्, तदन्यस्य च निवृत्तत्वाद् इति, तन्न, तन्तुनाशस्य पटनाशप्रयोजकत्वदर्शनेन स्वोपादानाविद्यानाशस्यैव तन्नाशकत्वात् । न च अविद्यानाशे तदुपलक्षितात्मा वा ? वृत्तिर्वा ? पूर्वत्र शुद्धस्याहेतुत्वम्, द्वितीये प्रतियोगिमात्रस्यैव नाशकतापर्यवसानमिति वाच्यम्, उभयथाप्यदोषाद्, वृत्तिमादायैव ब्रह्मण उपहितत्वेन शुद्धत्वाभावात् । प्रतियोगिनः प्रतियोगित्वेन नाशकतायामितरानपेक्षत्वे हि क्षणिकत्वम्, रूपान्तरावच्छेदेन यत् कारणं तस्यापेक्षणे न तदिति उपादाननाशत्वावच्छिन्नस्य स्वस्यैव क्षणिकत्वानापादकं नाशकत्वं स्यात् । द्वितीयकारणनिरपेक्षप्रतियोगिनः प्रतियोगित्वोपादाननाशत्वरूपद्वयावच्छिन्नस्य नाशकत्वोपपत्तेः । वस्तुतस्तु अविद्यानिवृत्तेर्वृत्तिरूपतया न निवर्तकखण्डनावकाशः, वृत्तिनिवृत्तेरात्मरूपतया न तज्जनकखण्डनावकाशोऽपीति सर्वमवदातम् ॥ इत्यद्वैतसिद्धौ अविद्यानिवर्तकनिरूपणम् ॥

## न्यायामृततरङ्गिणी

**असत्यादिति ॥ कार्यकारणयोः समसत्ताकत्वात् । एतेन भावादभावस्येवासत्यात्सत्यस्योत्पत्तिरिति परास्तम् । ननु चिन्मात्रं निर्विशेषात्मप्रकाशकमतो नाज्ञाननाशकमित्यत आह ॥ न च निर्विशेष इति ॥ ननु चैतन्येऽज्ञानसहभावदर्शनाविरोधित्वमित्याशङ्क्य निवृत्तावपि तत्सहभावोस्तीत्याह ॥ अयमिति ॥ उक्तं चैतदिति ॥ तदज्ञाननाशकत्वे तद्विषयकत्वं तन्त्रं न तु तदन्याविषयकत्वविशेपितं तत् । घटपटसमूहालम्बनाद्धटाज्ञाननिवृत्तिर्न स्यात् । अत एव घटादिवृत्तेश्चरमवृत्तेश्चावच्छिन्नानवच्छिन्नविषयतया विशेष इति कस्यचित्प्रलपितमपास्तम् । त्वन्मते प्रत्युत वृत्तेरज्ञानविरोधित्वमनुपपन्नमित्याह ॥ तन्निवर्तकत्व इति ॥ तरति शोकमात्मवित् सोविद्याग्रन्थिं विकिरतीह सोम्येत्यादिश्रुतिस्त्वज्ञानानुपादानकवृत्तिपक्षेप्युपपन्ना । आतञ्चनं क्षीरे दध्यादिप्रक्षेपः ॥ एतेनेति ॥ चिन्मात्रस्यैवाज्ञानविरोधित्वे वक्तव्ये विशिष्टस्य तत्कल्पने मानाभावेनेत्यर्थः । ननु वृत्तिमात्रसत्त्वे चिन्मात्रसत्त्वे वाऽज्ञानानिवृत्तिरेव तत्र मानमित्यत आह ॥ अपरोक्षेति ॥ वृत्तिर्वा तत्प्रतिबिम्बितचैतन्यं वा निवर्तकमस्तु । तथापि तद्विषयो दुर्निरूप इति न तस्य ज्ञानत्वमित्यभिप्रेत्याह ॥ किं चेति ॥ नन्वात्मनो वृत्तिविषयत्वेपि चिदविषयत्वाददृश्यत्वमुपपत्स्यत इत्यत आह ॥ उक्तं चैतदिति ॥ घटादावपि वृत्तिभिन्नदृशोऽ-**

(तरङ्गिणी)

सिद्धिरित्युक्तम् । वृत्तेरज्ञाननिवर्तकत्वे तन्निवर्तकस्याभावात्तदनिवृत्त्यापत्त्या चित एवाज्ञाननिवर्तकत्वं वाच्यम् । तत्र चोक्ता दोषा इत्यभिसन्धायाह ॥ अपि चेति ॥ अतिप्रसङ्गेनेति ॥ क्षणिकत्वापत्तिरूपेण ॥ शुद्धेति ॥ ननु वृत्तिमादायैव ब्रह्मण उपहितत्वेन शुद्धत्वाभाव इति चेन्मैवम् । तथा सति वृत्तेः शुद्धब्रह्मविषयत्वं न स्यात् । वृत्त्युपधानमात्रेण ब्रह्मणः सविशेषत्वात् । नन्वविद्यानिवृत्तिरूपं द्वितीयं कारणमस्तीत्यत आह ॥ तदन्यस्येति ॥ तस्यात्मान्यत्वेन निवृत्तत्वात् । आत्ममात्रत्वे तूक्तदोषादहेतुत्वम् । नन्वविद्यानिवृत्तिर्वृत्तिरूपैव न च वृत्तिनिवृत्तिं प्रति द्वितीयहेतोरलाभः । अवच्छेदभेदेन निवृत्तेरेव द्वितीयहेतुत्वात् । वृत्तिर्हि स्वनिवृत्तिं प्रति प्रतियोगित्वेनोपादाननिवृत्तित्वेन हेतुः । अत एव च नोक्तक्षणिकत्वमपि कारणस्वरूपाभेदेप्येकस्यैव द्विरूपेण हेतुत्वात् । वृत्तिर्हि स्वनिवृत्तिं प्रति स्वात्मरूपैव । मैवम् । कार्यस्य स्वोपादानविरहरूपत्वादर्शनात् । न चेहैव तत्कल्पना । अन्यथासिद्धेः । प्रागभावस्य घटं प्रत्यनुपादानत्वात् । वृत्तिनिवृत्तावप्यात्मरूपत्वादिविकल्पप्रसराच्च । अविद्यानिवृत्तेरेवात्ममात्रत्वस्य वक्तुमुचितत्वाच्च । तस्माद्यत्किञ्चिदेतत् ॥ अविद्यानिवर्तकभङ्गः ॥ २ ॥

## न्यायामृतकण्टकोद्धारः

अज्ञाननिवृत्तिरूपमोक्षस्वरूपं निरस्य निवर्तकाभावाच्चाज्ञाननिवृत्तिरूपमोक्षो न सम्भवतीति वक्तुं परोक्तमनुवदति ॥ यच्चेति ॥ असत्यादिति ॥ न च नासत्याया वृत्तेरज्ञाननिवर्तकत्वम् । किन्तु वृत्तिप्रतिबिम्बितचैतन्यमेव निवर्तकम् । तच्च सत्यमेवेति सत्यस्य निवर्तकत्वमिति वाच्यम् । अत्र हि किं चिन्मात्रस्य निवर्तकता? उत प्रतिबिम्बनविशिष्टस्य । नाद्यः । तथा सति तस्य सर्वदा सत्त्वेनाज्ञानं कदाऽपि न स्यात् । निर्विशेषस्य निवर्तकत्वायोगाच्च । न द्वितीयः । विशिष्टस्य मिथ्यात्वेन मूलोक्तदूषणापरिहारात् । चिद्रूपज्ञानस्याज्ञाननिवर्तकत्वानभ्युपगमः किं तयोर्विरोधाभावात्? उताज्ञप्तिरूपत्वात्? नाद्यद्वितीयावित्याह ॥ अज्ञान इति ॥ नन्वयं विरोधानुभवो वृत्तिविषय एवेत्यत उक्तम् ॥ अज्ञप्तिरूपेति ॥ "सांख्यवेदान्तिनां तु करणव्युत्पत्त्या बुद्धिवृत्तिर्ज्ञानं" इति विवरणोक्तेरिति भावः । किञ्च वृत्तेरज्ञाननिवर्तकता किं जातिविशेषेण? किं वाऽर्थप्रकाशत्वेन । नाद्य इत्याह ॥ वृत्तेरिति ॥ द्वितीयं प्रत्याह ॥ शुक्त्यादीति ॥ तत्वेन अर्थप्रकाशकत्वेन । ननु वृत्तेश्चैतन्यादधिकप्रकाशकत्वादज्ञाननिवर्तकत्वमित्यत आह ॥ न चेति ॥ तथा सति निर्विशेषविषयत्वं न स्यादिति भावः । ननु वृत्तेश्चैतन्यानधिकप्रकाशकत्वेऽपि चैतन्यप्रकाशकत्वादज्ञाननिवर्तकत्वमित्यत आह ॥ त्वन्मत इति ॥ ननु न चैतन्यस्याज्ञाननिवर्तकत्वम् । अज्ञानस्य ज्ञानकरणविरोधित्वेन चैतन्याविरोधित्वादित्यत आह ॥ उक्तं चैतदिति ॥ तथा सति न जानामीति ज्ञप्तिविरोधित्वेन प्रतीयमानस्याज्ञानान्तरत्वापत्तिरित्याद्युक्तमित्यर्थः ।

(कण्टकोद्धारः)

**किञ्च वृत्तेरज्ञानोपादानकत्वान्न तयाऽज्ञाननिवृत्तिर्युज्यत इत्याह ॥ किञ्चेति ॥ नन्वन्त्यशब्देनोपान्त्यनिवृत्तिवद् वृत्त्याऽप्यज्ञाननिवृत्तिरस्त्वित्यत आह ॥ उपान्त्येति ॥ तथाऽप्युपादेयदधिवृश्चिकादिना क्षीरगोमयादिनिवृत्तिदर्शनात् प्रकृतेऽपि तथाऽस्त्वित्यत आह ॥ आतंचनादिनेति ॥ एतनेति ॥ असत्येन सत्यनिवृत्तेरदर्शनेनत्यर्थः ।**

**किंच चितः प्रतिबिम्बनं हि तदा कल्पनीयं यद्यपरोक्षवृत्तौ सत्यामपि चित्प्रतिबिम्बाभावे नाज्ञाननिवृत्तिर्क्वापि दृष्टा स्यात् । न चैवमित्याह ॥ अपरोक्षेति ॥**

**विषयाभावाच्च न वृत्तेरज्ञाननिवर्तकत्वमित्याह ॥ किंचेति ॥ अतिप्रसङ्गेनेति ॥ प्रतियोगिमात्रस्य ध्वंसजनकत्वे प्रतियोग्युत्पत्तिक्षण एव ध्वंसः स्यादित्यर्थः । न च तन्तुनाशे पटनाशप्रयोजकत्वदर्शनेन स्वोपादानाविद्यानाशस्यैव तन्नाशकत्वमिति वाच्यम् । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् । तन्तुपयोर्विरोधाभावेनोपादानोपादेयभावसम्भवेन तन्नाशस्य तन्नाशकत्वेऽप्यज्ञानान्त्यज्ञानयोर्विरोधेनान्त्यज्ञानेनाज्ञाननिवृत्तेश्चोपादानोपादेयभावासम्भवेनाविद्यानाशस्यान्त्यज्ञाननाशकत्वायोगात् अविद्यानाशस्यैवान्त्यज्ञाननाशकत्वे तस्य मिथ्यात्वं न स्यात् । ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्तेरेव मिथ्यात्वप्रयोजकत्वात् । न चाविद्यानिवृत्तेर्निवृत्तिरूपतया न निवर्तकखण्डनावकाशः । वृत्तिनिवृत्तेरात्मरूपतया न तज्जनकखण्डनावकाश इति वाच्यम् । वृत्तिनिवृत्तेर्जन्यत्वेनात्मस्वरूपत्वासम्भवात् । वृत्तिनिवृत्तेः सदा सत्त्वे मोक्षवृत्त्युत्पादार्थं वेदान्तश्रवणाद्यायासवैय्यर्थ्यं चेति दिक् । इति अविद्यानिवर्तकभङ्गः ।**

## न्यायामृतप्रकाशः

असत्यादिति ॥ कार्यकारणयोः समसत्ताकत्वादित्यर्थः । ननु चिन्मात्रं निर्विशेषात्मप्रकाशकम् । अतो नाज्ञाननाशकमित्यत आह ॥ न च निर्विशेष इति ॥ ननु चैतन्येऽज्ञानसहभावदर्शनादविरोधित्वमित्याशङ्क्य वृत्तावपि तद्भावोस्तीत्याह ॥ अयमिति ॥ उक्तं चैतदिति ॥ तदज्ञाननिवर्तकत्वे तद्विषयकत्वं तन्त्रम् । न तु तदन्यविषयकत्वाविशेषितं तत् । अन्यथा घटपटाविति समूहालम्बनाद्घटाज्ञाननिवृत्तिर्न स्यादित्युक्तमित्यर्थः । त्वन्मते प्रत्युत वृत्तेश्चरमज्ञानविरोधित्वमनुपपन्नमित्याह ॥ किञ्चेति ॥ तन्निवर्तकत्व इति ॥ "तरति शोकमात्मवित् सोविद्याग्रन्थिं विकरति ह सोम्ये" त्यादिश्रुतिस्तु अज्ञानानुपादानकवृत्तिपक्षेप्युपपन्नेति ध्येयम् । आतञ्चनं क्षीरे दध्यादिप्रक्षेपः ॥ एतेनेति ॥ चिन्मात्रस्यैवाज्ञाननिवर्तकत्वे वक्तव्ये विशिष्टस्य तत्कल्पने मानाभावेनेत्यर्थः । ननु वृत्तिमात्रसत्त्वे चिन्मात्रसत्त्वे वाऽज्ञानानिवृत्तिरेव तत्र मानमित्यत आह ॥ अपरोक्षेति ॥ वृत्तिर्वा तत्प्रतिबिम्बितं चैतन्यं वा निवर्तकमस्तु तथापि तद्विषयो दुर्निरूप इति न तस्य ज्ञानत्वमित्यभिप्रेत्याह ॥ किं चेति ॥ ननु चात्मनो वृत्तिविषयत्वेपि चिदविषयत्वाददृश्यत्वमुपपत्स्यत इत्यत आह ॥ उक्तं चैतदिति ॥ घटादावपि वृत्तिभिन्नदृशोसिद्धिरित्युक्तमित्यर्थः । वृत्तेरज्ञाननिवर्तकत्वे तन्निवर्तकस्यान्यस्याभावेन तदनिवृत्त्यापत्त्या चित एवाज्ञाननिवर्तकत्वं वाच्यम् । तत्र चोक्तदोषा इत्यभिसन्धायाह ॥ अपि चेति ॥ अतिप्रसङ्गेनेति ॥

(प्रकाशः)

क्षणिकत्वापत्तिरूपेणेत्यर्थः । ननु "वेणुसङ्घर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम् । एवं गुणव्यत्ययजा वृत्तिः शाम्यति तद्यथेति" तत्राह ॥ दग्धेति ॥ दाह्यं दग्धं येन दहनेन तस्यापीत्यर्थः । तत्रापि स्वमात्रनिवर्त्यत्वं न संमतमित्याह ॥ ईशेच्छेति ॥ "न ऋते त्वत्क्रियते किञ्चनार" इति श्रुतेः "व्यतिरेकानवस्थितेश्चानपेक्षत्वादि"-ति सूत्राच्चेति भावः । नन्वथापि कतकरजोवदुपपद्यत इत्याशङ्काया अपि ईश्वरेच्छादिनैव नाशादित्युक्तरीत्या परिहारेपि विशेषं वक्तुमाह ॥ कतकरजस्त्विति ॥ चिल्लबीजेत्यपभ्रष्टभाषा ॥ नापीति ॥ ईशेच्छादिनैव नाशादि-त्यर्थः । कुतः पङ्कं न नाशयतीत्यत आह ॥ विश्लेषेति ॥ जलमिश्रितपङ्कं कतकरजःसम्बन्धेन प्रशिथिलावयवं सत् जलं विहाय जलाधोभाण्डमध्येऽवस्थितं दृश्यते अतो न पङ्कं स्वरूपेण नाशयतीत्यर्थः । अन्त्यज्ञान-निवर्तकत्वेनोच्यमानमन्यत् शुद्धात्ममात्रं तदन्यद्वा । नाद्य इत्याह ॥ शुद्धेति ॥ न द्वितीय इत्याह ॥ तदन्यस्येति ॥ निवृत्तत्वादिति ॥ वृत्त्यैव निवृत्तत्वेन वृत्तिनिवर्तकत्वासम्भवादित्यर्थः ॥ अविद्यानिवर्तकभङ्गविवरणम् ॥ २ ॥

## ३. निर्विशेषसुखस्य पुरुषार्थत्वभङ्गः

यच्चोच्यते न वैशेषिकादीनामिवास्माकं मुक्तौ दुःखनिवृत्तिमात्रम्, किं तु निरतिशयानन्दस्फूरणमपि । उक्तं हि–

तस्मादविद्यास्तमयो नित्यानन्दप्रतीतितः ।
निःशेषदुःखोच्छेदाच्च पुमर्थः परमो मतः ॥

इति । तत्र न तावत्सुखात्मता पुरुषार्थः, सुखी स्यामितिवत् सुखं स्यामिती-च्छाया अदर्शनात् । स्वतः पुरुषार्थे चेच्छाया अनियम्यत्वात् । अन्यथा आत्म-नाशादिरपि बौद्धादिनियमितेच्छया पुमर्थः स्यात् । अत एव नापरकीयं सुखं पुरुषार्थः, तथेच्छाभावाद् गौरवाच्च । सुखसाधने परकीयेऽप्यस्वकीयेऽपुरुषार्थत्वस्य च दर्शनेनेष्टत्वाविशेषात् सुखेपि तत्कल्पनाच्च । 'दुःखतत्साधनयोः स्वकीयत-यैवापुमर्थत्वस्य दर्शनेन सुखादेरपि तथैव पुमर्थत्वाच्च । त्वन्मतेऽपरकीयेन मुक्त-स्वरूपसुखेन संसारिणः सुप्तचैत्रस्वरूपसुखेन जाग्रतो मैत्रस्य च पुरुषार्थप्रसङ्गाच्च । नापि सुखापरोक्ष्यं पुरुषार्थः, ईश्वरादीनामस्मदादिसुखदुःखापरोक्ष्येणार्थानर्थप्रसङ्गात् । एतेन उपलब्धानामेव सुखसाधनानां पुरुषार्थत्वादिष्टत्वाविशेषात्सुख- मप्युपलब्धमेव पुरुषार्थो न तु स्वसम्बद्धं गौरवात् । सम्बन्धस्त्वनित्यत्वसाधनपारतन्त्र्यादि-

वदवर्जनीयसन्निधिरिति विवरणोक्तं निरस्तम् । परकीयसुखसाधनस्योपलम्य-मानस्याप्यपुरुषार्थत्वाच्च । सुखं मे स्यादिति सम्बन्ध इवानित्यत्वादौ प्रार्थना-भावाच्च। नाप्यपरकीयस्य सुखस्य साक्षात्कारः पुरुषार्थः, सुषुप्तस्वरूपसुख-साक्षात्कारादिना ईश्वरादेः पुरुषार्थप्रसङ्गात् ।

किं च अपरकीयसुखसाक्षात्कारो न तावत्स्वसम्बद्धः स्वस्य पुरुषार्थः, मुक्तस्य सुखसाक्षात्काररूपतया तं प्रत्यपि तस्यापुरुषार्थत्वापत्तेः । नाप्यपरकीयसुख-साक्षात्कारः स्वेतरासम्बद्धः स्वस्य पुरुषार्थः, मुक्तस्वरूपेण सुखानुभवेन संसारी-तरासम्बद्धेन संसारिणः पुरुषार्थप्रसङ्गात् । नाप्यपरकीयसुखानुभवरूपता पुरुषार्थः, तादृशेच्छायाः कदाप्यदर्शनात् । एतेन प्रत्यक्प्रदृश्यमानमनतीतं सुखं पुरुषार्थ इत्या-नन्दबोधोक्तं निरस्तम् । प्रत्यक्शब्देन स्वरूपत्वस्य स्वकीयत्वस्यापरकीयत्वस्य वा विवक्षणीयत्वात्, तस्य च दूषितत्वात् ।

अपि च सुखत्वेन सुखसाक्षात्कारः पुरुषार्थः, स च परमते न मोक्षेऽस्ति । एतेन परमते दुःखाभावस्य तदपरोक्षस्य वा पुरुषार्थत्वं निरस्तम् । तस्मादहं सुखीति स्वसम्बन्धिसुखानुभवः स्वस्य पुरुषार्थः । स च परमते नेति न मोक्षः पुरुषार्थः ॥

किं चायं मोक्षः कस्य पुरुषार्थः? किमहमर्थस्य? किं वा चिन्मात्रस्य? नाद्यः, त्वन्मतेऽहमर्थस्य मुक्त्यनन्वयात् । नान्त्यः, अहं मुक्तः स्यामितिच्छावच्चिन्मात्रं मुक्तं स्यादितीच्छाया अदर्शनात् । उक्तं चैतदहमर्थस्यानात्मत्वभङ्गे । किं च सुखस्य दुःखाभावमात्रत्वे वैशेषिकमोक्षवदपुमर्थता । अतिरेके सद्वितीयत्वम् । अपि चात्मनः सुखमात्रत्वे प्रकाशमात्रत्वे च सुखप्रकाशाभावेनापुमर्थत्वम् । उभया-त्मकत्वे चाऽखण्डत्वहानिः । किं च दुःखाभावस्य सुखस्य च तत्त्वतो दुःखाद्भेदेऽ-पसिद्धान्तः, अभेदे त्वपुमर्थता । किं च स्वप्रकाशस्य सुखस्य स्वतः स्फुरणेऽपि दुःखाभावस्यास्फुरणादपुमर्थतेतिदिक् । निर्विशेषसुखस्य पुरुषार्थत्वभङ्गः ॥ ३ ॥

## अद्वैतसिद्धिः

ननु त्वन्मते मुक्तौ न दुःखोच्छेदमात्रम्, किन्तु निरतिशयानन्दस्फुरणमपि । तदुक्तम्–

'तस्मादविद्यास्तमयो नित्यानन्दप्रतीतितः ।
निःशेषदुःखोच्छेदाच्च पुरुषार्थः परो मतः ॥' इति ।

तत्र न सुखात्मता तावत्पुरुषार्थः, सुखी स्यामितिवत् सुखं स्यामितीच्छाया अदर्शनात्, पुमर्थताया इच्छानियम्यत्वात् । अन्यथा बौद्धमतसिद्धात्मनाशादिरपि पुमर्थः स्यात् । अत एव नापरकीयं सुखं पुमर्थः, तथेच्छाविरहात्, गौरवाच्च । सुखसाधने परकीयेऽपि स्वकीये पुमर्थत्वस्यापरकीयेऽप्यस्वकीये अपुमर्थत्वस्य च दर्शनेन इष्टत्वाविशेषात् । सुखेऽपि तत्कल्पनाच्च । दुःखतत्साधनयोः स्वकीयतयैवापुमर्थत्वस्य दर्शनेन सुखादेरपि तथैव पुरुषार्थत्वाच्चेति चेन्न । सुखादौ हि पुमर्थता नापरकीयत्वप्रयुक्ता, नापि स्वकीयत्वप्रयुक्ता, गौरवात् । किन्तु साक्षात्क्रियमाणतया, सम्बन्धस्य चानित्यत्वसाधनपारतन्त्र्यादेरिवावर्जनीय- सन्निधिकत्वात् । न च ईश्वरस्याप्यस्मदादिसुखं पुमर्थः स्यादिति वाच्यम्, हेयतया अज्ञातत्वे सतीत्यस्यापि तत्र प्रयोजकत्वादीश्वरादिना चात्मादिसुखस्य हेयत्वेनैव ज्ञानात् । स्वरूपसुखे चेष्टापत्तेः । न च गौरवम्, स्वसंबन्धित्वेन पुमर्थतावादिनोऽपि निलीनसुखे पुरुषार्थतानिवृत्त्यर्थं तथावश्यं वर्णनीयत्वात् ।

यत्तु साक्षात्कारेऽपि स्वकीयतया पुरुषार्थतापक्षे मुक्तस्य सुखसाक्षात्काररूपतया तं प्रत्यपि तस्यापुरुषार्थतापत्तिः, स्वेतरासम्बन्धित्वेन स्वस्य पुरुषार्थत्वे मुक्तस्वरूपेण सुखेन संसारीतरासंबन्धेन संसारिणः पुरुषार्थप्रसङ्गः इति, तन्न । साक्षात्क्रियमाणत्वेनैव हि पुमर्थता । मुक्तसुखसाक्षात्कारस्य तं प्रति पुमर्थत्वेऽपि न संसारिणस्तथा, तं प्रत्यभासमानत्वाद्, भाने वाऽसंसारित्वेनेष्टापत्तिः । यत्तु प्रत्यक्प्रकाशमानत्वेन सुखं पुमर्थः इति, तदप्येतेन व्याख्यातम् । प्रत्यक्प्रकाशमानत्वेन साक्षात्क्रियमाणताया एवोक्तेः । यत्तु सुखत्वेन प्रकाशमानं सुखं पुमर्थः, न च तत्परमते मोक्षेऽस्ति इति, तन्न, साक्षात्क्रियमाणत्वेनैवातिप्रसङ्गनिरासे अधिकोक्तेर्गौरवकरत्वात् ॥

(अद्वैतसिद्धिः)

ननु कस्यायं मोक्षः पुमर्थः? किमहमर्थस्य? आहोस्विच्चिन्मात्रस्य? नाद्यः, त्वन्मतेऽहमर्थस्य मुक्त्यनन्वयात् । नान्त्यः, 'अहं मुक्तः स्या'मितिवच्चिन्मात्रं मुक्तं स्यादितीच्छाया अननुभवादिति चेन्न अहमर्थगतं चिदंशं मुक्तिकालान्वयिनं प्रति पुमर्थस्य मोक्षे संभव इत्युक्तप्रायत्वात् । न च सुखस्य दुःखाभावमात्रत्वे वैशेषिकमोक्षवदपुमर्थता, अतिरेके सद्वितीयत्वमिति वाच्यम्, दुःखाभावातिरेकेऽप्यात्मानतिरेकात् । न च आत्मनः सुखमात्रत्वे प्रकाशमात्रत्वे वा सुखप्रकाशाभावेनापुमर्थत्वम्, उभयात्मकत्वे चाखण्डार्थत्वहानिरिति वाच्यम्, सुखप्रकाशयोरेकात्मरूपतया उभयत्वस्यैवाभावात् । न चार्थभेदाभावे सुखप्रकाश इति सहप्रयोगायोगः, अविद्याकल्पितदुःखजडात्मकत्वरूपव्यावर्त्यभेदेन तदुपपत्तेः । यत्तु दुःखाभावस्य सुखस्य च तत्त्वतो दुःखाद्भेदे अपसिद्धान्तः, अभेदे त्वपुमर्थता इति, तन्न, दुःखस्य कल्पितत्वेन तद्भेदस्य तत्समानयोगक्षेमतया तात्त्विकत्वाभावेनापसिद्धान्ताभावात् । यत्तु स्वप्रकाशस्य सुखस्य स्वतः स्फुरणेऽपि दुःखाभावस्यास्फुरणादपुमर्थता इति, तन्न, दुःखाभावस्यात्मानतिरेकेणात्माभिन्ने सुखे स्फुरति तस्यापि स्फुरणात्, तत्त्वेनास्फुरणस्याप्रयोजकताया उक्तत्वात् । तस्मात्स्वप्रकाशचिदभिन्नं सुखं पुमर्थः ॥ इति चिन्मात्रस्य मोक्षभागित्वोपपत्तिः ॥ इत्यद्वैतसिद्धौ मुक्तेरानन्दरूपत्वेन पुरुषार्थत्वम् ॥

## न्यायामृततरङ्गिणी

**परकीयेपीति ॥ अनेकभोग्यगृहादौ ॥ अपरकीयेपीति ॥ चन्द्रमण्डलादौ ॥ ईश्वरादीनामिति ॥ न च हेयतयाऽज्ञातत्वे सतीति विशेषणमिति वाच्यम् । गौरवात् । न च निषिद्धसुखे प्रवृत्त्यर्थं तवापि तदावश्यकमिति वाच्यम् । निषिद्धसुखे ह्यपुरुषार्थत्वान्न प्रवृत्तिः । किन्तु बलवदनिष्टाननुबन्धित्वज्ञानादेस्तत्प्रयोजकस्याभावात् । येषान्तु तदस्ति ते प्रवर्तन्त एव ॥ उपलब्धमिति ॥ साक्षात्कृतम् ॥ साधनेति ॥ स्रगादिसाधनजन्यत्वम् ॥ सुखं म इति ॥ स्वकीयत्ववदनित्यत्वादेरप्रार्थ्यमानत्वान्न तस्य पुरुषार्थकोटिनिवेशः । तन्मते स्वरूपसुखतदुपलम्भयोर्निर्विशेषाभेदेन स्वरूपसुखे उपलब्धत्वाभावाच्च मुक्तेरानन्दरूपत्वेन पुरुषार्थत्वविचारः ॥ सुखप्रकाशाभावेनेति ॥ सुखप्रकाशयोर्विशेषाभावे एकतरपरिशेषापातादित्यर्थः ॥ दुःखाभावस्यास्फुरणादिति ॥ दुःखाभावत्वेनेत्यर्थः ॥ एतेन दुःखाभावस्यात्मानतिरेके सुखे स्फुरति सोपि स्फुरत्येवेति निरस्तम् । प्रमेयत्वादिना तत्स्फुरणस्याप्रयोजकत्वात् ॥ ॥ निर्विशेषसुखस्य पुरुषार्थत्वभङ्गः ॥**

## न्यायामृतकण्टकोद्धारः

पुरुषार्थानिरुक्त्याऽपि मोक्षं दूषयितुमनुवदति । यच्चोच्यत इति ॥ दुःखनिवृत्तिमात्रस्यापुरुषार्थत्वादिति भावः । अदर्शनेऽपि मयैवैतादृशीच्छा कल्प्यत इत्यत आह ॥ स्वतः पुरुषार्थइति ॥ विपक्षे बाधकमाह ॥ अन्यथेति ॥ गौरवाच्चेति ॥ परकीयत्वगर्भत्वादिति भावः । किं च परकीयस्यापरकीयस्य वा स्वकीयस्यैव सुखसाधनस्य पुरुषार्थत्वदर्शनात् तद्वदेव सुखस्यापि पुरुषार्थत्वं वक्तव्यम् । इष्टत्वाविशेषात् । न तु परकीयत्वमपि निवेश्यमित्याह ॥ सुखसधन इति ॥ ईश्वरादीनामिति ॥ न चेश्वरेणास्मदादिसुखस्य हेयत्वेनैव ज्ञानान्न तदापरोक्ष्यं तस्य पुरुषार्थः । स्वरूपसुखे चेष्टापत्तिरिति वाच्यम् । तथा सतीश्वरस्य स्वरूपसुखापरोक्ष्येण मोक्षप्रसङ्गात् । न च तस्यास्ति मोक्षः । तथात्वे संसारिण एव मोक्ष इति त्वन्मतभङ्गापत्तेः । ईश्वरस्याविद्याऽभावेन तन्निवृत्तिरूपमोक्षासम्भवाच्च ॥ एतेनेति ॥ ईश्वरस्यापि पुरुषार्थप्रसङ्गेनेत्यर्थः । तथा सम्बन्धो न स्यादेवेत्यत आह ॥ सम्बन्धस्त्विति ॥ किं च स्वसम्बद्धस्यैव तस्य पुरुषार्थत्वं वक्तव्यम् । न च सम्बन्धोऽवर्जनीयसन्निधिरिति वाच्यम् । तथा सत्यनित्यत्वादाविव सम्बन्धे प्रार्थना न स्यादित्याह ॥ सुखमिति ॥

॥ किञ्चापरकीयस्येति ॥ न च साक्षात्क्रियमाणत्वेन हि पुमर्थता । मुक्त साक्षात्कारस्य तं प्रति पुमर्थत्वेऽपि न संसारिणं प्रति । तं प्रत्यभासमानत्वात् । भाने वाऽसंसारित्वेनेष्टापत्तेरिति वाच्यम् । एवं हि सुखसाधनस्यापि साक्षात्क्रियमाणत्वे पुरुषार्थत्वं स्यात् । ईश्वरादेः पुरुषार्थत्वप्रसङ्गाच्च । विवरणे विषयैरपि स्वरूपसुखमभिव्यज्यत इत्युक्तत्वेन संसारिणं प्रत्यभानस्यासिद्धेः । सुषप्तौ तद्भानस्य त्वयाऽप्यङ्गीकाराच्च ।

॥ एतेनेति ॥ स्वरूपसतस्तस्य पुरुषार्थत्वाभावेन तदपरोक्षस्य च दुःखाभावात्वप्रकारकस्य मोक्षेऽसम्भवेनेत्यर्थः । ननु प्रकारान्तरेण पुरुषार्थस्वरूपस्य वक्तुमशक्यत्वादनन्यगत्योक्तविधमेव पुरुषार्थत्वं वक्तव्यमित्याशंकां परिहरन्नुपसंहरति ॥ तस्मादिति ॥

॥ किञ्चायमिति ॥ न चाहमर्थगतचिदंशस्य मुक्तिकालान्वयित्वात् तं प्रति पुमर्थत्वं मोक्षस्येति वाच्यम् । तथा सति "चिदंशो मुक्तः स्यात्" इतिच्छाऽऽपत्त्या "अहं मुक्तः स्याम्" इतिच्छाऽनुपपत्तेः ॥ उक्तं चैतदिति ॥ अहमर्थस्येच्छया चिन्मात्रस्य मोक्ष इत्ययुक्तमित्यर्थः ॥ अतिरेके सद्वितीयत्वमिति ॥ न च सुखस्य ब्रह्मस्वरूपत्वान्न सद्वितीयत्वापत्तिरिति वाच्यम् । तथाऽपि दुःखाभावस्य ब्रह्मस्वरूपत्वाभावेन सद्वितीयत्वापरिहारात् ॥ उभयात्मकत्वे चेति ॥ न च सुखप्रकाशयोरकात्मरूपतयोभयस्यैवाभाव इति वाच्यम् । तथा सति सुखप्रकाश इति सहप्रयोगो न स्यात् । न च स्वाविद्याकल्पित दुःखजडात्मकत्वरूपव्यावर्त्यभेदेन तदुपपत्तिरिति वाच्यम् । अविद्याया एवाप्रामाणिकत्वेन तत्कल्पितदुःखादिभेदस्यापि तथात्वेन तदर्थं सहप्रयोग इत्यस्यायुक्तत्वात् । व्यावर्त्यविशेषसमर्पणं विना व्यावृत्तेरेव वक्तुमशक्यत्वाच्च ।

॥ किञ्च दुःखाभावस्येति ॥ न च दुःखतदभावयोः कल्पितत्वेन तद्भेदस्य तत्समानयोगक्षेमतया तात्त्विकत्वाभावेनापसिद्धान्ताभाव इति वाच्यम् । दुःखादेः कल्पितत्वे प्रमाणाभावस्योक्तत्वेनापसिद्धान्त-

**स्यापरिहार्यत्वात् । किञ्च स्वप्रकाशस्येति ॥ न च सुखस्फुरणस्यैव पुमर्थतया दुःखाभावास्फुरणम-प्रयोजकमिति वाच्यम् । अनुभूयमानस्यैव पुरुषार्थत्वेनास्फुरणे दुःखाभावस्य पुमर्थत्वं न स्यात् । तस्मात् यत्किञ्चदेतदिति ॥ इति निर्विशेषसुखस्य पुरुषार्थत्वभङ्गः ॥**

## न्यायामृतप्रकाशः

यच्चोच्यत इति ॥ मायावादिभिरिति शेषः । परमपुरुषार्थत्वे नित्यानन्दप्रतीतितः निःशेषदुःखोच्छेदाच्चेति हेतुद्वयम् । अथवा चशब्दोप्यर्थे । वैशेषिकाभिमतात्केवलनिःशेषदुःखोच्छेदादप्यस्मन्मतेऽविद्यास्तमयः परः पुरुषार्थः । तत्र हेतुर्नित्यानन्दप्रतीतित इति । तथा चानया कारिकया न वैशेषिकादीनामिवेत्युक्तप्रमेयसङ्ग्रह इति मन्तव्यम् । ननु सुखं स्यामित्येवेच्छा भवतीति चेत्तत्राह ॥ स्वत इति ॥ तथा च प्रकारान्तरायोगात् सुखीस्या-मित्येवमेवेच्छाया दर्शनात् स्वकीयं स्वसम्बन्धीति यावत् सुखं पुरुषार्थ इत्येव वक्तव्यम् । तच्च त्वन्मते न सभवति। सुखस्य सत्त्वेन सम्बन्धघटितस्वकीयत्वस्य त्वन्मतेऽसम्भवादिति पूर्वग्रन्थस्य भावो वर्णनीयः । अन्यथा अत एवेत्यादिग्रन्थासङ्गतेरित्यवधेयम् । ननु स्वकीयं सुखं पुरुषार्थ इति नोच्यते । किन्नामापरकीयं सुखं पुरुषार्थ इत्येवोच्यते तच्च स्वरूपत्वेपि युज्यत इत्यत आह ॥ अत एवेति ॥ अत एवेत्युक्तं विशदयति ॥ तथेति ॥ अपरकीयं सुखं मे स्यादितीच्छाया अभावादित्यर्थः ॥ गौरवाच्चेति ॥ स्वकीयत्वस्य भावरूपत्वेन तदपेक्षयाऽपरकीयत्वस्याभावरूपत्वेन गुरुत्वादित्यर्थः । इतोपि नोक्तापरकीयत्वस्य पुरुषार्थत्वप्रयोजकत्वं युक्त-मित्याह ॥ सुखसाधन इति ॥ सुखवत्तत्साधनमपि तावत्पुरुषार्थः । सुखवत्तत्साधनस्यापीष्टत्वाविशेषात् । एवं च यथा देवदत्तयज्ञदत्ताभ्यां मिलित्वा निर्मितः प्रासाद उभयोरपि सुखसाधनं भवति । तत्र देवदत्तस्य सुखसाधनं न स्यात् । यज्ञदत्तसम्बन्धित्वेनापरकीयत्वस्याभावात् । अस्मदुक्तं स्वकीयत्वरूपं पुरुषार्थत्वप्रयोजकमस्ति । एवं च सुखसाधने परकीयत्वेन त्वदुक्तप्रयोजकशून्येपि प्रासादे स्वकीयेऽस्मदुक्तप्रयोजकोपेते देवदत्तसुखसाधनत्वेन पुरुषार्थत्वस्य दर्शनात् व्यतिरेकव्यभिचारस्त्वत्प्रयोजकस्य । अस्मदुक्तस्य त्वन्वयव्याप्तिरस्ति । तथाऽपरकीये परोक्तप्रयोजकवति चन्द्रमण्डलतक्षकचूडामण्यादौ परकीये स्वकीयत्वाभावेनापुरुषार्थत्वदर्शनात्, तस्य पुरुषकृत्यु-त्पाद्यत्वाभावेनापुरुषार्थत्वात् त्वदुक्तप्रयोजकस्यान्वयव्यभिचारः । अस्मदुक्तस्य तु व्यतिरेकव्याप्तिरस्तीति भावः । नन्वेतावता सुखसाधननिष्ठपुरुषार्थत्व एव स्वकीयत्वापरकीयत्वयोः प्रयोजकत्वाप्रयोजकत्वे न तु सुख इत्यत आह ॥ इष्टत्वाविशेषादिति ॥ तथैवेति ॥ स्वकीयत्वेनैव दुःखवैपरीत्येन पुमर्थत्वादित्यर्थः । संसारिणः पुरुषार्थ-प्रसङ्गादित्यन्वयः । मुक्तस्वरूपसुखे संसारिणं प्रति परकीयत्वोपाधेरविद्यान्तःकरणादेर्नष्टत्वेन स्वरूपसुख-स्यैकत्वादिति भावः ॥ सुप्तेति ॥ जाग्रन्मैत्रं प्रति सुप्तचैत्रस्वरूपसुखस्य परकीयत्वोपाधेरविद्यान्तःकरणादेः सुप्तौ विलयादित्याशयः ॥ एतेनेति ॥ ईश्वरादेरपि सुखापरोक्ष्यसद्भावेनानर्थप्रसङ्गेनेत्यर्थः । स्वर्गादीनां सुखसाधनानां पुरुषार्थत्वेपि सुखस्य किमायातमित्यत आह ॥ इष्टत्वेति ॥ उपलब्धं साक्षात्कृतं स्वसम्बद्धं स्वकीयं । निर्विशेषे सम्बन्धासम्भवादिति भावः । सुखे उपलब्धत्वं स्वसम्बद्धत्वं चास्ति तत्र उपलब्धत्वमेव पुरुषार्थत्वप्रयोजकं न सम्बद्धत्वमिति कुत इत्यत आह ॥ सम्बन्धस्त्विति ॥ तत्र दृष्टान्तद्वयम् अनित्यत्वेत्यादि । सुखे अनित्यत्वरूपो धर्मोस्ति । तथा स्रगादिसाधनाधीनत्वरूपसाधनपारतन्त्र्यरूपश्च धर्मोस्ति । एवं च यथा सुखनिष्ठयोस्तयोर्न

(प्रकाशः)

धर्मयोः प्रयोजकत्वम् एवं सुखनिष्ठसम्बन्धस्याप्यवर्जनीयसन्निधित्वमेव न प्रयोजकत्वम् । न चोपलब्धत्वेप्येव-मेवास्त्विति वाच्यम् । अन्वयव्यतिरेकाभ्यां सुखसाधने तस्य प्रयोजकत्वदर्शनेन सुखेपि तथा कल्पनात् । अत एवोक्तमुपलब्धानामेवेत्यादि । उपलब्धत्वमप्यप्रयोजकं परकीय सुखसाधने तत्कलत्रादौ स्वेनोपलब्धत्वसद्भावेपि तस्य स्वं प्रति पुरुषार्थत्वादर्शनात् । स्वकीयत्वमेव प्रयोजकमतो नावर्जनीयसन्निधित्वं तस्येत्याशयेन दूषणान्तर-माह ॥ परकीयेति ॥ तर्हि सुखनिष्ठानित्यत्वादेरपि पुरुषार्थत्वप्रयोजकत्वापात इत्यत आह ॥ सुखं म इति ॥ सम्बन्ध इवेति ॥ सुखं म इति षष्ठ्यर्थसम्बन्धस्यापि प्रार्थनाकोटिनिवेशवदनित्यत्वादौ तदभावादित्यर्थः । अपरकीयसुखसाक्षात्कारः स्वसम्बद्धः पुरुषार्थो वा स्वेतरासम्बद्धः पुरुषार्थो वा अपरकीयसुखसाक्षात्काररूपत्वं वा । नाद्य इत्याह ॥ किं चेति ॥ अपुरुषार्थत्वापत्तेरिति ॥ स्वसम्बद्धत्वाभावादित्यर्थः । नापि द्वितीय इत्याह ॥ नापीति ॥ कुतो नेत्यत आह ॥ मुक्तेति ॥ संसारीतरेति ॥ मुक्तस्य सुखसाक्षात्काररूपत्वेन स्वशब्दोक्त-संसारीतरमुक्तासम्बद्धत्वान्मुक्तस्वरूपसुखे स्वेतरासम्बन्धत्वसद्भावादित्यर्थः । नापि तृतीय इत्याह ॥ नापीति ॥ परमत इति ॥ मोक्षे त्वप्रत्ययार्थभूतधर्माद्यभावादित्यर्थः । किं च सुखं केवलं दुःखाभावमात्ररूपं वा तदतिरिक्तं वा । नाद्य इत्याह किं चेति । द्वितीयेत्वाह ॥ अतिरेक इति ॥ दुःखाभावव्यतिरिक्तवस्तुप्राप्त्या सद्वितीयत्वमित्यर्थः । अपि च मुक्तात्मा किं सुखमात्रं उत प्रकाशमात्रं यद्वा सुखप्रकाशोभयरूपम् । नाद्यः । सुखप्रकाशाभावेनापुरुषार्थत्वापत्तेः । न द्वितीयः । सुखप्रकाशत्वाभावेन केवल-प्रकाशत्वमात्रस्यापुरुषार्थत्वात् । न तृतीयः । धर्मद्वयात्मकत्वे शुद्धात्मरूपमुक्तस्य सखण्डत्वापत्तिरित्याह ॥ अपि चेत्यादिना ॥ अस्फुरणादिति ॥ त्वया दुःखाभावस्यापि स्वप्रकाशत्वानङ्गीकारादिति भावः ॥ ॥ निर्विशेषसुखस्य पुरुषार्थत्वभङ्गविवरणम् ॥

## ४. जीवन्मुक्तिभङ्गः

**यच्चोच्यते तत्त्वसाक्षात्कारेण नष्टाविद्योऽनुवृत्तदेहादिप्रतिभासश्च जीवन्मुक्तः । न च तत्त्वज्ञानादविद्यानाशे सद्यः शरीरादि निवर्तेतेति वाच्यम् । चक्रभ्रमणवद् भयकंपादिचाविद्यासंस्कारादपि तदनुवृत्तेः । न च क्रियाज्ञानयोरेव संस्कारः, निःसारितपुष्पायां तत्पुटिकायां पुष्पवासनादर्शनात् । विमतो नाशः संस्कारव्याप्तः, संस्कारनाशान्यत्वे सति नाशत्वात्, ज्ञाननाशवदित्यनुमानाच्च । संस्कारः कार्योऽपि ध्वंस इव निरुपादानः, अविद्येव च शुद्धात्माश्रित इति नाविद्यापेक्षः । संस्कार-निवृत्तिश्चाऽऽवृत्तात्तत्त्वसाक्षात्कारात् । यद्वा अविद्यालेशानुवृत्त्या तदनुवृत्तिरिति ।**

**अत्र ब्रूमः न तावत्संस्कारपक्षो युक्तः । भावकार्यमध्यस्तं संस्कारं देहादिकं तद्धेतुप्रारब्धकर्मादिकं च प्रत्युपादानत्वेनाज्ञानानुवृत्त्यापातात् । सर्पादिभ्रमसंस्कारस्तु**

सत्यो न त्वज्ञानोपादानकः । पूर्वसाक्षात्कारानिवृत्तस्याध्वस्तस्य तदनधिकविषयेणाऽऽवृत्तेनाप्युत्तरेण ज्ञानेन निवृत्त्यदर्शनाच्च । जीवन्मुक्तस्याविद्यावरणाभावेन तदा निरतिशयानन्दस्फूर्त्यापाताच्च । संस्कारस्तु नावरणमिति त्वयैवोक्तम् । एतेन तत्त्वे ज्ञातेऽपि द्विचन्द्रादिवद्दोषाद् बाधितानुवृत्तिरिति निरस्तम्, तत्रेवात्र तत्त्वज्ञानानिवर्त्यदोषाभावात् । लेशपक्षेऽपि न तावल्लेशोऽवयवः, अज्ञानस्य निरवयवत्वात् । एतेनाविद्यैव दग्धपटन्यायेन कंचित्कालं तिष्ठतीति निरस्तम् । निरवयवे दग्धपटन्यायासम्भवात् । अनुवृत्तस्य ज्ञानानिवर्त्यत्वेन सत्त्वापाताच्च । अथ मतं लेशो नामाऽऽकारः । "इन्दो मायाभि"रित्यादिश्रुत्या अविद्याया अनेकाकारत्वेन प्रपंचे परमार्थसत्त्वादिभ्रमहेत्वाकारनिवृत्तावपि देहाद्यपरोक्षप्रतिभासहेत्वाकारोऽनुवर्तते । विरोधिनि तत्त्वज्ञाने सत्यपि तदनुवृत्तिश्चाऽऽरब्धकर्मभिर्ज्ञानप्रतिबन्धात् । कर्मानुवृत्तिश्च तद्धेत्वज्ञानलेशानुवृत्तेः । उक्तं च–

अविद्यालेशशब्देन मोहाकारान्तरोक्तितः ।
ज्ञानस्य प्रतिबन्धाच्च प्रबलारब्धकर्मभिः ॥ इत्यादि ।

आकारिनिवृत्तावप्याकारस्यानुवृत्तिर्व्यक्तिनिवृत्तावपि जातेरिव युक्तेति ।

तत्राऽऽकारो जातिशक्त्यादिरूपो धर्मो वा ? स्वर्णस्य कुण्डलादिरिवावस्थाविशेषो वा ? अज्ञानव्यक्त्यन्तरं वा ? नाद्यद्वितीयौ, तयोर्देहादिभ्रमोपादानत्वेऽविद्यात्वापातात् । अनुपादानत्वे चोपादानन्तराभावेन देहादिभ्रमायोगात् । आत्मान्यत्वेन ज्ञाननिवर्त्यत्वेन च तयोरविद्यातत्कार्ययोरन्यतरत्वावश्यम्भावेनाज्ञाने निवृत्ते स्थित्ययोगाच्च । धर्मे उपादानत्वस्यावस्थायां चावस्थावन्तं विना स्थितेरयोगाच्च । न तृतीयः, अज्ञानैक्यपक्षे तदयोगात् । तद्भेदपक्षेऽपि व्यक्त्यन्तरं पूर्वाज्ञानादधिकविषयम् ? न वा? नाद्यः, निर्विशेषे तदयोगात् । नान्त्यः, एकस्मिन्नपि विषये यावन्ति ज्ञानानि तावन्त्यज्ञानानीति मतस्य प्रतिकर्मव्यवस्थाभङ्गे दूषितत्वात् । चरमसाक्षात्कारान्यूनविषयसाक्षात्कारस्य पूर्वमपि सत्वे पश्चादिव जीवन्मुक्तावपि

तदज्ञानहेतुकाध्यासायोगाच्च । न च पूर्वज्ञानस्य कर्मणा प्रतिबन्धादज्ञानानिवर्तकतेति युक्तम्, ज्ञानस्य स्वप्रागभावनिवर्तन इवाज्ञाननिवर्तनेऽपि प्रतिबन्धायोगात् । स्थिते लेशे कर्मानुवृत्तिस्तदनुवृत्तौ च ज्ञानस्य प्रतिबन्धेन लेशस्थितिरित्यन्योन्याश्रयाच्च । न च ''भूयश्चान्ते विश्वमायानिवृत्ति''रित्यत्र भूय इति श्रवणात् लेशानुवृत्तेर्मानान्तरेणाधिगमान्न ज्ञप्तावन्योन्याश्रय इति वाच्यम्, तथापि स्थितावन्योन्याश्रयात् । श्रुतौ च भूयो योजनादित्यन्वयः । एतेन ब्रह्मज्ञानस्याप्रायणमनुवृत्तिहेतुज्ञानार्थयज्ञादिकर्मभिः प्रतिबन्ध इति निरस्तम् । प्रतिबन्धायोगादेरुक्तत्वात् । अन्यथा शुक्तिज्ञानमपि तदज्ञानकार्येण भ्रमादिना उत्तरं ब्रह्मज्ञानमप्यारब्धकर्मणा प्रतिबध्येत । तदा भोगेन कर्म क्षीणमिति चेत्, न, भोगैकनाश्यत्वे ज्ञानानिवर्त्यत्वेन सत्त्वापातात् ।

एतेनाज्ञानस्यानेकशक्तित्वेनारब्धकर्मतत्कार्येतराध्याससम्पादनशक्तिमात्रस्य वा प्रपंचे पारमार्थिकसत्यत्वादिभ्रमहेतुशक्तिमात्रस्य वा प्रतिबन्धो लेशानुवृत्तत्वेन विवक्षित इति निरस्तम् । पूर्वज्ञानस्य शक्तिमात्रप्रतिबन्धकत्वे तदनधिकविषयस्य चरमस्यापि तत्त्वापत्त्या कदाप्यज्ञानहान्यसिद्धेः ।

तस्मात्परमते मोहकार्यत्वादखिलस्य च
ज्ञानेन मोहनाशाच्च जीवन्मुक्तिर्न युज्यते ॥

अस्माकं तु अपरोक्षज्ञानिनोऽपि स्वयोग्यपरमानन्दहेतुपरमकाष्ठापन्नभक्त्यभावे तत् साध्यस्य मोचकस्येश्वरप्रसादस्याभावेन प्रारब्धकर्मणा संसारानुवृत्त्या जीवन्मुक्तिः । भावे तु प्रसादस्यापि भावेन निःशेषदुःखनिवृत्तिविशिष्टस्वतोनीचोच्चभावापन्नस्वरूपानन्दाविर्भावरूपामुक्तिर्युक्तेति ॥ जीवन्मुक्तिभङ्गः ॥ ४ ॥

## अद्वैतसिद्धिः

तच्च जीवन्मुक्तानां स्वानुभवसिद्धम् । जीवन्मुक्तश्च तत्त्वज्ञानेन निवृत्ताविद्योऽप्यनुवृत्तदेहादिप्रतिभासः । न च तत्त्वज्ञानादविद्यानाशे सद्यःशरीरपातापत्तिः, निवृत्तसर्पभ्रमस्यापि

(अद्वैतसिद्धिः)

संस्काराद् भयकम्पानुवृत्तिवत्, दण्डसंयोगनाशेऽपि चक्रभ्रमणवच्च संस्कारानुवृत्तेरविद्यानिवृत्तावपि तत्कार्यानुवृत्तिसंभवात् । न च कियाज्ञानयोरेव संस्कार, नान्यस्येति वाच्यम्, निःसारितपुष्पायां सम्पुटिकायां पुष्पवासनादर्शनात्, विमतो नाशः संस्कारव्याप्तः, संस्कारनाशान्यत्वे सति नाशत्वात्, ज्ञाननाशवत् इत्यनुमानाच्च, संस्कारः कार्योऽपि ध्वंस इव निरुपादानकः अविद्येव च शुद्धात्माश्रित इति नाविद्यासापेक्षः । न च भावकार्यस्याध्यस्तस्य संस्कारदेहादितद्धेतुप्रारब्धकर्मादेः स्थित्यर्थः तदुपादानाज्ञानानुवृत्त्यापात इति वाच्यम्, विनश्यदवस्थस्य समवायिकारणं विना स्थितिदर्शनात् । न च क्षणमात्रस्थितावपि कथं बहुक्षणस्थितिरिति वाच्यम्, सत्युपपादके क्षणगणकल्पनाया अप्रयोजकत्वात् । तत्र क्षणमात्रं स्थितिः, समसमयस्याजनकत्वात्, अत्र तु प्रतिबन्धकाभावसहकृतहेतोस्तावत्कालमभावात् । अत एव पूर्वज्ञानानिवृत्तस्याध्यस्तस्य तदनधिकविषयेण कथं निवृत्तिरिति निरस्तम्, प्रतिबन्धकाभावसहकारासकाराभ्यां विशेषात् । जीवन्मुक्तिदशायामानन्दस्फूर्त्यापादनमिष्टमेव, तत्त्वे ज्ञाते द्विचन्द्रादिवद्दोषाद्बाधितानुवृत्तिसंभवाच्च । न च तत्रेवात्र ज्ञानानिवर्त्यदोषाभावेन वैषम्यम्, यावत्प्रतिबन्धकसत्त्वं ज्ञानानिवर्त्यस्य दोषस्यात्रापि संभवात्, सर्वज्ञानानिवर्त्यस्य तस्य कुत्राप्यसंप्रतिपत्तेः । तदुक्तं– 'न हि जात्यैव कश्चिद् दोषोऽस्ती'ति ।

यद्वा अविद्यालेशानुवृत्त्या देहाद्यनुवृत्तिः । ननु लेशो नावयवः, अज्ञानस्य निरवयवत्वाद्, अत एवाविद्या दग्धपटन्यायेन तावत्तिष्ठतीत्यपि निरस्तम्, निरवयवे एतन्न्यायासंभवादिति चेन्न, आकारस्यैव लेशशब्दार्थत्वाद्, 'इन्द्रो मायाभिः पुरुरूप ईयत' इत्यादिश्रुत्या अविद्याया अनेकाकारत्वावगमात् । आकारिनिवृत्तावप्याकारस्यानुवृत्तिर्व्यक्तिनिवृत्तावपि जातेरिव । ननु कोऽयमाकारो नाम जातिर्वा? शक्त्यादिरूपो धर्मो वा? सुवर्णकुण्डलादिवदवस्थाविशेषो वा? नाद्यौ, तयोर्देहादिभ्रमोपादानत्वे अविद्यात्वापातात्, अनुपादानत्वे च उपादानान्तराभावेन देहादिभ्रमोत्पत्त्ययोगात् आत्मान्यत्वेन ज्ञाननिवर्त्यत्वेन चाविद्यातत्कार्यान्यतरत्वावश्यंभावेनाज्ञाने निवत्ते स्थित्ययोगाच्च । अत एव न तृतीयः । अवस्थावन्तं विना अवस्थायाः स्थित्ययोगादिति चेन्न, अनेकशक्तिमदविद्यायाः प्रपञ्चे पारमार्थिकत्वादिभ्रमहेतुशक्तेः प्रपञ्चे अर्थक्रियासमर्थत्वसम्पादकशक्तेश्च प्रारब्धकर्मसमकालीनतत्त्वसाक्षात्कारेण निवृत्तावपि अपरोक्षप्रतिभासयोग्यार्थाभासजनिकायाः शक्तेरनुवृत्तेः तद्वती अविद्यापि

(अद्वैतसिद्धिः)

तिष्ठत्येवेति नोक्तदोषावकाशः । न चाविद्यायां सत्यां कथं मुक्त इति व्यपदेशः? शक्तिनाशमात्रात् । अत एव समये सर्वशक्तिमदज्ञाननाशः तज्जातीयेनाप्रतिरुद्धेन प्रत्ययेन । तथा च श्रुतिः– 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्ति'रिति । न च भूय इत्यस्य योजनादित्यनेनान्वयात् न लेशानुवृत्तावस्याः श्रुतेर्मानतेति वाच्यम्, विशेषणान्वयापेक्षया विशेष्यान्वयस्याभ्यर्हितत्वात् तत्त्वभावादित्यनेन व्यवधानाद् अन्त इति पदवैयर्थ्याच्च विपरीतयोजनस्यासङ्गतेः । न च लेशस्थितौ कर्मानुवृत्तिः तदनुवृत्तौ च ज्ञानप्रतिबन्धेन लेशस्थितिरित्यन्योन्याश्रय इति वाच्यम्, न तावत् ज्ञप्तौ 'भूयश्चान्ते विश्वमायानिवृत्ति' रित्यादिश्रुतेरेव लेशानुवृत्तेरवगतत्वात्, नापि स्थितौ एककालीनत्वेन दोषाभावात् ।

यद्वा अज्ञानस्य सूक्ष्मावस्था लेशः । यथा 'तस्मात् फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् । उत्पत्तावपि पश्चादेरपूर्वं न ततः पृथक् ॥' इति वार्तिकेन यागे गतेऽपि यागसूक्ष्मावस्थारूपमपूर्वं यागे साधनतानिर्वाहकमङ्गीक्रियते, तथा अज्ञाने गतेऽपि तत्सूक्ष्मावस्थारूपो लेशो देहादिप्रतीत्यनुकूलः स्वीक्रियते, स्वर्गजनकताग्राहश्रुतेरिवात्रापि जीवन्मुक्तिश्रुतेस्तादृगर्थस्वीकारात् । तस्मादविद्यालेशानुवृत्त्या जीवन्मुक्तिरुपपन्नतरा ॥ इत्यद्वैतसिद्धौ जीवन्मुक्त्युपपत्तिः ॥

## न्यायामृततरङ्गिणी

**अज्ञानानुवृत्त्यापातादिति ॥ न च विनश्यदवस्थस्य समवायिकारणं विना स्थितिर्दृष्टेति वाच्यम् । क्षणमात्रस्थितावपि बहुकालं तदभावात् । न च सति प्रमाणे क्षणमात्रमिव बहुकालमपि स्थितिरस्त्विति वाच्यम् । तस्याभावात् । संस्कारादेरज्ञानानुपादानकत्वेप्युपपत्तेः । अत एवाह ॥ सर्पादाविति ॥ उत्तरेण ज्ञानेनेति ॥ न च प्रारब्धकर्मसहभावासहभावाभ्यां पूर्वोत्तरज्ञानयोर्विशेष इति वाच्यम् । ज्ञानस्य स्वप्रागभावनिवर्तन इवाध्यस्तनिवर्तनेप्यन्यानपेक्षेति वक्ष्यमाणत्वात् ॥ संस्कारस्त्विति ॥ अन्यथाऽविद्याऽसिद्धेः ॥ तत्रैवेति ॥ द्विचन्द्रादिभ्रमहेतोरङ्गुल्यवष्टम्भदोषस्य ज्ञानानिवर्त्यत्वात् । देहदिभ्रमहेतोर्दोषस्य संस्कारस्य तत्वज्ञाननाश्यत्वात् ॥ इन्द्रोमायाभिरिति ॥ एकस्यामविद्यायां मायाभिरिति बहुवचनस्यानेकाकारतात्पर्यकत्वात् ॥ श्रुतौ च भूयोयोजनादित्यन्वय इति ॥ ननु विशेषणान्वयापेक्षया विशेष्यान्वयोभ्यर्हित इति चेन्न । सकृन्निवृत्तस्य भूयो निवृत्त्ययोगेन तदन्वये बाधात् । न चान्त इति**

(तरङ्गिणी)

व्यर्थम् । परमात्मनो ध्यानात् भूय इन्द्रियवृत्तीनां योजनात् ध्यानपरिपाकरूपेन्ते सति तत्व-साक्षात्कारोत्थभगवत्प्रसादाद्विश्वमायानिवृत्तिरित्यर्थोपपत्तेः ॥ ब्रह्मज्ञानस्येति ॥ आप्रायणं मरणपर्यन्तं देहादेर्याऽनुवृत्तिस्तत्कारणैर्यज्ञादिकर्मभिर्ब्रह्मज्ञानस्य प्रतिबन्धः क्रियते । कर्मणां प्राबल्याभिधानार्थं ज्ञानस्येति । यत्तु कश्चिदाह । देहादिप्रतीत्यनुकूलाऽज्ञानस्य सूक्ष्मावस्था लेश इत्युच्यते । यथा यागस्य सूक्ष्मावस्थाऽपूर्वम् । तदुक्तं वार्तिके । तस्मात्फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् । उत्पत्तौ चापि पश्वादेरपूर्वं न ततः पृथगिति । तदसत् । तादृशापूर्वाङ्गीकारे श्रौतकारणाभावस्येवेह कस्यापि तदाक्षेपकस्याभावात् । देहादेरनाविद्यकत्वेनैव जीवन्मुक्ति-श्रुतेरुपपत्तेः । पूर्वज्ञानादनिवृत्तस्य लेशस्य तदनधिकविषयेणोत्तरज्ञानेनाप्यनिवृत्तेः ॥ भावे त्विति ॥ भक्तेरित्यनुषज्यते । प्रसादस्य मोचकत्वं तु मत्प्रसादात्तरिष्यसीत्यादिना भगवता बहुकृत्वः प्रतिपादितम् । ननु तावदेवास्य चिरं यावन्न विमोक्ष्येत् इति श्रुत्याऽस्योत्पन्नत्म-तत्वसाक्षात्कारस्य प्रारब्धक्षयमात्रमपेक्षणीयं कैवल्यसम्पत्त्यर्थमित्यर्थकया ज्ञानानन्तरं प्रसाद-विलम्बेन मोक्षविलम्बाभावः उच्यत इति चेन्मैवम् । बन्धको भवपाशेन भवपाशाच्च मोचक इति वचनात्परमेश्वरस्यैव मोचकत्वात् । लोके च प्रसन्नस्यैव मोचकत्वात्प्रसन्न एव भगवा-न्मोचकः । अत एवोक्तश्रुतिर्ज्ञानानन्तरं प्रारब्धक्षयातिरिक्तविलम्बं निषेधति । नत्वविलम्बितं प्रसादम् । अत एवाष्टादशेध्याये भगवद्गीतायां प्रसादस्य मोचकत्वमुक्तम् । अत एव न स्मृती-नामतत्परत्वम् । श्रुत्या विरोधाभावात् । दृष्ट्वैव तु मुच्यत इत्यादेस्तु मोचकप्रसादे न ज्ञानानपेक्षेत्येवंपरत्वमन्यत्र व्याख्यातम् ॥ जीवन्मुक्तिभङ्गः ॥ ४ ॥

## न्यायामृतकण्टकोद्धारः

निर्विशेषमुक्तिं दूषयित्वा जीवन्मुक्तिं दूषयितुमनुवदति ॥ यच्चेति ॥ अनुवृत्तदेहादिप्रतिभासमात्रस्य जीवन्मुक्तत्वे संसारदशायामपि तत्त्वं स्यात् । अत उक्तम् ॥ नष्टाविद्येति ॥ अविद्यानाशे निमित्तमुक्तम् ॥ तत्त्वसाक्षात्कारेणेति ॥ चक्रभ्रमणवदिति ॥ दण्डसंयोगनाशेऽपीति शेषः । भयकम्पेति ॥ "निवृत्त-सर्पभ्रमस्यापि" इति शेषः । ननु संस्कारस्यापि कार्यत्वेन सोपादानत्वादविद्यानिवृत्तौ कथं निरुपादानस्या-वस्थानमित्यत आह ॥ संस्कार इति ॥ तर्हि संस्कारनिवृत्तिः केनेत्यत आह ॥ संस्कारेति ॥ देहाद्यनुवृत्तौ कारणान्तरमाह ॥ यद्वेति ॥

॥ भावकार्यमिति ॥ अत्र संस्कारदेहादेः सोपादानत्वमवश्यं वक्तव्यम् । भावकार्यत्वादध्यस्तत्वाच्च । उपादानं चाज्ञानातिरिक्तं न सम्भवतीति अज्ञानानुवृत्तिः स्यादित्यर्थः । न च विनश्यदवस्थस्य समवायि-कारणं विनाऽपि स्थितिदर्शनादुपादानाज्ञानाभावेऽपि संस्काराद्यनुवृत्तिर्युक्तेति वाच्यम् । आद्यक्षणे समवायि-

(कण्टकोद्धारः)

कारणनाशे सति द्वितीयक्षणे कार्यनाशस्यैव जायमानत्वेन तदानीं स्थितेरेवाभावात् । विनश्यदवस्थस्य पुनः स्थितिरित्यस्य स्वव्याहतत्वाच्च । क्षणमात्रस्थितावपि बहुक्षणस्थितेः सर्वथोपादानं विनाऽयोगाच्च । न चोत्पादकसत्वे क्षणगणनाऽप्रयोजिकेति वाच्यम् । उत्पादकस्याज्ञानस्य तत्त्वसाक्षात्कारेण निवृत्तत्वेन तदभावात् । ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्त्या मिथ्यात्वमिति वदता संस्कारादेरपि तत्त्वज्ञाननिवर्त्यत्वस्यावश्यं वक्तव्यत्वाच्च । न च संस्कारे प्रतिबन्धकाभावसहकृततत्वज्ञाननिवर्त्यत्वाङ्गीकारात् प्रकृते च प्रतिबन्धकसत्त्वेनात्राविद्यानिवृत्तावपि न संस्कारादिनिवृत्तिरिति वाच्यम् । प्रतिबन्धकं हि भवदज्ञानं वा? तदतिरिक्तं वा? नाद्यः । तस्य तत्त्वज्ञानान्निवृत्तत्वेनाभावात् । अन्यथा जीवन्मुक्तत्वानापत्तेः । द्वितीयेऽपि किं तदज्ञानकार्यं न वा? नेति पक्षे तस्य मिथ्यात्वं न स्यात् । ब्रह्मेतरस्य सर्वस्याज्ञानकार्यत्वस्य त्वयाऽङ्गीकाराच्च । नाद्यः । उपादानीभूताज्ञाननिवृत्तौ तत्कार्यावस्थानस्यैवासम्भवेन प्रतिबन्धकसत्त्वस्य वक्तुमशक्यत्वात् । किंच प्रतिबन्धकमपि तदभावसहकृतेन तत्वज्ञानेन निवर्तते? अथवा प्रतिबन्धकान्तराभावसहकृतेन? नाद्यः । तथा सत्येतत् प्रतिबन्धकाभाव एतत् प्रतिबन्धकाभावस्य कारणत्वापत्तावात्माश्रयापत्तेः । न द्वितीयः । उक्तसहकारिविकल्पपरम्परयाऽनवस्थापत्तेः । तस्मात् प्रतिबन्धकाभावस्य सहकारित्वकल्पनमबोधविजृम्भितमिति यत्किञ्चिदेतत् ।

ननु सर्पाज्ञाननिवृत्तावपि सर्पादिभ्रमसंस्करानुवृत्तिवत् प्रकृतेऽपि संस्काराद्यनुवृत्तिरस्त्वित्यत आह ॥ सर्पादीति ॥ किञ्चोत्तरेण साक्षात्कारेण संस्कारनिवृत्तिः किं पूर्वादधिकविषयत्वाद्वा? सहकारिसमवहितत्वाद्वा? नाद्यः । तथा सति निर्विशेषत्वभङ्गापत्तेः । नापि द्वितीयः । सहकारिसमवधानस्य दूषितत्वादित्यभिप्रेत्याह ॥ पूर्वसाक्षात्कारेति ॥ जीवन्मुक्तस्येति ॥ न चेष्टापत्तिरिति वाच्यम् । तथा सति वैषयिकसुखार्थं भिक्षाटनादिप्रवृत्तिर्न स्यात् । तत्रैवात्रेति ॥ न च यावत्प्रतिबन्धकसत्त्वं ज्ञानानिवर्त्यो दोषः प्रकृतेऽप्यस्त्विति वाच्यम् । उक्तरीत्या तस्य प्रत्याख्यातत्वात् ।

लेशोऽपि किमवयवः? उताकारः? आद्यं दूषयति ॥ न तावदिति ॥ द्वितीयपक्षमुत्थापयति ॥ अथमतमिति ॥ तथाऽप्यविद्याया एकाकारत्वेन तत्त्वसाक्षात्कारेण तन्निवृत्तौ लेशानुवृत्तिरयुक्तेत्यत आह ॥ इन्द्र इति ॥ अभियुक्तसम्मतिमुक्तार्थे दर्शयति ॥ उक्तं चेति ॥ मोहाकारान्तरोक्तितः लेशानुवृत्तिर्युज्यत इति शेषः । विरोधिनि तत्त्वज्ञाने सति कथं तदनुवृत्तिरित्यत उक्तम् ॥ प्रबलारब्धकर्मभिर्ज्ञानस्य प्रतिबन्धादिति ॥ नन्वाकारीभूतघटादिनिवृत्तौ तदाकारनिवृत्तेर्दृष्टत्वादविद्यानिवृत्तौ तदाकारनुवृत्तिः कथं? अत्राह ॥ आकारीति ॥

॥ तयोरिति ॥ भ्रमोपादानत्वस्याविद्यालक्षणत्वादिति भावः । न चाविद्याया अनेकशक्तिमत्वात् प्रपञ्चे पारमार्थिकत्वादिभ्रमहेतुशक्तेः प्रपञ्चेऽर्थक्रियासमर्थत्वसम्पादनशक्तेश्च प्रारब्धकर्मसमकालीनेन तत्त्वसाक्षात्कारेण निवृत्तावपि शक्त्यन्तरस्य देहाद्यनुवृत्तिहेतोः प्रारब्धाद्यसमानकालीनतत्त्वसाक्षात्कारेण निवृत्त्यङ्गीकारान्न विरोध इति वाच्यम् । तथा सति तस्य शक्त्यन्तरस्य निवृत्तिर्न स्यात् । न च प्रारब्धाद्यसमानकालीनचरमसाक्षात्कारेण निवृत्तिरिति वाच्यम् । चरमसाक्षात्कारः किं पूर्वसाक्षात्कारादधिकविषयो

(कण्टकोद्धारः)

वा? समानविषयो वा? नाद्यः । निर्विशेषत्वभङ्गापत्तेः । न द्वितीयः । तथा सति पूर्वेणानिवृत्तस्योत्तरेणाप्यनिवृत्त्यापत्तेः । तथा च कदाऽप्यनिवृत्तस्य सत्यत्वापत्तिः । न च प्रतिबन्धकाभावसहकृतत्वादुत्तरेण निवृत्तिरिति वाच्यम् । तस्य दूषित्वात् । मूलोक्तदूषणापरिहाराच्च ॥ स्थिते लेश इति ॥ न च न तावत् ज्ञप्तावयमन्योन्याश्रयः । ''भूयश्चान्त'' इति श्रुतेरेव लेशानुवृत्तेरवगतत्वात् । नापि स्थितौ । एककालीनत्वेन दोषाभावादिति वाच्यम् । श्रुतेरर्थान्तरस्यानुपदमेव वक्ष्यमाणत्वात् । एककालीनयोरपि देवदत्तयज्ञदत्तयोरन्योन्यस्कन्धस्थितावन्योन्याश्रयत्वस्य दृष्टत्वेन प्रकृतेऽपि परस्परसापेक्षत्वे तस्य दुस्परिहारत्वाच्च । श्रुतौ चेति ॥ न च विशेषणान्वयापेक्षया विशेष्यान्वयस्याभ्यर्हितत्वात् ''तत्त्वभावात्'' इत्यनेन व्यवधानात् 'अंत' इति पदवैय्यर्थ्याच्च विपरीतयोजनमसङ्गतमिति वाच्यम् । ''योजनात्'' इत्यस्य विशेषणत्वाभावात्, योग्यताया एवान्वयप्रयोजकत्वेन सन्निधानस्याप्रयोजकतया व्यवधानस्याबाधकत्वात्, ''अंत'' इत्यस्य ध्यानपरिपाके सति चरमसाक्षात्कारेण विश्वमायानिवृत्तिरित्यर्थकत्वेन वैय्यर्थ्याभावादुक्तान्वयस्यैव समञ्जसत्वात् । न चाज्ञानस्य सूक्ष्मावस्थैव लेशः । तथा चाज्ञाने गतेऽपि तत्सूक्ष्मावस्थारूपो लेशो देहादिप्रतीत्यनुकूलः स्वीक्रियत इत्युपपन्नतरा जीवन्मुक्तिदिति वाच्यम् । विरोधिज्ञानेनाज्ञाने निवृत्तेऽप्यनिवृत्तायाः कदाऽपि निवृत्तिर्न स्यात् । निवर्तकस्योक्तरीत्या दूषितत्वात् । तथाचानुपपन्नतरा जीवन्मुक्तिरिति ।

॥ एतेनेति ॥ देहाद्यनुवृत्तिहेतुत्वेन क्लृप्तानि ज्ञानार्थमनुष्ठितानि यानि यज्ञादिकर्माणि तैः ब्रह्मज्ञानस्य आप्रायणं प्रतिबन्ध इत्यन्वयः ॥ अन्यथेति ॥ एवमपि कर्मणां प्रतिबन्धकत्वाङ्गीकार इत्यर्थः ॥ एतेनेति ॥ तथा च शक्त्यन्तरप्रतिबन्धेऽऽरब्धकर्मतत्कर्माध्याससम्पादनशक्तेरप्रतिबन्ध एव लेशानुवृत्तिशब्देन विवक्षित इति भावः ॥ तत्त्वापत्त्येति ॥ शक्तिमात्रप्रतिबन्धकत्वापत्त्येत्यर्थः । उक्तमर्थं कारिकायां संगृह्णाति ॥ तस्मादिति ॥ परमते जीवन्मुक्तिर्नयुज्यते । कुतः? ज्ञानेन मोहस्य नाशात् । मोहनाशेऽपि देहादेर्विद्यमानत्वात् । कुतो जीवन्मुक्त्ययोग इत्यत उक्तम् ॥ अखिलस्य मोहकार्यत्वादिति ॥

ननु प्रकारान्तरेण जीवन्मुक्तिस्वरूपस्यासम्भवादनन्यगत्योक्तविधमेव जीवन्मुक्तिस्वरूपमङ्गीकार्यमित्यतो वा स्वमतेन जीवन्मुक्तिस्वरूपमाह ॥ अस्माकं त्विति ॥ भावे त्विति ॥ उक्तविधभक्तिभाव इत्यर्थः । ननु ''तस्य तावदेव चिरं'' इत्यादि श्रुत्योत्पन्नात्मतत्त्वसाक्षात्कारस्य प्रारब्धकर्मक्षयमात्रमपेक्षणीयं कैवल्यसम्पत्त्यर्थमिति प्रतिपादनेनेश्वरप्रसादापेक्षाया वक्तुमशक्तात्वात् स्मृतिपुराणादीनां च श्रुतिविरोधेन श्रुतिपरत्वादिति चेन्मैवम् । प्रसादस्य मोक्षहेतुत्वे प्रमाणाभावाद्वा तदनपेक्षा? उत बाधकसद्भावाद्वा? नाद्यः । ''यस्य प्रसादात् परमार्तिरूपादस्मात् संसारान्मुच्यते'' इत्यादिश्रुतेः ''मत्प्रसादात् तरिष्यसि'' इति स्मृतेश्च सद्भावात् । न चैवं ''दृष्ट्वैव तं मुच्यते'' इति ज्ञानस्य मोक्षहेतुत्वप्रतिपादकश्रुतिविरोध इति वाच्यम् । अयोगव्यवच्छेदपरत्वेन वा मोक्षहेतुप्रसादेऽन्ययोगव्यवच्छेदपरत्वेन वोपपत्तेः । न च ज्ञानस्य प्रसादहेतुत्वमप्ययुक्तमिति वाच्यम् । ''न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात्'', ''तत्प्रीणनान्मोक्षमाप्नोति सर्वः'' इति श्रुतेः ''एवंज्ञाते तु भगवाननादिः पुरुषोत्तमः । प्रसीदत्यच्युतस्त-

(कण्टकोद्धारः)

**स्मिन् प्रसन्ने क्लेशसंक्षयः'' इत्यादिस्मृतेश्च सद्भावात् । न च स्मृत्यादिकं श्रुतिविरोधेन स्तुतिपरमिति वाच्यम्। श्रुतेः सामान्यरूपत्वेन प्रसादापेक्षाभावप्रतिपादकत्वाभावादविरोधकत्वात् । उदाहृतस्पष्टवचनानुसारेण प्रसादपरत्वस्यैवोपपन्नत्वात् । ''यमैवैष वृणुते तेन लभ्यः'' इत्यादिश्रुत्याद्युक्त्येश्वरप्रसादो भवतीति प्रतिपादितत्वाच्च । न च साक्षात्कार एवास्योपयोग इति वाच्यम् । 'एषः यं वृणुते यस्य प्रसन्नो भवति तेन लभ्यः प्राप्यः' इत्युक्त्या ब्रह्मप्राप्तिरूपमोक्षस्य प्रसादादुक्तत्वेन साक्षात्कार एवास्योपयोग इत्यस्याबोधविजृंभितत्वात् । न द्वितीयः । उदाहृतनिरवकाशवचनानुसारेणन्यार्थपरत्वात् । प्रारब्धकर्मक्षये प्रस्तरविनियोगसम्भवाच्च । न च तस्य भोगादेव क्षय इति वाच्यम् । तथा सति ज्ञाननिवर्त्यत्वाभावेन तस्य सत्यत्वापत्तेः । उपमर्दं चेति सूत्रकृताऽस्योपमर्दस्योक्तत्वाच्च ॥ नीचोच्चभावेति ॥ न च तस्य द्वितीय सापेक्षत्वेनासम्भव इति वाच्यम् । साधकसत्त्वेन बाधकासद्भावेन च द्वितीयसत्त्वस्य निपुणतरमुपपादितत्वात् ॥ इति जीवन्मुक्तिभङ्गः ॥**

## न्यायामृतप्रकाशः

कारणे निवृत्तेपि कार्यानुवृत्तौ दृष्टान्तमाह ॥ चक्रेति ॥ कुलालेन दण्डेन चक्रभ्रमणं कृत्वा तत्कारणदण्डापनयनेपि तदुत्तरघटकादिकालपर्यन्तमपि चक्रभ्रमणानुवृत्तिदर्शनादित्यर्थः ॥ भयेत्यादि ॥ बाधकज्ञानेन सर्पादिभ्रमनिवृत्तावपि पुनर्भयकंपादेस्तत्संस्कारेण दर्शनादित्यर्थः ॥ क्रियाज्ञानयोरेवेति ॥ नाविद्याया इत्येवार्थः । संस्कारनाशे पुनः संस्काराभावेन साध्याभावाद्व्यभिचारवारणाय सत्यन्तम् । संस्कारात्यन्ताभावे संस्कारानङ्गीकारेण तद्वारणाय विशेष्यभागः । ननु संस्कारस्य कार्यत्वेनाविद्योपादानकत्वादविद्यानिवृत्त्यनन्तरं कथमवस्थानमित्यत आह ॥ संस्कार इति ॥ नन्वथापि संस्कारो नाविद्यानपेक्षः तस्य जीवनिष्ठत्वात् । जीवस्याविद्याधीनत्वात् । अतोऽविद्यानिवृत्त्यनन्तरं कथं संस्कारावस्थानमित्यत आह ॥ अविद्येवेति ॥ यथा अविद्या शुद्धचिन्मात्रगता एवं संस्कारोपीत्यर्थः । ननु तत्वसाक्षात्कारानन्तरमप्यनुवृत्तस्य संस्कारस्य केन निवृत्तिरित्यत आह ॥ संस्कारेति ॥ आवृत्तात् पुनःपुनरभ्यासात् । तदनुवृत्तिः संस्कारानुवृत्तिः ॥ भावकार्यं प्रतीति ॥ उपादानत्वेनेत्यन्वयः । संस्कारस्य च भावपदार्थत्वेन सोपादानत्वस्याऽऽवश्यकत्वादितिभावः । किञ्चाध्यस्तमात्रं त्वन्मते तावत्सोपादानकं, तत्वसाक्षात्कारानन्तरमप्यनुवर्तमानं संस्कारदेहप्रारब्धादिकं चाध्यस्तमिति सोपादानकत्वमावश्यकमित्याह ॥ अध्यस्तमिति ॥ नन्वध्यस्तोपि सर्पादिभ्रमसंस्कारोऽज्ञानोपादानकोपि बाधकज्ञानेनाज्ञाननिवृत्त्या भ्रमनिवृत्तावप्यनुवर्तमानो दृष्ट इति चेत्तत्राह ॥ सर्पादीति ॥ अविद्यावरणेति ॥ अविद्यारूपावरणस्य नष्टत्वादित्यर्थः ॥ द्विचन्द्रादीति ॥ यथा चन्द्रस्वरूपे सम्यक्ज्ञातेप्यङ्गुल्यवष्टम्भरूपदोषवशाद्बाधितस्यापि द्वितीय-

(प्रकाशः)

चन्द्रस्यानुवृत्तिरेवं बाधितस्यापि संस्कारस्यानुवृत्तिरित्यर्थः ॥ असंभवादिति ॥ दग्धपटस्य सावयवत्वेनावयवे निवृत्ते सत्येव स्वयं किञ्चित्कालं तिष्ठतीत्यर्थः ॥ अन्यूनेति ॥ पूर्वतनसाक्षात्कारस्य चरमसाक्षात्कारापेक्षया अधिकभूतदेहादिविषयकत्वेपि तदन्यूनविषयकत्वं तावदस्त्येवेत्यर्थः ॥ ब्रह्मज्ञानस्येति ॥ पूर्वमुत्पन्नस्य ब्रह्मज्ञानस्य आप्रायणं मरणपर्यन्तम् अनुवृत्तिहेतुभूतानि यानि यज्ञादिकर्माणि तैर्ब्रह्मज्ञानस्य प्रतिबन्धः क्रियते अतो न तस्य समूलाज्ञाननिवर्तकत्वमित्यर्थः । यज्ञादिकर्मणां काम्यत्वनिवृत्त्यर्थं ज्ञानार्थेत्युक्तं निवृत्तेत्यर्थः ॥ उक्तत्वादिति ॥ ज्ञानस्य स्वप्रागभावनिवर्तन इवाज्ञाननिवर्तनेपि प्रतिबन्धायोगादेरित्यर्थः ॥ अन्यथेति ॥ ब्रह्मतत्वज्ञानस्य ब्रह्माज्ञानकार्येण प्रारब्धकर्मादिना प्रतिबन्धोक्तौ भ्रमनिवर्तकं शुक्तिज्ञानमपि शुक्त्यज्ञानकार्येण भ्रमेण प्रतिबद्धं सत् न शुक्त्यज्ञानं निवर्तयेदित्यर्थः ॥ तदेति ॥ चरमज्ञानकाल इत्यर्थः ॥ तत्कार्येति ॥ प्रारब्धकर्मसम्पादनेत्यन्वयः । आरब्धकर्मकार्यं यदितरत् देहादिकं तदध्याससम्पादनेत्यर्थः । लेशानुवृत्तित्वेन लेशानुवृत्तिशब्दार्थत्वेनेत्यर्थः ॥ भावेत्विति ॥ आत्यन्तिकभक्तिसद्भावेत्वित्यर्थः ॥ जीवन्मुक्तिभङ्गविवरणम् ।

## ८. मुक्तावपि ब्रह्मादीनां तारतम्यसमर्थनम्

ननु मुक्तौ न तारतम्यम्, मानाभावात्, ''परमं साम्युमुपैती''ति साम्यश्रुतेश्च । सातिशयत्वे च मुक्तेः स्वर्गादिवदनित्यत्वं स्यात् । अधिकदर्शनेन दुःखद्वेषेर्ष्यादिकं च स्यादिति चेत् । उच्यते, मुक्तावतारतम्यं किं तत्र भेदभोगादेरेवासत्त्वात्? किं वा तत्सत्त्वेऽपि साम्यात्? नाद्यः, भेदप्रस्तावोक्तश्रुत्यादिभिस्तत्सिद्धेः । अन्त्येऽपि किं मुक्तजीवेशयोरतारतम्यम्? किं वा मुक्तजीवानामेव? नाद्यः, त्वन्मतेऽपि तयोर्विभुत्वाणुत्वशेषत्वस्वातन्त्र्यपारतन्त्र्यादिना तारतम्यात् । अनेकेश्वरापत्त्या जगत्प्रवृत्त्ययोगाच्च । ''अल्पशक्तिरसार्वज्ञ्य''मित्यादि भेदप्रस्तावोक्तश्रुतिभिः ।

ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते,
तद्यत्स्वभावः कैवल्यं स भवान्केवलो हरे ॥

इत्यादि स्मृतिभिः ''जगद्व्यापारवर्जं''मित्यादिसूत्रैः (१) 'मुक्तजीवभोगः ईश्वरभोगान्निकृष्टः, जीवभोगत्वात् संसारिभोगवत् ।' एवं मुक्तजीवज्ञानादिकमपि पक्षीकृत्य प्रयोक्तव्यम् । (२) 'ईश्वरानन्दो जीवानन्दादुत्कृष्टः, तदवश्यत-

न्नियामकानन्दत्वाद्, यदेवं तदेवम्, यथा सेवकानन्दात्सेव्यमानानन्दः ।' (३) ईश्वरो जीवस्वभावानन्दादित उत्कृष्टस्वाभाविकानन्दादिमान्, तत्प्रेप्सुत्वे सति तत्र शक्तत्वाद्, यो यत्प्रेप्सुत्वे सति तत्र शक्तः स तद्वान्, यथा सम्मत इत्याद्यनुमानैश्च विरोधाच्च । न द्वितीयः, त्वन्मतेऽपि जीवान् प्रति शेषिणोऽपि लक्ष्मीतत्त्वात् तान् प्रति नियामकाद्विष्वक्सेनादितश्चेतरजीवानां निकृष्टत्वात् । "सैषानन्दस्य मीमांसा भवति । ते ये शतं मानुषानन्दाः स एको मनुष्यगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्ये"त्यादितैत्तरीयश्रुत्या, "अथ ये शतं कर्मदेवानामानन्दाः, स एक आजानजदेवानामानन्दः । यश्च श्रोत्रियोऽवृजिनोऽकामहत" इत्यादिवाजसनेय-श्रुत्या, अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवु"रित्याद्यैतरेयश्रुत्या

नृपाद्याः शतधृत्यन्ता मुक्तिगा उत्तरोत्तरम् ।
सर्वैर्गुणैः शतगुणा मोदन्त इति हि श्रुतिः ॥
मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥

इत्यादि स्मृतिभिः "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवमि"त्यादि सूत्रैरुक्तवक्ष्यमाणश्रुतितर्कानुगृहीतैः (१) 'अस्मदादिमुक्तभोगः, मुक्तचतुर्मुख-भोगान्निकृष्टः, अस्मदादिभोगत्वात् संसारस्थास्मदादिभोगवत् ।' एवमस्मदादि-ज्ञानादिकं च पक्षीकृत्य प्रयोक्तव्यम् । (२) 'जीवस्वरूपानन्दः परतन्त्रानन्दत्व-साक्षाद्व्याप्यधर्मेण सजातीयानन्दप्रतियोगिकतारतम्यवान्, जीवानन्दत्वात्, तदीय-वैषयिकानन्दवत् ।' (३) प्रकृतिबन्धनिवृत्तिः, स्वसजातीयबन्धनिवृत्त्याश्रयप्रति-योगिकतारतम्यवन्निष्ठा, बन्धनिवृत्तित्वात्, निगडबन्धनिवृत्तिवदित्याद्यनुमानैश्च विरोधाच्च । स्वरूपसुखानां प्रत्येकमेकत्वेनाणुत्वेन च संख्यापरिमाणकृतवैषम्या-भावेऽपि जलसुधापानसुखयोरिव मधुरमधुरतरत्वादिवत्स्वरूपकृतवैषम्यं युक्तम् ।

प्रसिद्धं च सालोक्यादिमुक्तितः सायुज्यादेरुत्कृष्टत्वम् । न च सायुज्यमैक्यम्, सारूप्यादिमति सालोक्यादिवत्सायुज्यवत्यपि सारूप्यादेः सत्त्वात् । "चन्द्रमसः

सायुज्यं सलोकतामाप्नोती''त्यादिश्रुतौ ''सायुज्यं चेदिभूभुज'' इत्यादि स्मृतौ च भेदे सत्यपि सायुज्योक्तेश्च । ''सयुजः परमात्मानं प्रविश्य च बहिर्गता'' इत्यादि स्मृतौ सयुजां प्रवेशमात्रोक्तेश्च । सयुजोर्भावः सायुज्यमिति तच्छब्देन सम्बन्धस्यैवोक्तेश्च । ''सालोक्यमथ सामीप्यं सारूप्यं योग एव चे''ति स्मृतौ सायुज्ये सम्बन्धार्थयोगपदप्रयोगाच्च । तस्मात्सायुज्यं नाम क्षीरनीरवदन्यदेहप्रविष्टग्रहदेवतादिवच्च संश्लेषमात्रम्, न त्वैक्यम् ।

हरौ नियतचित्तत्वाद् ग्रहवत्तत्प्रवेशनात् ।
मोक्षं तादात्म्यमित्याहुर्न तु तद्रूपतः क्वचित् ॥

इति स्मृतेः । न चोक्ततारतम्यश्रुतिरमुक्तविषया, प्रकृते मनुष्यगन्धर्वादावप्रकृतेऽन्यस्मिन्वा संसारिणि तैत्तरीयोक्तस्याकामहतत्वस्य वाजसनेयोक्तयोरवृजिनत्वाकामहतत्वयोश्चायोगात् । अकामहतत्वं हि कामकृतोपद्रवाभावः, न त्वकामत्वम्, हतशब्दवैयर्थ्यात् । स च सत्यकामस्य मुक्तस्यैव, ''सोऽश्नुते सर्वान्कामान्'' ''कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि'' इत्यादि श्रुतेः । ''स हि मुक्तोऽकामहतः'' इति ब्रह्माण्डोक्तेश्च । अवृजिनत्वमप्यदुःखत्वमपापत्वं वा, उभयमपि मुक्तस्यैव, अपरोक्षज्ञानिन्यपि प्रारब्धपापतत्कार्यदुःखयोः सत्त्वात् । न चाबाधे मुख्यार्थस्त्यागार्हः । श्रोत्रियत्वं च मुक्तस्यैव मुख्यम् ।

प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्तमोक्षिणः ।
त एव चाप्तकामत्वात्तथाऽकामहता मताः ॥ इति भारतोक्तेः ।

किं च प्रकृतमनुष्यगन्धर्वादिपरत्वे ''श्रोत्रियस्य चे''त्यत्र ''यश्च श्रोत्रिय'' इत्यत्र चैकवचनं समुच्चयार्थश्चशब्दश्चायुक्तः । न हि सम्भवति वसिष्ठो ब्रह्मिष्ठोऽरुन्धतीपतिश्च तथेति । अप्रकृतसंसारिपरत्वे तु बाधः, चतुर्मुखाद्यानन्दस्यान्यस्मिन्संसारिण्यदर्शनात् । अपि च प्रकृतश्रोत्रियः सर्वत्राप्येकश्चेन्मानुषादिभ्यः सावधारणं शतगुणिमनुष्यगन्धर्वाद्यनेकानन्दा एकस्मिन् विरुद्धाः । भिन्नश्चेदकामहत-

त्वादेरेकरूपतया श्रुतस्याव्यवस्थापकत्वादानन्दव्यवस्थाऽयोगः । अथ व्यवस्थार्थं तत्र तत्र तत्तत्पदाकामः तदितरपदकामश्च विवक्ष्यते, तदाऽश्रुतकल्पना बाधश्च, न हीन्द्रादिपदे राजपदे वा निष्कामस्य भिक्षुकस्येन्द्राद्यानन्दानुभवोऽस्ति । उक्तं हि–

कुत्रचित्कामिनः पुंसः कामाभावात् कचित्कचित् ।
इन्द्रादिसुखभोगोऽस्तीत्यनुभूतिर्हि कुप्यति ॥

इति न चाबाधे वैराग्यप्रशंसामात्रपरत्वं युक्तम् । तस्मात् श्रुत्या पूर्ववाक्येनामुक्तानां तारतम्यमुक्त्वा ''श्रोत्रियस्य चे''त्यादिना ''यश्च श्रोत्रिय'' इत्यादिना चोत्तरवाक्येन मुक्तस्य तदुच्यते । ''अक्षण्वन्त'' इति श्रतिस्तु तत्प्रकरणे ''ऋचां त्वः पोषमास्त'' इत्यादिना ब्रह्मबहुत्वोक्तेर्मुक्तविषया ।

अपि च 'मुक्तसुखं परस्परं तारतम्यवत्, परस्परं तारतम्यवत्साधनसाध्यत्वात्, सम्मतवत् ।' न चासिद्धिः मुक्तिः प्रयागमरणभगवदद्वेषभक्त्यादिना ज्ञानकर्मसमुच्चयेन वा साध्येति मते प्रयागमरणादीनां वर्णाश्रमकर्मणां च विषमत्वात् । ज्ञानैकसाध्येतिसिद्धान्तेऽपि ''कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति'' । ''सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यै''रित्यादिश्रुत्या ''ब्रह्मापि यं वेद न चैव सम्यगन्ये कुतो देवमुनीन्द्रमर्त्या'' इत्यादिस्मृत्या देवर्षिमनुष्यादिस्थमुक्तिहेतुब्रह्मज्ञानगतस्य बह्वल्पाल्पतरशाखाश्रवणादिसाध्यत्वस्य बह्वल्पाल्पतरब्रह्मगुणविषयकत्वं विनाऽयोगेनार्थापत्त्या च तत्सिद्धेः । चरमदेहोऽपि हि मर्त्यादिरेव ।

यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ।
स वै भृत्यः स वै स्वामी गुणलुब्धौ न कामुकौ ॥

मुमुक्षोरमुमुक्षुस्तु वरो ह्येकान्तभक्तिमान् ।

इत्यादिस्मृत्या मुमुक्षुभक्तादमुमुक्षोर्निरुपाधिकभक्तस्याधिक्योक्तेश्च । तत्राधिक्यस्य लोकरीतिसिद्धत्वाच्च । 'भक्तिः सिद्धेर्गरीयसी''त्यादिस्मृत्याऽल्पभक्तिसाध्यमुक्तितोऽधिकमुक्तिहेतुभक्तेराधिक्योक्तेश्च ।

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥

इत्यत्रापिशब्देन, ''स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् । किं पुनर्ब्राह्मणाः पुण्या'' इत्यत्र कैमुत्येन साधनतारतम्येन साध्ये तत्प्रतीतेश्च ।

साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।

इति ब्राह्मे, ''अधिकं तव विज्ञानमधिका च गतिस्तव । ब्रह्मादयः क्रमेणैव यथानन्दश्रुतौ श्रुताः''॥ इति मोक्षधर्मे च साधनतारतम्येन साध्ये तदुक्तेश्च ।

''विकल्पो विशिष्टफलत्वा''दिति सूत्रे त्वया विकल्पेन मोक्षहेतुत्वेनोक्तानां दहरादिविद्यानामधिकाल्पगुणविषयत्वेन तारतम्याच्च । त्वद्रीत्या प्रत्येकं मोक्षहेत्वोर्निरन्तरचिन्ताभरन्यासरूपयोर्भक्तिप्रपत्त्योः स्वरूपतः कर्मापेक्षानपेक्षाभ्यामावृत्त्यानावृत्तिभ्यां च विषमत्वाच्च । न च तयोरुक्तरीत्याधिकाल्पत्वेऽपि विश्वासाल्पत्वाधिक्याभ्यां साम्यमिति वाच्यम् । विश्वासस्यावर्तनीयायां भक्तावेव यावदावृत्त्यपेक्षितत्वेनानावर्तनीयप्रपत्तितोऽधिकत्वात् । यदि च फलसाम्येन साधनसाम्यार्थं प्रपत्तावधिकविश्वासः कल्प्येत, तर्ह्यन्योन्याश्रयः । साधनवैषम्येऽपि साध्यसाम्ये चाधिकविधात्र्याः श्रुतेरनुपादेयत्वं फलदातुरीश्वरस्य वैषम्यादिकं च स्यात् । न च देवमनुष्यादीनां तत्र शक्त्यशक्तिमात्रेण शक्ताशक्तानुष्ठित नित्यकर्मण इव न फल वैषम्यमिति वाच्यम् । अशक्तार्जितस्य ज्ञानस्यान्धपंग्वादिकृतकाम्यकर्मण इव विकलत्वेन काम्यमोक्षसाधनत्वायोगेन तत्साधनत्वाय स्वोचितमुक्तिफलं प्रत्यविकलताया वक्तव्यत्वात् ।

एतेन भक्तिप्रपत्त्योर्विषमत्वेऽपि शक्ताशक्तविषयत्वात्फलसाम्यमिति निरस्तम्, तथाऽश्रवणात् । कल्पने चातिप्रसंगात् । तस्मात्साधनतारतम्यान्मुक्तितारतम्यम् । अत एव–

कर्मणामल्पमहतां फलानां च स्वगोचरे ।
विभागस्थानसामान्यादविशेषेऽपि चोदितः ॥

इति वार्तिकेनाविशेषेण स्वर्गसाधनत्वेन श्रुतयोरपि ज्योतिष्टोमाग्निहोत्रयोस्तारतम्यात्तत्साध्ये स्वर्गेऽपि तदुक्तम् । उक्तं च–

युक्तं च साधनाधिक्यात्साध्याधिक्यं सुरादिषु ।
नाधिक्यं यदि साध्ये स्यात् प्रयत्नः साधने कुतः ॥ इति

किं च "तस्य तावदेव चिरं यावन्न विमोक्ष्येताथ सम्पत्स्यत" इत्यादि श्रुत्या "तस्य कार्यं न विद्यत" इत्यादिस्मत्या च यस्य स्थितप्रज्ञस्य मोक्षाय कर्तव्यान्तराभाव उक्तस्तस्यापरोक्षज्ञानिनो भक्तस्य प्रपन्नस्य वा शुकादेर्नित्यादिकर्मब्रह्मध्यानादिकं च न तावदज्ञस्यैव विविदिषादिद्वारा वा पापक्षयादिद्वारा वा, प्रत्यवायपरिहारद्वारा वा ज्ञानादेः सन्निपत्यांगम्, तस्य सिद्धत्वात् । नापि फलोपकार्यङ्गम्, मुक्तौ ज्ञानकर्मणोः समुच्चयापातात्, । कर्मणां विचित्रत्वेन मोक्षवैचित्र्यापाताच्च । मोक्षाय कर्तव्यान्तराभावपरोक्तश्रुत्यादिविरोधाच्च । नापि फलान्तरार्थम्, नित्यत्वात्, ज्ञानिनोऽनिष्टत्वाच्च । नापि लोकसंग्रहार्थमीश्वराज्ञापालनार्थं वा, तयोरपि स्वतोऽफलत्वात् । नापीश्वरप्रीत्यर्थम्, भक्त्यादिनैव मोक्षहेतुप्रीतेः सिद्धेः । नापि तत्प्रीत्यतिशयार्थम्, फलातिशयाभावे तस्य पारिभाषिकत्वापातात्, तद्वैयर्थ्याच्च । नापीश्वरवल्लीलार्थम्, आचार्याद्विद्यामवाप्यैतमात्मानमभिगम्य शान्तो भवेद्दान्तो भवेत् पश्यन्नपीममात्मानं कुर्यात्कर्माविचारय"न्नित्यादिनापरोक्षज्ञानिनः,

मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ।
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥

इत्यादिना भक्तिप्रपत्तिमतश्च तद्विधानात् ।

शक्रेण वर्षकोटीश्च धूमः पीतोऽतिदुःखतः ।
वर्षायुतं च सूर्येण तपोऽर्वाक्शिरसा कृतम् ॥

इत्यादिस्मृतिषु क्लेशेनानुष्ठानोक्तेश्च । सूर्यादयश्चापरोक्षज्ञानिनः । "न देवपदवीं प्राप्ता ब्रह्मदर्शनवर्जिता" इत्यादिस्मृतेः । अद्वैतिभिः "यावदधिकार"मिति सूत्रे क्लेशेन कर्मानुष्ठातॄणां वसिष्ठादीनामपरोक्षज्ञानित्वोक्तेश्च । तस्मादपरोक्षज्ञानोत्तरं कर्मादिकं मुक्तावानन्दातिशयार्थमेव । ब्रह्माण्डे च–

ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु ।
आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वा च वर्धते ॥ इति ।

स्मर्यते च–

सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्या चानन्दचित्रता ॥ इति ।

अत एव "स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयत" इति श्रुतौ ज्ञानिकृतस्य कर्मणो मोक्षान्वयादक्षयफलत्वमुक्तम् । न हि मोक्षदन्यत्राक्षयत्वम् । परमसाम्यश्रुतिस्तु दुःखाभावसत्यकामत्वादिना सरःसागरयोरिव स्वयोग्यानन्दपूर्त्या च साम्यात् । "लिंगभेदः परानन्दो दुःखाभावः समानता" इति स्मृतेः । अन्यथा मुक्तस्येश्वरवज्जगत्स्रष्टृत्वादि किं न स्यात् । तच्च "जगद्व्यापारवर्ज"मिति सूत्रे त्वयापि निषिद्धं, अत्र जगद्व्यापारशब्द उपलक्षणार्थ इति तवापि सम्मतम् । अन्यथा मुक्तस्य स्वातन्त्र्याद्यपि स्यात् । "भोगमात्रसाम्यलिंगाच्चे"ति सूत्रस्थ-मात्रशब्दस्य तु मन्मते भोगसामान्य एव साम्यम्, न तु तद्विशेष इत्यर्थः । त्वन्मतेऽपि भोगमात्रे मुक्तस्य ब्रह्मसाम्याल्लिंगाज्जगद्व्यापारवर्जमिति व्याख्यात-त्वादवधारणार्थो मात्रशब्दो न कार्त्स्न्यार्थः । सत्यकामत्वं च जगत्स्रष्टृत्वादा-विवाधिकानन्देऽपि कामस्यैवाभावाद्युक्तम् । वाराहे च–

स्वाधिकानन्दसंप्राप्तौ सृष्ट्यादिव्यापृतिष्वपि ।
मुक्तानां नैव कामः स्यादन्यान्कामांस्तु भुंजते ॥ इति ।

सातिशयत्वेऽपि नित्यत्वं चेश्वरादपकृष्टत्व इव मुक्तान्तरेण साम्य इव च श्रुत्यादिवलाद्युक्तम्। अन्यथोत्कर्षस्याप्यनित्यत्वव्याप्त्या ब्रह्मानन्दोऽप्यनित्यः स्यात्। न च द्वेषेर्ष्यादिप्रसंगः,

निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः।
स्यादापरोक्ष्यं हि हरेर्द्वेषेर्ष्यादि ततः कुतः॥
भवेयुर्यदि चेर्ष्याद्याः समेष्वपि कुतो न ते।
तप्यमानाः समान्दृष्ट्वा द्वेषेर्ष्यादियुता अपि॥
दृश्यन्ते बहवो लोके दोषा एवात्र कारणम्।
यदि निर्दोष (तात)तैवात्र किमाधिक्येन दूष्यते॥ इत्युक्तेः।

न च मुक्तिः स्वरूपा (नन्दा) विर्भावमात्ररूपा, स्वरूपाणि चैकरूपाणीति कथं तारतम्यमिति वाच्यम्, "यो यद्रूपः स तद्रूपः निसर्गो ह्येष भवती"त्यादिश्रुत्या,

अवजानन्ति मां मूढा मानुषों तनुमाश्रितम्।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः॥
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः।
भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्॥
त्रिविधा भवदि श्रद्धा देहिनां सा स्वभावजा।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु॥
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः।

इत्यादिस्मृत्या चतुर्मुखादेरितरेभ्य उत्कर्षस्य दृष्टेनादृष्टेन वाऽऽगन्तुकहेतुना साध्यत्वे तत्रापि हेत्वन्तरान्वेषणेऽनवस्थापत्त्याऽनादियोग्यताहठापरपर्यायस्वभावो हेतुर्वाच्य इत्यादियुक्त्या च तारतम्यस्वभावत्वात्। "तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणं रूपं तनुते एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणं रूपं कुरुते पित्र्यं वा गान्धर्वं वा प्राजापत्यं वा ब्राह्मं

वान्येषां भूतानां''मिति श्रुतौ लिंगशरीराविद्यानिवृत्तेरूर्ध्वमपि पितृत्वाद्युक्तेश्च । न च मुक्तस्य देहाद्यस्ति चेद्, दुःखादि स्यात् । न चेद् भोगायोग इतिवाच्यम्, ईश्वरवच्चिदात्मकस्य वा कर्मानारब्धस्यैच्छिकस्य प्राकृतदेहस्य वा सत्त्वात् । अस्ति हि तावच्चिद्रूपं शरीरम् ।

चिदानन्दशरीरेण सर्वे मुक्ता यथा हरिः ।
भुंजते कामतो योगांस्तदंतर्वहिरेव च ॥ इति श्रुतेः ।

न्यायविवरणे न च मुक्तस्य चिदात्मको देहोऽपि नास्तीति वाच्यम्, अकृत्रिमत्वेन तस्यानपगमादित्युक्तेश्च । अस्ति च जडशरीरम्–

स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् ।
स्वीकृत्य जागरितवद् भुक्त्वा त्यागः कदाचन ॥

इति ब्रह्मवैवर्तोक्तेः । तत्त्वप्रदीपे ''शुद्धप्रकृतिमयानि ज्योतीरूपाणि सुखैकतानानि शरीराण्यनुप्रविश्ये''त्युक्तत्वाच्च । ''चिता वाऽचिता वाऽनित्येन वा नित्येन वाथानन्दी ह्येष भवती''ति देहद्वयश्रुतेश्च । मोक्षधर्मे च

प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम् ।
परं नारायणात्मानं निर्द्वन्द्वं प्रकृतेः परम् ॥
इन्द्रियाण्यनुबुध्यन्ति स्वदेहं योगिनो नृप ।
करणान्यात्मनस्तानि सूक्ष्मैः पश्यति तैस्तु सः ॥

''स जिघ्रति यथान्यायं स्पर्शान्स्पृशति च प्रभो'' इति । न च प्राकृतदेहयोगे दुःखाद्यापत्तिः, मुक्तस्य वश्यप्रकृतित्वेन प्रकृतिवशत्वाभावात् । न हि यस्य वन्ह्यादिर्वश्यस्तस्य तद्योगजं दुःखम् । उक्तं हि न्यायविवरणे– ''मुक्तानां वशिता यत'' इति । तत्त्वप्रदीपे च ''वश्यप्रकृतीना''मिति । भाष्ये च– ''शरीरमनुप्रविश्य पुण्यानेव भोगाननुभवति, न तु दुःखादीन् । यथा प्रदीपो दीपिकादिषु प्रविष्टस्तत्स्थं

**तैलाद्येव भुङ्क्तेन तु कार्ष्ण्यादी''निति । सूत्रितं च ''प्रदीपवदावेशस्तथा हि दर्शयती''ति । ''न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती''ति श्रुतिस्तु कर्मारब्धदेहविषया । मुक्तस्याशरीरत्वश्रुतिरपि तन्निरुक्त्यभावात् । न हि तानि शार्यन्ते । तच्छशरीरस्य लोकविलक्षणत्वाच्चाभावोक्तिः । अप्रहर्षमनानन्दमित्यादिवत् । उक्तं च– ''ग्रामस्था अपि न ग्राम्या वैलक्षण्याद्धि सज्जना'' इति । कथमन्यथा देहि(सदेहे)ष्वेव जयादिषु ''देहेन्द्रियासुहीनाना''मित्युक्तिः । तस्मात्फलाध्यायोक्तन्यायैस्तरतमभावापन्नमुक्तब्रह्मरुद्रादिनियामको भगवान् श्रीपतिः सर्वोत्तम इति सिद्धम् ॥ ९ ॥**

**नमो निरस्तदोषाय समस्तगुणराशये ।**
**विमलानन्ददेहाय कमलापतये सदा ॥ ९ ॥**

**मत्प्रेरकेण हरिणा या पूजा स्वस्य कारिता ।**
**वाग्यज्ञरूपा लक्ष्मीशस्तया प्रीणातु केशवः ॥ २ ॥**

**॥ मुक्तावपि ब्रह्मादीनां तारतम्यसमर्थनम् ॥ ९ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना संगृहीते न्यायामृते चतुर्थः परिच्छेदः ।**

अद्वैतसिद्धिः

यत्तु परमतेऽपरोक्षज्ञानिनोऽपि स्वयोग्यपरमानन्दहेतुपरमकाष्ठापन्नभक्त्यभावे तत्साध्यस्य मोचकस्य ईश्वरप्रसादस्याभावेन प्रारब्धकर्मणा संसारानुवृत्तौ जीवन्मुक्तिः तद्भावे तु प्रसादस्यापि भावेन निःश्शेषदुःखनिवृत्तिविशिष्टस्वतोनीचोच्चभावापन्नस्वरूपानन्दाविर्भावरूपा मुक्तिरिति तन्न, 'तावदेवास्य चिर'मित्यादिश्रुत्या अस्योत्पन्नतत्त्वसाक्षात्कारस्य प्रारब्धकर्मक्षयमात्रमपेक्षणीयं कैवल्यसंपत्त्यर्थमिति प्रतिपादनेन ईश्वरप्रसादापेक्षाया वक्तुमशक्यत्वात् । स्मृतिपुराणादीनां श्रुतिविरोधेन स्तुतिपरत्वात् । 'यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा

(अद्वैतसिद्धिः)

विवृणुते तनूं स्वा'मिति भक्तिजन्येश्वरप्रसादस्यापि तत्साक्षात्कारस्वरूप एवोपयोगस्य बोधितत्वेन स्मृत्यादीनामपि तदनुसारित्वात् वैपरीत्येन साध्यसाधनभावे मानाभावात्। न च प्रारब्धकर्मक्षये प्रसादविनियोगः, प्रसादनिरपेक्षभोगादेव तत्सिद्धेः। नापि मुक्तावुच्चनीचभावः, तस्य द्वितीयसापेक्षत्वेन तदासंभवात्। 'परमं साम्यमुपैती'ति साम्यश्रुतेश्च। सातिशयत्वे मुक्तेः स्वर्गादिवदनित्यत्वं स्यात्। अधिकदर्शने दुःखद्वेषादिकं च स्यात्।

ननु मुक्तौ अतारतम्यं किं भेदाभावात्, उत सत्यपि भेदे तत्साम्यात्। नाद्यः, श्रुत्या भेदसिद्धेः। नान्त्यः, साम्यं किं जीवेश्वरयोः, उत जीवानामेव। नाद्यः, तयोर्विभुत्वाणुत्वशेषशेषिभावस्वातन्त्र्यपारतन्त्र्यादिना तारतम्यात्। अनेकेश्वरापत्त्या जगत्प्रवृत्त्ययोगात्। तद्द्वयतारतम्यप्रतिपादकस्मृतिभिः 'जगद्व्यापारवर्ज'मित्यादिसूत्रैरुत्कृष्टत्वनिकृष्टत्वग्राहकानुमानैर्विरोधाच्च। नान्त्यः, जीवान् प्रति शेषिणो लक्ष्मीतत्त्वात् तान् प्रति नियामकाद् विष्वक्सेनादितश्चेतरजीवानां निकृष्टत्वात्। 'सैषानन्दस्ये'त्यादितैत्तरीयादिश्रुतिभिः।

मुक्तानामपि सिद्धानां नारायणपरायणः।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने॥

इत्यादिस्मृतिभिः 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवमि'त्यादि सूत्रैरुक्तश्रुतितर्कानुगृहीतैरनुमानैर्विरोधाच्चेति चेन्न, भेदाभावेन तारतम्यासिद्धेः। यथा च श्रुत्यादेर्न भेदपरत्वं तथा प्रागेव गतम्। यत्तु द्वितीयपक्षमाशंक्य दूषणं, तदकाण्डताण्डवम्, भेदसत्त्वे अभेदात्मकपरमसाम्याभावात् तत्सत्त्वे भेदस्यैवाभावात्।

किं च तारतम्याभिधानं परममुक्तौ? उत ब्रह्मलोकादिवासरूपापरममुक्तौ वा? नाद्यः, 'एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेरिति तृतीयान्त्याधिकरणे 'ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शना'दित्येतत्सूत्रोक्तज्ञानगतैहिकत्वामुष्मिकत्वरूपविशेषवन्मुक्तावपि तारतम्यमाशङ्क्य निषेधात्। द्वितीये त्विष्टापत्तिः।

यत्तु मुक्तजीवभोगः ईश्वरभोगान्निकृष्टः जीवभोगत्वात् संसारिभोगवत्। एवं जीवज्ञानादिकमपि पक्षीकृत्य प्रयोग ऊहनीयः। ईश्वरानन्दः, जीवानन्दादुत्कृष्टः तन्नियामकानन्दत्वात् यदेवं तदेवं यथा सेवकानन्दात् सेव्यानन्दः। ईश्वरः, जीवस्वभावानन्दादित

(अद्वैतसिद्धिः)

उत्कृष्टस्वभावानन्दादिमान् तत्प्रेप्सुत्वे सति तत्र शक्तत्वाद्, यो यत्प्रेप्सुत्वे सति यत्र शक्तः स तद्वान् यथा संमतः इत्यादीनि तारतम्यसाधकानि इति, तन्न; आद्ये मुक्तस्य ब्रह्मरूपतया उपाधिकृतजीवत्वाभावेनाश्रयासिद्धेः, ईश्वरत्वाभावेन साध्याप्रसिद्धेः, स्वरूपासिद्धेश्च । द्वितीयाद्यनुमाने जीवेश्वरविभागकाले तारतम्यसाधनं चेत्सिद्धसाधनं, तद्भिन्ने काले चेत्, पूर्वदोषानतिवृत्तिः । 'सैषानन्दस्ये'त्यादिश्रुतिभिः मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तेषु उत्तरोत्तरशतगुणत्वरूपतारतम्यमुपाधितारतम्येन वदन्तीभिर्निरुपाधिके स्वरूपानन्दे तारतम्यस्य वक्तुमशक्यत्वात् । एतेन प्रकृता बन्धनिवृत्तिः, स्वसजातीयबन्धनिवृत्त्याश्रयप्रतियोगिकतारतम्यवन्निष्ठा बन्धनिवृत्तित्वात् निगडबन्धनिवृत्तिवदिति निरस्तम्, तारतम्यस्य गुणगतजातित्वेन बन्धनिवृत्त्याश्रयात्मनि वक्तुमशक्यत्वात् । अत एव निवृत्तिगततारतम्यसाधनमपि अपास्तम्, निवृत्तेर्निरतिशयत्वादानन्दस्य स्वरूपतया उभयवादिसिद्धत्वेन गुणत्वाभावेन तत्रापि तस्य वक्तुमशक्यत्वात् । एतेन स्वरूपसुखानां प्रत्येकमेकत्वेनाणुत्वेन च संख्यापरिमाणकृतवैषम्याभावेऽपि जलसुधापानजन्यसुखयोरिव मधुरमधुरतरत्वादिवच्च स्वरूपकृतवैषम्यं मुक्ताविति निरस्तम्, वैषयिकसुखे साधनतारतम्यप्रयुक्ततारतम्येऽपि स्वरूपानन्दे तदभावाच्च ।

न च सालोक्यादिमुक्तिः सायुज्यादिमुक्तिभ्योऽपकृष्टेति प्रसिद्धिविरोधः, परापरमुक्तिरूपतया तदुपपत्तेः । सायुज्यादिमुक्तावुत्कृष्टत्वव्यपदेशोऽपकृष्टत्वाभावमात्रेण । ननु सायुज्यं नैक्यम् । 'चन्द्रमसः सायुज्यं सलोकतामाप्नोति' इत्यादि श्रुत्या सत्यपि भेदे सायुज्योक्तेः 'सयुजः परमात्मानं प्रविश्य च बहिर्गताः ।' इत्यादौ सयुजां प्रवेशमात्रोक्तेश्च, सयुजो भावः सायुज्यमिति युजशब्देन संबन्धस्यैवोक्तेः 'सालोक्यमपि सामीप्यं सारूप्यं योग एव च' ॥ इति स्मृतौ सायुज्ये संबन्धवाचकयोगशब्दप्रयोगाच्च । तस्मात्सायुज्यं नाम क्षीरनीरवद् अन्यदेहाविष्टग्रहदेवतादिवच्च संश्लेषमात्रं, न त्वैक्यमिति चेत्, न, व्यापकेनेश्वरेण संश्लेषस्य नित्यसिद्धत्वेनापुमर्थत्वात् । न चैतल्लोकस्थितस्य जीवस्य लोकान्तरस्थितालोकिकशरीरावच्छिन्नेनेश्वरेण संश्लेषः साध्यः, 'अत्र ब्रह्म समश्नुत' इति श्रुतेः । उत्क्रमणगमनादिसाध्यब्रह्मलोकावाप्तिवदुपाध्यवच्छिन्नजीवस्यानवच्छिन्नब्रह्माभेदरूपपरममुक्तेः पारलौकिकफलत्वाभावात्, 'ब्रह्मविदाप्नोति परं' इत्यादौ अवाप्तेः ब्रह्मरूपत्वात् सायुज्यस्यापि तद्रूपतया अङ्गीकरणीयत्वाच्च । 'चन्द्रमसः सायुज्यमि'त्यादौ एकोपाध्यवच्छिन्नस्योपाध्यन्तरावच्छिन्नेन

(अद्वैतसिद्धिः)
ऐक्यानुपपत्तिवदत्रानुपपत्तेरभावात्, प्रसिद्धार्थस्वीकारे बाधकस्योक्तत्वाच्च, सायुज्यशब्दस्ताव-द्विभक्तत्वाभावाभिप्रायकः ।

यच्च उत्तरोत्तरं शतगुणानन्दप्रकाशकवाक्येषु प्रतिवाक्यं मुक्तावकामहतशब्दप्रयोगात् मानुषानन्दवद् अकामहतमुक्तानन्देऽपि तारतम्यम् इति, तन्न, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति सर्वेषां लौकिकानन्दानां परमानन्दान्तर्भावाभिधानोपपत्तेः, न तु तस्य तस्याकामहतस्य तावानेवानन्द इति, येन तत्रापि तारतम्यं कल्प्येत । तथा च 'सोऽश्नुते सर्वान् कामान्' 'कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधी'त्यादिश्रुतेः 'स हि मुक्तोऽ-कामहत' इत्यादिब्रह्माण्डोक्तेश्च न विरोधः । ननु एकस्यैव श्रोत्रियस्य सर्वत्र परामर्शे मानुषा-नन्दादिभ्यः सावधारणशतगुणितमनुष्यगन्धर्वाद्यनेकानन्दा एकस्मिन् विरुद्धाः, भिन्नाश्चेदका-महतत्वादेरेकरूपतया श्रुतस्याव्यवस्थापकत्वादानन्दव्यवस्थाऽयोगः । अत व्यवस्थार्थं एतत् पदाकाम एतदितरपदकामश्च लक्ष्यते, तदाऽश्रुतकल्पना बाधश्च । नहीन्द्रादिपदे वा राजपदे वा निष्कामस्य भिक्षुकस्य इन्द्राद्यानन्दानुभवोऽस्ति, तस्माच्छ्रुत्या पूर्ववाक्येनामुक्तानां तारतम्य-मुक्त्वा, 'श्रोत्रियस्य चे'त्यादिना 'यश्च श्रोत्रिय' इत्यादिना चोत्तरवाक्येन मुक्तस्य तदुच्यत इति चेन्न, सर्वेषु वाक्येषु अकामहतस्य मुक्तस्यैकत्वेऽपि तदानन्दे सर्वानन्दानामन्तर्भावात् स एव तस्मिन् तस्मिन्नानन्दे वक्तव्ये परामृश्यते, तत्तदिन्द्रादिसाम्येन तस्य सर्वत्राभिधानोपपत्तेः 'अधिकं प्रविष्टं न तु तद्धानि'रिति न्यायात् । साम्ये हि तत्सजातीयधर्मवत्त्वं तन्त्रम्, न तु तदितरधर्मानधिकरणत्वमपि, गौरवात् ।

यच्च मुक्तसुखं परस्परतारतम्यवत् परस्परतारतम्यवत्साधनकत्वात् संमतवदिति, तन्न, असिद्धेः । ननु मुक्तिः प्रयागमरणभगवद्द्वेषादिसाध्येति मते ज्ञानकर्मसमुच्चयसाध्येति मते च प्रयागमरणादीनां वर्णाश्रमकर्मणां च विषमत्वात् नासिद्धिः । ज्ञानैकसाध्येति मतेऽपि 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति' 'सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वै-र्मनुष्यै'रित्यादिश्रुत्या 'ब्रह्मादि तद्वेद न चैव सम्यगन्ये कुतो देवमुनीन्द्रमर्त्याः ।' इत्यादि-स्मृतिभिः देवादिमनुष्यादिस्थमुक्तिहेतुब्रह्मज्ञानगतस्य बहुबहुतरशाखाश्रवणसाध्यत्वस्य बहुबहु-तरगुणविषयत्वं विनाऽयोगेनार्थापत्त्या च तत्सिद्धिरिति चेन्न, केवलकर्मपक्षे समुच्चयपक्षे वा कर्मसाध्यत्वेन मुक्तेरनित्यत्वापत्तेः, 'नान्यः पन्थाः' इत्यादिश्रुतिविरोधाच्च, तृतीयपक्षे तूदा-

(अद्वैतसिद्धिः)

हृतश्रुतीनां ब्रह्मविद्यादुर्लभत्वप्रतिपादनपरत्वेन तदुक्तसाधनसाध्यत्वाप्रतिपादकत्वात् । न चार्थापत्त्या तत्सिद्धिः, ब्रह्मसाक्षात्कारस्य निर्गुणविषयतया गुणविषयत्वायोगात् । यत्तु–

यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ।
स वै भृत्यः स वै स्वामी गुणलुब्धौ न कामुकौ ॥

मुमुक्षोरमुमुक्षुस्तु वरश्चैकान्तभक्तिमान् ।

इत्यादिस्मृत्या मुमुक्षुभक्तापेक्षया अमुमुक्षोर्भक्तस्याधिक्योक्तेः, तदाधिक्यस्य लोकरीतिसिद्धत्वाच्च 'भक्तिः सिद्धेर्गरीयसी'तिस्मृत्या अल्पभक्तिसाध्यमुक्त्यपेक्षया अधिकमुक्तिहेतुभक्तेरपि आधिक्यस्योक्तेश्च इति, तन्न, 'यस्त आशिषः' इत्यादिना फलमनिच्छतो गुणलोभेन या भक्तिस्तस्यास्तु गरीयस्त्वं यत् प्रतिपादितं, तत्तत्त्वसाक्षात्कारे त्वरासम्पादकं न तु मुक्तितारतम्याक्षेपकम् । 'भक्तिः सिद्धे'रित्यादिना प्रतिपादितं गरीयस्त्वमपि तज्जनकत्वमात्रेण पुत्रात्पितुरिव । यत्तु–

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥'

इत्यत्रापिशब्देन,

स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥'

इत्यत्र कैमुत्येन च साधनतारतम्येन साध्ये तत्प्रतीतिः इति, तन्न, न हि तरणेऽपीत्यस्यान्वयः, किंतु अधिकारिणि । तथा च विलम्बिततरणरूपफलसम्बन्धमात्रपर्यवसानात् कैमुत्यस्यापि त्वराफललाभमात्रेणोपपत्तेः साधनमात्रतारतम्यस्य फलतारतम्याप्रयोजकत्वाच्च । न हि दण्डतारतम्येन घटतारतम्यं कचिदपि दृश्यते । यत्तु–

साधनस्योत्तमत्वेन साध्यमुत्तममाप्नुयुः ।
ब्रह्मादयः क्रमेणैव यथानन्दश्रुतौ श्रुताः ॥

(अद्वैतसिद्धिः)

इति ब्राह्मे' 'अधिकं तव विज्ञानमधिका च गतिस्तवे'ति साक्षान्मोक्षधर्मे च साधनतारतम्येन साध्ये तदुक्तिः इति, तन्न, साधनोत्तमत्वेन साध्योत्तमत्वस्यापरममुक्तिविषयत्वात्, विज्ञानगताधिक्योक्तेरपि साक्षात्कारप्रयोजकसगुणविषयकज्ञानपरत्वाच्च, अत एव दहरादिविद्यानामधिकाल्पगुणविषयकत्वेन साधनतारतम्यं यत्पराभिमतं तदप्येवमिति न कश्चिद्दोषः ।

तस्मात्स्वरूपानन्दस्य स्वप्रकाशात्मरूपिणः ।
प्राप्तिर्मुक्तिर्न तत्रास्ति तारतम्यं कथंचन ॥ १ ॥

॥ इत्यद्वैतसिद्धौ मुक्तौ तारतम्यभङ्गः ॥

यो लक्ष्म्या निखिलानुपेक्ष्य विबुधानेको वृतः स्वेच्छया
यः सर्वान् स्मृतमात्र एव सततं सर्वात्मना रक्षति ।
यश्चक्रेण निकृत्य नक्रमकरोन्मुक्तं महाकुञ्जरं
द्वेषेणापि ददाति यो निजपदं तस्मै नमो विष्णवे ॥ २ ॥
श्रीमाधवसरस्वत्यो जयन्ति यमिनां वराः ।
वयं येषां प्रसादेन शास्त्रार्थे परिनिष्ठताः ॥ ३ ॥
सहजसरलां प्रेम्णा दीर्घां समस्तविशोधिनीं
सकृदपि कृपादृष्टिं सन्तो दिशन्तु भवद्विधाः ।
कथमपि सती पूता सद्यस्तया विषयीकृता
मम कृतिरियं हित्वा दोषान्भवत्वतिसद्गुणा ॥ ४ ॥
गुरूणां माहात्म्यान्निजविविधविद्यापरिचयात्
श्रुतेर्यन्मे सम्यङ्मननपरिनिष्पन्नमभवत् ।
परब्रह्मानन्दस्फुरणमखिलानर्थशमनं
तदेतस्मिन् ग्रन्थे निखिलमतियत्नेन निहितम् ॥ ५ ॥
इह कुमतिरतत्त्वे तत्त्ववादी वराकः
प्रलपति यदकाण्डे खण्डनाभासमुच्चैः ।
प्रतिवचनममुष्मै तस्य को वक्तुविद्वान्
न हि रुतमनुरौति ग्रामसिंहस्य सिंहः ॥ ६ ॥

(अद्वैतसिद्धिः)

कुतर्कगरलाकुलं भिषजितुं मनो दुर्धियां
मयायमुदितो मुदा विषविघातिमन्त्रो महान् ।
अनेन सकलापदां विघटनेन यन्मेऽभवत् परं
सुकृतमर्पितं तदखिलेश्वरे श्रीपतौ ॥ ७ ॥
ग्रन्थस्यैतस्य यः कर्ता स्तूयतां वा स निन्द्यताम् ।
मयि नास्त्येव कर्तृत्वमनन्यानुभवात्मनि ॥ ८ ॥
श्रीव्यासशङ्करसुरेश्वरपद्मपादान्
वेदान्तशास्त्रसुनिबन्धकृतस्तथान्यान् ।
विद्याप्रदानिह यतिप्रवरान्दयालून् सर्वान्
गुरून् सततमेव नमामि भक्त्या ॥ ९ ॥
सिद्धीनामिष्टनैष्कर्म्यब्रह्मगानामियं चिरात् ।
अद्वैतसिद्धिरधुना चतुर्थी समजायत ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वती श्रीचरणशिष्यश्रीमधुसूदनसरस्वती-विरचितायामद्वैतसिद्धौ मुक्तिनिरूपणं नाम चतुर्थः परिच्छेदः ॥

## न्यायामृततरङ्गिणी

**भेदभोगेति ॥ भेदे सत्यपि तार्किकमत इव भोगाभावात्तारतम्याभाव आनन्दानुभवरूपभोगे सत्यपि मायिमत इव भेदाभावात्तदभावः ॥ ब्रह्मेशानादिभिरिति ॥ ब्रह्मेशानादिभिर्देवैर्यत्कैवल्यं प्राप्तुं न शक्यते तत्कैवल्यं यत्स्वभावः यस्यासाधारणधर्मः स कैवल्याश्रयो भवान् ॥ जगद्व्यापारवर्जमिति ॥ जगत्सर्जनादिव्यतिरिक्तसर्वसामर्थ्ययुक्तो भवतीति ॥ तदवश्येति ॥ प्रजानन्दादनुत्कृष्टे राजानन्दे व्यभिचारवारणाय तदवश्येति । समानन्दे तद्वारणाय तन्नियामकेति ॥ श्रोत्रियस्य चेति ॥ मानुषशतानन्दपरिमितैकानन्दयुक्तो मनुष्यगन्धर्वो मुक्तो यथा तथा तावदानन्दयुक्तः प्राप्तश्रोत्रफलोऽकामहतो मुक्तमनुष्य-गन्धर्वोपि ॥ असमा इति ॥ मनोजवेषु ज्ञानादिष्वसदृशाः ॥ वृद्धिह्रासेति ॥ मुक्तेर्न्यूनाधिकत्वं भाक्तं कुतः ब्रह्मादीनां मुमुक्षुषु अन्तर्भावात् तेषां साधनस्य न्यूनाधिकत्वात् । एवं सति**

(तरङ्गिणी)

ब्रह्मादीनां मुमुक्ष्वन्तर्भावो मुक्तिश्चेत्युभयसामंजस्यं भवति ॥ परतन्त्रानन्दत्वेति ॥ परतन्त्रानन्दत्वस्य साक्षाद्व्याप्यो धर्मो देवानन्दत्वादिः तेन सजातीया योदेवान्तरानन्दः तत्प्रतियोगिकं तारतम्यं देवानन्द इत्यर्थः ॥ सजातीयबन्धेति ॥ निगडबन्धादिना सजातीयो बन्धः निगडबन्धाद्यन्तरं तन्निवृत्तेराश्रयो देवदत्तादिः तत्प्रतियोगिकतारतम्यवान् यज्ञदत्तादिः तन्निष्ठा यथा-निगडबन्धनिवृत्तिः तथा पक्षीभूता देहादिरूपप्रकृतिबन्धनिवृत्तिरपि तदाश्रयप्रतियोगितारतम्यवन्निष्ठेति साध्यार्थः ॥ प्रसिद्धमिति ॥ समानलोकनिवासापेक्षया तदन्तःप्रवेशस्याभ्यर्हितत्वेन लोके प्रसिद्धत्वात्, श्रुतिस्मृत्योश्च ॥ सारूप्यादिमतीति ॥ सारूप्यादेर्भेदसामानाधिकरण्यनियमेन सारूप्यनियतसायुज्यस्यापि भेदनियतत्वात् ॥ भेदेसत्यपीति ॥ चन्द्रमस इत्यादिषष्ठीश्रुत्या चन्द्रचेदिभूभुगादिना भेदे सत्यपि सायुज्योक्तेः ॥ तच्छब्देनेति ॥ सायुज्यशब्देन ॥ सालोक्यमिति ॥ अस्मिन्वाक्ये सारूप्यानन्तरं सायुज्ये वक्तव्ये वृद्धिमन्त्रन्यायेन सम्बन्धार्थको योगशब्दः प्रयुक्त इति योगशब्देन निर्दिश्यमानं सायुज्यं सम्बन्धरूपमेव ॥ संश्लेषमात्रमिति ॥ अभिव्यक्तप्रसादविशेषवदीश्वरसम्बन्धः संश्लेषः । एतेन व्यापकेश्वरेण संश्लेषस्य नित्यसिद्धत्वादपुमर्थत्वम् । न चोत्क्रमणश्रुत्या लोकान्तरस्थितालौकिकशरीरावच्छिन्नेश्वरेण योगः स इति वाच्यम् । न तस्य प्राणा उत्क्रामन्ति अत्र ब्रह्म समश्नुत इति श्रुतेर्मुक्तेः पारलौकिकत्वाभावात् । ब्रह्मलोकाद्यवाप्तेरेवोत्क्रमणगमनादिसाध्यत्वादिति निरस्तम् ॥ संसारिणीति ॥ एतच्च प्रकृतेऽप्रकृतेपि सम्बध्यते ॥ स चेति ॥ कामकृतोपद्रवाभावः सत्यकामस्य । आप्तकामस्य मुक्तस्यावाप्तकामत्वे श्रुतिमाह ॥ सोश्नुत इत्यादि ॥ उक्तश्रुतेर्जीवन्मुक्तिविषयत्वमपाकरोति ॥ अपरोक्षेति ॥ ननु छन्दोध्येतर्यनुशिष्टः श्रोत्रियशब्द एव बाधक इत्यत आह ॥ श्रोत्रियत्वं चेति ॥ प्रकृतेति ॥ श्रोत्रियशब्दस्य मनुष्यगन्धर्वान्वितत्वे ॥ एकवचनमिति ॥ मनुष्यगन्धर्वाणां बहुवचनेन प्रस्तुतत्वान्न तत्र तदन्वयः ॥ चशब्दश्चेति ॥ उद्देश्यविधेययोरेकत्वेन समुच्चेतव्याभावात्। ननूद्देश्यादेरेकत्वेपि तदुपस्थितिभेदाच्चशब्दो युज्यत इत्यत आह ॥ न हीति ॥ वसिष्ठादिशब्दैस्तदुपस्थितिभेदेपि तत्र च शब्दार्थानन्वयात् ॥ अप्रकृतेति ॥ मनुष्यगन्धर्वादिभिन्नो यः कश्चित्संसारी श्रोत्रियपदेन बोध्यत इत्यङ्गीकारे ॥ मानुषादिभ्य इति ॥ मनुष्यगन्धर्वश्रोत्रिये मानुषानन्दशतगुणित एवानन्दो न तु मनुष्यगन्धर्वानन्द इत्यादिरूपमानन्दावधारणं न स्यात् । श्रोत्रियस्य मनुष्यगन्धर्वदेवगन्धर्वादिष्वेकत्वेन देवगन्धर्वश्रोत्रियादौ श्रुतस्य मनुष्यगन्धर्वानन्दशतगुणितानन्दादेरपि मनुष्यगन्धर्वे वक्तव्यत्वात् । तस्य च विरुद्धत्वादित्यर्थः ॥ भिन्नश्चेदिति ॥ मनुष्यगन्धर्वश्रोत्रियस्य देवगन्धर्वादिश्रोत्रियस्य च भिन्नत्वे तत्र तत्र

(तरङ्गिणी)

श्रोत्रिये मनुष्यानन्दशतगुणितानन्द एव मनुष्यगन्धर्वसमीपश्रुतश्रोत्रियस्यैव मनुष्यगन्धर्वानन्दशतगुणितानन्द एव गन्धर्वसमीपश्रुतश्रोत्रियस्यैवेत्यादिव्यवस्था न सिध्यति । मानुषानन्दशतगुणितानन्दं प्रत्याधारत्वेनाकामहतत्वावृजिनत्वयुक्त एव श्रोत्रिय उपादीयते । तथाविधस्य देवगन्धर्वश्रोत्रियस्य देवगन्धर्वादिश्रोत्रियस्यैव मनुष्यगन्धर्वानन्दशतगुणितानन्द इत्याद्यव्यवस्थापत्तेरित्यर्थः ॥ अकामहतत्वादेरिति ॥ आदिपदेनावृजिनत्वम् ॥ अथेति ॥ मनुष्यगन्धर्वपदाकामस्य देवगन्धर्वपदकामस्य श्रोत्रियस्य मनुष्यगन्धर्वानन्दशतगुणितानन्दः । एवं देवगन्धर्वपदाकामस्य आजानजादिपदकामस्य देवगन्धर्वानन्दशतगुणितानन्दः । एवमुत्तरत्रापीत्यानन्दव्यवस्था सिध्यतीत्यर्थः ॥ अश्रुतेति ॥ तत्पदकामत्वादिबोधकपदाभावात् । नन्वश्रुतमपि योग्यत्वादियुक्तं कल्प्यमित्यत आह ॥ बाधश्चेति ॥ योग्यत्वमेव नास्तीत्यर्थः ॥ तस्मादिति ॥ अमुक्तमनुष्यानन्दापेक्षयाऽमुक्तमनुष्यगन्धर्वाणां शतगुणितानन्दः तेषां मध्ये यः श्रोत्रियादिर्मुक्तो मनुष्यगन्धर्वस्तस्यापि मुक्तमनुष्यानन्दशतगुणितानन्द इति श्रुतेरर्थः । अत एवैकवचनं समञ्जसम् । बहूनां मनुष्यगन्धर्वाणां मध्ये कदाचित्कश्चिन्मुच्यत इत्येवं सूचनार्थत्वाच्च । तदिदमाह ॥ मुक्तस्येति ॥ अत एव च शब्दोपि सङ्गच्छते । मुक्तामुक्तमनुष्यगन्धर्वस्यैकत्वेप्यमुक्तत्वमुक्तत्वरूपावस्थाभेदेन तदवस्थितोद्देश्यभेदात् । अयं कुमारः साधुर्युवा चेतिवत् । ननु विदितवेद्यानां बृहस्पतिशिष्यणां स्तुतिरूपोक्षण्वन्त इतिमन्त्रः कथं मुक्तपरो व्याख्यायत इत्यत आह ॥ अक्षण्वन्त इतीति ॥ साक्षात्कृतपरमात्मतत्वानामेव विदितवेद्यत्वात् मुक्तानामेवात्रस्तुतिरतोस्य सूक्तस्य मुक्तविषयत्वम् ॥ ऋचान्त्व इति ॥ यद्वे ब्रह्मणां गौणानां बहुत्वम् ॥ देवर्षिमनुष्यादिस्थेति ॥ मनुष्यज्ञानगतं यदल्पशाखाश्रवणजन्यत्वं तदल्पतरगुणविषयत्वं विनानुपपन्नमित्यादिरूपार्थापत्तिः । ननु देवादिदेहावच्छेदेन न ब्रह्मज्ञानं किन्तु चरमदेहावच्छेदेनैवेति देवर्ष्यादीत्याद्ययुक्तमित्यत आह ॥ चरमदेहोपीति ॥ चरमदेहोपि देवादिरूप एव ॥ लोकरीतीति ॥ लोके भृतिग्राहिसेवकात्तदग्राहीसेवको राजाप्रियो दृष्टः ॥ सिद्धेरिति ॥ मुक्तेः । गतिरिति ॥ श्वेतद्वीपादिमुक्तिस्थाननिवासः ॥ दहरेति ॥ दहरविद्यायां सत्यकामत्वादयोऽक्षरविद्यायां प्रशासितृत्वादयोल्पगुणा उक्ताः ॥ भरन्यासेति ॥ रक्षिष्यत्येवेत्यादिविश्वासः ॥ स्वरूप इति ॥ भक्तिस्वरूपं कर्मापेक्षम् । न तु प्रतिपत्तिस्वरूपम् । ननु भक्तिस्वरूपे कर्मावृत्तिभ्यामाधिक्येपि विश्वासोल्पः प्रतिपत्तौ तु कर्मावृत्त्योरभावेपि विश्वासो भूयानिति दशरूप्यैकसुवर्णन्यायेन भक्तिप्रपत्त्योः साम्यमित्याशङ्क्य निराकरोति ॥ न च तयोरिति ॥ प्रपत्त्यपेक्षया भक्तावेव विश्वासाधिक्यमित्याह ॥ विश्वासस्येति ॥ सकृद्भोजने

(तरङ्गिणी)

बहुघृतभोक्तुरपेक्षया बहुषुभोजनेष्वल्पघृतभोक्तुरेव बहुघृतभोक्तृत्ववदनेकभक्त्यावृत्तिष्वल्पाल्पविश्वासस्यापि सकृन्निवृत्तप्रतिपत्तिगतविश्वासापेक्षयाऽधिकत्वादित्यर्थः ।। अन्धेति ।। अन्धेन कृते यागे आज्येक्षणाद्यङ्गवैकल्यं पङ्गुकृते विष्णुक्रमणाद्यङ्गवैकल्यम् ।। कर्मणामिति ।। अल्पस्य कर्मणोऽल्पं फलं महतो महदित्येवं विशेषवेदनाभावेप्यल्पस्य कर्मणः स्वविषयेऽल्पफलं महतो महदिति विभागो नियमो भवति ।। स्थानसामान्यादिति ।। यथा ब्राह्मणकाण्डे प्रथमस्थानगतेन कर्मणा मन्त्रकाण्डे प्रथमस्थानगतस्य मन्त्रस्य क्रमप्रमाणेन सम्बन्धस्तथाल्पफलं प्रत्यल्पमेव कर्म साधनत्वेन सम्बध्यते महत्फलं प्रति महदित्यर्थः । अपरोक्षज्ञानोत्तरमनुष्ठितानि विचित्रकर्माणि मोक्षेतरफलानि । मोक्षाहेतुत्वे सति फलवत्त्वादिति सामान्यव्याप्तिकानुमानेन मोक्षे वैचित्र्यं सिध्यतीत्याह ।। तस्य तावदेवेति ।। विशेषणासिद्धिं परिहरति ।। नापीति ।। वैचित्र्यापाताच्चेति ।। तदङ्गीकारे त्विष्टापत्तिः । अर्थान्तरं परिहरति ।। नापि फलेति ।। बाधान्न तत्सिद्धिः ।। नित्यत्वादिति ।। मोक्षानन्वयेपि फलत्वात् । विशेष्यासिद्धिं परिहरति ।। नापीश्वरेति ।। लीलार्थं निष्फलम् । अपरोक्षज्ञानिकृतं कर्म लीलार्थम् । सांसारिकभोगार्थमक्रियमाणज्ञानिकर्मत्वात् । ईश्वरकृतकर्मवत् । इत्यत्र विवक्षितस्याविधिबद्धकृतत्वस्योपाधेः पक्षाव्यावृत्तिं वक्तुं ज्ञानिनां कर्मविधिमाह ।। आचार्यादित्यादि ।। पक्षासिद्धिं परिहरति ।। सूर्यादय इति ।। शुकशक्रसूर्यादयः ।। यावदधिकारमिति ।। यावदधिकारमवस्थितिराधिकारिकाणामिति सूत्रम् ।। भोगसामान्य एवसाम्यमिति ।। मुक्तभोगे ईश्वरभोगगतभोगत्वसदृशभोगत्वमस्तीत्यर्थः । नत्वीश्वरगतसामान्यभोगसदृशो मुक्तभोग इत्यर्थः । विशेषान्यसामान्यस्याभावात् ।। त्वन्मतेपीति ।। मुक्तानामैश्वरभोगविशेषवत्त्वे जगद्व्यापारस्यापीश्वरगतत्वेन तद्वर्जनं मुक्तानां न स्यादित्यर्थः ।। सातिशयत्वेपीति ।। सातिशयस्येवापकृष्टस्य समस्य विनाशदर्शनात्त्वत्पक्षेपि स स्यात् । श्रुतिबलात्तत्त्यागस्तु ममापि सम इत्यर्थः ।। उत्कर्षस्येति ।। गन्धाद्युत्कर्षस्य ।। प्रकृतिमिति ।। स्वभावम् ।। स्वभावजेति स्वभावस्य त्रैविध्याच्छ्रद्धात्रैविध्यमिति गम्यते ।। हठापरपर्यायेति ।। हठस्य कारणान्तरापूर्वकत्वान्नानवस्था ।। लिङ्गशरीराविद्यानिवृत्तेरिति ।। तथा च पितृत्वगन्धर्वत्वादिकं न देहाद्युपाधिकं किं तु स्वरूपकृतमिति गम्यत इत्यर्थः । मुक्तानां भोगानुपपत्तिनिरासाय 'अभावं बादरिराह ह्येव' मित्यधिकरणसिद्धजडाजडदेहवत्त्वं तेषां साधयितुमाह ।। न च मुक्तस्येति ।। अभावं बादरिरिति सूत्रसिद्धचिच्छरीरत्वं मुक्तानां साधयति ।। अस्ति तावदिति ।। भावं जैमिनिर्विकल्पाम्नानादिति सूत्रसिद्धजडशरीरवत्त्वं साधयति ।। अस्ति चेति ।। यथा जाग्रदवस्थायां देहसद्भावेन

(तरङ्गिणी)

भोगसम्भवस्तथा मुक्तावपि देहसद्भावेन भोगोपपत्तिरित्येवमर्थकेन भावे जाग्रद्वदिति सूत्रे सूचितं प्रमाणमाह ॥ स्वेच्छया वेति ॥ इन्द्रियवत्त्वं तेषां साधयति ॥ मोक्षधर्मे चेति ॥ शरीरमनुप्रविश्येति ॥ इतः परं तत्प्रकाशयन्त इति शेषः । भाष्ये तथा पाठात् । एतद्भाष्यव्याख्यातं सूत्रमाह ॥ प्रदीपवदिति ॥ जीवस्य शरीरप्रवेशेपि न दुःखानुभवप्राप्तिः । यतः साधूनेव भोगाननुभवन्ति प्रदीपवदिति सूत्रार्थः ॥ तन्निरुक्त्यभावादिति ॥ तदशीर्यताशारीरीति तच्छरीरमभवदित्याद्युक्तविशरणरूपतन्निरुक्तेः तस्मिन्मुक्तशरीरेऽभावादित्यर्थः । अत एवाह ॥ न हितानीति ॥ शरीरे सत्येव वैलक्षण्यमात्रेण शरीराभावोक्तौ दृष्टान्तमाह ॥ कथमन्यथेति ॥ तारतम्यसमर्थनमुपसंहरति ॥ तस्मादिति ॥ तत्प्रयोजनमाह ॥ नियामक इति ॥ स्वयं नियच्छति ब्रह्मादिभ्यो नियमयति चेत्यर्थः । एतद्ग्रन्थस्य ब्रह्ममीमांसासम्बन्धित्वमुक्तमुपसंहरिष्यंस्तदवधृतविशेषणवत्तयेष्टदेवतानमस्काररूपं मङ्गलं ग्रन्थसमाप्तावाचरति ॥ नम इति ॥ स्वस्य स्वातन्त्र्येण कर्तृत्वस्याभावेपि पराधीनस्य तस्य सत्त्वादेतद्ग्रन्थकरणेन भगवत्प्रीतिमाशास्ते ॥ मत्प्रेरकेणेति ॥ सङ्गृहीत इति ॥ अनेनात्रोक्तन्यायानां मूलशास्त्रोक्तत्वं सूतिचम् ॥
॥ मुक्तावपि ब्रह्मादीनां तारतम्यसमर्थनम् ॥ ९ ॥

सद्योजातजटाजपावनसरिद्गोदावरीतीरतो
गव्यूतिर्वसतिस्सतां कुलवतामम्बापुरी तत्र ये ।
व्यासाख्या उपमन्युगोत्रजबुधास्तेष्वास्तयोमुद्गलः
तत्राजज्ञतयेमुरारिचरणाव्यासाभिधाना बुधाः ॥ १ ॥

तेभ्योऽजायत विश्वनाथ इति यस्सज्ज्ञानरत्नाकरः
तस्मादाविरभूत्सुरद्रुमयशा आचार्यनारायणः ।
रामाचार्य इतीरितस्तदनुजो यस्तत्ववादाम्बुधेः
आतानीत्सतरङ्गिणीमिह परिच्छेदश्चतुर्थोपि यः ॥ २ ॥

इतिश्रीमद्रामाचार्यविरचितायां न्यायामृततरङ्गिण्यां चतुर्थः परिच्छेदः ॥ ४ ॥

## न्यायामृतकण्टकोद्धारः

नीचोच्चभावमापन्नेत्यनेन तारतम्यमभिप्रेतम् । तदसहमानः प्रत्यवतिष्ठते ॥ नन्विति ॥ मुक्तौ तारतम्याभावः किं प्रमाणाभावात्? उत बाधकसत्वात् । नाद्यः । तत्र प्रमाणस्य वक्ष्यमाणत्वात् । द्वितीयं

(कण्टकोद्धारः)

विकल्पयति ॥ उच्यत इति ॥ न च भेदाभावेन तारतम्यासिद्धिरिति वाच्यम्। साधकसत्त्वेन बाधकासद्भावेन च द्वितीयसत्वस्य निपुणतरमुपपादितत्वात्। अनेकेश्वरेति ॥ तारतम्याभावे ईशवन्मुक्तानामपि सार्वज्ञ्याপत्त्याऽनेकेश्वरत्वं स्यादिति भावः ॥ अल्पशक्तिरित्यादि ॥ न च भेदसत्त्वेनाभेदात्मकपरमसाम्याभावः। तत्सत्त्वे भेद एव नास्तीति वाच्यम्। परमसाम्यस्य भेदाविरोधित्वात्। न च सादृश्यमात्रविवक्षायां परमशब्दोऽनर्थक इति वाच्यम्। संसारदशायां सत्यपि साम्येऽनभिव्यक्तत्वेनापरमत्वस्य सम्भवात्। मुक्तौ चाभिव्यक्त्या परमत्वसम्भवेन वैय्यर्थ्याभावेन त्वदुक्तेरेवाबोधविजृंभितत्वेनाकाण्डताण्डवत्वात्। न चैतत्तारतम्याभिधानं किं परममुक्तौ? उत ब्रह्मलोकावासरूपापरममुक्तौ। नाद्यः। "एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः" इति तृतीयान्त्याधिकरणे मुक्तावपि तारतम्यमाशङ्क्य निषेधात्। न द्वितीयः। इष्टापत्तेरिति वाच्यम्। पक्षद्वयस्यापि निर्दुष्टत्वेन स्वीकारात्। "वृद्धिह्रासभाक्त्वं" इत्यत्र सूत्रकृतैव तारतम्यस्योक्तत्वात्। एवं "मुक्तिफलानियमः" इत्यस्यार्थान्तरपरत्वेन तारतम्यनिषेधपरत्वाभावात्। "तदवश्यतन्नियामकानन्दत्वात्" इति हेतुद्वयं 'तदवश्यत्वात्, तन्नियामकानन्दत्वात्' इति। तेन न तदवश्येति विशेषणानर्थक्यमिति भावः। न चाधिकमुक्तस्य ब्रह्मरूपतयोपाधिकृतजीवत्वस्याभावेन तारतम्यं वक्तुमशक्यमिति वाच्यम्। मुक्तानां ब्रह्मभेदस्य समर्थितत्वेन जीवत्वस्य स्वाभाविकतया तारतम्यस्य वक्तुं सुकृतत्वात्। त्वन्मतेऽपीति ॥ एतच्च रामानुजान् प्रति। सत्यपि भेदे साम्यस्यैव तैरङ्गीकारात् ॥ परतंत्रेति ॥ परतन्त्रानन्दत्वस्य साक्षात्व्याप्यो धर्मः जीवस्वरूपानन्दत्वं तेन सजातीयो यः आनन्दः जीवान्तरस्वरूपानन्दः तत्प्रतियोगिकं यत् तारतम्यं तद्वानित्यर्थः ॥ स्वसजातीयेति ॥ स्वशब्देन पक्षीकृतबन्धनिवृत्तिः। सजातीया बन्धनिवृत्तिः अन्यपुरुषीया। तदाश्रयीभूतपुरुषान्तरम्। तत्प्रतियोगिकतारतम्यवान् पक्षीकृतबन्धनिवृत्त्याश्रयः तन्निष्ठेत्यर्थः।

ननु स्वरूपे तारतम्यमयुक्तम्। स्वरूपसुखानामेकत्वात्; अणुत्वाच्च स्वरूपकृतवैषम्यस्याभावादित्यत आह ॥ स्वरूपेति ॥ न च वैषयिकसुखे साधनतारतम्येऽपि स्वरूपानन्दे तदभाव इति वाच्यम्। स्वरूपानन्देऽपि तारतम्यस्य श्रुतिस्मृतिसूत्रैर्निपुणतरमुपपादितत्वात्।

प्रकारान्तरेणापि तारतम्यमुपपादयति ॥ प्रसिद्धं चेति ॥ न च परापरमुक्तितया तदुपपत्तिः। उत्कृष्टत्वव्यपदेशस्त्वपकृष्टत्वाभावमात्रेणेति वाच्यम्। त्वदभिमतपरममुक्तेरप्रामाणिकत्वात्। सति ह्यपकृष्टे उत्कृष्टत्वव्यपदेशो न तु तदभावे। न हि दीर्घाभावे ह्रस्वव्यपदेशो दृष्टः ॥ तस्मादिति ॥ नन्वेतदयुक्तम्। व्यापकेनेश्वरेण संश्लेषस्य नित्यसिद्धत्वात्। "ब्रह्मविदाप्नोति परं" इत्यत्रावाप्तेर्ब्रह्मरूपत्वोक्त्या सायुज्यस्यापि तद्रूपताया अंगीकरणीयत्वात्। 'चन्दमसः सायुज्यं' इत्यादौ अवच्छिन्नस्योपाध्यन्तरावच्छिन्नेनैक्यानुपपत्तिवत् प्रकृते तदभावात्। प्रसिद्धार्थस्वीकारे बाधकस्योक्तत्वाच्चेति चेत्। मैवम्। न हि संश्लेषमात्रं सायुज्यशब्दार्थः। किन्तु "आदत्ते हरिहस्तेन हरिपादेन गच्छति। पश्येच्च हरिदृष्टिभ्यां" इत्युक्तसंश्लेषविशेषस्य विवक्षितत्वात्। तस्य चासिद्धत्वेन पुमर्थत्वोपपत्तेः। अवाप्तिर्ब्रह्मरूपत्वेत्यप्ययुक्तम्। तथा

(कण्टकोद्धारः)

सति देवदत्तस्य ग्रामप्राप्तेरपि देवदत्तस्वरूपापत्तेः । ऐक्यानुपपत्तिस्तु प्रकृतेऽप्यस्यैव सावज्ञ्यादिः स्वाभाविकस्योपपादितत्वेन विरुद्धधर्मवतोरैक्यस्यानुपपन्नत्वात् । बाधकाभावाच्च प्रसिद्ध एव सायुज्य-शब्दार्थः ॥ प्रकृते मनुष्यगन्धर्वादाविति ॥ तथा चोत्तरोत्तरशतगुणानन्दप्रकाशकवाक्येषु प्रतिवाक्यं मुक्तेऽकामहतशब्दप्रयोगान्मुक्तानन्देऽपि तारतम्यमिति भावः । न च "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति सर्वेषां लौकिकानन्दानां परमानन्दान्तर्भावाभिधानोपपत्तेरिति न तु तस्याकामहतस्य तावानेवानन्द इति येन तारतम्यं कल्प्येदिति वाच्यम् । अत्र भगवदानन्दस्योपजीव्यत्वं अन्यानन्दस्य तूपजीवकत्वोक्त्या भेदस्यैवाभिप्रेतत्वेनान्तर्भावस्यैवाभावात् । अंशत्वस्य च 'देवदत्तचतुर्भाग-बलो मैत्रः' इतिवत् भिन्नत्वेऽप्युपपत्ते । नन्वपरोक्षज्ञानिन एवावृजिनत्वं किं न स्यात्? अत्राह ॥ अपरोक्षेति ॥ दूषणान्तरमाह ॥ अपि चेति ॥ ननु सर्वेषु वाक्येषु अकामहतस्य मुक्तस्यैकत्वेऽपि तदानन्दे सर्वानन्दानामन्तर्भावात् स एव तस्मिन् तस्मिन्नानन्दे वक्तव्ये परामश्यते । तत्तदिन्द्रादिसाम्येन तस्य सर्वत्राभिधानोपपत्तेः । साम्यं हि तत्सजातीयधर्मवत्वम् । न तु तदितरधर्मानाधिकरणत्वमपि । गौरवादिति । मैवम् । सर्वेषु वाक्येषूक्तस्यैकत्वे एकेनैव वाक्येन तस्य प्रतिपादितत्वात् वाक्यान्तरस्यानर्थक्यं स्यात् । सर्वानन्दानां तदानन्देऽन्तर्भाव इत्यप्ययुक्तम् । विरुद्धानामेकत्रान्तर्भावस्य बाधितत्वात् । तथा सति जलस्याप्यनलेऽन्तर्भावापत्तिः । न च सर्ववाक्यप्रतिपादितस्य मुक्तस्यैकत्वादन्तर्भावो युक्त इति वाच्यम् । तदैक्यस्यैव गगनकुसुमायितत्वात् । एकस्यैवानन्दस्य सर्वत्राभिधानं च पुनरुक्तम् । न च तत्तदिन्द्रादिसाम्येन तदुपपत्तिरिति वाच्यम् । साम्यं हि तत्सजातीयधर्मवत्वम् । न च निर्विशेषानन्दे धर्मवत्वमुपपद्यते इत्ययुक्तमेवैतदिति । बाधमेव व्यक्तीकरोति ॥ न हीति ॥ उक्तार्थे आचार्यसंमतिमाह ॥ उक्तं हीति ॥ उपसंहरति ॥ तस्मादिति ॥

तथापि अक्षण्वन्त इत्यस्य मुक्तविषयत्वं कथम्? ज्ञापकाभावादित्यत आह ॥ अक्षण्वन्त इति ॥

नन्वेतन्मतमेवायुक्तम् । तथा हि द्वेषस्य मोक्षसाधनताया प्रमाणबाधितत्वात् । कर्ममात्रस्य मोक्षसाधनताया प्रमाणबाधितत्वात् । कर्ममात्रस्य मोक्षसाधनत्वे स्वर्गादिवदेव मुक्तेरनित्यत्वापत्तिः । "नान्यः पन्थाः" इत्यादिश्रुतिविरोधाच्च । ज्ञानैकसाध्यत्वपक्षेऽप्युदाहृतश्रुतीनां ब्रह्मविद्यादुर्लभत्वप्रति-पादनपरत्वेनोक्तसाध्यसाधनभावाप्रतिपादकत्वात् । नाप्यर्थापत्त्या तत्सिद्धिः । ब्रह्मसाक्षात्कारस्य निर्गुण-विषयतया गुणविषयत्वस्यैवाभावादिति । मैवम् । द्वेषस्य मनोऽभिनिवेशहेतुत्वम् । मुक्तिस्तु ज्ञाना-देवेत्यङ्गीकारेण प्रमाणबाधाभावात् । अनित्यत्वापादनमयुक्तम् । कर्ममात्रसाध्यत्वानङ्गीकारात् । कर्मण-श्चोपसर्जसत्वं ज्ञानस्यैव प्राधान्यमित्यङ्गीकारेण श्रुतिविरोधाभावात् । मदन्यः कः ज्ञातुमर्हति सर्वे गुणा ब्रह्मणैवेत्यादिश्रुत्यादिभिरन्यवेद्यत्वान्योपास्यत्वादिनिषेधेन तारतम्यपरत्वस्य स्पष्टप्रतिभासेन दौर्लभ्यमात्र-परकत्वाभावात् । सगुणातिरिक्तनिर्गुणाप्रामाणिकत्वस्योपपादितत्वेन साक्षात्कारस्य निर्गुणविषयत्वा-सम्भवेनार्थापत्तेरुपपन्नत्वात् । ननूक्तविधतारतम्यवत्साधनसाध्यश्चरमदेह एव । न तु सुखरूपमोक्ष इत्यत

(कण्टकोद्धारः)

आह ॥ चरमदेह इति ॥ तस्य मर्त्यादिरूपस्यानित्यतयाऽपुमर्थत्वेन नोक्तविधसाधनसाध्यतेति भावः ।

प्रकारान्तरेणापि तारतम्यमुपपादयति ॥ यस्त आशिष इति ॥ न चैतद् भक्तेर्गरीयस्त्वप्रतिपादनं तत्व-साक्षात्कारे त्वरासम्पादकत्वादन्यथासिद्धमिति न मुक्तितारतम्याक्षेपकमिति वाच्यम् । उक्तरीत्या श्रुतिसंवादेन च तारतम्यपरत्वसम्भवेऽन्यथासिद्धिकल्पकाभावात् ॥ भक्तिः सिद्धेरिति ॥ न चैतत् जनकत्वमात्रेणैव गरीयस्त्वप्रतिपादनं पुत्रात् पितुरिवेति वाच्यम् । कल्पकाभावेन दृष्टान्तमात्रस्याप्रयोजकत्वात् । अन्ये त्वेवमिति ॥ न चैतद् विलम्बिततरणरूपफलसम्बन्धमात्रे पर्यवसन्नम् । कैमुत्यमपि त्वराफललाभ-मात्रेणोपपन्नमिति वाच्यम् । दत्तोत्तरत्वात् ॥ साधनस्येति ॥ न चास्य सगुणमुक्तिविषयत्वेन न परममुक्ति-विषयत्वम् । विज्ञानगताधिक्योक्तेरपि निर्गुणसाक्षात्कारप्रयोजक सगुणज्ञानविषयत्वमिति वाच्यम् । निर्गुण-ब्रह्मणो निर्गुणमुक्तेश्चाप्रामाणिकत्वस्योपपादितत्त्वेन तद्विषयत्वकल्पकाभावात् । एतेन दहराक्षरादिविद्यानां यदन्यथासिद्धिवर्णनं तदपि निरस्तम् ।

तारतम्यानङ्गीकारिणं रामानुजं प्रत्याह ॥ विकल्प इति ॥ भक्तिप्रपत्त्योः स्वरूपविवरणं चिन्तेत्यादि । तत्र चिन्ताभारो भक्तिः । न्यासः प्रपत्तिः ॥ उक्तरीत्येति ॥ आवृत्त्यनावृत्तिरूपोक्तरूपेत्यर्थः ॥ तर्ह्यन्यो-न्याश्रय इति ॥ फलसाम्यसिद्धौ सत्यां प्रपत्तावधिकविश्वासकल्पना । तस्यां च सत्यां साधनसाम्यात् फलसाम्यसिद्धिरित्यन्योन्याश्रय इत्यर्थः । सत्यपि साधनसाम्ये फलं विषममित्यत आह ॥ साधनेति ॥ ऐतेनेत्यस्यार्थमाह ॥ तथेति ॥ शक्ताशक्तविषयत्वात् फलसाम्यमित्येतत् किं श्रुतम्? उत कल्प्यते? नाद्य इत्याह ॥ तथाऽश्रवणादिति ॥ द्वितीयं प्रत्याह ॥ कल्पन इति ॥ साधनतारतम्येन साध्यतारतम्योपपादन-मुपसंहरति ॥ तस्मादिति ॥ उक्तार्थे संमतिमाह ॥ अत एवेति ॥

अपरोक्षज्ञानोत्तरकालं क्रियमाणस्य कर्मब्रह्मध्यानादेर्प्रयोजनान्तरार्थत्वासम्भवेन मुक्तावानन्दातिशयार्थ-त्वस्यैव वक्तव्यत्वेनावश्यं मुक्तौ तारतम्यं स्वीकर्तव्यमित्याशयेनापरोक्षज्ञानिकृतस्य कर्मणः प्रयोजना-न्तरार्थत्वाभावमुपपादयति ॥ किञ्चेति ॥ उक्तश्रुत्यादीति ॥ "तस्य कार्यं न विद्यते" इत्याद्युक्तश्रुत्या-दीत्यर्थः । अनित्यत्वेऽपि कुतो न तदर्थत्वमित्यत उक्तम् ॥ ज्ञानिन इति ॥ आचार्यादिति ॥ विहितस्य लीलात्वाभावादिति भावः । ननु सूर्यादीनामपरोक्षज्ञानित्वाभावात् तदीयं क्लेशेनानुष्ठानं नानन्दातिशयार्थ-मित्यत आह ॥ सूर्यादय इति ॥ उक्तार्थे प्रमाणसंमतिमाह ॥ ब्रह्माण्ड इति ॥ अतएवेति ॥ आनन्दाति-शयार्थत्वादेवेत्यर्थः ।

"साम्यमुपैति" इति श्रुतेः का गतिरित्यत आह ॥ परमेति ॥ अन्यथेति ॥ स्मृत्युक्तसाम्यानङ्गीकार इत्यर्थः । अस्तु तदित्यत आह ॥ तच्चेति ॥ ननु स्रष्टृत्वादिनिषेधो न सूत्रात् प्रतीयत इत्यत आह ॥ अत्रेति ॥ अन्यथेति ॥ उपलक्षणार्थत्वाभाव इत्यर्थः । ननु भोगमात्रेति सूत्रे सर्वसाम्यस्योक्तत्वात् कथं तन्निषेध इत्यत आह ॥ भोगमात्रेति ॥ मन्मते तस्य कात्स्न्यार्थत्वात् कथमेतदित्यत आह ॥ त्वन्मत

(कण्टकोद्धारः)

**इति ॥ ननु मुक्तानन्दस्य सातिशयत्वे कथं नित्यत्वम्? अत आह ॥ सातिशयत्वेऽपीति ॥ तारतम्यस्य स्वभावत्वं श्रुतिस्मृतियुक्तिभिरुपपादयति ॥ यो यद्रूप इति ॥ ननु मुक्तानां द्विविधशरीरसद्भावोऽप्रामाणिक इत्यतस्तदुपपादयति ॥ अस्ति तावदिति ॥ जडशरीरसद्भावमप्युपपादयति ॥ अस्ति चेति ॥ वश्य-प्रकृतित्वेनेति ॥ वश्या प्रकृतिर्यस्य तत्त्वेनेति विग्रहः । तर्हि "न वै सशरीरस्य सतः प्रियाप्रिययोः" इत्यादिश्रुतेः का गतिरित्यत आह ॥ न ह वा इति ॥ तन्निरुक्त्याभावात् शीर्यत इति शरीरमिति शरीरशब्दार्थाभावादित्यर्थः । प्रसिद्ध्याऽप्येतदुपपादयति ॥ किञ्चेति ॥**

**परिच्छेदार्थमुपसंहरति ॥ तस्मादिति ॥ एवं समापितैतद्ग्रन्थो व्यासतीर्थमुनिरन्तेऽपि मङ्गलमाचरति ॥ नम इति ॥ इति मुक्तावपि ब्रह्मादीनां तारतम्यसमर्थनम् ॥**

**कल्याणगुणसम्पूर्णो वारिताखिलदूषणः ।**
**भक्त्या तुष्टो ददातीष्टं जानते श्रीरमापतिः ॥**
**रघूत्तमार्यशिष्येणानन्दनाम्ना यथामति ।**
**कृतोऽयं कण्टकोद्धारः प्रीयतां तेन माधवः ।**

**इति श्रीमद्रघूत्तमतीर्थपूज्यपादानां निजशिष्येण पाण्डुरङ्गि आनन्दाचार्येण कृते न्यायामृतकरण्टकोद्धारे चतुर्थः परिच्छेदः ।**

## न्यायामृतप्रकाशः

भेदभोगादेरिति ॥ वैशेषिकरीत्या भेदसहितभोगादेरित्यर्थः । किं वा तस्य सत्त्वेपि साम्यादिति रामानुज-मताभिप्रायेण ॥ तदवश्येति ॥ अत्र यो यन्नियामकानन्दः स तदानन्दादुत्कृष्ट इत्येवोक्ते कश्चिद्राजा दरिद्रः धनिकप्रजादत्तान्नादिभोक्ता राजत्वेन तन्नियामकश्चास्ति । तदानन्दे प्रजानियामकस्य राज्ञ आनन्दत्वमस्ति प्रजा-नन्दादुत्कृष्टत्वरूपं साध्यं नास्ति । राजापेक्षया धनिकप्रजाया एव परमसुखित्वदर्शनादतस्तत्र व्यभिचारवारणाय तदवश्येत्युक्तम् ।

राज्ञो दरिद्रत्वेपि प्रजानन्दस्य तद्वश्यत्वेन तदवश्यत्वाभावान्न व्यभिचार इत्यर्थः । समानन्द व्यभिचा-रवारणाय विशेष्यभागः । त्वन्मते रामानुजस्य तव मते शेषिणः प्रधानभूतात् ॥ तान्प्रतीति ॥ लक्ष्मीतत्वनियम्यजीवान्प्रतीत्यर्थः ॥ परतन्त्रेत्यादि ॥ आनन्दप्रतियोगिकतारतम्यवानित्येवोक्ते जीवानन्दस्येश्वरा-नन्दप्रतियोगिकतारतम्यवत्त्वस्य रामानुजैरङ्गीकृतत्वात्सिद्धसाधनता स्यात् अतः सजातीयेत्युक्तम् । नन्वीश्वरा-नन्दोप्यानन्दत्वेन धर्मेण जीवानन्दसजातीयोपि भवत्येवेति पुनः सिद्धसाधनवारणायोक्तम् । परतन्त्रानन्दत्वे-त्यादि । परतन्त्रानन्दत्वस्य साक्षाद्व्याप्यो धर्मो देवानन्दत्वं तेन धर्मेण सजातीयो य आनन्दो देवानां परस्पर-मानन्दः । तथापरतन्त्रानन्दत्वसाक्षाद्व्याप्यो धर्मः ऋष्यानन्दत्वं तेनापि सजातीयो य ऋष्यादीनां परस्परमानन्द-

(प्रकाशः)

स्तत्प्रतियोगिकतारतम्यवानिति साध्यार्थः ॥ प्रकृतिबन्धनिवृत्तिरिति ॥ देवादीनां जायमाना प्रकृतिबन्धनिवृत्तिरित्यर्थः ॥ स्वसजातीयेत्यादि ॥ स्वशब्देन पक्षीभूतदेवादिबन्धनिवृत्तिस्तज्जातीया या बन्धनिवृत्तिर्ऋष्यादिबन्धनिवृत्तिस्तदाश्रयो ऋष्यादिस्तत्प्रतियोगिकतारतम्यवन्तो देवास्तन्निष्ठेत्यर्थः । एवं च जीवानामन्योन्यतारतम्यसिद्धिः ॥ निगडबन्धेति ॥ देवदत्तनिष्ठनिगडबन्धनिवृत्तिः स्वसजातीया या बन्धनिवृत्तिर्यज्ञदत्तीया तदाश्रयो यज्ञदत्तस्तत्प्रतियोगिकतारतम्यवान् देवदत्तस्तन्निष्ठेत्यर्थः । ननु स्वरूपसुखे कथं तारतम्यं तेषामेकैकत्वेन सङ्ख्याकृततारतम्याभावात् । अणुभूतजीवस्वरूपत्वेन परिमाणकृततारतम्याभावाच्चेति शङ्काभासं निराकरोति ॥ स्वरूपेति ॥ जलपानं सुधापानं च तदुभयजन्येत्यर्थः ॥ सारूप्यादीति ॥ सालोक्यसामीप्यसारूप्यसायुज्यरूपं मुक्तिचतुष्टयम् । तत्रोत्तरोत्तरमुक्तिमति तदधस्तना मुक्तिरस्ति सारूप्यादिमति सालोक्यादिदर्शनात् एवं सायुज्यवति सारूप्यादिमुक्तिदर्शनात् सारूप्यादेश्च भेदगर्भत्वेन भेदगर्भसारूप्यादिमुक्तेः सायुज्यस्यैक्यरूपत्वपक्षेऽयोगादित्यर्थः ॥ भेदे सत्यपीति ॥ न हि विशिष्टेन चन्द्रेणैक्यरूपं सायुज्यं युक्तमित्यर्थः ॥ अन्यस्मिन्वा संसारिणीति ॥ श्रोत्रियादिपदवाच्ये विरक्तपुरुष इत्यर्थः । किं च त्वत्पक्षे प्रकृतो विरक्तरूपः श्रोत्रियो यः स एक एव मनुष्यगन्धर्वमारभ्य ब्रह्मपर्यन्तं श्रुतेषु श्रोत्रियस्येत्यादिवाक्येषूच्यते । उत भिन्नः नाद्य इत्याह ॥ अपिचेत्यादिना ॥ न द्वितीय इत्याह ॥ भिन्नश्चेदिति ॥ अकामहतत्वादेः सर्वेष्वपि श्रोत्रियेष्वेकप्रकारतया श्रवणेन तत्साध्यानन्देष्वपि तारतम्यरूपव्यवस्थाया अयोग इत्यर्थः ॥ तदितरपदकामश्चेति ॥ तथाचाकामहतत्वं न सर्वत्रैकप्रकारमित्यर्थः । अतो व्यवस्थोपपत्तिरिति भावः ॥ उक्तं हीति ॥ अनुव्याख्यान इत्यर्थः । ननु चरमदेहस्य सर्वेषामेकप्रकारत्वान्न तारतम्यमित्यत आह ॥ चरमदेहोपीति ॥ मर्त्यादिरेव मर्त्यऋषिदेवादिरूप एवेति तत्रैव तारतम्यमिति भावः । त्वत्पक्षे रामानुजपक्षे । निरन्तरचिन्ता भक्तिः । भरन्यासः अन्तःकरणभरन्यासः । प्रपत्तिर्विश्वास इति यावत् । स्वरूपतो विषमत्वादित्यन्वयः ॥ कर्मेति ॥ निरन्तरचिन्तारूपभक्तिः अन्तःकरणशुद्धिद्वारा कर्मापेक्षा । प्रपत्तिस्तु कर्मानपेक्षेत्यर्थः ॥ आवृत्तीति ॥ चिन्तारूपा भक्तिर्निरन्तरमावृत्तिसापेक्षा । नैवं प्रपत्तिरित्यर्थः । ननु भक्तिस्वरूपकर्मावृत्तिभ्याम् आधिक्येपि विश्वासोल्पः प्रपत्तौ तु कर्मावृत्त्योरभावेपि विश्वासो भूयानिति दशरूप्यैकसुवर्णन्यायेन भक्तिप्रपत्त्योः साम्यमित्याशङ्क्य निराकरोति ॥ न च तयोरिति ॥ प्रपत्त्यपेक्षया भक्तावेव विश्वासाधिक्यमित्याह ॥ विश्वासस्येति ॥ सकृद्भोजने बहुघृतभोक्त्रपेक्षया बहुषु भोजनेष्वल्पघृतभोक्तुरेव बहुघृतभोक्तृत्ववदनेकभक्त्यावृत्तिष्वल्पाल्पविश्वासस्यापि सकृन्निवृत्तिप्रपत्तिगतविश्वासापेक्षयाधिकत्वादित्यर्थः ॥ अन्धेति ॥ अन्धेन कृते यागे आज्येक्षणाद्यङ्गवैकल्यं पङ्गुकृते विष्णुक्रमाद्यङ्गवैकल्यम् ॥ कर्मणामिति ॥ अल्पकर्मणोल्पफलं महतो महदित्येवं विशेषचोदनाभावेप्यल्पस्य कर्मणः स्वविषयेल्पफले महति विभागो नियमो भवति स्थानसाम्यात् यथा ब्राह्मणकाण्डे प्रथमस्थानगतेन कर्मणा प्रथमकाण्डे प्रथमस्थानगतस्य मन्त्रस्य स्थानप्रमाणेन सम्बन्धस्तथाल्पफलं प्रत्यल्पमेव कर्म साधनं सम्बध्यते महत्फलं प्रति महदित्यर्थः । अपरोक्षज्ञानोत्तरमनुष्ठितानि विचित्रकर्माणि मोक्षे तत्प्रयोजकानि मोक्षाहेतुत्वे सति सफलत्वादिति सामान्यव्याप्तिकानुमानेन मोक्षे वैचित्र्यं सिध्यतीत्याह ॥ तस्य तावदेवेति ॥ विशेषणासिद्धिं परिहरति ॥ नापीति ॥ वैचित्र्यापाताच्चेति ॥ तदङ्गीकारे त्विष्टापत्तिः । अर्थान्तरं परिहरति ॥ नापि फलेति ॥ बाधान्न तत्सिद्धिरिति भावः ।

(प्रकाश:)

विशेष्यासिद्धिं परिहरति ॥ नापीश्वरेति ॥ लीलार्थं निष्फलम् । अपरोक्षज्ञानिकृतं कर्म लीलार्थं सांसारिकभोगार्थमक्रियमाणज्ञानिकर्मत्वात् ईश्वरकृतकर्मवदित्यत्र विवक्षितस्य विधिबद्धाकृतत्वस्योपाधेः पक्षाव्यावृत्तिं वक्तुं ज्ञानिनां कर्मविधिमाह ॥ आचार्यादिति ॥ पक्षासिद्धिं परिहरति ॥ सूर्यादय इति ॥ शुकशक्रसूर्यादयः ॥ यावदधिकारमिति ॥ यावदधिकारमवस्थितिराधिकारिकाणामिति सूत्रम् ॥ भोगसामान्य एव साम्यमिति ॥ मुक्तभोगे ईश्वरभोगगतभोगत्वमस्तीत्यर्थः ॥ त्वन्मतेपीति ॥ मुक्तानामैश्वरभोगविशेषवत्त्वे जगद्व्यापारस्यापीश्वरगतभोगत्वेन तद्वर्जनं मुक्तानां न स्यादित्यर्थः ॥ सातिशयत्वेपीति ॥ सातिशयस्यैवापकृष्टस्य समस्य विनादर्शनात्त्वत्पक्षेपि स स्यात् । श्रुतिबलात्तत्त्यागस्तु ममापि सम इत्यर्थः ॥ उत्कर्षस्येति ॥ गन्धाद्युत्कर्षस्य ॥ प्रकृतिमिति ॥ स्वभावम् ॥ स्वभावजेति ॥ स्वभावस्य त्रैविध्यात् श्रद्धात्रैविध्यमिति गम्यते ॥ हठापरपर्यायेति ॥ हठस्य कारणान्तरापूर्वकत्वात् नानवस्था ॥ लिङ्गशरीराविद्यानिवृत्तेरिति ॥ तथा च पितृत्वगन्धर्वत्वादिकं न देहाद्युपाधिकं किं तु स्वरूपकृतमिति गम्यत इत्यर्थः । मुक्तानां भोगानुपपत्तिपरिहाराय ''अभावं बादरिराह ह्येव''मित्यधिकरणसिद्धजडाजड- देहवत्त्वं तेषां साधयितुमाह ॥ न च मुक्तस्येति ॥ ''अभावं बादरि''रिति सूत्रसिद्धं चिच्छरीरत्वं मुक्तानां साधयति ॥ अस्ति हि तावदिति ॥ ''भावं जैमिनिर्विकल्पाम्नानादि''ति सूत्रसिद्धं जडशरीरत्वं साधयति ॥ अस्तीति ॥ यथा जाग्रदवस्थायां देहसद्भावेन भोगसम्भवस्तथा मुक्तावपि देहसद्भावेन भोगोपपत्तिरित्येवमर्थकेन ''भावे जाग्रद्वदि''तिसूत्रेण सूचितं प्रमाणमाह ॥ स्वेच्छया वेति ॥ इन्द्रियवत्त्वं तेषां साधयति ॥ मोक्षधर्मे चेति ॥ शरीरमनुप्रविश्येत्यनन्तरं तत्प्रकाशयन्त इति शेषः । एतद्भाष्यव्याख्यातं सूत्रमाह ॥ प्रदीपवदिति ॥ तन्निरुक्त्यभावादिति ॥ ''तदशीर्यताशारीति तच्छरीरमभवदि''त्याद्युक्तविशरणरूपतन्निरुक्तेस्तस्मिन् मुक्तशरीरेऽभावादित्यर्थः । अत एवाह ॥ न हीति ॥ शरीरे सत्येव वैलक्षण्यमात्रेण शरीराभावोक्तौ दृष्टान्तमाह ॥ कथमन्यथेति ॥ तारतम्यसमर्थनामुपसंहरति ॥ तस्मादिति ॥ तत्प्रयोजनमाह ॥ नियामक इति ॥ स्वयं नियच्छति ब्रह्मादिभ्यो नियमयति चेत्यर्थः ॥

॥ एतद्ग्रन्थस्य ब्रह्ममीमांसासम्बन्धित्वमुक्तमुपसंहरिष्यन् तदवधृतविशेषणवत्तयेष्टदेवतानमस्काररूपमङ्गलं ग्रन्थसमाप्तावाचरति ॥ नम इति ॥ स्वस्य स्वातन्त्र्येण कर्तृत्वस्याभावेपि पराधीनस्य सत्त्वादेतद्ग्रन्थकरणेन भगवत्प्रीतिमाशास्ते ॥ मत्प्रेरकेणेति ॥ सङ्गृहीत इत्युक्त्याऽत्रोक्तन्यायानां मूलशास्त्रोक्तत्वं सूचितमिति ज्ञातव्यम् ॥
॥ मुक्तावपि ब्रह्मदीनां तारतम्यसमर्थनम् ॥ ५ ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकश्रीनिवासेन विरचिते
न्यायामृतप्रकाशे चतुर्थः परिच्छेदः ॥

**॥ संपूर्णश्चायं ग्रन्थः ॥**

# परिशिष्टम्

## (न्यायामृतप्रकाशे पूर्वमनुपलब्धो भागः)

(श्रीनिवासतीर्थरचितन्यायामृतप्रकाशे मायामात्रमिति श्रुत्यर्थसन्दर्भादारभ्य अविद्यालक्षणभङ्गपर्यन्तो अनिर्वाच्यसाधकानुमानभङ्गादारस्य प्रथमपरिच्छेद समाप्तिपर्यन्तश्च भागः श्री टि.आर्. कृष्णाचार्यैः कुम्भकोणनगरे प्रकाशिते ग्रन्थे नैव मुद्रितः आसीत् । तैः अनेकहस्तलिखितग्रन्थसमवलोकनेऽपि अयं भागः नैव उपलब्धः आसीत् । पण्डितसमुदायेऽपि अयं भागः दग्धः इति प्रतीतिः आसीत् । अस्माभिरपि द्वितीयसम्पुटमुद्रणावसरे अस्य भागस्य सम्पादनाय महान् प्रयत्नः आदृतः तथापि न अयं भागः उपलब्दः आसीत् । परं तु इदानीं पण्डितवर्य श्रीप्रभञ्जनाचार्याणां सङ्ग्रहे विद्यमाने एकस्मिन् हस्तलिखितग्रन्थे अयं भागः दृष्टः। हरिवायुगुर्वनुग्रहेण प्राप्तः अयं भागः इदानीम् अस्मिन् तृतीये सम्पुटे परिशिष्टत्वेन मुद्रितः । विषयसङ्ख्या च द्वितीय सम्पुट गत तत्तद्विषयसङ्ख्यानुसारेणैव निर्दिष्टा । अस्य भागस्य उपलब्ध्या वाचकानां महान् उपकारः भवेदिति विश्वसिमः ।

अपूर्वमिदं हस्तलिखितग्रन्थं सङ्गृह्य प्रकाशनाय प्रदत्तवद्भ्यः श्रीप्रभञ्जनाचार्येभ्यः कृतज्ञतां समर्पयामः । - सम्पादकः)

## ११. मायामात्रमिति श्रुत्यर्थः

सत्योपाधिकृतत्वं सत्योपाधिजन्यत्वं द्वितीये विकल्प इति श्लोके । अनादिसत्यत्वं, आद्यश्लोके पञ्चविधभेदस्यानादित्वं द्वितीयश्लोके सत्यत्वमिति विवेकः । नन्वनादिश्रुतेः कथमाधुनिकभास्करादिमतप्राप्तनिषेधकत्वम्? अदर्शनादित्यत आह । यथेति ॥ बौद्धेति ॥ प्रवाहतोऽनादिरिति पूरणीयम् । श्लोकाभ्यां कथमनादित्वं सत्यत्वं च लभ्यत इत्यतः तौ व्याख्यातुं प्रतिजानीते ॥ तथा हीति ॥ अनादिसत्यत्वमेतत्श्लोकप्रतिपाद्यतया प्रसिद्धमित्यर्थः । आद्यश्लोकं व्याचष्टे ॥ भेदेति ॥ भेदरूपः प्रपञ्चः । विद्येतेत्यस्योत्पत्त्यर्थत्वमुपपादयति ॥ वेदेति ॥ तर्हि प्रकृते कथमुत्पत्तिलाभ इत्यत आह ॥ उत्पत्तिरिति ॥ असतः सत्तासम्बन्धरूपत्वात् जनेरिति भावः । ननु विदेरुक्तविधयोत्पत्त्यर्थकत्वेऽपि तत्राप्रयोगादसाधुत्वमाशङ्क्य सत्तार्थस्यापि भवतेरुत्पत्तौ प्रयोगदर्शनात् समानन्यायेन विदेरप्युत्पत्तौ प्रयोगो नासाधुरित्यभिधाय भावार्थाधिकरणवार्तिकामुदाहरति ॥ तेनेति ॥ यजेतेत्यादौ धात्वर्थभूतयागातिरिक्ता भावना प्रयत्नरूपा लिङ्वाच्यतयाऽङ्गीकार्या । अतः अन्यभावना प्रयत्नरूपा लिङ्वाच्याऽस्तीत्याहनेन श्लोकेन । अयमर्थः । येन कारणेन धात्वर्थस्यैव भावनात्वे "यागं भावयेत्" इत्यादि प्रयोगायोग इत्याशयेन धात्वर्थातिरिक्तस्यैव भावनात्वे यागं भावयेत् इत्यादि प्रयोगयोगः । "भावनैव प्रयत्नात्मा सर्वत्राख्यातगोचरः" इत्यादिवाक्यविरोधश्च । तेन कारणेन भूतिषु, भवनेषु, उत्पत्तिषु कर्तृत्वं प्रतिपन्नस्य प्राप्तस्य, भवत इत्यर्थः । उत्पद्यमानस्येति यावत् । वस्तुनो यागादेः प्रयोजकक्रियाम् उत्पत्त्यनुकूलव्यापारं प्रयत्नरूपं भावनास्वरूपविदः परीक्षका लिङ्वाच्यां भावनां प्राहुरित्यर्थः । तथा च यजेतेत्यस्य यागं

भावयेत्, यागविषयकं प्रयत्नं कुर्यादित्यर्थः पर्यवस्यतीति ज्ञातव्यम् । एवं चात्र वार्तिके उत्पद्यमानस्येति वक्तव्ये भूतिषु कर्तृत्वमिति प्रयोगात् भवतेरुत्पत्तौ प्रयोगोऽवगम्यत इत्यर्थः । तथा च तन्न्यायेन विदेरप्युत्पत्तौ प्रयोगो युक्त इति भावः । प्रकारान्तरेणापि विद्येतेत्यस्य उत्पद्येतेति व्याख्यानमुपपादयति विद्लृलाभ इति ॥ लाभार्थकत्वेऽप्युत्पत्तिरर्थतया कथमागतेत्यत आह ॥ उत्पत्तिरपीति ॥ पराभिमतार्थे बाधकमाह ॥ अस्तित्वेति ॥ विद्येतेत्यस्येति शेषः । व्याप्त्यभावादिति ॥ गगनादौ व्यभिचारादिति भावः। ननु निवृत्तिप्रयोजकत्वेनोक्तस्यास्तित्वहेतोः श्रौतत्वेन तत्र न व्याप्त्यपेक्षेत्यतो मीमांसाग्रन्थविरोध इत्याह ॥ अत एवेति ॥ श्रौतस्यापि हेतोर्व्याप्त्यभावे आभासत्वमेव भवति यतो अत एवेत्यर्थः ॥ न ह्यत्रानुयाजा इति ॥

अस्त्यत्र मीमांसासम्प्रदायविशेषः । तथाहि आतिथ्येष्टिर्नाम काचिदिष्टिरूपभृन्नामकेष्टिप्रकृतिकाऽस्ति। तत्र चोपभृन्नामकेष्टौ प्रयाजानुयाजसंज्ञकौ यागौ वर्तेते । तथा अष्टावुपभृति गृह्णाति इति होमार्थस्रुवे स्रुचा पात्रस्थमाज्यमष्टवारं गृहीतव्यमिति विहितम् । एवं च "प्रकृतिवद् विकृतिः कर्तव्या" इति न्यायेनातिथ्येष्टावपीतरांगवत् अष्टवारगृहीताज्यवत्वं प्राप्तम् । तत्रातिथ्येष्टाविदमाम्नायते चतुर्गृहीतान्याज्यानि भवन्ति । न ह्यत्रानुयाजा भवन्तीति । तथा च चतुगृहीताज्यानि भवन्ति । न ह्यत्रानुयाजा इति । अत इति ॥ एवं चात्र न ह्यत्रेति हेतोरेवोक्त्या व्याप्तेरनुक्तत्वादातिथ्येष्टिः चतुर्गृहीताज्यगती। अष्टगृहीताज्यवती न भवतीति यावत् । अनुयाजशून्यत्वात् । यत्रानुयाजाभावः तत्राष्टगृहीताज्यत्वाभावः इति श्रौतहेतोर्व्याप्तिः राणके शाबरभाष्यटीकायामुक्तेत्यर्थः । अन्यथा तदुपादानं व्यर्थं स्यादिति भावः । अर्थानुवादोऽयम् । वाक्यं तूदाहृतम् । द्वितीयान्तमित्येतत् द्वितीयवाक्यादर्शनमूलमिति ज्ञातव्यम् ।

मायामात्रमित्येतदवतारयति ॥ नन्विति ॥ पूर्वत्रेति ॥ प्रपञ्च इति श्लोकापेक्षया पूर्वं माण्डूक इत्यर्थः । इतोऽपि न मायाकल्पित्वं मायामात्रशब्दार्थ इत्याह । प्रभव इति ॥ उत्तरत्रेति ॥ कल्पितौ यदि केनचिदित्यस्य कल्पितत्वनिराकरणपरतया व्याख्यास्यमानत्वात् तद्विरोध इत्यर्थः । सत्वोक्तेरिति ॥ सतां सत्त्ववतां सर्वभावानामिति सर्वभावानां सत्वोक्तेरित्यर्थः । अविरुद्धार्थस्यैवेति ॥ स चाविरुद्धोऽर्थ ईश्वरेच्छाधीनत्वरूप एव, न मायाकल्पितत्वरूपः । मायाकल्पितत्वरूपमायामात्रत्वस्य निवर्त्यत्वनियतत्वेनानिवर्त्यत्वविरुद्धत्वादिति भावः । इहेति ॥ द्वितीयार्धे मायामात्रपदेनेत्यर्थः । ल्यबूलोपेति ॥ "ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वाच्या" इति वार्तिकादित्यर्थः । उदाहरणं तु 'प्रासादात् प्रेक्षते' 'आसनात् प्रेक्षते' इति । प्रासादमारुह्य आसने उपविश्य प्रेक्षते इति तदर्थः । परमशब्दस्य स्वतन्त्रार्थकत्वमनुशासनाभावादयुक्तमित्यत आह ॥ स्वतन्त्रमिति ॥ ननु 'स्वतन्त्रं परमार्थाख्यं' इति भवद्भिः काचन परिभाषा कृता । वस्तुतः परमार्थशब्दो मिथ्याप्रतिद्वन्द्विनि तात्त्विकरूपार्थ एव रूढः । अयमर्थोऽकृत्रिमत्वात् ग्राह्यः । न तु पारिभाषिकः, कृत्रिमत्वात् । एवं च अद्वैतं परमार्थतः, अद्वैतमेव तात्त्विकम् । प्रपञ्चो भेदस्त्वतात्विकः इति लभ्यत इत्यत आह ॥ परिभाषायाश्चेति ॥ कार्यार्थत्वेन प्रयोजनविशेषार्थत्वेन पारिभाषिकार्थस्यैव ग्राह्यत्वादित्यर्थः । आणूनद्या इत्यादाविवेति ॥ 'यूस्त्र्याख्यौ

नदी' इत्यत्रेकारान्तस्त्रीलिङ्गशब्दस्य गौरी इत्यादेः ऊकारान्तस्त्रीलिङ्गस्य 'तनू' इत्यादेर्नदीसंज्ञ विहिता । अनन्तरं 'आण् नद्याः' इत्यत्र नद्यन्तात् आडागमो विधीयते । एवं च 'आण् नद्याः' इत्यादौ नदीशब्देन 'यूस्त्र्याख्यौ नदी' इति परिभाषितेकारान्तोकारान्तगौरीतनू इत्यादिकैव गृह्यते । न तु गङ्गायमुनादिका रूढ्या प्रसिद्धा नदी । तद्वदिहापीत्यर्थः । ननु तर्हि 'नदीभिश्च' इत्यत्र लौकिकप्रसिद्धनदीवाचकपदेभ्यः प्रत्ययविधानात् तत्रापीयं पारिभाषिकी नदीसंज्ञैव ग्राह्या स्यादित्यत उक्तम् ॥ असतीति ॥ तत्र तु बहुवचनमेव बाधकमस्ति । यदि नदीभिश्चेत्यत्रापि पारिभाषिकी नदी गृह्येत तर्हि नदी संज्ञकाभिरित्यर्थः स्यात् । तदयुक्तम् । ईकारान्तोकारान्तद्वयोरेव नदीसंज्ञा-विधानेनान्यान्तेभ्यश्चाविधानात् बहुवचनमनुपपन्नं स्यादिति बाधकात् प्रसिद्धनदीग्रहणम् । न ह्यत्रैवं बाधकमस्तीत्यर्थः । यववराहाद्यधिकरणन्यायेनेति ॥

प्रथमाध्याये तृतीयपादे स्मृत्यधिकरणे चिन्तितम् । यवमयश्चरुर्भवति' 'वाराही उपानहौ उपमंचते' 'वैतसे कटे प्राजापत्यान् चिनोति' इति । तत्र यवशब्दं दीर्घशूके प्रयुंजते । वराहशब्दं सूकरे । वेतसशब्दं च वंजुले । म्लेछास्तु यवशब्दं प्रियंगुषु । वराहशब्दं जम्बूवृक्षे । एवं सति लोकव्यवहारेण निश्चेतव्येषु तेषु शब्दार्थेषु आर्यम्लेछप्रसिद्धयोः समानबलत्वात् उभयविधा अप्यर्था विकल्पेन स्वीकार्या इति प्राप्ते सिद्धान्तितं जैमिनिना 'शास्त्रस्था वा तन्निमित्तत्वात्' इति । शास्त्रीयार्थावबोधे शास्त्रप्रसिद्धिरेव बलीयसी । अविच्छिन्नसंप्रदायपरंपरागतत्वात् । शास्त्रे च यवविधिसमीपेऽर्थवादवाक्यं श्रूयते तत्रान्या ओषधयो म्लायन्ते । अथैते मोदमाना इवोत्तिष्ठन्ति इति । तथा

**वसन्ते सर्वसस्यानां जायते पत्रशातनम् ।**
**मोदमानास्तु तिष्ठन्ति यवाः कणशशालिनः ॥**

इति स्मृतेश्च तदितरौषधिविनाशकाले पाल्गुनादौ अभिवृद्धिर्दीर्घशूकेषु दृश्यते, न प्रियंगुषु । मितरौषधिपचनात् पूर्वं पच्यमानत्वात् । अतो यवशब्दो दीर्घशूकार्थः । तथा उपानद् विध्यर्थवादश्चैवं ति 'वराहं गावोऽनुधावन्ति' इति । न हि गोभिरनुधाव्यमानः काको भवति । किं तु गोसदृशः तुष्पात् पशुरेव । अतो वरोहशब्दः सूकर एव । तथा वैतसविध्यर्थवादवाक्यं चैवं भवति 'अप्सुजा वेतसः' इति । न हि जम्बूवृक्षोऽप्सुजः । अतो वेतसशब्दो वंजुलार्थ एवेति ।

शास्त्र इति ॥ एवं चाद्वैतं परमार्थत इति शास्त्रीयविचारे 'स्वतन्त्रं परमार्थाख्यं' इति शास्त्रीयार्थ एव ग्राह्यो न तु तात्विकादिरूपोऽशास्त्रीय इत्यर्थः । अन्यथा यवादिशब्दैः म्लेच्छप्रसिद्ध्या प्रियंग्वादिरपि ग्राह्यः स्यादिति भावः ।

न केवलं परमार्थशब्दः स्वतन्त्रे रूढः । किं तु त्वन्यायेनैव यौगिकश्चेत्याह ॥ किञ्चेति ॥ तथा च स्मृतावपि स्वतन्त्रं परमार्थाख्यं योगेनैवेत्यर्थोऽस्त्विति भावः । त्वयाऽपि परमार्थशब्दः तात्विकेऽर्थे

प्रयुज्यते कथम्? तात्विकार्थस्य कल्पितार्थात् परमत्वेन । तथा च त्वदुक्तं परमत्वमस्मदभिप्रेते स्वतन्त्रेऽर्थेऽप्यस्ति । स्वतन्त्रस्यैव परमत्वात् इति भावः । ननु योगात् रूढेर्बलवत्वात् परमार्थशब्देन समुदायप्रसिद्ध्या तात्विकरूप एवार्थो गृह्यताम् । एवं चाद्वैतस्यैव तात्विकत्वात् जगतोऽतात्विकत्व-सिद्धिरित्यत आह ॥ न चेति ॥ समुदायशक्तिः रूढिः । ननु रूढिप्राबल्योक्तेस्तर्हि का गतिः? यत्र यौगिकार्थो न सम्भवति तत्रैवेति ब्रूमः । यत्र तु योगः सम्भवति तत्र योगेन रूढेरेवापहार इत्याशयेनाह ॥ अत एवेति ॥ योगसम्भवे समुदायशक्तिकल्पनाया अयुक्तत्वादेवेत्यर्थः । प्रोक्षण्यधिकरण इति ।

प्रथमाध्याये चतुर्थपादे चिन्तितम् । प्रोक्षणीष्वर्थसंयोगादित्यत्र दर्शपूर्णमासयोः श्रूयते 'प्रोक्षणीरा-सादयति' इति । तत्र प्रोक्षणीशब्दो जले रूढो यौगिको वेति सन्देहेऽस्याभिमन्त्रणासादनादि-संस्कृतास्वप्स्वेव प्रयोगस्य सर्वजनीनत्वात् संस्कारनिमित्तको रूढ एव । यद्वा जलक्रीडायां 'प्रोक्षणीभि-रुद्वेजिताः स्मः' इत्यसंस्कृतास्वप्स्वपि प्रयोगात् जातिनिमित्तको जले रूढ एवेति पूर्वपक्षः । सिद्धान्तस्तु योग एवेति । न च क्लृप्तसमुदायशक्तिं विना कल्प्ययोगाश्रयणमयुक्तमिति वाच्यम् । अत्रापि व्याकरणेन योगस्य क्लृप्तत्वात् तथाहि, प्रोपपदात् उक्ष सेचने इत्यस्मात् करणे ल्युटि 'युवोरनाकौ' इत्यनादेशे नस्य णत्वे गुणे 'प्रोक्षण' इति जाते ल्युटः टित्वात् टिड्ढाणेत्यादिना ङीपि निष्पन्नः प्रोक्षणीशब्दः प्रकृष्टोक्षणसाधनीभूतजलघृतादि द्रव्यमात्रं वक्ति । एवं च प्रोक्षणीशब्दः संस्कृतासंस्कृतजले यौगिक एवेति सिद्धान्तः । योगे उपपन्ने सति समुदायशक्तिर्न कल्पनीयेत्यत्र संमतिमाह ॥ उक्तं चेति ॥ अश्वकर्णशब्दो हि वृक्षे रूढ एव कुतः? यदि वृक्षे अश्ववत् कर्णौ भवेतां तर्ह्येव योगस्योपपत्तौ रूढिर्न कल्प्या । न चैवं तत्र योगः संभवति । बाधितत्वात् । अतो रूढ एवेत्यर्थः । एवं च तत्र योगासम्भवादेव रूढिराश्रिता । अतः प्रकृते परमार्थशब्दस्य तात्विकेऽपि योगे सम्भवति सति रूढिर्नाश्रयणीया । सति चैवं यौगिकार्थभूतं परमत्वं स्वतन्त्रार्थेऽप्यस्तीति भावः । नन्वथापि यत् परमार्थशब्दप्रवृत्तिनिमित्तभूतं परमत्वं तत् तात्विकार्थ एव मुख्यं; न तु स्वतन्त्रार्थे । अतस्तात्विकार्थग्रह इत्यत आह ॥ स्वतन्त्र एवेति ॥ न तु तात्विकार्थे इत्यर्थः । ननु मन्मते परमार्थशब्दस्य तात्विके योगरूढ्योः सत्वात् कथं योगमात्रेण स्वतन्त्रार्थकत्वमित्यत आह ॥ परमार्थेति ॥ मानान्तरैरिति ॥ योगरूढिभ्यां परमार्थशब्दस्य तात्विकार्थाङ्गीकारेऽद्वैतस्यैव तात्विकत्वापत्त्या भेदस्य मिथ्यात्वापत्तेः सत्यं भिदेत्यादिमानान्तरविरोधः स्यात् । अतस्तदविरोधाय योगेन स्वतन्त्रपरत्वमेव युक्तमित्यर्थः । अद्वैतशब्दार्थोऽद्वितीय इति । परमार्थतः इत्यत्र तसः प्रथमार्थः इत्यभिप्रेत्योक्तं 'अद्वितीयं ब्रह्म' इति । वस्तुस्थितिकथनपरत्वे बाधकमाह ॥ श्लोकयोरिति ॥ चतुष्टयमिति ॥ कल्पितो यदीत्यत्र 'यदि कल्प्येत' इति गम्यमानत्वात् लिङः चतुष्ट्वं बोध्यम् । एकस्मिन्नेवेति ॥ चिदानन्दाद्येकरसे जीव इत्यर्थः । कर्मानुसारेण जीवस्य सुरनरादिदेहप्राप्तौ स्वरूपापेक्षयाऽहं मनुष्योऽहं देव इत्यादिप्रतीयमान-देवत्वादेमिथ्यात्वपरेयं श्रुतिः । चिदानन्दैकरसजीवस्वरूपे देवत्वादेर्मिथ्यात्वादित्याशयः । इति मायामात्रमिति श्रुत्यर्थविवरणम् ॥

## १२. अनन्तमिति श्रुत्यर्थविवरणम् ॥

अनन्तशब्द इति ॥ अन्तशब्दस्य परिच्छिन्नार्थकत्वात् न विद्यते अन्तं परिच्छिन्नं जगत् यस्येत्यनन्तमिति परिच्छिन्नजगदभावोऽनन्तशब्देनोच्यत इति भवति मिथ्यात्वे मानामित्यर्थः । परिच्छेद इति । तथा च ब्रह्म अनन्तं जगत्प्रतियोगिकपरिच्छदशून्यमित्यर्थः स्यादिति भावः । नन्वथापि परिच्छेदो नाम भेदः । एवं ब्रह्मानन्तं जगत्प्रतियोगिकभेदशून्यमिति प्राप्त्या भवतामनिष्टमेवेति चेन्न । परिच्छेदस्य भेदत्वे हि अपरिच्छेदस्याभेदत्वेऽपि जगत्प्रतियोगिकभेदशून्यमित्यर्थप्राप्तावपि भेदप्रतियोगिनो जगतः सत्यत्वमेव सिद्ध्यति । यथाऽऽकाशस्य व्याप्तत्वेन देशतोऽपरिच्छेदाभिप्रायेण 'आकाशोऽनन्त' इत्युक्ते देशतः परिच्छेदो नास्ति इति लभ्यते । तत्र परिच्छेदप्रतियोगिनो देशादेर्न मिथ्यात्वम् । किं नाम? आकाशतुल्यतया सत्वमेवास्ति । एवं ब्रह्म घटादिजगत्प्रतियोगिकभेदशून्यम् अभिन्नमित्युक्तेऽपि घटत्वादिविरुद्धांशत्यागेन घटादिस्वरूपेण ब्रह्मणोऽभेदरूपतस्त्वपरिच्छेदसिद्धावपि ब्रह्मवद् घटादेरपि न मिथ्यात्वम् । यथा ब्रह्म जीवाभिन्नमित्युक्तेऽभेदप्रतियोगिनो जीवस्य न मिथ्यात्वं तद्वत् । ननु तत्रापि विशिष्टस्य जीवस्य मिथ्यात्वमस्त्येवेति चेत् जीवचैतन्याभिन्नं ब्रह्मचैतन्यमित्युक्ते विरुद्धांशत्यागेनाभेदेऽपि अभेदप्रतियोगिनो जीवचैतन्यस्य न मिथ्यात्वं, एवमेव घटादेरपि अन्तशब्दोदितभेदप्रतियोगिनो न मिथ्यात्वमित्याह ॥ तथा चेति ॥ न तु वस्तुनेति ॥ घटादेरित्यर्थः । ननु जीवचैतन्याभिन्नं ब्रह्मचैतन्यमित्यत्राभेदप्रतियोगिनो जीवचैतन्यस्य ब्रह्मवत् सत्यत्वमेव भेदप्रतियोगिनो घटादेस्तु मिथ्यात्वान्न ब्रह्मवत् सत्यत्वमित्याशङ्क्य निषेधति ॥ जीवस्वरूपमिति ॥ अद्यापीति ॥ अस्मिन् विभागे सिद्धे घटादेर्मिथ्यात्वसिद्ध्याऽनन्तशब्दसिद्धिः । तस्यां च सत्यां त्वदुक्तविभागसिद्धिरिति अन्योन्याश्रयादित्यर्थः । अन्तशब्दो न परिच्छिन्ने व्युत्पन्न इत्युक्तम् । यदि त्वद्रीत्या अन्तशब्दः परिच्छिन्ने व्युत्पन्नः स्यात् तर्हि ब्रह्मणोऽपरिच्छिन्नत्वमेव न सिध्यतीत्याशयेनाह ॥ वस्तुतस्त्विति ॥ कुत इत्यत आह ॥ परिच्छिन्नादिति ॥ यद्यपरिच्छेद एवाभेद इत्यङ्गीकृत्यानन्तशब्दस्य परिच्छिन्नाभेदाभावरूपमपरिच्छिन्नत्वमर्थ इत्युच्यते तर्ह्यपरिच्छिन्नत्वरूपमभिन्नत्वमेव न स्यात् । प्रत्युत यदि परिच्छिन्नाभेदः स्यात् तर्ह्येवापरिच्छिन्नत्वं स्यात्? परिच्छिन्नभेदाभावे तु स्वस्यापि परिच्छिन्नत्वप्राप्त्या त्वदङ्गीकृतापरिच्छिन्नत्वरूपमभिन्नत्वमेव न स्यादित्यर्थः । किं चान्तशब्दस्यापि भिन्नत्वरूपं परिच्छिन्नत्वं नार्थः । तथात्वे भेदवति परिच्छिन्नत्वबुद्धिः स्यात् । यथा परमाणौ नित्यतया कालापरिच्छेदमात्रसत्वेऽपि अव्याप्ततया देशपरिच्छेदसत्वेन परिच्छिन्नः परमाणुरिति बुद्धिः तथा देशकालोभयापरिच्छिन्नेऽपि गगनादौ घटादिभेदस्य सत्वात् गगनादिः परिच्छिन्न इति बुद्धिः स्यात् । नह्येवं भवति । तस्मात् न भिन्नत्वापरपर्यायपरिच्छिन्नत्वमन्तशब्दार्थः । किंतु परिच्छिन्नत्वापरिच्छिन्नत्वे मूर्तत्वामूर्तत्वादिरूपे द्रष्टव्ये इत्याशयः । किंच न भेदमात्रनिषेधोऽनन्तशब्दार्थः । व्याघातादित्याह ॥ अनन्तपदेनेति ॥ व्यावृत्तेरिति ॥ व्यावृत्तिश्च भेद एवेति भावः । त्वयैवेति ॥ ''अनृतजडविरोधिरूपमन्तत्रयमलबन्धनदुःखताविरुद्धम्''

इति तदुक्तेरित्यर्थः । भिन्न इतीति ॥ भिन्नस्य परिच्छिन्नशब्देनानभिधानात् अभिन्नम् अपरिच्छिन्नशब्द-वाच्यं न भवतीत्यर्थः । स्वमतेऽनन्तशब्दार्थमाह ॥ तस्मादिति ॥ यस्त्वानन्त्यार्थो गुणापरिच्छेद इति । इति अनन्तमिति श्रुत्यर्थविवरणम् ।

## १४. इन्द्रो मायाभिरिति श्रुत्यर्थविवरणम् ॥

॥ इन्द्रो मायाभिरिति ॥ अज्ञानेन घटपटादि बहुरूपत्वस्यात्रोक्तत्वात् । तच्च तदारोपाधिष्ठानत्वमेवेति मिथ्यात्वसिद्धिरिति भावः । रूपशब्देनेति । इति इन्द्रोमायाभिरिति श्रुत्यर्थविवरणम् ॥

## १५. अतोऽन्यदार्तमिति श्रुत्यर्थविवरणम् ॥

ईश्वरादन्यद् आर्तम् आर्तिमत् । आर्तिर्विनाशः । 'यस्योभयं हविरार्तिमार्छेत्' इत्यार्तिशब्दस्य विनाशे प्रयोगात् । तथा च ज्ञानेन निवृत्त्युक्त्या मिथ्यात्वं लभ्यत इत्यर्थः । यद्वा अतोऽन्यद् जगत् आ ऋतम् ईषद् ऋतं पारमार्थिकसत्यं न भवतीत्यर्थः तन्मतरीतिरहस्यविदः ।

'अतोऽन्यत्' इत्यत्र प्रकृतं यत् ब्रह्म तदन्यत् चेतनत्वादिना तत्सजातीयं यत् जीवजातं तत् आर्तं दुःखि इत्येवार्थः । अत्र ब्रह्मणः पूर्वप्रकृतत्वं कथम्? इत्यत आह ॥ अत्रेति ॥ एतत् शब्दस्येति ॥ एतदोऽश् इति सूत्रेण एतत् इत्यस्य अश् इत्यादेशे 'अतः' इति भवति । तथा च अतः एतस्मात् इत्यर्थः । अन्यशब्दस्य प्रकृतसजातीयपरत्वे उदाहरणमाह ॥ ब्राह्मणादन्यमिति ॥ ब्राह्मणादन्यमानयेत्युक्ते तदन्यस्तेन मनुष्यत्वेन सजातीय एव कश्चिदानीयते, न घटादिरित्यर्थः । समानमिति ॥ यथा इतरयागेषु तद्धर्मातिदेशाय 'समानमितरत् श्येनेन' इति विहितम् । तत्र प्रकृतो यः श्येनयागस्याङ्गकलापः तत्सजातीयाङ्गकलाप एव 'इतरत्' इत्यनेन प्राप्नोति, न यत्किञ्चिदित्यर्थः । आर्तं दुःखीति ॥ आर्तो जिज्ञासुरिति दुःखिन्यार्तशब्दप्रयोगदर्शनादित्यर्थः । ननु जीवब्रह्मणोरभेद एवास्तु । श्रुतिस्तु ब्रह्मव्यतिरिक्तजडस्यार्तिप्रतिपादकतया तद्भेदपराऽस्त्वित्यत आह ॥ न हीति ॥ इति अतोऽन्यदार्तमिति श्रुत्यर्थविवरणम् ॥

## १६. जगदसत्ववाचिपुराणवचनार्थविवरणम् ॥

असत्वोक्तेरिति ॥ 'तावन्ममेत्यसदवग्रह आर्तिमूलं तस्मादिदं जगदशेषमसत् स्वरूपं'' इत्यादौ । अश्रद्धयेति ॥ तथैवमादिरूपोऽसद्भावोऽसत्शब्दार्थ इति भावः । अस्वातन्त्र्याद्वाऽसत्वोक्तिरिति सम्बन्धः। अन्यथेति ॥ असाधुत्वास्वातन्त्र्याभ्याम् असत्त्वोक्त्यव्याख्यान इत्यर्थः । अवस्तुत्वोक्तिः 'किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत्' इत्यादौ अपारमार्थिकत्वोक्तिः 'न यत्किञ्चित् भासते परमार्थतः' इत्यादौ । परिणामित्वादवस्तुत्वोक्तिमुपपादयति ॥ यत्त्विति ॥ यथा परिणामेन सुवर्णस्य रुचिकादिसंज्ञा

भवतीति दृष्टं तथा च हे नृप कालान्तरेणापि परिणामादिसम्भूताम् अन्यसंज्ञां यत् नोपैति तत् वस्तुशब्देनोच्यते । तच्च किमिति चेत् त्वं पृच्छसि तर्हि वक्ष्यामीति वा, कश्चित् नृपं प्रति कस्यचित् प्रश्नो वा। एवं चापरिणामित्वस्य वस्तुशब्दार्थत्वे परिणामित्वमवस्तुशब्दार्थ इति लब्धमित्यर्थः। विनाशित्वादपारमार्थिकत्वोक्तिमुपपादयति ॥ अनाशीति ॥ तथा च विनाशी न परमार्थ इति सिध्यतीति द्रष्टव्यम् । मिथ्यात्वोक्तिरीति ॥ 'लोकस्य मिथ्याभिमतेरचक्षुषः' इत्यादावपि मिथ्याशब्दस्य सदोषार्थकत्वं वैय्याकरणसंमतमित्याह ॥ मिथ्योपपदादिति ॥ मिथ्याशब्दोपपदात् 'कृञ् करणे' इत्यस्मात् धातोरभ्यासे सकृदुच्चारणरूपेऽर्थे विवक्षिते सति णिच् स्यादिति सूत्रार्थः । सूत्रवृत्तौ काशिकायाम् असकृदुच्चारयतीति सौत्राभ्यासशब्दार्थः । 'स्वरादिदुष्टम्' इति कस्य पदस्यार्थ इत्यत एतद्व्याख्यानपरकाशिका-टीकाद्वयवाक्यमुदाहरति । न्यास इति ॥ एतेनेति ॥ 'स्वरादिदुष्टम्' इति वचनेनेत्यर्थः । आचष्टे काशिकाकारो वामनः। इत्युक्तत्वात् न्यासरूपपदमञ्जरीरूपकाशिकावृत्तिटीकाकर्तृभ्यामित्यर्थः। अतात्विकत्वोक्तिः 'तस्मान्न तात्विकं विद्धि जगदेतत् चराचरम्' इति विष्णुपुराणादौ । अविद्यमान-त्वोक्तिः अविद्यमानो ह्यवभाति हि द्वय इत्यादौ । जीवसम्बन्धित्वेनेति ॥ जीवस्वामिकत्वेनेत्यर्थः । स्वप्नादीति ॥ 'स्वप्नमनोरथो यथा' इत्यादौ । मायामयोक्तिः 'मायामये वासनया शयानः' 'मायामात्रमिदं द्वैतम्' इत्यादौ । मायामात्रमित्यत्र माण्डूकवाक्यस्य मायामयत्वेन मिथ्यात्वाभिप्राये बाधकमाह ॥ अन्यथेति ॥ बोधनिवर्त्यत्वरूपमिथ्यात्वेनैव स्वप्नादिसाम्याङ्गीकारे बाधकमाह ॥ वैधर्म्याच्चेति ॥ मिथ्याभूतस्येति ॥ असत्वादिवाक्येषु सर्वत्रापि प्रतीतार्थाङ्गीकारे बाधकमाह ॥ तत्रैवेति ॥ असत्वावस्तुत्वादिकं यत्र यत्र पुराणे कथ्यते तत्र तत्रैव पूर्वोत्तरवाक्यैश्च विरोधात् नासत्वादिकं तदर्थ इत्यर्थः । इति जगदसत्ववाचिपूराणार्थविवरणम् ॥

## १७. ज्ञाननिवर्त्यत्वान्यथानुपपत्तिभङ्गविवरणम् ॥

ज्ञाननिवर्त्यत्वेति ॥ यतो ज्ञानमज्ञानस्य तत्कार्यस्य वा निवर्तकमित्यङ्गीकारात् 'तरति शोक-मात्मवित्' इत्यादौ ज्ञाननिवर्त्यत्वोक्तेस्तदन्यथाऽनुपपत्त्याऽज्ञानतत्कार्यान्यतरत्व रूपमिथ्यात्वसिद्धिरित्यर्थः। मिथ्याभूतस्येति ॥ अज्ञानोपादानकस्येत्यर्थः । उभयोरपि नियमयोर्व्यभिचारमाह ॥ ज्ञानमात्रेणेति ॥ चरमसाक्षात्कारव्यतिरिक्तेनेत्यर्थः । ज्ञानमात्रेण ज्ञानमात्रप्रागभावस्येत्याद्युक्त्याऽऽद्यनियमभङ्गः, सत्यस्ये-त्युक्त्या द्वितीयनियमभङ्गः इति ज्ञातव्यम् । ज्ञानप्रागभावस्येत्यादिषष्ठीनां निवृत्तेरित्यनेनान्वयः । ननु जगदन्तर्गतस्य ज्ञानप्रागभावादेर्मूलाज्ञानोपादानकत्वमस्त्येवेत्यत उक्तम् । ज्ञानसमानविषयकेत्यादि ॥ निवर्तकज्ञानसमानविषयकाज्ञानेत्यर्थः । चरमसाक्षात्कारव्यतिरिक्तज्ञान- निवर्त्याज्ञानानुपादानकस्येति यावत् ॥ तत्प्रागभावेति ॥ घटाद्यज्ञाननिवर्तकत्वेनाभिमतघटज्ञानप्रागभावस्येत्यर्थः । ज्ञानसमानेत्यादि सत्यस्येति विशेषणद्वयं घटादेः पूर्वज्ञानस्येत्यादावपि योज्यम् । घटज्ञानप्रागभावो घटज्ञानसमानविषयक घटाज्ञानानुपादानकः सत्यश्च घटज्ञानेन निवर्तते चेति ज्ञातव्यम् । ननु प्रागभावनिवृत्तेः ज्ञानरूपत्वेन कथं

स्वेन स्वोत्पत्तिरिति चेन्न, प्रागभाव निवृत्तिः प्रतियोग्यतिरिक्तेति मतेनेदमिति ज्ञातव्यम् । ईश्वरस्येति ॥ ईश्वरज्ञानस्य सर्वोत्पात्तमत्निमित्तकारणत्वेन घटादिनिवृत्तिं प्रत्यपि कारणत्वमस्त्येवेति भावः । सर्वोत्पत्तिमत्निमित्तकारणीभूतेश्वरज्ञानेन निवर्तते चेति भावः । उत्तरेति । धारावाहिकज्ञानस्थले घटविषयकोत्तरज्ञानसमानविषयकं घटाज्ञानानुपादानकं सत्यं च पूर्वज्ञानम् उत्तरज्ञाननाश्यमित्यर्थः । प्रत्यभिज्ञानादिनेति ॥ ननु प्रत्यभिज्ञया पूर्वानुभवजन्यसंस्कारः न निवर्तते, प्रत्युत दृढीकृतो भवति । तस्य स्मृतिमात्रनिवर्त्यत्वादिति चेन्न । अनित्यात्मविशेषगुणत्वेन फलैकनाश्यत्वेन च कार्यकारणभावस्य धर्माधर्मादौ दर्शनात् अनित्यात्मविशेषगुणभूसंस्कारस्य प्रज्ञभिज्ञारूपफलैकनाश्यत्वमस्त्येवत्याहुः । तत् चिन्त्यम् । अनित्यात्मविशेषगुणस्य सुखस्य दुःखस्य वा स्वयमेव फलरूपत्वेन फलान्तरशून्यतया फलैकनाश्यत्वाभावात् । केचित्तु स्मृत्येव प्रत्यभिज्ञयाऽपि संस्कारो नश्यत्येवेति मताभिप्रायेणेदमित्याहुः । वस्तुतस्तु प्रत्यभिज्ञानादिनेत्यनेनातद्गुणसंविज्ञानबहुव्रीहिणा स्मृतिर्ग्राह्या । तथा च घटस्मृतिसमानविषयक-घटाज्ञानानुपादानकस्य सत्यस्य संस्कारस्य निवृत्तेरित्यर्थः । विषय इति । हेयतादिदर्शनेनेत्यर्थः । तथा दोषदर्शनसमानविषयकदोषाज्ञानानुपादानकस्य सत्यस्य रागादेर्दोषदर्शनेन निवृत्तेरित्यर्थः । सुहृदिति ॥ सुहृद्दर्शनसमानविषयकसुहृदज्ञानानुपादानकस्य सत्यस्य दुःखादेः सुहृद्दर्शनेन निवृत्तेरित्यर्थः। गरुड-ध्यानेति ॥ अस्मन्मते परोक्षज्ञानसन्ततेरेव ध्यानत्वेन तस्यापि ज्ञानत्वादिति भावः । एवं च गरुडध्यानसमानविषयकगरुडाज्ञानानुपादानकस्य सत्यस्य विषस्य गरुडध्यानेन निवृत्तेरित्यर्थः। अग्नि-चिदिति । अग्निचयनाख्यकर्मकर्त्रित्यर्थः । कपिलेति ॥ 'कपिलां गां निरीक्षेत दुरितक्षयकाम्यया' इति स्मृतेः । एवं च अग्निचित्कपिलधेनुदर्शनसमानविषयकाग्नि- चित्कपिलधेन्वज्ञानानुपादानकस्य सत्यस्य दुरितादेरग्निचित् कपिलधेनुदर्शननिवर्त्यत्वादित्यर्थः । सेत्वादीति ॥ सेतुदर्शनसमानविषयकसेत्व-ज्ञानानुपादानकस्य सत्यस्यापि ब्रह्महत्यादेः सेत्वादिदर्शननिवर्त्यत्वादुक्तनियमद्वयस्य व्यभिचार इत्यर्थः । सेत्वादिदर्शनेन ब्रह्महत्यादेर्निवृत्तेरित्युक्तव्यभिचार परिहारमाशङ्कते । नन्विति ॥ ब्रह्महत्यायाः सेतुदर्शननिवर्त्यत्वं नास्ति किं नाम सेतुदर्शनेन सेत्वज्ञानं निवर्तते । अज्ञाननिवृत्त्यनन्तरं ब्रह्महत्यादि निवर्तते । तेन ज्ञानस्य तत्कार्यस्य वा ज्ञानेन निवृत्तिनियमस्य न व्यभिचार इत्यर्थः । ननु तर्हि प्रपञ्चेऽपि न ज्ञाननिवर्त्यत्वं, किं नाम ज्ञानजन्याज्ञाननिवृत्तिद्वारेणैवेति स्यादित्यस्वरसादाह ॥ अदृष्टेति ॥ सेतुदर्शनजन्यादृष्टद्वारेणैव ब्रह्महत्या निवर्तते, न साक्षात् सेतुदर्शनेन । अतो न व्यभिचार इत्यर्थः । ब्रह्मज्ञानेन तु प्रपञ्चः साक्षादेव निवर्तते । नादृष्टद्वारेण । ज्ञाने जाते सत्यदृष्टादेः सर्वप्रपञ्चस्य विलयादिति ज्ञातव्यम् । अथवा साक्षात् ज्ञानत्वेन ज्ञाननिवर्त्यत्वमेवाभिप्रेतम् । न चोक्तव्यभिचारः । सेतुदर्शने ब्रह्महत्यानिवर्तकतावच्छेदकं न ज्ञानत्वम् । किं नाम विहितक्रियात्वमेव । 'सेतुं पश्येत पुरुषो ब्रह्महत्याजिघांसया' इत्यादौ विहितत्वात् । अतो विहितक्रियात्वेनैव ब्रह्महत्यानिवर्तकतया ज्ञानत्वेनानिवर्तकत्वान्न व्यभिचार इत्याह । आक्षादिति । सममिति ॥ तर्हि ब्रह्मज्ञानस्यापि न ज्ञानत्वेन प्रपञ्चनिवर्तकत्वम् । किं नाम द्रष्टव्य इत्यादौ तस्यापि विहितत्वात् विहितक्रियात्वेनैव निवर्तकत्वमस्त्विति

न ज्ञानत्वेन निवर्तकत्वमतो न ज्ञाननिवर्त्यत्वमित्यसिद्धिरित्यर्थः । ननु ब्रह्महत्यादेः सेतुज्ञाननिवर्त्यत्वं नास्त्येव ॥ किं नाम सेतुप्राप्तिनिवर्त्यत्वं वा सेतुप्राप्तिजन्यादृष्टनिवर्त्यत्वं वाऽङ्गीक्रियते । अतो न ज्ञाननिवर्त्यत्वस्य ब्रह्महत्यादौ व्यभिचार इत्याशङ्क्य निराकरोति । श्रुतेति ॥ 'सेतुं पश्येत' इत्यादौ ब्रह्महत्यानिवर्तकत्वेन श्रुतदर्शनेत्यर्थः । इदं विशेषणं परस्य श्रुतहान्यश्रुतकल्पनाप्रदर्शनायेति ज्ञातव्यम् । ब्रह्मध्यानमिति । त्वन्मते ध्यानस्य मानसक्रियात्वेन ज्ञानत्वाभावात् ब्रह्मध्यानं वा तज्जन्यादृष्टं वा प्रपञ्चनिवर्तकमस्तु । अतो न प्रपञ्चेऽपि ज्ञाननिवर्त्यत्वमित्यसिद्धिरित्यर्थः । ब्रह्मज्ञानं विहाय ध्यानस्यैव निवर्तकत्वपक्षः श्रेयान्, श्रुतत्वादित्याह ॥ तस्येति ॥ 'तस्याभिध्यानाद्योजनात् तत्वभावात् भूयश्चान्ते विश्वमाया निवृत्तिः' इति श्रुतेरित्यर्थः । ननु ज्ञानमात्रनिवर्त्यत्वमेवाभिप्रेतम् । एवं च ब्रह्महत्यादौ सेतुदर्शनमात्रनिवर्त्यत्वं नास्ति । किं नाम दूरगमनादिविशिष्टसेतुदर्शननिवर्त्यत्वमेव । अन्यथा तत्रत्यानामपि तन्निवृत्तिः स्यादित्याशङ्कते ॥ तन्विति ॥ तर्हि प्रकृतेऽपि न ब्रह्मज्ञानमात्रं प्रपञ्चनिवर्तकम् । तथात्वे गायनादिरूपकार्नाटकादिभाषाप्रबन्धजन्यब्रह्मज्ञानेनापि निवृत्त्यापातात् । अतो वेदान्तजन्यज्ञानमेवेति वक्तव्यम् । इदमपि न सम्भवति । अनधीतवेदान्तस्य तस्य व्युत्पन्नस्य वेदान्तपुस्तकावलोकनादिजन्यब्रह्मज्ञानस्यापि तन्निर्वकत्वापत्तेः । अतोऽधीतवेदान्तजन्यज्ञानमेव निवर्तकमिति वाच्यम् । तदपि न सम्भवति । प्रदोषानध्यायाधीतवेदान्तजन्यस्य तन्निवर्तकत्वाभावात् । अतो नियमाधीतवेदान्तजन्यज्ञानमेव तन्निवर्तकमिति वाच्यम् । इदमपि न युक्तम् । सत्यपि नियमेन वेदान्ताध्ययने तज्जन्यब्रह्मज्ञानस्य वेदभराक्रान्तानामदर्शनात् वेदान्तव्याख्यानश्रवणमपेक्षितम् । तदपि न यादृशतादृशम् । किं नाम समित्पाणित्वादिगुरूपसत्तिपूर्वकमेवापेक्षितम् । एतदपि न युक्तम् । नियमाधीतवेदान्तश्रवणनियमजन्येनापि ब्रह्मज्ञानेन संसारानिवृत्तेः असंभावनाविपरीतभावनयोः सत्योस्तदयोगात् । अतस्तदुभयनिवर्तकं मननं ध्यानं चापेक्षितम् । एतदपि न युक्तम् । नियमाधीतवेदान्तश्रवणमननध्याननियमजन्यसाक्षात्कारे सत्यपि, प्रबलप्रारब्धकर्मप्रतिबद्धेन तेन संसारानिवृत्तेः । अन्यथा जीवन्मुक्तानां संस्कारानुवृत्तिर्न स्यात् । अतस्तदभावोऽप्यपेक्षितः । एवं च न नियमाधीतवेदान्तश्रवणमननध्याननियमजन्यप्रारब्धकर्माप्रतिबद्धमेव ब्रह्मज्ञानं तन्निवर्तकमिति वाच्यम् । अतो ब्रह्मज्ञानमात्रनिवर्त्यत्वाभावादसिद्धिः स्यादेवेत्याह इहापीत्यादिना ॥ श्रवणादीत्यादिपदेन मननध्यानसङ्ग्रहः । द्वितीयादिपदेन प्रारब्धकर्माप्रतिबद्धत्वग्रहणम् । पदानां कृत्यं स्वयमेव दर्शयति ॥ भाषेत्यादिना ॥ उक्तरीत्या स्पष्टमेतत् । तेनेति ॥ ब्रह्मसाक्षात्कारेण संसारानिवृत्तेरित्यर्थः । अन्यथेति ॥ नियमाधीतवेदान्तश्रवणादिनियमजन्यसाक्षात्कारस्य संसारनिवर्तकत्वमनङ्गीकृत्य ब्रह्मज्ञानमात्रस्य तन्निवर्तकत्वाङ्गीकार इत्यर्थः । प्रारब्धकर्माप्रतिबद्धत्वमप्यावश्यकम् । तदनङ्गीकारे बाधकमाह ॥ प्रारब्धेति ॥ जीवन्मुक्तस्य नियमाधीतवेदान्तश्रवणमननध्याननियमजन्यब्रह्म साक्षात्कारवतः शुकवामदेवादेरित्यर्थः । अदृष्टत्वेऽपीति ॥ त्वद्रीत्या मिथ्याभूतस्य रूप्यादेरेव ज्ञानेन निवृत्तिदर्शनेन सत्यस्य निवृत्त्यदर्शनेऽपीत्यर्थः । विपक्ष इति ॥ सत्यस्यापि निवृत्त्यङ्गीकारे बाधकाभावादित्यर्थः । अन्यथेति ॥ लोक अन्यथेति ॥ लोकदृष्टान्ताङ्गीकार-

स्यैवावश्यकत्व इत्यर्थः। जीवन्मुक्तिदशायामधिष्ठानसाक्षात्कारवतामपि शुकादीनां भिक्षाटनादि-प्रवृत्त्यन्यथाऽनुपपत्त्या जगद्भ्रमोऽस्ति। स न स्यात्। तथा च तदाऽनुवृत्तस्य जगतः सत्यतैव स्यात्। लोकेऽधिष्ठानतत्वसाक्षात्कारानन्तरं भ्रमादर्शनात्। ननु लोकेऽधिष्ठानभूतशङ्खसाक्षात्कारे सत्यपि पैत्यभ्रमानुवृत्तिदर्शनात् प्रकृतेऽपि तथाऽस्त्विति चेन्न। तस्य विशेषदर्शनानिवर्त्यभ्रमत्वेन सोपाधिकत्वात् विशेषदर्शननिवर्त्यनिरूपाधिकभ्रमानुवृत्तेरधिष्ठान तत्वसाक्षात्कारानन्तरमदर्शनात्। कर्मवशादुपपद्यत इति चेन्न अप्रामाणिकतया कर्मवशादप्यदर्शनात्। अतो जगद्भ्रमस्य निरूपाधिकत्वेनाधिष्ठानतत्वसाक्षा-त्कारानन्तरं विशेषदर्शनसद्भावात् कर्मवशादप्यनुवृत्त्ययोगस्य लोकदृष्ट्या प्राप्तत्वेन तदानीमनुवृत्तस्य जगतः सत्यतैव स्यात्। अतोऽलौकिकत्वात् कार्यानुसारेण भ्रममङ्गीकृत्य लोकदृष्टेरप्रयोजकत्वं वाच्यम्। तन्ममापि तुल्यम्। अतः सत्यस्यापि निवृत्तिरस्त्विति भावः। लोकसिद्धस्यैव कल्पनाङ्गीकारे त्वद्रीत्या तयैवानिष्टमापद्यत इत्याह॥ अपि चेत्युत्तर ग्रन्थेन। लोके शुक्तिरूप्ये। अन्तःकरणशुद्ध्यजन्यज्ञानेति। नेदं रजतमित्यादिज्ञानेत्यर्थः। तज्जन्येति। तथा च प्रपञ्चः सत्योभवितुमर्हति नित्यनैमित्तिक-कर्मसाध्यान्तःकरणशुद्धि जन्यज्ञाननिवर्त्यत्वात्। नित्यनैमित्तिककर्मसाध्यान्तःकरणशुद्धिजन्यदेवता-दर्शननिवर्त्यदुरितवत्। व्यतिरेकेण रूप्यवत् इत्यनुमानमनेनोक्तं भवतीति द्रष्टव्यम्। कल्पिते रूप्ये। संस्कारेति। श्रवणादिजन्यसंस्कारेत्यर्थः। एतादृशं च नेदं रजतमिति ज्ञानम्। विषनिवर्तकं यत् गरुडज्ञानसन्तानं तत् गरुडस्वरूपश्रवणजन्यसंस्कारसापेक्षम्। कीटत्वनिवर्तकं यद् भ्रमरज्ञानसन्तानं तदपि भ्रमरानुभवजन्यसंस्कारसापेक्षमेवेति ज्ञातव्यम्। यथाऽऽहुः

'कीटः पेशस्कृतारुद्धः कुड्ये यान्तमनुस्मरन्।
संरम्भभययोगेन विन्दते तत्सरूपताम्॥'

इति। श्रवणादीति॥ एवं च प्रपञ्चः सत्यो भवितुमर्हति। संस्कारसापेक्षज्ञाननिवर्त्यत्वात्। गरुड-ज्ञाननिवर्त्यविषवत्। भ्रमरज्ञाननिवर्त्यकीटत्ववच्च। व्यतिरेकेण रूप्यवत् इत्यनुमानं द्रष्टव्यम्। लोके व्यावहारिकस्थले, घटध्वंसादावित्यर्थः। अज्ञानेति॥ अज्ञाननिवृत्तेः पञ्चमप्रकारायाः पारमार्थिक-त्वाङ्गीकारात्। अभावरूपा धर्माः नाद्वैतं घ्नन्तीति मण्डनमिश्रोक्तेरित्यर्थः। स्यादिति॥ तथाचाज्ञानं स्वनिवृत्तिसमसत्ताकं निवर्त्यत्वात् घटवत् इत्यनुमानमुक्तमिति ज्ञातव्यम्। ननु रूप्ये व्यभिचारः। तस्य हि स्वनिवृत्तिसमसत्ताकत्वं नास्ति। रूप्यस्य प्रातिभासिकत्वात्, तद्ध्वंसस्य व्यावहारिकत्वादिति चेन्न। एवं भिन्नसत्ताकत्वाङ्गीकारे शुक्तिरूप्यतद्ध्वंसयोः कालिकोविरोधोऽस्ति, स न स्यात्। तथा हि शुक्तौ प्रातिभासिकरूप्याभेदप्रतीतिकाले व्यावहारिकभेदोऽस्ति। तयोर्भेदाभेदयोर्भिन्नसत्ताकयोर्कालिकविरोधा-दर्शनाद्रूप्यतद्ध्वंसयोरपि भिन्नसत्ताकत्वे सर्वजनीनः कालिको विरोध एव न स्यात्। अस्ति चासौ। अतः समानसत्ताकत्वे वाच्ये व्यभिचाराभावः सुस्थ इत्याह प्रातिभासिकस्येति। अज्ञेयेति। अज्ञानविषयेत्यर्थः। नियमादिति॥ नियमदर्शनादित्यर्थः। शुक्त्यज्ञानतद्विषयभूतशुक्त्योः काचशुक्त्योश्चेति शेषः। दोषेति॥

जगद्भ्रमेऽविद्याया एव दोषत्वाङ्गीकारादित्यर्थः । एवं चाज्ञानं स्वविषयभूतब्रह्मसमसत्ताकम् अज्ञानत्वात्, यदज्ञानं तत् स्वविषयसमसत्ताकं, यथा शुक्त्यज्ञानम् । तथा जगद्भ्रमदोषत्वेनाङ्गीकृतमज्ञानम् अधिष्ठान-समसत्ताकम् । दोषत्वात् काचादिवदित्यनुमानद्वयं द्रष्टव्यम् । नन्वज्ञानं मिथ्या ज्ञाननिवर्त्यत्वात् इत्यनुमीयते । अतो भवदनुमानस्य सत्प्रतिपक्षतेत्यतोऽप्रयोजकत्वान्नैवमनुमातव्यमित्याह ।। किञ्चेति ।। ननु नाप्रयोजकता । सत्यत्वे ज्ञाननिवर्त्यत्वं न स्यादिति हेतूच्छित्तिरूप बाधकसत्वादिति चेत् तदाह ।। यथेत्यादि ।। अन्यत्र ब्रह्मणि । निवृत्तिः ज्ञाननिवृत्तिः श्रुतिबलात् 'विश्वमायानिवृत्तिः' इत्यादिश्रुतिबलात् । सत्यस्यापि अज्ञानस्येत्यर्थः । ज्ञानमज्ञानस्य वा तत्कार्यस्य मिथ्याभूतस्यैव वा निवर्तकमिति नियमद्वयं खण्डितम् । अधुना ज्ञानस्याज्ञाननिवर्तकत्वं न सम्भवति । ज्ञानस्वरूपाज्ञानस्वरूपनिवृत्तिस्वरूपाणां च त्वन्मते दुर्निरूपत्वादित्याशयेनाह ।। किं चेत्यादिना ।। तत्रादौ ज्ञानस्वरूपं विविच्य तस्याज्ञाननिवर्तकत्वं न सम्भवतीत्युच्यते । तथा हि । ज्ञानमज्ञाननिवर्तकमित्यत्र भावव्युत्पत्त्या ज्ञप्तिर्ज्ञानमिति विवक्षितमुत करणव्युत्पत्या ज्ञानशब्देन ज्ञानकरणं विवक्षितमिति विकल्पं हृदि निधायाद्यमनूद्य दूषयति ।। ज्ञानमिति ।। तमेवोपपादयति ।। त्वन्मत इति ।। वेदान्तजन्यवृत्तिर्बन्ध निवर्तिकेति शङ्कमानं मन्दं प्रत्याह ।। बन्धेति ।। अज्ञानेत्यर्थः । केवलायाः वृत्तेः केवलस्य वा चैतन्यस्य बन्धानिवर्तकत्वेऽप्ययःपिण्डसमारूढाग्नेः रोगनिवर्तकत्ववत् वृत्तिप्रतिबिम्बितचैतन्यस्यैव बन्धनिवर्तकत्वं भविष्यति । तदेव च मन्मते ज्ञप्तिरित्या-शङ्कते ।। वृत्तीति ।। मुक्ताविति ।। त्वन्मते मुक्तौ आनन्दज्ञप्तिरङ्गीकृता । सा न स्यात् । मुक्तावन्तः-करणवृत्तेरभावेन वृत्तिप्रतिबिम्बितचैतन्याभावादिति भावः । साक्षीति ।। वृत्तिप्रतिबिम्बितचैतन्यरूप-ज्ञप्तेरेवाज्ञानविरोधित्वाङ्गीकारात् । सुखादौ अन्तःकरणवृत्तेः त्वयाऽनङ्गीकारेण केवलसाक्षिचैतन्ययोग्य-त्वाङ्गीकारात् अज्ञानविरोधिभूतवृत्तिप्रतिबिम्बितचैतन्यरूपज्ञप्तेरभावेन तत्राज्ञानापातादित्यर्थः । सुखादौ त्विति ।। चैतन्यमात्रेणैव प्रकाश्यत्वाङ्गीकारात् तस्यैव च ज्ञप्तित्वेन सर्वदा सत्वात् नाज्ञानं सुखादावित्यर्थः । एतेनेत्युक्तं विशदयति ।। मोक्ष इति ।। स्वरूपचैतन्यस्य स्वरूपचैतन्यरूपस्य । 'द्ज्ञप्तीति ।। मौक्तानन्दज्ञप्तिरन्यत्वेनेत्यर्थः । तथा च यःयेन प्रकाशते तत्र सा ज्ञप्तिः । सैव तत्राज्ञान-ारोधिनीत्यङ्गीकृत्य सुखादेश्चैतन्यमात्रप्रकाश्यत्वाङ्गीकारे मौक्तानन्दस्यापि चैतन्यमात्रप्रकाश्यत्वेन तत्रापि .स्यैवाज्ञानविरोधित्वात् तस्य च चैतन्यस्येदानीमपि सत्त्वेनाज्ञानस्य नित्यनिवृत्त्यापत्या मौक्तानन्दस्ये-दानीमपि प्रकाशः स्यादिति भावः । द्वितीयमाशङ्क्य निषेधति ।। ज्ञानकरणं चेदिति ।। न व्याप्तिरिति ।। ज्ञानकरणमज्ञानस्य तत्कार्यस्य वा निवर्तकमिति व्याप्तिर्नास्तीत्यर्थः । ज्ञानकारणेनेति ।। चक्षुरादिनेत्यर्थः। नेदं रजतमिति ज्ञानस्यैवाज्ञाननिवर्तकत्वं तत्कार्यनिवर्तकत्वं च त्वयाऽङ्गीकृतम् । न ज्ञानकरणस्य तन्निवर्तकत्वं त्वत्संमतमिति भावः । ननु करणस्यापि ज्ञानद्वारानिवर्तकत्वमस्त्येवेत्यस्वरसादाह ।। न जानामीति ।। यदि ज्ञानकरणस्यैवाज्ञानविरोधित्वमङ्गीक्रियते तर्हि न जानामीत्यत्र ज्ञानमपि नास्ति प्रत्युत तद्विरोध्यज्ञानमप्यस्तीति नञोऽर्थद्वयप्रतीत्या ज्ञप्तिरूपज्ञानविरोध्येवाज्ञानं प्रतीयते न तु ज्ञानकरणचक्षु-रादिविरोधिभूतमज्ञानमित्यर्थः । न तर्हीति ।। सत्याज्ञानोपादानकत्वादित्यर्थः । न व्याप्तिति ।। ज्ञानं

मिथ्याभूताज्ञाननिवर्तकमिति व्याप्तिर्नास्तीत्यर्थः । ननु शुक्तिज्ञाननिवर्त्याज्ञाने व्याप्तिरस्तीति चेत् तत्राह ॥ शुक्तिज्ञानेति ॥ तदेवोपपादयति ॥ न हीति ॥ इदानीं निवत्तिशब्दार्थं दूषयति ॥ एवमिति ॥ विरोध इति ॥ अज्ञानस्य तत्कार्यस्य वा विनाश्यत्वेन मिथ्यात्वसाधने विनाश्यत्वस्य मिथ्यात्वाभावेनैव व्याप्तत्वात् हेतोर्विरुद्धत्वं स्यादित्यर्थः । तदेवोपपादयति । लोक इति ॥ इदं रजतमित्यादिस्थले इत्यर्थः । ज्ञानेति ॥ नेदं रजतमित्यादिबाधकज्ञानेत्यर्थः । तथा च यत् ज्ञानविनाश्यं न तत् मिथ्या यथा शुक्त्यज्ञानम् । एतावन्तं कालं शुक्त्यज्ञानमासीदिति तस्य सत्यत्वानुभवात् । यन्मिथ्या न तत् ज्ञानविनाश्यं यथा रूप्यमिति व्याप्तेरनुभवसिद्धत्वेन त्वदीयानुमानस्य विरुद्धत्वमिति भावः । ननु यन्मिथ्या न तत् ज्ञाननिवर्त्यमित्यत्रापि विरुद्धत्वमेव । मिथ्याभूतस्यापि रूप्यस्य ज्ञाननिवर्त्यत्वानुभवादित्यत आह ॥ न हीति ॥ असिद्धरिति ॥ तथात्वेऽज्ञानस्य तत्कार्यस्य वा प्रपञ्चस्यासत्त्वप्राप्त्या एतादृशज्ञाननिवर्त्यत्वं स्वरूपासिद्धमित्यर्थः । एतादृशज्ञाननिवर्त्यत्वाङ्गीकारे श्रुतिस्मृतिसूत्रविरोधश्च स्यात् । तत्र ज्ञानेनाज्ञानादिरूपबन्धध्वंसस्यैवोक्तेरित्याह ॥ क्षीयन्त इत्यादिना ॥ तस्मादेव सत्यस्यैव ज्ञानेन निवृत्त्युपपत्तेर्ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्त्या न मिथ्यात्वसिद्धिरित्युक्तम् । अत्र विवरणकारोक्तं दूषणमाशङ्क्य निराकरोति ॥ अत्र यदुक्तं विवरण इत्यादिना ॥ विषयेणेति ॥ ज्ञानविषयेणेत्यर्थः । आश्रयेण ज्ञानाश्रयेण । तद्गतपीतिमेति ॥ ज्ञानविषयभूतविशिष्टद्रव्यसम्बन्धित्वात् पीतरूपस्येति भावः । ननु रूपस्य व्याप्यवृत्तितानियमेनैकदा रूपद्वयासमवेशान्नीलरूपवति कुत्यं पीतरूपं यस्य निवृत्तिरापाद्यत इत्यत आह ॥ चित्रावयविनीति ॥ यद्यपि चित्ररूपस्यातिरिक्तत्वपक्षे नेदमापादनं सम्भवति । तथापि नानारूपसमाहारश्चित्रमिति मतानुसारेणेदमिति सम्प्रदायविदः । आत्मेति ॥ धर्मादीनां ज्ञानाश्रयीभूतात्मसम्बन्धित्वादिति भावः । देहात्मेति ॥ देहात्मसम्बन्धस्य संयोगस्य द्विष्ठत्वेन ज्ञानविषयीभूतशरीर तदाश्रयीभूतात्मसम्बन्धित्वादिति भावः । प्रतिबन्द्योत्तरं प्रतिजानीते ॥ अत्र ब्रूम इति । ज्ञानेनाज्ञानस्य निवृत्तिः किं विषयेण संबद्धस्योताश्रयेणोतोभाभ्यां वा । तथा ज्ञानेनारोपितस्य कस्यचिन्निवृत्तिः किं विषयेण सम्बद्धस्योताश्रयेणोतोभाभ्यामिति विकल्पं हृदि निधायोभयत्रापि नाद्यावित्याह ॥ ज्ञानेनेत्यादिना ॥ अयमर्थः - न तावत् ज्ञानेन स्वविषयसम्बद्धस्याज्ञानस्य निवृत्तिः । तथात्वेऽयं मैत्र इति मैत्र विषयकं ज्ञानं चैत्रस्य भवति । तेन ज्ञानेन तद्विषयभूतमैत्रनिष्ठघटाज्ञानस्यापि निवृत्तिः स्यात् । नापि ज्ञानेन स्वविषयसम्बद्धारोपितस्य निवृत्तिः । तथात्वे इदं रजतमित्यत्रेदमंशज्ञानमात्रेण तद्विषयशुक्त्यारोपितरूप्यस्यापि निवृत्तिः स्यात् । न हीदमंशज्ञानं रूप्यनिवर्तकमिति । उभयत्रापि न द्वितीयावित्याह ॥ नापीति ॥ अयमर्थः । न तावत् ज्ञानेन स्वाश्रयेण सम्बद्धाज्ञाननिवृत्तिर्वक्तुं युक्ता । तथात्वे चैत्रस्यायं घट इति घटविषयकज्ञानेन स्वाश्रयचैत्रनिष्ठपटाज्ञानस्यापि निवृत्त्यापतेः । नापि ज्ञानेन स्वाश्रयसम्बद्धस्यारोपितस्य निवृत्तिः । तथात्वेऽयं घट इति चैत्रस्य घटज्ञानं यत् भवति तेनात्मन्यारोपितं यद्देहतादात्म्यं तदपि निवर्तेत । तादात्म्यसम्बन्धस्य देहात्मोभयसम्बन्धित्वेन घटज्ञानाश्रयीभूतचैत्रात्मसम्बन्धित्वादिति ॥ उभयत्रापि न तृतीयावित्याह नापीति ॥ न तावत् ज्ञानेन स्वविषयाश्रयो-

भयसम्बद्धाज्ञानस्य निवृत्तिः । तथात्वेऽयं मैत्र इति मैत्रविषयकं यच्चैत्राश्रितं ज्ञानं तत् मैत्रविषयकत्वात् चैत्राधिकरणकत्वाच्च मैत्रचैत्रोभयसम्बन्धि भवति । तेन मैत्रस्य चैत्रविषयकं यदज्ञानमस्ति तस्यापि निवृत्तिः स्यात् । कुतः? मैत्रनिष्ठस्य चैत्राज्ञानस्य चैत्रप्रतियोगिकत्वेन मैत्राधिकरणकत्वेन च चैत्रमैत्रोभयसम्बन्धित्वात् । नापि ज्ञानेन स्वविषयाश्रयोभयसम्बद्धस्य कस्यचिदारोपितस्य निवृत्तिः । तथात्वेऽयं देह इति देहविषयकं यत् ज्ञानम् आत्मनो भवति तद्देहविषयकतया आत्माधिकरणकतया च देहात्मोभयसम्बन्धि भवति । तेनारोपितदेहात्मतादात्म्यस्यापि निवृत्तिः स्यात् । कुतः? अध्यस्तस्य तादात्म्यस्य देहात्मोभयसम्बन्धित्वादिति । उक्तदोषपरिहारं शङ्कते । नन्विति ॥ ज्ञानेनाज्ञानमात्रस्य निवृत्तिरिति नोच्यते । किं नाम ज्ञानेन समानाश्रयविषयकाज्ञानस्य निवृत्तिरित्युच्यते । एवं च न पूर्वोक्ता दोषाः । मैत्रनिष्ठघटविषयकाज्ञानस्य चैत्रनिष्ठमैत्रविषयकज्ञानसामानाश्रयविषयकत्वाभावान्न तेन तस्य निवृत्तिः तथा चैत्रीयपटाज्ञानस्यापि न चैत्रीयघटज्ञानसमानविषयकत्वमिति न तेनापि तस्य निवृत्तिः । तथा मैत्रनिष्ठचैत्रविषयकाज्ञानस्यापि न चैत्रनिष्ठमैत्रविषयकज्ञानेन समानाश्रयविषयकत्वमिति न तेनापि तस्य निवृत्तिरिति ॥ तथाज्ञानेनारोपितस्य कीदृशस्य निवृत्तिरिति विकल्प्य दूषणावकाशोऽपि नास्ति । तत्र स्वतन्त्रनियमस्यानङ्गीकारात् । किं नाम? ज्ञानेनाज्ञाने निवृत्ते तत्कार्यं स्वयमेव विनश्यतीत्यङ्गीकारादित्याह । निवृत्ते चेति । शङ्खे श्वेतत्वानुमित्येति शङ्खः श्वेतः शङ्खत्वादित्यनुमित्येति भावः । तदीयस्येति । चैत्रीयस्यैति भावः । तथा च श्वेतत्वानुमिति रूपज्ञाने चैत्रस्य सत्यपि तत्समानाश्रयविषयकचैत्राज्ञानानिवृत्तेः तत्साक्षात्कारप्रमारूपविशेषदर्शनस्यैव तदज्ञानकार्यसाक्षात्कारभ्रमनिवर्तकत्वात् । तदनिवृत्त्यैव तत्कार्यशङ्खारोपितपैत्यस्याप्यनिवृत्त्योक्तनियमस्य व्यभिचार इत्याशयः । ऐक्येति ॥ ग्रीवास्थमेवेदं दर्पणे प्रतीयमानं मुखमित्यैक्यसाक्षात्कारेणेत्यर्थः । तथा च तेनैक्याज्ञानानिवृत्तेस्तदनिवृत्यैव तत्कार्यभेदभ्रमस्याप्यनिवृत्त्योक्तनियमोऽसन्निति भावः । श्वेतत्वानुमित्यैक्यसाक्षात्कारेण च श्वैत्याज्ञानैक्याज्ञानयोरपि निवृत्तिरङ्गीक्रियत इति न व्यभिचार इति चेत्तत्राह । श्वेतत्वेति ॥ अज्ञानेति ॥ श्वैत्याज्ञानेत्यर्थः । उपलक्षणमेतत् । बिम्बप्रतिबिम्बयोरैक्यसाक्षात्कारेऽपि ऐक्याज्ञाननिवृत्तौ तत्कार्यभेदभ्रमानुवृत्तिर्न स्यादित्यपि द्रष्टव्यम् । ननु श्वेतत्वानुमित्यादिना श्वैत्याद्यज्ञाननिवृत्तावपि तत्कार्यपैत्यादिभ्रमानुवृत्तिर्युक्ता । सोपाधिकभ्रमत्वादित्यत आह । भ्रमस्येति ॥ उपादानेति ॥ न ह्युपादाननिवृत्त्यनन्तरं कार्यानुवृत्तिरावयोर्मते दृष्टेति भावः । ननु दोषाभावसहकृतज्ञानं स्वसमानाश्रयविषयकाज्ञाननिवर्तकमिति नियमाङ्गीकारान्नोक्तव्यभिचार इत्यत आह ॥ ज्ञानस्येति ॥ निवर्तन इति ॥ सहकार्यन्तरापेक्षा तत्र नास्तीति भावः । अनपेक्षणादिति ॥ दोषाभावरूपसहकार्यनपेक्षणादित्यर्थः । यदि दोषाभावापेक्षाऽङ्गीक्रियत इति परो ब्रूयात् तदा दूषणान्तरमाह ॥ किञ्चेति ॥ भविष्यदिति ॥ इदानीं साक्षात्कृतो यो घटः तद्विषयक एव यो भावी साक्षात्कारः तन्निवर्त्या याऽविद्या तन्निवृत्त्यापत्तेरित्यर्थः । तथा च दोषाभावसहकृतस्य समानाश्रयविषयकाज्ञाननिवर्तकत्वाङ्गीकारे दोषाभावसहकृतेदानीन्तरघटसाक्षात्काररूपज्ञानेन तत्समानाश्रयविषयकभविष्यद्घटसाक्षात्कारनिवर्त्याज्ञानस्यापि निवृत्तिः स्यात् ।

अस्त्विति चेत् । तर्हि सकृद्घटसाक्षात्कारानन्तरं सर्वदा तदापरोक्ष्यं स्यात् । पुनः कदाचित् कालान्तरे तदपरोक्षज्ञानाभावो न स्यादिति भावः । किं चेत्युक्तदोषपरिहारं शङ्कते ॥ नन्विति ॥ घटादि-ज्ञानमज्ञाननिवर्तकमेव न भवति यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यनङ्गीकारेणाज्ञास्यैकत्वात् तस्य च घटज्ञानेन निवृत्तौ सद्यो मोक्षः स्यात् । किञ्च ज्ञानं समानाश्रयविषयकाज्ञाननिवर्तकमित्युच्यते । न हि घटज्ञानसमानविषयकघटाज्ञानम् । ज्ञानस्य घटविषयकत्वेऽपि अज्ञानस्य घटविषयकतायाः मयाऽनङ्गीकारात् । घटस्याप्रकाशस्वरूपत्वेन तत्र प्रकाशप्रसक्तेरेवाभावेन प्राप्तप्रकाशप्रतिबन्धरूपा-ज्ञानकृत्याभावात् । अतश्चैत्रस्येदानीन्तनेनेत्याद्युक्तदूषणानवकाश इत्याशङ्कते । नन्विति ॥ जडाना-वरकत्वात् जडविषये आवरकत्वाभावात् । दृष्टानुसारादिति ॥ घटादिज्ञानस्याज्ञानानिवर्तकत्वे ज्ञानस्याज्ञाननिवर्तकत्वे दृष्टान्ताभावात् ब्रह्मज्ञानस्याप्यज्ञानानिवर्तकत्वप्राप्त्या तन्निवर्त्यत्वेन बन्धस्या-ज्ञानमयत्वरूपं मिथ्यात्वं न सिध्येदित्यर्थः । ज्ञाननिवर्त्यस्य मिथ्यात्वं प्रकारान्तरेण शङ्कते ॥ नन्विति ॥ ज्ञानविरोधित्वाच्च मिथ्यात्वमिति भावः । न वा मिथ्यात्वमिति ॥ ज्ञानविरोधित्वेन मिथ्यात्वं कल्पनीयमिति भावः । ननु ज्ञाननिवर्त्यस्य भ्रमस्य मिथ्यात्वं दृष्टम् । अतो बन्धस्यापि तेन मिथ्यात्वमेव साक्षात् साध्यते । अतो नोक्तदोष इति चेत् । तत्र वक्तव्यम् - भ्रान्तिशब्देन भावव्युत्पत्त्या भ्रमरूपज्ञानमेव विवक्षितम्? उत कर्मव्युत्पत्त्या तद्विषय इति विकल्प्याद्ये दोषमाह ॥ न हीति ॥ अन्यथा भ्रम आसीदिति अनुभवविरोधादिति भावः । द्वितीये दोषमाह ॥ मिथ्याभूतस्येति ॥ असंमतमिति ॥ मन्मते तस्यात्यन्तासत्त्वेन नित्यनिवृत्ततया ध्वंसप्रतियोगित्वरूपज्ञाननिवर्त्यत्वासंमतेरित्यर्थः । ज्ञानस्या-ज्ञाननिवृत्तिद्वारा तत्कार्यनिवर्तकत्वाङ्गीकारे चरमसाक्षात्कारानन्तरमज्ञानस्य निवर्तनेऽपि भिक्षाटनादि-प्रवृत्त्यन्यथाऽनुपपत्त्याऽविद्यालेशावस्थानं कैश्चिदङ्गीकृतम् । कैश्चिदज्ञानसंस्कारसद्भावः । कैश्चित् प्रारब्धकर्मादिकम् । तस्य सर्वस्यापि निवृत्तिः स्यात् । ज्ञानेनाज्ञानस्य निवृत्तत्वेन तल्लेशादेरवस्था-नायोगादित्याह ॥ अपि चेति ॥ तत्रैवं त्वयोत्तररितव्यं तन्ममापि सममित्याह ॥ तस्मादिति ॥ तर्ह्यज्ञानसंस्कारादेरपि ज्ञानविरोधित्वान्निवृत्तिरस्त्विति चेत् तत्राह ॥ कार्येति ॥ कार्योन्नेयधर्माणां यथाकार्यमुन्नयनात् प्रकृते भिक्षाटनादिकार्येणाविद्यालेशादेरपि ज्ञानविरोध एव नास्तीति वक्तव्यमिति भावः । सममिति ॥ तथा च ज्ञानेन निवृत्तौ ज्ञानविरोधस्यैव प्रयोजकत्वात् प्रकाशेनान्धकारस्येव सत्यस्यापि बन्धस्य ब्रह्मज्ञानेन निवृत्तिरस्तु विरोधादित्येवाङ्गीकार्यम् । अतो न तदन्यथाऽनुपत्त्या मिथ्यात्वमिति सिद्धमिति भावः । प्रसादादेवेति ॥ न ज्ञानादित्यर्थः । तर्हि ज्ञानं व्यर्थमापन्नमित्यत आह ॥ ज्ञानंत्विति ॥ ननु तर्हि 'दृष्ट्वैव' इति श्रुतिविरोधः । तत्र ज्ञानव्यतिरिक्तस्य मोक्षहेतुतानिरासादित्यत आह । दृष्ट्वैवेति ॥ प्रसाद इति ॥ 'यथा दृष्टया' इत्यत्र दर्शनेन प्रसादो लभ्यते इति भावः । तथा च प्रसादेनैव मुच्यते नापरेणेत्यन्ययोग व्यवच्छेदोऽभिप्रेत इत्याशयः । इति ज्ञाननिवर्त्यत्वा-न्यथाऽनुपपत्तिभङ्गविवरणम् ।

## १८. सत्यस्येति श्रुत्यर्थापत्तिप्रमाणभङ्गविवरणम् ॥

श्रौतार्थापत्तिरिति ॥ अत्र सत्यभूतप्राणानां सकाशादपि पुनः ब्रह्मणः सत्यत्वोक्त्यन्यथाऽनुपत्त्या तदपेक्षयाऽधिकसत्वं प्रतीयते । प्राणानां च तदपेक्षया व्यावहारिकसत्वलक्षणं न्यूनसत्यत्वं प्रतीयत इतीयं श्रौतार्थापत्तिरेव प्राणादिजगन्मिथ्यात्वे मानमित्यर्थः । राजत्वेति ॥ अन्यथा तत्रापि प्रथमराजादि-शब्दनिर्दिष्टेषु राजत्वादेः प्रातिभासिकत्वाद्यापातात् । न चैवम् । किं तु तत्रापकृष्टत्वमात्रमेवेति भावः । लक्षणोक्तीति ॥ जगतोऽपि सत्यत्वे ब्रह्मलक्षणस्यातिव्याप्त्यापत्तेरतस्तदन्यथाऽनुपत्त्या मिथ्यात्वमङ्गीकार्य-मिति भावः । बृहदारण्यक इति पाठः प्रामादिकः छान्दोग्य इत्येव पाठः । अस्य वाक्यस्य बृहदारण्यकेऽभावात् । छान्दोग्य एव भावादिति ज्ञातव्यम् । 'सत्तासत्ते मुक्तामुक्तौ गोविन्दाधीनौ' इति छान्दोग्यभारतोक्त्योः समानार्थत्वमित्याहुः । तथा च मुक्तामुक्तनियामकत्वरूपसत्यत्वाख्यब्रह्मलक्षणस्य नेतरत्रातिव्याप्तिप्रसक्तिरिति भावः । ननु मुक्तामुक्तनियन्तृत्वस्य योगवृत्या सत्यशब्दार्थतया श्रुतत्वेऽपि रूढेर्बलवत्वात् पारमार्थिकत्वरूपसत्यत्वमेव श्रुतौ विवक्षितमस्तु । तथा च तस्य लक्षणत्वनिर्वाहाय जगतो मिथ्यात्वमङ्गीकार्यमित्याशङ्क्य निषेधति । न चेति ॥ यदाजिमिति ॥ आज्यैः स्तुवत इत्यत्र प्रसिद्धाज्यानां स्तोत्रकरणत्वासम्भवात् 'यदाजिमीयुः' इत्युत्तरवाक्यानुसारेण पञ्चदशस्तोत्रविशेषेषु आज्यशब्दो यौगिक एव न तु रूढ इत्यङ्गीकृत्य योगेन रूढिबाधोऽङ्गीकृत इत्यर्थः । यैः पञ्चदशमन्त्रविशेषैः तदुच्चारणेनेति यावत् आजिं युद्धमण्डलं यज्ञस्थलविशेषं वा शूराः ऋत्विजो वा ईयुः प्राप्नुयुः । यदाजिमीयुः तदेवाज्यानामाज्यपदप्रवृत्तिनिमित्तमिति श्रुत्यर्थः। शास्त्रस्था वेति न्यायेनेति ॥ सन्दिग्धार्थकशास्त्रार्थनिर्णयस्य शास्त्रान्तरस्थप्रसिद्ध्यधीनतायाः यववराहाधिकरणे निर्णीतत्वादिति भावः । किं च नात्र सत्यत्वलक्षणस्य अतिव्याप्तिप्रसक्तिः । यथा 'विज्ञानमानन्दम्' इत्यत्र आनन्दत्वस्य ब्रह्म-लक्षणत्वमुक्तं तस्य जीवानन्दादावतिव्याप्तिवारणायापरिच्छिन्नानन्दत्वं लक्षणमुक्तम् । जीवानन्दस्तु परिच्छिन्नः । 'सैषाऽनन्दस्य' इत्यादितारतम्यावगमात् । अतस्तद्वदपराधीनसत्यत्वं लक्षणमस्तु । तस्य च नातिव्याप्तिः । अतो न तदन्यथाऽनुपपत्तिर्मानमित्याह किं चेति ॥ विमुक्तश्चेति ॥ बन्धस्य सत्यत्वे मोक्षात् पूर्वं जीवस्य मुक्तत्वोक्त्ययोगात् । अतः तदन्यथाऽनुपपत्त्या बन्धस्य मिथ्यात्वसिद्धिरिति भावः । ताम्रेति ॥ यथा ताम्रद्रवत्वं न स्वाभाविकम् । किं तु अग्निसम्बन्धोपाधिकं सत्यमेव । तद्वदेव दौर्जन्यस्याप्यौपाधिकस्य सत्यत्वेऽपि अस्वाभाविकत्वात् तदपेक्षया 'सज्जनः सज्जनो जातः' इति व्यपदेशवदुपपद्यते इत्यर्थः । भारत इति । उद्योगपर्वणि सनत्सुजातीय इत्यर्थः । हे क्षत्रिया अद्य मृत्युः तदभावश्चेत्युभे अपि सत्ये एव प्रकृते । तयोर्मध्ये मृत्युः संसारो मोहो मोहहेतुकः । मोहश्चेत्तर्हि मिथ्या स्यात् । नेत्याह । प्रमादं वै मृत्युमिति ॥ मृत्युं संसारं प्रमादम् अस्वाभाविकं भगवदज्ञानाधीनमिति यावत् । तथा अमृतत्वं मोक्षम् अप्रमादात् भगवदज्ञानरूपप्रमादाभावात् तद्ज्ञानादिति यावत् ब्रवीमीत्यर्थः। क्वचित् 'मोहान्मृत्युः' इत्यपि पाठः । 'तथाऽप्रमादममृतत्वं ब्रवीमि' इत्यपि पाठः । यथोक्तम्– प्रमादात्मकत्वात् बन्धस्य विमुक्तत्वं ह्युच्यत इति । अन्यदपीति ॥ श्रौतार्थापत्त्यन्तरे परेण शङ्किते सति तदपि पूर्वोक्तन्यायेन योज्यमित्यर्थः । इति सत्यस्य सत्य इत्यादि श्रुत्यर्थापत्तिभङ्गविवरणम् ।

## १९. दृष्टिसृष्टिभङ्गविवरणम्

अत्र कैश्चित् शुक्तिरूप्यस्वप्नादिवत् दृष्टिसृष्टित्वान्यथाऽनुपपत्या जगतो मिथ्यात्वसिद्धिरङ्गीकृता । तद्दूषयितुमनुवदति ॥ यच्चेति ॥ दृष्टिसृष्ट्यङ्गीकारे क्षणिकत्वमर्थतोऽङ्गीकृतं स्यादित्याह ॥ बौद्धेति ॥ बौद्धाभिमतक्षणिकत्वसिद्ध्यर्थं विश्वस्येत्यारभ्य इतिवद् भ्रान्तिरिति यच्चोक्तमित्यन्वयः । तद्देहादिकं तद्देहेन्द्रियादिकं जगत्, तं प्रति चैत्रं प्रति भाति तद्देहादिकं जगत् । ननु दृष्टिसृष्टत्वे दृष्टेः क्षणिकत्वेन पदार्थानामपि क्षणिकत्वापत्त्या सोऽयं घटः इत्यादि प्रत्यभिज्ञाविरोध इत्यत आह ॥ प्रत्यभिज्ञा त्विति ॥ दीपे परिमाणभेदेन भेदात् तत्र पूर्वोत्तरदीपाभेदग्राहिप्रत्यभिज्ञा भ्रान्तिरूपा दृष्टा । तद्वदित्यर्थः । षडिति ॥

''जीवो ब्रह्म विशुद्धा चित् विभागस्त्वनयोर्द्वयोः ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥''

इत्यङ्गीकारेण सर्वस्यापि जगतो दृष्टिसृष्ट्यङ्गीकारेऽपि तद्विरोधः स्यादिति भावः । न च जीवादिषड्व्यतिरिक्तमेव दृष्टिसृष्टमिति वाच्यम् । त्वन्मते दृष्टिसृष्टस्यैव मिथ्यात्वेन तेषां मिथ्यात्वासिद्धेः । बौद्धमिति ॥ दृष्टिसृष्ट्यङ्गीकारे त्वयाप्यर्थात् क्षणिकत्वस्यैवाङ्गीकारादिति भावः । नियतेति ॥ दृष्टिमात्रसृष्टत्वे मृदादितत्तन्नियत कारणजन्यत्वं न प्राप्तमित्यर्थः । नियतकारणाजन्यत्वे सति किं स्यादित्यतः श्रुतिष्विति । तृप्त्यर्थमिति ॥ 'तृप्तिर्मेऽस्तु' इति दृष्ट्या कल्पनयैव तृप्त्युपपत्तेः तदर्थं भोजनं व्यर्थमिति भावः । परेति ॥ परप्रत्यायनं स्यादिति कल्पनयैव तदुपपत्तौ तदर्थं शब्दोच्चारणं व्यर्थमित्याशयः । स्वक्रियेति ॥ दृष्टिमात्रसृष्ट्यङ्गीकारे भोजनादिक्रियापेक्षा तृप्त्यादौ नास्तीत्यर्थतोऽङ्गीकृतं स्यात् । पुनश्च तदर्थं भोजनादिक्रियाकरणे स्वक्रियाविरोध इत्यर्थः । ननु यथा स्वप्ने ज्योतिष्टोमादिवाक्यात् साध्यसाधनभावं जानतः स्वर्गार्थं ज्योतिष्टोमादौ प्रवृत्तिः तेन च फलं यथा च तृप्त्यर्थं स्वप्नभोजनादि प्रवृत्तिः तथा च तृप्त्यादिकं फलं, परप्रत्यायनार्थं शब्दोच्चारणादिकं चास्ति तद्वत् जाग्रत्पदार्थानामपि प्रतीतिमात्रशरीरत्वेऽपि नोक्तव्यवस्थाऽनुपपत्तिरित्याशङ्कते ॥ यदि त्विति ॥ पर्यनुयोज्यं विचारार्हम् । तथा, स्वप्नश्रुत्यादितुल्यम् । तेन, स्वाप्नश्रुतितुल्येनाद्वैतश्रुतितन्मीमासादिना । प्रतिकर्मेति ॥ तदुपपादकेन्द्रियसन्निकर्षाभावादिति भावः । शुक्तीति ॥ इदमंशरूप्ययोरुभयोरपि दृष्टिसृष्टत्वादिति भावः। संप्रयोगादीति ॥ अधिष्ठानं, प्रधानम्, अधिष्ठानेन्द्रिय संप्रयोगश्चेति कारणत्रयेत्यर्थः । तदस्थेति ॥ सम्प्रयोगादिकादाचित्कनानापदार्थघटितस्य स्वरूपलक्षणत्वायोगादिति भावः । संभेदो नाम मिश्रितत्वम् । अभेद इति यावत् । अवभासत्वेति ॥ तद्रूपस्वरूपलक्षणेत्यर्थः । तथा च रूप्यवदिदमंशस्यापि दृष्टिसृष्टतया ज्ञानात् प्रागभावेनाधिष्ठानसंप्रयोगादेरभावेन तटस्थलक्षणस्य, उभयोरपि दृष्टिसृष्टत्वाविशेषे शुक्तिरूप्ययोः सत्यत्वमिथ्यात्वविवेकाभावेन स्वरूपलक्षणस्याप्ययोगादिति भावः । शुक्तित्वादेरिति ॥ शुक्तित्वसर्जकदृष्टेरभावेन शुक्तित्वस्वरूपस्यैवाभावात् । तद्ज्ञाने तु तदज्ञानमेव न सम्भवतीत्यर्थः । इदं

रूप्यमिति ॥ प्रतिदृष्टि विषयभेदस्वीकारेणेदं रजतं नेदं रजतमिति ज्ञानविषयीभूतेदमंशयोर्भेदेन तयोर्ज्ञानयोर्भिन्नधर्मिकतया बाध्यबाधकभावायोगादित्यर्थः। रूप्यादिबाधस्येति ॥ अत्र बाध शब्दो विरोधिपरः । रूप्यादिविरोधिनः । तदभावस्येत्यर्थः । एवं च रूप्यतदभावयोरप्यस्मिन् पक्षे दृष्टिसृष्टतया तुल्यसत्ताकत्वेन तद्विषयकज्ञानयोर्हीनाधिकबलवत्वाभावाद् बाध्यबाधकभावायोगेन रूप्याभावविषयकेण नेदं रजतमिति ज्ञानेन रूप्यमिथ्यात्वासिद्धेरित्यर्थः। अप्रतीतत्वेनेति ॥ चिन्मात्रस्याप्रत्येतृत्वात् जीवानामपि तदा देहादेर्नाशेनाप्रत्येतृतया सर्जकदृष्टेरभावेन जीवब्रह्मविभागस्याविद्यमानत्वापत्त्याऽभेदस्यैव प्राप्तेः त्वन्मते ब्रह्माभेदस्यैव मुक्तिरूपत्वात् सुप्तेः पुनरुद्बोधाङ्गीकारे मुक्तस्यैव पुनरावृत्तिरङ्गीकृता स्यात् । तथा प्रलयानन्तरं सृष्ट्या पुनरावृत्तेः सत्वात् तत्रापि मुक्तस्यैव पुनरावृत्तिरङ्गीकृता स्यात् । तथा च 'न पुनरावर्तते', 'अनावृत्तिः शब्दात्' इत्यादि श्रुतिसूत्रविरोधः स्यादित्यर्थः । तस्यानादित्वाङ्गीकारे तु मिथ्यात्वासिद्धिरित्युक्तम् । सुप्तं प्रतीति ॥ न च कारणात्मना संस्कारोऽप्यस्तीति वाच्यम् । कारणस्यापि दृष्टिसृष्टत्वेन सुप्तौ तस्याप्यभावादिति भावः । मोक्षस्यापीति ॥ अविद्यानिवृत्तिरूपस्येत्यर्थः । दृगिति ॥ मोक्षस्य दृग्रूपत्वेऽसाध्यत्वं स्यादिति भावः । दृष्टिसृष्टत्वं जगतोऽङ्गीकुर्वता त्वया दृष्टिशब्देन चिन्मात्रं विवक्षितम्? विशिष्टं वा? नोभयमपीत्याह ॥ चिन्मात्रस्यैवेति ॥ अर्थज्ञानरूपचैतन्यस्य सदा सत्वेनार्थ-स्यापि सदातनत्वापत्त्या सदा प्रतीत्यत्पत्तिरित्यर्थः। तत्त्वे घटादिदृष्टित्वे । अनवस्थादीति ॥ विशिष्टस्यापि दृष्टिसृष्टत्वात् तत्र चिन्मात्रस्यैव विशिष्टस्य सदा प्रतीत्यापत्या विशिष्टस्यैव विशिष्टदृष्टित्वे वाच्ये तस्यापि विशिष्टस्य दृष्टिसृष्टित्वेनानवस्थाप्रसङ्गादित्यर्थः । उक्तन्यायेनेति ॥ प्रतिकूलतर्कपराहतिकथनसमये उक्तन्यायेनेत्यर्थः । तेषामपि देहेन्द्रियादीनामपि इत्यर्थः । भ्रान्त्यर्थमिति शेषः । अवस्थेति ॥ जगत् भ्रान्तिजनकदेहेन्द्रियादि भ्रान्तिजनकदेहेन्द्रियादेरपि दृष्टिसृष्टत्वेऽनवस्थेत्यर्थः । इत्यस्यापि प्रमेयस्य दृष्टिसृष्टत्वेनेति ॥ मिथ्यात्वादिति भावः । दृष्टिसृष्टत्वङ्गीकारे क्षणिकत्वापत्त्या स्थायित्वग्राहि-प्रत्यभिज्ञाविरोधश्च स्यादित्याह । प्रत्यभिज्ञेति ॥ ननु सोऽयं दीप इतिवत् प्रत्यभिज्ञा भ्रान्तिरित्युक्तमिति चेत् तत्राह ॥ दीपादाविति ॥ दीपैक्यबाधकस्येत्यर्थः । इहेति ॥ प्रपञ्चस्य दृष्टिसृष्ट्या भेदाङ्गीकारे इत्यर्थः । तदभावेऽपीति ॥ बाधकाभावेऽपीत्यर्थः । एकस्मिन्निति ॥ यस्मिन् क्षणे सत्त्वं त्वया कथ्यते तस्मिन्नपि क्षणे इत्यर्थः । तादृशसूक्ष्मतरकालेऽपि योगिनामभेदग्राहिप्रत्यभिज्ञा वाच्या । तस्या अपि भ्रान्तित्वापातादित्यर्थः । आत्मनोऽपीति ॥ अनादिनित्यतयाऽङ्गीकृतस्य ब्रह्मणोऽपीत्यर्थः ॥ तत्र च पूर्वोत्तरक्षणयोरैक्यग्राहिशुकादिप्रत्यभिज्ञा वाच्या । तस्या अपि भ्रान्तित्वापत्तेरित्याशयः । सोऽयमिति ॥ यथा सोऽयं देवदत्त इति प्रत्यभिज्ञा तावत् प्रमा । तत्र च तद्देशकालविशिष्टस्यैतद्देशकालविशिष्टेनाभेदे एतद्देशकालयोरपि तदानीं सत्वापत्तेः । एतद्देशकालविशिष्टस्य तद्देशकालविशिष्टेनाभेदे तद्देशकाल-योरपीदानीं सत्त्वापत्तेः । अतः तदेतद्देशकालभागत्यागेन देवदत्तस्वरूपमात्रस्यैवाभेदः सिध्यति। तद्दृष्टान्तेन तत्त्वमसीत्यादावपि विशेषणांशत्यागेन चिन्मात्रैक्यमङ्गीकृतम् । तन्न स्यात् । सोऽयं देवदत्त इति प्रत्यभिज्ञाया अपि भ्रान्तित्वोपपत्या दृष्टान्तत्वासम्भवादिति भावः । तस्मात् बाधकाभावेनैतासां

प्रत्यभिज्ञानां प्रमात्वं वाच्यम् । तत् प्रपञ्चप्रत्यभिज्ञाया अपि तुल्यमिति भावः । ननु जगतो दृष्टिसृष्ट्या मिथ्यात्वानङ्गीकारेऽभेदज्ञानमेव बाधकमस्तीति चेत् तत्राह ॥ अभेदस्यापीति ॥ अभेदस्यापि दृष्टिसृष्टत्वेन प्रपञ्चतुल्यतया तद्ज्ञानस्य प्राबल्यायोगेन भेदबाधकत्वाभावादित्यर्थः । स्थायित्वग्राहिश्रुतिविरोधाच्च न दृष्टिसृष्टिर्युक्तेत्याह ॥ ध्रुवाद्यौरिति । भिन्नत्वेनेति ॥ 'घटपटौ भिन्नौ' इति प्रतीतेर्दृष्टिसृष्टिपक्षे भ्रमत्वेन घटपटयोर्क्लृप्तभेदत्यागः । परस्परविरोधे तु न प्रकारान्तरस्थितिरिति न्यायेनाक्लृप्ताभेदकल्पनं कार्यम् । तथा सोऽयं घट इति प्रतीतेरपि दृष्टिसृष्टिपक्षे भ्रमत्वेनैकस्मिन्नेव घटे क्लृप्ताभेदत्यागः । परस्परविरोधेत्विति न्यायेनाक्लृप्तभेदकल्पनं चाप्रामाणिकमेवाङ्गीकार्यमिति भावः । सङ्गृह्णाति । तस्मादिति ॥ स्वक्रियादीति ॥ दृगन्यस्य सर्वस्य दृष्टिसृष्टत्वे इत्याद्युक्तप्रकारेणेत्यर्थः । नन्वास्मादात्मन इत्यादि श्रुतौ अस्मादात्मनः सुप्तात् जीवात् प्रबोधानन्तरं प्राणादयः सर्वे पुनर्जायन्त इत्युक्तत्वेन इयं श्रुतिरेव जगतो दृष्टिसृष्टत्वे मानमिति चेत् तत्राह । अस्मादात्मन इति ॥ अन्यथेति ॥ अस्य वाक्यस्य सुप्तजीवादेव प्राणादिसृष्टिकथनपरत्व इत्यर्थः । कुतोऽयुक्ता स्यादित्याह ॥ न हीति ॥ नाड्यादिकमिति ॥ सुषुप्तौ नाड्यादि दृष्टेरभावादिति भावः । ऊर्णनाभ्यादित इति ॥ आदिपदेनाग्निग्रहणम् । सर्वलोकादीति ॥ सर्वलोकसाक्षात्काराभावेन सर्वलोकजन्मोक्तिरयुक्ता स्यादित्यर्थः । ऊर्णनाभितन्त्वित्यादि । न हि तन्तूनां विष्फुलिङ्गानाम् ऊर्णनाभ्यग्निभ्यां दृष्टिसृष्टिरस्ति । किन्तु स्वशरीरात् निष्कासनरूपैवोर्णनाभेस्तन्तुसृष्टिः । विष्णुलिङ्गानां त्वग्नितो जडात् व्युच्चरणमेवेति भावः । इति दृष्टिसृष्टिभङ्गविवरणम् ।

## २०. एकजीवाज्ञानकल्पितत्वभङ्गविवरणम्

जीवस्यैकत्वादिति ॥ तस्यैकस्य बद्धत्वावस्थायां न मुक्तोऽस्ति । तस्य च मुक्तत्वावस्थायां न बद्धोऽस्ति । तथा च कश्चित् बद्धः कश्चित् मुक्त इत्येवं बद्धमुक्तव्यवस्थाऽनेकजीववादिमत इव नास्तीत्यर्थः । ननु सर्वस्यैकजीवाज्ञानपरिकल्पितत्वे गुरुशिष्यादिव्यवस्था न स्यादित्यत आह ॥ गुरुशिष्यादीति ॥ स्वप्नवदिति ॥ यथा स्वप्ने कश्चिद् गुरुः कश्चित् शिष्यः तस्य ततो व्याख्यानश्रवणं दृष्टं तद्वदिति भावः । निवृत्तायामविद्यायां सा व्यवभ्या ॥ अन्ध्यम् अप्रतीतिः । तस्येति ॥ कल्पकैकजीवस्येत्यर्थः । सुप्तौ सत्याम् । ममेति । प्रतिवादिनो ममेत्यर्थः । तवेति ॥ कल्पकस्य ममैव मोक्षार्थे प्रवृत्तिः स्यात्, न परिदृश्यमाना त्वदीया प्रवृत्तिर्युक्तेत्यर्थः । वादिनस्तवैव । बोधार्थम्, अस्मदादीनां मिथ्यात्वबोधनार्थम् । तवेति ॥ एते मदज्ञानपरिकल्पिता मिथ्याभूता इति जानतस्तव मां प्रति शब्दप्रयोगासम्भवेन तत्प्रयोगरूपक्रियया त्वत्कल्पितत्वरूपार्थस्य विरोधादित्यर्थः । परमार्थ इति व्यावहारिकीं दशामालम्ब्यैवोच्यते । अतः कल्पितत्वस्यापारमार्थिकत्वेऽपि शब्दप्रयोगादेर्व्यावहारिकत्वात् न तत्र स्वक्रियाविरोधः । विरोधस्य व्यवहारदशायामदोषत्वादिति भावः । मूकोऽहमिति ॥ तत्रापि व्यवहारदशायामेव मूकोऽहमित्युक्ते स्वक्रियाविरोध उद्भाव्यते । तदानीं सोऽपि दोषो न स्यादित्यर्थः । न च स्वप्नेति ॥ इदं वाक्यमेवं संप्रदायशुद्ध्या योज्यम् - स्वप्नपुरुषवत् स्वप्नदृष्टपुरुषवत् । त्वदिति पञ्चम्यन्तं

पर्यनुयोज्य इत्यनेन सम्बध्यते । कल्पितत्वात् मत्कल्पितत्वात् । तवेति शेषः । अयमर्थः । स्वप्नद्रष्टारं प्रति स्वप्नकल्पितः पुरुषो जाग्रदवस्थायां समागत्य तव स्वक्रियाविरोधादिदोषः समायातीति पर्यनुयोगं न करोति । एवं च स्वप्नपुरुषकर्तृकपर्यनुयोगविषयत्वं यथा स्वप्नद्रष्टुर्नास्ति एवमेव मत्कल्पितत्वात् त्वत्तोऽहं न पर्यनुयोज्यः, तव स्वक्रियाविरोधः इत्येवमादिरूपेण त्वत्कर्तृकविचारापरपर्यायपर्यनुयोग विषयत्वं मम नास्तीति, त्वया शङ्का न कार्येति । एवमयोजने मायावादिना स्वस्य भेदवादिकल्पितत्वानङ्गीकारात् 'त्वत्कल्पितत्वात्' इत्येतदयुक्तं स्यात् । निर्मर्यादतयेति ॥ वादिप्रतिवादिगुरुशिष्यादिमर्यादाभावप्राप्त्येत्यर्थः। कथेति ॥ केनचित् त्वयि कथायामाकारिते सति त्वयाऽहं कथार्थं नाकरणीयः । तव मदज्ञानकल्पितत्वात् इत्युक्त्वा कृती स्यादित्यर्थः । सजीवशरीरे कल्पकैकजीवशरीरे । अन्यत्रापि त्वत्कल्पिततयोच्यमाने शरीरसमुदाये । जीवात्मानुभवाच्चेति ॥ जीवात्मसद्भावानुभवाच्चेत्यर्थः । अहं दुःखीत्याद्यनुभवो वस्तुतो य एको जीवस्तस्यैव युक्तो नान्यस्येति तदन्यथाऽनुपपत्त्याऽनेकेषु अनेके जीवा अङ्गीकार्या इति योज्यम् । तेषामिति ॥ निर्जीवशरीराणां यः कल्पको एको जीवः तस्य 'अयं निर्जीवो देहो दुःखी' इति भ्रान्तिर्भवतीति वक्तव्यम् । तथा च निर्जीवशरीराणां कल्पकजीवकर्तृका या उक्तदुःखीत्यादिरूपाभ्रान्तिः तद्विषयत्वेऽपि 'अहं दुःखी' इत्यादिभ्रान्त्याधारताऽयोगादित्यर्थः । तथा भ्राम्यन्तीति ॥ अहं दुःखीत्यादिरूपेण भ्रान्त्याधारत्वं नास्ति । किन्तु एतानि शरीराणि दुःखीनीत्येवं स्वप्नदृष्टपुरुषकर्तृक-भ्रान्तिविषयत्वमेव दृष्टमित्यर्थः । ननु कल्पकशरीरव्यतिरिक्तशरीराणां निर्जीवत्वेऽपि चिन्मात्रस्या-परिच्छिन्नस्य सर्वत्र सत्त्वात् तत्रत्यस्य चिन्मात्रस्यैवाहं दुःखीत्यादि भ्रान्त्याधारत्वं युक्तमित्याशङ्क्य निषेधति ॥ न चेति ॥ चिन्मात्रस्यैवेति ॥ यथा मुखप्रतिमुखानुस्यूतं मुखमात्रं किञ्चिदस्ति तद्वत् जीवब्रह्मानुस्यूतं चिन्मात्रमस्त्येवेत्यर्थः । कुतो न युक्तमित्यत आह ॥ प्रतिबिम्बादीति ॥ केषाञ्चित् मते जीवब्रह्मणोर्बिम्ब प्रतिबिम्बभावः केषाचित् भास्करादीनां मते अंशांशिभावोऽस्ति तदभिप्रायेणादिपदम् । जीव एवेति ॥ न चिन्मात्र इत्येवार्थः । उपाधेः प्रतिबिम्बपक्षपातित्वादिति भावः । तथा च त्वन्मते तत्र जीवान्तराभावात् अहं दुःखी' इत्यादिभ्रान्त्याधारत्वं न युक्तमिति ॥ कौन्तेयस्येति ॥ यथा कुन्तीतनयस्यैव कर्णस्य राधेयत्वं, न त्वन्यस्येत्यर्थः । तच्चेति ॥ जीवत्वापन्नं ब्रह्मेत्यर्थः । तथा च तस्य युक्तम् अहं दुःखीत्यादिभ्रान्त्याधारत्वमित्यर्थः ॥ कथं तर्हीति ॥ जीवत्वापन्नब्रह्मण एव सर्वशरीरगतत्व इत्यर्थः । किं च ब्रह्मण एव जीवत्वे नित्यमुक्तत्वश्रुतिविरोधः स्यात् । न हि कौन्तेयस्यैव राधेयत्वेऽतिरिक्तः कौन्तेयोऽस्ति । अतो ब्रह्मण्येव दुःखादिसंसारप्राप्तिः । ननु पारमार्थिकदुःखादि-संसारास्पृष्टचैतन्याभावे खलु नित्यमुक्तत्वश्रुतिविरोधः । न चैवमुच्यते । किं तु पारमार्थिकसंसारास्पृष्टमेव चैतन्यं कल्पितसंसारोपस्पृष्टमिति । नहि आरोपितेन नीलिम्ना गगनस्य नीरूपत्वमपैति इति चेत्तत्राह ॥ वक्ष्यते चेति ॥ सत्यं संसारस्य कल्पितत्वेन वस्तुतस्तस्य संसाराभावात् नित्यमुक्तत्वश्रुतिविरोधो नास्तीति। तथाऽपि त्वन्मतेऽकल्पितसंसाराप्रसिद्ध्या कल्पितेनैव संसारेण संसारित्वे वाच्ये नित्यमुक्तत्वश्रुतिविरोध एवेति वक्ष्यत इत्यर्थः । किं च प्रतिशरीरम् 'अहं दुःखी' इत्यादि भ्रान्त्याधारत्वं

तावत् प्रतीयते । तत् कस्येति वाच्यम् । किं कल्पकजीवेन कल्पितं यत् जीवान्तरं तस्य वा? अन्यस्य कस्यचिद् वा? नाद्य इत्याह ॥ नापीति ॥ कुतो नेत्यत आह । कल्पितस्येति ॥ कल्पितस्यैव भ्रान्त्याधारत्वे बाधकमाह ॥ अन्यथेति ॥ भ्रान्त्याधाराणामेव सम्यग्ज्ञानमोक्षप्राप्तौ एकस्यैव जीवस्य सम्यग् ज्ञानादिकमित्यस्य भङ्गेन बहुजीवबादापत्तिरित्यर्थः । कल्पितस्येति ॥ कल्पिता: जीवाः कल्पकमेकजीवं प्रति पराक्त्वेनैव भासन्ते, न प्रत्यक्त्वेनेत्यविवादम् । तेषां च 'अहं दुःखी' इत्यनुसंधातृत्वे 'अहमित्येव यो वेद्यः स जीव इति कीर्तितः' इत्युक्तत्वात् अहमित्यनुसंधातृत्वरूपजीवत्वापरपर्याय प्रत्यक्त्वं प्राप्तम् । न च तत् सम्भवति । तदा सम्भवेत् यदि कल्पककल्पितयोरैक्यं स्यात् । न चैवमङ्गीकृतमिति भावः । ननु कल्पितजीवानां वास्तवप्रत्यक्त्वाभावेऽपि कल्पकेनारोपितं प्रत्यक्त्वमस्तीति चेत् तत्राह प्रत्यक्त्वेनेति ॥ पराक्त्वेनेत्यर्थः । तथा विशेषदर्शनसद्भावान्नारोपो युक्त इति भावः । नापि द्वितीय इत्याह ॥ अन्यस्येति ॥ कल्पकजीवतत्कल्पितजीवान्तरान्यस्येत्यर्थः । स्यादिदं विकल्प्य दूषणं यदि 'अहं दुःखी' इत्यादिभ्रान्तिरेव कल्पकजीवकल्पितव्यतिरिक्तानामनुभवसिद्धा स्यात् । न चैवमिति चेत् तत्राह ॥ तथानुभवेति ॥ तस्यापीति ॥ कल्पकस्येत्यर्थः । कल्पकजीवो वा अद्वैतश्रुतिर्वा न स्यादित्यापादितेऽहमिति तदीयानुभवेनेव तत्सिद्धिर्वाच्य । तथाऽद्वैतश्रुतेस्तदनुभवसिद्धत्वात् तत्सिद्धिरिति वाच्यम् । अनुभवापलापे तदपि न स्यादित्यर्थः । कुतस्तत्र नोक्तदोष इत्यत आह ॥ तस्येति ॥ एकस्यैव जीवस्येत्यर्थः । 'अहं दुःखी' इत्यादिभ्रान्त्याधारत्वप्रत्यक्त्वादिकं सर्वमपि सम्भवतीति भावः । ननु सर्वशरीरगतजीवानां व्यावहारिकभेदसद्भावान्नानुसन्धानापत्तिरित्यत उक्तम् । अननुसंधाने तन्त्रस्येति ॥ न ह्यनेकशरीरेषु मणिषु सूत्रमिवानुस्यूतस्य योगिनो व्यावहारिक भेदोऽप्यस्तीति भावः । जीवस्यैकस्यैव सर्वशरीरस्थत्वे शुकादिदेहस्थस्य तत्त्वज्ञानमोक्षौ, देवदत्तदेहस्थस्य न तौ इत्येवं बन्धमोक्षयोर्व्यवस्था याऽस्ति सा न स्यात् । तस्यैकस्यैव जीवस्य बद्धत्वावस्थायामेव मुक्तत्वं मुक्तत्वावस्थायामेव बद्धत्वमित्येवं बन्धमोक्षयोः सांकर्यं च स्यात् । औपाधिकभेदाङ्गीकारादिना व्यवस्थां तूत्तरत्र विकरिष्याम इत्याशयेनाह । तस्येति ॥ तस्यैवेति ॥ जीवानां प्रत्यक्पराक्भावस्तावदनुभूयते । एकस्यैव सर्वशरीरस्थत्वे स्वं प्रत्येव स्वस्य प्रत्यक्त्वपराक्त्वयोः प्राप्तौ मैत्रं प्रति त्वमिति धीविषयस्य चैत्रस्य मैत्रं प्रत्येवाहमिति धीविषयत्वापातात् । न चैवमस्तीत्यर्थः ।

॥ अनेकेष्विति ॥ श्रुतिषु बहुवचनसद्भावा, त्वन्मते चेतनस्यैकत्वादिति भावः । ननु चेतनेषु व्यावहारिकबहुत्वसद्भावादुक्तदूषणानवकाश इत्यत आह ॥ न हीति ॥ अनेकमण्यनुस्यूतसूत्रवत् योगिवद् वा तस्यैकत्वेन तद्व्यावहारिकभेदस्यापि बाधादिति भावः । ननु मुक्तादीनां बहुत्वस्य प्रमाणान्तरप्राप्तत्वात् तदनुवादकानां 'परिमुच्यन्ति सर्वे' इत्यादीनां न स्वार्थे प्रामाण्यमिति चेत् तत्राह ॥ न चेति ॥ किं चेति ॥ ईश्वरादिसर्वकल्पकत्वे तस्यैव सर्वप्रपञ्चकारणत्वप्राप्तेरिति भावः । ननु चिन्मात्रस्यैव सर्वज्ञत्वात् श्रुतेर्न निर्विषयत्वमित्यत उक्तम् ॥ चिन्मात्रेति ॥ नन्वीश्वरस्यैव सर्वज्ञत्वात् श्रुतेर्न निर्विषयत्वम् । न चेश्वरस्य जीवेन कल्पितत्वात् तदयोग इति वाच्यम् । अयमीश्वरः सर्वज्ञः इत्येव जीवेन

कल्पितत्वादिति चेन्न । तथात्वे 'अयं सर्वज्ञः' इति जीवेनेश्वरस्य कल्पिततया यथा कल्पितस्तथैव श्रुत्यादौ प्रयोगः स्यात् । तथा च 'अयं सर्वज्ञः' इत्येवं श्रुत्यादौ प्रयोगप्रसङ्गेन 'तान्यहं वेद' इत्यादि-प्रायोगायोगः । कल्पितस्य तस्य 'अहं सर्वज्ञः' इति ज्ञातृत्वाभावादित्याह ।। ईश्वरस्य चेति ।। ननु जीवस्यैव सर्वज्ञत्वादिश्रुतिविषयत्वमस्त्वित्यत आह ।। जीवस्य चेति ।। ननु चेश्वर एव सार्वज्ञादि-श्रुतिविषयः 'अहं सर्वज्ञ इति ज्ञातृत्ववानास्तां' इत्येवेश्वरस्य जीवेन कल्पितत्वेनोक्तदोषा-भावादित्यस्वरसादाह ।। अपि चेति ।। आचार्यवान् आचार्योपदेशवान् । न चान्य इति ।। यस्तस्योपदेष्टा स्यात् । अतस्तस्य तत्त्वज्ञानाभावेन मोक्षाभावः स्यादित्यर्थः । स्वप्न इति ।। यथा स्वप्ने गुर्वादिः कश्चित् कल्पितो दृश्यते तद्वदिहापीत्यर्थः । त्वन्मते कल्पको जीवः शुकवैशंपनाद्या एव शास्त्रप्रणेतारो वाच्याः । तथा च तत्वविद् गुरुर्शुकाय मह्यमद्वैतमुपदिशतीति भ्रान्तिर्वाच्या । तथा च कल्पितगुरूपदेशात् प्रागेव तादृशभ्रान्तेर्जातत्वेनोपदेशकर्मतयाऽद्वैतस्यापि ज्ञातत्वात् तदैव मोक्षः स्यादित्याह । तत्त्वविदिति ।। ननु तत्वविशेषविद् गुरुः शुकाय मह्यमद्वैतमुपदिशतीति कल्प्यते । तथा च तत्वविशेषस्याज्ञातत्वात् न तदैव मोक्ष इत्यत आह ।। तत्त्वविशेषविदिति ।। तत्त्वस्य तत्त्वविशेषस्य । अन्यथा तद्वित्त्वेन तत्कल्पनासम्भवादिति भावः । गुरोरिति ।। कल्पको जीव एक एव सत्यः । अन्यत् सर्वं गुर्वादिकं तदज्ञानकल्पितमित्यस्यैव तत्वत्वादिति भावः । ननु यथा स्वप्ने तत्त्वविशेषवित्त्वेन गुरुं प्रकल्प्य तत श्रवणादिकं क्रियामाणं दृष्टं तद्वदिहापि उपपद्यत इति चेत् तत्राह । स्वप्ने त्विति ।। उपदेशेति ।। शब्दविशेषेत्यर्थः । ननु तर्ह्यत्रापि शब्दविशेषवक्तृत्वेनैव गुरुकल्पना । न तु तत्साध्यज्ञानविषयार्थ-विशेषवित्वेनेत्याशङ्क्य निषेधति । न चेति ।। कुतो न चेत्यत आह ।। यदेवेति ।। यत् तत्वम् । ज्ञानं, ज्ञायत इति व्युत्पत्त्या तत्त्वम् । तथा चार्थविशेषवित्त्वेन कल्पितगुरोः सकाशादेव श्रवणाद्युक्तेरुपदेश-वैयर्थ्यादिकं स्यादेवेति भावः । भावि तत्त्वज्ञानं यस्येति विग्रहः । चेतनं प्रत्येवेति ।। अन्यस्य कल्पितत्वेन विधिविषयत्वाभावादिति भावः । ननु यथा स्वप्ने स्वाज्ञानकल्पितं कश्चित् शिष्यं प्रति तन्मोक्षार्थं व्याख्याने प्रवृत्तिः तद्वदिहाप्यस्त्वित्यतः 'स्वप्ने तु कल्पितत्वाज्ञानादेव यतते' इति भगवत्पादवाक्यं मनसि निधायाह ।। स्वप्ने त्विति ।। ननु कल्पितत्वापरोक्षज्ञानस्यैव प्रवृत्तिप्रतिबन्धकत्वात् शिष्यादौ कल्पितत्वापरोक्षज्ञानाभावात् मोक्षार्थं प्रवचने प्रवृत्तिर्युक्तेति चेत् तत्राह ।। न चेति ।। अपरोक्षेति ।। कल्पितत्वापरोक्षेत्यर्थः । दिङ्मोहादाविति ।। यथा प्राचीं गन्तुकामं प्रति नेयं प्राचीत्युक्ते दिङ्मोहेन प्रवृत्तिः प्रतिबध्यते । एवं च परोक्षज्ञानस्यापि प्रवृत्तिप्रतिबन्धकताया दिङ्मोहादौ दर्शनात् प्रकृते शिष्यादौ कल्पितत्वपरोक्षज्ञानसद्भावात् तन्मोक्षार्थं प्रवचने प्रवृत्तिर्न युक्तेति भावः । ननु सत्यपि तत्त्वज्ञाने मिथ्याज्ञानाहितसंस्कारवशात् जीवन्मुक्ते भिक्षाटनादिप्रवृत्तिः, एवं शिष्ये कल्पितत्वगोचर-तत्त्वज्ञानसद्भावेऽपि संस्कारवशादेव प्रवचने प्रवृत्तिः । वेगादिसंस्कारस्य बलात् शरादिप्रवर्त-कत्वदर्शनादित्याशङ्क्य निराकरोति ।। न चेति ।। कुतो न चेत्यत आह ।। न हीति ।। तत्वेति ।। मिथ्याज्ञानाहितसंस्कारः कल्पितत्वाद्वैतादिरूपतत्वनिश्चयप्रतिबन्धनद्वारैव प्रवर्तक इत्यर्थः । भिक्षेति ।।

संस्कारेण तत्वनिश्चयप्रतिबन्धादिति भावः। अद्वैतमिति ।। कल्पितत्वनिश्चयाप्रतिबन्धेन शिष्यादेः कल्पितत्वाद्यनुसंधानसद्भावेऽद्वैतबोधनमेवानुपपन्नमिति भावः । ननु यथा स्वप्ने शिष्यं बोधयति तत्र शिष्यस्याज्ञानपरिकल्पितत्वं जानता 'तं प्रतिमोक्षार्थं प्रवचनादिकं न युज्यते' इति स्वान्येन गुरुर्न पर्यनुयुज्यते, तस्य कल्पितत्वात् । तथा जाग्रद्गुरोरपि कल्पितत्वात्, शिष्यमोक्षार्थं प्रवचनप्रवृत्तिर्न युक्तेति न पर्यनुयोज्य इत्याशङ्क्य निषेधति ।। न चेति ।। कुतो न चेत्यत आह ।। कल्पकस्यैवेति ।। न जाग्रद्गुरोः स्वाप्नगुरुतुल्यत्वं वाच्यम् । स्वप्नगुरोः कल्पितत्वात् । न चायमपि गुरुः कल्पको न, कल्पित इति वाच्यम् । स्वाध्यायप्रवचनविध्यादि तत्वज्ञानयोग्यं कल्पकं चेतनं प्रत्येव । अन्यस्य कल्पितत्वेन विधिविषयत्वाभावात् इत्येवं स्वाध्यायप्रवचनविधिविषयस्य कल्पकस्य वास्तवजीवस्यैव गुरुत्वेन तस्याकल्पितत्वात् स पर्यनुयोज्य एवेत्यर्थः । अस्तु वा स्वाप्नगुरुवत् कल्पितत्वं जाग्रद्गुरोः तथाऽपि पर्यनुयोज्यत्वं युक्तमेवेत्याह ।। कल्पितत्वेऽपीति ।। यदि कल्पितत्वमपर्यनुयोज्यत्वे तन्त्रं स्यात् तर्हि वेदस्यापि कल्पकेन कल्पितत्वात् स्वप्नवदवदुपक्रमादिमीमांस्यत्वं न स्यात् । न चेष्टापत्तिः । तत्वज्ञानहेतुत्वाङ्गीकारात् । एवं च वेदस्य कल्पितत्वेऽपि तत्वज्ञानहेतुत्वेन स्वाप्नवेदवैलक्षण्यात् मीमास्यत्वमस्ति एवं गुरोः कल्पितत्वेऽपि तत्वज्ञानहेतुत्वेन स्वाप्नगुरुवैलक्षण्यात् स पर्यनुयोज्य एवेत्यर्थः। अन्यथेति ।। कल्पितत्वस्यापर्यनुयोज्यत्वप्रयोजकत्व इत्यर्थः । उत्तरं स्यात् उत्तरं दत्त्वा कृती स्यात् । व्यवस्थेति ।। गुरुशिष्यादिव्यवस्थेत्यर्थः । एतेनेत्युक्तं विशदयति ।। इहेति ।। एक एव जीवः सर्वशरीरस्थित इति पक्षे प्रवचनविधिविषयत्वेन तस्यैव गुरुत्वं तस्यैव सर्वशरीरेषु सत्वात् शिष्यत्वं चेति स्वप्नवैषम्यात् । न हि स्वप्ने तस्यैव गुरुत्वं शिष्यत्वं च दृष्टम् । अत न व्यवस्था युक्तेति भावः । संशयादीत्यादिपदेन विपर्ययग्रहणम् । शास्त्रेति ।। शास्त्रप्रणयनस्य तत्त्वनिश्चयद्वारा संशयादिपरिहारार्थत्वादिति भावः । प्रमामूलमिति ।। अद्वैतशास्त्रप्रणेतरि कल्पके जीवे तन्मूलाद्वैतप्रमारूपनिश्चयस्याभावादित्यर्थः । एवं च तस्याप्रामाण्यं स्यादिति भावः । सः कल्पको जीवः । प्रवृत्तीति ।। अस्माकं वास्तवजीवत्वाभावे अस्मत्प्रवृत्तेर्बह्वायाससाध्याया वैय्यर्थ्यमेव स्यादिति शङ्कया कस्यापि प्रवृत्त्ययोगादित्यर्थः । अभिसंधीति ।। अस्माकं मोक्षो भूयादित्येवं मोक्षभिसंधिपूर्वककल्पकजीवप्रवृत्तिः। न चामुक इत्यनिश्चिते बह्वायाससाध्यमोक्षार्थं प्रवृत्त्ययोगादित्युक्तमिति वाच्यम् । अभिसंधिपूर्विकाया अपि प्रवृत्तेः कल्पितत्वेन विचारानर्हत्वादित्यर्थः । कथास्विति ।। कथासु प्राप्तस्य स्वक्रियाविरोधादेरपि कल्पितत्वेनापर्यनुयोज्यत्वादिति भावः । त्वयेति ।। अमुकः कल्पक इति निश्चयपक्षेऽद्वैतज्ञानित्वेन निश्चितेषु सम्भावितेषु गौडपादादिषु शास्त्रप्रेणेतृषु मध्ये कश्चिदिति वाच्यम् । तत्र सम्भवति । कल्पकत्वेन सम्भावितेषु तेषु मृतेष्वपि विश्वभ्रमानुवृत्तिदर्शनेन विश्वकल्पकोऽमुक इति निश्चयो न सम्भवतीत्यर्थः । विश्वकल्पको जीवोऽमुक इति निश्चयः सम्भवत्येवेत्याशङ्कते । नन्विति ।। स कल्पकः किं गुरुः शिष्यो वेत्यादि विकल्पयितृभिः तत्ववादिभिरित्यर्थः । क्रोडीकृतं देहादिविशिष्टम् । अकल्पकत्वादिति ।। मया कल्पकत्वानङ्गीकारादित्यर्थः तस्येति ।। निरस्तसमस्तभेदस्य चैतन्यस्येत्यर्थः । एकत्वेऽपीति ।। एवं

निश्चयस्योपपन्नत्वे इत्यर्थः । मुखमात्रेति ॥ यथा मुखप्रतिमुखानुस्यूतं मुखमात्रं तद्वत् अल्पज्ञत्वादिसर्वज्ञत्वादिविशिष्टबिम्बप्रतिबिम्बजीवब्रह्मानुस्यूतं चिन्मात्रमिति त्वयाऽङ्गीकारादिति भावः। असंसारित्वादिति ॥ संसारिणो जीवस्यैव कल्पकत्वाङ्गीकारादिति भावः । तस्येति ॥ चैतन्यस्य कल्पकत्वे कल्पकस्यैव मोक्षार्थं प्रवृत्तेर्वक्तव्यत्वात् चिन्मात्रस्य च नित्यमुक्तत्वेन तस्य मोक्षार्थं प्रवृत्त्ययोगादित्यर्थः । ननु मास्तु चैतन्यस्य कल्पकत्वम् । किं नमा संसारिणां मध्ये एव कश्चन सत्यः संसारी स एव कल्पको भविष्यतीत्याशङ्कायामाह ॥ कल्पकानां चेति ॥ कल्पकत्वेन सम्भावितानाम् अद्वैतज्ञानित्वेन त्वत्संमतानां गौडपादादीनामित्यर्थः । मुमुक्ष्विति ॥ बाह्वायाससाध्यमोक्षार्थं प्रवृत्तेः सर्वेषामप्ययोगादित्यर्थः । कुतो न स्यादित्यत आह ॥ जीवान्तरेति ॥ एकजीववादिनः तव मते एकस्य तत्वज्ञानेन मुक्तौ तत्वज्ञानेन जगतो निवृत्तत्वात् जीवान्तरस्याभावात् कस्येदानीं संसारोपालम्भः स्यादित्यर्थः । ननु तत्त्ववित्त्वेन कश्चित् गुरुः कल्पकजीवेन कल्पितः तत्सम्प्रदायेन तत्वज्ञानोपपत्तिरित्यत आह ॥ तत्त्ववित्त्वेनेति ॥ निरासादिति ॥ गुरोः स्वकल्पिततया निश्चयेन ततः श्रवणार्थं प्रवृत्तिर्न स्यादित्त्यादिदूषणेन निरासादित्यर्थः। अस्मद्रीत्याऽऽह ॥ श्रुत्यादीति ॥ परीक्षित् जनमेजयादीन् प्रति शुकवैशंपायनादेरुपदेष्टृत्वेन तत्त्ववित्त्वस्य श्रुत्यादिसिद्धत्वादित्यर्थः । पररीत्याऽऽह त्वदिति ॥ तत्त्ववित्त्वेनेति वर्तते । अभूता अजाताज्ञाततत्त्वतद्ज्ञानेन संसारस्यानिवृत्तत्वात् इदानीं संसारोपलम्भो न स्यादित्युक्तमिति भावः । मोक्षशास्त्रेति ॥ तरति शोकमात्मविदिति मोक्षशास्त्रप्रामाण्यान्यथाऽनुपपत्त्या पूर्वेषामभूताऽपि मुक्तिरन्यस्य भविष्यतीति कल्पनीयमेव । अन्यथा तदप्रामाण्यापत्तेरिति भावः । तथा च पूर्वेषां ज्ञानेन मुक्तावपि जगतोऽनिवृत्तेरत्रापि कस्यचित् तत्त्वज्ञानेन मुक्तावपि संसारानिवृत्त्या तस्य सत्यत्वमेव स्यादिति भावः । ननु कश्चित् मुक्तोऽभूत् । उत्तरत्रापि केषांचित् मुक्तिरित्यङ्गीकारे बहुजीववादो आपाद्यत इति चेन्न इष्टापत्तेः । जीवबहुत्त्वस्य प्रत्यक्षेण परस्य सुखदुःखाद्यननुसंधानरूपलिङ्गेन 'चेतनः चेतनानाम् इत्यादिश्रुत्या च सिद्धत्वादिति वदन् स चैको जीवा ब्रह्माभिन्न एव । तस्य चैकस्य जीवस्य ब्रह्माभेदाभिव्यक्तिरेव मुक्तिरिति यत्पराभिप्रेतं तदपि दूषयति ॥ नहीति ॥ 'चेतनश्चेतनानाम्' इत्यादिविशिष्योक्त्येशस्य जीवेभ्यो भेदसिद्धिः । 'साधर्म्यमागताः' इति मुक्तेभ्योऽपि भेदसिद्धिरिति द्रष्टव्यम् । जीवेशभेद इति जीवानां भेदो, जीवानाम् ईश्वरात् भेद इति योज्यम् । यद्वा यदि शास्त्रे श्रद्धा तर्हि श्रुत्यादिप्रामाण्यात् पूर्वमपि केषाञ्चित् मुक्तिः स्यादित्युक्तम् । तदुपलक्षणम् । श्रुत्यादिप्रामाण्यात् जीवबहुत्वं, जीवेश्वरभेदश्चाङ्गीकार्य इति योज्यम् । नन्विदमयुक्तम् । अप्रामाणिकत्वात्, बाधकसद्भावाच्चेत्याकारकशङ्कायामाह ॥ न हीति ॥ नन्वेकजीववाद एवाङ्गीकार्यः । अनादिमायया' इति श्रुतौ 'जीवः' इत्येकवचनप्रयोगादित्यत आह ॥ अनादीति ॥ इत्यादिवच्चेति ॥ न हि लोके एक एव राजा, स्वर्गकामो वा। तथा चैकवचनं तत्र यथा समुदायापेक्षम्, एवं जीव इत्येकवचनमपि समुदायापेक्षमिति भावः । अन्यथेति ॥ एकजीवाद एवैकवचनश्रुत्यभिप्रायश्चेदित्यर्थः । पूर्वेणेति ॥ 'अनादिमायया' इत्यपेक्षया पूर्ववाक्येनेत्यर्थः। भेदेनेति ॥ बहुवचनप्रयोगादिति भावः। नन्वेकजीववाद एकाङ्गीकार्यः। जीवत्वोपाधेरविद्याया एकत्वात् । न च बहुमुक्तव्यवस्थाऽनुपपत्तिः, जीवबहुत्वप्रतिपादकप्रमाणविरोधश्चेति वाच्यम् ।

अविद्याया एकत्वेन तदुपहितजीवस्यैकत्वात् । तस्यैव पुनर्नानान्तःकरणोपाधिसंबन्धप्रयुक्तभेदस्याप्यङ्गीकारेणांन्तकरणोपाधिसम्बन्धे बद्धः, स उपाधिः यस्य निवृत्तः स मुक्त इत्येवं बद्धमुक्तादिव्यवस्थोपपत्तेरित्याशङ्क्य निषेधति ॥ न चेति ॥ जीवभेदेऽन्तःकरणमपि तन्त्रम्? न वा? आद्येऽपि अविद्यासमुच्चितं तन्त्रम्? उत प्रत्येकम्? इति विकल्प्याद्यं दूषयति ॥ जीवभाव इति ॥ अविद्याया एकत्वेऽप्यंतःकरणभेदप्रयुक्तभेदस्यापि सत्त्वादिति भावः। द्वितीयं दूषयति ॥ अननुगमाच्चेति ॥ अविद्यान्तःकरणयोर्द्वयोरपि स्वातन्त्र्येण जीवत्वोपाधित्वेऽनुगमकधर्माभावेनाननुगमादिति भावः । तदन्यतरत्वं चाभावरूपत्वात् गुरुभूतमित्युपेक्ष्यम् । जीवत्वेऽन्तःकरणरूपोपाधेरतन्त्रत्वरूप तृतीयपक्षे त्वाह ॥ अतन्त्रत्व इति अन्तःकरणस्य जीवत्वोपाधित्वे तन्निवृत्त्या जीवत्वनिवृत्तौ मुक्तत्वापत्त्या बद्धमुक्तव्यवस्थोपपद्यते ॥ तस्यातन्त्रत्वे तु देहेन्द्रियादिभेदस्य जीवत्वोपाधित्वाभावात् तन्निवृतौ जीवत्वानिवृत्त्या मुक्तत्वाभावः । एवमन्तःकरणनिवृत्तावपि जीवत्वानिवृत्त्या मुक्तत्वाभावेनोक्तव्यवस्थाया अयोगादित्यर्थः । तत्प्रतिबिम्बभूताः हिरण्यगर्भप्रतिबिम्बभूताः । कस्यापि तदभासस्य जीवस्य ॥ न हि बिम्बस्य मुक्त्यभावे प्रतिबिम्बमुक्तिर्युक्तेति भावः ॥ श्रुत्यादीति ॥ ''ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां'' इति श्रुत्यादीत्यर्थः । संसारीति ॥ संसारिभूतहिरण्यगर्भेत्यर्थः । सादीति ॥ सादिर्यो हिरण्यगर्भः तत्प्रतिबिम्बभूताः ये रुद्रादिजीवाः तत्स्थसंसारस्य सादित्वं स्यात् । स्वबिम्बस्य हिरण्यगर्भस्य सादित्वादिति भावः । हिरण्यगर्भसादित्वं च 'यदासीत् तत एवाद्यः स्वयम्भूः समभूदजः' इत्यादिप्रमाणसिद्धमिति मन्तव्यम् । बहुजीववादे बद्धमुक्तव्यवस्थाऽभावमाशङ्क्य निषेधति । न चेति ॥ एकैकस्य मुक्तावपीति ॥ किमु एकस्मिन् कल्पे हिरण्यगर्भादिबहुजीवमुक्त्यङ्गीकार इत्यर्थः । न स्यादिति ॥ तथा च बद्धमुक्तव्यवस्थायाः भवत्पक्षेऽप्यसिद्धिरिति भावः । न स्यादिति बाधकं कुतो नेति चेत् कल्पानन्त्यात् क्षणानन्त्य इव क्षणानन्त्यादपि जीवानन्त्येऽतिशयाङ्गीकारेणैकैकस्मिन् क्षणे एकैकमुक्तौ न सर्वसमाप्तिः । किमु प्रतिकल्प केषाञ्चिन्मुक्तौ । अतो न बद्धमुक्तव्यवस्थाया अयोगः इत्युत्तरमादौ वक्तव्यम् । एतदप्रामाणिकमिति चेत् तत्राह ॥ कल्पानन्त्या.... उक्तं सङ्गृह्णाति ॥ तस्मादिति ॥ शब्देत्यादि ॥ 'न हि सुखदुःखाद्यनुसन्धानाननुसन्धानादिलिङ्गेन' इत्याद्युक्तप्रकारेणेत्यर्थः। तदप्रमाणतायां शब्दादेरप्रमाणतायां 'अनादिमायया' इत्यादि श्रुत्यादिभिः कल्पकजीवसिद्धिर्वाच्या । शब्दादेरप्रामाण्ये एतद्वाक्यात् तज्जीवसिद्धिरपि न स्यादित्यर्थः । उत्तरप्रबन्धोपक्षेपं कुर्वन् एकजीवाज्ञानकल्पितत्वनिराकरणमुपसंहरति ॥ तस्मादिति ॥ इति एकजीवाज्ञानकल्पितत्वभङ्गविवरणम् ।

## २२. अविद्यालक्षणभङ्गविवरणम्

वस्तुसिद्धेः लक्षणप्रमाणाधीनत्वेनाविद्यायां तदभावेन तस्या अप्रामाणिकत्वाच्च नाविद्यकं जगदिति वक्तुमनुवदति ॥ यच्चोक्तमित्यादिना ॥ वस्तुसिद्धेर्लक्षणाधीनत्वादादौ अविद्याया लक्षणद्वयमाह ॥ अनादीति ॥ शुक्तिरूप्ये उत्तरज्ञाननिवर्त्यपूर्वज्ञाने च ॥ (अवशिष्टो भागः उपलब्धः आसीत् । द्वितीयसम्पुटे मुद्रितश्च ।)

## ३७. अथ अनिर्वाच्यसाधकानुमानभङ्गः

अनुमानं चेति ॥ 'विमतं सत्त्वरहितत्वे सति असत्वरहितत्वे सति सदसत्वरहितं बाध्यत्वात्' इत्याद्यनुमानमित्यर्थः । उक्तरीत्येति ॥ प्रत्येकमभावानां साध्यत्वेऽसद्वैलक्षण्यांशे सिद्धसाधनमित्यर्थः । ऐकाधिकरण्यावच्छिन्नानां साध्यत्वे त्वप्रसिद्धविशेषणतेत्याह ॥ अप्रसिद्धेति ॥ परस्परविरहरूपाणां साध्यमानानां सामानाधिकरण्यायोगाद् व्याघात इत्याह ॥ उक्तरीत्येति ॥ प्रत्येकमभावानां साध्यत्वपक्षे सत्वराहित्यसाधने निर्धर्मकब्रह्मवत् सत्वराहित्येऽप्यनिर्वाच्यत्वाभावोपपत्तेरर्थान्तरमित्याह ॥ ब्रह्मवदिति ॥ उक्तत्वादिति ॥ पूर्वं मिथ्यात्वभङ्गे उक्तत्वादित्यर्थः । वैलक्षण्यस्य भेदरूपत्वादिति भावः । ननु सदसदात्मकत्वसाधने सदसद्वैलक्ष्यसाधकख्यातिबाधान्यथानुपपत्तिबाध इति चेत् तत्रोक्तम् ॥ वक्ष्यमाणेति ॥ अन्यथैवेति ॥ सदसदात्मकत्वेनैवोपपत्त्येत्यर्थः । आभाससाम्यादिति ॥ तथा चानिर्वाच्यत्वसाधकानुमानस्यानुकूलतर्काभाव इत्याशयः । रूप्यस्यासद्वैलक्षण्यसाधनेऽसत्वागाह्यनुभवविरोध इत्याह ॥ असदेवेति ॥ मिथ्यैवेति ॥ मिथ्याशब्दस्यानिर्वाच्यपरत्वादिति भावः । एवं चानिर्वाच्यत्वानुमानस्य प्रत्यक्षानुकूल्यसद्भावान्नाभाससाम्यमिति ध्येयम् । विमतं रूप्यम् । नन्वसदेव रजतं प्रत्यभादित्यनुभवस्य सत्वाभावावगाहित्वेनासत्वाभावसाधने सत्त्वस्यैव प्राप्त्या पुनः सत्वस्य तदनिष्ठत्वस्य साधने व्याघातः । एवम् 'असत्वं सत्वानधिकरणनिष्ठम्' इत्यत्रापि सत्वानधिकरणेत्युक्त्या तत्रासत्वस्यैव प्राप्त्या पुनरसत्वस्य तदनिष्ठत्वस्य साधने व्याघात इत्यर्थः । अर्थान्तरेति ॥ ब्रह्मत्वरूपसत्वाभिप्राये तद्राहित्येऽबाध्यत्वरूपसत्त्वेनाप्युपपत्त्याऽर्थान्तरमित्यर्थः । आदिपदेनोक्तरीत्यांशे बाधो ग्राह्यः । किंचेति ॥ पूर्वं सर्वपक्षेषु असत्वराहित्यांशे एव बाधो उक्तः । न सत्वराहित्यांशे । तत्राद्यद्वितीययोरेव सत्वराहित्यांशे बाधः उक्तः। न तृतीयादिषु पक्षेषु । अत उक्तम् । सत्त्वासत्वपक्षेष्विति ॥ तथा च सत्त्वराहित्यांशेऽसत्त्वराहित्यांशे च बाधो द्रष्टव्य इत्यर्थः । तत्र सर्वत्राप्यसत्वराहित्यांशे बाध उक्तः एव। सत्वराहित्यांशे बाधोऽप्याद्यद्वितीयपक्षयोरुक्त एव । तृतीयादिपक्षेषु सत्त्वराहित्यांशे बाधस्त्वित्थम्- तृतीयसप्तमपक्षायोरबाध्यरूपसत्वस्य, चतुर्थाष्टमयोः प्रामाणिकत्वरूपसत्त्वस्य पञ्चमेऽशून्यत्वरूपसत्वस्य नवमे त्रिकालसर्वदेशीयनेषेधाप्रतियोगित्वरूपसत्वस्य प्रपञ्चे मयाङ्गीकृतत्वेन मां प्रति तद्राहित्यसाधनेंऽशे बाधः । अत्रांशे बाध षष्ठे पक्षे न सम्भवति । ब्रह्मत्वरूपसत्वस्य प्रपञ्चे मयाऽनङ्गीकृतत्वेन मां प्रति तद्राहित्यसाधनेंऽशेबाधायोगात् । अतः षष्ठान्येष्वंशेषु बाध इत्युक्तम् । षष्ठे पक्षे तूक्तरीत्या ब्रह्मत्वरूपसत्वाभावेऽप्यबाध्यत्वरूपसत्त्वेनाप्युपपत्त्याऽर्थान्तरमित्यर्थः । सामान्येनानिर्वचनीय साधकानुमानत्रयस्य क्रमेण सत्प्रतिपक्षमाह ॥ सत्त्वासत्त्वे इत्यादिना । उत्तरत्र परस्परप्रतिषेधानात्मकत्वरूपाविरुद्धत्वमुपाधितयोच्यते । तद्भावे नेदं सत्प्रतिपक्षत्वमिति मन्तव्यम् । घटत्वाघटत्वयोः समानाधिकरणात्यन्ताभावप्रतियोगित्वं नास्ति । तथात्वे घटाघटविलक्षणवस्त्वापत्तेरित्यर्थः । एवमिति ॥ 'सत्त्वमसत्त्वानधिकरणनिष्ठं न, तत्प्रतिषेधरूपत्वात् । यत् यन्निषेधरूपं तत् तदनधिकरणनिष्ठं न, यथा नित्यत्वम् अनित्यत्वानधिकरणनिष्ठं न' इति प्रयोक्तव्यमित्यर्थः । अनयैव रीत्या घटाघटविलक्षणकल्पिताकल्पितविलक्षणसिद्धिरपि

स्यादित्याभाससाम्यमित्याह ॥ घटत्वेति ॥ सत्त्वासत्त्वोभयपक्षकानुमाने उपाधिं चाह ॥ परस्परप्रति-षेधानात्मकेति ॥ परस्परात्यन्ताभावानात्मकत्वमित्यर्थः । यद्यपि टीकाकारैरविरुद्धत्वं चोपाधिरित्युक्तम् । तत्र रूपतद्ध्वंसयोरेकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वमस्ति । वायुनिष्ठात्यन्ताभावप्रतियोगित्वात् । अवि-रुद्धत्वं नास्ति । सहानवस्थानलक्षणविरोधस्यैव सत्वात् । अतः साध्याव्यापकत्वमायातीत्यतः परस्पर-प्रतिषेधानात्मकत्वमिति तद्व्याख्यानं कृतमिति मन्तव्यम् । तथाच रूपतद्ध्वंसयोः परस्परप्रति-षेधानात्मकत्वसद्भावान्न साध्याव्याप्तिरिति मन्तव्यम् । उपाधेः साध्यव्यापकत्वादिकं कारिकायां सङ्गृह्य दर्शयति ॥ एवं चेति ॥ आद्यपादे साध्यव्यापकत्वं द्वितीयपादे साधनाव्यापकत्वमिति द्रष्टव्यम् । ननु साधनव्यापकोऽयमुपाधिरिति चेत् तत्राह ॥ अन्यथेति ॥ रसश्च रूपं च रसरूपे । रसरूपे अत्र स्त इति रसरूपी । तद्वदित्यर्थः । यदि सत्त्वासत्वयोः रूपरसवत् परस्परप्रतिषेधानात्मकत्वरूपमविरुद्धत्वं स्यात् तर्हि रूपरसयोरविरुद्धत्वात् तदुभयोपेतं पृथिवीजलरूपं वस्त्वस्ति । एवं सत्वासत्त्वयोरविरुद्धत्वे रूपरसवदेव तदुभयोपेतं सदसद्रूपं किञ्चिद् वस्त्वपि स्यात् । न च तदस्ति । अतो न साधनव्यापक-त्वामिति भावः । आद्य इति ॥ सत्वासत्वपक्षकानुमान इत्यर्थः । सद्विलक्षणत्वासद्विलक्षणत्वादीनाम-प्युक्तसाध्योपेतत्वे सदसद्रूपस्य कल्पिताकल्पितविलक्षणस्य दृश्यादृश्यविलक्षणस्य दुर्निरूपादुर्निरूप-विलक्षणस्य च वस्तुनः प्राप्तेरिति ध्येयम् । यथाक्रमेति ॥ दितीयानुमानेऽसद्वैलक्षण्ये व्यभिचारः । तस्य सत्वाधिकरणनिष्ठत्वेन तत्र साध्याभावादित्यर्थः । एवं निरवकाशव्यभिचारं स्वयमभिधायाभि-धेयत्वज्ञेयत्वादिकेवलान्वयि धर्मे व्यभिचारः टीकाकारैरुक्तोऽस्ति सोऽयमुपपादनसापेक्ष इत्याशयेन तद्व्यभिचारमुक्त्वा तत्र प्रत्यनुपपत्तिपरिहारेण तं समर्थयते ॥ त्रिष्वपीति ॥ व्यवहार्यत्वम् अभिधेयत्वम् । व्यभिचार इति ॥ साध्यत्रयसाधकस्य धर्मत्वस्य हेतोरित्यर्थः । उपाध्यनतिरेकादिति ॥ परंपरासम्बन्धाया जातेरेवोपाधित्वादित्यर्थः । ज्ञेयत्वाद्यौपाधिकधर्माणां ज्ञानत्वादिरूपजात्यतिरिक्तत्वे गुणादिवृत्तित्वेन द्रव्याद्यन्तर्भावायोगात् ज्ञानाद्युपाधिनिवृत्तौ निवर्तमानस्य नित्यत्वाभावेन सामान्येऽप्यन्तर्भावायोगात् । न चोपाधिरूपसामान्यऽन्तर्भाव इति वाच्यम् । दण्डित्वरूपित्वाद्युपाधीनां नित्यानेकसमवेतत्वाभावेन सामान्यत्वाभावात् । तथाहि । 'कृतद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेन' इति वचनात् दण्डसंबन्धः संयोगः दण्डित्वम् । न चासौ नित्यः । एवं रूपित्वं तत्समवायः । न चासावनेकसमवेतः। संयोगसमवायपृथग्भूतमपि तद् यदि नित्यं तदा दण्डादिसम्बन्ध्यभावेऽपि प्रतीयेत । अथानित्यं न सामान्यम् । तल्लक्षणाभावात् । ननु नित्येऽपि तस्मिन् दण्डित्वाद्यौपाधिकसाम्ये तयोः को विशेष इति वाच्यम् । संकरादिबाधकसद्भावाभावाभ्यामेव विशेषोपपत्तेः । अत एवाबाधकं सामान्यं जातिः। सबाधकमुपाधिरिति प्रवाद इति चेत् न । कादाचित्कदण्डादिसम्बन्धव्यङ्गेषु नित्यं विद्यमानेषु दण्डित्व-पाठकत्वपाचकत्वादिषु परस्परपरिहारेणावर्तमानेषु संकरादिबाधकमेव दुर्निरूपमिति कथमुपाधिः सामान्यम्। अत उपाधिरूपसामान्याभावेन ज्ञेयत्वादीनामौपाधिकसामान्यत्वायोगात् षड्पदार्थतिरेकः स्यादेव। अत औपाधिकधर्माणामुपाध्यनतिरिक्तत्वमेव वाच्यम् । तथा च ज्ञानत्वमेव ज्ञेयत्वम्।

ज्ञानत्वस्य चाखण्डत्वेन जातित्वाद्युक्तः सामान्येऽन्तर्भावः । ततश्च ज्ञेयत्वं नाम ज्ञानसम्बद्धः । तत्र ज्ञानस्याननुगतत्वेन ज्ञानत्वस्य व्यतिरेकिधर्मत्वेन केवलान्वयित्वाभावादुक्तसाध्यवत्त्वेन न व्यभिचार इति भावः । न चेश्वरज्ञानस्य नित्यतया तदुपाधिकज्ञेयत्वं नित्यमेव सामान्यं भविष्यति । तच्च केवलान्वय्येवेति वाच्यम् । अस्मदादिज्ञानोपाधिकज्ञेयत्वादिविषयत्वादस्य ग्रन्थस्येति ज्ञेयम् । यद्यौपाधिकधर्माणामुपाध्यनतिरिक्तत्वमङ्गीकृत्य ज्ञानत्वमेव ज्ञेयत्वमित्यङ्गीकारे न्यायसाम्यात् दृश्यत्वस्यापि दृक्त्वरूपतया तस्य ब्रह्मण्येव सत्त्वेन जडेऽभावात् जडस्यैव दृश्यत्वं, न तु ब्रह्मण इति त्वदभिमतं न सिध्येत् । तथाऽभिधेयत्वं नामाभिधानत्वमेव । तच्च ब्रह्मणि नास्तीति न ब्रह्मणोऽभिधेयत्वमित्यङ्गीकृतम् । तद्वत् घटादेरप्यभिधानत्वाभावेनाभिधेयत्वाभावापत्त्याऽवाच्यत्वं स्यादित्यत अतिप्रसङ्ग इत्याह ॥ तथात्वे इत्यादिना ॥ तथात्वे औपाधिकधर्माणामुपाध्यनतिरिक्तत्वे । ननु परंपरासंबद्धजातेरेवोपाधित्वेन ज्ञानद्वारा ज्ञानत्वस्य घट इव दृग्द्वारा अभिधाद्वारा च दृक्त्वाभिधानत्वयोरपि जडे घटे सम्भवात् दृश्यत्वं वाच्यत्वरूपाभिधेयत्वं च सम्भवत्येवेति नातिप्रसङ्ग इत्यस्वरसादाह ॥ आवाभ्यामिति ॥ मायावादितत्ववादिभ्यामित्यर्थः । वक्तुं शक्यमेवं षड्पदार्थनियमवादिभिर्वैशेषिकैः, न त्वावाभ्याम् । आवयोर्वैशेषिकषड्पदार्थनियमाभावात् । अतो ज्ञेयत्वादेरौपाधिकधर्मजातस्य षड्पदार्थातिरिक्तत्वेऽपि दोषाभावादौपाधिकधर्माणामुपाध्यनतिरेककल्पनमयुक्तमिति भावः । वैशेषिकादिमतेऽप्यौपाधिकधर्माणामुपाध्यतिरिक्तत्वमेव । न चान्तर्भावासम्भवेन षड्पदार्थातिरेकप्रसङ्ग इति वाच्यम् । इष्टापत्तेः । अभाव एषामन्तर्भावादित्याह ॥ वैशेषिकैरपीति ॥ वैशेषिकैकदेशिभिरित्यर्थः । ननु ज्ञेयत्वादेर्नञर्थोल्लेखिधीविषयत्वाभावात् कथमभावेऽन्तर्भाव इति चेन्न । अस्त्यत्र सम्प्रदायविशेषः नैतेषां मते नञर्थोल्लेखिधीविषयत्वमभावत्वं, किं नाम षड्भावभिन्नत्वमेव । ततश्च ज्ञेयत्वादीनां तत्रान्तर्भावो युक्त इत्यङ्गीकारात् । तथा च वैशेषिकसूत्रं 'षड्भावभिन्नोऽभावः' इति । अस्तु वा नञर्थोल्लेखिधीविषयत्वमभावत्वम् । ज्ञेयत्वादीनां च तत्रान्र्तभावायागेऽपि उपाधिरूपे सामान्येऽन्तर्भावः सम्भवतीत्याह ॥ सामान्ये वेति ॥ वैशेषिकैकदेशिभिः शिवादित्यादिभिः । 'सामान्यं द्विविधं, जातिरूपमुपाधिरूपं' चेत्यङ्गीकारात्, उपाधिरूपे सामान्येऽन्तर्भान इत्यर्थः । ननु जात्युपाधिसाधारणस्य 'नित्यमेकमनेकसमवेतं सामान्यं' इति सामान्यलक्षणस्य दण्डित्वरूपित्वाद्युपाधयोऽपि लक्ष्याः । ते च 'कृतद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन' इति न्यायेन दण्डसंयोगादिपर्यवसिताः कथं नित्यानेकसमवेताः इति चेन्न । परम्परासंबन्धाया जातेरेवोपाधित्वात् । तस्याश्च नित्यत्वात् । कुतस्तर्हि जात्युपाधिवैचित्र्यम्? 'साक्षात् परम्परासम्बन्धभेदादेवेति ग्रहाण' इति पदार्थचन्द्रिकोक्तप्रकारेणोपाधिसामान्यस्यापि सामान्यलक्षणाक्रान्तत्वेन तत्रान्तर्भावसम्भवात् षड्पदार्थातिरेककल्पनमयुक्तमिति भावः । अस्तु वौपाधिकधर्माणां ज्ञेयत्वादीनां ज्ञानत्वाद्युपाध्यनतिरिक्तत्वम् । तथाऽपि व्यभिचार इत्याह ॥ उपाधीति ॥ औपाधिकधर्माणामिति शेषः । स्वीकृतत्वेनेति ॥ ज्ञानत्वाद्युपाधिसंबन्धः सर्वत्रास्तीति नात्यन्ताभावप्रतियोगित्वमिति वाक्यशेषः । अयं भावः । त्वमते कार्यत्वरूपः औपाधिको धर्मोऽस्ति । स च घटादावेवास्ति नाकाशादावित्यङ्गीकृतम् ।

तत्र निमित्तशंकायां चाभिहितमस्ति 'कार्यत्वं नाम कृतिरेव । तथा च यत्र कृतिरूपोपाधिना विषयत्व-रूपः सम्बन्धोऽस्ति तत्रैव घटादौ कार्यत्वमस्ति । नाकाशादौ । तत्र कृतिसम्बन्धाभावात् । एवं च यत्रोपाधिना सम्बन्धो न तत्रैवौपाधिकधर्मात्यन्ताभाव इति स्वीकृतत्वात् प्रकृते च ज्ञेयत्वोपाधिभूतज्ञानेन सर्वस्यापि संबन्धोऽस्ति । ईश्वरज्ञानस्य सर्वत्रापि सत्त्वात् । अस्माकमपि सामान्यलक्षण-प्रत्यासत्तिजन्यज्ञानस्य सर्वपदार्थसम्बन्धित्वेनानुगततया ज्ञानत्वस्यापि सर्वसम्बन्धेनोपाधिसम्बन्ध-शून्यस्यैवाभावेन तत्र ज्ञेयत्वरूपौपाधिकधर्मात्यन्ताभावस्यैवाभावेन साध्याभावाद् व्यभिचारः स्यादेवेति । नन्वस्तु वा तस्य केवलान्वयित्वम् । तथाऽपि ज्ञेयत्वेन व्यभिचारः । तस्य सर्वत्र सत्त्वेऽपि स्वस्मिन्नभावात् । अन्यथाऽत्माश्रयापातात् । अतः स्वनिष्ठात्यंताभावप्रतियोगित्वमेवेति साध्यसद्भावान्न व्यभिचार इत्यत आह ॥ न चेति ॥ आत्माश्रयभीत्या स्वस्मिन् स्वस्य वृत्त्यनङ्गीकारे उक्तानुमानत्रयेण सामान्यतः सत्वासत्त्वानधिकरणं किञ्चिदस्तीति साध्यत इत्युक्त्ययोगात् । असत्वानधिकरणत्वरूपे सत्वपदार्थविशेष सत्वात्यन्ताभावाधिकरणत्वमप्यस्ति । आत्माश्रयेण स्वस्मिन् स्वस्याभावात् । एवमेव सत्वानधिकरणत्वरूपे असत्व एवासत्वात्यन्ताभावोऽप्यस्तीति सत्त्वासत्त्वात्यन्ताभावयोः सत्त्वासत्वयोरेव विशेषतः सिद्धेरेव प्राप्त्या सामान्यतः सिद्ध्ययोगादित्याह ॥ सत्वादेरपीति ॥ किं च ज्ञेयत्वादेरपि स्वस्मिन् वृत्तिः प्रामाणिकत्वादङ्गीकार्येति व्यभिचारः सुस्थ एवेत्याह असदिति ॥ असद्वै-लक्षण्येऽसद्वैलक्षण्यानङ्गीकारेऽसद्वैलक्षण्येऽसत्वप्राप्त्या रूप्यादावसत्वमेव स्यादिति भावः । मिथ्यात्वे मिथ्यात्वाभावे सत्यत्वप्राप्त्याऽद्वैतहानिः । दृश्यत्वे दृश्यत्वाभावेऽज्ञानासिद्धिरिति द्रष्टव्यम् । अभिधेयत्वस्य वाच्यत्वरूपत्वे सर्वशब्दलक्ष्ये ब्रह्मणि तस्याभावेन केवलान्वयित्वाभावादाह ॥ शब्दप्रतिपाद्यत्वादेरपीति ॥ अनन्यथेति ॥ 'स्वं रूपं शब्दस्य' इति न्यायेनाभिधेयत्वमित्यस्यापि तेनैव शब्देनाभिधेयत्वात् स्ववृत्तित्वमनुभवसिद्धमित्यर्थः । निरवकाशव्यभिचारमाह ॥ अत्यन्ताभावेति ॥ अत्यन्ताभावप्रतियोगित्वे किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वं नास्तीति व्यभिचारः । ननु अत्यन्ताभावप्रतियोगित्वस्यापि अत्यन्ता-भावः कुत्रचिदस्त्येवेति न व्यभिचार इति चेन्न । अत्यन्ताभावप्रतियोगित्वस्यापि अत्यन्ताभाव-प्रतियोगित्वे, अत्यन्ताभावप्रतियोगित्वं यत्र नास्तीत्युच्यते तत्रैव पदार्थे धर्मत्वमस्ति, अत्यन्ताभाव-प्रतियोगित्वं नास्तीति व्यभिचारः स्यादित्यर्थः । अत एवोक्तं दुर्वारत्वादिति ॥ शब्दप्रतिपाद्य-त्वस्यात्मन्यभावोपपादनाय निर्धर्मकेत्युक्तम् । अतो न व्यभिचार इति भावः । आत्मनिष्ठेत्युक्त्याऽऽत्म शब्दप्रतिपाद्यत्वस्यैव प्राप्त्या व्याघातेन तत्रापि शब्दप्रतिपाद्यत्वस्य सद्भावेनात्मनिष्ठात्यन्ताभाव प्रतियोगित्वाभावाद् व्यभिचार एवेत्याह ॥ आत्मेति ॥ आत्मनिष्ठात्यन्ताभावप्रतियोगित्वेना व्यभिचारे सत्त्वासत्त्वयोरपि तन्निष्ठात्यन्ताभावप्रतियोगित्वेन, आत्मनः पारमार्थिकत्वेन तयोरभावसत्त्वेऽपि अनिर्वचनीयत्वाप्राप्त्या शुक्तिरूप्यादेरपि तदसिद्धेरर्थान्तरं स्यादित्याह ॥ सत्त्वेति ॥ नेतीति ॥ तथा च ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वमादाय नार्थान्तरमित्यर्थः । शब्दबोध्यत्वं शब्दप्रतिपाद्यत्वं, तथा च शब्दप्रतिपाद्यत्वाद्यपि निर्धर्मकात्मनिष्ठात्यन्तप्रतियोगीति यो व्यभिचारपरिहारः पूर्वं कृतः सोऽनुपपन्नः

स्यात् । सर्वधर्मराहित्ये शब्दप्रतिपाद्यत्वात्यन्ताभावस्यापि ब्रह्मण्यभावेन तन्निष्ठात्यन्ताभावप्रतियोगित्वस्याभावेन व्यभिचारः तदवस्थ इति भावः । सत्त्वासत्वे पक्षीकृत्य किञ्चिन्निष्ठात्यन्ताभावप्रतियोगीति साध्यते चेदुक्तरीत्याऽर्थान्तरं प्राप्नोति । अतः प्रकारान्तरेणानिर्वाच्यत्वसाधकानुमानरचनामाशङ्क्य निराकरोति ॥ न चेति ॥ असत्वानधिकरणत्वमनात्मविशेषणम् । तथा चानेनानुमानेन सत्त्वासत्वानधिकरणानात्मसिद्ध्याऽनिर्वाच्यसिद्धिरिति भावः । सुधायामनात्ममात्रवृत्तित्वादिति हेतुः परेण प्रयुक्तोऽस्ति । तस्य चानात्मत्वे व्यभिचारः टीकाकारैरुक्तोऽस्ति । अतोऽत्रानात्मत्वे यथा न व्यभिचारः तथा हेतुं निर्दिशति ॥ अनात्मेति ॥ दृष्टान्तीभूतेऽसत्त्वेऽसत्त्वानधिकरणशुक्तिरूप्याख्यानात्मनिष्ठात्यन्ताभावप्रतियोगित्वेन साध्यमस्तीति ध्येयम् । व्याघातादिति ॥ असत्वानधिकरणेत्युक्त्या सत्त्वाधिकरणत्वस्यैव प्राप्त्या पुनस्सत्वस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वसाधने व्याघात इत्यर्थः । किं चात्रासत्त्वानधिकरणानात्मनिष्ठप्रामाणिकात्यन्ताभावप्रतियोगित्वं साध्यम्? उत अप्रामाणिकात्यन्ताभावप्रतियोगित्वम्? नाद्यः अपसिद्धान्तात् । द्वितीये त्विष्टपत्तिरित्याह ॥ अत्यन्तेति ॥ सत्वमात्रपक्षक अस्मिन्ननुमाने उक्तो योऽत्यन्ताभावस्य प्रामाणिकत्वादिविकल्पेन दोषः स पूर्वत्रापि सामान्यप्रसिद्धिसंपादके 'सत्त्वासत्त्वे किंचिन्निष्ठात्यन्ताभावप्रतियोगिनी' इत्यनुमानेऽपि योज्य इत्याह ॥ अयं चेति ॥ कल्पितत्वेति ॥ तथा च कल्पितत्वाकल्पितत्वोभयानधिकरणानात्मसिद्धिरपि स्यादित्यर्थः । दृष्टान्तीभूतेऽकल्पितत्वेऽकल्पितत्वानधिकरणानात्मशुक्तिरूप्यनिष्ठात्यन्ताभावप्रतियोगित्वेन साध्यमस्तीति ध्येयम् । किं चानेनानुमानेनानात्मनः सत्वासत्वानधिकरणत्वं सिद्धम् । न च तावताऽनिर्वाच्यत्वसिद्धिः । निर्धर्मके ब्रह्मणि सत्वासत्वयोरुभयोरप्यभावेऽपि अनिर्वाच्यत्वाभावेन तद्वदनात्मनोऽप्यनिर्वाच्यत्वाभावोपपत्त्याऽर्थान्तरतेत्याह ॥ आत्मन इवेति ॥ त्वद्रीत्येति ॥ ज्ञेयत्वाद्यपि स्वनिष्ठात्यन्ताभावप्रतियोगि । अन्यथाऽत्माश्रयादिति न व्यभिचार इति पूर्वं त्वया शंकितत्वेन त्वदुक्तरीत्यैवेत्यर्थः । तथा च मिथ्यात्वे अनात्मभूतं यत् स्वयं तन्निष्ठात्यन्ताभावप्रतियोगित्वमस्ति, अन्यथाऽत्माश्रयात् । असत्वानधिकरणप्रपञ्चरूपानात्मनिष्ठत्वेन तन्निष्ठात्यन्ताभावप्रतियोगित्वाभावेनोक्तसाध्याभावाद् व्यभिचार इति भावः । अप्रसिद्धविशेषणत्वोपपादनमुपसंहरति ॥ तस्मादिति ॥ अनिर्वाच्यप्रसिद्धिसाधकानुमानानां दूषितत्वादित्यर्थः। अनिर्वाच्यसाधकमनुमानद्वयं नवीनोक्तमाशंक्य निराकरोति ॥ एतेनेति ॥ भ्रमे प्रतीयमानरूप्यादि असदेवेति वादिनं प्रति पक्षविशेषणमसिद्धमित्यत उक्तम् ॥ सत्ख्यातिवादिनं प्रतीति ॥ अन्यत्र विद्यमानमेवान्यत्र दोषवशात् प्रतीयत इति वादिनं तार्किकं प्रति साध्यत इत्यर्थः । विमतं रूप्यादि संसर्गः समवायः । 'अत्र रजतत्वम्' इति संसर्गारोपे तस्यैव बाध्यत्वादिति भावः । असत्वमादायार्थान्तरतापरिहाराय पक्षविशेषणम् । सत्ख्यातिवादिनं प्रति पक्षविशेषणमसिद्धमित्यत उक्तम् 'असत्ख्यातिवादिनं च प्रति' इति । शून्यवादिनं प्रतीत्यर्थः । ख्यातिबाधान्यथाऽनुपपत्तिविपर्ययपर्यवसानलब्धमिदमनुमानद्वयमिति मन्तव्यम् । नाप्रसिद्धेति ॥ सद्वैलक्षण्यमात्रस्य संसर्गादौ प्रसिद्धत्वादिति भावः । कथमनेनानुमानद्वयेनानिर्वाच्यसिद्धिरित्यत आह ॥ पक्षधर्मेति ॥ पक्षविशेषणबलादित्यर्थः । पक्षधर्मताबलादिति पाठे तु स्वार्थे प्रत्ययो व्याख्येयः

असद्विलक्षणे विमते सद्वैलक्षण्यं सद्विलक्षणे चासद्वैलक्षण्यं सिध्यत् अनिर्वाच्यत्वं विना न युक्तमिति तत्सिद्धिरिति भावः । एतेनेत्युक्तं विशदयति ।। व्याघातेति ।। 'असद्विलक्षणं विमतं' इत्युक्त्या सत्वस्यैव प्राप्तेः पुनस्तत्र सद्वैलक्षण्यस्य साधने व्याघातः । एवं 'सद्विलक्षणं विमतम्' इत्युक्त्याऽसत्त्वस्यैव प्राप्तेः पुनस्तत्रासद्वैलक्षण्यसाधने व्याघात इत्यर्थः । बाधेति ।। आद्यानुमाने शुक्तिरूप्यप्रपञ्चयोरुभयोरप्य-निर्वाच्यत्वेन यदा प्रपञ्चस्य पक्षत्वं तदा तत्रार्थक्रियाकारित्वरूपसत्वस्यैव सत्वात् तत्र सद्वैलक्षण्यसाधने बाधः । तथा रूप्यज्ञानस्यापि तन्मतेऽनिर्वाच्यत्वेन तस्यापि पक्षत्वे तत्र 'एतावन्तं कालं भ्रम आसीत्' इत्यनुभवेन सत्वस्यैव गृहीतत्वात् सद्वैलक्षण्यसाधने बाधः । तथा द्वितीयानुमाने रूप्यस्य पक्षत्वे 'असदेव रजतं प्रत्यभात्' इत्यनुभवेनासत्वस्यैव गृहीतत्वात् तत्रासद्वैलक्षण्यसाधने बाध इत्यर्थः । सत्वासत्त्वरहिततयाऽसद्विलक्षणब्रह्मवदनिर्वाच्यत्वाभावोपपत्त्याऽर्थान्तरमादिशब्दार्थः। इति अनिर्वाच्य-सधकानुमानभङ्गविवरणम् ।

## ३८. अथ अनिर्वाच्यसाधकख्यातिबाधान्यथाऽनुपत्तिभङ्गः ।

साध्यावैशिष्ट्यपरिहारायाह ।। अबाध्यतावच्छेदकेति ।। प्रामाणिकत्वादित्यर्थः । व्यभिचारादिति ।। सत्ताजातिमतोऽर्थाक्रियाकारणस्य च प्रपञ्चस्य ब्रह्मज्ञानबाध्यत्वाङ्गीकारादिति भावः । व्यवहारादिति भावः । व्यवहारेति ।। तथा च न व्यभिचार इति भावः । नेह नानेति ।। नेह नानेति श्रुतिबाधेन जगतो यदनिर्वाच्यत्वं तदसिद्धेरित्यर्थः । तथा च 'यत् सत् तद् व्यवहारदशायां न बाध्येत, बाध्यते चेदं व्यवहारदशायां तस्मात् सत् न' इति विपर्ययपर्यवसानं विधाय व्यवहारदशायां बाध्यत्वेनानिर्वचनीयत्वं साधितं स्यादिति यत्' तदयुक्तम् । नेह नानेति वेदान्तजन्यचरमसाक्षात्कारबाधेनैव जगतोऽनिर्वाच्यत्व-मिति त्वन्मतभङ्गादिति भावः । यद्वा व्यवहारदशायां न बाध्येत' इत्यत्र 'नेह नानेति श्रुत्या न बाध्यते' इत्यर्थो विवक्षितो वा 'युक्त्या न बाध्येत' इति वा 'प्रत्यक्षेण न बाध्येत' इति वा । नाद्य इत्याह ।. नेह नानेति ।। व्यवहारदशायां नेह नानेति श्रुत्या बाध्येत तस्मात् सत् न इति विपर्ययपर्यवसानं विधेयम् । तन्न संभवति । नेह नानेति श्रुतिबाधस्य चरमत्वेन व्यवहारदशायमिदानीमभावात् व्यवहारदशायां नेह नानेति श्रुतिबाध्यत्वाद्धेतोरुच्यमानं यदनिर्वाच्यत्वं तस्यासिद्धेरित्यर्थः । न द्वितीयः, व्यभिचारादित्याह ।। व्यवहारेति ।। दृश्यत्वादियुक्तिभिः त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वसाधनाङ्गीकारेण व्यवहार-दशायामिदानीमपि युक्त्या बाध्यत्वस्य प्रपञ्चे त्वन्मते दर्शनेन व्यभिचार इत्यर्थः । न तृतीय इत्याह ।। प्रत्यक्षेति ।। व्यावहारिकप्रातिभासिकयोरुभयोरप्यनिर्वाच्यत्वसाधनमपेक्षितम् । तत्र व्यवहारदशायां प्रत्यक्षतो न बाध्येतेति तर्केण व्यावहारिकप्रपञ्चे सत्वराहित्यं न सिध्यति । चरमसाक्षात्कारबाध्यत्वेन विपर्ययपर्यवसानासंभवात् । प्रातिभासिके तु न तत् संभवति । तत्र विपर्ययपर्यवसानायोगात् । परोक्षतोऽध्यस्ते प्रत्यक्षेण बाधाभावात् अपरोक्षतोऽध्यस्ते नभोनैल्यादौ विभुत्वाद्यनुमानबाधस्यैव सत्त्वेन प्रत्यक्षेण बाधायोगादित्यर्थः । अस्तु वा तर्केण सत्वराहित्यसिद्धिः, तथाऽपि नानिर्वाच्यत्वम् ।

सत्ताजातिराहित्येऽपि ब्रह्मवदनिर्वाच्यत्वाभावस्योपपत्तेरित्याह ॥ सत्तादीति ॥ किं च व्यवहारदशायां बाध्यत्वेनानिर्वाच्यत्वसाधनमयुक्तम् । यथेदानीं व्यवहारदशायामद्वैतस्य 'द्वा सुपर्णा' इत्यादिभेद-श्रुतिबाधेऽपि पारमार्थिकत्वमङ्गीकृतं तद्वत् जगतोऽपि व्यवहारदशायां बाध्यत्वेऽपि पारमार्थिकसत्त्व-मेवास्त्वित्याह ॥ व्यवहारेति ॥ विपर्ययपर्यवसानेऽप्रयोजकतेति भावः । ननु न साध्यावैशिष्ट्यं, 'अबाध्यं चेत् अबाध्यमिति व्यवह्रियेत' इति व्यवहारस्यैवात्रापादानादित्यत आह ॥ व्यवहारस्येति ॥ शेषेति ॥ ख्यात्यन्यथाऽनुपपत्त्याऽसद्व्यावृत्तिसाधनवैय्यर्थ्यमिति भावः । त्वन्मतेऽसतः प्रतिपन्नोपाधेरभावेन तस्मिन् त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वानङ्गीकारे 'सच्चेत् न बाध्येत' इति बाध्यत्वेन सद्वैलक्षण्यसिद्धिवत् 'असच्चेत् न बाध्येत' इति बाध्यत्वेनैवासद्वैलक्षण्यसिद्धेरुपपत्तेः तत्साधकद्वितीयतर्कवैय्यर्थ्यमिति भावः । साध्यावैशिष्ट्यपरिहाराय सच्चेत्, अबाध्यत्वावच्छेदकावच्छिन्नं चेत् न बाध्येत इति विवक्षित चतुर्थपक्षोऽपि न युक्त इत्याह ॥ अत एवेति ॥ ख्यात्यनुपपत्त्याऽसद्व्यावृत्तिसाधनरूपशेषवैय्यर्थ्यादेवेत्यर्थः । तदवच्छेदकस्येति ॥ अबाध्यतावच्छेदकस्येत्यर्थः । तथा चाबाध्यतावच्छेदकं प्रामाणिकत्वम् । तदवच्छिन्नं प्रामाणिकमित्यर्थः स्यात् । तथा च पञ्चमपक्षान्तर्भावः स्यात् । स च दूषयिष्यते इति भावः । बाध्यस्यापीति ॥ रूप्यादेरित्यर्थः । बाध्यत्वाकारेणेति ॥ निषेध्यत्वेन रूपेण बाधरूपप्रमाणविषयत्व-रूपप्रामाणिकत्वादित्यर्थः । एवं च रूप्ये व्यभिचार इत्यर्थः । सत्त्वेन प्रामाणिकत्वं विवक्षितमिति न रूप्ये व्यभिचार इति चेत् तत्राह सत्त्वेनेति ॥ आत्माश्रयादिति ॥ 'सत् चेन्न बाध्येत' इत्यत्रापादकीभूतं सत्वं नाम सत्त्वेन प्रमाणविषयत्वरूपं चेत् सत्त्वलक्षणमध्ये सत्वप्रवेशादात्माश्रय इत्यर्थः । किं च 'प्रामाणिकं चेत् न बाध्येत' इत्यत्र ब्रह्मगतनिर्विशेषत्वादिधर्मे व्यभिचार इत्याह ॥ मानान्तरेति ॥ प्रामाणिकत्वोपपादनायोक्तं तत्वावेदकेत्यादि ॥ 'केवलो निर्गुणश्च' इति श्रुतिवेद्यत्वेनेत्यर्थः । ननु मानान्तरप्राप्तनिर्विशेषत्वानुवादित्वान्न स्वार्थे तात्पर्यमित्यत उक्तम् । मानान्तरेति ॥ आपाद्या-भावमुपपादयति ॥ ब्रह्मान्यत्वेनेति ॥ भावाभावयोरैक्यायोगादित्यर्थः । विरुद्धत्वं चाह ॥ अबाध्य इति ॥ ननु प्रामाणिकत्वस्य कथं बाध्यत्वेनैव व्याप्तिरित्यत आह वैय्यर्थ्येनेति ॥ व्यवहारादेरन्यथासिद्धत्वादिति भावः । प्रमाणेति ॥ तथा चानधिगतार्थ गन्तृप्रमाणविषयत्वरूपप्रामाणिकत्वादिति भावः । तथा च प्रामाणिकत्वं प्रपञ्चमात्रवृत्तीति तर्कस्य विरुद्धत्वमिति द्रष्टव्यम् । रूप्यादीति ॥ तत्वावेदकस्यैव बाधकप्रमाणस्य रूप्याद्यप्रामाणिकत्वे तन्त्रतया रूप्यादिबाधकस्य च ब्रह्मभिन्नविषयतयाऽतत्त्वावेदकस्य रजताभावादिविषयकत्वेऽपि रूप्याद्यप्रामाणिकत्वानापादकत्वात् । अन्यथाऽतत्वावेदकप्रमाणबाधितस्याप्य-प्रमाणिकत्वे 'द्वा सुपर्णा सयुजा' इत्याद्यतत्वावेदकप्रमाणबाधितस्याद्वैतस्याप्रामाणिकत्वापत्तिः । तथा चातत्वावेदकप्रमाणबाधितत्वेनाप्रामाणिकत्वसाधनेऽद्वैते व्यभिचारेण विपर्ययपर्यवसानं न सम्भवतीति भावः। विपर्ययपर्यववसानेऽप्रयोजकत्वं चाह ॥ अतत्वेति ॥ रूप्यादेः पक्षीभूतस्येत्यर्थः । पारमार्थिकत्वं, प्रामाणिकत्वम् । तदुपपादकं स्वत इति ॥ ज्ञानमुत्पद्यमानं प्रमाणं सदेवोत्पद्यत इत्यङ्गीकारेण प्रामाण्यस्य स्वतस्त्वाङ्गीकारात् 'इदं रजतम्' इति ज्ञानस्यापि प्रामाण्यापत्या रूप्यादेरपि पारमार्थिकत्वोपपत्तेः । न

च बाधेन रूप्यादिज्ञानस्य प्रामाण्यायोगात् रूप्यादेरपारमार्थिकत्वोपपत्तिरिति वाच्यम् । अतत्वावेदकव्यावहारिकप्रमाणबाधितत्वस्याद्वैत व्यभिचारेणापारमार्थिकत्वानापादकत्वादिति भावः । रूप्यादेरपामार्थिकत्वेऽतत्वावेदकव्यावहारिकप्रमाणबाधः प्रयोजकत्वेन नोच्यते, किं नाम नेह नानेति तत्वावेदकाद्वैत श्रुतिबाध एव । तस्याः ब्रह्मेतरसर्वनिषेधकत्वेन रूप्यादेरपि निषेधकत्वात् । अद्वैतस्य तु न तत्वावेदकप्रमाणबाधः । अतस्तस्य पारमार्थिकत्वमित्येवं रूप्यादेरद्वैताद्वैषम्यं स्यात् । एवं च 'रूप्यादिकं प्रामाणिकं चेत् तत्वावेदकप्रमाणेन न बाध्येत' इत्यापदनात् तत्र विपर्ययपर्यवसानसम्भवात् न दोष इत्याशंक्य निषेधति ॥ न चास्येति ॥ रूप्यादेरित्यर्थः । कुतो न चेत्यत आह ॥ तस्या इति ॥ तथा हि भेदश्रुतेः प्रत्यक्षप्राप्तव्यावहारिकभेदानुवादित्वान्न स्वार्थे तात्पर्यम् । एवं नेह नानेति श्रुतेः 'नेदं रजतं' इति प्रत्यक्षप्राप्तव्यावहारिकरूप्यनिषेधानुवादित्वेन स्वार्थे तात्पर्याभावान्न प्रामाण्यमिति बाधकत्वं न स्यादिति भावः । असत एवेति ॥ इह 'सत् चेत् न बाध्येत' इति तर्के सत्शब्दार्थं विकल्प्य दूषणभीरुणा केनचित् सत्वं नाम 'असत एव विलक्षणम्' इत्युक्तम् । अत्रावधारणाभावेऽसद्विलक्षणत्वरूपस्य सत्वलक्षणस्यानिर्वचनीयेऽतिव्याप्तिः स्यात् । अतोऽवधारणम् । तस्य च सद्विलक्षणं न भवतीत्यर्थः । अतोऽसत एव विलक्षणत्वस्य न कुत्राप्यतिव्याप्तिरिति भावः । एतेनेत्युक्तं विशदयति ॥ अवधारणस्येति ॥ अत्र सत्वं नामासत एव विलक्षणत्वं, न तु सद्विलक्षणत्वम् । एवं च 'सत् चेत्' इत्यस्यासतो विलक्षणं न तु सतो विलक्षणं चेदित्यर्थः । तत्र च नञः चेदित्यनेन सम्बन्धे तस्य च प्रत्येकं संबन्धे सति 'असतो विलक्षणं सतश्च विलक्षणं न चेत्' इत्यर्थः । तथा च 'सदसद्विलक्षणं न चेत् इति यावत्' इति पर्यवस्यति । तथा च निषेधप्रतियोगिनः सदसद्वैलक्षण्यस्य कुत्राप्यसिद्धत्वादापादाकासिद्धिरिति संप्रदायः । बाधेनैवेति ॥ 'सत् चेन्न बाध्येत' इत्यस्य सदसद्विलक्षणं न चेत् न बाध्येतेत्यर्थे पर्यवसानात् बाध्यते चेदं तस्मात् सदसद्विलक्षणं नेति न, किन्तु सदसद्विलक्षणमेवेति बाधान्यथाऽनुपपत्त्यैव सदसद्वैलक्षण्यरूपानिर्वाच्यत्वसिद्धेः ख्यात्यथाऽनुपपत्तिरूपद्वितीयतर्कोक्तिर्व्यर्थेत्यर्थः । घट्टकुटीति ॥ सत् चेत् न बाध्येतेत्यत्र सत्वनिरुक्तिरूपविकल्पभीरुणाऽसतएव विलक्षणं सद् विवक्षितमित्युक्तम् । तत्रावधारणार्थविचारे सत् चेदित्यस्य सदसद्विलक्षणं न चेदित्यर्थपर्यवसाने प्राप्ते तत्राप्यापादकप्रविष्टसत्त्वं नाम किम्? सत्ताजात्यादिमत्वं चेत् प्रपञ्चे सत्ताजात्यादिमद्वैलक्षण्याभावत्वेऽपि बाध्यत्वस्यैव सत्वाद् व्यभिचार इत्येवमादिपूर्वविकल्प दूषणप्रसरेण घट्टकुटीप्रभातवृत्तान्त इत्यर्थः । अयं च न्यायः पूर्वमेव वर्णितः । उक्तरीत्येति ॥ 'रूप्यं नष्टं' इत्यप्रतीत्या ज्ञानजन्यध्वंसप्रतियोगित्वाभावेनेष्टापत्तेरित्यर्थः । असद्विलक्षणत्वपक्ष इति बाध्यत्वेन सद्वैलक्षण्यं यस्य रूप्यादेः सिषाधयिषितं तस्यैवासद्वैलक्षण्यमङ्गीकर्तुस्तव मत इत्यर्थः । तथा च सत् चेत् न बाध्येतेत्यस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि न स्यात् । अत्र चेदं बाध्यते, अतः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि इति विपर्ययपर्यवसानम् । तन्न संभवति । मिथ्यात्वभङ्गे उक्तरीत्या प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वेऽसत्वस्यैव प्राप्तेः । रूप्यादेश्चासद्वैलक्षण्याङ्गीकारात् । अतो न विपर्ययपर्यवसानं युक्तमित्यर्थः ।

एवं 'सत् चेत् न बाध्येत' इति तर्कं निराकृत्य 'असत् चेत् न प्रतीयेत' इति द्वितीयतर्कं दूषयितुमसत्शब्दार्थं विकल्पयति ॥ एवमिति ॥ साध्यावैशिष्ट्यपरिहारायाह ॥ निरुपाख्यत्वेति ॥ अवच्छेदकं निःस्वरूपत्वम् । सत्ताहीनस्यापीति ॥ सत्ताजातिहीनस्यापीत्यर्थः । विपर्ययेति ॥ सत्ताजातिहीनस्यैवासत्त्वेन 'असन्न भवति' इत्युक्तेः सत्ताजातिहीनं न भवतीत्यर्थप्राप्त्या रूप्यादौ सत्ताजातिमत्वस्यैव प्राप्तेः तस्य च बाधात् न विपर्ययपर्यवसानमित्यर्थः । अत एवेति ॥ रूप्यादौ बाध्यत्वरूपासत्वस्यैव सत्वेन 'असन्न भवति' इति विपर्ययपर्यवसानाभावादेवेत्यर्थः । तस्येति ॥ निरुपाख्यतावच्छेदकस्येत्यर्थः । तथा च निरूपाख्यतावच्छेदकं निस्वरूपत्वं, तदवच्छिन्नं निःखरूपमित्यर्थः स्यात् । एवं च पञ्चमपक्षान्तर्भावः स्यात् । स च दूषयिष्यत इति भावः । नन्वस्तु निरूपाख्यतावच्छेदकं निःस्वरूपत्वातिरिक्तं यत्किञ्चित् । तथापि निरूपाख्यतावच्छेदकावच्छिन्नं निरूपाख्यमेव पर्यवस्यति, नान्यत् । यथा कारणतावच्छेदकावच्छिन्नस्य कारणत्वम् । तथा च नास्यापादकत्वं युक्तम् । 'रूप्यम् असत् चेत्' इत्यस्य निरूपाख्यं चेदित्यर्थः पर्यवस्यति । निरूपाख्यत्वं नामाज्ञायमानत्वम् । तथा च रूप्यं निरूपाख्यं चेदित्यस्याज्ञायमानं चेदित्यर्थः स्यात् । एवं च रूप्येऽज्ञायमानत्वरूपापादकस्यासिद्धिः। न चासतो रूप्यस्य कथं प्रतीतिरिति वाच्यम् । असत एव ख्यातेर्मयाऽङ्गीकारादित्याशयेनाह ॥ असत एवेति ॥ इदमुपलक्षणम् । रूप्यं निरूपाख्यमज्ञायमानं चेत् न प्रतीयेतेति साध्यावैशिष्ट्यं च द्रष्टव्यम् । पारमार्थिकत्वाकारेणेति ॥ रूप्यस्य बाध्यत्वं त्वयाऽङ्गीकृतम् । तद् बाध्यत्वं तावन्निरुच्यताम् । तद्धि न तावत् त्रैकालिकनिषेधप्रतियोगित्वम् । निधर्मकस्य ब्रह्मणोऽपि पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वात् । अतोऽनिर्वाच्यस्य रूप्यस्य स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वमेव बाध्यत्वं वाच्यम् । तथा च रूप्यमसत् चेत् न प्रतीयेतेत्यत्रासत्वं नाम निःखरूपत्वं चेत् तर्हि तत् निर्वक्तव्यम् । पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वं चेत् ब्रह्मणोऽपि निःस्वरूपत्वापत्तिः । स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वं चेत् तर्हि शशशृङ्गादीनामपि स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वात् अन्यस्य निःस्वरूपत्वस्याभावात्, एवं च त्वया रूप्यस्य यदा स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वं बाध्यत्वमङ्गीकृतं तदेदमेव निःस्वरूपत्वापरपर्यायमसत्वमिति तदप्यङ्गीकृतं स्यात् । तथा चासन्न भवतीति विपर्ययपर्यवसानायोग इत्यर्थः । अभावाभावो भावो वा, तद्व्याप्यो वा इति मतद्वयसद्भावादाह ॥ सत्वाभावतद्व्याप्यान्यतरदिति ॥ सत्वाभावप्रकारकप्रमाविशेष्यकत्वादिरूपः सत्वाभावव्याप्यो धर्मो द्रष्टव्यः । न विपर्यय इति ॥ रूप्यमसत् चेत् सत्वाभाववत् चेत् न प्रतीयेत, प्रतीयते च तस्मात् सत्वाभाववत् नेति विपर्ययपर्यवसानमयुक्तम् । सदसद्विलक्षणरूपमनिर्वचनीयमेव रूप्यं ख्यायत इति मते रूप्ये सत्वाभावस्यैव सत्वादिति भावः । अन्यच्चेदिति ॥ सत्वाभावातिरिक्तं स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वरूपं चेत् तर्हि उक्तरीत्या यदैतादृशबाध्यत्वं रूप्यस्याङ्गीकृतं तदेवेदमसत्वमिति तदप्यङ्गीकृतं स्यात् । तथा च विपर्ययपर्यवसानायोगेनाङ्गविकलतया तर्कस्याभासत्वप्राप्त्येष्टापत्तिरित्यर्थः । एवमसत् चेदित्यापादकं दूषयित्वा 'न प्रतीयेत' इत्यापाद्यं दूषयति । एवमिति ॥ ज्ञानायोगादिति ॥ प्रतियोगि-

ज्ञानाभावादिति भावः । असदिति । असतोऽप्रतीतौ असन्न प्रतीयते इत्यसद्विषयकप्रतीतिनिरासो न भवति । विशेषणज्ञानाभावादिति भावः । असत्प्रतीत्यनङ्गीकारे दूषणान्तरं चाह ॥ असदिति ॥ अनर्थकत्वे असदूपार्थप्रतीतिजनकत्वाभावे असत्प्रतीतिजनकत्वाभावे असन्न प्रतीयते' इति वाक्यस्याबोधकत्वं स्यात् । ननु न प्रतीयते इति पदयोः तावत् स्वार्थप्रतीतिजनकत्वात् 'असन्न प्रतीयते' इति वाक्यस्य संसर्गबोधकत्वं युक्तमित्यत उक्तम्' । प्रयुक्तेति ॥ वाक्यप्रयुक्तपदानां सर्वेषां सम्भूय संसर्गबोधनरूपैकार्थकारित्वनियमात् असत्पदस्यासत्प्रतीत्यजनकत्वे सर्वेषां पदानां सम्भूय संसर्गबोधकत्वाभावेनासत्कर्मकप्रतीत्यभावरूपसंसर्गबोधकत्वम् 'असन्न प्रतीयते' इति वाक्यस्य न स्यादित्यर्थः। असद्व्यवहारेति ॥ असद्विशिष्टव्यवहारेत्यर्थः । व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वादित्यर्थः । सा किमिति ॥ तथा च 'असत् चेत् असत्त्वेन न प्रतीयेत इत्यर्थो वा सत्त्वेन भ्रमो न स्यात् इत्यर्थो वा विवक्षित इत्यर्थः । उक्तन्यायेनेति ॥ असद्व्यवहारानुपपत्यादिनेत्यर्थः । सतः शुक्त्यादेः । अन्यथा सतः सत्त्वेन प्रतीतौ भ्रान्तित्वं न स्यादिति भावः । अरूप्यस्येति ॥ यथाऽरूप्यस्यैव शुक्तिकाशकलस्य रूप्यत्वेन प्रतीतिर्भ्रान्तित्वादेवापपद्यते, एवं भ्रान्तित्वादेवासतोऽपि सत्त्वेन प्रतीतिसम्भवात् तर्केऽप्रयोजकतेत्यर्थः । असत एव सत्वभ्रमाधिष्ठानत्वोक्त्याऽधिष्ठानं सदेवेति नास्मन्मते नियतमित्यवधेयमित्याह । तदुक्तमिति ॥ इतोऽप्यसतः प्रतीत्यङ्गीकार्येत्याह ॥ येनेति ॥ नन्वयोग्यतानिश्चयस्य प्रतिबन्धकत्वात् कथं सत्वप्रकारकज्ञानोत्पत्तिरित्यत उक्तम् ॥ येनेति ॥ अयोग्यतानिश्चयाभावदशायामित्यर्थः ·। ज्ञानोत्पत्तेः सत्वप्रकारकज्ञानोत्पत्तेः । ननु शशशृंगमस्तीति वाक्यात् निरर्थकवाक्येष्विव पदार्थज्ञानमेव न भवति । सत्यापि पदार्थज्ञानेऽपार्थकेष्विवान्वयधीरेव वा न भवतीति चेत् तत्राह ॥ न हीति ॥ अपार्थकेषु अनन्वितक्तिषु इत्यर्थः । अनन्वितापातार्थकमिति भावः । कुतो न हीत्यतः शशशृंगमस्तीत्यादिविपरीतबोधकवाक्येष्वपि शाब्दबोधसामग्रीं व्युत्पादयति ॥ विपरीतेति ॥ अयाग्यतेति ॥ अवास्तवयोग्यतेत्यर्थः ॥ योग्यतेति ॥ अत एव पूर्वं येन पुंसा शशशृंगाभावो न निश्चितः इत्युक्तमिति ध्येयम् । अन्यथा, ज्ञानस्यैवानुत्पादे ॥ प्रवृत्यादेरिति ॥ शृंगार्थिन इति शेषः । आदिपदेन व्यवहारग्रहणम् । प्रवृत्यादेः ज्ञानसाध्यत्वेन तदभावेऽयोगादिति भावः । वास्तवाकांक्षासन्निध्योरिव सत्या एव योग्यताया वाक्यात् वाक्यार्थज्ञानोत्पत्तौ हेतुत्वात् शशशृङ्गमस्तीति वाक्यात् न ज्ञानोत्पत्तिरित्यत आह ॥ योग्यतेति ॥ तद्धीनात् योग्यताहीनात् । बधिरेति ॥ बधिराणां कलहेन तुल्या कथा स्यादित्यर्थः। वाक्यार्थज्ञानहेतुभूतवास्तवयोग्यताया प्रतिवादिवाक्येऽभावेन प्रतिवादिवाक्यात् ज्ञानस्यैवानुत्पत्तेरिति भावः। विकल्पमात्रमेवेति ॥ न ज्ञानमित्यर्थः । शाब्दज्ञानानुपातीति ॥ शब्दजन्यज्ञानसदृश इत्यर्थः । अत्र विकल्पस्येच्छादिवत् ज्ञानान्यवृत्त्यन्तरत्वमभिप्रेतम्? ज्ञानविशेषत्वमेव वा? नाद्य इत्याह ॥ विकल्पस्येति ॥ वृत्त्यन्तरत्वे अन्तःकरणवृत्यन्तरत्व इत्यर्थः । अनुभवेति ॥ शशविषाणशब्दात् शशविषाणं जानामीत्यनुभवविरोधादित्यर्थः । प्रवृत्तीति ॥ ज्ञानस्यैव प्रवर्तकत्वादिति भावः। प्रवृत्त्ययोगमेवोपपादयति । न हीति ॥ अनुभूयत इति ॥ येन प्रवृत्तिर्न स्यादिति भावः । किं चासति इच्छोदि-

रूपान्तःकरणवृत्त्यन्तरवदिच्छादिवद्वा ज्ञानमेवाङ्गीक्रियताम् । न तु तदतिरिक्तो विकल्प इत्याह ॥ असतीति ॥ अन्यथेति ॥ विकल्पमात्रमित्यङ्गीकृत्य ज्ञानानङ्गीकार इत्यर्थः । स्यादिति ॥ प्रतीत्यन्यथाऽनुपपत्त्या रूप्यादेरसद्वैलक्षण्यं न सिध्येदिति भावः । द्वितीये त्वाह ॥ विकल्पस्येति ॥ अनुभवेति ॥ ज्ञाने शशशृङ्गोल्लेखित्वावगाहिना शशशृङ्गं जानामीत्यनुभवेन विरोधादित्यर्थः । व्यवहारेति ॥ शशशृङ्गोल्लेखिव्यवहारेत्यर्थः । अनुभवविरोधमेवोपपादयति ॥ न हीति ॥ कस्याप्यनुल्लेखितयाऽनुव्यवसायरूपानुभवविषयो व्यवसायो नानुभूयते । किन्तूल्लिखदेवानुभूयत इति भावः । सिद्धमिति ॥ ज्ञाने उल्लिख्यमानस्यासत एव विषयत्वादिति भावः । ननु शशशृङ्गवाक्यात् जायमानशशशृङ्गप्रतीतिः नासत्शृङ्गविषयिणी येनासतः प्रतीतिः स्यात् । किं नाम सदसद्विलक्षणविषयिणी सेत्यत आह ॥ न चेयमिति ॥ अनिर्वाच्यत्व इति ॥ सदसद्विलक्षणत्वेन रूप्यादितुल्यत्व इत्यर्थः । रूप्यादेरिति ॥ रूप्यादेरनिर्वाच्यत्वं नाम असद्वैलक्षण्यं वक्तव्यम् । तत्र किमसत्, यद्वैलक्षण्यं रूप्यादेः स्यात् । शशशृङ्गस्यासद्वैलक्षण्याङ्गीकारादिति भावः । तस्येति ॥ निःस्वरूपशशशृङ्गादिभिन्नस्य निरूपाख्यस्याभावेन बुद्ध्यावनारोहात् तत्प्रतियोगिकवैलक्षण्यं न रूप्यादेर्ज्ञातुं शक्यमिति भावः । तादृशेति ॥ शशशृङ्गादिभिन्नं निरूपाख्यं किञ्चिदस्ति तद्वैलक्षण्यमेवानिर्वाच्यत्वं शशशृङ्गादिवैलक्षण्यं तावन्न मन्तव्यम् तदेवचास्मन्मनोगतमिति भावः । किञ्च शशशृङ्गमस्तीति वाक्यात् जायमानं ज्ञानं नानिर्वाच्यविषयकम् । न च शृङ्गस्यानिर्वाच्यत्वात् तद्विषयकं भवत्येवेति वाच्यम् । शशशृङ्गमसदिति वाक्यात् यथाऽसदेव शृङ्गं प्रतीयते एवं शृगमस्तीति वाक्यात् अनिर्वाच्यतयाध्यस्तास्तित्वाधिकरणीभूतं शशशृङ्गमसदेव प्रतीयते इत्यङ्गीकार्यम् । न चासतः कथं प्रतीतिरिति वाच्यम् । अर्थे अत्यन्तमसत्यपि तद्विषये शब्दो ज्ञानं करोति इति त्वदङ्गीकारात् । अतोऽसत् चेत् न प्रतीयेतेति तर्के व्यभिचार इत्याह ॥ अत्यन्तेति ॥ इतोऽपि व्यभिचार इत्याह ॥ तद्वैक इति ॥ एतेनेति ॥ अत्यन्तासत्यपि ज्ञानजनकत्वेनेत्यर्थः । निश्चितेति ॥ शशाधिकरणकशृङ्गाधेयकसंसर्गरूपान्वयाभावस्य निश्चितत्वात् शशशृङ्गशब्दोऽपार्थक इत्यर्थः। यद्यपि मणौ व्योमकमलशब्दोऽनिश्चितान्वयत्वादपार्थक इत्युक्तम् । तथाऽपि व्योमकमलशब्दोऽत्र ग्रन्थेऽप्रस्तुतः । परोक्षतः प्रतीयमानत्वं, यन्निषेधप्रतियोगित्वरूपमसत्वं न सिद्ध्येदिति भावः । नन्वत्र निषेध्यतयाऽसतोऽपरोक्षप्रतीतिविषयत्वेऽपि असत् चेदनिषेध्यतयाऽपरोक्षतो न प्रतीयेतेति विशेषणान्न दोष इति चेन्न । अस्यापि चतुर्थपक्षदूषणेनैव दूषयिष्यमाणत्वादिति ध्येयम् । 'सत्त्वेनापरोक्षप्रतीतिर्वेति चतुर्थपक्षोऽपि नेत्याह । न चतुर्थ इति ॥ भ्रान्तित्वादेवेति ॥ रूप्यमसत् चेत् सत्वेनापरोक्षतो न प्रतीयेतेत्यापादनं न युक्तम् । भ्रान्तित्वादेवासतोऽपि सत्वेन प्रतीत्युपपत्त्याऽप्रयोजकत्वात् । अन्यथा भ्रान्तित्वमेव न स्यात् । असतः सत्त्वेनापरोक्षतः पतीतेरेव भ्रान्तित्वादित्यर्थः । सदविषयकस्य पक्षत्वे ज्ञानसामान्यस्य भ्रमस्यैव पक्षत्वे भ्रमस्याधिष्टानरूपसद्विषयकत्वेनाश्रयविशेषणासिद्धिर्माभूदिति मात्रपदम् । भ्रमः भ्रमरूपज्ञानम् । असदिति ॥ असद्विषयकपरोक्षभ्रमवदित्यर्थः । न चात्र शाब्दत्वमुपाधिरिति वाच्यम् । असद्विषयकभ्रमरूपानुमितौ साध्यावापकत्वादिति द्रष्टव्यम् । नन्वसद्विशेषस्य रूप्यादेरेवा

परोक्षप्रतीतिरङ्गीक्रियते । नासतः शशशृंगादेरित्याशङ्क्य निराकरोति ॥ न चेति ॥ कुतो न चेत्यत आह॥ सद्विषत्वेति ॥ असतोऽप्यवान्तरविशेषवत्वे पृथिव्यादिवत् सत्त्वापत्तेः । अतः कस्याप्य-सतोऽपरोक्षप्रतीति विषयत्वं नास्तीत्यर्थः । साचि व्याभावादिति ॥ प्रधानप्रमाजन्यसंस्कारो भ्रमहेतुः । रूप्यादिभ्रमहेतु दुष्टेन्द्रियसचिवश्च संस्कारः प्रधानभूतापणस्थ, रूप्यप्रमाजन्यः । न ह्यत्र प्रधानभूतं शशशृंगमस्ति येन तत्प्रमाजन्यसंस्कारसचिवदुष्टन्द्रियेण शशशृंगापरोक्षभ्रमः स्यादित्यर्थः । किंचासतोऽप्यपरोक्षप्रतीतिविषयत्वे शशशृंगादेरपि सा स्यादित्यापादनं न युक्तम् । असद्विशेषस्य रूप्यादेरेवापरोक्षप्रतीतिविषयत्वांगीकारात् । नन्वसतोऽपि सद्विशेषत्वेऽसत्वायोग इति चेन्न । असत्यपि विशेषाणामनुभूयमानत्वात्। तेषां च वैज्ञानिकानां सत्वेऽपि धर्मिसत्त्वानपेक्षणात्। तद्वदपरोक्ष-प्रतीतिविषयत्वरूप विशेषस्या सद्विशेषे वैज्ञानिकसम्बन्धेनोपपत्तेर्धमिसत्वानपक्षेण, तेन विशेषेणा-सत्वाव्याघातादित्याह ॥ असत इत्यादिना ॥ असत्वरूपेणेत्यादि तृतीयान्तानां 'विशेषेणेव' इत्यनेनान्वयः । नृशृङ्गादिशब्दैरेवेति ॥ शब्दशक्तिभ्रमविरहकाले इति शेषः । तेन शशशब्दस्य नरि भ्रमदशायां नृशृङ्गशब्देनेव शशशृङ्गशब्देनापि नृशृङ्गस्य प्रतीयमानत्वेन नृशृङ्गशब्देनैव प्रतीयमानत्वेन तस्याविशेष इति निरस्तम् । तथा च नृशृङ्गशब्देनैव शृङ्गपरोक्षप्रतीतिव्यवहारविषयत्वं नृशृङ्गस्य । आदिपदेन शशशृङ्गशब्देनैव परोक्षप्रतीतिव्यवहारविषयत्वं शशशृङ्गस्य शशशृङ्गशब्दस्यैव रूपेणेत्यर्थः । कदाचिदेव न सर्वदा । विशेषेणेवेति ॥ विशेषेण बौद्धेन धर्मिसत्वानपेक्षेण असत्वाव्याघात इवेत्यर्थः । अनेनापीति ॥ अपरोक्ष धीविषयत्वरूपेणापीत्यर्थः । बौद्धेनेति ॥ बुद्धचैव केवलमस्तीति बौद्धम् । ज्ञायमानेन वैज्ञानिकसम्बन्धेव विद्यमानेनेति यावत् । सर्वसामर्थ्येत्यादि विषयत्वानाश्रयत्वे हेतुः । सता ज्ञानेनासम्बन्धादिति ॥ असतोऽपरोक्षधीविषयत्वे सता ज्ञानेन संबन्धमङ्गीकृत्य, तत्प्रयुक्तविषयत्वा-श्रयत्वम्, असत् भाति, ज्ञायते इति भानकतृत्वकर्मत्वादिकं तस्मिन्नेव वक्तव्यम् । इदं चायुक्तं, सर्वसामर्थ्यहीनत्वादित्यर्थः । ततश्च 'असत् नापरोक्षधीविषयः, सर्वसामर्थ्यविधुरत्वात् व्यतिरेकेण घटवत्' इत्यनुमानमुक्तं भवति । एतेनेत्युक्तं विशदयति । अतीतादेरित्यादिना ''विषयत्वादिवत् विषयत्वादि-रूपधर्माश्रयत्वादिवत् । परोक्षज्ञानम् अनुमित्यादिरूपम् । इहापीति ॥ अपरोक्षज्ञान एवासद्विषयकत्वं, न त्वसति अपरोक्षज्ञानविषयत्वमित्यस्त्वित्यर्थः । तत्सत्वेति ॥ स्मृत्यादिविषयत्वप्रतियोगित्वादिधर्मजातं धर्मिसत्तासापेक्षं न भवतीत्यतोऽतीतादौ तदङ्गीक्रियते चेदित्यर्थः । इदमपि सत्वानपेक्षणात् विषयत्वमपि । तदेवोपपादयति ॥ न हीति ॥

सत्वप्रकारकभ्रमरूपापरोक्षज्ञानं न रूप्यादिधर्मिसत्वसापेक्षमित्यर्थः । अन्यथेति ॥ सत्त्वप्रकारक-भ्रान्तेः रूप्यादिधर्मिसत्वसापेक्षत्वे । सद्विलक्षणत्वेऽपि सद्विलक्षणत्वमङ्गीकर्तुस्तव मतेऽपि सा भान्तिर्न स्यात् । रूप्यादौ सत्वाभावसत्वादित्यर्थः । यदुक्तं रूप्यादेरसतः सता ज्ञानेनासम्बन्धात् भातीत्यादि भानकर्तृत्वाद्ययोग इति, तत् तव मतेऽपि समानम् । ननु मया रूप्यादेरसद्वैलक्षण्यङ्गीकारात् तस्य सता ज्ञानेन सम्बन्धे तन्त्रत्वात् युक्तं मन्मते रूप्यादेः भानकर्तृत्वादि इति चेत् न, सता ज्ञानेन सम्बन्धे

असद्वैलक्षण्यादपि सत्त्वस्य तन्त्रत्वे लाघवात् रूप्यादेस्तदभावादुक्तदोष तदवस्थ एवेत्याह संबन्धादाविति ।। दुष्टादिति ।। स्वरूपयोग्यस्य सहकारिविशेषसमवधाने सति कार्यविशेषजनकत्वदर्शनादिति भावः । रूप्यादेरत्यन्तासत्त्वे रूप्यार्थिनस्तत्र प्रवृत्त्ययोगात् तदन्यथाऽनुपपत्त्याऽसद्वैलक्षण्यमङ्गीकार्यमिति असद्वैलक्षण्यसाधकार्थापत्त्यन्तरमप्यनेनैव निरस्तमित्याह ।। एतेनेति ।। एतेनेत्युक्तमेव विवृणोति । इदमंशस्येति ।। तदर्थीति ।। रूप्यार्थीत्यर्थः । प्रवृत्तीति ।। इष्टतावच्छेदकप्रकारकपुरोवृत्तिविशेष्यकज्ञानस्यैव प्रवर्तकत्वादिति भावः । उपपत्तेरिति ।। ततश्चार्थापत्तेरन्यथाऽप्युपपत्तिरिति भावः । अपरोक्षज्ञाने विषयस्य कारणत्वात् 'अर्थादिजन्यत्वादित्युक्तं वर्तमानार्थप्रमायामिति द्रष्टव्यम् । हेतुत्वेति ।। अपरोक्षज्ञानजनकत्वेत्यर्थः । अर्थादीत्यादिपदेनेन्द्रियार्थसन्निकर्षग्रहणम् । अपरोक्षभ्रमस्तु नार्थेन्द्रियसन्निकर्षाभ्यां जन्य इति भावः । तथोक्तं गङ्गेशेन 'असन्निकृष्टमपि दोषाद्भासत इत्युपेयम्' इति । किञ्चेन्द्रियसन्निकर्षोऽप्यस्ति प्रकृत इत्याह ।। रूप्येति ।। अन्यथेति ।। अपरोक्षप्रमाया एवेन्द्रियसन्निकर्षादिजन्यत्वमनङ्गीकृत्यापरोक्षज्ञानमात्र सन्निकर्षस्य हेतुत्वाङ्गीकारे रूप्यस्य प्रातिभासिकत्वपक्षे प्रातिभासिकस्य रूप्यस्यापरोक्षधीर्न स्यादेव । कुत इति चेत् प्रतिभासमात्रशरीरस्य रूप्यस्य स्वापरोक्षप्रतिभासात् पूर्वमभावेन सन्निकर्षासंभवादित्यर्थः । असतः सत्त्वेनापरोक्षप्रतीत्युपपादनाय प्रवृत्तम् 'अन्यथात्वमसत्' इत्यद्यनुव्याख्यानं हृदि निधाय स्वयं तदर्थमाह ।। किञ्चेति ।। अन्यथात्वमित्यस्यार्थो अनिदंरूपे इत्यादि । अनिदंरूपे रूप्ये यदिदंत्वं प्रतिभाति प्रातिभासिके च रूप्ये यद् व्यावहारिकत्वं भातीति सम्बन्धः । न तावदिति ।। तथात्वे धर्मिणो रूप्यस्यापि सत्वप्रसङ्गादिति भावः । अनिर्वाच्यं सदसद्विलक्षणरूपं प्रातिभासिकम् । तथात्वे, अनिर्वाच्यत्वे । तस्येति ।। रूप्ये प्रतीतस्येतदंत्वस्य व्यावहारिकत्वस्य च । सत्वप्रतीत्या भाव्यं कुतः? इत्यत उक्तम् । सदसद्वैलक्षण्यार्थमिति ।। रूप्यगतेदंत्वादेरनिर्वाच्यत्वे, असद्वैलक्षण्यात्, असद्वैलक्षण्यस्य चासत्वेन च न प्रतीतिरिति सत्वेन प्रतीतिरन्यथाऽनुपपत्त्यैव वक्तव्येति तयोः सत्त्वप्रतीत्या भाव्यमित्यर्थः । कुतस्तयोः सत्वप्रतीत्या भाव्यमित्यत्र युक्तिमाह ।। प्रातिभासिकसत्वाय चेति ।। इदंत्वव्यावहारिकत्वयोरनिर्वाच्यत्वेन प्रातिभासिकत्वाङ्गीकारात् सत्वेन प्रतीतिं विना च प्रातिभासिकत्वासम्भवादित्यर्थः । 'सत्वस्यासतः' इत्यादेरर्थमाह ।। एवं तदपीति ।। रूप्ये प्रतीतेदंत्वादौ यत् सत्वं प्रतीतं तस्य सत्वे रूप्यस्यापि सत्वापत्त्याऽनिर्वाच्यत्वं वाच्यम् । तस्याप्यनिर्वाच्यस्य प्रातिभासिकत्वाय सत्त्वान्तरवत्तया प्रतीतिर्वाच्येत्यनवस्था स्यादित्यर्थः । 'अन्यथात्वमसत् तस्मात्' इत्यस्याभिप्रायमाह । तस्मादिति ।। ते च सत्वे नापरोक्षे इति कथमसतः सत्वेनापरोक्षज्ञानाभाव इत्याशयः । अनिदंरूपे इदंत्वप्रकारकत्वेऽव्यावहारिके व्यावाहारिकत्वप्रकारकत्वे त्वन्यथात्वमित्युपपाद्यान्याकारत्वमन्यथात्वमित्यर्थमभिप्रेत्योपपादयति ।। एवमिति ।। तयोरपीत्यादि ।। निषिध्यमान इदन्त्वपारमार्थिकत्वे पारमार्थिकसती वा असद्विलक्षणे वा असती वा । आद्ये स्वरूपेण निषेधायोगः । द्वितीयेऽसद्विलक्षणयोः स्वरूपेण निषेधायोगात् तयोरपि पारमार्थिकत्वाकारेणैव निषेधो वाच्यः । तद्गतपारमार्थिकत्वस्यापि असद्विलक्षणत्वे पुनः पारमार्थिकत्वाकारेणैव निषेधो वाच्यः इत्यनवस्थेत्यर्थः ।

तस्मात् तृतीयपक्ष एवाङ्गीकार्य इत्याह ।। तयोरसत्वं वाच्यमिति ।। ते चेति ।। रूप्ये निषिध्यमाने- दंत्वपारमार्थिकत्वे इत्यर्थः । अन्यथात्वमिति ।। अन्यप्रकारकत्वम् अन्याकारत्वं चान्यथात्वमित्यर्थः। तस्य प्रकारस्य आकारस्य च अत्रानिर्वचनीये रूप्ये प्रतीयमानयोरिदंत्वव्यावहारिकत्वयोरसतोस्तत्र निषिध्य- मानयोः पारमार्थिकत्वेदंत्वाकारयोरसतोरेवापरोक्ष्यमानवस्थाभयात् परं प्रति स्वयमापादितम् । सुधायां तु प्रातिभासिके रूप्ये अन्यथात्वम् इदंत्वं तावत् प्रतीयते । तत्रेदंत्वेन प्रतीयमानस्य रूप्यस्य प्रातिभासिकस्य तथैव प्रतीतौ प्रवृत्त्ययोगात् व्यावहारिकतया प्रतीतिर्वाच्या । तद्व्यावहारिकतायाः सत्त्वे रूप्यस्य प्रातिभासिकत्वायोगात् असत्या एव तस्या आपरोक्ष्यमायातम् । तस्या अप्यनिर्वाच्यत्वे तथैव तस्याः प्रतीतौ प्रवृत्त्ययोगात् अनिर्वाच्यायाः तस्या व्यावहारिकत्वेनापरोक्ष्यं वाच्यम् । अनिर्वचनीयव्यावहारिक- तागतव्यावहारिकत्वस्य सत्त्वे तदाश्रयव्यावहारिकताया अनिर्वाच्यत्वायोगात् असदेव व्यावहारिक- त्वमपरोक्षतया प्रतीयत इति वाच्यम् । तद्व्यावहारिकत्वस्याप्यनिर्वाच्यत्वे उक्तरीत्याऽनवस्थेत्येवं प्रातिभासिके रूप्ये यद्व्यावहारिकत्वं तस्यासत एव प्रतीत्यनङ्गीकारे सत्वपरम्परयाऽनवस्थेत्याह ।। टीकायांत्विति ।। सत्वं व्यावहारिकत्वम् । सत्वायोगादिति ।। तथात्वे रूप्यस्यानिर्वाच्यत्वविरोधात् । न हि यस्य सत्त्वं सत् तदनिर्वाच्यमिति संभवतीत्यर्थः । अनिर्वाच्यत्व इति । प्रातिभासिकत्व इत्यर्थः । प्रवृत्तीति ।। न हि प्रातिभासिकं क्वचिदर्थक्रियासूपयुज्यमानं दृष्टं येन तद्भावप्रतीत्यापि प्रवर्तेतेति भावः । सत्त्वेनेति ।। व्यावहारिकत्वेनेत्यर्थः । तस्मिन्नपि सत्त्वे व्यावहारिकत्वे पक्षद्वयेऽपीदंत्व- व्यावहारिकत्वयोरेवासत्त्वमभिप्रेतम् । तथाऽप्यनवस्थोपपादनभेदेन पक्षभेद इत्यवधेयम् । टीकाकाराणां व्याख्यानेऽनुपपत्तिमाशङ्क्य परिहरति ।। न चेति ।। त्वत्पक्षेऽप्यनवस्थेति सम्बन्धः । मां प्रत्यापाद्य- मानाऽनवस्था भवतामप्यायातीत्यर्थः । अनिर्वाच्यस्य रूप्यगतस्य प्रातिभासिकसत्वस्य । प्रातिभासि- कत्वासिद्धिवदिति ।। सत्वस्य प्रतिभासमात्रशरीरत्वेन सत्वेन प्रतिभासं विना प्रातिभासिकत्वासम्भव इत्यर्थः । मम मत इति ।। तथा चासतः सत्वस्य मया प्रतीत्यनङ्गीकारात् न तत्प्रयुक्तानवस्था । त्वन्मते तु रूप्यसत्वस्य सत्वेनाभाने प्रातिभासिकत्वासिद्धेः, सत्त्वेन भानेऽङ्गीकार्ये तस्मिन्नपि सत्वे उक्तविकल्पप्रसरेणानवस्था स्यादेवेति भावः । न च सत्वाप्रतीतौ भवन्मते प्रवृत्त्ययोग इति वाच्यम् । इष्टतावच्छेदकप्रकारकपुरोवृत्तिविशेष्यकज्ञानस्यैव प्रवर्तकत्वेनेदमंशस्यैव सद्रूप्यात्मना प्रतीतत्वमात्रेण तदर्थिप्रवृत्तिविषयत्वोपपत्तेरुक्तत्वादिति ध्येयम् । एवं ख्यातिबाधान्यथाऽनुपपत्तिर्दूषिता । अस्तु वा सा । तथाऽपि तदन्यथाऽनुपपत्त्या सदसद्वैलक्षण्यमेव कुतः? किं तु ख्यात्यन्यथाऽनुपत्या सत्वमस्तु, बाधान्यथाऽनुपत्त्या चासत्वमस्तु । एवं सदसदात्मकत्वेनाप्युपपत्तेरित्याह ।। किं चेति ।। अनुपपत्ताविति ।। ख्यातिबाधाभ्यामिति शेषः । ननु सदसदात्मको विधिसमुच्चयो विरुद्ध इति चेत् सदसद्वैलक्षण्यरूपे निषेधसमुच्चयेऽपि विरोधसाम्यात् । निषेधसमुच्चयस्यातात्विकत्वात् न विरोध इति चेत् तर्हि विधिसमुच्चयस्याप्यतात्विकत्वेनाविरोधसाम्यात् इत्याह ।। निषेधेति ।। सति चैवं मम मते लाघवमित्याह ।। एवं चेति ।। सदसद्वैलक्षण्यरूपचतुर्थप्रकारेत्यर्थः । ननु रूप्यस्य सदसदात्मकत्वे सद्रूप्यमिति ज्ञानस्य

भ्रमत्वं न स्यात् । रूप्यस्य वस्तुतः सद्रूपत्वादित्यत आह ॥ त्वत्पक्ष इति ॥ तव मते रूप्यस्यासद्विलक्षणत्वेऽपि 'असदेव रूप्यमभात्' इति बाधकज्ञानस्य यथा भ्रमत्वं नायाति, तस्य तत्र विद्यमानसद्वैलक्षण्यविषयकत्वात्, एवं 'सद्रूप्यम्' इति भ्रमस्यापि अविद्यमानासद्वैलक्षण्यविषयकत्वेन भ्रमत्वमक्षतमेवेत्यर्थः । अनिर्वाच्यं सदसद्विलक्षणम् । ननु सदसदात्मकरूप्ये सदसदात्मकसत्वप्रतीतौ भ्रमत्वं कुतः? इति चेत् । त्वत्पक्षेऽपि सदसद्विलक्षणे रूप्ये सदसद्विलक्षणसत्वप्रतीतौ कथं भ्रान्तित्वम् । ननु सदसद्विलक्षणे रूप्ये सदसद्विलक्षणसत्वावगाहित्वमेव भ्रान्तित्वे मन्मते प्रयोजकमिति चेत् । तर्हि ममापि सदसदात्मके रूप्ये सदसदात्मकसत्त्वावगाहित्वमेव भ्रमत्वे प्रयोजकमस्त्वित्याह ॥ भ्रान्तित्वे चेति ॥ यदि ख्यातिबाधाभ्यां प्रत्येकं सत्वासत्त्वयोरनुपपत्त्या सदसदात्मकत्वमनङ्गीकृत्य सदसद्वैलक्षण्याङ्गीकारेऽतिप्रसङ्गमाह ॥ अन्यथेति ॥ मीमांसकैः यावज्जीवमग्निहोत्रं जुहुयात् स्वर्गकामः इति वाक्योक्तमग्निहोत्राख्यं कर्म यावज्जीवं संध्यावन्दनादिवत् विहितत्वात् नित्यम्, कामाधिकरणे विहितत्वात् काम्यं चागीकृतम् । एवं च केवलकाम्यत्वे नित्यत्वं विरुद्धम् । कामनाया असार्वकालिकत्वात् तदभावदशायामननुष्ठानापत्त्या यावज्जीवमित्युक्तनित्यत्वायोगात् । केवलनित्यत्वे च काम्यत्वं विरुद्धम् । प्रत्यवायमात्रपरिहारार्थत्वरूपनित्यत्वाङ्गीकारे स्वर्गकाम इत्युक्तकामनया क्रियमाणत्वरूपकाम्यत्वायोगात् । अतो नित्यकाम्यमित्यङ्गीकृतम् । तदपि न स्यात् । विरोधात् । नित्यकाम्यविलक्षणमेव तैरङ्गीकार्यं स्यात् । तथा तैरेव मीमांसकैः गुणगुण्यादौ भेदाभेदोऽङ्गीकृतः । तत्र केवलभेदाङ्गीकारेऽङ्गलिद्वयवत् भेदेनानुपलम्भविरोधः । केवलाभेदाङ्गीकारे चापर्यायशब्दव्यवहारानुपपत्तिः । त्वगिन्द्रियेण घटोपलम्भेऽपि तद्गतरूपाद्यनुपलम्भरूपभेदकार्यविरोधश्च । अतः केवलभेदाभेदार्देरनुपपत्त्या भेदाभेदावङ्गीकृतौ । तदपि न स्यात्, विरोधात् । अतो भेदाभेदवैलक्षण्यमेव गुणगुण्यादीनामङ्गीकार्यं स्यात् । न त्वेवमङ्गीकृतम् । अतः परीक्षकेण त्वयाऽपि सदसदात्मकत्वमेवाङ्गीकार्यम् । न तु सदसद्वैलक्षण्यमित्यर्थः । अनिर्वाच्यत्वाभाव एवेति ॥ यथा विपर्ययपर्यवसानोपेतख्यातिबाधान्यथाऽनुपपत्त्या सदसद्वैलक्षण्यमङ्गीक्रियते, एवं ख्यातिबाधान्यथाऽनुपपत्त्यैव सदसद्वैलक्षण्याभाव एवाङ्गीकार्यः स्यात् 'असद्विलक्षणं चेत् न बाध्येत, सद्विलक्षणं चेत् न प्रतीयेत' इति तर्काभ्यां विपर्ययपर्यवसानसहिताभ्यां सदसद्वैलक्षण्याभावरूपानिर्वाच्यत्वाभावलाभादिति भावः । एवं च त्वदीयार्थापत्योः प्रत्यर्थापत्तिबाध इति हृदयम् । गौरवादिति ॥ तथा च सत् चेत् न बाध्येतासत् चेत् न प्रतीयेतेत्येव तर्को वाच्यः । अतो भवदीयतर्केऽप्रयोजकतेति भावः । 'अबाधाप्रतीत्योः प्रतियोगिभूतयोर्बाधप्रतीत्योर्थत् प्रयोजकं क्रियते तदभावस्यैव, अबाधाप्रतीती प्रत्यपि प्रयोजकत्वं वाच्यमित्याशयेनाह ॥ अबाधेति ॥ अबाधाप्रतीती प्रति प्रतियोगिभूतयोर्बाधप्रतीत्योः प्रयोजकं कस्मात् प्रथमं चिन्त्यमित्यत्र हेतुत्रयमाह ॥ प्रथमेति ॥ अभावापेक्षया भावस्य प्रतियोगित्वेन प्रथमं बुद्धिस्थत्वादित्यर्थः । कल्पकत्वाच्चेति ॥ भावप्रयोजककल्पनानन्तरम् अभावे तज्जिज्ञासा भवतीति भावप्रयोजककल्पनाऽभावप्रयोजकस्य कल्पिका भवतीत्यर्थः। एतत् सत्यम् प्रकृते किमायातमित्यत आह ॥ बाधेति ॥ न त्विति ॥ तथा च 'सच्चेत् न बाध्येतासच्चेत् न

प्रतीयेत' इति तर्को न युक्त इति भावः । तथा चेति ॥ एवं च प्रयोजकाभावात् 'असद्विलक्षणं चेत् न बाध्येत सद्विलक्षणं चेत् न प्रतीयेत' इति तर्को युक्त एवेति भावः । तर्कफलमाह ॥ एवं चेति ॥ बाध्यते, तस्मात् असद्विलक्षणं न भवतीत्येवमसत्वेन बाधोपपत्तिरस्तु । प्रतीयते तस्मात् सद्विलक्षणं न भवतीत्येवं सत्त्वेन प्रतीत्युपपत्तिरस्तु । तस्मात् सदसदात्मकत्वरूपो विधिरूपो विधिसमुच्चय एव स्यादित्यर्थः । एवं विरोधात् न विधिसमुच्चयो युक्त इत्यत उक्तम् ॥ उक्तरीत्येति ॥ निषेधसमुच्चयवत् विधिसमुच्चस्याप्यतात्विकत्वेन विरोधासम्भवादित्युक्तरीत्येत्यर्थः । नन्वसत्त्वं न बाधे प्रयोजकं नृशृङ्गादावसत्त्वसद्भावेऽपि बाधादर्शनादित्यत आह ॥ नृशृङ्गादाविति ॥ यथा तव मते बाधप्रयोजकत्वेन त्वदभिमतस्य सद्वैलक्षण्यस्य सत्वेऽपि नृशृङ्गादौ न बाध्यत्वम् । तस्य प्रतिपन्नोपाध्यभावेन प्रतियोग्यधिकरणसंसर्गज्ञानरूपप्रसत्त्यभावेन त्रैकालिकनिषेधरूपबाधाभावात् । एवं मन्मतेऽपि बाध-प्रयोजकीभूतस्यासत्वस्य नृशृङ्गादौ सत्वेऽपि प्रसक्त्यभावेन बाधाभावेऽपि न तस्य बाधप्रयोजकत्वक्षतिरिति भावः । किं चासद्विलक्षण चेत् न बाध्येत इत्यादिनोक्तं दूषणं सङ्गृह्णाति ॥ एवं चेति ॥ सद्विलक्षणं चेत् न भायात् न प्रतीयेतेत्यर्थः । इतीति ॥ इत्येवं सदसद्विलक्षणरूपानिर्वाच्यात् विलक्षणं सदसदात्मकमेव रूप्यं भवत्वित्यर्थः । नन्वेवं रूप्यस्य सदसदात्मकत्वे 'सच्चासच्च रूप्यम्' इत्याकारा प्रतीतिः स्यादिति चेन्न । वस्तुतो रजतस्य तथात्वेऽपि प्रतीतेस्तदाकारत्वाभावात् । अन्यथा त्वन्मतेऽपि 'रूप्यं सदसद्विलक्षणम्' इत्याकारा प्रतीतिः स्यादित्यर्थः । इति अनिर्वाच्यसाधकख्यातिबाधान्यथाऽनुपपत्तिभङ्गविवरणम् ।

## ३९. अनिर्वाच्यत्वसाधकनिषेधप्रतियोगित्वान्यथानुपपत्तिभङ्गः

कथमिति ॥ अत्यन्तासतो रजतस्य निःस्वरूपत्वेन तत्र प्रतियोगित्वरूपधर्मासम्भवादिति भावः । तथाचेति ॥ अत्यन्तासतो निषेधप्रतियोगित्वान्यथाऽनुपपत्त्येत्यर्थः । किमिहेति ॥ इह किं कथम्? अनुपपद्यमानं प्रमेयं किमस्तीत्यर्थः । असत्वस्येति ॥ यद्यसत्वं नामात्यन्तिकनिषेधप्रतियोगित्वादन्यत् स्यात् तर्ह्येवासत्वमात्यन्तिकनिषेधप्रतियोगित्वप्रतिक्षेपकं स्यात् । अन्यथाऽनुपपत्त्या चानिर्वाच्यत्वं कल्प्यं स्यात् । न चैवम् । किं नाम तदेवासत्वमित्यर्थः । अस्तु वा ततो भिन्नं, तथाऽप्यसतो निषेधप्रतियोगित्वं सम्भवत्येव । कथमित्यत आह ॥ प्रागभावादीति ॥ वस्तुतत्वप्रदीपनकारः प्रागभावादिदशायामपि घटादेः प्रतियोगित्वव्यवहार एव नास्ति' इत्याक्रोशति ॥ स तु 'शास्ता यदूनां भविता तदात्मजः' 'कंसवधाख्यानम्' इत्यादिदैववचः श्रावणीयः । यदुशास्तृकंसवधयोरिदानीमभावेऽपि 'शास्ता भविता' इत्यादिना भाविशास्तृकंसवधाख्यानमुच्यत इत्येवं प्रागभावदशायामपि प्रतियोगित्वव्यावहारदर्शनादिति ध्येयम् । नन्वथापि नासतः प्रतियोगित्वं सम्भवति । प्रतियोगित्वेऽसत्वाभावस्य तन्त्रत्वात् इति चेन्न । असत्वाभावापेक्षया सत्वस्यैव लघुत्वेन तस्यैव प्रतियोगित्वे तन्त्रताऽस्तु । तथा चासत इवानिर्वाच्यस्यापि सत्वहीनत्वादत्यन्ताभावप्रतियोगित्वं न स्यादित्याह ॥ असत्वेति ॥ असतः प्रतियोगित्वाभावे त्वदङ्गीकृतं

यदसतोऽसद्वैलक्षण्यप्रतियोगित्वं तदपि न स्यादित्याह ॥ त्वन्मतेऽपीति ॥ नासदिति ॥ असत् नासीदिति कदाचित् क्वचित् सत एव निषेधप्रतियोगित्वं दृष्टम् । अत्यन्तासत् कदाचित् कुत्रचित् सत् न भवतीति न तस्यात्यन्ताभावप्रतियोगित्वमित्यत आह ॥ तर्हीति ॥ कदाचित् उत्पत्तेः पूर्वं कुत्रचित् स्वोपादाने असतः एव घटादेः सत्वं दृष्टम् । अन्यथाऽसतः सत्तासम्बन्धरूपा जनिर्न सिध्येत् । एवं च नित्यसर्वगतानां गगनादीनां कदाचित् कुत्रचित् । असत्वाभावेन सत्वं न स्यादिति प्रतिबन्दीमुत्तरेदित्यर्थः । ननु कादाचित्कसत्त्वस्यैव कदाचिदसत्वपूर्वकत्वापेक्षा न तु कालत्रयेऽपि विद्यमानत्वरूपात्यन्तसत्वस्य । गगनादीनां सत्वं तु कालत्रयेऽपि सत्वेनात्यन्तिकम् । अतो न तत्र कदाचिदसत्वापेक्षेति चेत् तर्हि कदाचित् कुत्रचिदसत एव सत्वसापेक्षत्वेऽपि यदात्यन्तिकमसत्वं त्रैकालिकनिषेधप्रतियोगित्वरूपं तत् कदाचित् कुत्रचित् प्रतियोगिसत्वसापेक्षं न भवतीत्याह ॥ आत्यन्तिकमिति ॥ अन्यथेति ॥ कदाचित् क्वचित् सत एवात्यन्ताभावप्रतियोगित्वं दृष्टमिति दर्शनमाश्रित्यात्यन्तासतश्च तथात्वाभावात् नात्यन्ताभावप्रतियोगित्वमिति यद्युच्यते तर्हि वयमपि वदामः योऽभावः सः स्वाधिकरणे प्रतियोगिसत्वसापेक्ष इति ध्वंसे दर्शनात् अत्यन्ताभावोऽपि स्वाधिकरणे प्रतियोगिसत्वसापेक्षः स्यात् । न चेष्टापत्तिः घटात्यन्ताभाववति तन्तौ कदाचिदपि घटसत्त्वाभावात् । तथाऽत्यन्ताभावोऽपि स्वयं यस्मिन् कालेऽस्ति तस्मिन्नेव काले अन्यत्र प्रतियोगिसत्वसापेक्षः दृष्टः, यथा तन्तौ घटात्यान्ताभावकाले मृत्पिण्डे घटसत्वदर्शनं, भूतलप्रदेशेऽपि विद्यमानघटस्यैव देशान्तरेऽत्यन्ताभावस्य तार्किकैरुच्यमानत्वात् । अतः तद्वत् ध्वंसोऽपि स्वकाले प्रतियोगिसत्वसापेक्षः स्यादित्यतिप्रसङ्ग इत्यर्थः । तथा च त्वया ध्वंसस्य स्वाधिकरणे प्रतियोगिसत्वसापेक्षत्वेऽपि अत्यन्ताभावस्य तन्नास्ति । अत्यन्ताभावस्य स्वकालेऽन्यत्र प्रतियोगिसत्वसापेक्षत्वेऽपि ध्वंसस्य तन्नास्ति । एकस्य हि स्वभावोऽन्यस्य नास्तीति नियम इत्युतरं वाच्यम् । तत् प्रकृतेऽपि तुल्यम् । कदाचित् कुत्रचित् सत एव घटादेरत्यन्ताभावप्रतियोगित्वेऽपि नासतस्तत् । तस्य तु कदाऽप्यसत एवात्यन्ताभावप्रतियोगित्वमिति भावः । ननु प्रतियोगिनोऽसतोऽसत्वादेव कथं प्रतियोगित्वरूपो धर्मोस्तीति चेत् तत्राह प्रतियोगिन इति ॥ सत्वं च युक्तमित्यनेन सम्बन्धः । वर्तमानत्ववदिति ॥ ध्वंसदशायां घटे ध्वंसप्रतियोगित्वमस्तीत्यादिव्यवहारादिवदित्यर्थः । तथाव्यवहारापलापे त्वाह । शशेति ॥ असद्विषयकपरोक्षज्ञानव्यवहारयोः त्वयाऽङ्गीकृतत्वेन परोक्षज्ञानादिविषयस्य शशशृङ्गादेरसत्वेऽपि तत्र विषयत्वस्य सत्वाङ्गीकारादिति भावः । असदिति ॥ रूप्यादावसद्वैलक्षण्यमुच्यते । तत्रासद्वैलक्षण्यप्रतियोगिनोऽसतोऽसत्वेऽपि असद्वैलक्षण्यं प्रति प्रतियोगित्वस्य सत्वाङ्गीकारादित्यर्थः । ननु बाधगोचरस्य त्रैकालिकनिषेधप्रतियोगिनः सत्वात् तत्र प्रतियोगित्वं सदेवेति शंकापरिहारायोक्तं प्रतियोगिनः सद्विलक्षणत्वेऽपीति ॥ त्वया निषेधप्रतियोगिनोऽनिर्वचनीयत्वाङ्गीकारात् सद्विलक्षणेऽपि निषेधप्रतियोगिनि प्रतियोगित्वस्य सत्त्ववदित्यर्थः । इहापीति ॥ अत्यन्ताभावप्रतियोगित्वमपि न धर्मिसत्तासापेक्षमिति असतोऽपि तद्युक्तमित्यर्थः । तत्प्रतियोगिकत्वमेवेति ॥ ध्वंसादौ घटप्रतियोगिकत्वमेव वर्तमानं न तु ध्वंसप्रतियोगिनि घटे तत्प्रतियोगित्वं वर्तमानं,

तथाऽसद्वैलक्षण्येऽसद्प्रतियोगिकत्वमेव सत्, न त्वसति तत्प्रतियोगित्वं सत्, असद्विषकज्ञाने चासदि-षयकत्वमेव सत् न तु ज्ञानविषये विषयत्वं सदिति विवेकेनान्वयो द्रष्टव्यः । तत्प्रतियोगिकत्वमिति ।। असत्प्रतियोगिकत्वमेव सत् न त्वसति तत्प्रतियोगित्वमित्यस्त्वित्यर्थः । एवं परोक्तरीत्यैवोत्तरं वाच्यमिति 'अभाव एव तत्प्रतियोगिकत्वं सत् नासति तत्प्रतियोगित्वम्' इत्यभिहितम् । वस्तुतस्तु प्रतियोगित्वस्य धर्मिसत्तासापेक्षत्वाभावादसतोऽपि प्रतियोगित्वं युक्तमित्येव सिद्धान्तः । तथा हि प्रतियोगित्वं नाम स्वाभावविरहस्वरूपत्वम् । यथोक्तं पदार्थविद्भिः स्वाभावविरहः प्रतियोगीति । न ह्यसतः स्वाभावविरह-स्वरूपत्वं युक्तम् । असतो निःस्वरूपत्वात् । अतो न प्रतियोगित्वमिति चेत् न । प्रतियोगिनः स्वाभावविरहलक्षणत्वाभावात् । तथात्वे सादृश्यपृथक्त्वयोरपि सप्रतियोगिकत्वेन सादृश्यपृथक्त्व-प्रतियोगिनि स्वाभावविरहात्मकत्वाभावादव्याप्तिःस्यात् । न च तत्रापि स्वाभावविरहात्मकत्वमस्तीति वाच्यम् ।यत्प्रतियोगित्वं तद्विरहात्मकत्वस्यैव वाच्यत्वादित्याशयेनाह ।। न चेति ।। तर्हि किं प्रतियोगित्वमिति पृच्छति ।। किंत्विति ।। उत्तरमाह ।।तद्ज्ञानेति ।। अत्राभावज्ञानहेतु-भूतज्ञानविषयत्वमित्यर्थः । अभावज्ञानेऽधिकरणज्ञानस्यपि कारणत्वादातिव्याप्तिरित्यतउक्तम् ।। ज्ञान-विशेषेति ।। अधिकरणज्ञानभिन्नमित्यर्थः । तथा च अधिकरणज्ञानभिन्नाभावज्ञानहेतुभूतज्ञानविषयत्वं प्रतियोगित्वमित्युक्तं भवति ।। तच्चेति ।। असतोऽपि ज्ञानविषयत्वं तूपपादितं प्रागिति भावः। यद्यभावविरहत्वं प्रतियोगित्वमिति लक्षणं विवक्षितं, असतः तदभावात् न प्रतियोगित्वमित्यंगीकारः तदा बाधकमाह ।। अन्यथेति ।। अभावं प्रत्यवधित्वम् । यत्सत्तादशायामभावो नास्ति तदेव प्रतियोगित्वम् । प्रागभावध्वंसप्रतियोगिनोरेतादृशप्रतियोगित्वसद्भावादित्यर्थः ।। निरवधिकेति ।। 'यत्सत्तादशायामभावो नास्ति' इति वक्तुं न शक्यते । अत्यन्ताभावस्य सदातनत्वात् । अतः तत्प्रतियोगिनि निरुक्तलक्षणा-भावात् निष्प्रतियोगिक एव सः स्यादित्यर्थः । अतः परमसत्प्रतियोगिकात्यन्ताभावज्ञानमेव न संभवतीत्यत्र प्रकारान्तराण्याशङ्क्य निराकर्तुमुत्तरो ग्रन्थसन्दर्भः ।। स्मृतीति ।। अभावज्ञाने प्रतियोगिस्मरणस्य कारणत्वात् स्मरणस्य चानुभवजन्यत्वात् असतश्चाननुभूतत्वेन संस्काराभावेन स्मृत्यभावात्, स्मृतिरूपकारणाभावेन नासत्प्रतियोगिकाभावज्ञानमित्यर्थः । एतेनेत्युक्तं विशदयति ।। शब्देति ।। शशशृङ्गाभावनिश्चयेनायोग्यतानिश्चयसद्भावात् शब्दाभासात् ज्ञानमेव न जायत इति तु प्रत्युक्तम् । येन पुंसा शशशृङ्गाभावो न निश्चित तस्य शशशृङ्गमस्तीति वाक्यादपि ज्ञानोत्पत्ते-रनुभवसिद्धत्वादित्युक्तत्वादिति भावः । ननु तथाऽपि नासत्प्रतियोगिकात्यन्ताभाव एवाङ्गीकर्तुमुचितः। तद्ज्ञानं तु दूरतोऽपास्तम् । तथात्वेऽत्यन्ताभावस्याप्रामाणिकत्वापत्तेः, तन्निरूपकस्य प्रतियोगिनोऽ-प्रामाणिकत्वादिति चेन्न । तथात्वे इदं रूप्यमिति भ्रमविषयस्य रूप्यस्याप्रामाणिकत्वात् तद्विषयक-ज्ञानस्वरूपस्याप्यप्रामाणिकत्वापत्तेः । 'एतावन्तं कालं भ्रम आसीत्' इत्यनुभवेन तस्य प्रामाणिकत्वा-वगमश्चेत् प्रकृतेऽपि तथोपपत्तेरित्याह ।। भ्रमेति ।। ननु दृष्टान्तोऽसंप्रतिपन्नः भ्रमविषयस्यापि प्रामाणिकत्वात्, प्रामाणिकत्वं हि प्रमाणस्पृष्टत्वम् इति चेत् तथासति असतोऽपि 'असन्नास्तीति

ज्ञानवानहं' इति प्रमाणस्पृष्टत्वेन प्रामाणिकत्वापत्तिः । अतः प्रमाणस्पृष्टत्वमेव न वाच्यं, किं तु सत्त्वेन प्रमाणस्पृष्टत्वं प्रमाणिकत्वं वाच्यम् । इदं च न भ्रमविषये रूप्येऽस्ति । अनुव्यवसायस्य व्यवसायावगाहित्वेन व्यवसायविषयीभूतरूप्यांशे उदासीनतया तत्सत्वानवगाहित्वेन सत्त्वेन प्रमाणास्पृष्टत्वस्य भ्रमविषये सद्भावात् युक्तं भ्रमविषयवच्चेति दृष्टान्तकथनमित्याह ॥ नहीति ॥ नन्वथाऽपि असत्प्रतियोगिकाभावग्रहो न सम्भवति । अभावग्राहिकाया योग्यानुपलब्धेरत्रयोगादित्याशङ्कते ॥ नन्विति ॥ अयमत्र खण्डार्थः असदभावग्रहो न युक्तः तद्ग्राहिकायाः योग्यानुपलब्धेरभावात् । योग्यानुपलब्धिर्नाम न योग्यस्यानुपलब्धिः । तथात्वे जलपरमाणौ पृथित्वाभावप्रत्यक्षः स्यात् । पृथिवीत्वस्य घटादौ योग्यत्वात् । अतो योग्या चासावनुपलब्धिश्चेति योग्यत्वमनुपलब्धेर्विशेषणमिति वक्तव्यम् । अनुपलब्धेर्योग्यत्वं नाम यावत्प्रतियोग्युपलम्भकचक्षुरादिसामग्रीसमवधाने याऽनुपलब्धिः । नन्वेवं यावत्प्रतियोग्युपलम्भसामग्रीमध्ये प्रतियोगिसत्वस्यापि प्रविष्टत्वात्प्रतियोगिसत्त्वघटितयावत् प्रतियोग्युपलम्भसामग्रीसत्वे प्रतियोग्युपलब्धेरेव प्राप्त्या 'याऽनुपलब्धिः' इत्युक्तानुपलब्धेरभावात् । अतः प्रतियोगीतरेति सामग्री विशेषणीया । नन्वथाऽपि प्रतियोगीतरा या प्रतियोग्युपलम्भकसामग्री प्रतियोगिव्याप्यप्रतियोगीन्द्रियसन्निकर्षरूपा । तस्यां सत्यां प्रतियोगिसत्वस्यैव प्राप्त्या प्रतियोग्युपलब्धेः प्राप्तेः तदनुपलब्धेरसम्भवात् प्रतियोगिव्याप्येतरेत्यपि विशेषणीया । प्रतियोगिव्याप्यो यः सन्निकर्ष तदितरेत्यर्थः । एवं च न जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षः । पृथिवीत्वतद्व्याप्यसन्निकर्षेतरयावत्तदुपलंभसामग्री नास्ति । जातेः प्रत्यक्षयोग्यतायां व्यक्तियोग्यत्वस्य तन्त्रत्वात्, तस्यापि सामग्रीत्वात् । पृथिवीत्वजातिं प्रति जलपरमाणोरयोग्यत्वात् । एवं चाभावग्राहकनिरुक्तयोग्यानुपलब्धेरभावात् न जलपरमाणौ पृथिवीत्वाभावः प्रत्यक्षः । एवं च प्रकृते नासदभावः प्रत्यक्षः । प्रतियोगिव्याप्येतरयावत्तदुपलम्भसामग्रीसमवधाने याऽनुपलब्धिः तद्रूपाया योग्यानुपलब्धेरभावात् । तथाहि या असद्व्याप्येतरयावदसदुपलब्धिसामग्री सा न प्रमाणरूपा संभवति बाधात् । अतो दोषघटितैव सा वाच्या । तथा च यदसद्व्याप्येतरयावदसदुपलम्भकसामग्री दोषघटिताऽस्ति चेत्तर्हि असदुपलम्भ एव स्यात् । दोषघटितसामग्र्या बलवत्वात् । अतो याऽनुपलब्धिरित्युक्ता योग्यानुपलब्धिर्न सम्भवति । तथा च नाभावग्रहः । यदि च सामग्र्यां दोषमप्रवेश्यऽसदनुपलम्भोऽङ्गीक्रियते तर्हि प्रतियोगिव्याप्येतरयावत्तदुपलम्भसामग्र्येव नास्ति दोषस्याभावात् । अतः सामग्र्या एव शून्यत्वेन तत्समवधाने यानुपलब्धिरित्युक्ता यौग्यानुपलब्धेरभावेन नासदभावग्रहो युक्त इति । इदमनुपपन्नम् । तथा हि, नेयमाचार्यीया योग्यानुपलब्धिर्युक्ता । तथात्वे संयोगध्वंसस्याप्रत्यक्षत्वापत्तेः । तत्र ध्वंसरूपाभावग्राहकयोग्यानुपलब्धेरभावात् । संयोगध्वंसप्रतियोगिभूतसंयोगसंयोगव्याप्येंद्रियसन्निकर्षेतरयावत्संयोगोपलम्भकसामग्रीमध्ये संयोगिप्रत्यक्षस्यापि प्रविष्टत्वात् । संयोगिनोः प्रत्यक्षेत्वे संयोगप्रत्यक्षावश्यंभावात् संयोगिप्रत्यक्षघटितसंयोगोपलम्भक सामग्रीसमवधाने संयोगानुपलब्धेरसंभवेन योग्यानुपलब्धेरभावात् संयोगध्वंसस्याप्रत्यक्षत्वापत्तिः । अतो या ह्यनुपलब्धि यत्र यत्सत्वविरोधिनी सैव योग्यानुपलब्धिः । प्रतियोगिसत्वप्रसंजितोपलब्धिप्रतियोगिकानुपलब्धिरेव योग्यानुप-

लब्धिरिति यावत् । प्रतियोगिसत्वं च तर्कितं यत्प्रतियागिसत्वं, 'भूतले घटोऽस्ति चेत्' इत्येवंरूपं तत्प्रसंजिता या उपलब्धिः 'उभलभ्येत' इत्येवंरूपा, तत्प्रतियोगिकानुपलब्धिर्हि योग्यानुपलब्धिः । एवं च जलपरमाणौ पृथिवीत्वाभावे सत्यपि स न प्रत्यक्षः । 'यदि जलपरमाणौ पृथिवीत्वं तर्हि उपलभ्येत योग्यव्यक्तिवृत्तिजातेर्योग्यत्वादित्येवं रूपेणोपलब्धिः आपादनीया । सा च न संभवतीति ज्ञेयम् । एतादृशी चाभावग्राहकानुपलब्धिरसत्यपि शशशृङ्गादवस्त्येव, 'शशशृङ्गमस्तीति चेत् तर्हि शृङ्गस्य महत्वसमानाधिकरणोद्भूतरूपवत्वेन योग्यत्वादुलब्धिः स्यात्, नोपलभ्यते तस्मान्नास्ति' इत्येवं योग्यानुपलब्ध्याऽसदभावग्रहो युक्त एवेति । अक्षरार्थस्तु वक्ष्यमाणकुसुमाञ्जलिश्लोकव्याख्यानं 'असति च' इत्यादि । सा वाच्या, योग्यता वाच्या । दुष्टेति ॥ दुष्टा, दोषसहिता या उपलम्भकसामग्रीत्यर्थः । तस्यां दोषयुक्तोपलम्भसामग्र्यां सत्याम् । नेति ॥ दोषघटितसामग्र्या बलवत्वादिति भावः । नास्तीति ॥

सामग्र्यां दोषमप्रवेश्यानुपलम्भे प्रोच्यमाने सति सा योग्यतैव नास्ति । दोषस्य न्यूनत्वेन यावत्तदुलम्भकसामग्र्या अभावादित्यर्थः । तथा च योग्यतायां सत्यां नानुपलब्धिः । अनुपलब्धौ च न योग्यतेति भावः । नेति ॥ आचार्यीययोग्यानुपलब्धेः संयोगध्वंसस्याप्रत्यक्षत्वापत्त्याऽयुक्तत्वादिति भावः । या हीति ॥ तार्कितप्रतियोगिसत्वप्रसंजितोपलब्धिप्रतियोगिकानुपलब्धिर्हि योग्यानुपलब्धिरित्यत्र तात्पर्यम् । उद्भूतरूपशृङ्गेति ॥ महत्वसमानाधिकरणोद्भूतरूपवत् शृङ्गमित्यर्थः । नन्वथापि असदत्यन्ताभावग्रहो न प्रत्यक्षेण युक्तः । अभावप्रत्यक्षत्वे प्रतियोगिप्रत्यक्षत्वस्य तन्त्रत्वात् । प्रतियोगिनोऽसतश्चा-प्रत्यक्षत्वादित्याशङ्क्याह ॥ न हीति ॥ किमन्योन्याभावप्रत्यक्षत्वे प्रतियोगिप्रत्यक्षत्वं तन्त्रम्? उतात्यन्ताभावप्रत्यक्षत्वे? नाद्यः, व्यतिरेकव्यभिचारादित्याह ॥ स्तम्भेति ॥ न द्वितीयः, अन्वयव्यभिचारादित्याह ॥ जलपरमाणाविति ॥ अन्यथेति ॥ प्रतियोगिप्रत्यक्षत्वस्याभावप्रत्यक्षत्वं प्रति तन्त्रत्वमङ्गीकृत्यासतः प्रत्यक्षाविषयत्वात् न तदभावः प्रत्यक्ष इत्यङ्गीकारे शशशृङ्गं नास्तीत्यबाधि-तप्रत्यक्षधीः कथं स्यात् । अतो घटात्यन्ताभावस्थले तथा नियमेऽपि, अत्र प्रतीतिबलादेवासतः प्रत्यक्षयोग्यत्वाभावेऽपि तदत्यन्ताभावस्य प्रत्यक्षत्वं कल्पनीयमिति भावः । नन्वत्र यदि शशीयत्वावच्छिन्नं शृङ्गं निषेध्यं भवति तर्हि शशशृङ्गं नास्तीति कथं प्रतीतिरिति चेत् न । शशशृङ्गं नास्तीति शशरूपेऽधिकरणे शृङ्गमात्रस्यैव निषेध्यत्वात्, तस्य च प्रसिद्धत्वादित्येवं मणिकृदुक्तां प्रतीतेरन्यथासिद्धिमाशङ्क्य निराकरोति । न चेति ॥ शशेति ॥ शशशृङ्गशब्दस्य 'शशे शृङ्गम्' इत्यर्थकत्वे 'शशशृङ्गोल्लिखिता भूः' इत्यादावपि विशकलितपदार्थानां प्रसिद्धत्वादप्रसिद्धविशेषणत्वं न स्यादित्यर्थः । गवीति ॥ अस्त्वेवं यत्र शशशृङ्गं नास्तीति प्रतीतिः ।यत्र गवि शशशृङ्गं नास्तीति प्रतीतिः तत्र कथम्? शशीयत्वावच्छिन्नशङ्गस्य निषेधप्रतीतेः । अन्यथा गोपदार्थानन्वयप्रसङ्गादित्यर्थः । एतेन गवाधिकरणकशृङ्गे शशीयत्वं नास्तीत्यर्थः । तेन न गोपदार्थानन्वय इति निरस्तम् । गोरेवात्राधिकरणत्वप्रतीतेः । अन्यथा सप्तम्युपमर्दापत्तेरिति द्रष्टव्यम् । अस्तु वा शशे शृङ्गं नास्तीत्येव प्रतीतिः । तथाऽपि असत एव निषेध्यत्वम् । 'भूतले घटो नास्तीत्यत्र घटो न निषिध्यते, किं तु

तत्संसर्ग एव स चासन्नेव' इति कैश्चिदङ्गीकारात् । इह बिले शशशृङ्गं नास्तीत्यत्र शृङ्गं न निषिध्यते, किन्तु तत्संसर्ग एव स चासन्नेवेति असत एव निषेध्यत्वमिति युक्तमित्याह ॥ शशशृङ्गमिति ॥ ननु अत्र घटमात्रं निषिध्यते न संसर्ग इति नासत्प्रतियोगित्वमित्यत आह ॥ अन्यथेति ॥ सत्त्वेति ॥ निषेधाप्रतियोगित्वस्य सत्वादिति भावः । इतिवदिति ॥ गवीयत्वावच्छिन्नशृङ्गस्य यथा निषेध्यत्वं तद्वदित्यर्थः । विशिष्टस्य शशीयत्वावच्छिन्नशृङ्गस्य निषेधप्रतियोगित्वप्रतीतेरित्यर्थः । ननु न विशिष्टस्य शशशृङ्गस्याभावग्रहो युक्तः । तत्कारणस्य प्रतियोगिस्मृतियोग्यानुपलब्ध्यादेरभावादित्यत उक्तम् । उक्तरीत्येति ॥ 'शब्दाभासादिनाऽनुभूतस्य स्मृतिसंभवात्' इत्युक्तरीत्येत्यर्थः । अन्यथेति ॥ शशे शृङ्गं नास्तीत्यर्थे इत्यर्थः । ननु शशे शृङ्गं नास्तीत्येवार्थो वाच्यः । नतु शशीयत्वरूपव्यधिकरण-धर्मावच्छिन्नशृङ्गाभावः । तथात्वे व्यधिकरणधर्मावच्छिन्नाभावग्रहस्यैवासम्भवात् । तथा हि– न तावत् प्रतियोगिज्ञानमात्रमभावज्ञाने कारणम् । प्रतियोगिनिर्विकल्पकादप्यभावधीप्रसङ्गात् । किं तु प्रतियोगि-तावच्छेदकप्रकारक प्रतियोगिज्ञानम् । न च शशीयत्वरूपप्रतियोगितावच्छेदकप्रकारकशृङ्गरूपप्रति-योगिज्ञान- मस्त्येवेति वाच्यम् । प्रतियोगिनि विद्यमानप्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्यै-वाभावधीहेतुत्वात् । अत्र च शशीयत्वरूपप्रतियोगितावच्चेदकस्य शृङ्गरूपे प्रतियोगिन्यसत्त्वात् एतादृश्या अभावज्ञानसामग्र्या अभावात् न व्यधिकरणधर्मावच्छिन्नाभावग्रहो युक्तः । अतो शशशृङ्गं नास्तीत्येवार्थो वाच्यः । तथा च नासतो निषेधप्रतियोगित्वमिति चेन्न । प्रतियोगितावच्छेदकप्रकारकप्रतियोगि-धीरेवाभावधीहेतुः, न तु प्रतियोगितावच्छेदके 'प्रतियोगिनि विद्यमान' इति विशेषणं, गौरवात् । तथा च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानं शशीयशृंगमिति शब्दाभासात् भविष्यत्येव ननु कुत्रापि जगति शशीयत्वावच्छिन्नशृङ्गस्याप्रसिद्धत्वेन शशीयत्वावच्छिन्ने शृङ्गपदस्य शक्तिग्रहभावात् कथं शब्दाभासात् शशीयत्वावच्छिन्नशृङ्गज्ञानमिति चेन्न । शशीयत्वशृङ्गयोः जगति प्रसिद्धत्वेन तयोः शब्दयोः तत्र शक्तिग्रहसद्भावात् 'शशीयं शृङ्गम्' इति वाक्याभासादपूर्वार्थोपस्थितिरेव भवति । यौगिकपदशक्ति-ग्रहस्थलेऽयमेव हि न्यायः । एवं च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानस्य भ्रमरूपस्य सम्भवात् व्यधिकरणधर्मावच्छिन्नस्य शशीयत्वावच्छिन्नशृङ्गस्य विशिष्टस्यात्यन्तासतोऽभावज्ञानं सम्भवत्येवेत्याह ॥ एतेनेत्यादिना ॥ किं त्विति ॥ प्रतियोगितावच्छेदके प्रतियोगिनिविद्यमानत्वविशेषणं देयम् । अन्यथोक्तरत्र समग्र्यभावोपपादनमयुक्तं स्यादिति ध्येयम् । सामग्र्यभावादिति ॥ प्रतियोगिनि विद्यमानप्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानरूपाया अभावधीसामग्र्या अभावरूपात् बाधकादित्यर्थः। व्यधिकरणेति ॥ शशीयत्वावच्छिन्नशृङ्गस्य विशिष्टस्याभावधीरित्यर्थः । एतेनेत्युक्तं विशदयति ॥ शब्दाभासेति ॥ अत्र प्रतियोगिनि विद्यमान इति विशेषणं गौरवेणाविवक्षितमिति वक्तव्यम् । अन्यथा प्रतियोगिनिविद्यमानत्वरूपविशेषणविशिष्टस्य शब्दाभासादिनाऽनुपस्थितेरिति ध्येयम् । अन्यथेति ॥ प्रतियोगित्वस्य धर्मिसत्तासापेक्षत्वेन शशीयत्वावच्छिन्ने शृङ्गेऽसति निषेधप्रतियोगित्वाभावात् शशे शृङ्गं नास्तीति प्रतीतिव्याख्यान इत्यर्थः । तन्तुष्विति ॥ इह तन्तुषु पटो नास्तीति पटप्रागभावध्वंसयोः प्रतीतिः

तावदस्ति । तन्तुसम्बद्धः पटो नास्तीति तदर्थः । एवं च प्रागभावादिप्रतियोगित्वं पटे प्रतीयते । तद्युक्तम् । प्रागभावादिदशायां तत्प्रतियोगिनः पटस्याभावेन त्वद्रीत्या धर्मिसत्तासापेक्षत्वेन प्रागभाव-प्रतियोगित्वस्य तत्रायोगात् । अतस्तत्रापि तन्तुषु पटो नास्तीति प्रागभावादिप्रतीतेरेवमर्थं कल्पयामः तन्तुसमवेते पटत्वं नास्तीति ॥ एवं व्याख्यानेऽपि प्रागभावादिप्रतीतिस्तावत् प्राप्तैव । तन्तुगत-गुणकर्मादिरूपधर्मस्यापि तन्तुसमवतत्वेन तन्तुसमवते सर्वत्र पटत्वं नेत्युक्त्याऽधुनाऽपि तन्तौ पटो नोत्पन्नः, ध्वस्तो वेति प्रतीतेः । तथा च नास्तीति प्रतीयमानप्रागभावादिकं प्रति पटत्वस्यापि प्रतियोगित्वेन तस्य च प्रागभावादिसमानकालीनत्वात् सर्वत्र प्रागभावादेरपि प्रतियोगिसमानकालीनत्वं स्यात् । तस्मात् त्वयैवं समाधानं वाच्यं नैवं प्रतीतिर्व्याख्येया । प्रागभावादिकालेऽसतोऽपि पटादेः तत्प्रतियोगित्वसम्भवात् । तस्य च धर्मिसत्तानिरपेक्षत्वादिति । समः सः मत्पक्षेऽपि । सप्तमेति ॥ तथा हि वैशेषिकमते 'सप्तमो भावपदार्थो नास्ति' इत्यत्र सप्तमभावस्यसिद्धत्वे निषेधायोगात् । असिद्धत्वे तु सुतरां तस्य निषेधप्रतियोगित्वं न सम्भवतीति सिद्ध्यसिद्धिभ्यां व्याघातभिया 'द्रव्यादिषण्णां यत् लक्षणं तदत्यन्ताभावे भावत्वसामानाधिकरण्यं नास्ति' इत्यर्थः कल्प्यते । भावत्वसामानाधिकरण्यस्य द्रव्यत्वादौ सिद्धत्वेन तन्निषेधसम्भवात् । एवमर्थकल्पने 'द्रव्यादिषट्लक्षणशून्यः भावो न' इति सप्तमभावनिषेधो लभ्यत एवेति । एवमर्थकल्पनमप्यनेनैव निरस्तमित्यर्थः । एतेनेत्युक्तमेव विशदयति । शुक्तिरूप्येति ॥ तादात्म्यारोपे तु तादत्म्यवत्, संसर्गारोपे च संसर्गवदित्यर्थः ॥ कुसृष्टीति ॥ उक्तरीत्याऽर्थान्तर-कल्परूपकुसृष्टीत्यर्थः । इतोऽप्यसत एव निषेधप्रतियोगित्वमित्याह ॥ किं चेति ॥ ननु संसर्गस्य निषेध्यत्वं नवीनतार्किकैर्नाङ्गीकृतम् । तैघटस्यैव निषेध्यत्वाङ्गीकारात् । घटो ह्यारोप्य निषिध्यते, तत्र संसर्गस्त्वारोप्यकोटिप्रविष्टसम्बन्धमात्रं, तत्र निषेधस्य नान्वय इत्यङ्गीकृतत्वादिति चेत् तत्राह ॥ इहेति ॥ किञ्च 'इह भूतले घटोऽस्ति' इति बुद्धिस्तावत् घटसंसर्गविषयिणी । अतो 'भूतले घटो नास्ति' इति बुद्धिरपि तदभावविषयिणीत्येव वक्तुं युक्तमित्याह ॥ भूतल इति ॥ असतः संसर्गस्यैव निषेधप्रतियोगित्वं वक्तव्यमित्याह ॥ किञ्चेति ॥ अयमिति ॥ इह भूतले घटो नास्तीत्यत्र प्रतीयमानोऽभाव इत्यत्र ॥ प्रतियोगीति ॥ प्रागभावध्वंसयोः प्रतियोग्यसमानकालीनत्वात्, अस्य चाभावस्य तस्मिन्नेव काले घटस्यान्यत्र सत्त्वेन प्रतियोगिसमानकालीनत्वात् नायमभावः प्रागभावादिरित्यर्थः । कदाचिदिति ॥ तथा च न त्रैकालिकनिषेधो युक्त इत्यर्थः । नन्वयमत्यन्ताभाव एव । न च कदाचित् तत्र घटस्य सत्त्वेन नायमत्यन्ताभाव इति वाच्यम् । एतत्कालावच्छेदेन प्रतीयमानो घटाभावो घटात्यन्ताभाव एव । कदाचित् घटस्य सत्वेऽपि घटाभावज्ञानकाले तु घटो नास्त्येव । एतत्कालावच्छिन्नो घटस्तावदिदानीं नास्त्येव । पूर्वं तु एतत्कालावन्धिन्नो घटो न भूतः । उत्तरत्रापि एतत्कालावच्छिन्नो घटो न भविष्यति । एवमेतत्कालावच्छिन्नस्य कालत्रयेऽप्यभावादिति चेन्न । तथात्वेऽत्यन्ताभावातिरिक्तप्रागभावादिविलोप एव स्यात् । इदानीं मृत्पिण्डे घटाभावदशायां घटो नास्तीति हि प्रागभावप्रतीतिः । न ह्येतत्कालीनो घटो कालत्रयेऽप्यस्तीत्ययमपि अत्यन्ताभाव एव स्यादित्याह ॥ यदि चेति ॥ तस्मात् 'इह भूतले घटो नास्ति'

इत्यत्र घटस्य न निषेध्यत्वं, किन्तु तत्संसर्गस्यैव । तर्ह्ययं संसर्गप्रतियोगिकोऽभावः प्रागभावादीनां मध्ये क इति चेत् तत्राह ॥ संयोगस्येति ॥ घटसंसर्गो निषिध्यत इति वदतो अस्मान् प्रति 'कोऽयमभाव' इति प्रष्टा प्रष्टव्यः अत्र भूतले घटसंसर्गो अतीतः, उत भावी कदाऽपि नास्तीति वा? आद्ये भूतले घटसंयोगस्यातीतत्वे इदानीं प्रतीयमानोऽभाव संसर्गध्वंस इति वदामः । तस्य भावित्वे प्रागभावः । कदाप्यभावे प्रतियोगिनोऽप्रामाणिकत्वापत्त्याऽत्यन्ताभाव इति । एवं संसर्गस्यैव निषेध्यत्वात् तस्य चासत्वात् असत एव संसर्गस्य निषेधप्रतियोगित्वसिद्धिरिति भावः । किं च घटस्यैव निषेध्यत्वे घटो नास्तीत्येव प्रतीतिः स्यात् । न तु 'इहभूतले घटो नास्ति' इति । अतो ज्ञायते संसर्गस्यैव निषेध्यत्वमिति ॥ ननु तर्हि भवत्पक्षेऽपि 'संसर्गो नास्ति' इत्येव प्रतीतिः स्यादिति चेन्न तस्य ससंबन्धिकपदार्थत्वेन सम्बन्धिनं विना कदाऽप्यप्रतीतेः न चैवं घट इत्येवं घटसंर्गस्यैव निषेध्यत्वसिद्धि-रित्याशयेनोक्तम् । सिद्धेरिति ॥ ननु ससर्गस्य निषेध्यत्वेऽपि न तस्यासत्वं, यत्र देशे घटोऽस्ति तत्र भूतलसंसर्गस्य घटे सत्त्वेन तत्रत्यः सन्नेव संसर्गः इह निषिध्यत इत्याशङ्क्य निराकरोति । न चेति ॥ तस्यापीति ॥ सतः घटसंसर्गस्यापीत्यर्थः । घटतुल्यत्वेन घटादन्यत्र सत्त्वेनेत्यर्थः । विकल्पप्रसरादिति ॥ भूतले घटो नास्तीत्यत्र प्रतीयमानः, घटे विद्यमानस्य घटतुल्यस्य घटसंसर्गस्याभावो न तावत् प्रागभावो ध्वंसो वा । अस्याभावस्य, प्रतियोगिनः संसर्गस्यान्यत्र घटे सत्त्वेन, प्रतियोगिसमानकालीनत्वात् । नाप्यन्ताभावः कदाचित्तत्र घटसंसर्गस्य सत्वादित्येवं विकल्प्य दूषणप्रसरेणासत एव संसर्गस्य निषेध्यत्वसिद्धिरिति भावः । ननु तर्हि 'इह भूतले घटो नास्तीति प्रतीयमानाभावस्यात्यन्ताभावत्वे तस्य सदातनत्वात् घटसद्भावकालेऽपि प्रतीतिः स्यादित्यत आह ॥ घटकाले त्विति ॥ घटसंसर्गकाल इत्यर्थः। ननु भूतलघटात्यन्ताभावयोः कःसम्बन्धो यदभावात् घटकालेऽत्यन्ताभावो न प्रतीयत? इत्यत आह ॥ घटात्यन्ताभावस्येति ॥ घटभूतलसंयोगध्वंस एव भूतलघटात्यन्ताभावयोः सम्बन्धः । तदभावात् न घटकालेऽत्यन्ताभावो भाति । घटसंयोगनाशे च संबन्धस्य प्राप्तत्वात् अत्यन्ताभावः प्रतीयत इत्यर्थः । ननु भूतलघटसंयोगोत्पत्तेः पूर्वं घटात्यन्ताभावोऽस्ति । तदा कः सम्बन्धः? नहि घट संसर्गध्वंसो वक्तुं शक्यः । तस्यानुत्पन्नत्वादिति चेत् न । तदानीं भूतलघटसंसर्गप्रागभावस्यैव भूतलघटात्यन्ता-भावसम्बन्धत्वात् । घटसंसर्गोत्पत्यनन्तरं संबन्धाप्राप्त्या न प्रतीयत इत्याशयेन ध्वंसादिरित्यत्रादिपदं प्रयुक्तमिति ध्येयम् । विशिष्टान्तरेति ॥ विशिष्टस्य विशेषणाद्यतिरिक्तत्वमिति पक्षे दण्डरूपविशेषण-सम्बन्धाभावदशायां विशिष्टस्य दण्डिनोऽभावो जायते, दण्डसम्बन्धे सति सोऽभावो नश्यति । तथा च विशिष्टान्तरस्येति केचित् । वयं पुनः प्रागभावादिभिन्नः उत्पत्तिविनाशशीलः संयुक्तघटाभावसंज्ञक-स्तुरीयाभाव एवेति वदामः । केवलघटाभावत्वे पूर्वोक्तविकल्पप्रसरात् संयुक्तघटाभावोऽयमित्युच्यते । तुरीयाभावाङ्गीकारे कायुक्तिरित्यत उक्तं प्रतियोगीत्यादि ॥ यथा घटपटादिप्रतियोगिभेदेन तदभावभेदः एवं घटत्वपटत्वादिरूपप्रतियोगितावच्छेदकभेदेनाप्यभावभेदादिह संयुक्तघटत्वरूपप्रतियोगितावच्छेदकभेदात् प्रागभावादित्वे च भवदुक्तबाधकसद्भावादन्य एवेत्यर्थः । अभावेति ॥ घटात्यन्ताभावभूतलयोरित्यर्थः ।

क्लृप्तः सम्बन्धः स्वरूपसंबन्धः । तन्निर्वचनायोक्तम् । संबन्धान्तरमिति ॥ तदुपश्लिष्टस्वभावत्वं सम्बन्धस्वभावत्वम् । आवश्यकेति ॥ भूतलघटात्यन्ताभावयोः सम्बन्धत्वेन भूतले घटसंयोगध्वंसस्य तवाप्यावश्यकत्वात् तद्विषयकत्वेनैवाभावप्रतीत्युपपत्तौ घटसंयोगध्वंसादिरूपसम्बन्धसंयुक्त घटात्यन्ताभावकल्पनमप्रामाणिकमित्यर्थः । अन्यथेति ॥ भूतलघटसंयोगध्वंसरूपसंबन्धसंयुक्तघटात्यन्ताभावन्तरकल्पने इत्यर्थः । घटात्यन्ताभावोऽपि केवलान्वयी स्यादिति ॥ ननु कथं केवलान्वयित्वं कपालेष्वभावादिति चेत् न। कपालेष्वपि घटात्यन्ताभावोऽस्त्येव । तर्हि घटसद्भावदशायां प्रतीतिः स्यादिति चेत् न। संबन्धाभावात् । कपालघटात्यन्ताभावयोश्च घटकपालयोराश्रयाश्रयिभावध्वंस एव सम्बन्धः । कपाले घटसद्भावकाले उक्तसंबन्धाभावात् घटात्यन्ताभावः कपाले न प्रतीयते । कपाले घटध्वंसानन्तरं चोक्तसंबन्धसद्भावात् प्रतीयते । न च तदत्यन्ताभावकल्पनमप्रामाणिकमिति वाच्यम् । तत् प्रकृतेऽपि तुल्यमिति भावः । संयोगस्येति ॥ भूतले घटो नास्तीत्यस्य संयुक्तघटाभावविषयत्वे संयोगस्यापि निषेध्यकोटिप्रविष्टत्वात् असत एव संसर्गस्य निषेध्यत्वसिद्धेरित्यर्थः । ननु संयुक्तघटोऽपि सन्नेव निषिध्यते। ननु तत्प्रयुक्तविकल्पप्रसर इति चेन्न । अत एवोत्पत्तिविनाशशीलः संयुक्तघटात्यन्ताभावो विशिष्टान्तराभावोऽतिरिक्त इत्यङ्गीकारादित्युक्तमिति चेत् तत्राह ॥ दण्डे सत्यपीति दृष्टान्ते विशेषणे सत्यपि विशेष्याभावेन दण्डिरूपविशिष्टस्याभावो दृष्टः । न चैवं प्रकृते सम्भवति । कुत इत्यत आह ॥ भूतलेति ॥ भूतलघटसंयोगदशायां घटस्यैव तत्र प्राप्त्या घटाभावाभावेन विशेष्याभावप्रयुक्तविशिष्टाभावायोगादित्यर्थः । यच्चोक्तं प्रतियोगिभेदेनेव प्रतियोगितावच्छेदकभेदेनाप्यभावभेदात् तुरीयाभावकल्पनमिति, तच्चायुक्तम् । तथात्वे एकघटप्रतियोगिकानां प्रागभावादीनां चतुष्ट्वं न स्यात् । प्रतियोगिभेदाभावात् प्रतियोगितावच्छेदकभेदाभावाच्चेत्यालोचनीयम् । एवमत्यन्तासतोऽपि निषेधप्रतियोगित्वं समर्थयित्वोपसंहरति ॥ तस्मादिति ॥ तथा च तदन्यथाऽनुपपत्त्यानिर्वाच्यत्वं कल्पनीयमित्युक्तमसदिति भावः । इति अनिर्वाच्यत्वसाधकनिषेधप्रतियोगित्वान्यथानुपपत्तिभङ्गविवरणम् ।

## ४०. श्रुत्यर्थापत्तिभङ्गविवरणम्

श्रौतेति ॥ सदसती निषिध्य तमसोऽवस्थानोक्तिः तस्य सदसद्वैलक्षण्यरूपानिर्वाच्यत्वं विना न सम्भवतीत्यर्थः । पञ्चभूतेति ॥ पृथिव्यप्तेजांसि सत्शब्दाभिधेयानि । वाय्वाकाशावसत् शब्दाभिधेयाविति ज्ञातव्यम् । प्रसिद्धेति ॥ सत् शब्दस्य सत्त्वेन प्रसिद्धघटादिप्रपञ्चपरत्वेऽसत् शब्दस्य शशशृङ्गादिपरत्वे चेत्यर्थः । अप्रसक्तेति ॥ असतः सत्वस्याप्रसक्तेः 'असत् नासीत्' इति निषेधायोगादिति भावः । तदानीमिति ॥ असतः सदाऽसत्वेन 'तदानीं नासीत्' इति विशिष्य निषेधायोगादिति भावः । सत् शब्दस्य प्रसिद्धसत्यपरत्वे दोषमाह ॥ नोसदासीदितीति ॥ सदसत् शब्दयोः पञ्चभूतेषु रूढेः सत्वात् नाप्रसिद्धार्थत्वमित्याह ॥ न सत्तदिति ॥

**'मूर्तं सदिति संप्रोक्तम् अमूर्तमसदुच्यते ।**
**मूतामूर्तेतरद् ब्रह्म न सत् तन्नासदुच्यते ॥'**

इत्यादीत्यर्थः । सदसती निषिध्य तमसोऽवस्थानोक्त्या तस्यानिर्वचनीयत्वाङ्गीकारे 'आनीदवातं स्वधया तदेकम्' इति तदानीं परिशिष्टत्वाश्रवणात् ब्रह्मण एवानिर्वचनीयत्वं स्यादिति भगवत् पादोक्तं दोषमाह ॥ अन्यथेति ॥ एतावता प्रबन्धेन इदं रूप्यमित्यादौ अनिर्वचनीयमेव रूप्यं ख्यायत इति मतं दूषितम् । अन्यत्र विद्यमानमेवान्यत्र ख्यायत इति तार्किकाभिमतान्यथाख्यातेः तत्रैव तात्कालिकमुत्पन्नं सदिति भास्कराभिमतान्यथाख्यात्यन्तरस्य, आन्तरस्य बाह्यत्वावभासरूपाया विज्ञानवाद्यभिमतान्यथाख्यातेश्च भङ्गः कस्मात् न क्रियत इत्यत आह ॥ ख्यात्यन्तरेति ॥ अन्यथाख्यात्यन्तरेत्यर्थः । अन्यत्रेति । 'विज्ञातस्यान्यथा सम्यक् विज्ञानं ह्येव तन्मतम्' इत्यनुव्याख्यानव्याख्यानसमये न्यायसुधायाम् अन्यथाख्यत्यन्तरभङ्गः सविस्तरं कृतोऽस्तीति तत्रैव द्रष्टव्यः इति भावः । इति श्रुत्यर्थापत्तिभङ्गविवरणम् ॥

## ४१. स्वाभिमतान्यथाख्यातिसमर्थनम्

रूप्यस्यासत्त्वे च प्रत्यक्षमनुमानं च मानमित्यन्वयः । सन्मात्रेति ॥ सविषयकत्वमात्रम् 'अयं घटः' इत्यादि प्रमायां व्यभिचारीत्यतः सदसद्विषयकत्वेसतीत्युक्तम् । तथात्वेऽप्रमायामपि इदमंशरूपसदर्थविषयकत्वेन विशेषणासिद्धिवारणाय मात्रपदम् । सन्मात्रविषयकत्वात् न स्वरूपासिद्धिः । निर्विषयके घटादौ व्यभिचारवारणाय विशेष्यभाग इति ज्ञातव्यम् । एवम् अप्रमाया असद्विषयकत्वे । असदिति । तथा च बौद्धतापत्तिरिति भावः । सर्वस्यापीति ॥ अधिष्ठानादेः सर्वस्यापीत्यर्थः । अन्यथेति ॥ अस्मास्वसत्ख्यात्यापादन इत्यर्थः । सदन्यप्रतीतेरिति ॥ सद्विलक्षणस्य रूप्यस्य प्रतीत्यङ्गीकारादसत्ख्यात्यापत्तिः । सद्वैलक्षण्यस्यैवासत्वरूपत्वात् । तृतीयकोटेश्च दूषितत्वात् । अतस्त्वन्मतेऽपि मन्मते इव बौद्धमतापत्तिरिति भावः । परोक्षेति ॥ तथा चासतः ख्यातिरङ्गीकृतेति बौद्धमतापत्तिरित्यन्वयः । तादात्म्यसंसर्गोभयारोपाभिप्रायानुसारेणाह ॥ शुक्तिरूप्येत्यादि ॥ तार्किकः शङ्कते ॥ नन्विति ॥ अधिष्ठानमारोप्य चेत्युभयम् । इह रूप्यम् इत्यत्रेदं पदार्थः । रूप्यं तादात्म्यं चेति त्रितयातिरिक्तं न प्रतीयते । तत् त्रयं चान्यत्र सदेवेति भावः । तस्य भ्रमप्रतीतपदार्थस्य ॥ रूप्येति ॥ इदं रूप्यमित्यत्रेदमंशानुयोगित्वेन रूप्यप्रतियोगित्वेन च तादात्म्याभाने एकज्ञानत्वायोगेन इदं रूप्यं चेति ज्ञानद्वयापत्तिः । न चेष्टापत्तिः । तथात्वे इदं जानामि रूप्यं च जानामीति अनुव्यवसायापातेन इदं रूप्यत्वेन जानामीति ज्ञानैकत्वावगाह्यनुव्यवसायायोग इत्यर्थः । पुरोवर्तीति ॥ इदमंशानुयोगिकरूप्यप्रतियोगिकतादात्म्याभाने इदं रूप्यमिति ज्ञानात् प्रवृत्तिरेव न स्यात् । पुरोवर्तिनि इदं पदार्थे दृष्टं यत् रजतं तदभेदग्रहस्यैव प्रवर्तकत्वेन तदभावात् । न च भेदाग्रहस्यैव प्रवर्तकत्वमिति वाच्यम् । नञ्द्वयगर्भत्वेन गौरवात् अभेदग्रहस्यैव प्रवर्तकत्वमिति तादात्म्यमत्यन्तासदेव च प्रतीयत इति भावः ।

ननूक्तानुमाने द्वितीयहेतोर्विशेषणासिद्धिः । भ्रमे प्रतीयमानं सर्वं सदेवेति मयाऽङ्गीकारात् । अतः सन्मात्रविषयकत्वमेवेति चेत् तत्राह । सन्मात्रेति ॥ असदर्थविषयकत्वस्यैवाप्रामाण्यप्रयोजकत्वात् तस्य चानङ्गीकारादिति भावः । तथात्वेऽपीति ॥ सन्मात्रविषयकत्वेऽपि । तदभाववतीति ॥ विशेष्यताव्यधिकरणप्रकारकत्वं ह्यप्रामाण्यम् । विशेष्यताव्यधिकरणभूतो रजतत्वादिः प्रकारश्चान्यत्र सन्नेवात्र दोषवशात् भासते । परं तु पुरोवृत्तिनि नास्ति । तावतैवाप्रामाण्यं, न तावता तस्यासत्वमिति भावः । तदिति ॥ विषयशब्दः प्रतियोगिकत्वार्थः । अन्यथाऽनुयोगितया विशिष्टाविषयत्वं तत्प्रकारकत्वमित्यर्थः । तत्प्रकारकत्वं ज्ञाने च तद्वैशिष्टचविषयकत्वम् । तथा चास्तु तस्य रजतत्वस्यान्यत्र सत्वम् । तत्तावदत्र प्रकारतया भासत इत्यङ्गीकृतम् । तत्र प्रकारत्वं नाम भासमानवैशिष्टचप्रतियोगित्वम् । एवं चेदं पदार्थे यद् रूप्यवैशिष्टचं समवायरूपं तद्भासत इत्यङ्गीकार्यम् । अन्यथा रजतत्वस्य निरुक्तप्रकारत्वायोगात् । अतोऽसतो वैशिष्टचस्य तन्मतेऽपि भानसिद्धेर्न सन्मात्रविषयकत्वमिति न विशेषणासिद्धिरिति भावः । ननु ज्ञानस्य तत्प्रकारकत्वं नाम न भासमानवैशिष्टचप्रतियोगित्वं, किं नाम? विशेषणज्ञानजन्यत्वमेव ॥ अतो नासतो वैशिष्टचस्य भानसिद्धिरिति चेत् तत्राह न चेति ॥ तदविशेषणज्ञानजन्यत्वतद्वैशिष्टचविषयकत्वमेव निर्विकल्पकव्यावृत्तं वाच्यम् । तथा च तद्वैशिष्टचनिषयकत्वावच्छेदेनैव विशेषणज्ञानस्य जनकत्वेन विशेषणज्ञानजन्यतायाः तद्वैशिष्टचविषयकज्ञानत्वव्याप्तत्वात् विशेषणज्ञानजन्यत्वाङ्गीकारे वैशिष्टचविषयकत्वं प्राप्तमेवेति असतो वैशिष्टचस्य प्रतीतिसिद्धिरित्यर्थः । अनुव्यवसायेति ॥ रूप्यत्वसंसर्गरूपवैशिष्टचाभाने इदं रूप्यं चेति ज्ञानाकारापत्त्या इदं जानामि रूप्यं च जानामीत्यनुव्यवसायाकारापत्तेः इदं रूप्यत्वेन जानामीति ऐक्यावगाह्यनुव्यवसायविरोधस्योक्तत्वादित्यर्थः । तेन व्यवसाये वैशिष्टचविषयकत्वावगाहनादिति भावः । अङ्गीकृत्येदमुदितम् । वस्तुतस्तु तद्विशेषणज्ञानजन्यत्वं तत्प्रकारकत्वं न भवति ईश्वरज्ञानस्य नित्यत्वेन विशेषणज्ञानजन्यत्वाभावात् निष्प्रकारकत्वापत्तेः । ततश्च निर्विकल्पकत्वं स्यात् । तस्मात् वैशिष्टचविषयकत्वमेव तत्प्रकारकत्वं वाच्यम् । तथाचासतोऽपि वैशिष्टचस्य भानप्राप्त्या सन्मात्राविषयकत्वेन विशेषणासिद्ध्यभावात् अप्रमाया असद्विषयकत्वसिद्धिः । तथा च रूप्यस्यात्यन्तासत्वेन नाज्ञानोपादानकत्वं वा तत्त्वज्ञाननाश्यत्वं वेति भावेनाह ॥ ईश्वरेति ॥ निष्प्रकारकत्वेनेति ॥ निष्प्रकारकत्वापत्तेरित्यर्थः । नित्यत्वेन विशेषणज्ञानजन्यत्वाभावादिति भावः । इति स्वाभिमतान्यथाख्यातिसमर्थनम् ।

## ४२. आविद्यकरजतोत्पत्तिभङ्गः

अध्यस्तं रूप्यम् । अस्तु तथा धीरिति चेत् तत्राह ॥ त्रैकालिकेति ॥ तथात्वे रूप्यस्योत्पन्नत्वेनैकस्मिन् काले सत्त्वेन त्रैकालिकनिषेधो न युक्त इत्यर्थः । ध्वंसप्रतियोगित्वेनात्यन्ताभावायोगाच्चेत्यर्थः। ननु रूप्यस्यार्थक्रियाकारित्वरूपं यत् लौकिकपारमार्थिकत्वं व्यावहारिकत्वमिति यावत्, तेनाकारेण

निषेधाङ्गीकारात् तस्य चाकारस्य प्रातिभासिके रूप्ये कालत्रयेऽप्यभावेन तेनाकारेण त्रैकालिकनिषेधो युक्त इत्याशङ्क्य निषेधति ॥ न चेति ॥ तथेति ॥ कालत्रयसम्बन्धित्वेनेत्यर्थः । स्वरूपेणैवेति ॥ न पारमार्थिकत्वेनेत्यर्थः । किं चास्तु व्यावहारिकत्वाकारेण निषेधः । तथापि न त्रैकालिकनिषेधसिद्धिः । रूप्यवत् तद्व्यावहारिकत्वस्यापि तदा प्रतीतत्वात् । अन्यथा प्रवृत्त्ययोगात् । तस्य च प्रतीतिकाले सत्वेन न त्रैकालिकनिषेधो युक्त इत्याह ॥ पारमार्थिकत्वस्यापीति ॥ अर्थक्रियाकारित्वरूपलौकिक-पारमार्थिकत्वस्यापीत्यर्थः । व्यावहारिकत्वस्येति यावत् । नन्वाभासस्य प्रसक्त्याऽनाभासस्य निषेध इत्यङ्गीकारेणाभासस्य प्रातिभासिकस्य रूप्यस्य प्रसक्तौ सत्याम् अनाभासस्यापणस्थरूप्यस्य निषेध इत्यङ्गीकारात् तस्य पुरोवृत्तिनि कदाऽप्यभावेन त्रैकालिकनिषेधो युक्त इत्याशङ्क्य निषेधति ॥ नापीति ॥ नेह नानेति ॥ यथाऽभासस्य प्रसक्त्या तदपेक्षयाऽधिकसत्ताकस्यापणस्थरूप्यस्य निषेध इत्यङ्गीक्रियत एवं नेह नानेति निषेधायाभासभूतप्रपञ्चापेक्षयाऽधिकसत्ताकं तात्त्विकं प्रपञ्चान्तरम् अङ्गीकार्यं स्यादित्यर्थः । तस्येति ॥ आपणस्थरूप्यस्य निषेधाय प्रसक्त्यर्थं भ्रमविषयत्वस्याप्यङ्गीकारे अन्यत्र विद्यमान एवान्यत्रारोप्यत इति तार्किकाभिमतान्यथाख्यात्यापत्त्या सदसद्विलक्षणमनिर्वचनीयमेव रूप्यं ख्यायत इति त्वत्पक्ष क्षतिरित्याह ॥ अन्यथेति ॥ न चाप्रसक्तस्यैवापणस्थरूप्यस्य निषेधोऽस्तु । तथात्वे नातिप्रसङ्ग इति चेत् तत्राह ॥ अभासस्येति ॥ पारमार्थिकस्य आपणस्थरूप्यस्य । यत् प्रतीतं रूप्यं तदेव नास्तीत्यनुभवेन प्रतीतिनिषेधयोः समानविषयकत्वप्रतीत्या भिन्नविषयकत्वाङ्गीकारे तद्विरोधः स्यादित्यर्थः। प्रतिपन्नेति ॥ शुक्तौ प्रतीतस्य रूप्यस्यानिषिद्धत्वात् तस्य प्रतिपन्नोपाधौ निषेधप्रतियोगित्व-रूपमिथ्यात्वासिद्धिरित्यर्थः । निवृत्तिज्ञान इवेति ॥ वास्तवरूप्यस्थले उत्पन्नं रूप्यं नष्टमिति निवृत्ति ज्ञाने उत्पन्नत्वेन धीस्थस्यैव रूप्यस्य ध्वंसो ज्ञायते, न तु यस्य कस्य चित् रूप्यस्येत्येवं निवृत्तिज्ञाने उत्पत्तिज्ञानात् यथा वैयधिकरण्यं नास्ति एवं त्रैकालिकनिषेधज्ञानेऽपि प्रसक्तस्याभासस्यैव निषेधसंभवे भ्रमबाधयोर्वैयधिकरण्यकल्पनायोगादित्यन्वयः । तद्विवरणम् । निषेधं प्रतीत्यादि ॥ निषेधं प्रति अधीस्थं प्रसक्तत्वेन बुद्ध्यनारूढं यत् पारमार्थिकमापणस्थरूप्यं तत् अनच्छेदकं प्रतियोगि । अनवच्छेदकस्य अप्रतियोगिनः अभासस्य धीस्तु पारमार्थिकस्य निषेधज्ञाने हेतुरिति वैयाधिकरण्यम् । रूप्यमत्रास्तीति एवं बुद्धिपूर्वकमारोप्य तदेव निषिध्यत इत्यर्थः । निषेधस्योपपादकभूता या प्रसक्तिः तदर्थमित्यर्थः। त्वन्मत इति ॥ अनिर्वाच्य ख्यातिपक्ष इत्यर्थः । तथात्वेऽन्यत्र विद्यमानस्यान्यत्रारोपरूपा-न्यथाख्यात्यापत्तेरित्यर्थः । तदारोपं विनैवेति ॥ निषेधस्यारोपं विनैवेत्यर्थः । तत्रापि अनाभासेऽपि । आपणस्थवैयधिकरण्यकल्पनायोगादित्यर्थः । तथा च यत् धीस्थं प्रसक्तं तत् न निषेध्यम्; यत् निषेध्यं तदप्रसक्तम् अधीस्थमित्यलौकिककल्पनापत्तिरिति भावः । नन्वधिकरणे निषेध्यस्यानाभासस्यापणस्थ-रूप्यस्यारोपाभावेऽपि निषेधोऽस्त्वित्यत आह । अनारोपेति ॥ घटस्मारणानन्तरं स्मृतमिमं घटमत्रारोपयिष्यामीति बुद्धिपूर्वकारोपं विनैव इह भूतले घटो नास्तीति प्रतीतेरनुभवसिद्धत्वात् न बुद्धिपूर्वकारोपस्यापि कल्पना युक्ता । अतः आरोपपूर्वकनिषेधानुपपत्तिः तदवस्थैवेत्यर्थः। अनाभासस्यापि

प्रसक्तिः किमिदं रजतमित्याकारेण वा? रजताभासानाभासानुगतरजतत्वसामान्य- लक्षणप्रत्यासत्त्या वा? नाद्य इत्याह आभास इतीति ॥ आभास इति इदं रजतमित्यस्य संज्ञा । तथा चेदं रजतमित्यत्राप्रसक्तेरिति भावः । न ह्यापणस्थरूप्यम् इदं रजतमिति भावः । द्वितीयमाशङ्क्य निषेधति । अस्तु वा रजतत्वसामान्यं, तथापि तल्लक्षणप्रत्यासत्त्या नानाभासरजतप्रतीतिः । कुत इति चेत् तत्राह ॥ फलबलेति ॥ यथा सन्निकृष्टे धूमे इन्द्रियसम्बद्धं धूमत्वं प्रत्यासत्तीकृत्य तदाश्रयव्यक्तीनां धूमत्वसामान्यप्रत्यासत्त्योपस्थितौ तत्र सर्वोपसंहारेण व्याप्तिग्रहो भवतीत्येवं सर्वोपसंहारेण व्याप्तिग्रहरूपानुभवसिद्धफलबलेन सामान्यस्य प्रत्यासत्तित्वेऽपि अन्यत्रापि सामान्यस्येन्द्रियसम्बद्धत्वाभावस्थलेऽपि न तस्य प्रत्यासत्तित्वं युक्तम् । पुरोदेशे व्यक्तेरभावेन तत्र रजतत्वसामान्याभावात् रजतत्वं नेन्द्रियसन्निकृष्टम्, अतः कथं प्रत्यासत्तिः स्यात् । आश्रयद्वारेन्द्रियसम्बद्धं सामान्यं प्रत्यासत्तिरिति मणिकृदुक्तत्वात्। इन्द्रियासम्बद्धस्यापि सामान्यस्य प्रत्यासत्तित्वे परमाणुत्वसामान्यं प्रत्यासत्तीकृत्यास्मदादीनामपि सर्वपरमाणुसाक्षात्कारप्रसङ्गापत्तेः । अतो न रजतत्वस्य प्रत्यासत्तित्वमङ्गीकृत्यानाभासोपस्थितिः कल्प्येत्यर्थः । अन्यत्रापि तस्य प्रत्यासत्तित्वे सर्वेषां सार्वज्ञप्रसङ्ग इत्यर्थ इत्यप्याहुः । अध्यस्तमज्ञानोपादानकमित्युक्तं दूषयति । किंचेति ॥ सकर्तृकत्वस्यापीति ॥ जीवस्येश्वरस्य वा कर्तृत्वं न सम्भवतीत्यतो नेष्टापत्तिरिति भावः । ननु निरीश्वरवादिमते क्षित्यादेरकर्तृकत्वेऽपि सोपादनकत्ववत् रूप्यस्यापि तथाऽस्त्वित्यत आह ॥ अविद्येति ॥ निरासाच्चेति ॥ आरोपिताभावं प्रति भावरूपाज्ञानस्यानुपादानत्वात् । अभावस्य भावोपादानकत्वे असत्यस्य सत्योपादानकत्वापातः इत्येवमादिरीत्या निरस्तत्वादित्यर्थः । किं चाज्ञानस्य न रूप्योपादानत्वं कल्प्यं, मृद्घट इत्यादिवत् अज्ञानानुविद्धत्वेनाप्रतीयमानत्वात् । इदं रूप्यमिति रूप्यानुविद्धत्वेन प्रतीयमानस्येदमंशस्यैव दोषवशात् मिथ्यारूप्यात्मना विकारसम्भवात् । न च रूप्यस्य मिथ्यात्वात् सत्यस्येदमंशस्य मिथ्यारूप्यात्मना विकारो न सम्भवति । तथात्वे इदमंशस्वरूपस्यापि मिथ्यात्वापात इति वाच्यम् । मिथ्याविकाररूपविवर्तत्वसम्भवात् । एतादृशस्य विकारस्य सत्यो योऽयमविकारः अप्रच्युतस्वरूपत्वरूपः तदविरोधित्वात् । मिथ्याविकाररूपविवर्तत्वं नाम तदारोपाधिष्ठानत्वमेवेति द्रष्टव्यम्। तथा चेदमंशाधिष्ठानकतया तत्रारोपितत्वेनैव रूप्यस्योपपत्तौ तत् प्रत्यज्ञानस्योपादानत्वायोगादित्याशयेनाह ॥ इदमिति ॥ इतोऽप्यध्यस्तं नाज्ञानोपादानकमित्याह । परोक्षेति ॥ उक्तत्वेनेति ॥ अन्यथा तद्व्यवहाराभावप्रसङ्गादिति भावः । अज्ञानेति ॥ अनुमिति रूपपरोक्षज्ञानेन निवृत्तत्वादिति भावः । भ्रमायोगाच्चेति ॥ उपादानभूताज्ञानस्य निवृत्तत्वादित्यर्थः । सोपाधिकभ्रमत्वात् न दोष इति चेत् तत्राह ॥ त्वन्मत इति प्रत्यक्षतयेति ॥ 'ग्रीवास्थमेवेदं मुखम्' इत्यैक्यस्य प्रत्यक्षसिद्धत्वादिति भावः । भेदभ्रमेति ॥ तद्विपरीतसाक्षात्कारे सति उपाधिवशादपि तद्भ्रमायोगादित्यर्थः । भ्रमानुत्पत्तीति ॥ तदुपादानाभावेन पटत्वप्रकारकभ्रमो न स्यादिति भावः । नन्वयं पट इति वाक्याभासात् 'अग्निना सिञ्चेत्' इत्यत्रेवान्वयधीरेव न भवतीति चेत् तत्राह ॥ अयं पट इत्यत्रेति ॥ 'अग्निना सिंचेत्' इत्यत्र

सेकक्रियाकरणत्वरूपान्वयधीविरोधिनोऽग्नित्वस्योपस्थितत्वात् न तत्रान्वयबोधो भवति । अयं पट इत्यत्र तु पटप्रकारकेदंपटार्थविशेष्यकान्वयबोधविरोधिनः कस्यापि धर्मस्यात्रानुपादानात् अन्वयबोधो सरूपो भविष्यत्येव । न ह्ययमित्यनेनोपस्थितमिदंत्वं पटत्वान्वयविरोधि न वा पटत्वमिदं त्वान्वयविरोधि । तथात्वे अयं पटः इति प्रयोगोऽपि न स्यात् । अतो युक्तैव वाक्याभासात् भ्रमोत्पत्तिरिति भावः । अज्ञानेति ॥ ज्ञातैकसत्वादिति भावः । ज्ञानाभावत्वेति ॥ त्वदुक्तमर्थं न जानामीति भावरूपाज्ञानप्रतीतिः त्वन्मते भवति । इयं च ज्ञानाभावप्रतीतिरित्यस्माभिरुक्ते तत्र त्वयोच्यते भावरूपाज्ञाने भवतो ज्ञानभावत्वभ्रम इति । स न स्यात् । तथा सुखे बौद्धानां दुःखाभावभ्रमो भवति, 'दुःखाभावं सुखं चाहुः' इति वचनात् । तथाचेदं भ्रमद्वयं न स्यात् । तदुपादानाज्ञानाभावादिति भावः । किं चाध्यस्तस्याज्ञानोपादानकत्वे परोक्षाध्यासनिवृत्तिरेव न स्यात् । तदुपादानाज्ञाननिवर्तकाभावात् । तन्निवर्तकं हि परोक्षतत्वज्ञानं वा स्यात्, अपरोक्षतत्वज्ञानं वा नोभयमपीत्याह । परोक्षेति ॥ रूप्यमित्यादि ॥ रूप्यधीसामग्रीसद्भावेनोत्पन्नायाः रूप्यधियो नाशायोगेन सदा रूप्यधीः स्यादित्यर्थः । ननु रूप्यज्ञानाकाराविद्यापरिणामयोर्निवृत्तत्वात् न रूप्यधीसामग्रीसद्भाव इत्यत उक्तम् अधिष्ठानतत्व-ज्ञानेत्यादि ॥ अधिष्ठानतत्त्वज्ञानैकनिवर्त्यत्वे निमित्तकथनम् । मिथ्यात्वेनेति ॥ अर्थज्ञानात्मकोभयविधभ्रमाङ्गीकारेण रूप्यतद्ज्ञानयोरुभयोरपि मिथ्यात्वादित्यर्थः । ननु तर्ह्यधिष्ठानज्ञानेनाज्ञाननिवृत्त्या रूप्यज्ञानाकाराविद्यापरिणामयोरपि निवृत्तिरस्त्वित्यत उक्तम् । रूप्यं दृष्ट्वेत्यादि ॥ निवृत्तस्येति ॥ परावृत्तस्येत्यर्थः । व्यसङ्गेनान्यत्र गतस्येति यावत् । स्वगोचरेति ॥ स्वविषये शूरत्वात् स्वविषयव्यवस्थापकत्वस्वभावादित्यर्थः । यथाभ्रान्ति भ्रान्तिमनतिक्रम्य । तदनुसारेणेति यावत् । तदर्थो भ्रान्तिप्रतीतोऽर्थः । एवं च भ्रमरूपज्ञानस्यापि स्वविषयसत्त्वव्यवस्थापकत्वात् तदनुसारेण तत्र प्रतीतस्यापि अध्यस्तस्य रजतस्य प्रातिभासिकत्वात् तदज्ञानोपादानकमवश्यमङ्गीकार्यमिति भावः । बाधस्यैवेति ॥ भ्रमभिन्नस्य बाधकज्ञानस्यैव स्वार्थसत्त्वव्यवस्थापकतयाऽनुसर्तव्यत्वादित्यर्थः । अनेवंविधस्य अर्थतत्वव्यवस्थापकबाधभिन्नस्य अतथात्वात् स्वविषयसत्वव्यवस्थापकत्वरूपस्वगोचरशूर-त्वाभावादित्यर्थः । अन्यथेति ॥ भ्रमस्यापि अर्थतत्वव्यवस्थापकत्वरूप स्वगोचरशूरत्वाङ्गीकार इत्यर्थः । तदर्थस्य भ्रमव्यवस्थापित स्वरूपस्य रूप्यरूपार्थस्य पारमार्थिकत्वापातादित्यर्थः । अतो न यथाभ्रान्ति तदर्थोऽङ्गीकार्य इति न तदनुसारेणाज्ञानोपादानकत्वमध्यस्तस्येति भावः । इति अविद्याकरजतो-त्पत्तिभङ्गविवरणम् ।

## ४३. भ्रमस्याद्वैताभिमतज्ञानद्वयात्मकत्वभङ्गः

तदजन्येति ॥ इन्द्रियाजन्येत्यर्थः । अख्यातीति ॥ यथा प्राभाकरैर्ज्ञानद्वयमङ्गीकृत्यान्यथाख्याति-र्नास्तीत्युच्यते एवं ज्ञानद्वयाङ्गीकारेण विशिष्टैकज्ञानरूपान्यथाख्यात्यभावापत्तिरित्यर्थः । तादात्म्यस्यापीति ॥ प्राभाकरैस्तादात्म्यभानानङ्गीकारात् अस्माभिश्चार्थयोस्तद्भानाङ्गीकारात् विशिष्टैकज्ञानरूपान्यथा-

ख्यातिर्युक्तेत्यर्थः । अध्यस्तत्वेनेति ॥ इदमंशावच्छिन्ने चैतन्येऽध्यस्तत्वेनेदं रजतमिति ज्ञानमपि तदधिष्ठान चैतन्यज्ञानमेकं, तत्रांशेऽपि तत् शुक्तिरूपेदमंशज्ञानमपरमिति द्व्यात्ममित्यर्थः । स्वाप्नेति ॥ वस्तुतो जाग्रत् शुक्तिज्ञानस्य द्व्यात्मकत्वात् तस्यैव स्वप्ने इदमिति इदंत्वेन ज्ञाने सति स्वाप्नरूपप्रातिभासिक तृतीयज्ञानापत्तेः तत्र पुना रूप्यज्ञानं चतुर्थं प्राप्तमिति स्वाप्नशुक्तौ इदं रजतमिति ज्ञानं चतुरात्मकमापन्नमित्यर्थः । चाक्षुत्वादिति ॥ दृशेः पश्यादेशे सति निष्पन्नस्य पश्यामीत्यस्य चाक्षुषज्ञानार्थकत्वेन पीतत्वादेः चाक्षुषत्वस्यानुव्यवसायसिद्धत्वात् पीतत्वांशेऽविद्यावृत्त्यङ्गीकारे अविद्यावृत्तेरान्तरत्वेन पीतत्वादेरप्यान्तरत्वापत्त्या तस्य चाक्षुषत्वे त्वगाद्यनुव्यवसायविरोधः स्यादित्यर्थः । अध्यस्तांशेऽविद्यावृत्त्यङ्गीकारेऽनवस्था च स्यादित्याह ॥ रूप्यज्ञानस्येति ॥ प्रातिभासिकत्वमिति ॥ अविद्यावृत्तेरपीति शेषः ॥ अवश्यं भावादिति ॥ प्रतिभासमात्रशरीरत्वस्यैव प्रातिभासिकत्वादित्यर्थः । नन्वविद्यावृत्तेरपि कुतः प्रातिभासिकत्वम्? येन प्रतिभासावश्यंभाव इत्यत आह । अध्यस्तेति ॥ अध्यस्तं यत् रूप्यज्ञानं तद्विषयकं यत् ज्ञानम् अविद्यावृत्तिरूपं तस्याप्यध्यस्तरूप्यविषयकरूप्यज्ञानवत् अध्यध्यस्तत्वनियमात् प्रातिभासिकत्वनियमादित्यर्थः । वृत्त्यन्तरेति ॥ अध्यस्तत्वैन साक्षिभास्यत्वाभावादिति भावः । किं च त्वन्मते रूप्यज्ञान तदज्ञानयोरुभयोरप्यध्यस्तत्वेनोभयत्राप्यविद्यावृत्तिरङ्गीकृता, तत्र रूप्यज्ञानाकाराविद्यावृत्तिरेवाऽस्तु । रूप्यांशेऽपि रूप्याकाराविद्यावृत्तिर्व्यर्थेत्याह ॥ अज्ञानस्येति ॥ परिणामेऽङ्गीकृते सति रूप्याकाराविद्यावृत्तिवैयर्थ्यादित्यन्वयः । ननु रूप्याकाराविद्यावृत्तेरभावे रूप्यप्रतीतिः न स्यादित्यत उक्तम्– रूप्यमितीति ॥ ज्ञानगताकारेणैवेति ॥ ज्ञानस्य निराकारत्वादत्राकारशब्दो ज्ञानरूपपरः । तथा च रूप्यज्ञानाकाराविद्यावृत्तिपरिणममान स्वरूपमात्रेणैव रूप्यप्रतीतिसम्भवात् न तदर्थं रूप्याकाराविद्यावृत्तिरङ्गीकार्येत्यर्थः । न च रूप्याकाराविद्यावृत्त्यभावे रूप्याभावप्राप्त्या, प्रातिभासिकविषयाभावेन कथं भ्रमत्वमिति वाच्यम् । अर्थाभावेऽपि भ्रमरूपं ज्ञानमस्तु, विषयाभावेऽप्यतीतादिज्ञानदर्शनादित्याह । भ्रमस्य चेति ॥ अध्यस्तांशे इन्द्रियाजन्याविद्यावृत्त्यन्तरमङ्गीकृतं, तद् दूषयति । दोषाणामित्यादिना ॥ रूप्यादिज्ञानस्य भ्रमत्वं तावदिन्द्रियदोषप्रयुक्तम् । अत इन्द्रियदोषप्रयुक्तभ्रमत्वाश्रये रूप्यज्ञाने इन्द्रियकरणत्वेन तज्जन्यत्वमेव वाच्यं न तु तदजन्यत्वम्, इन्द्रियदोषप्रयुक्तभ्रमत्वाश्रयत्वे तत्करणकत्वं कुत इत्यत उक्तं दोषाणामिति ॥ काचादीनां स्वाश्रयभूतचक्षुरादिजन्य एव ज्ञाने भ्रमत्वरूपातिशयहेतुत्वादित्यर्थः । ननु कारणान्तरजन्यत्वेन भ्रमत्वमस्तु, न त्विन्द्रियदोषप्रयुक्तत्वेन, येनेन्द्रियकरणकत्वं स्यादित्यत आह कारणान्तरेति ॥ दोषातिरिक्तनिरूक्तभ्रमहेतु भूतकारणान्तराभावादित्यर्थः । रूप्यज्ञानस्येन्द्रियकारणकत्वमनङ्गीकृत्याविद्यापरिणामत्वाङ्गीकारे बाधकमाह ॥ अन्यथेति ॥ त्वया शङ्खज्ञानानन्तरमधिष्ठानज्ञानस्य जातत्वात् निमीलितनेत्रस्यापि नेत्रगतदोषादन्तरेवाविद्यावृत्तिरूपपीतत्वभ्रमः स्यात्, चक्षुषा शुक्तिसादृश्यं च ज्ञात्वा निमीलितनेत्रस्यापि अधिष्ठानज्ञानादेः सत्वात् नेत्रगतदोषादन्तरेवाविद्यावृत्तिरूपरूप्यादिभ्रमः स्यादित्यर्थः। न चेष्टापत्तिः । अनुभवविरोधादिति ध्येयम् । रूप्येति ॥ भ्रममनङ्गीकृत्य ज्ञानद्वयमित्यङ्गीकुर्वता

प्राभाकरमतापेक्षया तादात्म्यस्य भानाङ्गीकारेण भ्रममङ्गीकृत्यैकत्वप्रयोगसमर्थनात् वैषम्यमस्ति यद्यपि, तथाऽपि ज्ञानद्वयाङ्गीकारपक्षे ख्यातिवादिनां यो दोषोऽभिधीयत इदं रूप्यत्वेन जानामीति ज्ञानैक्याव-गाह्यनुव्यवसायविरोधरूपः स तावत् तवापि स्यादेव ज्ञानद्वयैक्यानङ्गीकारादिति भावः । विषययो, इदमंशरूप्याद्यधिष्टानारोप्ययोः एकत्वापन्नत्वादित्यन्वयः । तत् कथमित्यत्रोक्तम् । अध्यस्तेनाभेदेनेति ।। अध्यस्ताधिष्ठानयोः योऽभेदः, आरोपितं यत् तादत्म्यं तेन सद्भावेन निमित्तेन, आरोपिततादात्म्यभानाङ्गीकारात् विषययोरैक्यसद्भावेन तद्ज्ञानयोरैक्यमुचितमिति यत् केनचिदुक्तं तदप्येनेनैव निरस्तमित्यर्थः । एतेनेत्युक्तमेव विशदयति । ज्ञानैक्येति ।। ज्ञानयोरैक्याभावे तदैक्यावगाह्यनुव्यवसायविरोध इत्यर्थः । अन्यथाऽनुव्यवसायस्य भ्रान्तित्वापत्तिरित्यर्थः । ज्ञानैक्ये विषयैक्यनिमित्तत्वेऽतिप्रसङ्गमाह । एकेति ।। ज्ञानानामैक्यापत्त्या तदवगाह्यनुव्यवसायापातादित्यर्थः। इदमुपलक्षणम् । एकविषयकप्रत्यक्षानुमित्यादीनामप्यैक्यं स्यादित्यपि द्रष्टव्यम् । अहेतुत्वादिति ।। बाधकालेऽर्थस्य निवृत्तत्वेनार्थैक्याभावेऽपि ज्ञानैक्यानुभवादित्यर्थः । ज्ञानद्वयस्याप्यैक्येन भानं पुनः केनचिदुक्तं निमित्तांतरमाशंख्य निराकरोति । एतेनेति ।। विवर्तत्वात् कल्पितत्वात् । रूप्यं रूप्यरूपो विषयो इदंत्वेन इदमंशरूपविषयाभेदेन पूर्वविषययोरभेदोऽध्यस्ताभेदो निमित्ततया केनचिदुक्तम् । अनेन तु इदमंशावच्छिन्नचैतन्याविद्याविवर्तत्वरूपं निमित्तान्तरमुक्तमिति भेदः । इदमर्थावच्छिन्नचैतन्याविद्या कल्पितत्वात् ज्ञानं ज्ञानैक्येन भातीत्यर्थः । एतेनेत्युक्तमेव विशदयति । बाधकाल इति ।। अर्थयोरैक्यस्य बाधितत्वेन नेदं रजतमिति रूप्येदमंशयोर्भेदो बाधकाले प्रतीयते । एवं ज्ञानैक्यस्य कल्पितत्वे बाधकाले ज्ञानयोरपि भेदः प्रतीयेतेत्यर्थः । रूप्यज्ञानस्येदं ज्ञानत्वेन भाने इदं वृत्यवच्छिन्नचैतन्याज्ञानकल्पितत्वं निमित्तमित्युक्तम् । तदसदित्याह ।। इदं वृत्तेरिति ।। यथेदमंशावच्छिन्नचैतन्येऽविद्याऽस्ति एवमिदं वृत्त्यवच्छिन्नचैतन्ये नाविद्याऽस्ति इदं वृत्तेः इदं ज्ञानस्य ज्ञातैकसत्त्वादिति भावः । शुक्तितत्वमिति ।। शुक्तित्वरूपशुक्तितत्वज्ञानेन शुक्त्यवच्छिन्नचैतन्याविद्याया नष्टत्वात् तदुपादानरूपं निवृत्तम् । तन्निवृत्तावपि कदाचिदिदं वृत्तेर्यत् तत्त्वम् इदं वृत्तित्वादिरूपं तद्ज्ञानाभावेनेदं वृत्त्यवच्छिन्नचैतन्याविद्याया रूप्यज्ञानोपादानभूताया अनिवृत्तत्वेन रूप्यज्ञानानुवृत्तिः स्यात् । नचेष्टापत्तिः । शुक्तितत्वज्ञानेन रूप्यनिवृत्तावपि रूप्यज्ञानानुवृत्तिकल्पनस्यानुभवविरुद्धत्वादित्यर्थः । अस्मिन्नापि पक्षे पूर्वोक्तं दूषणमाह ।। अबाधितेति ।। नन्वध्यस्तांशेऽविद्यावृत्तिरेव वक्तव्या, नेन्दियवृत्तिः । अध्यस्तांशेन्द्रियसन्निकर्षायोगात् इत्याशङ्क्य निराकरोति ।। न चेति ।। असंप्रयोगः सन्निकर्षाभावः । तस्य इन्द्रियसन्निकर्षस्य ।। दोषमिति ।। तथा च स एवाध्यस्तेनेन्द्रियसन्निकर्ष इति भावः । यच्चोक्तं शुक्त्यवच्छिन्नचैतन्य-रूपाधिष्ठानाविद्याकल्पितत्वात् रूप्यमिदंत्वेन भातीति तदयुक्तम् । शुक्त्यच्छिन्नचैतन्यस्य रूप्याधिष्ठान-त्वाभावादित्याह । रूप्यं प्रत्यपीति ।। चैलाश्वलं चैलखण्डः शुक्तेरधिष्ठानत्वे तत्र रूप्यभ्रमेण 'इदं रूप्यम्' इत्यङ्गुल्यग्रेण निर्देशः, सन्तोषेण चैलखण्डेन बन्धनं इत्यादिकं चाधिष्ठानभूतशुक्तिकाया-मुपपन्नम् । तदवच्छिन्नचैतन्यस्याधिष्ठानत्वे न तत् प्रति 'इदम्' इत्यङ्गुल्यग्रनिर्देशो युक्तः, रूपादि-

रहितस्य चाक्षुषज्ञानेऽभानात् । न वा चैलखण्डेन चैतन्यबन्धनं युक्तम्, अतो न तदधिष्ठानमिति भावः । ज्ञानत्वाभावादिति ॥ अज्ञानविवर्तकत्वस्यैव ज्ञानत्वेन, अविद्यावृत्तेस्तदभावात् न ज्ञानत्वम् । इदमंशाकारान्तःकरणवृत्तिरेव च ज्ञानमिति जानामीति ज्ञानैक्यधीर्युक्तेति भावः । परोक्षेति ॥ परोक्षाध्यासस्थले इदमंशाकारान्तःकरणवृत्तिस्तु नास्त्येव । अविद्यावृत्तिस्तु न ज्ञानम् । तत्प्रतिफलितचैतन्यमपि तत्र नास्तीति, किं कृतः तत्र जानामीति व्यवहार इत्यर्थः । अपवादादिति इदं वृत्तेः सर्वत्र प्रमात्वात्, अविद्यावृत्तेश्चाज्ञानत्वात् ज्ञाने प्रमात्वनियम एव स्यात्, नाप्रामाण्यमिति भावः । किं चाविद्यावृत्तेर्ज्ञप्तिरूपं मुख्यज्ञानत्वं नास्तीत्येतदन्तःकरणवृत्तावपि तुल्यम् । अतो जानामीत्यनुभवायोग एवेत्याशयेनाह ॥ विवरणइति ननु ज्ञानरूपचैतन्यप्रतिफलनरूपोपाधित्वसद्भावात् अन्तःकरणवृत्तेर्ज्ञानत्वमिति चेत् तर्ह्यविद्यावृत्तेरपि चैतन्यप्रतिफलनरूपोपाधित्वसद्भावाद् ज्ञानत्वस्यैव प्राप्तेरविद्यावृत्तेर्ज्ञानत्वाभावादित्येतत् वचनमयुक्तमित्याशयेनाह ॥ प्रकाशेति ॥ नन्वज्ञाननिवर्तकत्वादन्तःकरणवृत्तेर्ज्ञानत्वमिति चेत् तत्राह । अज्ञानेति ॥ द्वितीयेति ॥ तत्र प्रथमज्ञानेनैवाज्ञानस्य निवृत्तत्वात् द्वितीयज्ञानं व्यर्थं, तत्रान्तःकरणवृत्त्यन्तराभावेन तत्प्रतिबिम्बितचैतन्याभिव्यक्तचैतन्यरूपफलमेव नास्ति । तथात्वेऽभिव्यक्तचित्संबन्धेन विषयस्याप्यापरोक्ष्यापत्तेः । अतः परोक्षभ्रमस्थले जानामीति ज्ञानैक्यानुभवो न स्यादिति भावः । किं च त्वन्मते फलैक्यमप्यसिद्धमित्याह । त्वन्मत इति वृत्तिप्रतिबिम्बितचैतन्यं वा तदभिव्यक्ताधिष्ठानचैतन्यं वा ज्ञानमिति मतद्वयाभिप्रायेणेदम् । अवच्छिन्नस्य विशिष्टस्य । तथा चायं विवेकः, इदमर्थस्य इदमाकारान्तःकरणवृत्तिप्रतिबिम्बितचैतन्यवेद्यत्वात् रूप्यस्य च रूप्याकाराविद्यावृत्तिप्रतिबिम्बित चैतन्यवेद्यत्वात् । तथा चेदमाकारान्तःकरणवृत्तिप्रतिबिम्बितचैतन्यरूपफलस्य रूप्याकाराविद्यावृत्तिप्रतिबिम्बितचैतन्यरूपफलस्य च विशिष्टस्य भिन्नत्वात्, तथेदमंशस्य शुद्धचैतन्येऽध्यस्तत्वेनेदमाकारान्तःकरणवृत्तिप्रतिबिम्बितचैतन्याभिव्यक्तेदमंशानवच्छिन्नं यदिदमंशाधिष्ठानचैतन्यं तद्वेद्यत्वेन तादृशचैतन्यरूपफलस्य भिन्नत्वात् रूप्यस्य चेदमंशावच्छिन्नचैतन्येऽध्यस्तत्वेन रूप्याकाराविद्यावृत्तिप्रतिबिम्बितचैतन्याभिव्यक्तं यदिदमंशावच्छिन्नरूप्याधिष्टानचैतन्यं तद्वेद्यत्वेन इदमंशावच्छिन्नचैतन्यरूपफलस्य भिन्नत्वादित्यर्थः । नन्विदं रूप्यवृत्त्योरुक्तरीत्या फलभेदेऽपि चैतन्यमात्रं तावदेकमेवास्तीति ज्ञानैक्यधीर्युक्तेति चेत् न । अफलरूपचिन्मात्राभेदस्य सर्वघटपटादिसाधारण्येन सर्वगतत्वात् सर्वज्ञानानामैक्यधीः स्यादित्यतिप्रसङ्ग इति भावेनाह ॥ अफलेति ॥ यदुक्तमवच्छिन्नस्य फलस्य भिन्नत्वादिति, तन्न । रूप्यं प्रतीदमंशावच्छिन्नचैतन्यमेवाधिष्ठानम् । अतः फलैक्यमिति तत्राह ॥ न हीत्यादिना ॥ ज्ञानैक्यमिति ॥ प्रतिफलितचैतन्यस्यैकत्वादित्यर्थः । दूषणान्तरमाह ॥ क्रमिकयोरिति ॥ इदमंशावच्छिन्नचैतन्ययोश्च विजातीययोरिदं रूप्यज्ञानयोरैक्ये क्रमेण जायमानयोरिदमिति सजातीययोः ज्ञानयोरप्यैक्यापत्तिः । इदमंशावच्छिन्नचैतन्यस्य ज्ञानैक्य प्रयोजकस्य सत्त्वादित्यर्थः । चैतन्यैक्यस्य ज्ञानैक्यप्रयोजकत्वे चैतन्यभेदस्य ज्ञानभेदप्रयोजकत्वमुक्तं स्यात् । तथा च घटपटाविति समूहालम्बनज्ञानस्यापि भेदापत्तिः । घटपटावच्छिन्नयोश्चैतन्ययोर्भेदादित्याह ॥ समूहेति ॥ किं चेदमाकारवृत्तौ

इदमंशावच्छिन्नचैतन्यस्य प्रतिबिम्बनं युक्तम् । रूप्यवृत्तौ तस्या रूप्याकारत्वेनेदमाकारत्वाभावात् न युक्तमित्याह । तस्यातदाकारेति ॥ अनिदमाकारेत्यर्थः । अन्यथेति ॥ इदमंशावच्छिन्नचैतन्यस्यैवेदं वृत्तौ रूप्यवृत्तौ च प्रतिफलनाङ्गीकारे रूप्याधिष्ठानभूता या इदं वृत्तिप्रतिफलिता चित् इदमंशावच्छिन्नरूपा तयैव रूप्यप्रतीत्युपपत्तौ रूप्याकाराऽविद्यावृत्तिर्व्यर्थेत्यर्थः । ज्ञानैक्यानुभवविरोधोपपादनमुपसंहरति । तस्मादिति ॥ ननु तिक्तो गुड इति चाक्षुषभ्रमो भवति । तत्र विशेष्यस्य रसनेन्द्रियाविषयत्वात् तत्र रासनस्य तिक्तरसस्य कथमध्यासः स्यादित्यधिष्ठानांशे चक्षुरिन्द्रियवृत्तिः आरोप्यतिक्तरसांशे तु रासनवृत्तिरिति भ्रमे वृत्तिद्वयसिद्धिरित्यत आह ॥ तिक्त इति ॥ यथा मधुरो गुड इति चाक्षुषप्रमारूपज्ञानं सम्भवति, यथा वासुरभिचन्दनमिति चाक्षुषं ज्ञानं, तत्र यथा रसनेन्द्रियेण घ्राणेन वोपनीतो मधुरो रसो गन्धो वा चक्षुषा प्रतीयमाने विशेष्यभूते गुडे चन्दने वा भाति । एवं च मानान्तरोपनीतविशेषणविषयकमेकमेव चाक्षुषं ज्ञानं भवति । एवं प्रकृतेऽपि मानान्तरोपनीततिक्तरसविशेषणकं गुडविशेष्यकमेकमेव चाक्षुषभ्रमरूपं ज्ञानं भवतीति न भ्रमे वृत्तिद्वयमित्यर्थः । अन्यथा मधुरो गुड इत्यादि प्रमायामपि वृत्तिद्वयं स्वीकार्यं स्यात् । तुल्यन्यायादिति भावः । उत्तरग्रन्थमुपक्षिपन् अनिर्वचनीयत्वनिराकरणमुपसंहरति । तस्मादिति ॥ सुतरामिति ॥ दृष्टान्ताभावादिति भावः । तत् जगत् ॥ इति भ्रमस्याद्वैताभिमतज्ञानद्वयात्मकत्वभङ्गविवरणम् ।

## ४४. अथ सत्तात्रैविध्यभङ्गविवरणम् ।

स्वाप्नेति ॥ जग्रदवस्थागतशुक्तेर्व्यावहारिकत्वेन तत्रारोपितं रूप्यं प्रातिभासिकम् । स्वाप्नस्यैव प्रातिभासिकत्वेन स्वाप्नशुक्तेरपि प्रातिभासिकत्वात् तत्रारोपितरूप्यं जाग्रदवस्थागत प्रातिभासिकरूप्यादपि निकृष्टमिति तत्सङ्ग्रहाय प्रातिभासिकादपि किञ्चित् निकृष्टं सत्वं वाच्यमित्यर्थः । अज्ञानध्वंसस्याव्यवहारिकत्वोपपादनाय पञ्चमेत्युक्तम् । अज्ञानस्य व्यावहारिकतयाऽनिर्वाच्यत्वेन चतुर्थप्रकारकत्वात् तन्निवृत्तेरपि न व्यावहारिकत्वम् । प्रतियोगितदभावयोः भिन्नसत्ताकत्वनियमादित्यर्थः । अस्तु तर्हि पारमार्थिकसत्वमित्यत आह । अपारमार्थिकस्येति ॥ पारमार्थिकसत्वशून्यस्येत्यर्थः। आत्मैवाज्ञानहानिरिति मतभिन्नमताभिप्रायेणेदमापादितमिति मन्तव्यम् । उत्कृष्टस्य पारमार्थिकात् नीचस्य चेति शेषः । त्रैविध्येति ॥ तथा च पञ्चविधं सत्वमिति विभागः कर्तव्य इति भावः । ब्रह्म पारमार्थिकं सत् जगत् व्यावहारिकं, रूप्यादि प्रातिभासिकम्, इति परस्परं विभागो भेदः, तात्त्विकोऽतात्त्विको वा? नाद्यः, अपसिद्धान्तादित्याह । किञ्चायमिति ॥ न द्वितीय इत्याह नापीति ॥ यथा शुक्तेः तत्रारोपितरूप्यात् भेदो न रूप्यवत् प्रातिभासिकः, किं तु धर्मिसत्तासमानसत्ताको व्यावहारिक एव । नेदं रूप्यमिति बाधगम्यत्वात् । तथा तात्विकस्य ब्रह्मणः तत्रारोपितादतात्विकात् जगतो व्यावहारिकात् भेदो यः स तात्विक एव धर्मिसत्तासमानसत्ताको वाच्यः । बाधगम्यत्वादित्यर्थः । अन्यथा, तात्विकस्य ब्रह्मणो अतात्विकात् भेदस्य तात्विकत्वानङ्गीकारे 'अस्थूलमनणु' इत्यादि श्रुतीनामतात्विकात् व्यावहारिकात्

प्रपञ्चात् विभागप्रतिपादकानामतत्वावेदकत्वेनाप्रामाण्यं स्यादित्याह ॥ अन्यथेति ॥ अतात्विकात् भेदस्यातात्विकत्वे तयारभेदापत्त्या ब्रह्मणोऽप्यतात्विकत्वापत्तिरिति दूषणं द्रष्टव्यम् । उक्तमर्थं सङ्गृह्णाति । एवं चेति ॥ कथं कृतकृत्यत्वमित्याह । त्वयैवेति ॥ उक्तो दोष इति ॥ व्यावहारिकसत्यत्वं बाध्यं चेत् वयं कृतकृत्याः, त्वयैवोक्तदूषणात् । अबाध्यं चेत् अथसिद्धान्तश्चापतेदिति उक्तदोष इत्यर्थः । 'सर्वमेतेन दूषितं' इत्येतत् विवृणोति ॥ सम्भवति हीति ॥ एवं विकल्प्येति ॥ विश्वमिथ्यात्वादि बाध्यम्, अबाध्यं वेति विकल्प्य दूषणमित्यर्थः । पारमार्थिकेतरसद्द्वयस्य सद्भिलक्षणस्यैव सत्त्वेन भाने तयोः कथं भेद इत्यत आह ॥ बाधेति ॥ बाधविलम्बयुक्तं व्यावहारिकं सत्, बाधविलम्बशून्यं प्रातिभासिकं सदित्यर्थः । रूप्याभाव इति ॥ असद्भिलक्षणरूपरूप्याभाव इत्यर्थः । सत्वाभाव इति ॥ सत्त्वेन प्रतीतिमात्राङ्गीकारेण सत्वरूपार्थाभावादित्यर्थः । किं च, प्रातिभासिकत्वादेः सत्वभेदत्वाभावे रूप्यादेः प्रातिभासिकत्वाभावे त्वन्मतेऽऽविद्यकरूप्योत्पत्तेरयोगः । उत्पत्तौ सत्वस्यैव तन्त्रत्वात् । ननूत्पत्तौ असद्वैलक्षण्यमेव तन्त्रम्, न तु सत्वमतो रूप्यस्यासद्भिलणत्वादुत्पत्तिर्युक्तेति चेन्न । लाघवेन कदाचित् सत्त्वस्यैवोत्पत्तौ प्रयोजकत्वात् । यत् कदाचित् सत् तदेवोत्पद्यत इति दृष्टम् । रूप्यादेस्तदभावादुत्पत्तिर्न स्यादित्यर्थः । नित्ये व्यभिचारेण सत्त्वमात्रस्योत्पत्तौ प्रयोजकत्वाभावात् 'कदाचित्' इत्युक्तम् । विशेषाभाव इति ॥ सत्त्वेन प्रतीतिमात्राङ्गीकारेणार्थगतसत्वरूपविशेषानङ्गीकारादित्यर्थः । तत्र व्यावहारिके अर्थक्रियादेर-योगादित्यन्वयः । श्रुतीनामिति ॥ अर्थे सत्वाभावेनाविद्यमानसत्वप्रतिपादकानां 'विश्वं सत्यम्' इत्यादि श्रुतीनामप्रामाण्यापातादित्यर्थः । ननु श्रुतीनां व्यावहारिकसत्वप्रतिपादकत्वाभावेऽपि दीर्घभ्रान्ति-हेतुत्वमात्रेण प्रामाण्यमुपपद्यते । श्रुतिप्रतिपादितस्य विश्वस्य शीघ्रबाधो नास्तीति यावदिति चेत् तत्राह । दीर्घेति ॥ हेतोः प्रत्यक्षस्य । तस्यापि शीघ्रप्रत्यक्षेण बाधाभावादित्यर्थः । अतिशय इति स्वकार्य-प्रवृत्त्यतिशयेनाप्रामाण्यमतिशयवदित्युपचर्यत इति द्रष्टव्यम् ।

यथोक्तं—

**'दीर्घभ्रान्तिकरी चेत् स्यादतत्वावेदकप्रमा ।**
**रज्जुसर्पादिविज्ञानादप्याधिक्यादमानता ।'**

इति । सत्वस्यैवान्तरभेद इत्ययं पक्षो न सम्भवतीत्याह ॥ नान्य इति । किं च व्यावहारिकं नाम किमारोपितविशेषो वा, अनारोपितविशेषो वा? नाद्यः । 'विश्वं सत्यम्' इत्यादिश्रुतेरप्रामाण्यापातात् । द्वितीये त्वाह ॥ व्यावहारिकस्य चेति ॥ न तावत् अबाध्यत्वं पारमार्थिकत्वम् । आभासस्य प्रसक्त्याऽनाभासस्य निषेध इत्यापणस्थस्यैव बाध्यत्वोक्तितः शुक्तौ प्रतीयमानरजतस्वरूपस्याबाध्यत्वेन प्रातिभासिकेऽतिव्याप्तेः । नापि बाध्यत्वमपारमार्थिकत्वम् । अपारमार्थिकत्वाकारेण बाध्यत्वस्य ब्रह्मण्यापि सत्वेनातिव्याप्तेरित्याह ॥ मिथ्यात्वभङ्ग इति ॥ बाध्यत्वमपारमार्थिकत्वमित्यत्र सप्रकारकबाध्यत्वं

विवक्षितम्? उत निष्प्रकारकबाध्यत्वम्? नाद्य इत्याह ॥ जगद्बाधकस्येति ॥ तस्यैव बाधकज्ञाननिष्ठ-प्रकारस्यैवेत्यर्थः । प्रकारोपेतज्ञानस्य जगद्बाधकत्वे प्रकारस्य बाधककोटिनिविष्टत्वेन बाध्यबहिर्भावः स्पष्ट एव । तस्यापि बाध्यत्वाङ्गीकारे निष्प्रकारकज्ञानस्यैव बाधकत्वप्राप्त्या द्वितीयपक्षान्तर्भाव इति भावः। द्वितीये त्वाह ॥ निष्प्रकारकत्वे चेति ॥ जगद्भ्रमस्यार्थज्ञानात्मनोभयविधत्वेन जगद्भ्रमरूपज्ञानस्य सविकल्पकत्वेन सप्रकारकत्वेन तद्बाधकत्वायोगादित्यर्थः । न हि निर्विकल्पकं सविकल्पकबाधकं कुत्रचित् दृष्टमिति भावः । व्यावहारिकयां मायायाम् आत्माश्रयप्रसङ्गेन मायाकल्पितत्वाभावादव्याप्तिः । प्रातिभासिक्यामविद्यायामुक्तदोषेणाविद्यकत्वायोगादव्याप्तिः स्यादित्याह मायाऽविद्ययोरिति ॥ किञ्च मायाविना मायाकल्पितस्यैन्द्रजालिकादेः प्रातिभासिकत्वेन मायाकल्पितत्वरूपव्यावहारिकलक्षणस्याति-व्याप्तिः। व्यावहारिकतयाऽङ्गीकर्तव्ये दुःखादावाविद्यकत्वस्य सत्त्वेनाविद्यकत्वरूप प्रातिभासिकलक्षण-स्यातिव्याप्तिरित्याह । मायिकस्येत्यादिना । आविद्यकत्वोपपादनायासाधारणस्येत्युक्तम् । स्वस्यैव प्रतीयमानतया दुःखादेः आविद्यकत्वम्, मायिकत्वे ऐन्द्रजालिकत्वम् सर्वसाधारण्यं स्यादिति भावः । निरासाच्चेति ॥ आविद्यकत्वेन संमतस्यापि रूप्यादेः स्वग्रन्थे मायिकत्वेनवर्णनादित्यर्थः । तथा च मायिकत्वादिप्रयुक्तो व्यावहारिकत्वप्रातिभासिकत्वयोर्भेदो न सम्भवति इत्याशयः । अर्थगतेति ॥ जगति रूप्ये वार्थविशेषे सति तन्निबन्धनौ अर्थक्रियाकारित्वतदभावौ, आदानादिव्यवहारनिर्वाहकत्वतदभावौ च युक्तौ, न त्वर्थक्रियाकारित्वादानादिव्यवहारनिर्वाहकत्व तदभावरूप एवार्थविशेष इत्यर्थः। अर्थक्रिया-कारित्वाद्यवच्छेदकीभूतं व्यावहारिकत्वादिकमन्यदेव वक्तव्यम् । न तु तदेव तदिति भावः । किं च व्यावहारिकलक्षणस्य प्रातिभासिकेऽतिव्याप्तिरित्यस्वरसमाह ॥ स्वाप्नेऽपीति ॥ अर्थक्रियाकारित्वा-देरित्यादिपदेनादानादिव्यवहारनिर्वाहकत्वग्रहणम् । ननु व्यावहारिकार्थक्रियाकारित्वं व्यावहारिकत्वं विवक्षितम् । अतो न प्रातिभासिके स्वाप्नकुंभादावतिव्याप्तिरिति चेन्न आत्माश्रयादित्याह। व्यावहारिकस्येति ॥ तस्य अर्थक्रियाकारित्वस्य । इदमुपलक्षणम् । स्वाप्नकमनीयाङ्गनालिङ्गनादौ प्रातिभासिके चरमधातूत्सर्गरूपव्यावहारिकार्थक्रियाकारित्वसद्भावादतिव्याप्तिश्चेति द्रष्टव्यम्' ब्रह्मधी-बाध्यत्वरूपव्यावहारिकलक्षणस्य प्रातिभासिकरूप्यादावतिव्याप्तिरित्याह । त्वन्मत इति ॥ शुक्तीति ॥ शुक्त्यवच्छिन्नचैतन्यरूपब्रह्मधीर्नेदं रजतमित्येवं रूपा तद्बाध्यत्वादित्यर्थः । किं च ब्रह्मण्यध्यस्ततया प्रातिभासिकस्य क्षणिकत्वादेरपि 'ब्रह्मस्थायि' इत्येवं स्थायित्वप्रकारकब्रह्मधीबाध्यत्वेनातिव्याप्तिरित्याह ॥ ब्रह्मणीति ॥ ब्रह्मप्रमेति ॥ शुक्त्यवच्छिन्नचैतन्यरूपब्रह्मधियः स्थायित्वप्रकारकधियः विशिष्टविषयकत्वेन सप्रकारकत्वेन चाप्रामाण्यात् न पूर्वोक्तदोष इति भावः । त्वन्मत इति ॥ प्रमाबाध्यत्वमेव व्यावहारिक-त्वमस्तु । ब्रह्मपदं व्यर्थम् । ब्रह्मज्ञानव्यतिरिक्तस्य समस्तज्ञानस्यापि सप्रकारकत्वेन निष्प्रकारकज्ञानत्व-रूपप्रमात्वाभावे ब्रह्मज्ञानस्यैव निष्प्रकारकज्ञानत्वरूपप्रमात्वाङ्गीकारेण व्यावर्त्याभावादिति भावः। ब्रह्मज्ञानस्यैव प्रमात्वादित्युक्त्या तदन्यप्रामाया एवाभावेन तद्गर्भप्रातिभासिकलक्षणमसम्भवीत्यर्थः । ननु मास्तु तर्हि ब्रह्मपदं, प्रमाबाध्यत्वमेव व्यावहारिकत्वमिति लक्षणमस्तु इत्याशङ्क्य निराकरोति ॥ नापि

प्रमेति ॥ वेदान्त जन्यनिष्प्रकारकप्रमेत्यर्थः । भ्रान्तीति ॥ इदं रजतमित्यादि ज्ञानबाधकस्य नेदं रजतमित्यादेर्निष्प्रकारकत्वाभावेन प्रमात्वाभावात् भ्रान्तित्वमेवेति तद्बाध्यत्वात् रूप्यस्य प्रातिभासिकत्वमित्यर्थः । भ्रान्तिबाध्यत्वरूपप्रातिभासिकत्वस्य पारमार्थिके ब्रह्मण्यापि सत्त्वेनातिव्याप्तिरित्याह । भ्रान्तिबाध्यत्वस्येति ॥ निष्प्रकारकज्ञानस्यैव प्रमात्वात् सप्रकारकज्ञानं भ्रमरूपमेव त्वन्मते । अतो भ्रमरूपबाधविषयत्वं ब्रह्मण्यप्यस्ति ब्रह्मण्यारोपितक्षणिकत्वबाधकं यत् ब्रह्म स्थायीति स प्रकारकं भ्रमरूपं बाधकज्ञानं तद्विषयत्वात् ब्रह्मण इत्यर्थः । शुद्धब्रह्मधीति ॥ निष्प्रकारकब्रह्मधी इत्यर्थः । ब्रह्म स्थायीति धीः स्थायित्वविशिष्टब्रह्मविषयकत्वेन न शुद्धब्रह्मधीः । अतः तद्बाध्यस्य क्षणिकत्वादेः प्रातिभासिकत्वम् । तथा नेदं रजतमित्यादेरपि शुक्त्यवच्छिन्नचैतन्यविषयकत्वेन शुद्धब्रह्मधीत्वाभावात् तद्बाध्यस्य रूप्यादेः प्रातिभासिकत्वमिति भावः । शुद्धब्रह्मधीबाध्यत्वं व्यावहारिकत्वमित्यत्र शुद्धशब्देन जगद्भ्रमकालेऽधिष्ठानत्वेन ज्ञानं यत् विशेष्यमात्रं तत् विवक्षित्वा तद्धीबाध्यत्वं कथ्यते? उत जगद्भ्रान्तिकालेऽज्ञातो यो द्वितीयाभावादिः तद्विशिष्टं तदुपलक्षितं वा विवक्षित्वा तद्धीबाध्यत्वं कथ्यते । नाद्य इत्याह ॥ शुद्धशब्देनेति ॥ अबाधकत्वादिति ॥ निष्प्रकारकज्ञानस्य सप्रकारकज्ञानबाधकत्वायोगादित्यर्थः । न द्वितीय इत्याह ॥ तत्कालेति ॥ अखण्डार्थत्वहानिरिति । विशेषणस्योपलक्षणस्य वा द्वितीयाभावस्यैव प्रकारत्वेन वेदान्तानां सप्रकारकज्ञानजनकत्वापत्त्याऽखण्डार्थत्वहानिरित्यर्थः । द्वितीयाभावादेरिति ॥ द्वितीयाभावविशिष्टस्य ब्रह्मज्ञानस्याबाधकत्वे द्वितीयाभावादिरूपप्रकारस्य बाध्यजगद्बहिर्भूतत्वापत्त्या सत्यत्वापत्तिः । तस्यापि प्रकारस्य बाध्यत्वे निष्प्रकारकस्यैव बाधकत्वमुक्तं स्यात् । तच्चायुक्तमिति भावः । महावाक्येति ॥ तत्वमस्यादिमहावाक्येत्यर्थः । तदन्यधीति ॥ प्रातिभासिरूप्यादिबाधकस्य नेदं रजतमित्यादिधियो महावाक्यजन्यत्वाभावादिति भावः। एतेनेत्युक्तमेव विशदयति । महावाक्येति ॥ ज्ञानस्येति शेषः । महावाक्यजन्यधियो वा चरमधियो वा निष्प्रकारत्वमभिप्रेतम्? उत द्वितीयाभावादिप्रकारकत्वम्? नाद्य इत्याह ॥ महावाक्येति ॥ तस्य निष्प्रकारकत्वोपपादनाय अखण्डार्थवेदान्तजन्येत्युक्तम् । द्वितीये त्वाह ॥ सप्रकारकत्वे चेति बाधककोटिनिविष्टत्वेन बाध्यबहिर्भूतत्वादिति भावः । अत एवेति ॥ निष्प्रकारकस्य बाधकत्वायंगादेवेत्यर्थः । पारमार्थिकेति ॥ पारमार्थिकब्रह्मविषयकधीबाध्यत्वात् जगतो व्यावहारिकत्वम् व्यावहारिकशुक्त्यादिविषयकधी बाध्यत्वात् रूप्यादेः प्रातिभासिकत्वमिति भावः । अन्योन्याश्रयादिति ॥ सत्तात्रैविध्यसिद्धौ तदवान्तरभेदघटितलक्षणसिद्धिः । तत् सिद्धौ च तदधीनव्यावहारिकप्रातिभासिकरूपावान्तरभेदसिद्ध्या सत्तात्रैविध्यसिद्धिरित्यान्योन्याश्रयः स्यादित्यर्थः । अन्योन्येति ॥ व्यावहारिकेतरत्वं प्रातिभासिकत्वम् । तदितरत्वं व्यावहारिकत्वमित्यर्थः । भेदकेति ॥ इतरत्वस्य भेदलक्षणाधीनत्वेन तदभावे इतरत्वस्यैवायोगात् । अन्यथा स्वापेक्षयाऽपि स्वस्येतरत्वप्रसङ्ग इति भावः ।

अन्योन्येति ॥ व्यावहारिकत्वज्ञाने तदितरत्वरूपप्रातिभासिकत्वज्ञानं, तद्ज्ञाने तु तदितरत्वरूप व्यावहारिकत्वज्ञानमित्यन्योन्याश्रयादित्यर्थः । एवं च प्रतिज्ञातं सत्याशेषविश्वकारणत्वं प्रथमपरिच्छेदेनोपपाद्योपसंहरन् वक्ष्यमाणमुपक्षिपति ॥ तस्मादिति ॥

यादवार्यगुरुप्रोक्तो भावो व्यासमुनेरयम् ।
परिच्छेदस्यादिमस्य श्रीनिवासेन विस्तृतः ॥

**इति यदुपत्याचार्यपूज्यपादाराधकेन**
**श्रीनिवासेन विरचिते न्यायामृतप्रकाशे**

**प्रथमपरिच्छेदः समाप्तः ।**

# APPENDIX - I

## न्यायामृते अद्वैतसिद्धौ व्याख्यानत्रये च उल्लिखिताः ग्रन्थाः ग्रन्थकर्तारश्च

### ग्रन्थकर्तारः



### ग्रन्थाः



# Appendix II-A

## न्यायामृते सङ्ग्रहश्लोकाः

### सत्यज्ञानादीनामखण्डार्थत्वानुमानभङ्गः

सामान्यतोऽपि न ज्ञातो धर्मी चन्द्रो यदा तदा।
न बुभुत्सा न सन्देहो नानुवादश्च युज्यते ।
तस्माच्चन्द्रेतरस्मात् भेदको धर्म एवहि ।
पृष्टस्तस्मात् प्रकृष्टादिवाक्यं नाखण्डगोचरम् ।। न्या.१७
सौगतोक्तस्वाभिमतशून्यतासिद्धये परैः ।
सत्यज्ञानादिवाक्यानां लक्षणोक्ता परात्मनि ।।
न्या. ३०

### तत्त्वमस्यादिवाक्यस्याखण्डार्थत्वानुभङ्गः

कालद्वयेन योगस्य क्रमेण स्थायि वस्तुनि ।
नैल्यरक्तत्ववत् सत्त्वात् तदुक्तौ का विरुद्धता ।
विशेष्ये धर्मसंसर्गपरं चापि विशेषिते ।
तत्परं नेत्यखण्डार्थं स्याच्चेत् सर्वं तथा भवेत् ।।
न्या. ११७

प्रत्यक्षत्वादेवदत्तस्वरूपं नैव बोध्यते ।
सोऽयमित्यादिवाक्येन किन्त्वैक्यादि विशेषितम् ।।
न्या. १२१

### ब्रह्मणो निर्गुणत्वभङ्गः

उपक्रमादिन्यायेन श्रुतिलिङ्ग नयात् तथा ।
विशेषसामान्यनयान्यायान्निरवकाशतः ।
बाहुल्य न्यायतश्चोपजीवत्वन्यायतस्तथा ।

पशुच्छागनयाच्चैव सविशेषनयात्तथा ।
आदृतत्त्वात् सूत्रकृता प्रबला सगुणश्रुतिः ॥
न्या. १५९

हिंसाहिंसावाक्यसाम्याद् गुणिनिर्गुणवाक्ययोः ।
अविरोधेऽप्यमानत्वं ब्रूषे सौगतसौहृदात् ॥ न्या.१५९
शुष्कतर्कैः श्रौतगुणबाधे ब्रह्मापि बाधितम् ।
भवेत् श्रुत्या शुष्कतर्के धिक्कारस्तु द्वयोः समः ॥
न्या. १६०

### परमते ब्रह्मणो ज्ञानत्वानन्दत्वाद्वितीयत्वनित्यत्वसाक्षित्वभङ्गः

अर्थप्रकाशरूपत्वं ज्ञानत्वं ब्रह्मणः कथम् ।
अन्यार्थाभावतो मोक्षे स्वेन स्वस्याप्यवेदनात् ।
न्या. २१७, सिद्धि. २२०

निरुपाध्यनुकूलत्ववेदनीयं सुखं मतम् ।
निर्विशेषमवेद्यं च कथं ब्रह्म सुखात्मकम् ॥
न्या. २१७, सिद्धि. २२१

द्वैतभावस्तात्त्विकश्चेत्तेन स्यात् सद्वितीयता ।
अतात्त्विकश्चेद् द्वैतेन सद्वितीयत्वमापतेत् ॥
न्या. २१८, सिद्धि. २२२

काले कालापरिच्छिन्ने ध्वंसे चाध्वंसयोगिनि ।
नित्ये सति कथं नित्यं ब्रह्मैवेति मतं तव ॥
न्या. २१९, सिद्धि. २२३

### ब्रह्मणः उपादानत्वभङ्गः

विकारवत्कारणत्वमुपादानत्वमुच्यते ।
निर्विकारतया वेदसिद्धे ब्रह्मणि तत् कथम् ॥
न्या. २२९

### ब्रह्मणः निमित्तत्वभङ्गः

अधिष्ठाने तथा भ्रान्ते भ्रामकेच न कर्तृता ।
लौकिकी कृतिमत्ता तु न दृष्टाऽऽरोपितं प्रति ॥
न्या. २३७, सिद्धि. २३८

### आत्मनः पराभिमतस्वप्रकाशत्वभङ्गः

मामहमिति जानामि तदात्मानमवेदिति ।
प्रत्यक्षेण तथा श्रुत्या ज्ञप्तौ कर्तुश्च कर्मता ।
गमनादौ त्वदृष्टत्वान्न कर्तुः कर्मतेष्यते
अन्यथाशब्दशब्दादेः स्ववाच्यत्वादिकं कथम् ॥
न्या. २७३

कुर्यात् स्वकार्यं स्वस्मिंश्चेत् ज्ञानं स्वविषये तदा ।
द्वेषाज्ञानादिकं कुर्यात् स्वकार्यमपि चात्मनि ।
न्या. २७५

### अवाच्यत्वभङ्गः

अवाच्यलक्ष्यत्वादिपदैर्लक्ष्यं चेद्वाच्यतादिकम् ।
स्यान्नदीशब्दलक्ष्यस्यानदीत्वमिव ध्रुवम् ॥ न्या.३१५
वाच्ययोगितया बुद्धं लक्ष्यं ब्रह्म च वैदिकम् ।
अवाच्यं चेति वक्तव्ये लक्षकेह्यनवस्थितिः ॥
न्या. ३१७

### सामान्यतो भेदखण्डनोद्धारः

भेदः स्वरूपं धर्मो वेत्यादिरूपा बिभीषिका ।
अकारमात्रप्रक्षेपे स्यादभेदे बिभीषिका ॥ न्या. ३३१
भेदस्य खण्डनेनैव यद्यभेदः प्रसिद्ध्यति ।
अभेदखण्डनेनैव तर्हिभेदोऽपि सिद्ध्यतु ॥ न्या.३३१
नहि सत्यमसत्येभ्यो भिन्नं नेत्युक्तितोपि च ।
सत्यं न सत्यमित्युक्तावधिकास्ति विरुद्धता ॥
न्या. ३३२

शुष्कतर्कैर्भेदबाधे स्यादभेदोऽपि बाधितः ।
प्रमितत्वात् तत्र तर्कास्तुच्छाश्चेत् प्रकृते न किम्?
न्या. ३३२

भेदाद् भिन्नतया स्वार्थं बाधगीर्गाहते न वा ।
आद्ये भेदः स्थिरोऽन्त्ये तु न सा स्याद् भेदबाधिका
न्या. ३३३, सिद्धि. ३३७
ब्रह्मणोऽनृततो भेदः सत्यश्चेद् भेदखण्डनम् ।
व्याहतं स्यादसत्यश्चेत् स्यात् कथं भेदो निवार्यते ।

भेदाभेदभिदा चेत् स्यात् कथं भेदो निवार्यते ।
भेदाभेदभिदा नो चेत् कथं भेदो निवार्यते ॥
न्या. ३३४

ब्रह्मण्यनृतभेदस्य सत्यत्वे कलशे स्वतः ।
अभेदस्य च मिथ्यात्वे भेदे द्वेषस्तु किं कृतः ॥
न्या. ३३५

## विशिष्य भेदखण्डनोद्धारः

अज्ञानहानिवद् ब्रह्मरूपधीवदभेदवत् ।
स्वरूपत्वेपि भेदस्य सापेक्षत्वे हि युज्यते ।
न्या. ३४८

पुरुषार्थे दुःखमिव ब्रह्मण्यज्ञानवत्तथा ।
मोक्षे च मोहवन्नान्तर्गतं कुम्भादिकं पटे ।
तटस्थत्वेपि कुम्भादेरप्रतीतौ न भेदधीः ।
अज्ञानादेरप्रतीतौ तद्भान्याद्यप्रतीतिवत् ।
न्या. ३५०, सिद्धि. ३६४

विदारकत्वेपि पटाद् घटस्य स्याद्विदारणम् ।
न तु स्वतो ह्यथाह्यैक्यं स्वेनैव न परेण तु ॥
न्या. ३५१

विदारणस्य भेदस्य घटत्वे हि घटोपि च
विदारणं स्यान्न घटे स्वस्य स्वस्मिन्न वृत्तितः
न्या. ३५१

भेदस्य च स्वरूपत्वे ये वदन्ति हि शून्यताम् ।
अद्भुतास्ते यतोऽन्यस्य प्रतियोगि त्वमिष्यते ॥
न्या. ३५१

प्रतियोगिनोहि भेदोऽयं न तु स्वस्मात् कथंचन ।
विभागेनैवल्पतैव स्यात् कुत एव च शून्यता ॥
न शून्यानां हि संयोगात् भावो वस्तु न इष्यते ।
विदारणार्थो धातुश्च विभागगुणवाचकः ॥ न्या. ३५२
स्वरूपत्वेऽपि भेदस्य युज्यते संशयादिकम् ।
स्वप्रभप्रत्यगात्मत्वेप्यभेदे संशयादिवत् । न्या. ३५३
सापेक्षत्वात् सावधेश्च तत्त्वे द्वैतप्रसङ्गतः ।
नैकाभावादसंदेहान्न रूपं वस्तुनोऽभिदा । न्या. ३५३

अपर्यायत्वेकतरपरिशेषविशेष्यताः ।
अभेदस्येव भेदस्य स्वरूपत्वेपि सङ्गताः ॥
न्या. ३५४

सद्भेदस्य स्वरूपेण ज्ञातस्याप्रतिबन्धके ।
प्रतियोगिता न भेदे न ज्ञाते तत्र मिथः श्रयः ।
जीवस्य ब्रह्मणाह्यैक्ये ज्ञाते जीवकतामतिः ।
ब्रह्मणीति तवापि स्यादन्यथाऽन्योन्यसंश्रयः ॥
न्या. ३५७

विशेषणत्वं भेदेन ज्ञानं नापेक्षतेऽन्यथा ।
न स्याद्विशेषणं ह्यैक्यं ब्रह्मभिन्नं विरोधतः ॥
न्या. ३५९

एतादृशस्य वक्तारावुभौ जात्युत्तराकरौ ।
मायी माध्यमिकश्चैव तावुपेक्ष्यौ बुभूषुभिः ॥
न्या. ३६१

## जीवब्रह्मभेदे अनुमानानि

अप्रमेयेऽनुमानस्य प्रवृत्तिर्न कथञ्चन ।
प्रमेयस्य त्वनात्मत्वात्तदैक्यानुमितिः कथम्?
न्या. ४१९, सिद्धि. ४२३

## अहं ब्रह्मास्मीत्यादि श्रुत्यर्थः

चिता चिदैक्यं सिद्धं नः सार्वज्ञादिविशिष्टयोः
ऐक्यं तु धर्मि ग्राहिभ्यां श्रुत्यक्षाभ्यां विरुध्यते ।
न्या. ५०३

एकस्यामुख्यवृत्त्यैव तत्त्वमित्यस्य सम्भवे ।
भेदेनैवैक्यपरताऽनेकलक्षणया कुतः ॥ न्या. ५१५
अवकाशोज्झितानेकमुख्यानामनुसारतः ।
युक्तोऽतादृग्विभक्तेर्हि बाधः प्रयाजशेषवत् ॥
न्या. ५१६

वाक्यशेषानुसारेण मुख्यार्थस्यैव हि सम्भवे ।
तद्विरुद्धानेकपदलक्षणा नैव युज्यते ॥ न्या. ५१९

## बिम्बप्रतिबिम्बैक्यभङ्गः

शतांशश्चन्द्रबिम्बस्य गुरुबिम्बं यथा तथा ।
भेदेपि न्यूनतामात्रात् जीवो ब्रह्मांश उच्यते ॥
न्या. ५७२

छायापुरुषवत्तस्मात् छायावत्प्रतिसूर्यवत् ।
प्रतिध्वानादिवद् भिन्नं प्रतिबिम्बं हि बिम्बतः ॥
न्या. ५७९

## मनन निदिध्यासनयोः विवरणोक्तश्रवणाङ्गत्वभङ्गः

यतो विचारः करणं नैव बोधे शब्दप्रमाणजे ।
न चायं सन्निपत्याङ्गं शब्दस्य करणात्मनः ॥
करणान्तर्गतो येन विचारो हन्तिवद् भवेत् ।
सन्निपात्यपि नैवासौ शेषी मत्यादिकं प्रति ॥
अन्यथा हि भवेद्धन्तेः प्रयाजान् प्रतिशेषिता ।
हीषादेश्च यथा भिन्नकाले सौरभशेषिता ॥
श्रवणादेस्तथा भिन्नफले शब्दादिशेषिता ।
तस्मान्न युक्ता मत्यादेः श्रवणं प्रति शेषिता ॥
न्या. ६०५

श्रवणादेः विवरणोक्त नियमविधित्वभङ्गः
श्रवणं चापरोक्ष्याय त्वन्मते श्रवणे न च ।
नापरोक्ष्यं क्वचिद् दृष्टं तेनापूर्वविधिर्भवेत् ॥
न्या. ६२१

नियमादृष्टसाध्यस्य व्यावर्त्यस्याप्यभावतः ।
श्रवणादेर्नियमनं परपक्षे न युज्यते ॥
न्या. ६२३, सिद्धि. ६२५

## अध्ययनविधेः नित्यत्वेपि विचारविधायकत्वम्

ब्रह्मज्ञानफलस्यापि स्वाध्यायाध्ययनस्य या ।
टीकायां नित्यता प्रोक्ता सापि नैव विरुध्यते ॥
न्या. ६४५

## स्वमते श्रवणादिविधिसमर्थनम्

श्रवणं शब्दजं ज्ञानमुपपत्त्यनुचिन्तनम् ।
मतिर्निरन्तरा चिन्ता निदिध्यासनमुच्यते ॥ न्या. ६४७

## ज्ञानविधिसमर्थनम्

पत्न्यवेक्षितमित्यत्र ज्ञानस्यैव विधानतः ।
सूक्ष्मशास्त्रार्थबुद्धेश्च कृतिसाध्यत्वदर्शनात् ॥
ध्यानस्यापि च विज्ञानव्यतिरेकानिरूपणात् ।
ज्ञानस्वरूपमपि च श्रवणादि विधीयते ॥ न्या.६५५

## शाब्दप्रत्यक्षभङ्गः

परोक्षे चापरोक्षेव चाक्षुषे स्पार्शिनीव च ।
अपरोक्षे परोक्षे धीर्युक्ता कारणशक्तितः ॥
न्या.६६५

## अविद्यानिवृत्तिभङ्गः

वृत्त्योपलक्षितचितः पश्चादिव पुरापि च ।
सद्भावान्मोहकालेऽपि मोहहानिः प्रसज्यते ॥
न्या. ६७४

वृत्त्योपलक्षितस्यापि चिन्मात्रत्वे न साध्यता ।
पाकोपलक्षितस्यैव त्वाधिक्ये सविशेषता ॥
न्या. ६७४

प्रागेव सिद्धो मोक्षश्चेत् श्रवणादिश्रमो वृथा ।
असिद्धौ नात्ममात्रत्वमन्यत्वे सद्वितीयता ॥
न्या. ६७४, ६७६

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।
इत्येतन्नैव घटते जीवन्मुक्तौ प्रसक्तितः ॥
न्या. ६७५

यः पुमर्थः स साध्यो न आत्मानन्दचिदात्मकः ।
या च साध्या वृत्तिरिष्टा न तत्र पुरुषार्थता ॥
न्या. ६७५

यक्षानुरूपबलिवत्प्रतियोगिविलक्षणः ।
मोहध्वंसो यदि तदा भवेत् सदसदात्मकः ॥
न्या. ६७६

## जीवन्मुक्तिभङ्गः

तस्मात्परमते मोहकार्यत्वादखिलस्य च ।
ज्ञानेन मोह नाशाच्च जीवन्मुक्तिर्न युज्यते ॥
न्या. ६९७

## Appendix II-B

# अद्वैतसिद्धौ सङ्ग्रहश्लोकाः

## तत्त्वमस्यादिवाक्यस्याखण्डार्थत्वानुभङ्गः

तस्माद् वृथा रोदिषि मन्दबुद्धे तव
भ्रमादेव हि दुःखमेतत् ।
तस्यापनोदो विहितः
प्रमाणैः तुभ्यं तु रोचेत स नेति चित्रम् ॥
मानं वेदान्तवाक्यानि निर्गुणाखण्डबोधनात्
निर्गुणत्वं च तस्योक्तं श्रुत्या युक्ति सहायया ॥
सिद्धि. १२६

### परमते ब्रह्मणो ज्ञानत्वानन्दत्वाद्वितीयत्वनित्यत्वसाक्षित्वभङ्गः

वंशीविभूषितकरान्नवनीरदाभात्
पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्
कृष्णात् परं किमपि तत्त्वमहं न जाने ॥
सिद्धि. २१९

ब्रह्मण्यवाच्ये यो विद्वान् वाच्यतामधिगच्छति ।
स निस्त्रपो निमित्तानां विरहैः प्रतिबोध्यताम् ।

### विशिष्य भेदखण्डनोद्धारः

अस्वव्याघातकैरेव जातिभिन्नैः सदुत्तरैः ।
निरस्तभेदमादाय स्वात्माभेदो निषीदति ।
सिद्धि. ३७२

### विशेषसमर्थनम् (विशेषखण्डनम्)

तस्मादेवं विशेषोऽयं न मानविषयः सखे ।
विषादं जहि मत्सिद्धाविद्यया सर्वसङ्गतिः ॥
सिद्धि. ४०२

### भेदपञ्चके प्रत्यक्षम्

एवं प्रत्यक्षतः प्राप्तभेदस्यैव निवारणात् ।
असाक्षात्कृत जीवेशभेदादौ का कथा तव ॥
सिद्धि. ४०९

### जीवब्रह्मभेदे अनुमानानि

अप्रसिद्धविशेषत्वादन्यथैवोपपत्तितः ।
सर्वशक्त्यल्पशक्त्यादेः न भेदे तन्त्रता ततः ॥
सिद्धि. ४२३

### अहं ब्रह्मास्मीत्यादि श्रुत्यर्थः

तस्माद् दृष्टान्तवर्याणां भेदे तात्पर्य हानितः ।
एतेषामनुसारेण छेदो नातदिति स्फुटम् ॥
सिद्धि. ५२५

स्थितानि ग्रन्थेषु प्रकटमुपदिष्टानि गुरुभिः ।
गुणो वा दोषो वा न मम परवाक्यानि वदतः ॥
परं त्वस्मिन्नस्ति श्रमफलमिदं यन्निजधिया ।
श्रुतीनां युक्तीनामकलि गुरुवाचां च विषयः ॥
सिद्धि. ५९८

### शाब्दप्रत्यक्षभङ्गः

विश्वेश्वराख्यस्य गुरोः प्रसादादद्वैतसिद्धिर्मधुसूदनस्य
अभूद्भूमिः खलुदूषणानां गुणैरमेयैरवगुम्फितश्रीः ।
समम्भ्रममपेक्षया परगुणोन्नतिर्दुस्सहा ।
नितान्तमनपेक्षया निजपुमर्थहानिः परा ॥
अतः सुमतयो यथानयमुपेक्ष्य दुर्मत्सरम् ।
प्रयोजनवशानुगाः कुरुत मत्कृतौ सत्कृतिम् ॥
सिद्धि. ६६९

तस्मात् स्वरूपानन्दस्य स्वप्रकाशात्मरूपिणः ।
प्राप्तिर्मुक्तिर्न तत्रास्ति तारतम्यं कथञ्चन ।
सिद्धि. ७१८

### बिम्बप्रतिबिम्बैक्यभङ्गः

प्रतिबिम्बस्य बिम्बेनैक्ये व्यवस्थिते ।
ब्रह्मैक्यं जीवजातस्य सिद्धं तत्प्रतिबिम्बनात् ॥
सिद्धि. ५८४

# Appendix III-A

## द्वैताकरग्रन्थेभ्यः उदाहृताः श्लोकाः

### ब्रह्मसूत्रानुव्याख्यानात् सर्वमूलोदाहृतप्रमाणवचनेभ्यश्च उदाहृताः श्लोकाः

किञ्चिद्विधीयतेऽनूद्य वाक्येनेति सतां स्थितिः ।
सत्यज्ञानादिवाक्येन कथ्यतां किं विधीयते ।
न्या. २३, सिद्धि. ४३

अज्ञातं बोध्यते किञ्चिद् वाक्येनेति सतां स्थितिः ।
सत्यज्ञानादिशब्देस्तु किमज्ञातं प्रबोध्यते ॥
न्या. २३.

सत्यज्ञानादिकेऽप्येवं न व्यावृत्त्याप्रयोजनम् ।
व्यावर्त्यस्यास्याविशेषत्वे तदखण्डं च खण्डितम् ॥
न्या. २६.

को हि मीमांसको ब्रूयाद्विरोधे शास्त्रयोर्मिथः ।
एकं प्रमाणमितरदप्रमाणं भवेदिति ॥
न्या. १५१ सिद्धि. १६५,

उपासनायाः कार्यत्वे विष्णोरात्मत्व एव च ।
उभयत्रापि तात्पर्यमात्मोपासादिके विधौ ॥
न्या. १५३, सिद्धि. १६७.

उत्तरस्मिन् तापनीये शैब्यप्रश्नेऽथकाठके ।
माण्डूक्यादौच सर्वत्र विष्णोपास्तिरितीरिता ॥
न्या. १५४

इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनम् ।
इत्थंभावो हि धर्मोस्य न चेन्न प्रतियोगिता ।
धर्मारोपोऽपि सामान्यधर्मादीनां हि दर्शने ।
सर्व धर्मविहीनस्य धर्मारोपः क्व दृश्यते ॥
सिद्धि. १७६, न्या. १६०

ब्रूतेऽसतोपि मोहादीन् दोषान् विष्णोर्गुणान् सतः ।
निन्हुते परमे तत्त्वे द्वेषादेवासुरो जनः ॥ न्या.१६०

बहु स्यामिति सङ्कल्प्य तेजः प्रभृति सर्जनम् ।
गुरुः स्यामिति सङ्कल्प्य शिष्यसम्पादनादिवत् ।
न्या. २४१

ज्ञातृज्ञेयविहीनं ते ब्रह्म ज्ञानात्मकं यदि ।
भोक्तृभोज्यविहीनापि भवेत्तर्हि भुजिक्रिया ॥
प्र. ३०६

पदं च निर्गुण इति कथं गौणं वदिष्यति ।
गुणाभावोपलक्ष्यं चेत् पदं तदपि वाचकम् ।
येन लक्ष्यमिति प्रोक्तं लक्ष्यशब्देन सोऽवदम् ।
न्या. ३१५

अद्भुतत्वादवाच्यं तदतर्क्याज्ञेयमेव च
अनन्तगुणपूर्णत्वादित्यूदे पैङ्गिनां श्रुतिः ।
अवाच्यमिति लोकोपि वक्त्याश्चर्यतमं भुवि ॥
न्या. ३१६

न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते ।
पश्यन्तोपि न पश्यन्ति मेरो रूपंविपश्चितः ॥
न्या. ३१६

एकस्यापि हि गौणार्थस्वीकृतौ सताम् ।
महती जायते लज्जा यत्र तत्राखिलारवाः ॥
अमुख्यार्था सति वदन् यस्तन्मार्गानुवर्तिनाम् ।
कथं न जायते लज्जा वक्तुं शब्दत्वमात्मनः ॥
न्या. ३१८

सर्वं सामान्यतो यस्मात् सर्वैरेवानुभूयते ।
तस्माद् व्यावृत्तता सर्वैः सर्वस्मादनुभूयते ॥
न्या. ३५६

धर्मित्वप्रतियोगित्वतद्भावा युगपद्यदि ।
विशेषणं विशेष्यं च तद्भावश्चैव गृह्यते ।
को विरोधः स्वरूपेण गृहीतो भेद एव तु
अस्याममुष्मादिति पुनर्विशेषेणैव गृह्यते ।
न्या. ३५८, सिद्धि. ३७०.

अन्यत्वाग्रहणे प्रोक्तः कथमन्योन्यसंश्रयः ।
अन्यत्वं यदि सिद्धं स्यात् कथमन्योन्यासंश्रयः ॥
न्या. ३५८, सिद्धि. ३७०

भेदहीनेत्वपर्यायशब्दान्तरनियामकः ।
विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ॥
न्या. ३९५

उक्त्वा धर्मान् पृथक्त्वस्य निषेधादेवमेवहि ।
विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः ॥
न्या. ३१६

अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ॥
स्वाभाविकं तयोरेतन्नान्यथा तु कथञ्चन ॥
न्या. ४१८, सिद्धि. ४२२

सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता ।
तत्सिद्धौ चैव तत्सिद्धिरित्यन्योन्यव्यपाश्रयः ॥
न्या. ४४३

सुखदुःखादिभोगाश्च स्वरूपैक्ये न भेदतः ।
दृश्यो ह्युपाधिभेदेऽपि हस्तपादादिगो यथा ॥
नानादेहगभोगानुसन्धानं योगिनो यथा ।
न चेद् भोगानुसन्धानं तदिच्छायोगिनः कुतः ।
अनुसन्धानरहितमैक्यं चेदैक्यता न तत् ।
चैतन्यैक्येऽनुसन्धानं प्रमाणं नैव चापरम् ॥
न्या. ४४३.

स चेदुपाधिसम्बन्धः एकदेशोऽथ सर्वगः ।
एकदेशेनवस्था स्यात् सर्वगश्चेन्न भेदकः ॥
न्या. ४४४, सिद्धि. ४४७

स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि
सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टतः ॥
न्या. ४७६

शास्त्रगम्यपरेशानाद्भेदः स्वात्मन ईयते ।
अनुभूतिविरोधेन कथमेकत्वमुच्यते ।
सार्वज्ञादिगुणं जीवाद्भिन्नं ज्ञापयति श्रुतिः ।
ईशं तामुपजीव्यैव वर्तते ह्यैक्यवादिनी । न्या. ५०२

भ्रमेऽप्यभ्रमभागोऽस्ति तन्मात्रमुपजीव्य तु ।
बाधकज्ञानवृत्तिः स्यान्न चैवं सुपरीक्षितः ॥
न्या. ५०४

यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत्
ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषतः ।
तदधीनत्वतादेश्य तात्स्थ्य तादात्म्य पूर्वकैः ।
निमित्तैः; तत्त्वमस्यादि सामानाधिकरण्यगीः ।
न्या. ५१५

अविरोधश्च सादृश्यमेकदेशस्थितिस्तथा ।
एकीभावस्तथा प्रोक्तो नैकीभावः स्वरूपयोः ॥
न्या. ५४५

अपरोक्षदृशिश्चैव श्रवणान्मननादनु ।
सम्यङ् निश्चिततत्त्वस्य निदिध्यासनया भवेत् ॥
न्या. ६०७

ध्याने श्रुत्यादिभिः साक्षात्काररूपफलान्विते ।
मननश्रवणे अङ्गे निरस्याज्ञानसंशयौ ॥ न्या. ६०८
शब्देन दृश्यते ब्रह्मेत्यत्र मानं न दृश्यते ।
मनसा दृश्यते ब्रह्मेत्यत्र मानं तु दृश्यते ॥
ब्रह्मेशानादिभिः देवैः समेतैर्यद्गुणांशकः ।
नावसाययितुं शक्यो व्याचक्षाणैश्च सर्वदा ॥
(स्मृतिः) सिद्धि. १६१, न्या. १४९
तेजो बलैश्वर्यमहावबोध सद्वीर्यशक्त्यादिगुणैकराशिः॥
(स्मृतिः) न्या. १४९
ये मामशेषदोषोज्झं गुणसर्वस्वबृंहितम् ।
जानात्यस्मैप्रसन्नोऽहं दद्यां मुक्तिं न चान्यथा ॥
(स्मृतिः) सिद्धि. १७१, न्या. १५६
नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिकाः ।
न च रमन्त्यहोऽसदुपासानयाऽऽत्महतः ॥
युक्तोयुक्तश्च यत्रार्थः आगमस्य प्रतीयते ।
स्यात्तत्र युक्त एवार्थो न वाक्यायुक्तिरिष्यते ।
न्या. १५९

सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः ।
परमानन्दसन्दोहाः ज्ञानमात्राश्च सर्वशः ॥
न्या. २०८, सिद्धि. २१०
द्रोणं बृहस्पतेर्भागं द्रोणिं रुद्रांशसम्भवम् ।
दुर्वासाः शङ्करस्यांशः । न्या. २०८, सिद्धि. २११
यस्यायुतायुतांशोऽपि विश्वशक्तिरवस्थिता ।
परब्रह्मस्वरूपस्य प्रणमामि तमव्ययम् ॥
न्या. २०८, सिद्धि. २११
अतो हि वैष्णवा लोकाः नित्यास्ते चेतनात्मकाः ।
मत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥
सिद्धि. २१२, न्या. २०८
न यत्र माया किमुतापरे हरेः
अनुव्रता यत्र सुरासुरार्चिताः ॥
श्यामावदाताः शतपत्रलोचनाः
पिशङ्ग वक्त्राः सुरुचः सुपेशसः ॥ सिद्धि. ४७८
ब्राह्मणो मुखमित्येव मुखाज्जातत्वहेतुतः ।
यथावदत् श्रुतिः तद्वत् जीवो ब्रह्मेति वाग् भवेत्
(स्मृतिः) सिद्धि. ५२१, न्या. ५१४
भिन्नाज्जीवात् परो भिन्नः तथापि ज्ञानरूपतः ।
प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः
(स्मृतिः) न्या. ५१४
स स्रष्टा चैव संहर्ता नियन्ता रक्षिता हरिः ।
तेन व्याप्तमिदं सर्वमैतदात्म्यमतो हरिः ॥
(स्मृतिः) न्या. ५१६, सिद्धि. ५२३
स्वातन्त्र्यात् स्व इति प्रोक्तः आत्मायं चाततत्त्वतः ।
ब्रह्मायं गुणपूर्णत्वात् भगवान् विष्णुरव्ययः ॥
न्या. ५१७
स्वं कुलायं यथापीतः पक्षी स्यादेवमीश्वरम् ।
अप्येति जीवः प्रस्वापे (स्मृतिः) न्या. ५१७
उदकं तूदके सिक्तं मिश्रमेव यथा भवेत्
न चैतदेव भवति यतो वृद्धिः प्रदृश्यते ॥
(स्मृतिः) न्या. ५१८

यथा पक्षी च सूत्रं च नानावृक्षरसा यथा
यथा नद्यः समुद्रश्च शुद्धोदलवणे यथा
यथा स्तेनापहार्यौ च यथा पुंविषयावपि
तथो जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ ।
न्या. ५१८
यदा प्राणान् ददातीशस्तदा चेतनकोऽलम् ।
जानाति ग्रस्तकरणस्तेन वेत्ति न किञ्चन ॥
न्या. ५१९
यच्चाप्नोति यदादत्ते यच्चात्ति विषया निह ।
यच्चास्य सन्ततो भावः तेनात्मेति हि भण्यते ॥
(भारत) न्या. ५१९, सिद्धि. ५२७
सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।
एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः ॥
न्या. ५४३, सिद्धि. ५४८ (स्मृतिः)
यावन्मोक्षं तु भेदः स्याज्जीवस्य परमस्य च
ततः परं न भेदोऽस्ति भेदहेतोरभावतः ।
विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ।
न्या. ५४६, सिद्धि. ५५२, (स्मृतिः)
क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ।
न्या. ५४७, सिद्धि. ५५२, (मोक्षधर्म)
प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणबृंहितम् ॥
न्या. ५४७, सिद्धि. ५५२, (मोक्षधर्म)
त्रीन् लोकानाभिवृत्यैतान् वृत्रस्तस्थौ स्वया त्विषा ।
तन्नाशकद्धन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत् ।
वृत्रं हनिष्येतिष्ठस्व विक्रम्याद्यममान्तिके ।
उद्यतस्य च वज्रस्य द्यौर्ददौ तु ममान्तरम् ।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरं ददौ ।
तदेतदखिलं प्रोक्तं सखे विष्णाविति तृचा ॥
तर. ५५३, (शौनकः)

अभिन्नांशास्तु मत्स्याद्याः तेजसः कालवह्निवत् ।
जीवा भिन्नांशकास्तत्र तेजसः प्रतिबिम्बवत् ॥
(स्मृतिः) न्या. ५७२
यथैषा पुरुषे छाया एतस्मिन्नेतदाततम् ।
छाया यथा पुंसदृशी पुमधीना च दृश्यते ।
एवमेवात्मका लोके परमात्मसदृशाः मताः ।
न्या. ५७७, सिद्धि. ५८२, (श्रुतिः)
बह्वः सूर्यकायद्वत् परमात्मसदृशा मताः ।
एवमेवात्मका लोके परमात्मसदृशाः मताः ॥
न्या. ५७७, तर. ५८७ (स्मृतिः)
वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥
न्या. ५९२, सिद्धि. ५९५, (श्रुतिः)
नृपाद्याः शतधृत्यन्ता मुक्तिगा उत्तरोत्तरम् ।
सर्वैर्गुणैः शतगुणा मोदन्त इति हि श्रुतिः ॥
मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥
न्या. ७०५, सिद्धि. ७१४
हरौ नियतचित्तत्वात् ग्रहवत् तत्प्रवेशनात् ।
मोक्षं तादात्म्यमित्याहुः न तु तद्रूपतः क्वचित् ।
(स्मृतिः) न्या. ७०६
प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्त मोक्षिणः ।
त एवचाप्तकामत्वात्तथाऽकामहता मताः ॥
(भारत) न्या. ७०६
निःशेष गतदोषाणां बहुभिः जन्मभिः पुनः ।
स्यादापरोक्ष्यं हि हरेर्द्वेषेर्ष्यादि ततः कुतः ।
भवेयुर्यदि चेर्ष्याद्याः समेष्वपि कुतो न ते ।
तप्यमानाः समान् दृष्ट्वा द्वेषेर्ष्यादि युता अपि ।
दृश्यन्ते बहवो लोके दोषा एवात्रकारणम् ।
यदि निर्दोषतैवात्र किमाधिक्येन दूष्यते ।
न्या. ७११

चिदानन्दशरीरेण सर्वे मुक्ता यथा हरिः ।
भुञ्जते कामतो योगान् तदन्तर्बहिरेव च ॥ (श्रुतिः)
स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् ।
स्वीकृत्य जागरितवद् भुक्त्वा त्यागः कदाचन ॥
(ब्रह्मवैवर्त)
प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मनमव्ययम् ।
परं नारायणात्मानं निर्द्वन्द्वं प्रकृतेः परम् ।
इन्द्रियाण्यनुबुध्यन्ति स्वदेहं योगिनो नृप ।
करणान्यात्मनस्तानि सूक्ष्मैः पश्यति तैस्तु सः ॥
न्या. ७१२
यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ।
स वै भृत्यः स वै स्वामी गुणलुब्धौ न कामुकौ ।
मुमुक्षोरमुमुक्षुस्तु वरो ह्येकान्तभक्तिमान् ।
न्या. ७०७
साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।
न्या. ७०८, सिद्धि. ७१७
अधिकं तव विज्ञानमधिका च गतिस्तव ।
ब्रह्मादयः क्रमेणैव यथानन्दश्रुतौ श्रुताः ।
न्या. ७०८
युक्तं च साधनाधिक्यात् साध्याधिक्यं सुरादिषु ।
नाधिक्यं यदि साध्ये स्यात् प्रयत्नः साधने कुतः ॥
न्या. ७०९
शक्रेण वर्ष कोटीश्च धूमः पीतोऽतिदुःखतः ।
वर्षायुतं च सूर्येण तपोऽवाक्शिरसा कृतम् ॥
न्या. ७०९
ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोपि तु ।
आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वाच वर्धते ॥
न्या. ७१०, (ब्रह्माण्ड)
सर्वदुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्याचानन्दचित्रता ।
न्या. ७१०, (स्मृतिः)
स्वाधिकानन्दसंप्राप्तौ सृष्ट्यादिव्यापृतिष्वपि ।
मुक्तानां नैव कामः स्यादन्यान् कामांस्तु भुञ्जते ॥
न्या. ७१०

## Appendix III-B
## अद्वैताकरग्रन्थेभ्यः उदाहृताः श्लोकाः

संसर्गासङ्गि सम्यग् धीहेतुता या गिरामियम् ।
उक्ताखण्डार्थता यद्वा तत्प्रादिपदिकार्थता ॥
(तत्त्वप्रदीपिका) न्या. १, सिद्धि. ४

अविशिष्टापर्यायानेकशब्दप्रकाशितम् ।
एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे ॥
(कल्पतरुः) सिद्धि. ५, तर. ८

लक्ष्यार्थभेदाभावेपि व्यवच्छेद्यविभेदतः ।
विज्ञानानन्दपदयोः पर्यायव्यर्थते कुतः ॥
(आनन्दबोधः) न्या. २६

सत्त्वादीनां हि जातीनां व्यक्तितादात्म्यदर्शनात् ।
लक्ष्यव्यक्तिरपि ब्रह्म सत्त्वादि न जहाति नः ॥
(कल्पतरुः) न्या. २९, सिद्धि. ४५

आकाशादौ सत्यता तावदेका
प्रत्यङ्मात्रे सत्यता काचिदन्या ।
तत्सम्पर्कात् सत्यता तत्र चान्या
व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र ॥
(संक्षेपशारीरकम्) सिद्धि. ४४, तर. ६६

तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् ।
स्वार्थार्पणप्रणाल्या तु परिशिष्टौ विशेषणम् ॥
(तैत्तिरीयवार्तिकम्) सिद्धि. ४८

लक्ष्यार्थभेदाभावेपि व्यवच्छेद्यविभेदतः ।
विज्ञानानन्दपदयोः पर्यायव्यर्थते नहि ॥
(आनन्दबोधः) सिद्धि. ४८

साभासाज्ञानवाची यदि भवति
पुनः ब्रह्मशब्दस्तथाहम् ।
शब्दोहङ्कारवाची भवति तु जहती
लक्षणा तत्र पक्षे ॥
(संक्षेपशारीरकम्) सिद्धि. ५४

अभिहितघटना यदा तदानीं
स्मृति समबुद्धियुगं पदे विधत्तः ।
परदृशि पुनरन्विताभिधानवादे
पदयुगलात् स्मृतियुगमेवपूर्वम् ।
अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः ।
घटते न यदैकता तदा नतरां तद्विपरीतरूपयोः ॥
(संक्षेपशारीरकम्) सिद्धि. १२४,
तर. १२७, प्र. १३७

उपाधिभेदभिन्नार्थो येनैकः प्रतिपाद्यते ।
तदपि स्यादखण्डार्थं महत् खं कुम्भखं यथा ॥
(कल्पतरुः) सिद्धि. १२६

स्वयं भ्रमोऽपि संवादी यथा सम्यक् फलप्रदः ।
ब्रह्मतत्त्वोपासनापि तथा मुक्तिफलप्रदा ॥
न्या.१५४, सिद्धि. १६९

ईक्षणध्यानयोरेकः कार्यकारणभूतयोः ।
अर्थ औत्सर्गिकं तत्त्वविषयत्वं तथेक्षतेः ॥
(भामती) न्या. १५४, सिद्धि. १६९

निर्विशेषं परं ब्रह्म साक्षात् कर्तुमनीश्वराः ।
ये मन्दाः तेऽनु कंप्यन्ते सविशेषनिरूपणैः ।
वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत् साक्षात् अपेतोपाधिकल्पनम् ॥
(कल्पतरुः) सिद्धि. १६३

सत्यमस्त्यविशेषेण श्रुतिर्येयमुदाहृता ।
विशेषे स्थाप्यते नित्यं सा तु शाखान्तरी यथा ।
(वार्तिकम्) तर. १९३

अवश्यमेव सामान्यं विशेषं प्रति गच्छति ।
गतमात्रं च तत्तेन विशेष्ये स्थाप्यते ध्रुवम् ॥
तर. १९३

अगृहीत्वैव सम्बन्धमभिधानाभिधेययोः ।
हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ।
जाग्रद्वन्नहि सम्बन्धं सुषुप्ते वेत्ति कश्चन ॥
(वार्तिकम्) सिद्धि. २०३, तर. २०४

अस्य द्वैतेन्द्र जालस्य यदुपादानकारणम्
अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते ॥
(वार्तिककृत्) सिद्धि. २३१, तर. २३३

कथं लक्ष्यत्वमत्यन्तावाच्यस्येति न चोद्यताम् ।
अत्यन्तावाच्यशब्देन लक्ष्यस्यैवावबोधनात् ॥
न्या. ३१७

दृष्टाः गुणक्रिया जातिरूढ्यः शब्दहेतवः ।
नात्मन्यन्यतमोमीषां तेनात्मा नाभिधीयते ॥
न्या. ३१८, सिद्धि. ३२७

सत्त्वादीनां तु जातीनां व्यक्तितादात्म्यदर्शनात् ।
लक्ष्यव्यक्तिरपि ब्रह्मसत्त्वादि न जहाति न ॥
प्र. ३२७

सापेक्षत्वात् सावधेश्च तत्त्वेऽद्वैतप्रसङ्गतः ।
एकाभावादसन्देहान्नरूपं वस्तुनो भिदा ॥
न्या. ३५३, सिद्धि. ३६६

अप्रमेयेनुमानस्य प्रवृत्तिर्न कथश्चन ।
प्रमेयस्य त्वनात्मत्वात् तत्र भेदानुमेष्यते ॥
न्या. ४१९

युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ।
अनभिज्ञेऽनर्थकं स्याद् बधिरेष्विव गायनम् ॥
न्या. ५१०

अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा ।
तथा चाद्ये प्रमा सा स्यान्नान्ते स्वापेक्ष्य वैशसात् ॥
न्या. ५०५

विमतं तात्त्विक स्वान्तर्भेदशून्यं महत्वतः ।
यदेवं तत्तथा यद्वत् स्वं तथेदं ततस्तथा ॥
न्या. ५६४, सिद्धि. ५६६

दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम् ।
व्याप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम् ॥
सिद्धि. ५८३

वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः ।
मूलप्रमाणादार्ढ्येन प्रामाण्यं प्रतिपद्यते ॥ न्या. ६०७

वेदान्तश्रवणं यत्तदुपायस्तर्क एव च ।
श्रुतिलिङ्गादिको न्यायः शब्दशक्तिविवेककृत् ।
आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते ॥
वेदशब्दानुरोध्यत्र तर्कोपि विनियुज्यते ।
(सुरेश्वरः) न्या. ६३४

वेदान्तानामशेषाणामादिमध्यावसानतः ।
ब्रह्मात्मन्येव तात्पर्यमिति धीः श्रवणं भवेत् ॥
समन्वयाध्याय एतत्सूक्तं स्वाध्यायकारिभिः ।
तर्कैः सम्भावनार्थस्य द्वितीयाध्याय ईरिताः ॥
न्या. ६३४

निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।
उपलक्षणहानेऽपि स्यान्मुक्तिः पाचकादिवत् ॥
न्या. ६७३, सिद्धि. ६७७

न सन्नास सदसन्नानिर्वाच्यश्च तत्क्षयः ।
यक्षानुरूपो बलिरित्याचार्याः प्रत्यपीपदन् ॥
न्या. ६७३

तृणादेर्भासिकाप्येषा सूर्यदीप्तिस्तृणं दहेत् ।
सूर्यकान्तमुपारुह्य तं न्यायं चिति योजयेत् ॥
न्या. ६८४, सिद्धि. ६८५

तस्मादविद्यास्तमयो नित्यानन्दप्रतीतितः ।
निःशेषदुःखोच्छेदाच्च पुमर्थः परमो मतः ॥
न्या. ६८९, सिद्धि. ६९१

अविद्यालेशशब्देन मोहाकारान्तरोक्तितः ।
ज्ञानस्य प्रतिबन्धाच्च प्रबलारब्धकर्मभिः ॥
न्या. ६९६

# Appendix IV

## न्यायामृते अद्वैतसिद्धौ व्याख्यानत्रये च उदाहृतानि जैमिनीयसूत्राणि

तथा यूपस्य वेदिः (III-7 6 13) तर.७२, कण्ट.९१

एकार्थाश्च विकल्पेरन् समुच्चये त्वावृत्तिः स्यात् प्रधानस्य (XII-3-4-10)

विधेः प्रकरणान्तरे अतिदेशात् सर्वं कर्म स्यात् (X-1-1-1) कर. १७६, कण्ट. १९६

अपूर्वे चार्थवादः स्यात् । (X-8-2-5) कण्ट. १९६

एकस्य तूभयत्वे संयोगपृथक्त्वम् । (IV-3-3-5) कण्ट. १९९

शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् । कण्ट. ४८६ (II-2-1-1)

पृथक्त्वनिवेशात् सङ्ख्यया कर्मभेदः स्यात् । कण्ट. ४८७ (II-2-7-21)

संज्ञाचोत्पत्तिसम्भवात् । कण्ट. ४८८ (II-2-9-23)

गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् । कण्ट. ४८८, (II-2-9-23)

प्रकरणान्तरे प्रयोजनान्यत्वम् । कण्ट. ४८९ (II-3-11-24)

गुणशब्दस्तथेति चेत् । कण्ट.५३६, (IX-1-12-38)

तानि द्वेधा गुणप्रधानभूतानि । कण्ट. ५३६, (II-1-3-6)

सामिधेनीस्तदन्वाहुः । कण्ट. ५३७, (III-7-7-15)

उद्गातृचमसमेकस्य श्रुतिसंयोगात् । कण्ट. ५३७, (III-5-7-23)

अभिधारणे विप्रकर्षादनुयाजवत् पात्रभेदः स्यात् । कण्ट. ५३८, (IV-1-4-33)

समानेऽपूर्ववत्त्वात् उत्पन्नाधिकारः स्यात् । कण्ट.५६१, (VII-1-2-13)

लिङ्गसमाख्याभ्यां भक्ष्यार्थतानुवाकस्य । तर. ६५९, (III-2-9-24)

सौभरे पुरुषश्रुतेः निधने कामसंयोगः । तर. ६१३, (II-2-13-28)

## तरङ्गिणीकण्टकोद्धारप्रकाशेषु विस्तृतया निरूपितानि पूर्वमीमांसाधिकरणानि

अन्तर्वेदियूपामङ्गताधिकरणम् । (III-7-6)

प्रयोजनैक्ये गुणानां विकल्पाधिकरणम् । (XII-3-4)

विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम् । (X-1-1)

निषेधस्य अर्थवादताधिकरणम् । (X-8-2)

संयोगपृथक्त्वन्याये दध्यादेर्नित्यनैमित्तिकोभयार्थत्वाधिकरणम् । (IV-3-3)

अङ्गापूर्वभेदाधिकरणम् । (II-2-1)

संख्याकृतकर्मभेदाधिकरणम् । (II-2-7)

संज्ञाकृतकर्मभेदाधिकरणम् । (II-2-8)

देवताभेदकृतकर्मभेदाधिकरणम् । (II-2-9)

मासाग्निहोत्रादीनां क्रत्वन्तरताधिकरणम् । (II-3-11)

वर्णकद्वयसहिताधिकरणम् । (IX-1-12)

कर्मणां गुणप्रधानभावविभागाधिकरणम् । (II-1-3)

हविर्धानस्य साम धेन्यङ्गताधिकरणम् । (II-7-7)

उद्गातॄणां सह सुब्रह्मण्येन भक्षाधिकरणम् । (III-5-7)

अभिधारणे शेषधारणतत्पात्रयोरननुष्ठानाधिकरणम् । (VII-1-14)

इषौ श्येनीयविशेषधर्मातिदेशाधिकरणम् । (VII-1-2)

भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगाधिकरणम् । (III-2-9)

सौभरनिधनयोः कामैक्याधिकरणम् । (II-2-13)

## पूर्वमीमांसाकरग्रन्थेभ्यः उदाहृताः श्लोकाः

तस्मात् पदान्तरार्थेन नैव हीषादयो गुणाः ।
विधीयन्ते नियम्यन्ते ते यथा प्राप्त सौभरे ॥ तर. ६१३

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोप्येकयत्नतः ॥ त. १५४

भावना प्रत्ययार्थत्वात्तदेकत्वान्न भिद्यते ।
गुणभूता हि धात्वर्थाः न तां भिद्युः कदाचन ।
तर. ४८३
प्रत्ययांशः समानोऽपि प्रतिधातुप्रयोगतः ।
तत्तदर्थानुसारेण भावनाभेदमावहेत् ।
निष्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि ॥
ततः सर्वविशिष्टा स्यात् द्वन्द्वोत्पन्नसुबर्थवत् ॥
यदि च प्रत्ययः शुद्धः सर्वधातुपृथक् कृतः ।
श्रूयते क्रयवत् सर्वैः विशेष्यत स धातुभिः ॥
तर. ४८४
प्रत्यक्षप्रत्यभिज्ञानात् शब्दैकत्वं प्रतिष्ठितम् ।
तदैकत्वात्तदर्थोपि न भेदं प्रतिपद्यते ॥ तर. ४८४
नामान्तरश्रुतावर्थभेदस्तावत् प्रतीयते ।
बलवब्दाधकाद्यासावन्यथात्वं प्रपद्यते । तर. ४८५
शब्दान्तरं धातुभेदाभ्यासो विधिपुनः श्रुतिः ।
उत्पत्तिस्था ब्यादिसङ्ख्या संज्ञाचागमपूर्वकम् ।
अनुपादेयसम्बन्धोऽसन्निधिः प्रक्रियान्तरम् ॥
कण्ट. ४९०
न विद्यते तु सन्दंशो यत्र वाचनिकैर्गुणैः ।
तत्राङ्गानां कथं भावः सन्नप्यविनयोजकः ॥
निष्फलत्वे च सर्वेषां न विशेषोऽवगम्यते ।
कःशेषः कस्य शेषित्वमतः सर्वं प्रधानगम् ॥
तर. ४९४.
उत्पत्तिवाक्यविज्ञातं कर्म सर्वमनूद्यते ।
न चाश्रितगुणे शक्यं तद्विरोधि गुणान्तरम् ॥
न्या. ५०४

## न्यायामृते अद्वैतसिद्धौ व्याख्यानत्रये च तत्र तत्र उल्लिखिता पूर्वमीमांसा विचाराः

कुब्जशक्तिवाद - कण्ट. ११
भाट्टानामन्वयांशे लक्षणा - कण्ट. ११
प्राभाकरमते अन्वितस्यैव प्रातिपदिकार्थत्वात् ।
अभिहितान्वयवादिमतेऽपि जातिविशिष्टायाः व्यक्तेः प्रातिपदिकार्थत्वपक्षे प्रातिपदिकार्थस्यैव विशिष्टत्वात्
- सिद्धि. ३९, न्या. २०
अस्मिन् पक्षे अन्विताभिधानवादानभ्युगमः ।
तत्त्वदीपिकाकृदादयस्तु अभिहितान्वयपक्षमेव उररीचक्रुः । सिद्धि. ५४
'नार्षे यं वृणीते' इत्यस्य पर्युदासत्वम्, 'न तौ पशौ करोति' इत्यत्र प्रसज्य प्रतिषेधः ।
न्या. १५२, सिद्धि. १६५
छागपशुन्यायः - न्या. १५८
नापि ग्रहणाग्रहणवाक्ये परापरयागविषये ।
सिद्धि. १५८
'प्राप्तबाधे प्रकृतिवत् कुर्यात्' इत्यस्य सङ्कोच विचारः। अप्राप्तबाधे गौणत्वविचारः । सिद्धि. १६५
पूषाद्यनुमन्त्रणवत् प्रकरणादुत्कृष्टत्वस्य
द्वादशोपसत्तावाक्यवत् स्तावकत्वस्य । सिद्धि. १७१
दीक्षणीयायामनुब्रूयादितिवत् निरवकाशत्वेन प्राबल्यम्
- सिद्धि. १७३
ग्रहैकत्वन्यायविचारः - सिद्धि. १७४
हविरार्ति नयविचारः - सिद्धि. १७४
उपक्रमादिन्यायेन श्रुतिलिङ्ग नयात्तथा
विशेषसामान्यनयान्न्यायान्निरवकाशतः ।
बाहुल्यन्यायतश्चोपजीव्यत्वन्यायतस्तथा
पशुच्छागनयाच्चैव सविशेषनयात्तथा ।
उपांशुयाजन्यायेन युक्तायुक्त नयात्तथा ।
आदृतत्वात् सूत्रकृता प्रबला सगुणश्रुतिः ।
न्या. १५९, प्र. ४३३
पुरोडाशकपालेन तुषानुपवतीत्यनाधिष्ठानलक्षणायां तुषोपवापविधानरूपेष्टसिद्धिवत् । सिद्धि. ५०६
सन्निपत्याङ्गविचारः । न्या. ६०५, तर. ६१२
नियमविधिविचारः - न्या. ६२१, सिद्धि. ६२४,
तर. ६२६, कण्ट. ६२७
श्रुतिलिङ्गादिको न्यायः । न्या. ६३४
पत्न्यवेक्षितमाज्यं भवति । न्या.६५५, सिद्धि.६५६

जर्तिलयवाग्वा वा जुहुयात् ।
सिद्धि. ६५६, तर. ६५९
भक्षेहि मा विश - तर. ६५९, सिद्धि. ६५६
गोभिः श्रीणीत मत्सरम् । सिद्धि. ६५६
न विधौ परः शब्दार्थः । सिद्धि. ६५६

## Appendix V
## इतरग्रन्थेभ्यः उदाहृताः श्लोकाः

चन्द्रे कलङ्कः सुजने दरिद्रता
विकासलक्ष्मीः कुसुमेषु चञ्चला ।
मुखप्रसादः सधनेषु नित्यं यशो
विधातुः कथयन्ति खण्डितम् । तर. ८.

स्वार्थो द्रव्यं तथा लिङ्गं संख्या कर्मादयोऽपि च ।
नामार्थपञ्चकं प्राहुराद्यं त्रिकमथापरे ॥
न्या. २०, सिद्धि. ३९

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेः वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः ॥ तर. ५८, प्र. ९८

गच्छ गच्छसि चेत् कान्त पन्थानः सन्तुते शिवाः ।
भूयान्ममापि तत्रैव जन्म यत्र गतो भवान् ॥
तर. ७१, प्र. १११

अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्
(संकर्षणसूत्रम्) सिद्धि. १७२.

शृङ्गाच्छरोऽविलोमभ्यो दूर्वा गोमयतस्तथा ।
वृश्चिकश्चेत्येवमाद्येष्वपादानत्वमुच्यते ॥ न्या. २४०

विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् ।
गुडस्य पनसादीनां निर्हारीत्यभिधीयते ॥ न्या. ३१७

क्रियावाचित्वमाख्यातुमेकैकोऽपि प्रदर्श्यते ।
प्रयोगतोऽनुगन्तव्या अनेकार्थाहि धातवः ॥
न्या. ३५१, सिद्धि. ३६१

उद्यतायुधदोर्दण्डाः पतितस्वशिरोक्षिभिः ।
पश्यन्तः पातयन्ति स्म कबन्धा अप्यरीन् युधि ॥
(भारत)

नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्भव ।
अन्यश्चपरमोराजन् तथान्यः पञ्चविंशकः ॥
न्या. ४६९

आमुक्तेर्भेद एव स्यात् जीवस्य परमस्य च ।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः ॥
(पाञ्चरात्रिक) तर. ५३३

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥
तर. ५८५

यदधीतमविज्ञातं निगदेनैवशब्द्यते ।
अनग्नाविव शुष्केधो न तज्ज्वलति कर्हिचित् ॥
न्या. ६३५

न सन्नासन्नसदसन्नचाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥
(माध्यमिककारिका १/९)

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद् दर्शन भेदो हि प्रवादेष्वनवस्थितः ॥
(कैयट) न्या. २४७

❋❋❋